

श्रीपरमात्मने नमः ।

# सनातनजैनग्रंथमाला ।

४

आचार्यवर्यश्रीमद्भट्टाकलंकदेवविरचितं

# तत्त्वार्थराजवार्त्तिकं ।

श्रीयुत न्यायतीर्थपंडितगजाधरलालजैन साहित्यशास्त्रिणा
संपादितं

तच

उस्मानाबादनिवासिस्वर्गीयश्रेष्ठिवर्यकस्तूरचंद्रस्यात्मजबालचंद्रस्य स्मरणार्थं
श्रीभारतीयजैनसिद्धांतप्रकाशिनीसंस्थाया मंत्रिणा

श्रीपन्नालालजैनेन

काशीस्थचंद्रप्रभानाम्नि मुद्रणयंत्रालये मुद्रापितं ।

श्रीवीरनिर्वाणसंवत्सर २४४१ । विक्रमाब्द १९१५ ।

# प्रस्तावना ।

सहृदयप्राज्ञप्रवर ! अद्य समुपतिष्ठे नाम स्वयकष्टायमानमपि शुद्धतमप्रथसाहाय्याभावात्कष्टप्र-मायमानममु श्रीमद्राजवार्तिकं यथामति सपाद्य श्रीमता पुरस्तात् । इद च भगवदुमास्वामि (उमास्वाति) मुखविनिर्गतस्यार्हतसिद्धातक्षीरार्णवमथनसमुद्भूतघृतकल्पस्य श्रीमोक्षशास्त्रस्य झटिति स्फुटतमार्थप्रतिपादिका महती टीका । न केवल दिगवरजैनसमाज एव मोक्षशास्त्रस्य (तत्त्वार्थसूत्रस्य) गरीयसी समादृतिर्विश्रुतिश्च पर सहयोगिनोऽपि श्वेतपटप्रभृतय समामनति तद्बहलतमया निष्ठया । सूत्राणां वृद्धिह्रासपरिमार्जनपक्षमवलब्य सशेरते कतिपये, भगवदुक्त मूलभूत किमिति ? तदन्यत्

**तत्त्वार्थराजवार्तिकं**

दिगवरसमाजे टीकैषा विशेपतया राजवार्तिकनाम्ना विश्रूयते । प्रथप्रणेत्रा तु भगवदकलंकदेवेन—

प्रणम्य सर्वविज्ञानमहास्पदमुरुश्रिय ।
निर्धौतकल्मष वीर वक्ष्ये तत्त्वार्थवार्तिक ॥ १ ॥

पद्येनामुना तत्त्वार्थवार्तिकाभिधया व्यश्रावि, तत्र कारणमिद निर्णीयते श्रीमद्भट्टाकलकविरचित-वार्तिकाणां झटितिप्रतिपत्तिद्योतकै प्रमितैश्चाक्षरै दुष्प्रतिपाद्यतमस्य विषयस्य प्रतिपादनशैली सरलामनुभाव्य समादाय च नामैकदेशपक्ष भक्तिस्रोतोऽत पतिततया केनापि विदुषा भवेत्प्रदत्त वार्तिकाणा प्रभावस्फोरणाय राजवार्तिकमिति तदीय नाम ।

मोक्षशास्त्रस्य प्रस्फुटतत्त्वार्थप्रतिपादकत्वात् तत्त्वार्थसूत्रनाम्नापि जागर्ति विश्रुति । तस्योपरिष्टादेव वार्तिकस्यास्य विरचितत्वात्, वार्तिकमिद मान्यस्य विज्ञायीति प्रस्फुटप्रतिपत्तये च, देवस्तु तत्त्वार्थवार्तिकनाम्ना टीकामिमा व्याजहार । ततो प्रथनामनि मा कश्चित्सशयिष्टेत्यस्माभिस्तदीय नाम तत्त्वार्थराजवार्तिकमिति समुदबोधि । अस्यैव वार्तिकस्य तत्त्वार्थवार्तिकालंकार, राजवार्तिकालकारश्चेति द्वे नामनी अपि स्त

तत्त्वस्वरूपस्य परमनिश्रेयसज्ञानोपयोगित्वाच्छास्त्रेऽस्मिन् प्रामुख्येन मोक्षस्वरूपमेव भगवान् व्यवैक्षीत् । तत्र यद्यपि केचित सुप्रतिभा षड्विंशतितत्त्वानि व्याजह्रु, अन्ये च सप्ततत्त्वानि षट्तत्त्वानि वा, अपरे षडधिकद्शततत्त्वानि, एक तत्त्व च परे । किंत्वार्हतनये मूले जीवाजीवेतितत्त्वद्वयेवोच्यमाने, आस्रवबधयो ससारोत्पत्तिप्रधानहेतुत्वेन सवरनिर्जरयोश्च परमनिश्रेयसपरमकारणत्वेन जीवाजीवास्रवबध सवरनिजरामोक्षेतितत्त्वसप्तक समुपवर्णित, पराभिमततत्त्वानामत्रैवातर्भावविभावनात् तथा च सूत्रित—

## जीवाजीवास्रवबंधसंवरनिर्जरामोक्षास्तत्त्वं ॥४॥

नच तत्त्वस्वरूपस्य परमनिश्रेयसज्ञानोपयोगित्वमसिद्ध सर्वैर्मोक्षाभ्युपगतृभिस्तत्त्वानां साक्षात्परपरया वा तत्कारणत्वेनोल्लिखनात् तद्यथा—

**धर्मविशेषप्रसूतद्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्नि:श्रेसाधिगम इति** काणादा **प्रमाणप्रमेयसशयप्रयोजनदृष्टांतसिद्धांतावयवतर्कनिर्णयवादजल्पवितडाहेत्वाभासच्छलजातिनिग्रहस्थानाना तत्त्वज्ञानान्नि:श्रेयसाधिगम इति** गौतमीया **प्रकृतिपुरुषविवेको मोक्ष इति** कापिला । '**आनद ब्रह्मणो रूप तच्च मोक्षेऽभिव्यज्यते**' इत्यागमप्रामाण्यात् **आनदरूपो मोक्ष** इति वेदातिन । एवमन्येऽप्यास्तिकमन्या तत्त्वस्वरूपस्य परमनि-

श्रेयसज्ञानोनुकूलत्वमभिमन्यते । आर्हता अपि क्षायिकसम्यग्दर्शनादिस्वस्वभावाभिव्यक्तिमोक्षं इत्याभिमन्य माना मोक्षकारणत्वेन तत्त्वस्वरूप समुल्लिखति ततश्च तत्त्वस्वरूपस्यावश्य प्रतिपाद्यत्वेन शास्त्रेऽस्मिन् तत्त्व स्वरूपोपवर्णन नापार्थक ।

आर्हतनये 'सन्मात्र तत्त्वमिति' तत्त्वलक्षण न्यदर्शि, सच उत्पादव्ययध्रौव्यात्मक उत्पादव्ययध्रौव्ययुक्त सदित्यनुशासनात् । नचैतल्लक्षणमव्यापि लक्ष्यमात्रे सत्त्वात् । नाप्यतिव्याप्त अलक्ष्यवृत्तित्वाभावात् नाप्यसभवि, अबाधबोधतया लक्ष्ये सत्त्वात् अत्र कश्चित्—

नन्वस्तु घटकटादीनामुत्पादविनाशशालित्व न त्वात्मन नित्यत्वाद्विभुत्वाच्च कालादिवत्, यद्यात्मन उत्पादविनाशशालित्व स्याच्चान्यत्र कालाकाशादौ दुर्वारित स्यान्न घटादिवदात्मनोऽपि तत्त्रितयसगतत्वात् कालाकाशस्य च पक्षातर्भावविभावनात् तथाहि—

यथा घटोत्पत्तौ प्राच्यस्य मृत्तिकाया पर्यायरूपस्य पिंडस्य विनाश , घटपर्यायस्य च समुत्पाद मृत्तिकाया पर्यायद्वयेऽपि तदवस्थत्वात् ध्रुवता तथा पर्यायपर्यायिणोऽभेदात पर्यायनाशे द्रव्यनाशस्यापि सभवात् आत्मनोऽपि पूर्वपर्यायेण विनाश उत्तरपर्यायेण प्रादुर्भाव , आत्मत्वेन ध्रुवता । एव कालाकाशादिष्वपि, पूर्वोत्तरपर्याययोर्विनाशोत्पादाभ्यां—उत्पादव्ययध्रौव्यात्मकत्वस्यानिवार्यत्वात् । एव सुवर्णपर्यायेषु कटकादिषु पय पर्यायेषु दध्यादिषु चोत्पादव्ययध्रौव्यात्मकत्व परिभावनीय । एनमेव भाव पुरस्कृत्य समुपवर्णयाचक्रिरे भगवत्समतभद्रस्वामिन ।

घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वय ।
शोकप्रमोदमाध्यस्थ्य जनो याति सहेतुक ॥
पयोव्रतो न दध्यत्ति न पयोत्ति दधिव्रत ।
अगोरसव्रत नोभे तस्मात्तत्त्व त्रयात्मक ॥

ततश्च द्रव्यार्थिकनयमवलम्ब्य द्रव्यस्य विनाशाभावात् पर्यायार्थिकनयमवलम्ब्य पर्यायाणां विनाशोत्पादात्कथंचिन्नित्यानित्यत्वमनुसधेयमात्मन , कूटस्थनित्यत्वे, अर्थक्रियाया अभावात् । अर्थक्रियायाश्चाभावे तत्त्वस्यापि व्याहन्यमानत्वात् ।

विभुत्व च परपरिकल्पितमात्मनो नो युक्तियुक्तमवतिष्ठते प्रत्यक्षादिप्रमाणबाधात् शरीरावच्छिन्नात्मन एवाहप्रत्ययविषयत्वेन तदितरत्रात्मनोऽननुभवात् । न च यद्यन्मध्यमपरिमाणवत्तत्तत्कृतक यथा घटादीति व्याप्त्या घटादिवदात्मनोऽनित्यत्वापत्ति तथाविधाया व्याप्तौ प्रमाणाभावात् घटादीनामपि सर्वथाऽनित्यत्वानभ्युपगमेनात्मवदेव कथंचिन्नित्यत्वानित्यत्वस्वीकाराद् दृष्टातस्यानुकूलत्वात् । दूषणमिद सर्वथा नित्यत्ववादिन एवाधिक्षिपति नास्मान् । एतेन सकोचविकाशशालित्वाद् आत्मनि वस्त्रादिवदनित्यत्वैकातदूषणमचीक्लृपत् तदपि निरस्त वस्त्रेऽपि कथंचिन्नित्यत्वानित्यत्वव्यवस्थानान्निदर्शनस्यानुकूलत्वात् ।

नन्वस्त्वात्मनो मध्यमपरिमाणवत्त्व न नो क्षति पर नित्यत्वानित्यत्वादिविरुद्धधर्माधिकरण स इति तु न युक्तमुत्पश्याम न हि रजन्यहनी पुस्त्वस्त्रीत्वे च युगदेकत्र समवस्थिते दृश्येते [2] न एकत्र वस्तुनि नित्यत्वानित्यत्वादिधर्माणामपेक्षया विधमानत्वे दोषाभावात् । न वयमभ्यनुजानीमहे यदपेक्षया नित्यत्व तदपेक्षयैवानित्यत्व, किं तु द्रव्यार्थिकनयापेक्षया नित्यत्व पर्यायार्थिकनयापेक्षया चानित्यत्व । यथा एक एव पुमान् पुत्रापेक्षया पिता पित्रपेक्षया पुत्र , भागिनेयापेक्षया मातुल , मातुलापेक्षया भागिनय इति । नचैकत्र पुत्रत्वभागिनेयत्वादिधर्माणामुपलभादविरुद्धत्वमेवेति वाच्य । अपेक्षासरणिशरणत्वेनैव तत्राविरुद्धत्वप्रतिभासया नित्यत्वादावपि तथानभ्युपगमे नरपतिनिदेशाभावात् । एव च एकत्रैव घटे परत्वापरत्वजातिमत्त्वमपि तार्किकोपकल्पितमापनीपद्यते नान्यथा अपेक्षानभ्युपगमे तत्रापि प्रोक्तदूषणानुषंगात् । तथा

---

१ तिरोभाव. । २ आविर्भाव ।

एकस्मिन्नेव वृक्षेऽपेक्षामवलम्ब्य विरुद्धानामपि कर्तृत्वादिधर्माणां समावेशो दृश्यते तद्यथा—वृक्षस्तिष्ठतीत्यत्र वृक्षस्य पारतन्त्र्याभावात् कर्तृत्व। वृक्ष पश्यतीत्यत्र दर्शनेनाप्तुमिष्यमाणतमत्वात्कर्मत्व। वृक्षेण चन्द्रमस निर्दापयतीत्यत्र ज्ञापकस्य साधकतमत्वाद् वृक्षस्य करणत्व। वृक्षायोदकमासिंचतीत्यासिच्यमानेनोदकेन वृक्षमभिप्रैतीति सम्प्रदान। वृक्षात्पर्णं पततीति ध्रुवमपायेऽपादानमित्यपादान। वृक्षे वयासीत्याधारोऽधिकरणमिति। एवमात्मन्यपि, यदोपलब्धिविषयस्तदात्मा प्रमेय यदा चोपलब्धिसाधन तदा प्रमाणमिति प्रमेयत्वप्रमाणत्वतिविरुद्धधर्मसमावेशो नापेक्षामादाय विरुध्यते। एव चापेक्षाश्रयणे। प्रमेयता च तुल्यप्रामाण्यवदिति, आक्षपिदिक शास्त्रमपि सगच्छत नान्यथा ततश्च वस्तुनो याथात्म्यपरिपालनाय नियतमपेक्षा समादेया—

यच्च निदर्शन दर्शित रजन्यहनी स्त्रीत्वपुस्त्वे इति तदपि न नो विरुद्ध रजन्यह्नोरप्येकस्यैवाधिकरणस्य सत्त्वात् मेर्वन्यतरहितसौरप्रकाशावच्छिन्नक्षणसयोगो वासर। तदभावश्च रजनी तयोश्चैक एवाधार। स्त्रीत्वपुस्त्वे अप्येकाधिकरण विसृष्टपुस्त्वपर्यायस्यात्मन एवाशुभोदयात्स्मृतस्य स्त्रीत्वपर्यायेण परिणतत्वात्।

तथा चाभ्युपगम्यमानायामपेक्षायाम्—

स्यान्नित्य आत्मा १ स्यादनित्य २ स्यान्नित्यश्चानित्यश्च ३ स्यादवक्तव्य ४ स्यादस्ति चावक्तव्य ५ स्यान्नास्ति चावक्तव्य ६ स्यादस्ति च नास्ति चावक्तव्यश्चेति, नित्यत्वानित्यत्वधर्ममवलम्ब्य सप्तभङ्ग्यपि समवतिष्ठते एवमस्तित्वनास्तित्वादिषु प्रत्येकस्येव सप्तभङ्गी योजनीया ततश्च सिद्ध्यतीद, कथचिन्नित्योविभुश्चात्मा।

अत्राह ननु प्रतिपादितेयं सप्तभङ्गी न युक्तियुक्ता सशयादीनामधिकरणत्वेनाप्रामाण्यात् तद्यथा—

आत्मा केन स्वरूपेण नित्य केन चानित्य ? इति सशय १। यत्रानित्यत्व तत्र नित्यत्वस्य विरोधो यत्र चानित्यत्व तत्र नित्यत्वस्य विरोध इति विरोध २ तथा नित्यत्वस्याधिकरण द्रव्यमनित्यत्वस्य चाधार पर्याया इति वैयधिकरण्य। तथैकान्तिन नित्यात्मकत्वेऽनित्यत्वाभाव, अनित्यात्मकत्वे च नित्यत्वाभाव इत्युभयदोष। तथा येन स्वभावेनात्मनोनित्यत्व तेनैवानित्यत्वप्रसग येन चानित्यत्व तेन नित्यत्वमपीति सकरप्रसग ६ तथा येन स्वभावेनानित्यत्व तेन नित्यत्वमपि प्राप्नोति येन च नित्यत्व तेनानित्यत्वमपीति व्यतिकर ७ तथा येन रूपेण कथचिन्नित्यत्व तेन कथचिदनित्यत्वमपि येन च कथचिदनित्यत्व तेन कथचिन्नित्यत्वमपीत्यनवस्था ८ इति न, अनवबोधात्— तथाहि—

सशयो हि—एकवस्तुविशेष्यकविरुद्धनानार्थप्रकारक ज्ञान स च सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च जायते यथा स्थाणुर्वा पुरुषो वेत्यत्रोर्ध्वतामात्र सामान्यप्रत्यक्ष। विशेषाप्रत्यक्ष च स्थाणुगतानां वक्रकोटरपतत्रिनीडादीनां, शिर पाण्यादीनां च पुरुषाधिकरणानां। उभयगतानां च वक्रकोटरशिर पाण्यादीनां स्मरणमिति तत्र सशय। न ह्यनेकान्तवादे सशयावकाश स्वरूपपररूपादीना नित्यत्वानित्यत्वादिधर्माणां प्रत्यर्थमुपलम्भाद्विशेषोपलब्धेरप्रतिहतत्वात्। नाप्यनेकान्तवादे विरोधगति विरोधस्यानुपलम्भसाध्यत्वात्। न हि यदा स्वरूपेण वस्तुनि नित्यत्वमुपलभ्यते तदेव पररूपेण तदनित्यत्वानुपलम्भ। एकस्मिन्नेव काले स्वरूपादिभि सत्त्वस्येव पररूपादिभिरसत्त्वस्यापि विद्यमानत्वात्। किंच वध्यघातक—सहानवस्थान-प्रतिबध्यप्रतिबधकरूपेण त्रिविधो विरोध तत्र नाद्य स चैकत्रैकदा विद्यमानयो सयोगे सति भवति यथा मयूरोरगयो, अनलसलिलयोश्च। नचैकत्रैकदा नित्यत्वानित्यत्वादीनां समभ्युपगम्यते सत्ता प्रतिवादिना। अभ्युपगम्यमानायां त्वेकत्र वृत्तौ नित्यत्वानित्यत्वादीना तुल्यबलत्वान्न तत्र विरोधावकाश। नापि द्वितीय एकत्र मातुलिंगे श्यामतापीतते इव एकाधिकरणे कालभेदेन वर्तमानानां तदभ्युपगमात्। न चैकत्र नित्यत्वानित्यत्वे कालभेदेन वर्तेते विवक्षया युगपदेवाभ्युपगमात्। नापि तृतीय —यथा शीतांशुमण्युपास्थितौ दाहाभावाद्दाहप्रतिबधको मणिर्नैवमस्तित्वसत्त्वे नास्तित्वाभावान्नास्तित्वप्रतिबधको भवितुमर्हतीत्यस्तित्व ततो

१ विभिन्नाधिकरणवृत्तित्व। २ सर्वेषा युगपत्प्राप्ति सकर। ३ परस्परविषयगमन व्यतिकर।
४ अप्रामाणिकपदार्थपरपरार्परिकल्पनाविश्रान्त्यभाव।

नात्र कतमस्यापि विरोधस्यावकाश । नापि वैयधिकरण्य अबाधबोधे नित्यत्वानित्यत्वयोरेकाधिकरणतया प्रतीयमानत्वात् । नाप्युभयदोष भेदाभेदयोरन्योन्यनिरपेक्षयोरार्हतमतेऽनभ्युपगमात् । नापि सकरव्यतिकरौ मेचकरत्नादिवत वस्तुनि नित्यत्वानित्यत्वयो प्रतीयमानत्वात् । नाप्यनवस्था अनतधर्मात्मकस्य वस्तुन स्वय प्रमाणप्रतिपन्नत्वेनाभ्युपगमेनाप्रामाणिकपदार्थपरपरापरिकल्पनाविरहात् । ततश्चार्हत जीवतत्त्व निरवद्य-मभ्युपगतव्य । तच्च जीवतत्त्व-मा अध्यायचतुष्टयादवगतव्य । तदनतर पचमेऽध्यायेऽजीवतत्त्वनिरूपण-तच्च धर्माधर्माकाशपुद्गलकालभेदात्पचविध तत्र मत्स्याना सलिलवत् नेत्राधानां वशयष्टिवद्वा जीवपुद्गलाना गमनसहकारी धर्म । पाथानां छायावत् जीवपुद्गलाना स्थितिसहायकोऽधर्म । सर्वद्रव्याणामवकाश-दानसहकारि गगन । रूपरसादिधर्मवान् पुद्गल । सर्वद्रव्याणा वर्तनादिहेतु' काल इति । तत उत्तर षष्ठसप्त माध्याययोरास्रवस्वरूपनिरूपण येन परिणामेन कर्मास्रवति स आस्रव " सोऽपि द्रव्यास्रवभावास्रवभेदेन द्विविध । अष्टमाध्याये बधस्वरूपप्रतिपादन सच "कर्मात्मनोरन्योन्यप्रदेशानुश्लेषात्मक'" सोपि प्रकृत्यादिभेदेन चतुर्विध । नवमेऽधिकारे सवरनिर्जरयोर्निर्णन तत्र—आस्रवनिरोध. सवर एकदेशकर्म-सक्षयलक्षणा निर्जरा । दशमे मोक्षस्वरूपाख्यान सच कृत्स्नकर्मविप्रमोक्षात्मक इति कृतेय दिग्दर्शिराज-वार्तिकसमुपवर्णितविषयाणा । सर्वेषामनवद्यस्वरूप तु तत्त्वाना ग्रथस्य पौर्वापर्यसमालोचनत एव विभो-त्स्यते लब्धवर्णपाठकपरिकर तत समाशास्महे न मोघीभविष्यति कृतेय नम्रशिरसा समभ्यर्थना विदुषा पुरस्ताद्विलोकयितु पौर्वापर्याशमेतस्यानवद्यग्रथस्य ।

ग्रथसारस्यैतस्य सपादनसमये समभुवजमह शुद्धग्रथसाहाय्याभावात् गरीयास ताप । अत्र ग्रथाभावात् मुद्रणयत्रालयपुस्तिकाऽपि ( प्रेसकापी ) सिद्धातपाठशालामोरेनाध्यापकपदविभूषितै एतत्सपादकपदाल-कृतैश्च सुहृद्वरै सिद्धांतशास्त्रिभि श्रीमक्खनलालमहोदयै प्रेषिता तत्रापि प्रतिमूर्तिद्वयमासीद्राजवार्तिकस्य तच्च कथचिच्छुद्ध ततश्च जातमत्र बहुत्र परिस्खलन । परतु महता कष्टेन पुस्तकातरेभ्य प्रकाशितमवसाने शुद्धयशुद्धिपत्र ततस्तदवलोक्य भवेयु पठनपाठनप्रवणा विद्वास इति विनतशिरोभ्यर्थन ।

केवलया मुद्रणयत्रालयपुस्तिकया यदा तु शशाकाह सपादयितु वार्तिकमदस्तदा कृताया प्रार्थनाया प्रेषिता प्रतिमूर्तिरेका विजयनगर (विजनौर) वास्तव्यैर्विद्वद्वरश्रीबद्रीप्रसादजीमहोदयै तत्साहाय्याद्बहुषु स्थलेषु सपादनसाहाय्यमभूत् ततोऽस्म्यहमनुग्रहामत्र प्रोक्तमहानुभावाना ।

मोरेनासिद्धातविद्यालयस्थछात्रै प्रियभ्रातृपडितपन्नालालसोनिमहोदयै राजवार्तिकपठनसमये परिश्रम्य सकलय्य बहूनि स्खलितानि प्रेषितान्यस्मत्पार्श्वे ततो मन्यामहे वय परमसौहार्द तेषा ।

श्रीयुतजैनहितैषिसपादयितृभि' प. श्रीनाथूरामप्रेमिभि स्वकीये जैनहितैषिपत्रे प्रकाशित श्री मद्भट्टाकलकजीवनचरितमत्र केषुचित्स्थलेषु समवलब्य विलिखित ततोऽस्म्यहमुपकार्यस्तेषा ।

विदुषामनुचर'—

**श्रीगजाधरलाल जैनः**

# परिचिति

## श्रीमद्भट्टाकलङ्कस्य ।

सुभावितमेतत्प्रत्यक्षतया य किल युनक्ति नामात्मनीनजीवनस्य निरर्थकमपि तात्कालिक कतममश यदा परार्थं, लभते सोऽपि नियतममानसन्मानामग्रता भुवि निरवच्छिन्न, तदा यो जन्मत एव—आपात रमणीयमपि किंपाकफलकल्प वैषयिकसुखमुपेक्षमाण, अनभिदधानश्च जननीरमणीप्रभृतित सम्भ्य र्णतमस्यापि विग्रहस्य विलेपनादिसस्करण निदीनजनपरिकरानिरवग्रहोपग्रहमना, स कियान् समादरणीय स्यादिति समभिधान—अपारपारावारीणावसानीनभूरुहराजिकुसुमसौरभव्यावर्णनमिव दुर्घट सुचतुरचेतोनिकर। अथ समुद्युजामहे नाम तथाविधमहात्मनीनमेव किमपि चाक्षुषप्रत्यक्षागोचरत्वेऽपि श्रुत्यैव तत्साक्षाद्दर्शनमिव परमतोषकर समुल्लेखयितु। समुल्लेखयिष्यमाणोय महात्मा न केवल पीयूषायमाणात्मवाणीपरिकरणैव समयुगीनाञ्जनान् तुतोष पर गायनयनचूडिकास्विव स्वानघवचनानि तालपत्रादिषु सक्रम्य आ अवसर्पिणीकाल भवर्तिन प्राणिन समाह्लादयाचकारेति परमतोषस्थान।

यद्यपि समजनिषत नैके सूरयो दिगम्बरजैनसमाजे तथापि तर्कादिविविधविषयासाधारणवैदुष्यपरिपूर्ण प्रतिभत्वात्स्वामिसमन्तभद्रस्वामिनोनन्यसाधारणा प्रख्यातिर्जगति विराजते। सतुष्टुवुश्च गुणगरिमाणमिम प्रभुमेनेके सूरयो भिन्नभिन्नागमप्रणेतार । तद्यथा—

नम समन्तभद्राय महते कविवेधसे यद्वचोवज्रपातेन निर्भिन्ना कुमताद्रय ।
कवीनां गमकानां च वादिनां वाग्मिनामपि यश सामन्तभद्रीय मूर्ध्नि चूडामणीयते ॥

अमोघवर्षगुरु, महापुराणकर्ता भगवज्जिनसेनाचार्य

सरस्वतीस्वैरविहारभूमय समन्तभद्रप्रमुखा मुनीश्वरा ।
जयन्ति वाग्वज्रनिपातपाटितप्रतीपराद्धान्तमहीध्रकोटय ॥

महाकविश्रीवादीभसिंह

लक्ष्मीभृत्परम निरुक्तिनिरत निर्वाणसौख्यप्रद कुज्ञानातपवारणाय विधृत छत्र यथा भासुर ।
सज्ज्ञानैर्नययुक्तिमौक्तिकरसै सशोभमान पर वदे तद्धतकालदोषममल सामन्तभद्र मत ॥

श्रीवसुनन्दिसैद्धान्तिकचक्रवर्ती

समन्तभद्रादिकवीन्द्रभास्वता स्फुरन्ति यत्रामलसूक्तिरश्मय ।
व्रजन्ति खद्योतवदेव हास्यतां न तत्र किं ज्ञानलवोद्धता जना ॥

श्रीशुभचन्द्राचार्य

गुणान्विता निर्मलवृत्तमौक्तिका नरोत्तमै कण्ठविभूषणीकृता ।
न हारयष्टि परमेव दुर्लभा समन्तभद्रोदिभवा च भारती ॥

महाकविश्रीवीरनन्दी

परन्तु श्रीसमन्तभद्रभगवतोऽनन्तर विधातु किलैतेद्प्रथरत्नस्य श्रीमद्भट्टाकलङ्कस्यैव समजनिष्ट भुवि गरीयसी विश्रुति । प्रस्मर्यते च सर्वत प्राक् तस्यैव देवस्य नाम। न केवल कृतिरेव तदीया तन्महत्त्वजननी समजनि किंतु स्वसामयिकाविद्वत्सु तस्य प्रबलदिग्विजयित्वात् तादात्विकार्हतधर्मततिस्तज्जीवनान्महती प्रभाववती सती व्यधायिष्ट । तदा—आर्हतपथानुवर्तिषु नूतनजीवनसमारम्भ प्रादुरभूत । तस्यैवाय जीवनप्रभावो यत्—माणिक्यनन्दि-प्रभाचन्द्र—विद्यानन्द—वादिराज—कुमारसेनप्रभृतयोऽनेके सूरय कर्णाटकदेशे समुदपादिषत। निरङ्कुशश्च सुगतादिप्रखरपरवादिभ्य पावन जैनधर्म। भट्टाकलङ्कदेवस्य ग्रन्थनिर्माणवैदुष्यताऽपि वाग्मित्वे वक्तृत्वे वादित्वे च प्रबला प्रख्यातिरजायत। तदीया वक्तृत्वशक्ति समामोहनशक्तिश्च तदानीमुपमीयतेस्म। महाकविश्रीवादिराजप्रशंसाया—

सदसि यदकलङ्कः कीर्तने धर्मकीर्ति
वचसि सुरपुरोधा न्यायवादेऽक्षपादः ।
इति समयगुरूणामेकतः सङ्गतानां
प्रतिनिधिरिव देवो राजते वादिराजः ॥

अमुना पद्येन श्रीद्दृदेवेन समुपमितो वादिराज कविः। विद्वत्सु विश्रुतत्वादेव'—भट्टाकलङ्काभिधया व्यश्रौषीत्। तदात्वे भट्ट इत्युपाधिरेवासीत्। कवीत्युपाधिरपि तमभूषयत्। कवीत्युपाधिस्तदा महनीयः समादरणीयश्चोपाधिरासीत्—तदेतत्प्राप्तौ प्रसिद्धोत्तमलेखकानामेव भाग्यं जागर्तिस्म। लघुसमन्तभद्रविद्यानन्दाभ्यां च महात्माय सकलतार्किकचूडामणिविशेषणेनास्मारि। अकलङ्कचन्द्रोऽपि तन्नामासीत्।

केचिद्वदन्ति-भट्टाकलङ्क -जिनदासाभिधजैनब्राह्मणस्य जिनमतीब्राह्मण्या समुत्पन्न पुत्र आसीत्। केचिच्च पद्मावत्या लब्धजन्मा पुरुषोत्तममन्त्रिण पुत्र आसीदिति ब्रुवते। परन्तु कथाप्रसारकैः देवस्य मातापितृनामानि कल्पनागोचरीभूतानि विधीयते। तस्य राजपुत्रत्वात्। स्वविरचितेऽस्मिन् राजवार्तिकग्रंथे प्रथमाध्यायस्य।

जीयाच्चिरमकलङ्कब्रह्मा लघुहव्वनृपतिवरतनय ।
अनवरतनिखिलविद्वज्जननुतविद्य प्रशस्तजनहृद्य ॥१॥

अत्रेनामुना पद्येन देवः स्वयमात्मानं लघुहव्वनृपतिजन्मानं समभ्यधत्त। नैहत्यसंशयस्यापि कस्यचिदवकाशः।

देवस्य जन्मभूमिः क्वासीदित्यनिर्णीतविषय एव सर्वथा। आराधनाकथाकोषकर्त्रा जन्मभूमिस्तदीया मान्यखेटनगरी न्यदर्शि। पर न तद्युक्तियुक्तं मान्यखेटनगरीयनरपतीनां शृङ्खलाबद्धनामावल्यां क्वचिदपि लघुहव्वनृपतेरनुल्लेखात्। सम्भाव्यमेतन्मान्यखेटं परतो भवेत्कश्चिन्माण्डलिकराजा लघुहव्व। देवः खलु समाजगामैकदा नरपतिसाहसतुङ्गस्य (शुभतुङ्गस्य वा) राजधान्यां मान्यखेटे, इति समुपलभ्यते समुल्लेख। अनुमानमिदं तमेव समुल्लेखं समाश्रित्य आराधनाकथाकोषकृता भवेत् प्रदर्शितं मान्यखेट इति जन्मस्थानं देवस्य। कथाकोषकार' राजपुत्रमपीमं नो व्यज्ञासीत् तत सम्भवोऽयं मन्त्रिपुत्रमेव देवं विज्ञाय तदीयं मान्यखेट इति जन्मस्थानं तेन विलिखितं भवेत्। राजावलीकथे ग्रंथे देवस्य जन्मस्थानं कांची (कांजीवर) अवाबोधि। भवेत्तदेव समञ्जसमिति सम्भावना।

'राजावलीकथे' इति नामधेय कन्नडभाषाया कश्चिद्ग्रन्थ। ग्रन्थेऽस्मिन्नैतिहासिककथानामेव समुल्लेख। ख्रीष्टैकोनविंशतितम (१९) शताब्दस्य प्रारम्भे व्यरचि चायं ग्रन्थो देवचन्द्रकविना कस्य चिन्मैसूरराजवंशीय देवीरम्मनामकरमण्यर्थं। एनमेव ग्रन्थं समवलम्ब्य राइसमहोदयेन—अकलङ्कदेव सुधापुरे देशीयगणस्याचार्यपदे सम्प्रतितस्थौ। सुधापुरस्थानं च उत्तरकनाराया विद्यते—अद्यत्वेऽपि तत्र सोन्द इति संज्ञया विश्रुतो नगर एव प्राचीनं सुधापुरमिति, स्वरचिते इन्स्क्रिपशन्स एट श्रवणबेलगोलाभिधे पुस्तके व्यलेखि। तेनैव राइसमहोदयेन विलसनमहोदयविरचित—मैकेंजीकलेक्शनपुस्तकीयप्रस्तावना समाधार्येदमपि न्यदर्शि–पोनतगनगरस्य बौद्धमहाविद्यालये देव शिक्षामादत्तवान् स्थानमिदं च त्रिचिदूरनिकटस्थं श्रूयते।

यानि यान्याख्यानान्युपलभ्यन्ते देवविषयाणि तैरिदमेव विस्तार्यते भट्टाकलङ्कदेव जन्मत एव ब्रह्मचर्यं समाराधितवान्। प्राप्तविद्यश्च दिगम्बराचार्योपाधिना चकमे। विद्याप्राप्तिकाले च स गरीयसो यातना बुभोज। कस्मिंश्चिद्बौद्धमहाविद्यालये ताथागतागममध्यगीष्ट। समभूच्च नन्दिसङ्घाचार्य। उपरिष्टाद्देवचन्द्रेण देशी-

१ Vide IDs No 39 Nagat taluy by Mr Rice

२ डा भांडारकरस्य १८८३–८४ तमवत्सरलिखितग्रन्थसूचीषु १२२ तमे पृष्ठे कविशब्दस्य परिभाषा दर्शनीया। न्यायकुमुदचन्द्रोदयप्रणेता भट्टारकप्रभाचन्द्रोऽपि कस्यचिदपि काव्यग्रन्थस्याप्रणीतत्वेऽपि कवीत्युपाधिना विभूषित आसीत्।

३ भट्टारकोऽपि कश्चिदकलङ्कनाम्ना भुवि समुपलब्धवान् विश्रुतिं।

च्यगणाचार्यत्वेन समभिदधे देव , भवेदनुमानत स देवसघात पालेव गण । पर न तत्र किमपि परिचायक चलवद्गमक यतो नाविर्भावयामास देव क्वापि सघमात्मनीन । गुरुमपि स्वीय नोल्लिखयाचकार क्वापि, विदूर आस्ता तदीयगुरुपरपरोल्लेख । कविवरमगराजेन १३५५ तमशकाब्दे विलिखित कश्चिच्छिला लेख , तमवलम्ब्य विज्ञायते नदिसघप्रभृतयश्चत्वार सघा देवस्य पश्चादेव प्रादुरभाविषत । अकलकदेवा-त्प्राक्कालवर्तिन —भगवत्याराधना - पद्मपुराण—समतभद्रकृतजिनशतकप्रभृतयो ये ग्रथा सप्रति समुप-लभ्यते तेषु, तथा देवसमकालीनविभुविद्यानद—प्रभाचद—माणिक्यनदिप्रभृतिविरचितग्रथेष्वपि न क्वापि सघचतुष्टयमिदमुपवर्णित ततो देवकालीनो न कतमोऽपि तेषु सघ समजनिष्ट । अकलकदेवश्च न तदात्वे कस्य चित्सघस्याचार्य समभूत्किंतु समस्तदिगबरजैनसघस्याचार्य इति मगराजकविवचन सर्वथा सुप्रतीत मेवाभाति । परमेवविधमपि कविवरमगराजकथन बलवत्प्रमाणानि पुरस्कृत्य सर्वथा परीक्षणीयमेव यत श्रुतावतारकथायां—भट्टदेवाद्बहुकालपूर्वं विक्रमप्रथमशताब्दिसमभ्यर्णे, आचार्य श्रीमदर्हद्बलि सघच-तुष्टयमिद सस्थापयाचकारेति तद्विरोधी समुल्लेखोऽप्यास्ते । अन्यत्रापि वर्वर्ति समुल्लेखोयमिति ।

भट्टदेव प्रखरतार्किकचूडामणिर्दार्शनिकचूडामणिश्चासीत । स हि अनन्यजेयात्मनीनवैदुष्यपाटवेन प्रबलबौद्धवादिन पराभूय जैनधर्म प्रत्यतिष्टिपदिति तदीयप्रबलकार्यं समचीकरत्तदीया भुवि गरीयसी विश्रुतिं । अभूत्कदाचिद्देवस्य विवादो नरपतिहिमशीतलपरिषदि । हिमशीतलश्च पल्लववशीयनरपतिरासीत् राजधानी च तदीया काच्या सच बौद्धोऽजायतेत्यत्र न कश्चित्सशयावकाश । देवेन सम वादो दिनसप्त कमभूदिति केषां चिन्मत । आराधनाकथाकारश्च षण्मासपर्यंतमभूदित्याह पर नात्र सशीति सर्वजनचेतस्सु तदा जैनधर्मस्य गरीयान् प्रभाव प्रापत्त् । हिमशीतलनृपानिदेशेन च प्राय सर्वे बौद्धा सीलोनदेशीयकौंडी नगर निरूसु । बौद्धा कौंडीनगर निवासिता इति समुल्लेखो विलसनमहोदयैरपि कृत । वर्तते च बौद्धै सह वादस्य जिनधर्मविजयस्य च समुल्लेख श्रवणबेलगोलाप्रशस्ताविरथ ।

तारा येन विनिर्जिता घटकुटीगूढावतारा सम
बौद्धैर्योधृतपीडपीडितकुदृग्देवार्थसेवाजलि ।
प्रायश्चित्तमिवांघ्रिवारिजरज स्नान च यस्याचर
द्दोषाणा सुगत स कस्य विषयो देवाकलक कृती ॥

चूणि —यस्येदमात्मनोऽनन्यसामान्यनिरवद्यविभवोपवर्णनमादर्श्यते—

राजन् साहसतुग ! सति बहव श्वेतातपत्रा नृपा
किंतु त्वत्सदृशो रणे निजयिनस्त्यागोन्नता दुर्लभा ।
तद्वत्सति बुधा न सति कवयो वागीश्वरा वाग्मिनो
नानाशास्त्रविचारचातुरधिय काले कलौ मद्विधा ॥
राजन् सर्वारिदर्पप्रविदलनपटुस्त्व यथात्र प्रसिद्ध-
स्तद्वत्ख्यातोहमस्या भुवि निखिलमदोत्पाटने पडिताना ।

---

१ तत पर शास्त्रविदां मुनीनामग्रेसराभूदकलकदेव ।
मिथ्याधकारस्थगिताखिलाया प्रकाशिता यस्य वचोमयूखै ॥ १८ ॥
तस्मिन् गते स्वर्गभुव महर्षौ दिव पतिं नर्तुमिव प्रकृष्टां ।
तद वयोद्भूतधुर्न भराणां बभूवुरित्थ भुवि सघभेदा ॥ १९ ॥
स योगिसघश्चतुर प्रभेदानासाद्य भूयानविरुद्धवृत्तान् ।
बभावय श्रीभगवाञ्जिनेंद्रश्चतुर्मुखानीव मिथ समानि ॥ २० ॥
देवनदिसिंहसेनसघभेदवर्तिना दशभेदत प्रबोधभाजिदेवयोगिनां ।
इतत ममसतो विरुद्धधर्मधर्मिनां मध्यत प्रसिद्ध एव नादसघ इत्यभूत् ॥ २१ ॥

•

नो चेदपोहमेते तव सदसि सदा सति सतो महांतो
वक्तु यस्यास्ति शक्ति स वदतु विदिताशेषशास्त्रो यदि स्यात् ॥
नाहकारवशीकृतेन मनसा न द्वेषिणा केवल
नैरात्म्य प्रतिपद्य नश्यति जने कारुण्यबुद्ध्या मया ।
राज्ञ श्रीहिमशीतलस्य सदसि प्रायो विदग्धात्मनो
बौद्धौघान् सकलान्विजित्य सुगत पादेन विस्फोटित' ॥

---

## समयविचार. ।

यद्यपि न क्वापि देवेन स्ववचनेन स्वसमयो विज्ञापितस्तथापि दृढतरैरनेकै प्रमाणै स कृतनिर्णय'--

१ । उपरिष्टात्प्रतिपादितमल्लिषेणप्रशस्तिपद्ये स्फुटमिद निर्णीयते यत्समुपतस्थौ कदाचिद्देवोऽकलक' साहसतुगनरपतिसदसि । साहसतुगश्च राष्ट्रकूट ( राठोर ) वशीय राजासीत् स च शुभतुग-कृष्णराज नामभ्यामपि भुवि व्यश्रौसीत् । यदा समभूद्विनिर्माण जिनसेनहरिवशपुराणस्य ८४० तमे वैक्रमशताब्दे ( ७०५ शकशताब्दे ) तदा नरपतिकृष्णराजात्मज —इन्द्रायुधो द्वितीयगोविंदो राज्यमचीकरत् ततोऽमुनापि प्रमाणेन नियत विज्ञायते कृष्णराजस्यैतस्मात्प्राक् राज्यकाल आसीत् । अनेन कृष्णराजनरपतिना ८१० तमविक्रमसवत्सरात् ८३८ तमसवत्सरपर्यंत राज्य समपादीति डा भाडारकरमहोदयैरपि स्वनिर्मितदक्षिणेतिहासे प्रकटीकृत ततोपि नि शल्य निर्धार्यते देव श्रीमदकलक' ८१० तमसवत्सरात् ८३२ तमसवत्सरपर्यंते कस्मिंश्चित्काले भुव्यजीवीत् ।

२ । हरिवशपुराणो व्यरचि ८४० तमे वैक्रमसवत्सरे श्रीमज्जिनसेनै । तस्मिश्च जिनसेनै कुमारसेन' समुल्लिखित । कुमारसेनसाहाय्यमासाद्य मामकीनोय —अष्टसहस्र्यभिधो ग्रथ. प्राप वृद्धिमिति विद्यानदि विभुरपि कुमारसेन समुल्लिखितवान् । विद्यानदविभुना च अष्टशतीभाष्यमधिकृत्य--अष्टसहस्री विरचिता तथाच प्रमाणेनामुनापि नियत निश्चीयते भट्टाकलकदेव ८४०तमसवत्सरात्प्रागेव समुदपद्यत हरिवशपुराणरचनाकाले न भवेत्तदस्तित्वमित्यत्रापि न चित्र ।

३ । अष्टसहस्र्या नैकत्र प्रसिद्धमीमासककुमारिलभट्टविदुषो भट्टनाम्ना कृत समुल्लेख । भट्टसमयश्च ७५७ तमवैक्रमसवत्सरात् ८१७ वैक्रमसवत्सरपर्यंत कृतनिर्णय । अतश्च विभुवरविद्यानदी भट्टसमयुगीन किंचित्तत्समयानतरोद्भवश्च भवेदित्यनवद्य निर्णय । भट्टाकलकश्च विद्यानदित प्राक्कालीनस्ततश्च भट्टदेवास्तित्वसमयेन वैक्रमशताब्देश्चतुर्थपादो नवमशताब्देश्च प्रारभश्चेति भवितव्य ।

४ । डा सतीशचन्द्रविद्याभूषणप्रभृतिभिर्विद्वद्भिश्च विद्वान् भट्टाकलकदेव ७५० तमे खीष्टाब्दे, अर्थात् ८०७ तमविक्रमसवत्सरसमभ्यर्णे बभूवेति निर्णीत ।

५ । अत्र के बी पाठकमहोदयानामतिमसिद्धात ६७५-तमे शकाब्दे महाराष्ट्रकर्णाटकदेशयो शासक दतिदुर्गाभिध कश्चिदवनिपाल समजायत । तस्य च साहसतुग इति विरुद आसीत् । तत्समयुगीनश्च बभूव भट्टाकलकदेव । राज्ञ श्रीदतिदुर्गस्य पश्चात् शुभतुगाभिधस्तत्पितृव्यो राज्यमचीकरत् । अस्यापि च साहसतुग इति विरुद आसीत् तत्समकालीनोऽपि देव आसीत् । ततश्च कथाकोपकृता 'देव शुभतुगसमयुगीन समभूदिति प्रकटीकृत यत् , तत्सर्वथा निरवद्यमेव पूर्वोक्तनरपतिद्वयस्यापि समये देवास्तित्वस्य निरसशय सिद्धत्वादिति ।

## देवसमकालीना विद्वांसोऽतेवासिनश्च

श्रीमद्देवसमये भूयसा ननु जैनविदुषा भुवि गरीयान् सदोह आसीत् । यावत किल तदारे समजीजनन विद्वासो-त्त्रितया तार्किकविद्वांसो न तावत समयातरे । प्राचीनग्रथानां शिलालेखानां च दर्शनात् तादात्विकानेकविदुषां नामानि समयतरति दर्शनपथ ।

क प्रावर्तिष्ट श्रीमद्देवानां गुरुरित्यानिर्णीतविषय एव सर्वथा पर विज्ञापितमस्माभि पुरा श्रीमत्पुष्पसेन-सूरिर्बभूव देवाना सतीर्थ सहपाठी वा श्रीमल्लिषेणप्रशस्तिप्रामाण्यात्-तद्यथा—

श्रीपुष्पसेनमुनिरेव पद महिम्नो
देवे स यस्य समभूत्स भवान्सधर्मा ।
श्रीविभ्रमस्य भवन ननु पद्ममेव
पुष्पेषु मित्रमिह यस्य सहस्रधामा ॥ १ ॥

अमुना पद्येन विबोध्यते श्रीपुष्पसेनसूरिर्गरीयान्विद्वान्, कश्चिज्जगत्यवातरदिति ।

माणिक्यनदि-विद्यानद-प्रभाचद्राश्चेति त्रयोऽपि सूरयो भगवद्देवसमकालीना एव बभूवु । स्वकर-विरचितन्यायकुमुदचद्रोदयस्य प्रथमाध्याये श्रीमत्प्रभाचद्रप्रभुस्तु 'श्रीमदकलकगुरुचरणसमभ्यर्णे समस्त-विषय बोध प्राप, इति निम्नलिखितेन पद्येन प्रकटयामास तद्यथा—

बोध कोप्यसम समस्तविषय प्राप्याकलक पद
जातस्तेन समस्तवस्तुविषय व्याख्यायते तत्पद ।
किं न श्रीगणभृज्जिनेन्द्रपदत प्राप्तप्रभाव स्वय
व्याख्यात्यप्रतिम वचो जिनपते सर्वात्मभाषामय ॥१॥

प्रभुप्रभाचद्रेण भगवान् माणिक्यनद्यपि स्वविरचिते प्रमेयकमलमार्तंडे समस्मारि तद्यथा—

गुरु श्रीनदिमाणिक्यो नदिताशेषसज्जन ।
नदतादुरितैकातरजो जैनमतार्णव ॥ १ ॥

माणिक्यनदिन नमस्कुर्वता प्रखरबिदुपानतवीर्येणापि प्रमेयरत्नमालावृत्तिप्रारभे दर्शितमिद—

अकलकवचोऽम्भोधेरुद्दध्रे येन धीमता ।
न्यायविद्यामृत तस्मै नमो माणिक्यनदिने ॥

अमुना प्रमाणेन निर्धार्यते भगवान् माणिक्यनदी देवसमकालीन एव समभूत् । 'अकलकचरण सविधे निखिलविषय बोध प्राप्तुमहमिति, प्रतिपादकेन भट्टारकप्रभाचद्रेण भगवान् माणिक्यनदी गुरुत्वेन सस्मृतस्ततो माणिक्यनदी देवात्प्राक् समुदपादीति नार्हाम प्रतिपादयितु ।

प्रभाचद्रेण प्रमेयकमलमार्तंडे देवेन सम भगवान् विद्यानदोऽपि समस्मारि ततो भगवान् विद्या नद्यपि देवसमकालमेव भुव कामधाचकार तद्यथा—

सिद्ध सर्वजनप्रबोधजनन सद्योऽकलकाश्रय
विद्यानदसमतभद्रगुणतो नित्य मनोनदन ।
निर्दोष परमागमार्थविषय प्रोक्त प्रमालक्षण
युक्त्या चेतसि चितयतु सुधिय श्रीवर्धमान जिन ॥ १ ॥

विद्यानदिविभुना च देवनिर्मिताष्टशत्युपर्येव गूढगभीरतात्पर्यप्रतिपादक'-अष्टसहस्र्यभिधो ग्रथो निर्मम-स्तत्र प्रमाण—

श्रीमदकलकशशधरविवृता समतभद्रोक्तिमत्र सक्षेपात् ।
परमागमार्थविषयामष्टसहस्री प्रकाशयति ॥

अतश्च-अकलकदेवप्रभृतीना सूरीणाममुना प्रकारेण क्रम सघट्यते-अकलकदेव, माणिक्य-नदी, विद्यानद, प्रभाचद्र इति । आचार्यचतुष्टयेऽप्यस्मिन् भगवान् भट्टाकलकदेव एव पूज्यपदाश्रित । भगवान् माणिक्यनदी नोल्लिखितवान् कतमेऽपि स्वकरलालितग्रथे विद्यानदिन । नापि प्रभाचद्रविभु क्वापि विद्यानद गुरुत्वेन समभ्यधात्तत प्रमाणेनामुना प्राक्कालीनत्वमेव विद्यानदतो भगवतो माणिक्यनदिन ।

१ अत्र देवपद भट्टाकलकदेव सूचयति-एतत्पद्यप्राक्पद्येन स्पष्टोभवत्ययमर्थ ।

कुमारसेनवादीभसिंहो सूरी अपि देवकालीनावेवाजायतां । विभुर्विद्यानन्दी—अष्टसहस्र्यंते 'कुमारसेनभट्टारकसाहाय्यत सवृधे मामकीनोऽय ग्रथ' इति कुमारसेन सस्मृतवान् । हरिवंशपुराणनिर्माता विद्वद्वरजिनसेनोपि कुमारसेनप्रशसायामिद समश्लोकयत्

आकूपार यशोलोके प्रभाचद्रोदयोज्वल ।
गुरो कुमारसेनस्य विचरत्यजितात्मक ॥ ३८ ॥

मल्लिषेणप्रशस्तिकारश्च बहुलप्रभाववत्त्वेन कुमारसेनमुनिं समभ्यष्टौत्—तथा हि—

उदेत्य सम्यग्दिशि दक्षिणस्या कुमारसेनो मुनिरस्तमाप ।
तत्रैव चित्र जगदेकभानोस्तिष्ठत्यसौ तस्य तथा प्रकाश ॥

कविवरवादीभसिंहस्य 'श्रीमता वादीभसिंहनोपलालितामाप्तमीमासा' अमुना वाक्येन—अष्टसहस्र्युत्थानिकाया कृत समुल्लेखो विराजते । अमुमेव महात्मान वादीभसिंह, जिनसेनस्वामी वादिसिंहनाम्ना समुदलेखयत् तद्यथा—

कवित्वस्य परा सीमा वाग्मित्वस्य पर पदं ।
गमकत्वस्य पर्यंतो वादिसिंहोऽर्च्यते न कै ॥

वीरसेनस्वामी महापुराणकर्तुर्भगवज्जिनसेनाचार्यस्य गुरुरासीत् यद्यपि तदीया बलवती विश्रुति' सिद्धातवेत्तृत्व एव तथापि स पावनात्मा प्रबलन्यायापारकूपारो नैयायिक. समभूत्—अष्टसहस्र्यते भगवान् विद्यानदस्तार्किकरूपेणैवामु सस्तुतवात् । उत्तरपुराणनिर्मात्राप्यय प्रास्तुतामुनापद्येन—

तत्र वित्रासिताशेषप्रवादिमदवारण ।
वीरसेनाग्रणीर्वीरसेनभट्टारको बभौ ॥

तदात्वे परवादिमल्लदेवनाम्ना कश्चिदपरोऽपि तार्किकविद्वान् भुवि विश्रुत सोऽपि कृष्णराज (साहसतुग ) समक्ष कदाचित्समुपातिष्ठदिति समुपलभ्यते समुल्लेखो मल्लिषेणप्रशस्तौ । तद्यथा—

घटवादघटाकोटिकोविद कोविदा प्रवाक् ।
परवादिमल्लदेवो देव एव न सशय ॥

येनेयमात्मनामधेयनिरुक्तिरुक्ता नामप्रष्टवत कृष्णराज प्रति—

गृहीतपक्षादितर पर स्यात्तद्वादिनस्ते परवादिन स्यु ।
तेषा हि मल्ल परवादिमल्लस्तन्नाम सन्नाम वदति सत ॥

कश्चित्—श्रीपालनाम्नापि तदानीं निश्रुतविद्वान् बभूव त च जिनसेनस्वामी भट्टाकलकविद्यानदाभ्या सम समुल्लिखितवान् । जयधवलसिद्धातस्य वीरसेनीया महती टीका विदुषा श्रीपालेनैव समपादि । तस्मिन्नेव समये कुमारनदिभट्टारकोऽपि कश्चित्समुपालेभे भुवि जन्म तदीयग्रथस्य कश्चिच्छ्लोक विभुर्विद्यानदी समुद्दध्रे कचित्प्रमाणपरीक्षाया स्वकरकलिताया । अनया प्रमाणपरिपाट्या जिनधर्मनिकेतनस्तभायमानैर्भूयोभिर्विद्वद्भिर्निष्कलकतया प्राभावित जैनमार्ग , न कश्चिदपि तदानीं पावनार्हतमताभिघाताय समुद्यदुर्मीव पुमान् प्रादुरासीद्भुवि ।

## ग्रथनिर्माण ।

अष्टशती—प्रणीतिष्वपि भूयस्सु गूढगभीरानवद्यतात्पर्यप्रतिपादकेषु ग्रथेषु श्रीमदकलकदेवानां सर्वतो विश्रुतोय ग्रथ. । स्वामिसमतभद्रविरचितगधहस्तिमहाभाष्यमगलाचरणस्य देवागमस्तोत्रस्य भाष्यभूतश्चाय ।

राजवार्तिक—टीकेयां श्रीमद्भगवदुमास्वामिविरचिततत्त्वार्थसूत्रस्योपरिष्टात् । श्लोकसख्या चैतस्य १६००० सहस्रपरिमित'

न्यायविनिश्चय —प्रामाणिकप्रबलतर्कपथोऽयं देवस्य । विराजते चायं ग्रंथ —आरासिद्धांतभवने कविवरवादिराजनिर्मितवृत्तिविभूषित । मूलग्रथा न्यायविनिश्चय पद्यात्मक ।

लघीयस्त्रयी—भट्टारकप्रभाचद्रविरचितो न्यायकुमुदचद्रोदय , अस्यैव ग्रथस्य विस्तृत भाष्यमिदं ।

बृहत्त्रयी—( बृद्धत्रयी ) लघीयस्त्रयी बृहत्त्रयी द्वावपीमौ ग्रथौ निष्टवे, इत्युपनामविभूषितानां पडितकल्पाभरमायामहोदयानां सन्निधौ कोल्हापुरे वर्तेते ।

न्यायचूलिका – अयमपि ग्रथो देवस्येति श्राप्यते समुल्लेख ।

अकलकस्तोत्र —( अकलकाष्टक ) देवस्यैव निर्मितमिद स्तोत्र पर तन्निर्मितत्वे सशीतिर्भूयसा ।

अकलंकप्रायश्चित्त—अकलकप्रतिष्ठापाठश्च देवेनैव निर्मिताविति वर्तते भुवि विश्रुति पर भ्रांतिरेवैय महती तद्ग्रथयोर्निस्सारत्वात् युक्तिबहिर्भूतत्वाच्च । एवविधयुक्तिशून्यग्रथयो प्रणेता देव समजनीति कलकीकरण देवस्येदुष्यस्य । स्वरूपसबोधनाभिधस्तदीय कश्चिद्ग्रथ इति प्रादुरभावि डा सतीशचद्रविद्याभूषणमहोदये , पर नावसीयते ग्रथ प्राप्योऽप्राप्यो वाय ।

कथाग्रथेषु यद्यपि देवस्य जीवनवृत्तमपि समुपलभ्यते पर विवादास्पदत्वात्तस्य नोल्लेखयितुमभीप्यते—

## श्रीमदुमास्वामी

मूलग्रथ किलैतस्य तत्त्वार्थराजवार्तिकस्य तत्त्वार्थसूत्रापरनामधेयो मोक्षशास्त्राभिध । मोक्षशास्त्रप्रणेता भगवान् उमास्वामी–उमास्वातिर्वा । कदाय पावनात्मा विभूषयामासात्मनीनजीवनेन भारतभूमिमिति निर्णयाय न पारयामो वयमस्खलिततया । महात्माय दिक्पटसमाजे भगवदुमास्वामीत्यभिधयाभिहित । सबधिनस्तु श्वेतपटा इममेव भगवत—उमास्वातीत्यभिदधति । भगवत्कल्पनाविर्भूतेषु दिक्पटाभिमतेषु सूत्रेष्वपि परिशुद्धि पराक्रुचिरल्पीयस्ता च दृश्यते, ततश्च भगवानय दिगबराचार्य श्वेताबरसूरिर्वा बभूवेति महीयसी सशीतिरपि तदीयकालादिनिर्णयप्रतिबधिका । एवविधप्रखरप्रतिभस्य भगवतो जीवनेतिहासोवश्यमुल्लेखार्ह इति तदीयजीवनेतिवृत्तमाविर्भावयितु समुत्सुकाना अपि वय न शेकिम सामग्र्यभावादिति परिदूयते नश्चेतोऽनवलोकितपाराकूपारातरालगतपोतकोटिसमुपविष्टपतत्रिण इव । पर नात्र सशय भगवज्जीवनाविर्भावाय समारभ्यमाणे प्रयत्ने यदि तत्त्वार्थवार्तिकतात्पर्यनिदर्शक श्लोकवार्तिकालकार प्रकाशपदवीमुपानेष्यत् नियत पाठकसदोहस्तत्र तदद्रक्ष्यादिति तत क्षमा प्रार्थयमाना वयमत्रैव विरमाम —

अत्र विदुषामग्रेसरा के वी पाठकमहोदया

भगवदुमास्वामिविरचित मोक्षशास्त्रमुभयोरपि दिक्पटश्वेतपटयो समादरणीय । समनुमीयते विनिर्माण किलैतन्मोक्षशास्त्रस्य दिक्पटश्वेतपटप्रभेदात्प्रागेव अर्थात् खिष्टीयसवत्सरात्प्रागेव समभूदिति प्रतिपादयति।

विनीतो

गजाधरलाल: ।



# राजवार्तिकीयसूत्राणामकाराद्यनुक्रमः ।

इति सूत्रसूची समाप्ता ।

---

# श्री तत्त्वार्थराजवार्तिकस्य विषयानुक्रमणिका ।

## प्रथमोऽध्यायः ।

इति सूत्रसूची समाप्ता ।

इति पञ्चमोऽध्याय.।

## षष्ठोऽध्यायः।

इति सप्तमोऽध्याय ।

अथाष्टमोऽध्यायः

## अथ नवमोऽध्यायः।

इति दशमोऽध्याय ।

समाप्तोय विषयानुक्रम श्रीराजवार्तिकस्य ।



इति नवमोऽध्याय ।

अथ दशमोऽध्यायः ।





नम सिद्धेभ्य ।

# सनातनजैनग्रंथमाला ।

## ४.

श्रीमद्भट्टाकलंकदेवविरचित

# तत्त्वार्थराजवार्तिकं ।

**प्रणम्य सर्वविज्ञानमहास्पदमुरुश्रियं ।**
**निर्द्धौतकल्मषं वीरं वक्ष्ये तत्त्वार्थवार्तिकं ॥१॥**

**श्रेयोमार्गप्रतिपित्सात्मद्रव्यप्रसिद्धे** ॥ १ ॥ उपयोगस्वभावस्यात्मन श्रेयसा योक्ष्यमाणस्य प्रसिद्धौ सत्यां तन्मार्गप्रतिपित्सोत्पद्यते ।

**कथ चिकित्साविशेषप्रवृत्तिवत्** ॥ २ ॥ यथा व्याधिनिवृत्तिजफलश्रेयसा योक्ष्यमाणस्य चिकित्स्यस्य प्रसिद्धौ चिकित्सामार्गविशेषप्रतिपित्सोत्पद्यते तथात्मद्रव्यप्रसिद्धौ श्रेयोमार्गप्रतिपित्सेति । तस्मात्साधीयसी मोक्षमार्गव्याख्या स्वायंभवीति किं च ।

**सर्वार्थप्रधानत्वात्** ॥ ३ ॥ ससारिण पुरुषस्य सर्वेष्वर्थेषु मोक्ष प्रधान, प्रधाने च कृतो यत्न फलवान् भवति तस्मात्तन्मार्गोपदेश कार्य , तदर्थत्वात् ।

**मोक्षोपदेश पुरुषार्थप्रधानत्वादितिचेन्न जिज्ञासमानार्थिप्रश्नापेक्षप्रतिवचनसद्भावात्॥४॥** आह मोक्षोपदेश एव कार्यो न मार्गोपदेश कस्मात्पुरुषार्थप्रधानत्वात् सर्वश्रेयोभ्य पुंसो मोक्ष एव पर श्रेय आत्यंतिकानुपमश्रेयस्त्वादिति तन्न जिज्ञासमानार्थिप्रश्नापेक्षिप्रतिवचनसद्भावात्, योसौ मोक्षेणार्थी जिज्ञासमान स मार्गमेव पृष्टवान् न मोक्षमतस्तन्मार्गोपदेश एव न्याय्य ।

**मोक्षमेव कस्मान्नाप्राक्षीदिति चेन्न कार्यविशेषसप्रतिपत्ते** ॥ ५ ॥ स्यादेतदय पृष्टा मोक्षमेव कस्मान्न पृष्टवान् कैमर्थक्यान्मार्गं पृष्टवानिति तन्न कार्यविशेषसप्रतिपत्ते । मोक्षकार्यं प्रति सर्वेषा सद्वादिना संप्रतिपत्तिर्न कारण प्रति ।

**कारण तु प्रति विप्रतिपत्ति पाटलिपुत्रमार्गविप्रतिपत्तिवत्** ॥ ६ ॥ यथा केचित्पुरुषा नानादिग्भागापेक्षिषु मार्गेषु विप्रतिपद्यते न पाटलिपुत्रे प्राप्तव्ये । तथा मोक्षकार्यं प्रतिपद्य तदर्थमादृता सर्वे सद्वादिनस्तत्कारणेषु विप्रतिपद्यते । तद्यथा केचित्तावदाहु ज्ञानादेव मोक्ष इति । अपर आहु ज्ञानवैराग्याभ्यामिति । पदार्थावबोधो ज्ञान । विषयसुखानभिष्वगलक्षण वैराग्यमिति । अपर आहु क्रियात एव मोक्ष इति "नित्यकर्महेतुक निर्वाणमिति–वचनात्" किं च ।

**पराभिप्रायनिवृत्त्यशक्यत्वात्** ॥ ७ ॥ न च परस्य पृष्टु प्रश्नाभिप्रायोऽस्मदादिभि शक्यो निवर्तयितु । माप्राक्षीन्मार्गं मोक्ष पृच्छेति चेन्न भिन्नरुचित्वाल्लोकस्य ।

**कल्पनाभेदात्तद्विप्रतिपत्तिरिति चेन्न कर्मविप्रमोक्षसामान्यात् ॥ ८ ॥** आह न मोक्षं प्रति सम्प्रतिपत्तिरस्ति किंतु विप्रतिपत्तिरेव कस्मात् ? कल्पनाभेदात् अन्येऽन्यथालक्षणं मोक्षं परिकल्पयति रूपवेदनासंज्ञासंस्कारविज्ञानपंचकस्कंधनिरोधादभावो मोक्ष इति । गुणपुरुषांतरोपलब्धौ प्रतिस्वप्रसुप्तनिर्वेकज्ञानवदनभिव्यक्तचैतन्यस्वरूपावस्था मोक्ष इत्यपरे । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारनवात्मगुणात्यंतोच्छेदो मोक्ष इत्यन्ये । तस्मात्कल्पनाभेदान्मोक्षं प्रति विप्रतिपत्तिरिति तन्न कर्मविप्रमोक्षसामान्यात्सर्वेषां हि प्रवादिनां यां तामवस्थां प्राप्य कृत्स्नकर्मविप्रमोक्ष एव मोक्षोऽभिप्रेत इति आस्माकीनसमयाविरोधान्मोक्षकार्यं प्रति सम्प्रतिपत्तिः ।

**कार्यविशेषोपलंभात्कारणान्वेषणप्रवृत्तिरिति चेन्न अनुमानतस्तत्सिद्धेर्घटीयंत्रभ्रांतिनिवृत्तिवत् ॥ ९ ॥** आह कार्यविशेषमुपलभ्य लौकिकाः कारणान्वेषणं प्रति आद्रियंते यथा ज्वरादिरोगदर्शनात्तत्कारणान्वेषणे भिषक् प्रवर्तते चिकित्साप्रसिद्ध्यर्थं । तथा मोक्षदर्शनात्तत्कारणान्वेषणं न्याय्यं, न चासौ दृश्यते तस्मान्मोक्षकारणान्वेषणाभाव इति तन्न अनुमानतस्तत्सिद्धेः । प्रत्यक्षतोऽनुपलभ्यमानस्यापि मोक्षकार्यस्यानुमानत उपलब्धौ मोक्षकारणान्वेषणं युक्तं घटीयंत्रभ्रांतिनिवृत्तिवत् । यथा बलीवर्दपरिभ्रमणापादितारगर्तभ्रांतिं घटीयंत्रभ्रांतिजनिकां बलीवर्दपरिभ्रमणाभावे चारगर्तभ्रात्यभावाद्घटीयंत्रभ्रांतिनिवृत्तिं च प्रत्यक्षत उपलभ्य सामान्यतोदृष्टादनुमानाद्बलीवर्दतुल्यकर्मोदयापादितां चतुर्गत्यरगर्तभ्रांतिं शारीरमानसविविधवेदनाघटीयंत्रभ्रांतिजनिकां प्रत्यक्षत उपलभ्य ज्ञानदर्शनचारित्राग्निर्दग्धस्य कर्मण उदयाभावे चतुर्गत्यरगर्तभ्रात्यभावात्संसारघटीयंत्रभ्रांतिनिवृत्त्या भवितव्यमित्यनुमीयते । यासौ संसारघटीयंत्रभ्रांतिनिवृत्तिः स एव मोक्ष इति तस्मादनुमानतो मोक्षकार्यसिद्धेरप्यनयामो मोक्षकारणान्वेषणं न्याय्यमिति किं च ।

**सर्वशिष्टसंप्रतिपत्तेः ॥ १० ॥** सर्वे शिष्टाः प्रत्यक्षतोऽनुपलभ्यमानस्यापि मोक्षकार्यस्यानुमानादस्तित्वमभ्युपेत्य प्रतिनियतमोक्षकारणेषु प्रयतंते किंच ।

**आगमात्तत्प्रतिपत्तेः ॥ ११ ॥** प्रत्यक्षतोऽनुपलभ्यमानोपि मोक्षः आगमादस्तीति निश्चीयते कथं ।

**सूर्याचंद्रमसोर्ग्रहणवत् ॥ १२ ॥** यथा सूर्याचंद्रमसोर्ग्रहणममुष्यां वेलायाममुना वर्णेनामुनादिग्भागेन सर्वग्रासि नवेत्येवमादि सांवत्सरैरप्रत्यक्षमप्यागमाज्ज्ञायते तथा मोक्षोपीति किं च ।

**स्वसमयविरोधः ? ॥ १३ ॥** अप्रत्यक्षत्वान्मोक्षो नास्तीति यस्य मतं तस्य स्वसमयविरोधो भवति । सर्वे हि समयवादिनो मोक्षादीनर्थानप्रत्यक्षानभिकांक्षति ।

**बंधकारणानिर्देशादयुक्तमिति चेन्न मिथ्यादर्शनादिवचनात् ॥ १४ ॥** स्यादेतदन्यत्र बंधकारणनिर्देशः कृतः विपर्ययाद्बंध इत्यादि । इह तु न कृतस्ततो मोक्षकारणनिर्देशस्यायुक्तिरिति तन्न मिथ्यादर्शनादिवचनात् । वक्ष्यते एतत् "मिथ्यादर्शनाविरतिप्रमादकषाययोगा बंधहेतवः" इति ।

**बंधपूर्वकत्वान्मोक्षस्य, प्राक् तत्कारणनिर्देश इति चेन्न आश्वासनार्थत्वात् ॥ १५ ॥** स्यादारेका प्राङ्मोक्षकारणनिर्देशाद्बंधकारणनिर्देशो न्याय्यः । यतो बंधपूर्वको मोक्ष इति तन्न आश्वासनार्थत्वात्कथं ।

**बंधनबद्धवत् ॥ १६ ॥** यथा कारावबंधनबद्धः प्राणी बंधकारणश्रवणाद्बिभेति । मोक्षकारणश्रवणादाश्वसिति तथा अनादि संसारकारावरुद्ध आत्मा प्रथममेव बंधकारणश्रवणान्माभैषीन्मोक्षकारणश्रवणाच्च कथमाश्वासं यायादिति प्रथमं बंधकारणमनुक्त्वा, मोक्षकारणोपदेशः कृतः किंच ।

**मिथ्यावादिप्रणीतमोक्षकारणनिराकरणार्थं वा ॥ १७ ॥** मिथ्यावादिप्रणीतैकद्विमोक्षकारणनिराकरणार्थोयमार्हतो मोक्षकारणनिर्देश आदौ कृतः, त्रयमेतत् संगतं मोक्षमार्गो नैकशो द्विशो वेति । अतो विपर्ययमात्रप्रभवा संसारप्रक्रिया परिकल्प्य ज्ञानविशेषात्तद्विनिवृत्तिरिति ।

*एवमाद्यनेकमिथ्यावादिप्रणीतमतनिवृत्तये त्रैविध्यावजृम्भितमोक्षकारणप्रदर्शनार्थमाह—*

## सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः (इति) ॥१॥

अपरे आरातीयपुरुषशक्त्यपेक्षयास्सिद्धांतप्रक्रियाऽऽविष्करणार्थं मोक्षकारणनिर्देशमबधेन शास्त्रानुपूर्वीं रचयितुमन्विच्छन्निदमवोचदिति आचक्षते। नात्र शिष्याचार्य्यसंबंधोविवक्षित। किंतु संसारसागरनिमग्नानेकप्राणिगणाभ्युज्जिहीर्षा प्रत्यासूर्णोऽतरेण मोक्षमार्गोपदेश, हितोपदेशो दु प्राप इति निश्चित्य मोक्षमार्गं व्याचिख्यासुरिदमाह।

**प्रणिधानविशेषाहितद्वैविध्यजनितव्यापारं तत्त्वार्थश्रद्धानं सम्यग्दर्शनं ॥१॥** प्रणिधानमुपयोग परिणाम इत्यनर्थांतर। येनार्थोऽर्थांतराद्विशिष्यते योवाऽर्थांतरगततात्पर्यायाद्विशिष्यते स विशेष। विशिष्टिर्वा विशेष। प्रणिधानमेव विशेष प्रणिधानविशेष प्रणिधानस्य वा विशेष प्रणिधानविशेष। आहितमात्मसात्कृत परिगृहीतमित्यनर्थांतर। विधयुक्तगतप्रकारा समानार्था। निसर्गाधिगमभेदाद् द्वौ विधानस्येति द्विविध द्विविधस्य भाव कर्म वा द्वैविध्य। प्रणिधानविशेषेणाहित प्रणिधानविशेषाहित द्वैविध्यमस्य प्रणिधानविशेषाहितद्वैविध्य। जनित प्रादुर्भावित व्यापृतिर्व्यापार अर्थप्रापणसमर्थ क्रियाप्रयोग जनितोव्यापारोस्य जनितव्यापार कश्चास्य व्यापार इहातर्दर्शनमोहोपशमक्षयक्षयोपशमपर्यायपरिणामाद्बाह्यपरिणामकारणापादितादात्मनो जीवादिपदार्थं विचारविषयोधिगमो निसर्गश्च व्यापार। प्रणिधानविशेषाहितद्वैविध्यमेव जनितव्यापार प्रणिधानविशेषाहितद्वैविध्यजनितव्यापार तत्त्वार्थश्रद्धान- सम्यग्दर्शन। अस्यार्थ उत्तरत्र वक्ष्यते।

**नयप्रमाणविकल्पपूर्वको जीवाद्यर्थयाथात्म्यावगम सम्यग्ज्ञानं ॥२॥** नयौ च प्रमाणे च नयप्रमाणानि तेषा विकल्पा: नयप्रमाणविकल्पा। द्वौ नयौ द्रव्यार्थिक पर्यायार्थिकश्च। द्वे प्रमाणे प्रत्यक्ष परोक्ष च। तेषा विकल्पा नैगमादयो मत्यादयश्च वक्ष्यते। पूर्वशब्दस्तत्कारणवाची। नयप्रमाणविकल्पपूर्वको नयप्रमाणविकल्पहेतुक इत्यर्थ। येन येन प्रकारेण जीवादय पदार्था अवस्थिता तेन तेनावगम जीवाद्यर्थयाथात्म्यावगम सम्यग्ज्ञान। मोहसशयविपर्ययनिवृत्त्यर्थं सम्यग्विशेषण।

**संसारकारणविनिवृत्तिं प्रत्यागूर्णस्य ज्ञानवतो बाह्याभ्यंतरक्रियाविशेषोपरमः सम्यक् चारित्रं ॥ ३ ॥** संसार पचविधः द्रव्यक्षेत्रकालभवभावपरिवर्तनभेदात्। तस्य कारणं कर्माष्टविध तस्य विशेषेणात्यंतिकी निवृत्ति संसारकारणविनिवृत्ति। ता प्रत्यागूर्णस्योद्यतस्य ज्ञानवत इति प्रशसाया मतु। यथा रूपवानिति प्रशसायुक्तस्य सत्ता कथ्यते। नहि कस्यचिद्रूप नास्ति प्रशस्त तु नास्ति। तथा ज्ञानमस्यास्तीति ज्ञानवानिति प्रशसायुक्तस्य सत्ता कथ्यते। न कस्यचिज्ज्ञान नास्ति सर्व एवात्मा ज्ञानवाश्चैतन्यान्मिथ्यादर्शनोदये विपरीतार्थग्राहित्वान्मिथ्यादृष्टिरज्ञस्तदभावे याथात्म्येनार्थविभावनात्सम्यग्दृष्टि प्रशस्तज्ञान, तस्य ज्ञानवत। क्रिया क्रियातराद्विशिष्यते येन स विशेष। विशिष्टिर्वा विशेष:। स द्विविधो बाह्य आभ्यतरश्चेति। बाह्यो वाचिक कायिकश्च बाह्येंद्रियप्रत्यक्षत्वात्। आभ्यतरोमानस छद्मस्थाप्रत्यक्षत्वात्। तस्योपरम सम्यक्चारित्रमुच्यते। स पुन परमोत्कृष्टो भवति वीतरागेषु यथाख्यातचारित्रसज्ञक। आरातीयेषु सयतासयतादिषु सूक्ष्मसापरायिकातेषु प्रकर्षाप्रकर्षयोगी भवति।

**ज्ञानदर्शनयोः करणसाधनत्वं कर्मसाधनश्चारित्रशब्दः ॥ ४ ॥** ज्ञान दर्शनमिति करणसाधनावेतौ शब्दो। "करणाधिकरणयो" रिति युटो विधानात्। कर्मसाधनश्चारित्रशब्द "भूवदिग्रहृभ्यो णित्र श्चरेर्वृत्त इति कर्मणि विधानात्। ज्ञानदर्शनशक्तिविशेषशुद्धिसन्निधाने जीवादीनर्थानात्मा जानाति पश्यति वा येन तज्ज्ञान दर्शन च। चारित्रमोहोपशमक्षयक्षयोपशमसद्भावे चर्यते तदिति चारित्र।

**कर्तृकरणयोरन्यत्वादन्यत्वमात्मज्ञानादीनां परश्वादिवदिति चेन्न तत् परिणामादग्निवत् ॥५॥** स्यादारेका ज्ञानदर्शनयोरात्मद्रव्यादन्यत्व, कस्मात्? दृष्टत्वादेवदत्तपरशुवदिति तन्न किं कारण? तत्परिणामादग्निवत्। यथा बाह्यद्रव्यादिपचतयहेतुसन्निधाने सति आभ्यतरपरिणामवशाचैजस्कायिक

नामकर्मोदयाविर्भावितौष्ण्यपर्याय आत्मा तत्परिणामादग्निव्यपदेशभाग्भवति । स एवंभूतनयवक्तव्यतयौष्ण्यपर्यायादनन्यः । तथैवंभूतनयवक्तव्यतावशाज्ज्ञानदर्शनपर्यायपरिणत आत्मैव ज्ञानं च दर्शनं तत्स्वाभाव्यात् ।

अतत्स्वाभाव्येऽनवधारणप्रसंगोऽग्निवत् ॥ ६ ॥ यथाग्निरुष्णपर्यायेणान्यद्रव्यासाधारणेनावधार्यतेऽयमग्निरिति । स चेत्तत्स्वभावो न भवेत्प्रतिविशिष्टासाधारणपर्यायाभावादग्नेरनवधारणप्रसंगः । तथात्मनोपि ज्ञानादन्यत्वेऽनवधारणं यतोयमन्यद्रव्यासाधारणज्ञानपर्यायस्तत्स्वभावात्ततोऽनन्यो द्रव्यार्थादेशात् । स चेन्न ज्ञानस्वभावः सत्येवमज्ञः स्यात्ततश्चास्यानवधारणप्रसंगः ।

अर्थांतरात्संप्रत्यय इति चेन्नोभयासत्त्वात् ॥ ७ ॥ स्यादेतदन्यत्वे सत्यपि नानवधारणं कुतः ? यस्मादर्थांतरात्संप्रत्ययः ।

नीलीद्रव्यसंबंधाच्छाटीपटकंबलादिषु नीलसंप्रत्ययवत् ॥ ८ ॥ यथार्थांतरभूतेन नीलीद्रव्येण संबंधत्वाच्छाटीपटकंबलादिषु नीलसंप्रत्ययः । तथार्थांतरभूतोष्णगुणसमवायादुष्णोग्निः । आत्मा चार्थांतरभूतज्ञानगुणसमवायाज्ज्ञ इति । तन्न किं कारणं ? उभयासत्त्वात् ।

दंडदंडिवत् ॥ ९ ॥ यथा दंडसंबंधात्प्रागदंडी जात्यादिभिर्लक्षणैः स्वतः सिद्धत्वात् । स दंडोपि प्राग्दंडिसंबंधाद्वृत्तद्राघिमादिना लक्षणेन स्वतः सिद्धत्वात् । सतो दंडयोगाद्दंडीत्येतन्न्याय्यं । तथा नीलद्रव्ययोगाच्छाट्यादि नीलमित्येतन्न्याय्यं । तथोष्णगुणयोगान्न प्रागग्नेरन्यद्विशेषलक्षणं सद्भावस्य प्रख्यापकमस्तीति असन्नग्निः । उष्णस्यापि प्रागग्नियोगादसत्त्वं निराश्रयगुणाभावात् । न चासतो संबंधो दृष्ट इष्टो वा । आत्मनोपि ज्ञानगुणयोगात्प्रागसत्त्वं विशेषलक्षणाभावात् । ज्ञानस्याप्यात्मद्रव्यसंबंधात्प्रागसत्त्वं निराश्रयगुणाभावात् । नचासतोः संबंधो दृष्ट इष्टो वा । तस्मादुभयासत्त्वान्नार्थांतरात्संप्रत्ययः किं च ।

उभयथाप्यसद्भावात् ॥ १० ॥ कथं—

सर्वासद्धादिवत् ॥ ११ ॥ इदमस्तित्वं प्रष्टव्यं उष्णगुणयोगात्प्रागग्नौ उष्ण इति ज्ञानं स्याद्वा न वेति । यदि प्रागुष्णगुणयोगादग्नावुष्ण इति ज्ञानं कैमर्थक्यादुष्णगुणयोगः प्रार्थ्यते । अथ नास्त्यतोप्युष्णज्ञानाभावादनुष्णस्वभावस्याग्नेरुष्णगुणयोगादुष्ण इति व्यपदेशाभावात् किंच ।

अनवस्थाप्रतिज्ञाहानिदोषप्रसंगात् ॥ १२ ॥ कथं—

सर्वसत्प्रतिपक्षवादिवत् ॥ १३ ॥ यथा यद्युष्णगुणयोगादग्निरुष्णः अथोष्णगुणः केन योगादुष्णः स्वभावादिति चेदग्नौ कोऽपरितोषः । उष्णत्वादुष्णगुणस्योष्णत्वं, कुतः स्वतः एवेति चेदग्नौ कोऽपरितोषः । अथाग्नेरुष्णत्वं स्वत एव मासिधदिति उष्णत्वस्याप्यन्यदुष्णत्वमस्ति तस्याप्यन्यदित्यनवस्था माभूदिति स्वतः एवोष्णत्वस्योष्णत्वं । ननु प्रतिज्ञाहानिरर्थांतरात्संप्रत्यय इति । तथा यदि ज्ञानगुणयोगादात्मा ज्ञः, अथ ज्ञानगुणः केन योगात्, स्वभावादिति चेदात्मनि कोऽपरितोषः । ज्ञानत्वाज्ज्ञानगुणस्य ज्ञानव्यपदेश इति चेज्ज्ञानत्वस्य ज्ञानत्वं कुतः स्वत एवेति चेदात्मनि कोऽपरितोषः । अथात्मनो ज्ञत्वं स्वत एव मासिधदिति ज्ञानत्वस्याप्यन्यज्ज्ञानत्वमस्ति तस्याप्यन्यदित्यनवस्था । अथानवस्था माभूदिति स्वतः एव ज्ञानत्वस्य ज्ञानत्वमिष्टं ननु प्रतिज्ञाहानिरर्थांतरात्संप्रत्यय इति । किं च ।

तत्परिणामाभावात् ॥ १४ ॥ यथा दंडसंबंधेपि दंडिनो न दंडपरिणामः दंडीव्यपदेशमात्रप्रतिलंभात्, तथोष्णगुणस्योष्णत्वसामान्यविशेषसंबंधेनोष्णत्वं । गुणसामान्यविशेषपदार्थभेदादतः उष्णत्ववानुष्णगुण इत्यासक्तं न तूष्ण इति । तथोष्णगुणसंबंधेप्यग्नेर्नोष्णत्वं द्रव्यगुणपदार्थभेदादतः उष्णवानग्निरित्यासक्तं ननु स्वयमुष्ण इति ।

समवायादितिचेन्न प्रतिनियमाभावात् ॥१५॥ स्यान्मतं समवायो नामायुतसिद्धलक्षणः संबंधः इहेदं बुद्ध्यभिधानप्रवृत्तिहेतुस्तेनैकत्वमिवानीतानां व्यपदेशो भवति उष्णत्वसमवायादुष्णो गुणः उष्णगुणस

१ कथ्यते इत्यपि पाठांतर ।

मवायाच्चाग्निरुष्ण इति। तन्न कुत ? प्रतिनियमाभावादुष्णत्वोष्णगुणयोरप्स्वग्नावुष्णयोश्चान्यत्वे कोय प्रतिनिशिष्टो नियमो यदुष्णगुणस्याग्नावेव समवायो नाप्सु। शीतगुणस्य चाप्स्वेव समवायो नाग्नौ। उष्णत्वस्य चोष्णगुणेनैव समवायो न शीतादिगुणान्तरेणेति। तस्मादेननिशेषेणाय प्रतिनियम इष्यते न त पश्याम अत एव द्रव्यपरिणाम एवौष्ण्यमिति सिद्ध। नान्यस्तत्प्रतिनियमहेतुरस्ति स्वभावोहेतुरिति चेत्तत एव तत्परिणामसिद्धि किं च।

**समवायाभावो वृत्त्यंतराभावात् ॥ १६ ॥** नास्ति तत्परिकल्पित समवाय कुत वृत्त्यन्तराभावाद्यथा गुणानां पदार्थानां द्रव्येण समवायसंबंधाद्वृत्तिरिष्टा तथा समवाय पदार्थांतर भूत्वा केन सबंधेन द्रव्यादिषु वर्त्स्यति समवायातराभावादेक एव हि समवायस्तत्त्वंभावेन व्याख्यातमिति वचनात्। न च सयोगेन वृत्तिर्युतसिद्धयभावात्, युतसिद्धानामप्राप्तिपूर्विका प्राप्तिः सयोग। न चान्यसबध सयोगसमवाय विलक्षणोस्ति येन समवायस्य द्रव्यादिषु वृत्ति स्यादत समवायिभिरनभिसबधान्नास्ति खरविषाणवत्समवाय।

**प्राप्तित्वात्प्राप्त्यंतराभाव इति चेन्न व्यभिचारात् ॥ १७ ॥** स्यान्मत द्रव्यादीनि प्राप्तिमति अतस्तेषा यया कयाचित्प्राप्त्या भवितव्य। समवायस्तु प्राप्तिर्न प्राप्तिमानत प्राप्त्यतराभावेपि स्वत एव प्राप्नोतीति। तन्न, कस्मात् व्यभिचाराद्यथा सयोग प्राप्तिरपि सन् प्राप्त्यतरेण समवायेन वर्तते तथा समवायस्यापि स्यादिति।

**प्रदीपवदिति चेन्न तत्परिणामादनन्यत्वसिद्धे ॥ १८ ॥** स्यादेतद्यथा प्रदीप प्रदीपातरमनपेक्षमाण आत्मान प्रकाशयति घटादींश्च। तथा समवायसबधातरापेक्षामतरेणात्मनश्च द्रव्यादिषु वृत्तिहेतुर्द्रव्यादीना च परस्पर इति। तन्न कुतस्तत्परिणामादनन्यत्वसिद्धे यथा प्रदीप स्वय प्रकाशपरिणामात्प्रकाशात्मनोनन्य प्रकाशातर नापेक्षते अन्यथा प्रकाशात्मनोन्यत्वे प्रदीपस्याप्रदीपत्वप्रसगो यतो न प्रकाशात्मान प्रोह्यान्य प्रदीपोस्ति। तथा न द्रव्यादन्ये गुणकर्मसामान्यविशेषसमवायास्सति द्रव्यस्यैवोभयपरिणामकारणापेक्षस्य गुण कर्म सामान्य विशेष समवाय इत्येवमादिपर्यायान्तरेण परिणाम। यथा प्रदीप स्वलक्षणप्रसिद्धो घटादिभ्योन्यो नैव समवाय स्वलक्षणप्रसिद्ध द्रव्यादन्योस्ति द्रव्यस्यैव गुणादिपर्यायपरिणामात्तस्मान्न प्रदीपवत्समवायसिद्धि। अन्यथा च द्रव्यादन्यत्वे गुणादीना द्रव्यस्याद्रव्यत्वप्रसगो यतो न गुणादिपर्यायान् प्रोह्यान्यद्द्रव्यमस्ति। यदि वा गुणादीन् प्रोह्य द्रव्य केनचिदन्येन स्वविशेषेण प्रसिद्ध यद्गुणादिभि सबध्यते स विशेष उच्यता यतो न गुणादिपरित्यागेनान्यो द्रव्यस्य विशेष स्वत प्रसिद्धोस्ति। अतो द्रव्यपरिणामा एव गुणादय इति प्रसिद्ध किंच।

**विशेषपरिज्ञानाभावात् ॥ १९ ॥** यस्य युतायुतसिद्धार्थग्राहक विज्ञानमेकमस्ति तस्यायुतसिद्धानां समवाय युतसिद्धाना सयोग इति स्याद्विशेषविज्ञान। भवतस्तु क्षणिकैकार्थविषयत्वाज्ज्ञानाना तद्विशेषविज्ञानाभावस्तदभावात्तद्विवेकाभाव।

**संस्कारादिति चेन्न तस्यापि तादात्म्यात् ॥ २० ॥** स्यादेतत् ज्ञानजोज्ञानहेतुश्च सस्कारोस्ति तस्याद सामर्थ्यमिति तन्न कुतस्तस्यापि तादात्म्यात्। एकार्थग्राहिज्ञानस्य सस्कारस्य चैकार्थग्राहिज्ञानहेतुत्वादनेकार्थग्राहिज्ञानाभावाच्चानेकार्थग्राहिज्ञानसस्काराभावस्तस्मात्पूर्वोक्तोदोषस्तदवस्थ एव। अथवायमर्थ कर्तृकरणयोरन्यत्वादन्यत्वमात्मज्ञानादीना परश्वादिवदिति चेन्न तत्परिणामादग्निवदिति यथाग्निरग्निस्वभावादन्यो दहन् दाहक्रियाया कर्ता। किं करणो दहति तत्परिणामादन्यात्मैव करण तथात्मा ज्ञस्वभावत्वाज्ज्ञानादन्यस्तत्परिणामादर्थान् जानन् ज्ञानक्रियाया कर्ता किंकरणो जानाति तत्परिणामात्तदेव ज्ञान करणत्वेन विवक्ष्यते। अन्यथा ह्यतत्स्वाभाव्येऽनवधारणप्रसगोग्निवदित्येवमादिवाक्यार्थविवरण दहनस्वभावापेक्षयायोज्य किंच।

**अनेकांतात्पर्यायपर्यायिणोरर्थांतरभावस्य घटादिवत् ॥ २१ ॥** यथा घटकपालशकलशर्करादीनां नयद्वयार्पणाभेदात्स्यादेकत्वं स्यादन्यत्वं कथं ? इह पर्यायार्थिकगुणभावे द्रव्यार्थिकप्राधान्यात्पर्यायार्थानर्पणात्मृद्रूपद्रव्याजीवानुपयोगादिद्रव्यार्थार्पणात्स्यादेकत्वं यतो घटकपालादयो मृद्रूपद्रव्यार्थं न जहति। तेषामेव द्रव्यार्थिकगुणभावे पर्यायार्थिकप्राधान्याद्द्रव्यार्थानर्पणात्कारणविशेषापादितभेदपर्यायार्थार्पणात्स्यादन्यत्वं यतोन्यो घटपर्यायोन्यश्च कपालादिपर्यायस्तथा मृदो घटादिपर्यायाणां च स्यादेकत्वं स्यादन्यत्वं कथं तत्परिणामात्स्यादेकत्वं यतो मृद्रूपमेव। उभयपरिणामकारणवशाद् घटकपालादिपर्यायपरिणतं तद्व्यपदेशभाग्भवति नान्या मृत् नान्ये घटादयो मृद्रूपव्यतिरिक्तघटादिपर्यायाभावात्। पर्यायिपर्यायभेदाच्च स्यादन्यत्वं यतः पर्यायि मृद्द्रव्यं पर्याया घटादयः। तथात्मनोपि ज्ञानादिपर्यायाणां च स्यादेकत्वं स्यान्नानात्वं कथं ? पर्यायार्थिकगुणभावे द्रव्यार्थिकप्राधान्यात्पर्यायार्थानर्पणादनादिपारिणामिकचैतन्यजीवद्रव्यार्थार्पणात्स्यादेकत्वं यतो ज्ञानादयोऽनादिपारिणामिकचेतन्यजीवद्रव्यादिद्रव्यार्थं न जहति। तेषामेव द्रव्यार्थिकगुणभावे पर्यायार्थिकप्राधान्याद्द्रव्यार्थानर्पणात्कारणविशेषापादितभेदपर्यायार्थार्पणात्स्यादन्यत्वं यतोन्यो ज्ञानपर्यायोन्ये च दर्शनादिपर्याया तथात्मनो ज्ञानादिपर्यायाणां च स्यादेकत्वं स्यादन्यत्वं कथं ? तत्परिणामादेशात्स्यादेकत्वं यत आत्मैवोभयपरिणामकारणवशाज्ज्ञानादिपर्यायपरिणतो ज्ञानादिव्यपदेशभाग्भवति नान्य आत्मा नान्ये ज्ञानादयः आत्मद्रव्यव्यतिरिक्तज्ञानादिपर्यायाभावात्। पर्यायिपर्यायभेदाच्च स्यादन्यत्वं, यतः पर्यायी आत्मा पर्याया ज्ञानादयस्तस्मादेकत्वान्यत्वं प्रत्यनेकांतोपपत्तेः तत्परिणामत्वेपि करणभावोयुक्तः।

**इतरथा हि एकार्थपर्यायादन्यत्वप्राप्तिर्वृक्षवत् ॥ २२ ॥** यस्यैकांतिकं कर्तृकरणयोरन्यत्वं तस्यैकार्थपर्यायादन्यत्वं प्राप्तं कथं ? वृक्षवद्यथा प्रासादं करोति परश्वादिभिरित्यत्र कर्तृकरणयोरन्यत्वं। तथा भज्यते वृक्षः शाखाभारेणेत्येकस्य वृक्षस्य शाखाभारार्थपर्यायादन्यत्वं प्राप्तं। नचादोस्ति यतो न शाखाभाराद्दतेन्योवृक्षो न च शाखाभारादन्योवृक्षो न भवतीति भज्यतेवृक्षः शाखाभारेणेति एकार्थपर्यायात्मकं करणनिर्देशो न भवतीति। तथा नात्मद्रव्याद्दतेऽन्यज्ज्ञानं न चात्मद्रव्याद्दते नान्यज्ञानमिति जानात्यनेनार्थानात्मेत्येकार्थपर्यायात्मकं करणं न भवति। किं च

**करणस्योभयथोपपत्तेर्द्रव्यस्य मूर्तिमदमूर्तिभेदवत् ॥ २३ ॥** यथा द्रव्यस्य मूर्तिमदमूर्तिभेदादेकांतपरिग्रहो नास्ति। पुद्गलद्रव्यं मूर्तिमत्, धर्माधर्माकाशकाला अमूर्तय आत्मा चामूर्तः। द्रव्यार्थादेशात्, पर्यायार्थादेशात्तस्यानादिकार्माणशरीरसंबंधात्। तथा करणं द्वेधा विभक्ताविभक्तकर्तृकभेदात्, कर्तुरन्यद्विभक्तकर्तृकं यथा परशुना छिनत्ति देवदत्त इति। कर्तुरनन्यदविभक्तकर्तृकं यथाग्निरिंधनं दहत्यौष्ण्येनेति। तथात्मा ज्ञानेनार्थान् जानातीत्यविभक्तकर्तृकं करणं। किं च

**दृष्टांताच्च कुशूलस्वातंत्र्यवत् ॥ २४ ॥** यथा भिनत्ति कुशूलं देवदत्त इत्यत्र कुशूलो यदा भिदिक्रियाया सुकरतया स्वातंत्र्येण विवक्षितः "स्वयमेवात्मानं भिनत्तीति" तदा किंकरणोसावात्मानं भिनत्तीति विवक्षाया कुशूलात्मैव करणत्वेनोपादीयते। तथात्मैव ज्ञाता करणंच भवति किंच।

**एकार्थपर्यायविशेषोपपत्तेरिंद्रशक्रादिव्यपदेशवत् ॥ २५ ॥** इहैकस्यार्थस्यानेकपर्यायविशेषोपपत्तिर्दृष्टा न चास्य तेभ्यः पर्यायेभ्योन्यत्वं कथं ? इंद्रादिव्यपदेशवत्। यथैकस्य देवराजार्थस्येंद्रशक्रपुरंदराद्यनेकव्यंजनपर्यायविशेषोपपत्तिः। नच देवराजस्येंद्रशक्रपुरंदरादिपर्यायेभ्योन्यत्वं न चानन्यत्वाद्येनायमिंद्रस्तेनैव शक्रः पुरंदरोवा येन वा शक्रस्तेनैवेंद्रः पुरंदरोवा येन वा पुरंदरस्तेनेवेंद्रः शक्रोवा कथमिह यत इंद्रादीनां प्रतिनियतव्यंजनपर्यायोपपत्तिः। इंदनादिंद्रः शकनाच्छक्रः पूर्दारणात्पुरंदर इति नचेंदनशकनपूर्दारणव्यंजनपर्यायभेदान्न देवराज इंद्रः शक्रः पुरंदरो वा न भवति। भवत्येव। तथैकस्य आत्मनो ज्ञानादिपर्यायविशेषोपपत्तिस्तस्मादेकार्थपर्यायविशेषोपपत्तेर्नान्यत्वमात्मद्रव्यादेकांतेन ज्ञानादीनां।

**कर्तृसाधनत्वाद्वा दोषाभावः ॥२६॥** अथवा नेमौ ज्ञानदर्शनशब्दौ करणसाधनौ किं तर्हि कर्तृसाधनौ तथा चारित्रशब्दोपि न कर्मसाधनः किं तर्हि कर्तृसाधनः कथमेव भूतनयवशात्। ज्ञानदर्शनचा-

रित्राणि आत्मैवेष्ट अतस्तत्परिणामाज्ज्ञानादिपरिणत आत्मैव जानातीति ज्ञान पश्यतीति दर्शन चरतीति चारित्रमतो य उक्त कर्तृकरणयोरन्यत्वादन्यत्वमात्मज्ञानादीनामिति दोष स न भवति।

**लक्षणभाव इतिचेन्न वाहुलकात् ॥ २७ ॥** स्यादेतन्न लक्षणमस्ति कर्तरियुटोविधायकमिति तन्न कुतो बाहुलकात् "युड्ल्यावहुलमिति" कर्तरि युट् णित्रश्च यत्र विहितास्ततोन्यत्रापि दृश्यते ब्याभावकर्मणो-र्विहिता करणादिष्वपि भवति। स्नात्यनेन स्नानीयश्चूर्णो ददात्यस्मै इति दानीयोतिथि समावर्तते तस्मा-दिति समावर्तनीयो गुरु। करणाधिकरणयोर्युडुक्त कर्मादिष्वपि दृश्यते निरदति तदिति निरदन प्रस्कदति तस्मादिति प्रस्कदन।

**अथवा भावसाधना ज्ञानादिशब्दास्तत्त्वकथनाच्छात्रस्य करणव्यपदेशवत् ॥२८॥** यथौदा सीन्येनावस्थितमच्छिदतृणादिदात्र करणमिति व्यपदिश्यते। तथौदासीन्येनावस्थितानि ज्ञानदर्शनचारित्राणि प्रतिनियतज्ञानदर्शनचरणक्रियाव्यापार प्रतिनिवृत्तोत्सुक्यानि कथ्यते कोसो मोक्षमार्ग ज्ञानदर्शनचारित्राणि। ज्ञातिर्ज्ञान दृष्टिर्दर्शन चरण चारित्रमिति क्रियाव्यापृताना तु ज्ञानादीना कर्त्रादिकारकव्यवहार।

**व्यक्तिभेदादयुक्तमिति चेन्नैकार्थे शब्दान्यत्वाद्व्यक्तिभेदगतेः ॥ २९ ॥** स्यादेतज्ज्ञानमात्मे-त्ययुक्त कस्माद्व्यक्तिभेदात्, अभिधेयवल्लिंगसख्ये भवतोऽभिधानस्येति ज्ञान आत्मेति प्राप्नोतीति तन्न किंकारण? एकार्थशब्दान्यत्वाद्व्यक्तिभेदगतेरेकस्मिन्नप्यर्थे शब्दभेदाद्व्यक्तिभेदा दृश्यते। यथा गेह कुटी मठ पुष्प तारका नक्षत्रमित्येव ज्ञानमात्मेत्यपि स्यात्।

**ज्ञानग्रहणमादौ न्याय्यं तत्पूर्वकत्वाद्दर्शनस्य ॥ ३० ॥** आहेह ज्ञानग्रहणमादौ न्याय्य कुतस्त-त्पूर्वकत्वाद्दर्शनस्य यत पदार्थतत्त्वोपलब्धिपूर्वक श्रद्धान।

**अल्पाच्तरत्वाच्च दर्शनात् ॥३१॥** ज्ञानमल्पाच्तरमतश्च पूर्वक वाच्य।

**नोभयोर्युगपत्प्रवृत्तेः प्रतापप्रकाशवत् ॥ ३२ ॥** नैष दोष कुत उभयोर्युगपत्प्रवृत्ते कथ प्रका-शप्रतापवद्यथा सवितुर्घनपटलावरणविगमे प्रतापप्रकाशप्रवृत्तिर्युगपद्भवति। तथा ज्ञानदर्शनयोर्युगपदात्म-लाभ तद्यथा यदा दर्शनमोहस्योपशमात्क्षयोपशमात्क्षयाद्वात्मा सम्यग्दर्शनपर्यायेणाविर्भवति तदैव तस्य मत्यज्ञानश्रुताऽज्ञाननिवृत्तिपूर्वक मतिज्ञान श्रुतज्ञान चाविर्भवति।

**दर्शनस्यैवाभ्यर्हितत्वात् ॥३३॥** यदप्युक्तमल्पाच्तरत्वाज्ज्ञानस्य पूर्वनिपात इति तदसत् कस्मात्? दर्शनस्यैव अभ्यर्हितत्वाज्ज्ञानाद्दर्शनमेवाभ्यर्हित दर्शनसन्निधाने सत्यज्ञानस्यापि ज्ञानभावात्। ज्ञात्वाप्यश्रद्-धतस्तदभावात्।

**मध्ये ज्ञानवचनं ज्ञानपूर्वकत्वाच्चारित्रस्य ॥३४॥** यतो जीवादिपदार्थतत्त्वज्ञानसान्निधाने सति चारित्रमोहोपशमात्क्षयोपशमात्क्षयाद्वा कर्मादानहेतुक्रियाविशेषोपरमश्चारित्रपरिणामो भवति। ततश्चारित्रस्य ज्ञानपूर्वकत्वात् ज्ञान पूर्व प्रयुक्तम्।

**इतरेतरयोगे द्वंद्वो मार्गं प्रति परस्परापेक्षाणा प्राधान्यात् ॥ ३५ ॥** अयमितरेतरयोगे द्वंद्वो दर्शन च ज्ञान च चारित्र च दर्शनज्ञानचारित्राणीति कुतो मार्गं प्रति परस्परापेक्षाणा प्राधान्यात्।

**यथा प्लक्ष-न्यग्रोधपलाशा इति ॥ ३६ ॥** अस्त्यादिसमानकालक्रियाणा प्लक्षादीना परस्परा-पेक्षाणामितरेतरयोगे द्वद्व सर्वपदार्थप्रधानत्वात् बहुवचनात तथा दर्शनज्ञानचारित्राणामस्त्यादिसमान-कालक्रियाणा परस्परापेक्षाणामितरेतरयोगे द्वद्व सर्वपदार्थप्रधानत्वाद्बहुवचनात। यतस्त्रयाणामपि दर्शना-दीना सहताना परस्परापेक्षाणा मोक्षमार्गत्व प्रति प्राधान्य नेकस्य न द्वयो।

लब्धिरत । यदा पुरुषवर्जं सर्वं प्रकृतिकृत त्रिगुणमचेतन भोग्यमिति जानाति । भोक्तारमकर्तारं चेतन च पुरुषमन्य प्रधानाद्वेत्ति अचेतनाश्च गुणास्तदा तस्य गुणपुरुषांतरोपलब्धिरत' ससारस्येति ज्ञानान्मोक्षो विपर्ययाद्बध इत्येकेषां ।

**इच्छाद्वेषाभ्यामपरेषां** ॥ ५ ॥ इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिस्ताभ्यां सुखदु ख, तत इच्छाद्वेषौ । नच विमोहस्य तौ मिथ्यादर्शनाभावात् । मोहश्चाज्ञान । विमोहस्य यते पट्पदार्थतत्त्वज्ञस्य वैराग्यवत सुखदु खेच्छाद्वेषाभाव इच्छाद्वेषाभावाद्धर्माधर्माभावस्तदभावे सयोगाभावोऽप्रादुर्भावश्च स मोक्षस्तयोर्धर्माधर्मयोरभावे भवत्यपवर्ग' । कथ प्रदीपोपरमे प्रकाशाभाववत् । यद्धि यद्भाव प्रतीत्यात्मान प्रतिलभते तत्तस्योपरमात्तिरोभावयाति । तद्यथा प्रदीपोपरमात्प्रकाशाभाव । बधश्चादृष्टाद्भवति, कथमधर्मसक्षाददृष्टादज्ञान भवत्यज्ञानाच्च मोहो मोहवत इच्छाद्वेषौ जायेते इच्छाद्वेषाभ्यां धर्माधर्मौ स एव बध अत' ससारस्य प्रसूति । तस्माद्भवत्यदृष्टाभावे सयोगाभाव' कतरस्य सयोगस्याभाव जीवनसज्ञकस्य, धर्माधर्मापेक्ष सदेहस्यात्मनो मनसा सयोगो जीवन, तस्य धर्माधर्मयोरभावादभावोऽप्रादुर्भावश्च प्रत्यग्रशरीरस्यात्यताभाव स मोक्ष । कथमभावो धर्माधर्मयोरनागतानुत्पत्तिसचितनिरोधाभ्यां, अनागतानुत्पत्ति सचितनिरोधश्च द्विविधोऽभाव । तत्रानागतानुत्पत्तिस्तावद्धर्माधर्मयो । शरीरेंद्रियमनोव्यतिरिक्तात्मदर्शनादकुशलस्याधर्मस्यानुत्पत्तिरतु' । तत्साधनाना परिवर्जनात् धर्मस्यापि, तत्साधनानामनभिसबधात् । नाभिसहित कर्म यश्नातीति सचितनिरोधोपि । तदुद्वेगपरिखेदफलादधर्मनाशस्तस्मात्ससाराद्दुद्वेग' । शरीरतत्त्वावलोकनाच्छीतोष्णशोकादिनिमित्त शरीरपरिखेद प्रदायाधर्मोतिरिच्यते भोगदोष दर्शनात् । षण्णां च पदार्थानां तत्त्वविनिर्णयात्प्रीतिमारभ्य धर्मस्य विनाशोतो मोक्ष इत्यपरेषां दर्शन । [1]

**दु खादिनिवृत्तिरित्यन्येषां** ॥ ६ ॥ दु खजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनतराभावान्निश्रेयसाधिगम इत्यन्येषां दर्शन । पाठ प्रत्युत्तर मिथ्याज्ञान । सर्वेषामुत्तरस्य तत्त्वज्ञानान्निवृत्तौ यस्तदनतरोर्थस्तस्य निवृत्ति' । कश्चासौ ? दोष , स हि मिथ्याज्ञानादनतरस्तत्कार्यत्वात् सचोत्तर प्रवृत्ते , प्रवृत्तिश्चानतरा तत्कार्यत्वात् , ततो दोषाभावे प्रवृत्त्यभाव प्रवृत्तिरप्युत्तरा जन्मन , प्रवृत्तेरभावाज्ज माभावस्तत्कार्यत्वात् , जन्मोत्तर दु खात् , अतो जन्माभावाद्दु खनिवृत्तिस्तन्निवृत्तौ य आत्यतिक सुखदु खानुपभोगोनिश्रेयसमिति ।

**अविद्याप्रत्यया संस्कारा इत्यादिवचन केषांचित्** ॥ ७ ॥ विद्याविपर्ययात्मिका सर्वभावेष्वनित्यानात्मकाशुचिदु खेषु नित्यसात्मकशुचिसुखाभिमानरूपा तत्प्रत्यया सस्कारा इत्यादिवचन केषांचित् । के पुनस्ते सस्कारा रागादयस्ते च त्रिधा पुण्यापुण्यानेञ्ज्यसस्कारा , तत्र पुण्योपगानां सस्काराणां पुण्योपगमे च विज्ञान भवति, यत इदमुच्यते अविद्याप्रत्यया सस्कारा वस्तुप्रतिविज्ञप्तिर्विज्ञानमिति । अपुण्योपगानां सस्काराणामपुण्योपगमे च विज्ञान भवति, यत इदमुच्यते सस्कारप्रत्यय विज्ञान । विज्ञानसभूताश्चत्वार स्कधानाम चत्वारि महाभूतानि रूप नाम च रूपनाम च नामरूपमिति । आनेञ्ज्योपगानां सस्काराणामानेञ्ज्योपगमे च विज्ञान भवति यत इदमुच्यते विज्ञानप्रत्यय नामरूप नामरूपसन्निहितानींद्रियाणि षडायतनमिति नामरूपवृद्ध्या षड्भिरायतनद्वारै कृत्य क्रिया च प्रजायते इति नामरूपप्रत्यय षडायतनमुच्यते । त्रयाणां धर्माणां सन्निपात स्पर्श । केषां त्रयाणां ? विषयेंद्रियविज्ञानानां, सगति स्पर्श । षड्भ्य आयतनेभ्य षट्स्पर्शकाया प्रवर्तत इति षडायतनप्रत्यय स्पर्श । स्पर्शानुभवन वेदना यज्जातीय स्पर्शो भवति तज्जातीया वेदना प्रवर्तत इतीदमुच्यते स्पर्शप्रत्यया वेदनेति । वेदनाध्यवसाना तृष्णा यतस्तान् वेदनाविशेषानास्वादयत्यभिनदयात्यध्यवस्यति तृष्यतीति सा वेदनाप्रत्यया तृष्णोच्यते । तृष्णावैपुल्यमुपादान, सा मे प्रिया सानुरागेति भवेन्नित्यमपरित्यागो भूयोभूयश्च प्रार्थना तदुच्यते तृष्णाप्रत्ययमुपादानमिति । उपादाननिमित्त पुनर्भवजनक कर्म भव, एव प्रार्थयमान पुनर्भवजनक कर्म समुत्थापयति कायेन मनसा वाचा । तद्धेतुक स्कध प्रादुर्भावो जातिर्जातिस्कधपरिपाक , जराजात्यभिनिवृत्तानां स्कधानामपचय परिपाक , परिपाकाद्विनाशो भवति तन्मरण तदेव जातिप्रत्ययजरामरणमुच्यते । एवमय द्वादशाग प्रतीत्य समुत्पादोऽन्योन्यहेतुकस्तत्र सर्वभावेष्वविपरीतदर्शन विद्या । यत्सर्वभावेष्वनित्यानात्मकाशुचिदु खदर्शन सा विद्या ततो मोक्ष कथ ?

**प्रत्येकं सम्यग्विशेषणपरिसमाप्तिर्भुजिवत् ॥ ३७ ॥** यथा देवदत्तजिनदत्तगुरुदत्ता भोज्यतामिति भुजि प्रत्येकं परिसमाप्यते। तथा प्रशंसावचनस्य सम्यक्शब्दस्य प्रत्येकमभिसंबंधो दर्शनादिभिः, सम्यग्दर्शनं सम्यग्ज्ञानं सम्यक्चारित्रमिति।

**पूर्वपदसामानाधिकरण्यात्तद्व्यक्तिवचनप्रसंग इति चेन्न मोक्षोपायस्यात्मप्रधानत्वात् ॥३८॥** स्यादेतद्दर्शनादिभिः सामानाधिकरण्यात्तद्व्यक्तिवचने मोक्षमार्गस्य प्राप्नुत इति, तन्न किंकारणं मोक्षोपायस्यात्मप्रधानत्वात् यो मोक्षमार्गो मोक्षोपायस्तस्यात्मा स्वभावः येनात्मीयेन स्वभावेन स मोक्षमार्ग उच्यते। स दर्शनज्ञानचारित्राणां सर्वेषामविशिष्ट एकः पुल्लिंगश्च तस्य प्राधान्यात्सत्यपि सामानाधिकरण्ये न तद्व्यक्तिवचनप्राप्तिः। यथा साधवः प्रमाणमिति।

**आत्यंतिकः सर्वकर्मनिक्षेपो मोक्षः ॥ ३९ ॥** मोक्ष असने इत्येतस्य घञ् भावसाधनो मोक्षणं मोक्षः असनं क्षेपणमित्यर्थः स आत्यंतिकः सर्वकर्मनिक्षेपो मोक्ष इत्युच्यते।

**मृजेः शुद्धिकर्मणो मार्ग इवार्थाभ्यंतरीकरणात् ॥ ४० ॥** मृष्ट शुद्धोसाविति मार्गः मार्ग इव मार्गः कउपमार्थो यथा स्थाणुकंटकोपलशर्करादिदोषरहितेन मार्गेण मार्गगाः सुखमभिमेतस्थानं गच्छति। तथा मिथ्यादर्शनाऽसंयमादिदोषरहितेन श्रेयसा श्रेयोमार्गेण सुखं मोक्षं गच्छति।

**अन्वेषणक्रियस्य वा करणत्वोपपत्तेः ॥ ४१ ॥** अथवा मार्ग अन्वेषणे इत्यस्य मार्गः सिध्यति कुतः सम्यग्दर्शनादीनां करणत्वोपपत्ते, मोक्षो येन मार्ग्यते स मोक्षमार्ग इति।

**युक्त्यनभिधानादमार्ग इति चेन्न मिथ्यादर्शनाज्ञानासंयमानां प्रत्यनीकत्वादौषधवत् ॥४२॥** स्यादेतन्नात्र युक्तिरुक्ता सम्यग्दर्शनादित्रयमित्थं मोक्षमार्ग इति अतोस्य मार्गत्वं नोपपद्यते इति। तन्न किंकारणं मिथ्यादर्शनाज्ञानासंयमानां प्रत्यनीकत्वात्कथमौषधवत्। यथा वातादिविकारोद्भूतरोगाणां निदानप्रत्यनीकं स्निग्धरूक्षाद्यौषधमुच्छेदकारणं। तथा मिथ्यादर्शनाज्ञानासंयमादीनां निदानप्रत्यनीकं सम्यग्दर्शनाद्यौषधमुच्छेदकारणं।

इति तत्त्वार्थवार्तिके व्याख्यानालंकारे प्रथमेऽध्याये प्रथममाह्निकं ॥ १ ॥

---

**विपर्ययाद्बंधस्यात्मलाभे सति ज्ञानादेव तद्विनिवृत्तेस्त्रित्वानुपपत्तिः ॥ १ ॥** अत्र कश्चिदाह—विपर्ययाद्बंधस्यात्मलाभो भवति तदभावात्तत्त्वज्ञाने सति बंधनिवृत्तिर्भवति। कारणाभावाद्धि कार्याभाव इति। बंधनिवृत्तिरेव च मोक्षः अतोमोक्षमार्गस्य त्रित्वं नोपपद्यते।

**प्रतिज्ञामात्रमिति चेन्न सर्वेषामविसंवादात् ॥२॥** स्यादेतत्प्रतिज्ञामात्रमेतद्विपर्ययाद्बंधो भवतीति तन्न किंकारणं सर्वेषामविसंवादान्नात्र प्रतिवादिनो विसंवदंते तद्यथा।

**धर्मेण गमनमूर्ध्वमित्यादिवचनमेकेषां ॥ ३ ॥** धर्मेण गमनमूर्ध्वं भवति अष्टसु ब्राह्मप्राजापत्यसौम्यैंद्रगान्धर्वयक्षराक्षसपिशाचेषु गमनं। अधस्ताद्भवति अधर्मेण खलु षट्सु स्थानेषु मानुषपशुमृगमत्स्यसरीसृपस्थावरेषु गमनं। ज्ञानेन चापवर्गो यदास्य रजस्तमसोर्गुणभावात्सत्त्वस्य प्राधान्यात्प्रकृतिपुरुषांतरपरिज्ञानमाविर्भवति तेनापवर्गः। विपर्ययादिष्यते बंधो योस्याव्यक्तमहदहंकारतन्मात्रसंज्ञास्वष्टासु प्रकृतिष्वनात्मीयास्वाहंकारिकेषु वैकारिकेषु चेंद्रियेष्वात्मत्वाभिमानः स विपर्ययस्तस्माद्बंध इत्येकेषां वचनं।

**तथाऽनात्मीयेष्वात्माभिमानविपर्ययात्तस्य शब्दाद्युपलब्धिरादिः गुणपुरुषांतरोपलब्धिरंतः ॥ ४ ॥** यावदस्याविभक्तप्रत्ययः श्रोत्रादींद्रियवृत्तिषु श्रवणादिष्वहं श्रोतेत्येवमादि पांचभौतिके च शिरःपाण्यादिसमूहे शरीरेऽहं पुरुष इति प्रत्ययो भवति। तावदप्रतिबुद्धत्वात्संसारो गुणपुरुषांतरोप-

लब्धिरत । यदा पुरुषवर्जं सर्वं प्रकृतिकृत निगुणमचेतन भोग्यमिति जानाति । भोक्तारमकर्तारं चेतन च पुरुषमन्य प्रधानादवैति अचेतनाश्च गुणास्तदा तस्य गुणपुरुषांतरोपलब्धिरत' ससारस्येति ज्ञानान्मोक्षो विपर्ययाद्बध इत्येकेषां ।

**इच्छाद्वेषाभ्यामपरेषां ॥ ५ ॥** इच्छाद्वेषपूर्विका धर्माधर्मप्रवृत्तिस्ताभ्या सुखदु ख, तत इच्छाद्वेषौ । नच विमोहस्य तौ मिथ्यादर्शनाभावात्। मोहश्चाज्ञान। विमोहस्य यते पद्पदार्थतत्त्वज्ञस्य वैराग्यवत सुखदु खेच्छाद्वेषाभाव इच्छाद्वेषाभावाद्धर्माधर्माभावस्तदभावे सयोगाभावोऽप्रादुर्भावश्च स मोक्षस्तयोर्धर्माधर्मयोरभावे भवत्यपवर्ग' । कथ प्रदीपोपरमे प्रकाशाभाववत्। यद्धि यद्भाव प्रतीत्यात्मान प्रतिलभते तत्तस्योपरमात्तिरोभावयाति । तद्यथा प्रदीपोपरमात्प्रकाशाभाव ।बधश्चादृष्टाद्भवति, कथमधर्मसज्ञाददृष्टादज्ञान भवत्यज्ञानाच्च मोहो मोहवत इच्छाद्वेषौ जायेते इच्छाद्वेषाभ्यां धर्माधर्मौ स एव बध अत' ससारस्य प्रसूति ।तस्माद्भवत्यदृष्टाभावे सयोगाभाव कतरस्य सयोगस्याभाव जीवनसज्ञकस्य, धर्माधर्मापेक्ष सदेहस्यात्मनो मनसा सयोगो जीवन, तस्य धर्माधर्मयोरभावादभावोऽप्रादुर्भावश्च प्रत्यग्रशरीरस्यात्यताभाव स मोक्ष । कथमभावो धर्माधर्मयोरनागतानुत्पत्तिसचितनिरोधाभ्यां, अनागतानुत्पत्ति सचितनिरोधश्च द्विविधोऽभाव ।तत्रानागतानुत्पत्तिस्तावद्धर्माधर्मयो । शरीरेंद्रियमनोव्यतिरिक्तात्मदर्शनादकुशलस्याधर्मस्यानुत्पत्तिः। तत्साधनाना परिवर्जनात् धर्मस्यापि, तत्साधनानामनभिसबधात्। नाभिसहित कर्म बध्नातीति सचितनिरोधोपि।तदुद्वेगपरिखेदफलादधर्मनाशस्तस्मात्ससारादुद्वेग । शरीरतत्त्वावलोकनाच्छीतोष्णशोकादिनिमित्त शरीरपरिखेद प्रदायाधर्मोतिरिच्यते भोगदोप दर्शनात् । षण्णां च पदार्थाना तत्त्वविनिर्णयात्प्रीतिमारभ्य धर्मस्य विनाशोतो मोक्ष इत्यपरेषां दर्शन ।

**दु खादिनिवृत्तिरित्यन्येषां ॥ ६ ॥** दु खजन्मप्रवृत्तिदोपमिथ्याज्ञानानामुत्तरोत्तरापाये तदनतराभावान्निश्रेयसाधिगम इत्यन्येषां दर्शन । पाठ प्रत्युत्तर मिथ्याज्ञान ।सर्वेषामुत्तरस्य तत्त्वज्ञानान्निवृत्तौ यस्तदनतरोर्धस्तस्य निवृत्ति ।कश्चासौ ? दोष , स हि मिथ्याज्ञानादनतरस्तत्कार्यत्वात् सचोत्तर प्रवृत्ते , प्रवृत्तिश्चानतरा तत्कार्यत्वात्, ततो दोषाभावे प्रवृत्त्यभाव प्रवृत्तिरप्युत्तरा जन्मन , प्रवृत्तेरभावाज्जन्माभावस्तत्कार्यत्वात्, जन्मोत्तर दु खात्, अतो जन्माभावाद्दु खनिवृत्तिस्तन्निवृत्तौ य आत्यतिक सुखदु खानुपभोगोनिश्रेयसमिति ।

**अविद्याप्रत्यया संस्कारा इत्यादिवचन केषांचित् ॥ ७ ॥** विद्याविपर्ययात्मिका सर्वभावेष्व नित्यानात्मकाशुचिदु खेषु नित्यसात्मकशुचिसुखाभिमानरूपा तत्प्रत्यया सस्कारा इत्यादिवचन केषांचित् । के पुनस्ते सस्कारा रागादयस्ते च त्रिधा पुण्यापुण्यानेज्यसस्कारा , तत्र पुण्योपगानां सस्काराणां पुण्योपगमे च विज्ञान भवति, यत इदमुच्यते अविद्याप्रत्यया सस्कारा वस्तुप्रतिविज्ञप्तिर्विज्ञानमिति । अपुण्योपगानां सस्काराणामपुण्योपगमे च विज्ञान भवति, यत इदमुच्यते सस्कारप्रत्यय विज्ञान । विज्ञानसभृताश्चत्वार स्कधानाम चत्वारि महाभूतानि रूप नाम च रूपनाम च नामरूपमिति । आनेज्योपगानां सस्काराणामानेज्योपगमे च विज्ञान भवति यत इदमुच्यते विज्ञानप्रत्यय नामरूप नामरूपसन्निहितानींद्रियाणि षडायतनमिति नामरूपवृद्ध्या षड्भिरायतनद्वारै कृत्य क्रिया च प्रजायते इति नामरूपप्रत्यय षडायतनमुच्यते । त्रयाणां धर्माणां सन्निपात स्पर्श । केषां त्रयाणां ? विषयेंद्रियविज्ञानाना, सगति स्पर्श । षड्भ्य आयतनेभ्य षट् स्पर्शकाया प्रवर्तत इति षडायतनप्रत्यय स्पर्श । स्पर्शानुभवन वेदना यज्जातीय स्पर्शो भवति तज्जातीया वेदना प्रवर्तत इतीदमुच्यते स्पर्शप्रत्यया वेदनेति । वेदनाध्यवसाना तृष्णा यतस्तान् वेदनाविशेषानास्वादयत्यभिनदयात्यध्यवस्यति तृष्यतीति सा वेदनाप्रत्यया तृष्णोच्यते। तृष्णावैपुल्यमुपादान, सा मे प्रिया सातुरागेति भवेन्नित्यमपरित्यागो भूयोभूयश्च प्रार्थना तदुच्यते तृष्णाप्रत्ययमुपादानमिति । उपादाननिमित्त पुनर्भवजनक कर्म भव, एव प्रार्थयमान पुनर्भवजनक कर्म समुत्थापयति कायेन मनसा वाचा। तद्धेतुक स्कध प्रादुर्भावो जातिर्जातिस्कंधपरिपाक , जराजात्यभिनिवृत्तानां स्कधानामपचयं परिपाक , परिपाकाद्विनाशोभवति तन्मरण तदेव जातिप्रत्ययजरामरणमुच्यते । एवमय द्वादशाग प्रतीत्य समुत्पादोऽन्योन्यहेतुकस्तत्र सर्वभावेष्वविपरीतदर्शन विद्या । यत्सर्वभावेष्वनित्यानात्मकाशुचिदु खदर्शन सा विद्या ततो मोक्ष कथ ?

अविद्याया विद्यातो निवृत्तिरविद्यानिवृत्तेः संस्कारनिरोधः संस्कारनिरोधाद्विज्ञाननिरोधः । एवमुत्तरेष्वपीति तदेवमविद्यातो बंधो भवति विद्यातश्च मोक्ष इति ।

**मिथ्यादर्शनादिरितिमतं भवतां ॥ ८ ॥** "मिथ्यादर्शनाविरतिप्रमादकषाययोगा बंधहेतवः" इति भवतामार्हतानामपि मतं। पदार्थविपरीताभिनिवेशश्रद्धानं मिथ्यादर्शनं विपरीताभिनिवेशश्च मोहात्, मोहश्चाज्ञानमित्यज्ञानाद्बंधः । अतो मिथ्यादर्शनमादिर्बंधस्य सामायिकमात्रप्रतिपत्तेश्च "अनंताः सामायिकमात्रसिद्धा" इति वचनात् सामायिकं च ज्ञानमतः आर्हतानामपि ज्ञानान्मोक्ष इत्यविसंवादात् त्रितयमोक्षमार्गकल्पना न युक्ता किंच

**दृष्टांतसामर्थ्याद्वणिक् स्वप्रियैकपुत्रवत् ॥ ९ ॥** यथा वणिक् स्वप्रियैकपुत्रसदृशविग्रहं गजेनावमृद्यमानं बालमुपलभ्यातिदुःखाभिभवमूर्च्छया गतप्राण इवाभवद्विनिवृत्तकायादिक्रियस्य चास्य कुशलसुहृद्भिरुपायपूर्वकं प्रत्याहितप्राणवृत्तेः स्वपुत्र एव दर्शनविषयमुपनीतेऽयं मम पुत्र इत्याविर्भूततत्त्वज्ञानस्य स्वपुत्रसादृश्योद्भूतमिथ्याज्ञानजनितं दुःखं तदभूतपूर्वमिवाभवदेवमज्ञानाद्बंधः केवलाच्च ज्ञानान्मोक्ष इति ।

**नवानांतरीयकत्वाद्रसायनवत् ॥ १० ॥** न वा एष दोषः किं कारणं नांतरीयकत्वान्नहि त्रितयमंतरेण मोक्षप्राप्तिरस्ति कथं रसायनवत्। यथा न रसायनज्ञानादेव रसायनफलेनाभिसंबंधः रसायनश्रद्धानक्रियाभावात्, यदि वा रसायनज्ञानमात्रादेव रसायनफलसंबंधः कस्यचिद्दृष्टः सोऽभिधीयतां न चासावस्ति। न च रसायनक्रियामात्रादेव, ज्ञानश्रद्धानाभावात्। न च रसायनश्रद्धानमात्रादेव, रसायनज्ञानपूर्वक्रियासेवनाभावात्। अतो रसायनज्ञानश्रद्धाक्रियासेवनोपेतस्य तत्फलेनाभिसंबंध इति निःप्रतिद्वंद्वमेतत्। तथा न मोक्षमार्गज्ञानादेव मोक्षेणाभिसंबंधो दर्शनचारित्राभावात् न च श्रद्धानादेव मोक्षमार्गो ज्ञानपूर्वक्रियानुष्ठानाभावात्। न च क्रियामात्रादेव, ज्ञानश्रद्धानाभावात्, यतः क्रियाज्ञानश्रद्धानरहिता निःफलेति। यदि च ज्ञानमात्रादेव कचिदर्थसिद्धिर्दृष्टा साभिधीयतां। न चासावस्त्यतो मोक्षमार्गत्रितयकल्पना ज्यायसीति। अनंताः सामायिकसिद्धा इत्येतदपि त्रितयमेव साधयति। कथं? ज्ञस्वभावस्यात्मनस्तत्त्वं श्रद्दधानस्य सामायिकचारित्रोपपत्तेः। समय एकत्वमभेद इत्यनर्थांतरं। समयएव सामायिकं चारित्रं सर्वसावद्यनिवृत्तिरिति अभेदेन संग्रहादिति।

उक्तं च—

हतं ज्ञानं क्रियाहीनं हता चाज्ञानिनां क्रिया ।
धावन् किलांधको दग्धः पश्यन्नपि च पंगुलः ॥ १ ॥
संयोगमेवेह वदंति तज्ज्ञा न ह्येकचक्रेण रथः प्रयाति ।
अंधश्च पंगुश्च वने प्रविष्टौ तौ संप्रयुक्तौ नगरं प्रविष्टौ ॥ २ ॥ इति ॥

**ज्ञानादेव मोक्ष इति चेदनवस्थानादुपदेशाभावः ॥ ११ ॥** यस्य ज्ञानादेव मोक्षस्तस्यानवस्थानादुपदेशाभावः यथा प्रदीपस्य तमोनिवृत्तिहेतुत्वात्प्रदीपे सति न मुहूर्तमपि तमोऽवतिष्ठते। नह्येतदस्ति प्रदीपश्च-नाम ज्वलति तमश्चावतिष्ठत इति। तथात्मस्वरूपावबोधाविर्भावानंतरमेवाप्तस्य मोक्षः स्यात्, नह्येतद्युक्तिमत्, ज्ञानं च नाम मोक्षस्य कारणमस्ति नच मोक्ष इति। ततो ज्ञानांतरमेवाप्तस्य शरीरेंद्रियनिवृत्तेः प्रवचनोपदेशाभावः ॥

**संस्काराक्षयादवस्थानादुपदेश इति चेन्न प्रतिज्ञातविरोधात् ॥१२॥** स्यादेतद्यावदस्य संस्कारा न क्षीयते तावदवस्थानमित्युपदेश उपपन्न इति, तन्न किं कारणं प्रतिज्ञातविरोधात्। यद्युत्पन्नज्ञानोऽपि संस्कारक्षयापेक्षत्वादवतिष्ठते न मुच्यते न तर्हि ज्ञानादेव मोक्षः कुतः संस्कारक्षयादिति, यत्प्रतिज्ञातं ज्ञानेन चापवर्ग इति तद्विरोधः किं च।

**उभयादोषोपपत्तेः ॥ १३ ॥** इदमिह संप्रधार्यं संस्कारक्षयस्य ज्ञानं वा हेतुः स्यादन्यो वेति। यदि ज्ञानं ननु ज्ञानादेव संस्कारनिरोध इति प्रवचनोपदेशाभावः, अथान्यः स कोन्यो भवितुमर्हति अन्यतश्चारित्रादिति पुनरपि प्रतिज्ञातविरोध इति किं च ।

**प्रव्रज्याद्यनुष्ठानाभावप्रसंगश्च ॥ १४ ॥** यदि ज्ञानादेव मोक्षः, ननु ज्ञान एव यत्नः कार्य्यः शिरस्तुंडमुंडनकाषायावरधारणादिलक्षणप्रव्रज्यायमनियमभावनाद्यभावप्रसंगः स्यात् ।

**ज्ञानवैराग्यकल्पनायामपि ॥ १५ ॥** किमवस्थानाभावादुपदेशाभाव इत्यादिपदार्थपरिज्ञाने सति विषयानभिष्वगलक्षणे च वैराग्य आप्तस्य तत्क्षण एव मोक्षोपपत्ते किं च ।

**नित्यानित्यैकांतावधारणे तत्कारणासभव ॥ १६ ॥** नित्या एवार्था अनित्या एव वेत्येकांतावधारणे तत्कारणासभव , तत्कारणस्य ज्ञानवैराग्यस्यासभव । तद्यथा नित्यत्वैकांतेपि विक्रियाभावाद् ज्ञानवैराग्याभाव , विक्रिया द्विविधा ज्ञानादिविपरिणामलक्षणा देशांतरसक्रमरूपा च। येषा नित्य एवात्मा सर्वगतश्चेति दर्शन तेषामुभय्यपि सा नास्ति ततश्चतुष्टयत्रयद्वयसन्निकर्षजनिज्ञानाभावाद्वैराग्यपरिणामाभावाच्च पूर्वापरकालतुल्यवृत्तेरात्मन आकाशस्येव मोक्षाभाव । समवायादितिचेन्न तस्य प्रत्याख्यातत्वात् । क्षणिकैकांतेप्यवस्थानाभावाज्ज्ञानवैराग्यभावनाभाव येषा मत "क्षणिका सर्वसस्कारा" इति तेपामप्युत्पत्त्यनतर विनाशे सति ज्ञानादीनामवस्थान नास्ति । नच तेभ्योऽन्यदवस्थास्नु वस्तु विद्यते अतस्तदभावाज्ज्ञानवैराग्यभावनाभाव । तत एवोत्पत्त्यनतर निरन्वयविनाशाभ्युपगमात्परस्पर सश्लेषाभावे निमित्तनैमित्तिक व्यवहारापह्नवाद विद्याप्रत्यया सस्कारा इत्येवमादि विरुध्यते सतानादिकल्पनायां वान्यत्वानन्यत्वयोरनेकदोषानुषग ।

**विपर्ययाभावः प्रागनुपलब्धेरुपलब्धौ वा बंधाभावः ॥ १७ ॥** इह लोके प्रागनुभूतस्थाणुपुरुषविशेषस्य प्रकाशाभावादभिघातकरणक्लेमाद्वा विशेषानुपलब्धौ विपर्य्ययो दृष्ट नचानवितलभवन सभूतस्य प्रागप्रतीततदतरस्य विपर्ययप्रत्ययो भवति । नच तथानादौ ससारेऽनभिव्यक्तशक्ते पुरुषस्य गुणपुरुषांतरोपलब्धिरस्ति अत प्रागनुपलब्धेर्नास्ति विपर्यय , तथा सर्वभावेष्वनित्यानात्मकाशुचिदु खेषु नित्यसात्मकशुचिसुखरूपेण विपर्ययो नास्ति । प्रागननुभूतविशेषत्वात् । यदि वा क्वचिदप्रसिद्धसामान्यविशेषस्य कस्यचिद्विपर्य्ययो दृष्ट सोभिधीयता। नचोच्यतेऽतो विपर्ययाभावाद्बधाभावस्तत्र यदुक्त विपर्ययाद्बध इति तद्व्याहन्यते। अथ प्राक्तद्विशेषोपलब्धिरभ्युपगम्यते ननु तदैव तद्धेतुकेन मोक्षेण भवितव्यमिति बधाभाव स्यात्किं च ।

**प्रत्यर्थवशवर्तित्वाच्च ॥ १८ ॥** विपर्ययाभाव इत्यनुवर्तते येषा दर्शन प्रत्यर्थवशवर्ति विज्ञानमिति तेषा पुरुषविषय विज्ञान न स्थाणुमवगृह्णाति। स्थाणुविषय च यद्विज्ञान न तत्पुरुषमवबुध्यते । अत परस्पर विषयसक्रमाभावान्न सशयो न विपर्ययस्तथा सर्वेषु पदार्थेष्वनेकार्थग्रहणैकविज्ञानाभावादसति विपर्यये बधाभावस्तत एव पदार्थविशेषानुपलब्धेर्मोक्षाभाव । नह्येकार्थग्राहि विज्ञान तदतरमवच्छिनत्ति ।

**ज्ञानदर्शनयोर्युगपत्प्रवृत्तेरेकत्वमिति चेन्न तत्त्वावायश्रद्धानभेदात्तापप्रकाशवत् ॥ १९ ॥** स्यादेतद् ज्ञानदर्शनयोरेकत्व, कुत । युगपत्प्रवृत्तेरिति तन्न किंकारण तत्त्वावायश्रद्धानभेदात् कथ तापप्रकाशवत् । यथा तापप्रकाशयोर्युगपदात्मलाभेपि दाहद्योतनसामर्थ्यभेदान्नेकत्व । तथा ज्ञानदर्शनयोस्तत्त्वावायश्रद्धानभेदान्नेकत्व। तत्त्वस्य ह्यवगमो ज्ञान, श्रद्धान दर्शनमिति ।

**दृष्टविरोधाच्च ॥ २० ॥** यस्य मत युगपदात्मलाभ एकत्वहेतुरिति तस्य दृष्टविरोध आपद्यते । दृष्ट हि गोविषाणादीना युगपदुत्पद्यमानानामपि नानात्व ।

**उभयनयसद्भावेन्यतरस्याश्रितत्वाद्वा रूपादिपरिणामवत् ॥ २१ ॥** उभयनयसद्भावेन्यतरस्याश्रितत्वाद्वा न दोष कथ रूपादिपरिणामवत्। यथा परमाण्वादिपुद्गलद्रव्याणा बाह्याभ्यतरपरिणामकारणापादिते युगपद्रूपादिपरिणामे न रूपादीनामेकत्व तथा ज्ञानदर्शनयोरपि । अथवा उभयनयसद्भावेन्यतरस्याश्रितत्वात्, तथा रूपादिपरिणामाना द्रव्यार्थिकपर्यायार्थिकयोरन्यतरगुणप्रधानभावार्पणात्स्यादेकत्व स्यान्नानात्व । कथमिह पर्यायार्थिकगुणभावे द्रव्यार्थिकप्राधान्यात्पर्यायार्थानर्पणादनादिपारिणामिकपुद्गलद्रव्यार्थादेशात्स्यादेकत्व, यथा रूपपर्याय पुद्गलद्रव्य। तथा रसादयोपि द्रव्यार्थादेशात्पुद्गलद्रव्य। तेषामेव द्रव्यार्थिकगुणभावे पर्यायार्थिकप्रधानाद्द्रव्यार्थानर्पणात्प्रतिनियतरूपादिपर्यायार्थेनार्पिताना स्यादन्यत्व, यतोन्यो रूपपर्याय अन्ये च रसादय । तथा ज्ञानदर्शनयोरनेन विधिनाऽनादिपारिणामिकचैतन्यजीवद्रव्यार्थादेशात्स्यादेकत्व यतो द्रव्यार्थादेशाद्यथा ज्ञानपर्याय आत्मद्रव्य तथा दर्शनमपि । तयोरेव प्रतिनियतज्ञानदर्शनपर्यायार्थार्पणात्स्यादन्यत्व यस्मादन्यो ज्ञानपर्यायोन्यश्च दर्शनपर्याय ।

**तदनुपपत्तिरज्ञानपूर्वकश्रद्धानप्रसंगात्** ॥ ३० ॥ पूर्वस्य लाभे भजनीयमुत्तरमित्येतस्याऽनुपपत्ति कुतोऽज्ञानपूर्वकश्रद्धानप्रसगात् । यदि पूर्वसम्यग्दर्शनलाभे उत्तरज्ञानलाभो भजनीय, ननु ज्ञानाभावादज्ञानपूर्वकश्रद्धानप्रसग । किं च–

**अनुपलब्धस्वतत्त्वेर्थे श्रद्धानानुपपत्तिरविज्ञातफलरसोपयोगवत्** ॥ ३१ ॥ यथा नाविज्ञाते फले तद्रसोपयोगोऽमुष्य फलस्य रस सपादयतेति श्रद्धानमस्ति तथा नाविज्ञातेषु जीवादिषु श्रद्धानमस्तीति श्रद्धानाभाव स्यात् । किं च—

**आत्मस्वरूपाभावप्रसंगात्** ॥ ३२ ॥ यदि सम्यग्दर्शनलाभे ज्ञान भजनीयत्वादसद्विरोधान्मिथ्याज्ञाननिवृत्तौ सम्यग्ज्ञानस्य चाभावाज्ज्ञानोपयोगाभाव आत्मन प्रसक्त । ततश्च लक्षणाभावाल्लक्ष्यस्यात्मनोऽप्यभाव स्यात्तदभावाच्च मोक्षमार्गपरीक्षा व्यर्थेति ।

**न वा यावति ज्ञानमित्येतत्परिसमाप्यते तावतोऽसंभवान्नयापेक्षं वचनं** ॥ ३३ ॥ न वा एष दोष, किं कारण यावति, ज्ञानमित्येतत्परिसमाप्यते तावतोऽसभवान्नयापेक्षमिद वचन भजनीयमुत्तरमिति । क्वचन ज्ञानमित्येतत्परिसमाप्यते श्रुतकेवलयोर्यत श्रुतकेवलज्ञानग्राही शब्दनय श्रुतकेवले एवेच्छति नान्यज्ज्ञान मपरिपूर्णत्वादिति तदपेक्ष सपूर्णद्वादशागचतुर्दशपूर्वलक्षण श्रुत केवल च भजनीयमुक्त । तथा पूर्व सम्यग्दर्शनलाभे देशचारित्र, सयतासयतस्य सर्वचारित्र, प्रमत्तादारभ्य सूक्ष्मसांपरायान्तानां यच्च यावच्च नियमादस्ति सपूर्णयथाख्यातचारित्रं तु भजनीय ॥

**पूर्वसम्यग्दर्शनज्ञानलाभे भजनीयमुत्तरमितिचेन्न निर्देशस्याऽगमकत्वात्** ॥ ३४ ॥ स्यादेतदज्ञानपूर्वकश्रद्धानप्रसगोस्ति कुत पूर्वसम्यग्दर्शनज्ञानलाभे चारित्रमुत्तर भजनीयमित्यभिसबधादिति । तन्न, किं कारण निर्देशस्यागमकत्वाद्युक्तोयमर्थो नतु तस्य निर्देशो गमक पूर्वस्य लाभ इति पूर्वयोरिति हि वक्तव्य स्यात् । अथ सामान्यनिर्देशादुभयगति कल्प्यते नैव शक्य व्यवस्थाविशेषस्य विवक्षितत्वात्, इतरथा हि उत्तरेपि तथा प्रक्लृप्तौ तद्दोषानतिवृत्ति स्यात्तस्मात्पूर्वोक्त एवार्थो नयापेक्ष वचनमिति । अथवा क्षायिकसम्यग्दर्शनलाभे क्षायिक सम्यग्ज्ञान भजनीय, अथवा युगपदात्मलाभे साहचर्यादुभयोरपि पूर्वत्व । यथा साहचर्यात्पर्वतनारदयो । पर्वतग्रहणेन नारदस्य ग्रहण नारदग्रहणेन पर्वतस्य ग्रहण । तथा सम्यग्दर्शनस्य सम्यग्ज्ञानस्यान्यतरस्यात्मलाभे चारित्रमुत्तर भजनीय ॥

**इति तत्त्वार्थवार्तिकव्याख्यानालंकारे प्रथमेऽध्याये द्वितीयमाह्निक ॥ २ ॥**

---

*अमीषां मोक्षकारणसामान्ये सत्यविशिष्टानां विशेषप्रतिपत्त्यर्थमिदमाह—*

## तत्त्वार्थश्रद्धानं सम्यग्दर्शनं ॥ २ ॥

सम्यगितिकोय शब्द —**सम्यगिति प्रशसार्थो निपात क्वचतो वा** ॥ १ ॥ सम्यगित्यय निपात प्रशसार्थो वेदितव्य सर्वेषां प्रशस्तरूपगतिजातिकुलायुर्विज्ञानदीनामभ्युदयिकानां मोक्षस्य च प्रधानकारणत्वात् प्रशस्त दर्शन सम्यग्दर्शन । ननु च "सम्यगिष्टार्थतत्त्वयोरिति" वचनात् प्रशसार्थाभाव इति तन्नाऽनेकार्थत्वान्निपातानां । अथवा सम्यगिति तत्त्वार्थो निपातस्तत्त्व दर्शन सम्यग्दर्शनमविपरीतार्थविषय तत्त्वमित्युच्यते । अथवा क्वचतोय शब्द समचतीति सम्यक्, यथार्थो व्यवस्थितस्तथैवावगच्छतीत्यर्थ । अथ किमिद दर्शनमिति ।

**करणादिसाधनो दर्शनशब्दः उक्तः** ॥ २ ॥ दृशे करणादिसाधने युटि दर्शनशब्दो व्याख्यात ।

**दृशेरालोकार्थत्वादभिप्रेतार्थासंप्रत्यय इति चेन्नानेकार्थत्वात्** ॥३॥ स्यादेतद्दृशिरयमालोकार्थे वर्तते आलोकश्चेंद्रियानिंद्रियार्थप्राप्ति, नचासाविहाभिप्रेत, श्रद्धानमिष्ट, न तस्यार्थस्य सप्रत्ययोस्तीति ।

**ज्ञानचारित्रयोरकालभेदादेकत्वमगम्यावबोधवदितिचेन्नाशूत्पत्तौसूक्ष्मकालाप्रतिपत्तेरुत्पलपत्रशतव्यधनवत् ॥ २२ ॥** स्यादेतज्ज्ञानचारित्रयोरेकत्व, कस्मादकालभेदात्। कथमगम्यावबोधवत्। यथा केनचिन्मोहोदयापादिताऽन्यागनाभिसरणोत्सुकमतिना पुसा मेघोदयोद्भूतबहलांधकारायां रात्रौ वीथ्यन्तराले मातृपुश्चली स्वाभिलषितेति स्पृष्टा, तदैव विद्युता च विद्योतित तेन मातेयमिति तस्य ज्ञान यदोत्पन्न तदैवाऽगम्यावबोधादगम्यागमननिवृत्ति नागम्यावबोधागम्यागमननिवृत्त्यो कालभेदोस्ति। तथा यदैव ज्ञानावरणक्षयोपशमाज्जीवेषु ज्ञान जीवा इत्याविर्भवति, तदैव ते न हिंस्या इति जीवे हिंसाप्रत्ययस्य निवृत्ति , निवृत्तिश्च चारित्र, नच जीवज्ञानहिंसानिवृत्त्यो कालभेदोस्तीति । तन्न किं कारणमाशूत्पत्तौ सूक्ष्मकालाप्रतिपत्ते , तत्राप्यस्त्येव कालभेद सौक्ष्म्यात्तु न प्रतीयते, कथमुत्पलपत्रशतव्यधनवत्। यथोत्पलपत्रशतव्यधनक्रम असख्येयसमयिक सर्वज्ञप्रत्यक्षोतिसूक्ष्मोस्ति नतु विभाव्यते छद्मस्थैर्यतो यावदेकमुत्पलपत्रमासिश्छित्त्वा द्वितीय छिनत्ति तावदसख्येया समया अतीता इति कालसूक्ष्मोपदेशस्तथाऽन्योगम्यावबोधकाल , अन्यश्च निवृत्तिकाल ।

**अर्थभेदाच्च ॥ २३ ॥** किं [१] नैकत्वमिति वर्तते ज्ञानस्य तत्त्वावबोधोर्थ चारित्रस्य कर्मादानहेतुक्रियाविशेषोपरमोऽर्थ इत्यतो नानात्व।

**कालभेदाभावो नार्थभेदहेतुर्गतिजात्यादिवत् ॥ २४ ॥** न कालभेदाभावोर्थभेदहेतुर्न्योय्य कथ गतिजात्यादिवत् यथा यदैव देवदत्तजन्म तदैव मनुष्यगतिपचेंद्रियजातिशरीरवर्णगधादीनां जन्म। नान्यो देवदत्तजन्मकाल , अन्यश्च मनुष्य गत्यादिपर्यायजन्मकाल । नचैककालत्वान्मनुष्यगत्यादीनामेकत्व। यस्य पुन कालभेदाभाव एकत्वहेतुरिष्टस्तस्य मनुष्यगत्यादिपर्यायाणामेकत्वप्रसगो नचेष्यतेऽतो न कालभेदाभावाज्ज्ञानचारित्रयोरेकत्व।

**उक्तंच ॥ २५ ॥** किमुक्त उभयनयसद्भावात्स्यादेकत्व स्यान्नानात्वमिति।

**तल्लक्षणभेदात्तेषामेकमार्गानुपपत्तिरितिचेन्न परस्परसंसर्गे सत्येकत्वं प्रदीपवत् ॥ २६ ॥** स्यादेतत्तेषा सम्यग्दर्शनादीनामेकमार्गत्व नोपपद्यते, कुतो लक्षणभेदात्, नहि भिन्नलक्षणानामेकत्व युज्यते तत स्त्रयोमी मोक्षमार्गा प्रसक्ता इति । तन्न किंकारण परस्परससर्गे सत्येकत्व, कथ [२] प्रदीपवत्, यथा परस्परविलक्षणवर्तिस्नेहानलार्थाना बाह्याभ्यतरपरिणामकारणापादितसयोगपर्यायाणां समुदये भवत्येक प्रदीपो न त्रय । तथा परस्परविलक्षणसम्यग्दर्शनादित्रयसमुदये भवत्येको मोक्षमार्गो न त्रय ।

**सर्वेषामविसंवादात् ॥ २७ ॥** विलक्षणानामेकत्वाबाहौ प्रतिवादिनो विसवदते केचित्तावदाहु प्रसादलाघवशोषतापावरणसादनादिभिन्नलक्षणानां सत्त्वरजस्तमसां साम्ये प्रधानमेक, न तेषांत्रित्वात्प्रधानस्य त्रैविध्यमिति । अपर आहु काकनडतादीना चतुर्णां भूतानां भौतिकानां च वर्णादीना विलक्षणानां समुदय एको रूपपरमाणु न तेषां भेदात्परमाणोरनेकत्व। तथा रागादीनां धर्माणां प्रमाणप्रमेयाधिगमरूपाणां च विलक्षणाना समुदय एक विज्ञान न तेषा भेदाद्विज्ञानभेद इति । इतर आहुश्चित्राणां ततूना समुदयश्चित्रपट एको न तेषा भेदात्पटस्य भेद इति तद्वदिहापि सम्यग्दर्शनादीनां भिन्नलक्षणानां समुदय एको मोक्षमार्ग इति को विरोध ।

**एषां पूर्वस्य लाभे भजनीयमुत्तरं ॥ २८ ॥** एषां सम्यग्दर्शनादीनां पूर्वस्य लाभे भजनीयमुत्तर वेदितव्य ।

**उत्तरलाभे तु नियतः पूर्वलाभ ॥ २९ ॥** उत्तरस्य तु लाभे नियत पूर्वलाभो द्रष्टव्य सम्यग्दर्शनज्ञानचारित्राणां पाठ प्रति पूर्वत्वमुत्तरत्वं च। पूर्वस्य सम्यग्दर्शनस्य लाभे ज्ञानमुत्तर भजनीय उत्तरज्ञानलाभे तु नियत पूर्वसम्यग्दर्शनलाभ । तथा पूर्वज्ञानलाभे उत्तरचारित्र भजनीय, उत्तरचारित्रलाभे तु नियत. सम्यग्दर्शनज्ञानलाभ ।

स्यादेतत्सम्यग्दर्शनस्यात्मपरिणामत्वेऽल्पबहुत्वकल्पनाविरोध इति । तन्न किं कारण ? उपशमाद्यपेक्षस्य सम्यग्दर्शनत्रयस्यैव तदुपपत्ते । सर्वपु स्तोका उपशमसम्यग्दृष्टय ससारिण । क्षायिकसम्यग्दृष्टयोऽसख्येयगुणा । क्षायोपशमिकसम्यग्दृष्टयोऽसख्येयगुणा । सिद्धा क्षायिकसम्यग्दृष्टयोऽनतगुणा इति। तस्मात्सम्यग्दर्शनमात्मपरिणाम श्रेयोभिमुखमध्यवस्याम ।

**तत्त्वाग्रहणमर्थश्रद्धानमित्यस्तु लघुत्वात् ॥१७॥** कश्चिदाह तत्त्वग्रहणमनर्थक । अर्थश्रद्धान, मित्येवास्तु, कुतो लघुत्वादिति ।

**न सर्वार्थप्रसंगात् ॥ १८ ॥** नैतद्युक्त कुत सर्वार्थप्रसगात्तत्त्वग्रहणादृते मिथ्यावादिप्रणीतेपु सर्वार्थेषु श्रद्धान सम्यग्दर्शन प्राप्नोति ।

**संदेहाच्चार्थशब्दस्याऽनेकार्थत्वात् ॥१९॥** अर्थ शब्दोयमनेकार्थ क्वचिद् द्रव्यगुणकर्मसु वर्ततेऽर्थ इति "द्रव्यगुणकर्मस्विति" वचनात् । क्वचित्प्रयोजने वर्तते "किमर्थमिहागमन भवत किं प्रयोजनमिति" क्वचिद्धने वर्तते "अर्थवानय देवदत्तो धनवानिति"। क्वचिदभिधेये वर्तते "शब्दार्थसबध" इति। एवमर्थशब्दस्यानेकार्थाभिधायित्वे संदेह कस्यार्थस्य श्रद्धान सम्यग्दर्शनमिति ।

**सर्वानुग्रहाददोष इतिचेन्नाऽसदर्थविपयत्वात् ॥ २० ॥** स्यादेतन्नाय दोप सर्वार्थप्रसग इति, अस्तु सर्वार्थविपय श्रद्धान सम्यग्दर्शन तथा सति सर्वानुग्रह कृतो भवति । कश्चेदानीं भवतो मत्सर सर्वो लोकोऽभ्युदये न युज्यतामिति, तन्न किंकारण ? असदर्थविपयत्वात्, न खलु कश्चिन्नो मत्सर । असदर्थ विषय हि तच्छ्रद्धान ससारकारणमिति । अत सर्वानुग्रहार्थमेव तत्त्वेन विशिष्यते ।

**अर्थग्रहणादेव तत्सिद्धिरिति चेन्न विपरीतग्रहणदर्शनात् ॥ २१ ॥** स्यादेतदर्यत इत्यर्थो निश्चीयत इत्यर्थ । नच मिथ्यावादिप्रणीता अर्था , अतत्त्वात् । तस्मादर्थग्रहणादेव तत्त्वसप्रत्ययान्नार्थस्तत्त्वग्रहणेनेति, तन्न किं कारण विपरीतग्रहणदर्शनात् । यथा पित्तोदयाकुलितकरण पुमान् मधुररस कटुक मन्यते । तथाऽत्मा मिथ्याकर्मोदयदोपादस्तित्वनास्तित्वनित्यत्वाऽनित्यत्वाऽन्यत्वाऽनन्यत्वाद्येकातरूपेण मिथ्याऽध्यवस्यति। अतस्तन्निराकारणार्थं तत्त्वग्रहणमिति। अर्थग्रहण किमर्थं ? ननु तत्त्वान्येवार्थ इत्यर्थाना तत्त्वसामानाधिकरण्यात्तत्त्ववचनेनैव सप्रत्यय सिद्ध । उच्यते—

**अर्थग्रहणमव्यभिचारार्थं ॥ २२ ॥** अर्थग्रहण क्रियते अव्यभिचारार्थं ।

**तत्त्वमिति श्रद्धानमिति चेदेकांतनिश्चितेपि प्रसग ॥२३॥** यदि तत्त्वमिति श्रद्धान तत्त्व श्रद्धानमित्युच्यत एकातनिश्चितेपि प्राप्नोति । एकातवादिनो पि हि नास्त्यात्मेत्येवमादितत्वमिति श्रद्दधति ।

**तत्त्वस्य श्रद्धानमिति चेद्भावमात्रप्रसग ॥२४॥** यदि तत्त्वस्य श्रद्धान तत्त्वश्रद्धानमित्युच्यते भावमात्रप्रसग स्यात्। तत्त्व भावसामान्यमिति केचित् कथयति, द्रव्यत्वगुणत्वकर्मत्वादिसामान्य द्रव्यादिभ्यो ऽर्थांतर तस्य श्रद्धान सम्यग्दर्शन प्राप्नोति । न हि द्रव्यादिभ्योऽन्यत्सामान्य युक्तिमदिति परीक्षितमेतत् । अथवा तत्त्वमेकत्वमित्यर्थ पुरुप एवेद सर्वमित्यादि । तस्य श्रद्धान सम्यग्दर्शन प्राप्नोति, नचादो युक्त क्रियाकारकभेदलोपप्रसंगादिति ।

**तत्त्वेन श्रद्धानमिति चेत्कस्य कस्मिन्वेति प्रश्नानिवृत्ति ॥२५॥** यदि तत्त्वेन श्रद्धानमित्युच्यते कस्य कस्मिन्वेति प्रश्नो न विनिवर्तते । तस्मात्सूक्तमर्थग्रहणमव्यभिचारार्थमिति ।

**इच्छाश्रद्धानमित्यपरे वर्णयति ॥ २६ ॥**

**तदयुक्त मिथ्यादृष्टेरपि प्रसगात् ॥ २७ ॥** यतो मिथ्यादृष्टयो बाहुश्रुत्यप्रचिख्यापयिपयाऽऽर्हतमतविजिगीपयावार्हतमतमधीयते । नचेच्छामतरेणाध्ययनमस्यतस्तेपामपि सम्यग्दर्शन प्राप्नोतीत्ययुक्तमुक्तमिच्छाश्रद्धानमिति ।

तन्न किंकारणं अनेकार्थत्वात्, इह श्रद्धानमिष्टमभिसंबध्यते। कथं पुनर्ज्ञायते आलोक इह नेष्टः श्रद्धानमिष्टमित्यत उत्तरं पठति।

**मोक्षकारणप्रकरणाच्छ्रद्धानगतिः ॥ ४ ॥** मोक्षकारणं प्रकृतं तत्त्वार्थविषयं श्रद्धानं मोक्षस्य कारणं नालोक इत्यतः प्रकरणाच्छ्रद्धानगतिर्भवति ॥ अथ तत्त्वमित्यनेन किं प्रत्यायते।

**प्रकृत्यपेक्षत्वात्प्रत्ययस्य भावसामान्यसंप्रत्ययस्तत्त्ववचनात् ॥ ५ ॥** तदित्येषा प्रकृतिः सामान्याभिधायिनी सर्वनामत्वात् प्रत्ययश्च भावे उत्पद्यते। कस्य भावे तदित्यनेन योऽर्थ उच्यते। कश्चासौ, सर्वोऽर्थः, अतस्तदपेक्षत्वाद्भावस्य भावसामान्यमुच्यते। तत्त्वशब्देन योऽर्थो यथावस्थितस्तथा तस्य भवनमित्यर्थः।

**तत्त्वेनार्यत इति तत्त्वार्थः ॥ ६ ॥** अर्यते गम्यते ज्ञायते इत्यर्थस्तत्त्वेनार्थस्तत्त्वार्थः। येन भावेनार्थो व्यवस्थितस्तेन भावेनार्थस्य ग्रहणं यत्सन्निधानाद्भवति तत्सम्यग्दर्शनं।

**श्रद्धानशब्दस्य करणादिसाधनत्वं पूर्ववत् ॥ ७ ॥** यथा दर्शनशब्दस्य करणादिसाधनत्वं व्याख्यातं तथा श्रद्धानशब्दस्यापि वेदितव्यं।

**सत्त्वात्मपरिणामः ॥ ८ ॥** स तु श्रद्धानशब्दवाच्योऽर्थः करणादिव्यपदेशभागात्मपरिणामो वेदितव्यः।

**वक्ष्यमाणनिर्देशादिसूत्रविवरणात्पुद्गलद्रव्यसंप्रत्यय इति चेन्नात्मपरिणामेपि तदुपपत्तेः ॥ ९ ॥** स्यादेतद्वक्ष्यमाणनिर्देशादिसूत्रविवरणात्पुद्गलद्रव्यस्य संप्रत्ययः प्राप्नोति। तन्न किं कारणमात्मपरिणामेपि तदुपपत्तेः। किं तत्त्वार्थश्रद्धानमात्मपरिणामः कस्य आत्मन इत्येवमादि।

**कर्माभिधायित्वेप्यदोष इति चेन्न मोक्षकारणत्वेन स्वपरिणामस्य विवक्षितत्वात् ॥१०॥** स्यादेतत्सम्यक्त्वकर्मपुद्गलाभिधायित्वेप्यदोष इति तन्न किं कारणं? मोक्षकारणत्वेन स्वपरिणामस्य विवक्षितत्वात्। औपशमिकादिसम्यग्दर्शनमात्मपरिणामत्वान्मोक्षकारणत्वेन विवक्ष्यते। नच सम्यक्त्वकर्मपर्यायः, पौद्गलिकत्वेऽस्य परपर्यायत्वात्।

**स्वपरनिमित्तत्वादुत्पादस्येति चेन्नोपकरणमात्रत्वात् ॥ ११ ॥** स्यादेतत्स्वपरनिमित्त उत्पादो दृष्टो यथा घटस्योत्पादो मृन्निमित्तो दण्डादिनिमित्तश्च। तथा सम्यग्दर्शनोत्पाद आत्मनिमित्तः सम्यक्त्वपुद्गलनिमित्तश्च तस्मात्तस्यापि मोक्षकारणत्वमुपपद्यत इति। तन्न किं कारणमुपकरणमात्रत्वात्। उपकरणमात्रं हि बाह्यसाधनं किं च–

**आत्मपरिणामादेव तद्रसघातात् ॥ १२ ॥** यदिदं दर्शनमोहाख्यं कर्म तदात्मगुणघाति कुतश्चिदात्मपरिणामादेवाऽपक्षीणशक्तिकं सम्यक्त्वाख्यां लभते। अतो न तदात्मपरिणामस्य प्रधानं कारणमात्मैव स्वशक्त्या दर्शनपर्यायेणोत्पद्यत, इति तस्यैव मोक्षकारणत्वं युक्तं किं च–

**अहेयत्वात्स्वधर्मस्य ॥ १३ ॥** न हीयते न परित्यज्यत इत्यहेयोऽयमाभ्यंतर आत्मनः सम्यक्त्वपरिणामः। यतः सत्याभ्यंतरे आत्मनः सम्यक्त्वपरिणामे नियमेनात्मा सम्यग्दर्शनपर्यायेणाविर्भवति। बाह्यस्तु हेयः कर्मपुद्गलः। तमंतरेणापि क्षायिकसम्यक्त्वपरिणामात्। किं च–

**प्रधानत्वात् ॥ १४ ॥** आभ्यंतर आत्मीयः सम्यग्दर्शनपरिणामः प्रधानः। सति तस्मिन्बाह्यस्योपग्राहकत्वात्। अतो बाह्य आभ्यंतरस्योपग्राहकः परेऽर्थे न वर्तत इत्यप्रधानः। किं च—

**प्रत्यासत्तेः ॥ १५ ॥** प्रत्यासन्नं हि कारणमात्मपरिणामो मोक्षस्य, तादात्म्येनाविर्भावात्, नतु सम्यक्त्वं कर्म। विप्रकृष्टतरत्वात्तादात्म्येनैवाऽपरिणामाच्च। तस्मादहेयत्वात्प्रधानत्वात्प्रत्यासत्तेश्च मोक्षस्य कारणमात्मपरिणामो युक्तो न कर्मेति ॥

**अल्पबहुत्वकल्पनाविरोध इति चेन्नोपशमाद्यपेक्षस्य सम्यग्दर्शनत्रयस्यैव तदुपपत्तेः ॥१६॥**

**अपरोपदेशपूर्वके निसर्गाभिप्रायो लोकवत् ॥ ६ ॥** यथा लोके हरिशार्दूलवृकभुजगादयो निसर्गत क्रौर्यशौर्याशौर्याहारादिसप्रतिपत्तौ वर्तत इत्युच्यते । नचासावाकस्मिकी कर्मनिमित्तत्वात् अनाकस्मिक्यपि सती नैसर्गिकी भवति परोपदेशाभावात् । तथेहाप्यपरोपदेशपूर्वके निसर्गाभिप्राय । अपर आह-

: **भव्यस्य कालेन नि श्रेयसोपपत्तेरधिगमसम्यक्त्वाभाव ॥ ७ ॥** यद्यवधृतमोक्षकालात्प्राग धिगमसम्यक्त्वबलान्मोक्ष स्यात्, स्यादधिगमसम्यग्दर्शनस्य साफल्य । नचादोस्ति। अत कालेन योस्य मोक्षोसौ स निसर्गजसम्यक्त्वादेव सिद्ध इति ॥

**न विवक्षितापरिज्ञानात् ॥ ८ ॥** नैतद्युक्त कुत [1] विवक्षिताऽपरिज्ञानात्। सम्यग्दर्शनादित्रया न्मोक्ष उक्त, तत्र यत्प्रथम तत्कुत उत्पद्यत, इत्युक्ते निसर्गादधिगमाद्वेत्ययमर्थोऽत्र विवक्षित । यदि सम्यग्दर्शनादेव केवलान्निसर्गजादधिगमजाद्वा ज्ञानचारित्ररहितान्मोक्ष इष्ट स्यात्, तत इद युक्त स्यात् " भव्यस्य कालेन नि श्रेयसोपपत्तेरिति " । नचायमर्थोऽत्र विवक्षित । अथवा यथा कुरुक्षेत्रे कश्चित्कनक बाह्यप्रयत्नप्रयत्नाभावाज्जायते । तथा बाह्यपुरुषोपदेशपूर्वकजीवाद्यधिगममतरेण यज्जायते तन्निसर्गज । यथा कनकाश्म विध्युपायज्ञपुरुषप्रयोगापेक्ष कनकभावमापद्यते। तथा यत्सम्यग्दर्शन निध्युपायज्ञमनुष्यसपर्कोऽजीवादिपदार्थतत्त्वाधिगमापेक्षमुत्पद्यते तदधिगमजसम्यग्दर्शनमित्ययमर्थो विवक्षित । नचान्यतरस्याभाव इति ।

**कालानियमाच्च निर्जरायाः ॥ ९ ॥** यतो न भव्याना कृत्स्नकर्मनिर्जरापूर्वकमोक्षकालस्य नियमोस्ति । केचिद्भव्या सख्येयेन कालेन सेत्स्यति, केचिदसख्येयेन, केचिदनतेन । अपरेऽनंतानंतेनापि न सेत्स्यति इति । ततश्च न युक्त " भव्यस्य कालेन नि श्रेयसोपपत्तेरिति " ।

**चोदनानुपपत्तेश्च ॥ १० ॥** सर्वस्यैव चोदना नोपपद्यते । ज्ञानक्रियाद्वयात् [1] त्रितया च मोक्षमाचक्षाणस्य सर्वस्य नेद युक्त " भव्यस्य कालेन मोक्ष " इति। यदि हि सर्वस्य कालो हेतुरिष्ट स्यात्, बाह्याभ्यतरकारणनियमस्य दृष्टस्येष्टस्य वा विरोध स्यात् ।

**तदित्यनतरनिर्देशार्थं ॥ ११ ॥** तदित्येतदनतरस्य सम्यग्दर्शनस्य निर्देशार्थं क्रियते । ननु तदकृतमतरेणापि तद्वचन सिद्ध—

**इतरथा हि मार्गसबधप्रसगः ॥ १२ ॥** अक्रियमाणे हि तद्वचने मोक्षमार्गोपि प्रकृत तेनाभिसबध प्रसज्येत । ततो निसर्गमात्रेणापि मोक्षमार्गलाभ उक्त स्यात् । बाहुश्रुत्यप्रचिख्यापयिषया च मोक्षमार्गाधिगममात्रादेव मिथ्यादृष्टीनामपि मोक्ष स्यात् । ननु च " अनतरस्य वा विधिर्वा भवति प्रतिषेधोवा," इत्यनतरत्वात्सम्यग्दर्शनेनैव सबधो न्याय्य । "प्रत्यासत्ते प्रधान बलीय " इति मार्ग एव सबध्येत । तस्मात्तद्वचन क्रियते निरपेक्षार्थं ।

इति तत्त्वार्थवार्तिक व्याख्यानालकारे प्रथमेध्याये तृतीयमाह्निक ॥ ३ ॥

---

तत्त्वार्थश्रद्धान सम्यग्दर्शनमित्युक्त । अथ किं तत्त्वमित्यत इदमाह ॥

## जीवाजीवास्रवबंधसंवरनिर्जरामोक्षास्तत्त्वं ॥ ४ ॥

किमर्थमेषामुपादान [1] ननु द्रव्यमित्येव वक्तव्य तद्भेदा हि सर्व पदार्था भवतीति। अत उत्तर पठति —

**एकाद्यनतविकल्पोपपत्तौ विनेयाशयवशान्मध्यमाभिधान ॥ १ ॥** एको द्वौ त्रय सख्येया असख्येया अनता इति पदार्था भिद्यते। तत्रैक, पदार्थो भवति "एक द्रव्यमनतपर्यायमिति वचनात्" । द्वौ पदार्थौ, जीवाजीवभेदात् । त्रय पदार्था अर्थाभिधानप्रत्ययभेदात् । एवमुत्तरे च वचनविकल्पापेक्षयाऽसख्येया अनताश्च भवति । तत्र विनेयाशयवशात्पदार्थनिरूपणाभेद इति मध्यमेन क्रमेणाभिधान सूत्र । अति सक्षेपे सुगमसामेव प्रतिपत्ति स्यादतिप्रपचे चातिचिरेण मन्दप्रतिपत्तिर्न स्यादिति । कश्चिदाह—

---

१ [illegible]

**केवलिनि सम्यक्त्वाभावप्रसंगाच्च ॥२८॥** यदि चेच्छासम्यक्त्वं, इच्छा च लोभपर्याय । नच क्षीणमोहकेवलिनि लोभोस्ति तदभावादिच्छाभाव इति सम्यक्त्वाभाव स्यात् । तस्माद्यद्वायाथाभूतमर्थं गृह्णात्यात्मा तत्सम्यग्दर्शनमिति प्रत्येतव्यं ।

**तद् द्विविधं सरागवीतरागविकल्पात् ॥२९॥** एतत्सम्यग्दर्शन द्विविध कुत सरागवीतरागविकल्पात् ।

**प्रशमसंवेगानुकंपास्तिक्याभिव्यक्तलक्षणं प्रथमं ॥ ३० ॥** रागादीनामनुद्रेक प्रशम ससारा द्भीरुता संवेगः । सर्वप्राणिषु मैत्री अनुकंपा । जीवादयोऽर्था यथास्वभावे सतीति मतिरास्तिक्य । एतैरभिव्यक्तलक्षण प्रथम सरागसम्यक्त्वमित्युच्यते ।

**आत्मविशुद्धिमात्रमितरत् ॥ ३१ ॥** सप्ताना कर्मप्रकृतीनां आत्यंतिकेऽपगमे सत्यात्मविशुद्धि मात्रमितरद्वीतरागसम्यक्त्वमित्युच्यते । पूर्वं साधन भवति उत्तर साधन साध्य च ॥ अथैतत्सम्यग्दर्शन जीवादिपदार्थविषय कथमुत्पद्यत इत्यत आह ।

## तन्निसर्गादधिगमाद्वा ॥ ३ ॥

निसर्ग इति कोय शब्द ? निपूर्वात्सृजेर्भावसाधनो घञ् । निसर्जन निसर्ग स्वभाव इत्यर्थ । अथाधिगम इति क ? अधिपूर्वाद्गमेर्भावसाधनोऽच् । अधिगमनमधिगमस्तयोर्हेतुत्वेन निर्देशो निसर्गादधिगमादिति कस्य ? क्रियाया , का च क्रिया ? उत्पद्यत इत्यध्याह्रियते, सोपस्कारत्वात्सूत्राणां । तदेतत्सम्यग्दर्शन निसर्गादधिगमाद्वा उत्पद्यत इति । कश्चिदाह—

**सम्यग्दर्शनद्वैविध्यकल्पनानुपपत्तिरनुपलब्धतत्त्वस्य श्रद्धानाभावात् रसायनवत् ॥१॥** द्विविध सम्यग्दर्शनमितिकल्पना नोपपद्यते । कुत अनुपलब्धतत्त्वस्य श्रद्धानाभावात्, कथ रसायनवत् । यथाऽत्यतपरोक्षरसायनतत्त्वफलस्य न रसायने श्रद्धान दृष्ट । तथाऽनधिगतजीवादितत्त्वस्य न तत्र श्रद्धान मिति नैसर्गिकसम्यग्दर्शनाभाव ।

**शूद्रवेदभक्तिवदिति चेन्न वैषम्यात् ॥ २ ॥** स्यादेतद्यथा शूद्रस्याऽनधिगतवेदार्थस्य वेदार्थ आत्यतिकभक्तिस्तथानुपलब्धजीवादितत्त्वस्य श्रद्धानमिति । तन्न किं कारण वैषम्यात्, युज्यते शूद्रस्य भारतादिश्रवणात्तज्ज्ञवचनानुवृत्यादिभिश्च वेदार्थभक्ति । नासौ नैसर्गिकी । इह तु नैसर्गिकी रुचिरिष्टेति वैषम्य । अथवा सम्यक्त्वाधिकाराज्जीवादिपदार्थतत्त्वोपलब्धिपूर्वकेण सम्यग्दर्शनेन मोक्षकारणेनेह भवितव्य नच शूद्रस्य तादृश श्रद्धानमिति वैषम्य ।

**मणिग्रहणवदितिचेन्न प्रत्यक्षेणोपलब्धिसद्भावात् ॥ ३ ॥** स्यादेतद्यथाऽनधिगतमणिविशेषस्यापि पुंसो मणिग्रहण भवति तस्य च फल दृष्ट तथाऽनधिगतजीवादितत्त्वस्यापि तत्त्वग्रहण भवति तस्य च फल भवतीति तन्नैसर्गिक दर्शनमिति । तन्न किं कारण प्रत्यक्षोपलब्धिसद्भावात् । नात्यतपरोक्ष मणिं गृह्णाति किन्तु प्रत्यक्षत उपलभ्य गृह्णाति विपर्ययविशेष तु न प्रतिपद्यते । अतोऽस्याऽनुपलब्धमणिविशेषस्यापि प्रत्यक्षदर्शनाद्ग्रहण न्याय्य । अत्यतपरोक्षे तु जीवादितत्त्वे कथमस्य निसर्गजसम्यग्दर्शनसिद्धि । सामान्याधिगमे तु अधिगमसम्यग्दर्शनमेवेति ।

**तापप्रकाशवद्युगपदुत्पत्तेरभ्युपगमाच्च ॥ ४ ॥** किं निसर्गजसम्यग्दर्शनाभाव इत्यनुवर्तते यदास्य सम्यग्दर्शनमुत्पद्यते तदैव प्राक्तन मत्यज्ञान श्रुताज्ञान च सम्यक्त्वेन परणमतीत्यधिगमजमेव । तद्भवति । यस्य ज्ञानात्प्राग्दर्शन स्यात्तस्य नैसर्गिक स्याच्चाऽनिष्टमिति । उच्यते ।

**उभयत्र तुल्येऽतरंगहेतौ बाह्योपदेशापेक्षानपेक्षभेदाद्भेद ॥ ५ ॥** उभयत्र दर्शनेऽतरंगो हेतुस्तुल्य । दर्शनमोहस्योपशम क्षय क्षयोपशमो वा । तस्मिन् सति यद्बाह्योपदेशादृते प्रादुर्भवति तन्नैसर्गिक । यत्परोपदेशपूर्वक जीवाद्यधिगमनिमित्त तदुत्तरमित्यनयोरय भेद ।

**अपरोपदेशपूर्वके निसर्गाभिप्रायो लोकवत् ॥ ६ ॥** यथा लोके हरिशार्दूलवृकभुजगादयो निसर्गत क्रौर्यशौर्याशौर्याहारादिसंप्रतिपत्तौ वर्तत इत्युच्यते। नचासावाकस्मिकी कर्मनिमित्तत्वात् अनाकस्मिक्यपि सती नैसर्गिकी भवति परोपदेशाभावात। तथेहाप्यपरोपदेशपूर्वके निसर्गाभिप्राय। अपर आह-

**भव्यस्य कालेन नि श्रेयसोपपत्तेरधिगमसम्यक्त्वाभाव ॥ ७ ॥** यद्यवधृतमोक्षकालात्प्रागधिगमसम्यक्त्वबलान्मोक्ष स्यात्, स्यादधिगमसम्यग्दर्शनस्य साफल्य। नचादोस्ति। अत कालेन योस्य मोक्षोसौ स निसर्गजसम्यक्त्वादव सिद्ध इति ॥

**न विवक्षितापरिज्ञानात् ॥ ८ ॥** नैतद्युक्त कुत [1] विवक्षिताऽपरिज्ञानात्। सम्यग्दर्शनादित्रयान्मोक्ष उक्त, तत्र यत्प्रथम तत्कुत उत्पद्यत, इत्युक्ते निसर्गादधिगमाद्वेत्ययमर्थोऽत्र विवक्षित। यदि सम्यग्दर्शनादेव केवलान्निसर्गजादधिगमजाद्वा ज्ञानचारित्ररहितान्मोक्ष इष्ट स्यात्, तत इद युक्त स्यात् "भव्यस्य कालेन नि श्रेयसोपपत्तेरिति"। नचायमर्थोऽत्र विवक्षित। अथवा यथा कुरुक्षेत्रे क्वचित्कनक बाह्यपौरुषेयप्रयत्नाभावाज्जायते। तथा बाह्यपुरुषोपदेशपूर्वकजीवाद्यधिगममतरेण यज्जायते तन्निसर्गज। यथा कनकाश्म विघ्नुपायज्ञपुरुषप्रयोगापेक्ष कनकभावमापद्यते। तथा यत्सम्यग्दर्शन विघ्नुपायज्ञमनुष्यसपर्कोज्जीवादिपदार्थतत्त्वाधिगमापेक्षमुत्पद्यते तदधिगमजसम्यग्दर्शनमित्ययमर्थो विवक्षित। नचान्यतरस्याभाव इति।

**कालानियमाच्च निर्जरायाः ॥ ९ ॥** यतो न भव्याना कृत्स्नकर्मनिर्जरापूर्वकमोक्षकालस्य नियमोस्ति। केचिद्भव्या सख्येयेन कालेन सेत्स्यति, केचिदसख्येयेन, केचिदनतेन। अपरेऽनंतानंतेनापि न सेत्स्यति इति। ततश्च न युक्त "भव्यस्य कालेन नि श्रेयसोपपत्तेरिति"।

**चोदनानुपपत्तेश्च ॥ १० ॥** सर्वस्यैव चोदना नोपपद्यते। ज्ञानक्रियाद्वयात् [1] त्रितयाच्च मोक्षमाचक्षाणस्य सर्वस्य नेद युक्त "भव्यस्य कालेन मोक्ष" इति। यदि हि सर्वस्य कालो हेतुरिष्ट स्यात्, बाह्याभ्यंतरकारणनियमस्य दृष्टस्येष्टस्य वा विरोध स्यात्।

**तदित्यनतरनिर्देशार्थं ॥ ११ ॥** तदित्येतदनतरस्य सम्यग्दर्शनस्य निर्देशार्थं क्रियते। ननु तदप्रकृतमतरेणापि तद्वचन सिद्ध—

**इतरथा हि मार्गसबधप्रसंगः ॥ १२ ॥** अक्रियमाणे हि तद्वचने मोक्षमार्गोपि प्रकृत तेनाभिसबध प्रसज्येत। ततो निसर्गमात्रेणापि मोक्षमार्गलाभ उक्त स्यात्। बाहुश्रुत्यप्रचिख्यापयिषया च मोक्षमार्गाधिगममात्रादेव मिथ्यादृष्टीनामपि मोक्ष स्यात्। ननु च "अनतरस्य वा विधिर्वा भवति प्रतिषेधो वा," इत्यनतरत्वात्सम्यग्दर्शनेनैव सबधो न्याय्य। "प्रत्यासत्ते प्रधाने बलीय" इति मार्ग एव सबध्येत। तस्मात्तद्वचन क्रियते विस्पष्टार्थं।

इति तत्त्वार्थवार्तिक व्याख्यानालकारे प्रथमेध्याये तृतीयमाह्निक ॥ ३ ॥

---

तत्त्वार्थश्रद्धान सम्यग्दर्शनमित्युक्त। अथ किं तत्त्वमित्यत इदमाह ॥

## जीवाजीवास्रवबंधसंवरनिर्जरामोक्षास्तत्त्वं ॥ ४ ॥

किमर्थमेषामुपादान [1] ननु द्रव्यमित्येव वक्तव्य तद्भेदा हि सर्वे पदार्था भवतीति। अत उत्तर पठति —

**एकाद्यनतविकल्पोपपत्तौ विनेयाशयवशान्मध्यमाभिधान ॥ १ ॥** एको द्वौ त्रय सख्येया असख्येया अनंता इति पदार्था भिद्यते। तत्रैक, पदार्थो भवति "एक द्रव्यमनतपर्यायमिति वचनात्"। द्वौ पदार्थौ, जीवाजीवभेदात्। त्रय पदार्था अर्थाभिधानप्रत्ययभेदात्। एवमुत्तरे च वचनविकल्पापेक्षयाऽसख्येया अनताश्च भवति। तत्र विनेयाशयवशात्पदार्थनिरूपणाभेद इति मध्यमेन क्रमेणाभिधान कृत। अति सक्षेपे मुग्धमतीनाम प्रतिपत्ति स्यादतिप्रपचे चातिचिरेण सप्रतिपत्तिर्न स्यादिति। कश्चिदाह—

---

१ पदार्थश्च दृष्ट [illegible]।

**जीवाजीवयोरन्यतरत्रैवांतर्भावादास्रवादीनामनुपदेश ॥ २ ॥** आस्रवो हि, जीवो वा स्या दजीवो वा? । यदि जीव, जीवेंतर्भवति। अथवाऽजीवः, अजीवे । एवं संवरादयोपि । तस्मादेषामनुपदेश । अनर्थक उपदेशोऽनुपदेश ।

**न वा परस्परोपश्लेषे संसारप्रवृत्तितदुपरमप्रधानकारणप्रतिपादनार्थत्वात् ॥ ३ ॥** न वाऽनर्थक उपदेश, कुत ? जीवाजीवयो परस्परोपश्लेषे सति ससारप्रवृत्तितदुपरमप्रधानकारणप्रतिपादनार्थत्वात् । इह मोक्षमार्ग प्रकृत, तस्य फलमवश्य मोक्षो निर्देष्टव्य स कस्येति ? जीव उपात्त. । स च ससारपूर्वकः। स च सत्यजीवे जीवस्य भवति, इत्यजीव उपात्त । तयोश्च परस्परोपश्लेष ससार । तत्प्रधानहेतू, आस्रवो बंधश्चेत्युपात्तौ । तदुपरमस्य मोक्षस्य प्रधानहेतू संवरनिर्जरे इत्युपादान तयो । एवमेषां निर्ज्ञाने सति प्राप्यस्य मोक्षस्य निर्ज्ञान भवतीति। दृश्यते सामान्येंतर्भूतस्यापि विशेषस्य पृथगुपादान प्रयोजनार्थं, क्षत्रिया आयाता सूरवर्मापीति ।

**उभयथापि चोदनानुपपत्ति ॥ ४ ॥** यो जीवाजीवयोरंतर्भावादास्रवादीनामनुपदेश चोदयति, तस्योभयथापि चोदना नोपपद्यते। कथ? आस्रवादीनि जीवाजीवाभ्या पृथगुपलभ्य वा चोदयेदनुपलभ्य वा? यदि पृथगुपलभ्य, अत एव ततोर्थांतरत्व सिद्ध । अथानुपलभ्य, अनुपलभादेव चोदनाभाव । किं च जीवाजीवाभ्या, पृथक् सिद्धान्वा चोदयेदासिद्धान्वा? यदि सिद्धाश्चोदयेदत एवाऽर्थांतरभाव । अथाऽसिद्धाश्चो दयति, कथमत्रांतर्भावश्चोद्यते? न हि खरविषाणादीनामतर्भावचोदनार्हं ।

**अनेकांताच्च ॥ ५ ॥** चोदनानुपपत्तिरिति वर्तते। कथ? द्रव्यार्थिकपर्यायार्थिकयोर्गुणप्रधानभावेनाऽर्पणानर्पणाभेदाज्जीवाजीवयोरास्रवादीना स्यादतर्भाव स्यादनतर्भाव । पर्यायार्थिकगुणभावे, द्रव्यार्थिकप्राधान्यात्, आस्रवादिप्रतिनियतपर्यायार्थानर्पणादनादिपारिणामिकचैतन्याचैतन्यादिद्रव्यार्थार्पणादास्रवादीनां स्याज्जीवेऽजीवे वांतर्भाव । तथा द्रव्यार्थिकगुणभावे पर्यायार्थिकप्राधान्यादास्रवादिप्रतिनियतपर्यायार्थार्पणादनादिपारिणामिकचैतन्याचैतन्यादिद्रव्यार्थाऽनर्पणादास्रवादीना जीवाजीवयो स्यादनंतर्भाव । तदपेक्षया स्यादुपदेशोऽर्थवान् ।

**तेषां निर्वचनलक्षणक्रमहेत्वभिधानं ॥ ६ ॥** तेषां जीवादीनां पृथगुपदेशे प्रयोजनमुक्त । इदानीं निर्वचनलक्षणक्रमहेत्वभिधान कर्तव्य । तदुच्यते—

**त्रिकालविषयजीवनानुभवनाज्जीव ॥ ७ ॥** दशसु प्राणेषु यथोपात्तप्राणपर्यायेण त्रिषु कालेषु जीवनानुभवनाज्जीवत्यजीवीज्जीविष्यतीति वा जीव । तथा सति, सिद्धानामपि जीवत्व सिद्ध जीवितपूर्वत्वात् । सप्रति न जीवति सिद्धा भूतपूर्वगत्या जीवत्वमेषा, इत्यौपचारिकत्व स्यात्, मुख्य चेष्यते। नैष दोष । भावप्राणज्ञानदर्शनानुभवनात्साप्रतिकमपि जीवत्वमस्ति। अथवा रूढिशब्दोय। रूढौ च क्रिया व्युत्पत्त्यर्थैवेति कादाचित्क जीवनमपेक्ष्य सर्वदा वर्तते, गोशब्दवत् ॥

**तद्विपर्ययोऽजीवः ॥ ८ ॥** यस्य जीवनमुक्तलक्षण नास्त्यसौ तद्विपर्ययादजीव इत्युच्यते ॥

**आस्रवत्यनेनाऽऽस्रवणमात्र वाऽऽस्रवः ॥ ९ ॥** येन कर्मास्रवति यद्वास्रवणमात्रमास्रव ॥

**बध्यतेऽनेन बधनमात्र वा बधः ॥ १० ॥** बध्यते येनऽस्वतत्रीक्रियते येन अस्वतत्रीकरणमात्र वा बध ॥

**संव्रियतेऽनेन संवरणमात्रं वा संवरः ॥ ११ ॥** येन सव्रियते येन सरुध्यते सरोधनमात्र वा सवर ॥

**निर्जीर्यते यया निर्जरणमात्र वा निर्जरा ॥ १२ ॥** निर्जीर्यते निरस्यते यया निरसनमात्र वा निर्जरा ॥

---

१ व्युत्पत्ति. ।

प्रसिद्धिर्भवति । अतस्तत्समीपे आस्रवग्रहणं ।

**तत्पूर्वकत्वाद्बंधस्य ततः परं बंधवचनं ॥ २४ ॥** यत आस्रवपूर्वको बंधस्ततः परं वचनं तस्य क्रियते ।

**संवृतस्य बंधाभावात्तत्प्रत्यनीकप्रतिपत्त्यर्थं संवरवचनं ॥ २५ ॥** यतः संवृतस्यात्मनो बंधो नास्ति ततस्तत्प्रत्यनीकप्रतिपत्त्यर्थं तदनंतरं संवरवचनं ।

**संवरे सति निर्जरोपपत्तेस्तदनंतरं निर्जरावचनं ॥ २६ ॥** यतः संवरपूर्विका निर्जरा ततस्तदंतिके निर्जरावचनं ।

**अंते प्राप्तत्वान्मोक्षस्यांते वचनं ॥ २७ ॥** निर्जीर्णेषु कर्मस्वंते मोक्षः प्राप्यत इत्यंते वचनं ॥

**पुण्यपापपदार्थोपसंख्यानमिति चेन्नाऽऽस्रवे बंधे वाऽन्तर्भावात् ॥ २८ ॥** स्यादेतत्पुण्यपापपदार्थयोरुपसंख्यानं कर्तव्यं, अन्यैरप्युक्तत्वादिति । तन्न किं कारणं ? आस्रवे बंधे वांतर्भावात्, यत आस्रवो बंधश्च पुण्यपापात्मकः ।

**तत्त्वशब्दस्य भाववाचित्वाज्जीवादिभिः सामानाधिकरण्याऽनुपपत्तिः ॥ २९ ॥** तत्त्वशब्दो भाववाचीति व्याख्यातमेतत् । अतस्तस्य जीवादिभिर्द्रव्यवचनैः सामानाधिकरण्यं नोपपद्यते ।

**न वाऽव्यतिरेकात्तद्भावाध्यारोपसिद्धेः ॥३०॥** न वा एष दोषः, किं कारणं ? अव्यतिरेकात्तद्भावसिद्धेः । न हि द्रव्याद्व्यतिरिक्तो भावोस्ति अतस्तद्भावेनाऽध्यारोप्यते । यथा ज्ञानमेवात्मेति ।

यदि तद्भावोऽध्यारोप्यते तल्लिंगसंख्यानुवृत्तिः प्राप्नोति—

**तल्लिंगसंख्यानुवृत्तौ चोक्तं ॥ ३१ ॥** किमुक्तं नोपात्तव्यक्तिवचनत्वादिति ॥

इति तत्त्वार्थवार्तिके व्याख्यानालंकारे प्रथमेऽध्याये चतुर्थमाह्निकं ॥ ४ ॥

---

एवं सज्ञास्वालक्षण्यादिभिरुद्दिष्टानां जीवादीनां संव्यवहारविशेषव्यभिचारनिवृत्त्यर्थमाह—

## नामस्थापनाद्रव्यभावतस्तन्न्यासः ॥ ५ ॥

नीयते गम्यतेऽनेनार्थः, नमति वाऽर्थमभिमुखीकरोतीति नाम । स्थाप्यते प्रतिनिधीयतेसाविति स्थापना । द्रोष्यते गम्यते गुणैर्द्रोष्यति गमिष्यति गुणानिति वा द्रव्यं । भवनं भवतीति वा भावः । नामादीनामितरेतरयोगलक्षणो द्वंद्वः । नामस्थापनाद्रव्यभावैर्नामस्थापनाद्रव्यभावत आद्यादित्वात्, दृश्यतेऽन्यतोपीति वा तसि । न्यसनं न्यस्यत इति वा न्यासो निक्षेप इत्यर्थस्तेषां न्यासस्तन्न्यासः । एतेषां नामादीनां किं लक्षणमित्यत्रोच्यते—

**निमित्तांतरानपेक्षं सज्ञाकर्म नाम ॥ १ ॥** निमित्तादन्यन्निमित्तांतरं तदनपेक्ष्य क्रियमाणा सज्ञा नामेत्युच्यते । यथा परमैश्वर्यलक्षणेंदनक्रियानिमित्तांतरानपेक्षं कस्यचिदिंद्र इति नाम । तथा जीवनक्रियानपेक्षं श्रद्धानक्रियानपेक्षं वा कस्यचिज्जीवः सम्यग्दर्शनमिति वा नाम ।

**सोऽयमित्यभिसंबंधत्वेनाऽन्यस्य व्यवस्थापनामात्रं स्थापना ॥ २ ॥** यथा परमैश्वर्यलक्षणो यः शचीपतिरिंद्रः, सोयमित्यन्यवस्तुप्रतिनिधीयमानं स्थापना भवति । एवं जीव इति वा सम्यग्दर्शनमित्यक्षनिक्षेपादिषु सोऽयमिति व्यवस्थापनामात्रं स्थापना ।

**अनागतपरिणामविशेषं प्रति गृहीताभिमुख्यं द्रव्यं ॥ ३ ॥** यद्भाविपरिणामप्राप्तिं प्रति योग्यतामादधानं तद्द्रव्यमित्युच्यते ।

**अतद्भावं वा ॥ ४ ॥** अथवाऽतद्भाव वा द्रव्यमित्युच्यते । यथेन्द्रार्थमानीत काष्ठमिन्द्रप्रतिमापर्यायप्राप्ति प्रत्यभिमुखमिद इत्युच्यते । तथा जीवसम्यग्दर्शनपर्यायप्राप्ति प्रति गृहीताभिमुख्य द्रव्यजीवो द्रव्यसम्यग्दर्शनमिति चोच्यते । युक्त तावत् सम्यग्दर्शनप्राप्ति प्रति गृहीताभिमुख्यमिति । अतत्परिणामस्य जीवस्यासभवात्, इदत्वयुक्त जीवनपर्यायप्राप्ति प्रति गृहीताभिमुख्यमिति, कुत सदा तत्परिणामो यदि न स्यात्प्रागजीव प्राप्नोति ? नैष दोष मनुष्यजीवादिविशेषापेक्षया स व्यपदेशो वेदितव्य ।

**तद्द्विविधमागमनोआगमभेदात् ॥ ५ ॥** तदेतद्द्रव्य द्विविध, कुत ? आगमनोआगमभेदात् । आगमद्रव्यजीव नोआगमद्रव्यजीव । आगमद्रव्यसम्यग्दर्शन नोआगमद्रव्यसम्यग्दर्शनमिति च ।

**अनुपयुक्तः प्राभृतज्ञाय्यात्मागम ॥ ६ ॥** अनुपयुक्त प्राभृतज्ञाय्यागमद्रव्यमित्युच्यते ।

**इतरत् त्रिविध ज्ञायकशरीरभावितद्व्यतिरिक्तभेदात् ॥ ७ ॥** इतरन्नोआगमद्रव्य त्रैविध्यमास्कदति, कुत ? ज्ञायकशरीरभावितद्व्यतिरिक्तभेदात् । ज्ञातुर्यच्छरीर त्रिकालगोचर तज्ज्ञायकशरीर । जीवनसम्यग्दर्शनपरिणामप्राप्ति प्रत्यभिमुख द्रव्य भावीत्युच्यते । तद्व्यतिरिक्त कर्मनोकर्मविकल्प ।

**वर्तमानतत्पर्यायोपलक्षित द्रव्य भाव ॥ ८ ॥** वर्तमानेन तेन तेन जीवनसम्यग्दर्शनपर्यायेणोपलक्षित द्रव्य भावजीवो भावसम्यग्दर्शनमिति चोच्यते । यथेन्द्रनामकर्मोदयापादितेंदनक्रियापर्यायपरिणत आत्मा भावेंद्र ।

**स द्विविध पूर्ववत् ॥ ९ ॥** स एष भावो द्विविधो वेदितव्य' पूर्ववदागमनोआगमभेदात् ॥

**तत्प्राभृतविषयोपयोगाविष्ट आत्मागमः ॥ १० ॥** जीवादिप्राभृतविषयेणोपयोगेनाविष्ट आत्मागमतो भावजीवो भावसम्यग्दर्शनमिति चोच्यते ।

**जीवनादिपर्यायाविष्टोऽन्य ॥ ११ ॥** जीवनादिपर्यायेणाऽऽविष्ट आत्माऽन्यो नोआगमतो भाव इत्युच्यते ।

**नामस्थापनयोरेकत्व सज्ञाकर्माऽविशेषादिति चेन्नादरानुग्रहाकाक्षित्वात्स्थापनायाः ॥ १२ ॥** स्यान्मत, नामस्थापनयोरेकत्व, कुत सज्ञाकर्माविशेषात् । यतो नाम्नि स्थापनाया च सज्ञाकरण समान, नह्यकृते नाम्नि स्थाप्यत इति ? । तन्न न कुत ? आदरानुग्रहाकाक्षित्वात् स्थापनाया । यथाऽर्हदिंद्रस्कदेश्वरादिप्रतिमास्वादरानुग्रहाकाक्षित्व जनस्य, न तथा परिभाषिते वर्तते ततोऽन्यत्वमनयो ।

**द्रव्यभावयोरेकत्वमव्यतिरेकादिति चेन्न कथचित्संज्ञास्वालक्षण्यादिभेदात्तद्भेदसिद्धे १३** स्यादारेका द्रव्यभावयोरेकत्व प्रसज्यते कुतस्तदव्यतिरेकात्, नहि द्रव्यव्यतिरेकेण भाव उपलभ्यते भावव्यतिरेकेण वा द्रव्य, अतोऽनयोरेकत्वमिति । तन्न न कुत ? सज्ञास्वालक्षण्यादिभेदात्तद्भेदसिद्धे । इह यथो सज्ञास्वालक्षण्यादिकृतो भेदस्तयोर्नानात्वमुपलभ्यते तथा द्रव्यभावयोरपीति । कश्चिदाह-

**द्रव्यस्यादौवचन न्याय्यतत्पूर्वकत्वान्नामादीना ॥ १४ ॥** द्रव्यस्यादौ वचन न्याय्य कुतस्तत्पूर्वकत्वान्नामादीना । सतो हि सज्ञिनो नामादिभिर्भवितव्यमिति, नैष दोष ।

**सव्यवहारहेतुत्वात्सज्ञाया पूर्ववचन ॥ १५ ॥** सव्यवहारहेतुत्वात्सज्ञाया पूर्ववचन क्रियते । सर्वो हि लोकसव्यवहार सज्ञापूर्वकस्तदात्मकत्वात्, तदनात्मकत्वे वस्तुव्यवहारविच्छेद । तदात्मकत्वाच्च स्तुतिनिंदयोरागद्वेषप्रवृत्ति सिद्धा ।

**ततः स्थापनावचनमाहितनामकस्य स्थापनोपपत्तेः ॥ १६ ॥** तत पर स्थापना विधीयते कुत ?, आहितनामकस्य स्थापनोपपत्ते । प्राहितनामकस्य सोयमिति किंचित्प्रतिनिधीयते ।

**द्रव्यभावयोः पूर्वापरन्यासः पूर्वोत्तरकालवृत्तित्वात् ॥ १७ ॥** द्रव्यभावयो, पूर्वापरन्यास

१ नाम्नि । २ क पुस्तके सिद्धेरित्यपिपाठ ।

प्रसिद्धिर्भवति । अतस्तत्समीपे आस्रवग्रहण ।

**तत्पूर्वकत्वाद्बधस्य तत परं बधवचनं ॥ २४ ॥** यत आस्रवपूर्वको बधस्तत पर वचन तस्य क्रियते ।

**संवृतस्य बधाभावात्तत्प्रत्यनीकप्रतिपत्त्यर्थं संवरवचनं ॥ २५ ॥** यत सवृतस्यात्मनो बधो नास्ति ततस्तत्प्रत्यनीकप्रतिपत्त्यर्थं तदनतर सवरवचन ।

**सवरे सति निर्जरोपपत्तेस्तदनतरे निर्जरावचनं ॥ २६ ॥** यत सवरपूर्विका निर्जरा ततस्तदतिके निर्जरावचन ।

**अंते प्राप्तत्वान्मोक्षस्याते वचनं ॥ २७ ॥** निर्जीर्णेषु कर्मस्वते मोक्ष प्राप्यत इत्यते वचन ॥

**पुण्यपापपदार्थोपसख्यानमिति चेन्नाऽऽस्रवे बधे वाऽतर्भावात् ॥ २८ ॥** स्यादेतत्पुण्यपापपदार्थयोरुपसख्यान कर्तव्य, अन्यैरप्युक्तत्वादिति । तन्न किंकारण ? आस्रवे बधे वातर्भावात्, यत आस्रवो बधश्च पुण्यपापात्मक ।

**तत्त्वशब्दस्य भाववाचित्वाज्जीवादिभि' सामानाधिकरण्याऽनुपपत्तिः ॥ २९ ॥** तत्त्वशब्दो भाववाचीति व्याख्यातमेतत् । अतस्तस्य जीवादिभिर्द्रव्यवचनै सामानाधिकरण्य नोपपद्यते ।

**न वाऽव्यतिरेकात्तद्भावसिद्धेः ॥३०॥** न वा एप दोप, किं कारण ? अव्यतिरेकात्तद्भावसिद्धे । न हि द्रव्याद्व्यतिरिक्तो भावोस्ति अतस्तद्भावेनाऽध्यारोप्यते । यथा ज्ञानमेवात्मेति ।

यदि तद्भावोऽध्यारोप्यते तल्लिंगसख्यानुवृत्ति प्राप्नोति—

**तल्लिंगसख्यानुवृत्तौ चोक्त ॥ ३१ ॥** किमुक्त नोपात्तव्यक्तिवचनत्वादिति ॥

इति तत्त्वार्थवार्तिके व्याख्यानालकारे प्रथमेऽध्याये चतुर्थमाह्निक ॥ ४ ॥

---

एव सज्ञास्वालक्षण्यादिभिरुद्दिष्टाना जीवादीना सव्यवहारविशेपव्यभिचारनिवृत्त्यर्थमाह—

## नामस्थापनाद्रव्यभावतस्तन्न्यासः ॥ ५ ॥

नीयते गम्यतेऽनेनार्थ , नमति वाऽर्थमभिमुखीकरोतीति नाम । स्थाप्यते प्रतिनिधीयतेसाविति स्थापना । द्रोष्यते गम्यते गुणैर्द्रोष्यति गमिष्यति गुणानिति वा द्रव्य । भवन भवतीति वा भाव । नामादीनामितरेतरयोगलक्षणो द्वद्व । नामस्थापनाद्रव्यभावैर्नामस्थापनाद्रव्यभावत आद्यादित्वात्, दृश्यतेऽन्यतोपीति वा तसि । न्यसन न्यसत इति वा न्यासो निक्षेप इत्यर्थस्तेषा न्यासस्तन्न्यास ॥ एतेषा नामादीना किं लक्षणमित्यत्रोच्यते—

**निमित्तांतरानपेक्ष सज्ञाकर्म नाम ॥ १ ॥** निमित्तादन्यन्निमित्तातर तदनपेक्ष्य क्रियमाणा सज्ञा नामेत्युच्यते । यथा परमैश्वर्यलक्षणेंदनक्रियानिमित्तातरानपेक्ष कस्यचिदिंद्र इति नाम । तथा जीवनक्रियानपेक्ष श्रद्धानक्रियानपेक्ष वा कस्यचिज्जाव सम्यग्दर्शनमिति वा नाम ।

**सोऽयमित्यभिसंबंधत्वेनाऽन्यस्य व्यवस्थापनामात्र स्थापना ॥ २ ॥** यथा परमैश्वर्यलक्षणो य शचीपतिरिंद्र , सोयमित्यन्यवस्तुप्रतिनिधीयमान स्थापना भवति । एवं जीव इति वा सम्यग्दर्शनमित्यक्षनिक्षेपादिषु सोऽयमिति व्यवस्थापनामात्र स्थापना ।

**अनागतपरिणामविशेष प्रति गृहीताभिमुख्य द्रव्य ॥ ३ ॥** यद्भाविपरिणामप्राप्तिं प्रति योग्यतामादधान तद्द्रव्यमित्युच्यते ।

नामादिव्यवहारो न निवर्तते कुतः उपचारात्, माणवके सिंहशब्दव्यवहारवदिति। तन्न किं कारणं? सद्गुणाभावात्। युज्यते माणवके सिंहशब्दव्यवहारः क्रौर्यशौर्यादिगुणैकदेशयोगात्। इह तु नामादिषु जीवनादिगुणैकदेशो न कश्चिदप्यस्तीत्युपचाराभावाद् व्यवहारनिवृत्तिः स्यादेव।

**मुख्यसंप्रत्ययप्रसंगाच्च ॥ २८ ॥** यद्युपचारान्नामादिव्यवहारः स्यात्, "गौणमुख्ययोर्मुख्ये संप्रत्ययः" इति मुख्यस्यैव संप्रत्ययः स्यान्न नामादीनां। यतस्त्वर्थप्रकरणादिविशेषलिंगाभावे सर्वत्र संप्रत्ययः अविशिष्टः कृतसंगतेर्भवत्यतो न नामादिषूपचाराद्व्यवहारः।

**कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्ययो भवतीति लोके ॥ २९ ॥** तद्यथा गोपालकमानय कटेजकमानयेति, यस्यैषा संज्ञा भवति स आनीयते। न यो गाः पालयति यो वा कटे जातः। एवमिहापि यस्यैषा जीवादिरिति संज्ञा कृता तस्यैव संप्रत्ययः स्यान्नेतरेषामिति। तन्न किं कारणं? उभयगतिदर्शनात्। लोके ह्यर्थात्प्रकरणाद्वा कृत्रिमे संप्रत्ययः स्यात् अर्थोवाऽस्यैव संज्ञके न भवति, प्रकृतं वा तत्र भवति इदमेव संज्ञके न कर्तव्यमिति। अतश्चार्थात्प्रकरणाद्वा लोके संप्रत्ययो भवति। अगहि भवान् ग्राम्यं पांशुलं खुरपादकमप्रकरणक्षमागतं भवीतु—गोपालकमानय कटेजकमानयेति उभयगतिस्तस्य भविष्यति। किंच—

**अनेकांतात् ॥ ३० ॥** नायमेकांतः कृत्रिममेवेदं, न कृत्रिममेवेति किं तर्हि? अनेकांतो नाम सामान्यापेक्षया स्यादकृत्रिमं विशेषापेक्षया कृत्रिमं। एवं स्थापनादयश्चेति। ततः किं "कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्ययः" इत्यस्याभावः। किं च—

**नयद्वयविषयत्वात् ॥ ३१ ॥** द्वौ नयौ द्रव्यार्थिकः पर्यायार्थिकश्च। तयोर्विषयो नामादिन्यासस्तत्र नामस्थापनाद्रव्याणि, प्राच्यस्य, सामान्यात्मकत्वात्। पाश्चात्यस्य भावः, परिणतिप्रधानत्वात्। ततः किं "गौणमुख्ययोर्मुख्ये संप्रत्ययः" "कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्ययः" इति च न भवति, प्रतिविषयं नयभेदात्।

**द्रव्यार्थिकपर्यायार्थिकांतर्भावान्नामादीनां तयोश्च नयशब्दाभिधेयत्वात्पौनरुक्त्यप्रसंगः ३२**

यतो नामस्थापनाद्रव्याणि द्रव्यार्थिकस्य भावः पर्यायार्थिकस्येत्युक्तं। ततो नामादीनां नयांतर्भावान्नयविकल्पानां च वक्ष्यमाणत्वात्पौनरुक्त्यं प्राप्नोति।

**न वा विनेयमतिभेदाधीनत्वाद् द्व्यादिनयविकल्पनिरूपणस्य ॥ ३३ ॥** न वा एष दोषः, किं कारणं? विनेयमतिभेदाधीनत्वाद् द्व्यादिनयविकल्पनिरूपणस्य। ये सुमेधसो विनेयास्तेषां द्वाभ्यामेव द्रव्यार्थिकपर्यायार्थिकाभ्यां सर्वनयवक्तव्यार्थप्रतिपत्तिस्तदंतर्भावात्। येत्वतो मंदमेधसस्तेषां द्व्यादिनयविकल्पनिरूपणमतो विशेषोपपत्तेर्नामादीनामपुनरुक्तं।

**तच्छब्दाग्रहणं प्रकृतत्वात् ॥ ३४ ॥** सम्यग्दर्शनादित्रयस्य प्रकृतत्वादेव नामादिन्यासाभिसंबंधः। ततस्तच्छब्दस्य ग्रहणमनर्थकं?

**प्रत्यासन्नत्वाज्जीवादिषु प्रसंग इति चेन्न सम्यग्दर्शनविषयत्वात् ॥ ३५ ॥** स्यादेतत्तच्छब्दादिना प्रत्यासन्ना जीवादयस्तेषामेव न्यासाभिसंबंधो भवेन्न सम्यग्दर्शनादीनां, कुतः? "अनंतरस्य विधिर्भवति प्रतिषेधोवेति" । तन्न किं कारणं? सम्यग्दर्शनविषयत्वात् सम्यग्दर्शनादित्रयस्य प्राधान्येनोपदेशस्तदर्थत्वाच्छास्त्रारंभस्य। सम्यग्दर्शनादिविषयत्वेन तु जीवादीनां गुणभूतत्वेनोपदेशः। अतस्तच्छब्दादृतेपि सम्यग्दर्शनादित्रयस्य प्राधान्यान्नामादिन्यासेनाभिसंबंधो युक्तः।

**विशेषातिदिष्टत्वाच्च ॥ ३६ ॥** जीवादयः सम्यग्दर्शनविषयत्वेन विशेषेणातिदिष्टाः, प्रकृतं सम्यग्दर्शनादित्रयं न बाधिष्यते "विशेषातिदिष्टं प्रकृतं न बाधते" इति।

**सर्वभावाधिगमार्थं तु ॥ ३७ ॥** सर्वेषां भावानां जीवाजीवादीनामप्रधानानां प्रधानानां च सम्यग्दर्शनादीनामधिगमार्थं तर्हि तच्छब्दग्रहणं। इतरथा हि प्रधानाभिसंबंध एव स्यात्। एवमजीवादिषु

क्रियते, किं कारण ? पूर्वोत्तरकालवृत्तित्वात्। पूर्वकालविषय हि द्रव्य । उत्तरकालभावी भाव इति ।

**तत्रप्रत्यासत्तिप्रकर्षाऽप्रकर्षभेदाद्वा तत्क्रमः ॥ १८ ॥** अथवा तत्त्वप्रत्यासत्ते प्रकर्षाप्रकर्षभेदात्तेषा नामादीनामुद्दिष्ट क्रमो वेदितव्य. । तत्त्व भाव प्रधान तदर्थानीतराणि, तत्र प्रत्यासत्तेस्तत्समीप द्रव्य प्रयुक्त तद्भावापत्ते । तत पूर्व स्थापनोपादानमतद्भावेपि तद्भाव प्रति प्रधानहेतुत्वात्तत पूर्व नामोपादान भाव प्रति निप्रकृष्टत्वात्।

**नामादिचतुष्टयाभावो विरोधात् ॥ १९ ॥** अत्राह नामादिचतुष्टयस्याभाव, कुतो ? विरोधात्। एकस्य शब्दार्थस्य नामादिचतुष्टय विरुध्यते । यथा नामैक नामैव, न स्थापना। अथ नाम स्थापना इष्यते न नामेद नाम। स्थापना, तर्हि नचेय स्थापना नामेद। अतो नामार्थ एको, विरोधान्न स्थापना । तथैकस्य जीवादेरर्थस्य सम्यग्दर्शनादेर्वा विरोधान्नामाद्यभाव इति ।

**न वा सर्वेषां संव्यवहारं प्रत्यविरोधात् ॥ २० ॥** न वैप दोष, किं कारण ? सर्वेषा सव्यवहार प्रत्यविरोधात्। लोके हि सर्वैर्नामादिभिर्दृष्ट सव्यवहार । इन्द्रो देवदत्त इति नाम। प्रतिमादिषु चेंद्र इति स्थापना। इन्द्रार्थे च काष्ठे द्रव्ये इन्द्रसव्यवहार. "इन्द्र आनीत" इति वचनात्। अनागतपरिणामे चार्थे द्रव्यसव्यवहारो लोके दृष्ट, द्रव्यमय माणवक, आचार्य. श्रेष्ठी वैयाकरणो राजा वा भविष्यतीति व्यवहारदर्शनात्। शचीपतौ च भावे इन्द्र इति न च विरोध। किं च-

**अभिहितानवबोधात् ॥ २१ ॥** यथा नामैक नामैवेष्यते न स्थापनेत्याचक्षाणेन त्वयाऽभिहितानवबोध प्रकटीक्रियते । यतो नैवमाचक्ष्महे नामैव स्थापनेति, किन्त्वेकस्यार्थस्य नामस्थापनाद्रव्यभावैर्न्यास इत्याचक्ष्महे ।

**अनेकांताच्च ॥ २२ ॥** नैतदेकांतेन प्रतिजानीमहे नामैव स्थापना भवतीति । न वा स्थापना वा नाम भवति नेति च । कथ-

**मनुष्यब्राह्मणवत् ॥ २३ ॥** यथा ब्राह्मण स्यान्मनुष्यो ब्राह्मणस्य मनुष्यजात्यात्मकत्वात् । मनुष्यस्तु ब्राह्मण स्यान्नवा, मनुष्यस्य ब्राह्मणजात्यादिपर्यायात्मकत्वदर्शनाच्च । तथा स्थापना स्यान्नामाऽकृतनाम्न स्थापनानुपपत्ते । नाम तु स्थापना स्यान्नवा, उभयथा दर्शनात्। तथा द्रव्य स्याद्भाव भावद्रव्यार्थादेशात्। न भाव पर्यायार्थादेशाद्द्रव्य । भावस्तु द्रव्य स्यान्नवा, उभयथा दर्शनात् । किं च-

**अतस्तत्सिद्धे ॥ २४ ॥** यत एव नामादिचतुष्टयस्य विरोधं भवानाचष्टे अत एव नाभाव । कथमिह योय सहानवस्थानलक्षणो विरोधो वध्यघातकवच्च सतामर्थाना भवति नाऽसता । काकोलूकवच्छायातपवत्। न काकदतखरविषाणयोर्विरोधाऽसत्वात्। किं च-

**नामाद्यात्मकत्वानात्मकत्वे विरोधस्याऽविरोधकत्वात् ॥ २५ ॥** यो नामादिचतुष्टयस्य विरोधः स नामाद्यात्मको वा स्यान्न वा, उभयथा च विरोधाभाव.। यदि नामाद्यात्मको नासौ विरोधको नामाद्यात्मवत्। अथ तदात्मकोपि विरोधो नामादीना विरोधक., नामाद्यात्मापि विरोधक स्यात्। ततो नामादीनामभावाद्विरोध एव न स्यात्। अथ न नामाद्यात्मक, एवमपि नामादीना नासौ विरोधकोऽर्थांतरत्वात्। अर्थांतरभावेपि विरोधकत्वमिष्यते ? सर्वेषां पदार्थाना परस्परतो नित्य विरोध स्यात् । न चासावस्तीति । अतो विरोधाभाव ।

**ताद्गुण्याद्भावस्य प्रामाण्यमिति चेन्नेतरव्यवहारनिवृत्ते ॥ २६ ॥** स्यादेतत्ताद्गुण्याद्भाव एव प्रमाण न नामादिः । स जीवनादिर्गुणो यस्य स तद्गुण, तस्य भावस्ताद्गुण्य । अतो भाव एव प्रमाण न नामादिस्ताद्गुण्याभावादिति । तन्न किं कारण ? इतरव्यवहारनिवृत्ते । एव हि सति नामाद्याश्रयो व्यवहारो निवर्तेत । स चास्ति । इत्यतो न भावस्यैव प्रामाण्य ।

**उपचारादितिचेन्न तद्गुणाभावात् ॥ २७ ॥** स्यादेतत्, यद्यपि भावस्यैव प्रामाण्य तथापि

तस्मिन् प्रत्युत्पन्नविषये रूपादिसमुदये परस्परोपकारवर्तिनि पृथुबुध्नाद्याकार स्वात्मा। इतर परात्मा। तेन पृथुबुध्नाद्याकारेण स घटोऽस्ति। नेतरेण। घटव्यवहारस्य तद्भावे भावात्तदभावेऽभावात्। यदि हि पृथुबुध्नाद्यात्मनापि घटो न स्यात्स एव न स्यात्। अथेतरात्मनापि घट स्यात्तदाकारशून्येपि घटव्यवहार प्राप्नुयात्। अथवा रूपादिसंनिवेश सस्थान। तत्र चक्षुषा घटो गृह्यते, इत्यस्मिन् व्यवहारे रूपमुखेन घटो गृह्यत इति, रूप स्वात्मा। रसादि परात्मा। स घटो रूपेणास्ति। नेतरेण रसादिना, प्रतिनियतकरणग्राह्यत्वात्। अथ हि चक्षुषा घटो गृह्यत इत्यत्र, रसादिरपि घट इति गृह्येत। सर्वेषा रूपत्वप्रसग ? ततश्च करणातरकल्पनाऽनर्थिका। यदि वा रसादिवद्रूपमपि घट इति न गृह्येत, चक्षुर्विषयताऽस्य न स्यात्, अथवा शब्दभेदे ध्रुवोर्थभेद इति घटकुटादिशब्दानामप्यर्थभेद। घटनाद् घट कौटिल्यात्कुट इति तत्क्रियापरिणतिक्षण एव तस्य शब्दस्य वृत्तिर्युक्ता। तत्र घटनक्रियाविषयकर्तृभाव स्वात्मा। इतर परात्मा। तत्राद्येन घट। नेतरेण, तथार्थसमभिरोहणात्। यदि च घटनक्रियापरणतिमुखेनाप्यघट स्यात्। तद्व्यवहारनिवृत्ति स्यात्। यदि चेतरव्यपेक्षयापि घट स्यात्, पटादिष्वपि तत्क्रियाविरहितेषु तच्छब्दवृत्ति स्यात्, एकशब्दवाच्यत्वं वा वस्तुन। अथवा घटशब्दप्रयोगानतरमुत्पद्यमान उपयोगाकार स्वात्मा, अहेयत्वादतरगत्वाच्च। बाह्यो घटाकार परात्मा, तदभावेपि घटव्यवहारदर्शनात्। स घट उपयोगाकारेणास्ति। नान्येन। यदि उपयोगाकारात्मनाप्यघट स्यात् वक्तृश्रोतृहेतुफलभूतोपयोगघटाकाराभावात्तदधीनो व्यवहारो विनाशमाप्नुयात्। इतरोऽसंनिहितोपि यदि घट स्यात्पटादीनामपि स्याद् घटत्वप्रसग। अथवा चैतन्यशक्तेर्द्वावाकारौ ज्ञानाकारो ज्ञेयाकारश्च, अनुपयुक्तप्रतिबिंबाकारादर्शतलवत् ज्ञानाकार। प्रतिबिंबाकारपरिणतादर्शतलवज्ज्ञेयाकार। तत्र ज्ञेयाकार स्वात्मा, तन्मूलत्वाद् घटव्यवहारस्य। ज्ञानाकार परात्मा सर्वसाधारणत्वात्। स घटो ज्ञेयाकारेणास्ति। नान्यथा। यदि ज्ञेयाकारेणाप्यघट स्यात्तदाश्रयेपि कर्तव्यतानिरास स्यात्। अथ हि ज्ञानाकारेणापि घट स्यात्पटादिज्ञानकालेपि तत्संनिधानाद् घटव्यवहारवृत्ति प्रसज्येत। उक्तै प्रकारैरर्पितघटत्वमघटत्व च परस्परतो न भिन्न। यदि भिद्येत सामानाधिकरण्येन तद्बुद्ध्यभिधानवृत्तिर्न स्याद् घटपटवत्। ततश्चेतरेतराविनाभावे उभयोरप्यभावात्तदाश्रयव्यवहारापह्नव कृत स्यात्। अतस्तदुभयात्मकोसौ क्रमेण तच्छब्दवाच्यतामास्कदन् स्याद् घटश्चाघटश्चेत्युच्यते। यदि तदुभयात्मक वस्तु घट इत्येवोच्येत, इतरात्मासग्रहादतत्त्वमेव स्यात्। अथाघट एवेत्युच्यते घटात्मानुपादानादनृतमेव स्यान्न वस्तु तावदेवेति। नचान्य शब्दस्तदुभयात्मावस्थतत्त्वाभिधायी विद्यतेऽतोसौ घटो वचनगोचरातीतत्वात्स्यादवक्तव्य इत्युच्यते। घटात्मार्पणामुखेनोक्तावक्तव्यस्वरूपनिरूपणेन चादिश्यमान स एवार्थ इति स्याद् घटश्चावक्तव्यश्च। निरूपिताऽघटभगसगेन प्रदर्शितावक्तव्यवर्त्मना चापदेश्य स एवार्थ इति स्यादघटश्चावक्तव्यश्च। तदुभयाभिधानक्रमाक्रमार्पणावशादाविर्भूततद्व्यपदेश स एवार्थ स्याद् घटश्चाघटश्चावक्तव्यश्च भवति। एवमिय सप्तभगी जीवादिषु सम्यग्दर्शनादिषु च द्रव्यार्थिकपर्यायार्थिकनयार्पणाभेदाद्योजयितव्या। तत्र द्रव्यार्थिकेकातोऽनिश्चिततत्त्व, अतत्तदेवेत्यवधारणादुन्मत्तवत्। पर्यायार्थिकैकातोपि तथैवाऽतद्वस्तु तदेवेत्यवधारणादुन्मत्तवत्, स्याद्वादो निश्चितार्थोऽपेक्षितयाथातथ्यवस्तुवादित्वादनुन्मत्तवचनवत्। अवक्तव्यैकातोप्यसद्वाद स्ववचनविरोधात् सदा मौनवृत्तिकवत्। भूतार्थ स्यादवक्तव्यवादो वक्तव्यावक्तव्यवादित्वा त्सत्येतरवचनविशेषज्ञवादवत्।

**अनेकांते तदभावादव्याप्तिरिति चेन्न तत्रापि तदुपपत्ते ॥ ६ ॥** स्यादेतदनेकाते सा विधिप्रतिषेधविकल्पना नास्ति। यदि स्याद्यदाऽनेकातो न भवति, तदैकातदोषानुषंगो भवेत्। अनवस्थाप्रसगश्च। ततस्तत्रानेकातत्वमेव, इति सा सप्तभगी व्याप्तिमती न भवतीति। तन्न किं कारण ? तत्रापि तदुपपत्ते स्यादेकात स्यादनेकात स्यादुभय स्यादवक्तव्य स्यादेकातश्चावक्तव्यश्च स्यादनेकातश्चावक्तव्यश्च स्यादेकातश्चानेकातश्चावक्तव्यश्चेति। तत्कथमिति चेदुच्यते—

**प्रमाणनयार्पणाभेदात्॥ ७ ॥** एकांतो द्विविध सम्यगेकातो मिथ्यैकांत इति। अनेकातो द्विविध सम्यगनेकातो मिथ्यानेकात इति। तत्र सम्यगेकातो हेतुविशेषसामर्थ्यापेक्ष प्रमाणप्ररूपितार्थैकदेशादेश।

ज्ञानचारित्रयोश्च नामादिन्यासविकल्पो योजयितव्यः।

अधिकृतानामेव सम्यग्दर्शनादिजीवादीनां पदार्थानां अभिधानाभिधेयसव्यवहाराऽव्यभिचाराय नामादिभिर्निक्षिप्तानां तत्त्वाधिगमहेतुर्वक्तव्य इत्यत आह–

## प्रमाणनयैरधिगमः ॥ ६ ॥

प्रमाणे च नयाश्च प्रमाणनयास्तैरधिगमो भवति सम्यग्दर्शनादीनां जीवादीनां। प्रमाणनया वक्ष्यमाणलक्षणा। ननु च नयशब्दस्याल्पाक्षरत्वात्पूर्वनिपातेन भवितव्यं ?

**अभ्यर्हितत्वात्प्रमाणशब्दस्य पूर्वनिपातः ॥ १ ॥** "अभ्यर्हितं पूर्वं निपततीति" प्रमाणशब्दस्य पूर्वनिपातो वेदितव्यः। कथमभ्यर्हितत्वं ?

**प्रमाणप्रकाशितेष्वर्थेषु नयप्रवृत्तेर्व्यवहारहेतुत्वादभ्यर्हः ॥ २ ॥** यतः प्रमाणप्रकाशितेष्वर्थेषु नयप्रवृत्तिर्व्यवहारहेतुर्भवति नान्येष्वतोऽस्याभ्यर्हितत्वं।

**समुदायाऽवयवविषयत्वाद्वा ॥ ३ ॥** अथवा समुदायविषयं प्रमाणमवयवविषया नया इति प्रमाणस्याभ्यर्हितत्वं॥ तथाचोक्तं–"सकलादेशः प्रमाणाधीनो विकलादेशो नयाधीनः" इति।

**अधिगमहेतुर्द्विविधः स्वाधिगमहेतुः पराधिगमहेतुश्च, स्वाधिगमहेतुर्ज्ञानात्मकः प्रमाणनयविकल्पः, पराधिगमहेतुर्वचनात्मकस्तेन श्रुताख्येन प्रमाणेन स्याद्वादनयसंस्कृतेन प्रति पर्यायं सप्तभंगीमतो जीवादयः पदार्था अधिगमयितव्याः ॥ ४ ॥** अत्राह केयं सप्तभंगी तत्रोच्यते।

**प्रश्नवशादेकस्मिन्वस्तुन्यविरोधेन विधिप्रतिषेधविकल्पना सप्तभंगी ॥ ५ ॥** एकस्मिन्वस्तुन्यविरोधेन प्रश्नवशात् दृष्टेनेष्टेन च प्रमाणेनाऽविरुद्धा विधिप्रतिषेधकल्पना सप्तभंगी विज्ञेया। तद्यथा- स्याद् घटः ( १ ) स्यादघटः ( २ ) स्याद्घटश्चाऽघटश्च ( ३ ) स्यादवक्तव्यः ( ४ ) स्याद्घटश्चाऽवक्तव्यश्च ( ५ ) स्यादघटश्चावक्तव्यश्च ( ६ ) स्याद्घटश्चाऽघटश्चाऽवक्तव्यश्च ( ७ ) इत्यर्पितानर्पितनयसिद्धेः निरूपयितव्या। तत्र स्वात्मना स्याद्घटः। परात्मना स्यादघटः। को वा घटस्य स्वात्मा ? कोवा परात्मा ?। घटबुद्ध्यभिधानप्रवृत्तिलिंगः स्वात्मा। यत्र तयोरप्रवृत्तिः, स परात्मा पटादिः। स्वपरात्मोपादानापोहनव्यवस्थापाद्यं हि वस्तुनो वस्तुत्वं। यदि स्वस्मिन् पटाद्यात्मव्यावृत्तिविपरिणतिर्न स्यात्सर्वात्मना घट इति व्यपदिश्येत। अथ परात्मना व्यावृत्तावपि स्वात्मोपादानविपरिणतिर्न स्यात् खरविषाणवदवस्त्वेव स्यात्। अथवा नामस्थापनाद्रव्यभावेषु यो विवक्षितः स स्वात्मा। इतरः परात्मा। तत्र विवक्षितात्मना घटः, नेतरात्मना। यदीतरात्मनापि घटः स्यात्, विवक्षितात्मना वाऽघटः। नामादिव्यवहारोच्छेदः स्यात्। अथवा तत्र विवक्षितघटशब्दवाच्यसादृश्यसामान्यसबंधिषु कस्मिंश्चिद् घटविशेषे परिगृहीते प्रतिनियतो यः संस्थानादिः, स स्वात्मा। इतरः परात्मा। तत्र प्रतिनियतेन रूपेण घटः, नेतरेण। यदीतरात्मकः स्यात्, एकघटमात्रप्रसंगः। सामान्याश्रयो व्यवहारो विनश्येत्। अथवा तस्मिन्नेव घटविशेषे कालांतरावस्थायिनि पूर्वोत्तरकुशूलांतकपालाद्यवस्थाकलापः परात्मा। तदंतरालवर्ती स्वात्मा। स तेनैव घटः, तत्कर्मगुणव्यपदेशदर्शनात्। नेतरात्मना। यदि हि कुशूलांतकपालाद्यात्मनापि घटः स्यात्। घटावस्थायामपि तदुपलब्धिर्भवेत्। तदुत्पत्तिविनाशार्थं पुरुषप्रयत्नफलाभावश्चानुषज्येत। अथांतरालवर्तिपर्यायात्मनाप्यघटः स्याद्, घटकृत्यं फलं नोपलभ्येत। अथवा प्रतिक्षणं द्रव्यपरिणामोपचयापचयभेदादर्थांतरोपपत्तेः ऋजुसूत्रनयापेक्षया प्रत्युत्पन्नघटस्वभावः स्वात्मा। घटपर्याय एवातीतोऽनागतश्च परात्मा। तेन प्रत्युत्पन्नस्वभावेन सता स घटः, नेतरेणासता, तयोपलब्ध्यनुपलब्धिसद्भावात्। इतरथा हि प्रत्युत्पन्नवदतीतानागतात्मनापि घटत्वे, एकसमयमात्रमेव सर्वं स्यात्। अतीतानागतवद्वा प्रत्युत्पन्नाभावे घटाश्रयव्यवहाराभाव आपद्यते, विनष्टानुत्पन्नवद[illegible]भावत्। अथवा

तस्मिन् प्रत्युत्पन्नविपये रूपादिसमुदये परस्परोपकारवर्तिनि पृथुबुध्नाद्याकार स्वात्मा । इतर परात्मा । तेन पृथुबुध्नाद्याकारेण स घटोस्ति । नेतरेण । घटव्यवहारस्य तद्भावे भावात्तदभावेऽभावात् । यदि हि पृथुबुध्नाद्यात्मनापि घटो न स्यात्स एव न स्यात् । अथेतरात्मनापि घट स्यात्तदाकारशून्येपि घटव्यवहार प्राप्नुयात् । अथवा रूपादिसन्निवेश सस्थान । तत्र चक्षुषा घटो गृह्यते, इत्यस्मिन् व्यवहारे रूपमुखेन घटो गृह्यत इति, रूप स्वात्मा । रसादि परात्मा । स घटो रूपेणास्ति । नेतरेण रसादिना, प्रतिनियतकरणग्राह्यत्वात् । अथ हि चक्षुषा घटो गृह्यत इत्यत्र, रसादिरपि घट इति गृह्येत ! सर्वेषा रूपत्वप्रसग ? ततश्च करणातरकल्पनाऽनर्थिका । यदि वा रसादिवद्रूपमपि घट इति न गृह्येत, चक्षुर्विषयताऽस्य न स्यात्, अथवा शब्दभेदे ध्रुवोर्थभेद इति घटकुटादिशब्दानामप्यर्थभेद । घटनाद् घट कौटिल्यात्कुट इति तत्क्रियापरिणतिक्षण एव तस्य शब्दस्य वृत्तिर्युक्ता । तत्र घटनक्रियाविषयककर्तृभाव स्वात्मा । इतर परात्मा । तत्राद्येन घट । नेतरेण, तथार्थसमभिरोहणात् । यदि च घटनक्रियापरणतिमुखेनाप्यघट स्यात् । तद्व्यवहारनिवृत्ति स्यात् । यदि चेतरव्यपेक्षयापि घट स्यात्, पटादिष्वपि तत्क्रियाविरहितेषु तच्छब्दवृत्ति स्यात्, एकशब्दवाच्यत्व वा वस्तुन. । अथवा घटशब्दप्रयोगानतरमुत्पद्यमान उपयोगाकार स्वात्मा, अहेयत्वादतरगत्वाच्च । बाह्यो घटाकार परात्मा, तदभावेपि घटव्यवहारदर्शनात् । स घट उपयोगाकारेणास्ति । नान्येन । यदि उपयोगाकारात्मनाप्यघट स्यात् वक्तृश्रोतृहेतुफलभूतोपयोगघटाकाराभावात्तदधीनो व्यवहारो विनाशमाप्नुयात् । इतरोऽसन्निहितोपि यदि घट स्यात्पटादीनामपि स्याद् घटत्वप्रसग । अथवा चैतन्यशक्तेर्द्वावाकारौ ज्ञानाकारो ज्ञेयाकारश्च, अनुपयुक्तप्रतिबिंबाकारादर्शतलवत् ज्ञानाकार । प्रतिबिंबाकारपरिणतादर्शतलवज्ज्ञेयाकार । तत्र ज्ञेयाकार स्वात्मा, तन्मूलत्वाद् घटव्यवहारस्य । ज्ञानाकार परात्मा सर्वसाधारणत्वात् । स घटो ज्ञेयाकारेणास्ति । नान्यथा । यदि ज्ञेयाकारेणाप्यघट स्यात्तदाश्रयेपि कर्तव्यतानिरास स्यात् । अथ हि ज्ञानाकारेणापि घट स्यात्पटादिज्ञानकालेपि तत्सन्निधानाद् घटव्यवहारवृत्ति प्रसज्येत । उक्तै प्रकारैरर्पितघटत्वमघटत्व च परस्परतो न भिन्न । यदि भिद्येत सामानाधिकरण्येन तद्बुद्ध्यभिधानवृत्तिर्न स्याद् घटपटवत् । ततश्चेतरेतराविनाभावे उभयोरप्यभावात्तदाश्रयव्यवहारापह्नव कृत स्यात् । अतस्तदुभयात्मकोसौ क्रमेण तच्छब्दवाच्यतामास्कदन् स्याद् घटश्चाघटश्चेत्युच्यते । यदि तदुभयात्मक वस्तु घट इत्येवोच्येत, इतरात्मासग्रहादतत्त्वमेव स्यात् । अथाघट एवेत्युच्यते घटात्मानुपादानादनृतमेव स्यान्न वस्तु तावदेवेति । नचान्य शब्दस्तदुभयात्मावस्थतत्त्वाभिधायी नियतेऽतोसौ घटो वचनगोचरातीतत्वात्स्यादवक्तव्य इत्युच्यते । घटात्मार्पणामुखेनोक्तावक्तव्यस्वरूपनिरूपणेन चादिश्यमान स एवार्थ इति स्याद् घटश्चावक्तव्यश्च । निरूपिताऽघटभगसगेन प्रदर्शितावक्तव्यवर्त्मना चापदेश्य स एवार्थ इति स्यादघटश्चावक्तव्यश्च । तदुभयाभिधानक्रमाक्रमार्पणावशादाविर्भूततद्व्यपदेश स एवार्थ स्याद् घटश्चाघटश्चावक्तव्यश्च भवति । एवमिय सप्तभगी जीवादिषु सम्यग्दर्शनादिषु च द्रव्यार्थिकपर्यायार्थिकनयार्पणाभेदाद्योजयितव्या । तत्र द्रव्यार्थिकैकांतोऽनिश्चिततत्त्व , अतत्तदेवेत्यवधारणादुन्मत्तवत् । पर्यायार्थिकैकातोपि तथैवाऽतद्वस्तु तदेवेत्यवधारणादुन्मत्तवत्, स्याद्वादो निश्चितार्थोऽपेक्षितयाथातथ्यवस्तुवादित्वादनुन्मत्तवचनवत् । अवक्तव्यैकातोप्यसद्वाद स्ववचनविरोधात् सदा मौनवृत्तिकवत् । अमृषार्थ स्यादवक्तव्यवादो वक्तव्यावक्तव्यवादित्वात्सत्येतरवचनविशेषज्ञवादवत् ।

**अनेकांते तदभावादव्याप्तिरिति चेन्न तत्रापि तदुपपत्ते ॥ ६ ॥** स्यादेतदनेकाते सा विधिप्रतिषेधविकल्पना नास्ति । यदि स्याद्यदाऽनेकातो न भवति, तदैकांतदोषानुसंगो भवेत् । अनवस्थाप्रसगश्च । सततस्तत्रानेकातत्वमेव, इति सा सप्तभगी व्याप्तिमती न भवतीति । तन्न किं कारण ? तत्रापि तदुपपत्ते स्यादेकात स्यादनेकात स्यादुभय स्यादवक्तव्य स्यादेकातश्चावक्तव्यश्च स्यादनेकातश्चावक्तव्यश्च स्यादेकातश्चानेकातश्चावक्तव्यश्चेति । तत्कथमिति चेदुच्यते—

प्रमाणनयार्पणाभेदादेकातो द्विविध सम्यगेकातो मिथ्यैकात इति । अनेकातो द्विविध सम्यगनेकातो मिथ्यानेकात इति । तत्र सम्यगेकातो हेतुविशेषसामर्थ्यापेक्ष प्रमाणप्ररूपितार्थैकदेशादेश ।

ज्ञानचारित्रयोश्च नामादिन्यासविकल्पो योजयितव्यः।

अधिकृतानामेव सम्यग्दर्शनादिजीवादीनां पदार्थानां अभिधानाभिधेयसव्यवहाराऽव्यभिचाराय नामादिभिर्निक्षिप्तानां तत्त्वाधिगमहेतुर्वक्तव्य इत्यत आह–

## प्रमाणनयैरधिगमः ॥ ६ ॥

प्रमाणं च नयाश्च प्रमाणनयास्तैरधिगमो भवति सम्यग्दर्शनादीनां जीवादीनां। प्रमाणनया वक्ष्यमाणलक्षणाः। ननु च नयशब्दस्याल्पाक्षरत्वात्पूर्वनिपातेन भवितव्यं ?

**अभ्यर्हितत्वात्प्रमाणशब्दस्य पूर्वनिपातः ॥ १ ॥** "अभ्यर्हितं पूर्वं निपततीति" प्रमाणशब्दस्य पूर्वनिपातो वेदितव्यः। कथमभ्यर्हितत्वं ?

**प्रमाणप्रकाशितेष्वर्थेषु नयप्रवृत्तेर्व्यवहारहेतुत्वादभ्यर्हः ॥ २ ॥** यतः प्रमाणप्रकाशितेष्वर्थेषु नयप्रवृत्तिर्व्यवहारहेतुर्भवति नान्येष्वतोऽस्याभ्यर्हितत्वं।

**समुदायाऽवयवविषयत्वाद्वा ॥ ३ ॥** अथवा समुदायविषयं प्रमाणमवयवविषया नया इति प्रमाणस्याभ्यर्हितत्वं ॥ तथाचोक्तं–"सकलादेशः प्रमाणाधीनो विकलादेशो नयाधीनः" इति।

**अधिगमहेतुर्द्विविधः स्वाधिगमहेतुः पराधिगमहेतुश्च, स्वाधिगमहेतुर्ज्ञानात्मकः प्रमाणनयविकल्पः, पराधिगमहेतुर्वचनात्मकस्तेन श्रुताख्येन प्रमाणेन स्याद्वादनयसंस्कृतेन प्रति पर्यायं सप्तभंगीमन्तो जीवादयः पदार्था अधिगमयितव्याः ॥ ४ ॥** अत्राह केयं सप्तभंगी तत्रोच्यते।

**प्रश्नवशादेकस्मिन्वस्तुन्यविरोधेन विधिप्रतिषेधविकल्पना सप्तभंगी ॥ ५ ॥** एकस्मिन्वस्तुन्यविरोधेन प्रश्नवशात् दृष्टेनेष्टेन च प्रमाणेनाऽविरुद्धा विधिप्रतिषेधकल्पना सप्तभंगी विज्ञेया। तद्यथा– स्याद् घटः ( १ ) स्यादघटः ( २ ) स्याद्घटश्चाऽघटश्च ( ३ ) स्यादवक्तव्यः ( ४ ) स्याद्घटश्चाऽवक्तव्यश्च ( ५ ) स्यादघटश्चावक्तव्यश्च ( ६ ) स्याद्घटश्चाऽघटश्चाऽवक्तव्यश्च ( ७ ) इत्यर्पितानर्पितनयसिद्धेः निरूपयितव्या। तत्र स्वात्मना स्याद्घटः। परात्मना स्यादघटः। को वा घटस्य स्वात्मा ? को वा परात्मा ? घटबुद्ध्यभिधानप्रवृत्तिलिंगः स्वात्मा। यत्र तयोरप्रवृत्तिः, स परात्मा पटादिः। स्वपरात्मोपादानापोहनव्यवस्थापाद्यं हि वस्तुनो वस्तुत्वं। यदि स्वस्मिन् पटाद्यात्मव्यावृत्तिविपरिणतिर्न स्यात्सर्वात्मना घट इति व्यपदिश्येत। अथ परात्मना व्यावृत्तावपि स्वात्मोपादानविपरिणतिर्न स्यात् खरविषाणवदवस्त्वेव स्यात्। अथवा नामस्थापनाद्रव्यभावेषु यो विवक्षितः स स्वात्मा। इतरः परात्मा। तत्र विवक्षितात्मना घटः, नेतरात्मना। यदीतरात्मनापि घटः स्यात्, विवक्षितात्मना वाऽघटः। नामादिव्यवहारोच्छेदः स्यात्। अथवा तत्र विवक्षितघटशब्दवाच्यसादृश्यसामान्यसबन्धिषु कस्मिंश्चिद् घटविशेषे परिगृहीते प्रतिनियतो यः संस्थानादिः, स स्वात्मा। इतरः परात्मा। तत्र प्रतिनियतेन रूपेण घटः, नेतरेण। यदीतरात्मकः स्यात्, एकघटमात्रप्रसंगः। सामान्याश्रयो व्यवहारो विनश्येत्। अथवा तस्मिन्नेव घटविशेषे कालान्तरावस्थायिनि पूर्वोत्तरकुशूलान्तकपालाद्यवस्थाकलापः परात्मा। तदन्तरालवर्ती स्वात्मा। स तेनैव घटः, तत्कर्मगुणव्यपदेशदर्शनात्। नेतरात्मना। यदि हि कुशूलान्तकपालाद्यात्मनापि घटः स्यात्। घटावस्थायामपि तदुपलब्धिर्भवेत्। तदुत्पत्तिविनाशार्थं पुरुषप्रयत्नफलाभावश्चानुपज्येत। अथान्तरालवर्तिपर्यायात्मनाप्यघटः स्याद्, घटकृत्यं फलं नोपलभ्येत। अथवा प्रतिक्षणं द्रव्यपरिणामोपचयापचयभेदादर्थान्तरोपपत्तेः ऋजुसूत्रनयापेक्षया प्रत्युत्पन्नघटस्वभावः स्वात्मा। घटपर्याय एवातीतोऽनागतश्च परात्मा। तेन प्रत्युत्पन्नस्वभावेन सता स घटः, नेतरेणासता, तथोपलब्ध्यनुपलब्धिसद्भावात्। इतरथा हि प्रत्युत्पन्नवदतीतानागतात्मनापि घटत्वे, एकसमयमात्रमेव सर्वं स्यात्। अतीतानागतवद्वा प्रत्युत्पन्नाभावे घटाश्रयव्यवहाराभाव आपद्यते, विनष्टानुत्पन्नवदुपयप्रभाववत्। अथवा

साधकस्तेन दूषको येन वा दूषकस्तेन साधक । न तयो सकरो विरोधो वा। एव सर्वार्थेषु विरोधदोषमनुहृति विसर्पत्यनेकांतप्रक्रियेति ।

**सर्वमवाद्यविप्रतिपत्तेश्च ॥ १३ ॥** नात्र प्रतिवादिनो विसवदते, एकमनेकात्मकमिति । केचित्तावदाहु —सत्त्वरजस्तमसा साम्यावस्था प्रधानमिति तेषां प्रसादलाघवशोषतापावरणसादनादिभिन्नस्वभावाना प्रधानात्मना मिथश्च न विरोध । अथ मन्येथा न प्रधान नामैक गुणेभ्योऽर्थांतरभूतमस्ति, किंतु स एव गुणा साम्यमापन्ना प्रधानाख्या लभत इति । यद्येव भूमा प्रधानस्य स्यात्, स्यादेतत्तेषा समुदाय प्रधानमेकमिति । अत एवाविरोध सिद्ध गुणानामनयवाना समुदायस्य च । अपरे मन्यते—अनुवृत्तिनिनिवृत्तिबुद्ध्यभिधानलक्षण सामान्यविशेष इति। तेषा च सामान्यमेव विशेष सामान्यविशेष इति। एकस्यात्मन उभयात्मक न विरुध्यते ।

अपर आहु -वर्णादिपरमाणुसमुदयोरूपपरमाणुरिति । तेषा कक्खडत्वादिभिन्नलक्षणाना रूपात्मना मिथश्च न विरोध । अथ मत न परमाणुनामैकोऽस्ति बाह्य, किन्तु विज्ञानमेव तदाकारपरिणत परमाणुव्यपदेशार्हमित्युच्यते। अत्रापि ग्राहकविषयाभाससवित्तिशक्तित्रयाकाराधिकरणस्यैकस्याभ्युपगमान्न विरोध । किंच सर्वेषामेव तेषा पूर्वोत्तरकालभाव्यवस्थाविशेषार्पणाभेदादेकस्य कार्यकारणशक्तिसमन्वयो न विरोधस्यास्पदमित्यविरोध सिद्ध ॥ एव प्रमाणनयैरधिगताना जीवादीना पुनरप्यधिगमोपायातरप्रदर्शनार्थमाह—

## निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः ॥ ७ ॥

के पुनरिमे निर्देशादय ? निर्देशोऽर्थस्वरूपावधारण। स्वामित्वमाधिपत्य। साधन कारण। अधिकरण प्रतिष्ठा। स्थिति कालकृतावस्था। विधान प्रकार । अधिगम इत्यनुवर्तत एतैरेतेभ्योवाऽधिगम पूर्ववत्तासि । केषामधिगम ? जीवादीना, सम्यग्दर्शनादीना च। तर्हि तथा निर्देश कर्तव्य ? न कर्तव्योऽर्थवशाद्विभक्तिपरिणामो भवति । तद्यथा—उच्चानि देवदत्तस्य गृहाण्यामत्रयस्वेन देवदत्तमिति गम्यते । अथ किमर्थमादौ निर्देश उच्यते—

**अवधृतार्थस्य धर्मविकल्पप्रतिपत्तेरादौ निर्देशवचनं ॥ १ ॥** स्वरूपेणावधृतस्यार्थस्य धर्मविकल्पप्रतिपत्तिर्भवति । अतोऽस्य निर्देशस्यादौ वचन क्रियते ।

**इतरेषां प्रश्नवशात्क्रमः ॥ २ ॥** इतरेषा स्वामित्वादीना प्रश्नवशात्क्रमो वेदितव्य । यद्येव स एव तावदुच्यते को जीव इति ?

**औपशमिकादिभावपर्यायो जीव पर्यायादेशात् ॥ ३ ॥** वक्ष्यमाण औपशमिकादिभावपर्यायो जीव इत्युच्यते पर्यायादेशात् ।

**द्रव्यार्थादेशान्नामादिः ॥ ४ ॥** जीव इत्युच्यते ।

**तदुभयसग्रहः प्रमाण ॥ ५ ॥** तस्योभयस्य सग्रह प्रमाणनिर्देश इत्युच्यते । कस्य, जीव स्वामी ?

**तत्परिणामस्य भेदादग्नेरौष्ण्यवत् ॥ ६ ॥** स परिणामो यस्य सोऽय तत्परिणामस्तस्यासौ व्यपदिश्यते, कुत ? कथचिद्भेदात्परिणामपरिणामिनोर्भेदकल्पनासद्भावात् अग्नेरौष्ण्यवत्। तद्यथा—औष्ण्यात्मकस्याग्नेर्दहनपचनस्वेदनादिक्रियासामर्थ्यमौष्ण्य भेदेनोच्यते ।

**व्यवहारनयवशात्सर्वेषां ॥ ७ ॥** जीवादीनां सर्वेषा पदार्थाना व्यवहारनयवशाज्जीव स्वामी । किंसाधनो जीव ?

**परिणामिकभावसाधनो निश्चयतः ॥ ८ ॥** योऽसौ जीवात्मपरिणामिकस्तत्साधनो जीवो निश्चयनयेन, तेन ह्यमानात्मान सर्वकाल लभत इति ।

---

१ बहुत्व ।

एकात्मावधारणेन अन्यारोपनिराकरणप्रवणप्रणिधिमिथ्यैकांत. । एकत्र सप्रतिपक्षानेकधर्मस्वरूपनिरूपणो युक्त्यागमाभ्यामविरुद्ध सम्यगनेकांत. । तदतत्स्वभाववस्तुशून्य परिकल्पितानेकात्मक केवल वाग्विज्ञान मिथ्यानेकांत । तत्र सम्यगेकांतो नय इत्युच्यते । सम्यगनेकांत प्रमाण । नयार्पणादेकांतो भवत्येकनिश्चयप्रवणत्वात् । प्रमाणार्पणादनेकांतो भवत्यनेकनिश्चयाधिकरणत्वात् । यद्यनेकांतोऽनेकांत एव स्यान्नैकांतो भवेत्, एकाताभावात्तत्समूहात्मकस्य तस्याप्यभाव स्यात्, शाखाद्यभावे वृक्षाद्यभाववत्। तदविनाभाविविशेषनिराकरणादात्मलोपे सर्वलोप स्यात् । एवमुत्तरे च भगा योजयितव्या ।

**छलमात्रमनेकांत इति चेन्न छललक्षणाभावात् ॥ ७ ॥** स्यान्मत तदेवास्ति तदेव नास्ति, तदेव नित्य, तदेवानित्यमिति चानेकातप्ररूपण छलमात्रमिति । तन्न कुत ? छललक्षणाभावात् । छलस्य हि लक्षण मुक्त " वचनविघातोऽर्थविकल्पोपपत्त्या छलमिति " यथा नव कवलोयमित्यविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थांतरकल्पन, नवास्य कवला न चत्वार इति नवो वास्य कवलो न पुराण इति नवकवल । न तथानेकांतवाद । यत उभयगुणप्रधानभावापादितार्पितानर्पितव्यवहारसिद्धिविशेषबललाभप्रापितयुक्तिपुष्कलार्थोऽनेकांतवाद ।

**संशयहेतुरितिचेन्न विशेषलक्षणोपलब्धे ॥ ८ ॥** स्यान्मत सशयहेतुरनेकात वाद', कथ ? एकत्राधारे विरोधिनोनेकस्यासभवात् । आगमश्चैव प्रवृत्त —" एक द्रव्यमनतपर्यायमिति " । किमागम प्रामाण्यादस्ति वा नास्ति वा नित्य वाऽनित्य चेति ? । तच्च न कस्माद्विशेषलक्षणोपलब्धे । इह सामान्यप्रत्यक्षाद्विशेषाप्रत्यक्षाद्विशेषस्मृतेश्च सशय. । तद्यथा स्थाणुपुरुषोचिते देशे नातिप्रकाशाधकारकलुषायां वेलायामूर्ध्वत्वमात्र सारूप्य पश्यतो वक्रकोटरविशेषवयोनिलयनादीन् स्थाणुगतान् विशेषान् । वस्त्रस्तयन शिर कडूयनशिखाबधनादीन् पुरुषगताश्चाऽनुपलभमानस्य तेषा च स्मरत सशय उत्पद्यते । नच तद्वदनेकातवादे विशेषानुपलब्धिर्यत स्वपराद्यादेशवशीकृता विशेषा उक्ता व्यक्ता प्रत्यर्थमुपलभ्यते । ततो विशेषोपलब्धेर्न सशयहेतुरिति यदगदिष्म तत्सम्यग्निरवेष्म । एवमपि सशय , कथमिद तावदस्ति प्रष्टव्य ? एषामस्तित्वादीना धर्माणा साधका प्रतिनियता हेतव सति न वा । यदि न सति विप्रतिपन्नप्रतिपादनासभव अथ सत्येकत्र विरुद्धसाधनहेतुसन्निधाने सति भवितव्य सशयेनेत्युच्यते—

**विरोधाभावात्संशयाभावः ॥ ९ ॥** यदि विरोधोऽभविष्यत्सशयोऽजनिष्यत् । नच विरोधो नयोपनीताना धर्माणामस्ति कुत —

**अर्पणाभेदादविरोध पितृपुत्रादिसंबंधवत् ॥ १० ॥** उक्तादर्पणाभेदादेकत्राऽविरोधेनावरोधो धर्माणा, पितृपुत्रादिसबधवत् । तद्यथा—एकस्य देवदत्तस्य जातिकुलरूपसज्ञाव्यपदेशविशिष्टस्य पितापुत्रो भ्राता भागिनेय इत्येव प्रकारा सबधा जन्यजनकत्वादिशक्त्यर्पणाभेदान्न विरुध्यते । नह्येकापेक्षया पितेति, शेषापेक्षयापि पिता भवति । शेषापेक्षया वा पुत्रादिव्यपदेशार्ह इत्युक्तापेक्षयापि पुत्रादिव्यपदेशभाक् न च पिता, पुत्रादिकृत सबधबहुत्व देवदत्तस्यैकत्वे न विरुध्यते । तद्वदस्तित्वादयो न यांति विरोधमेकत्र ।

**सपक्षासपक्षापेक्षोपलक्षितसत्त्वासत्त्वादिभेदोपचितैकधर्मवद्वा ॥ ११ ॥** अथवा सपक्षासपक्षापेक्षयोपलक्षिताना सत्त्वासत्त्वादीना भेदानामाधारेण पक्षधर्मेणैकेन तुल्य सर्वद्रव्य निरपेक्षयोर्ह्येकत्रवादिप्रतिवादिप्रयोगापेक्षया सशय उक्त, इतरथा हि पक्षधर्मेपि सशय कल्प्येत ।

**एकस्य हेतोःसाधकदूषकत्वाविसंवादवद्वा ॥ १२ ॥** अथैवमुपपत्त्या विरोधे प्रतिपादितेपि मिथ्यादर्शनाभिनिवेशात्तत्त्व न प्रतिपद्यते यस्त प्रति सार्वलौकिकहेतुवादमाश्रित्योच्यते—इह स्वपक्षमर्यादानतिक्रमेण न्यायधर्ममनुपालयता वादिनाऽभिप्रेतप्रतिज्ञार्थसिद्धिमाशसता हेत्वनुपदेशे सर्वाभिलषितार्थसिद्धि प्रतिज्ञामात्रादेव माप्रापदिति । अतिप्रसगदोषनिवृत्तये यो हेतुरुपदिश्यते स साधको दूषकश्च । स्वपक्ष साधयति परपक्ष दूषयति न तौ साधनदूषणार्थौ हेतोरन्यौ भवत. । नचानन्यत्वमस्तीतिकृत्वा येन

१ वयसापक्षिणो निलयन निलय , नीड इत्यर्थ ।

साधकस्तेन दूषको येन वा दूषकस्तेन साधक । न तयो सकरो विरोधो वा। एव सर्वार्थेषु विरोधदोषमनुहृति विसर्पत्यनेकातप्रक्रियेति ।

**सर्वमवाद्यविप्रतिपत्तेश्च ॥ १३ ॥** नात्र प्रतिवादिनो विसवदते, एकमनेकात्मकमिति । केचित्तावदाहु —सत्त्वरजस्तमसा साम्यावस्था प्रधानमिति तेषा प्रसादलाघवशोषतापावरणसादनादिभिन्नस्वभावाना प्रधानात्मना मिथश्च न विरोध । अथ मन्येथा न प्रधान नामैक गुणेभ्योऽर्थांतरभूतमस्ति, किंतु त एव गुणा साम्यमापन्ना प्रधानाख्या लभत इति । यद्येव भूमा प्रधानस्य स्यात्, स्यादेतत्तेषा समुदाय प्रधानमेकमिति । अत एवाविरोध सिद्ध गुणानामवयवाना समुदायस्य च । अपरे मन्यते—अनुवृत्तिविनिवृत्तिबुद्ध्यभिधानलक्षण सामान्यविशेष इति। तेषा च सामान्यमेव विशेष सामान्यविशेष इति। एकस्यात्मन उभयात्मक न विरुध्यते ।

अपर आहु -वर्णादिपरमाणुसमुदयोरूपपरमाणुरिति । तेषा काकूनडत्वादिभिन्नलक्षणाना रूपात्मना मिथश्च न विरोध । अथ मत न परमाणुनामैकोस्ति बाह्य, किन्तु विज्ञानमेव तदाकारपरिणत परमाणुव्यपदेशार्हमित्युच्यते। अत्रापि ग्राहकविषयाभाससविचित्तिशक्तित्रयाकाराधिकरणस्यैकस्याभ्युपगमान्न विरोध । किंच सर्वेषामेव तेषा पूर्वोत्तरकालभाव्यवस्थाविशेषार्पणाभेदादेकस्य कार्यकारणशक्तिसमन्वयो न विरोधस्यास्पदमित्यविरोध सिद्ध ॥ एव प्रमाणनयैरधिगताना जीवादीना पुनरप्यधिगमोपायातरप्रदर्शनार्थमाह—

## निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः ॥ ७ ॥

के पुनरिमे निर्देशादय ? निर्देशोऽर्थात्मावधारण। स्वामित्वमाधिपत्य। साधन कारण। अधिकरण प्रतिष्ठा। स्थिति कालकृतात्यवस्था। विधान प्रकार । अधिगम इत्यनुवर्तत एतैरेतेभ्योवाऽधिगम पूर्ववत्तासि । केषामधिगम ? जीवादीना, सम्यग्दर्शनादीना च। स तर्हि तथा निर्देश कर्तव्य ? न कर्तव्योऽर्थवशाद्विभक्तिपरिणामो भवति। तद्यथा—उच्चानि देवदत्तस्य गृहाण्यामत्रयस्वैन देवदत्तमिति गम्यते । अथ किमर्थमादौ निर्देश उच्यते—

**अवधृतार्थस्य धर्मविकल्पप्रतिपत्तेरादौ निर्देशवचनं ॥ १ ॥** स्वरूपेणावधृतस्यार्थस्य धर्मविकल्पप्रतिपत्तिर्भवति । अतोस्य निर्देशस्यादौ वचन क्रियते ।

**इतरेषां प्रश्नवशात्क्रमः ॥ २ ॥** इतरेषा स्वामित्वादीना प्रश्नवशात्क्रमो वेदितव्य । यद्येव स एव तावदुच्यते को जीव इति ?

**औपशमिकादिभावपर्यायो जीव पर्यायादेशात् ॥ ३ ॥** वक्ष्यमाण औपशमिकादिभावपर्यायो जीव इत्युच्यते पर्यायादेशात् ।

**द्रव्यार्थादेशान्नामादिः ॥ ४ ॥** जीव इत्युच्यते ।

**तदुभयसग्रहः प्रमाण ॥ ५ ॥** तस्योभयस्य सग्रह प्रमाणनिर्देश इत्युच्यते । कस्य, जीव' स्वामी ?

**तत्परिणामस्य भेदादग्नेरौष्ण्यवत् ॥ ६ ॥** स परिणामो यस्य सोऽय तत्परिणामस्तस्यासौ व्यपदिश्यते, कुत ? कथंचिद्भेदात्परिणामपरिणामिनोर्भेदकल्पनासद्भावात् अग्नेरौष्ण्यवत्। तद्यथा—औष्ण्यात्मकस्याग्नेर्दहनपचनस्वेदनादिक्रियासामर्थ्यमौष्ण्य भेदेनोच्यते ।

**व्यवहारनयवशात्सर्वेषां ॥ ७ ॥** जीवादीना सर्वेषा पदार्थाना व्यवहारनयवशाज्जीव स्वामी । किंसाधनो जीव ?

**परिणामिकभावसाधनो निश्चयत' ॥ ८ ॥** योसौ जीवात्मपरिणामिकस्तत्साधनो जीवो निश्चयनयेन, तेन ह्यसावात्मान सर्वकाल लभत इति ।

१ बहुत्व ।

**औपशमिकादिभावसाधनश्च व्यवहारात्** ॥ ९ ॥ व्यवहारनयवशादौपशमिकादिभावसाधनश्चेति व्यपदिश्यते । च शब्देन शुक्रशोणिताहारादिसाधनश्च । किमधिकरणो जीव ?

**स्वप्रदेशाधिकरणो निश्चयतः** ॥ १० ॥ योसौ स्वप्रदेशोऽसंख्यातस्वरूप कर्मकृतशरीरपरिमाणानुविधायित्वेऽप्यपरिप्राप्तहीनाधिकभावस्तदधिकरणो जीव स्वात्मप्रतिष्ठाकाशवत् ।

**व्यवहारतः शरीराद्यधिष्ठानः** ॥ ११ ॥ कर्मोपात्त शरीरमेतच्चाधिकरणमात्मा व्यवहारनयवशादधितिष्ठतीत्युच्यते । किं स्थितिकोजीव ?

**स्थितिस्तस्य द्रव्यपर्यायापेक्षानाद्यवसाना समयादिका च** ॥१२॥ तस्य जीवस्य स्थितिर्द्रव्यपर्यायापेक्षा द्विधा कल्प्यते । द्रव्यापेक्षाऽनाद्यवसाना, जीवद्रव्य हि चैतन्यजीवद्रव्योपयोगाऽसंख्येयप्रदेशादिसामान्यादेशान्न प्रच्यवते सर्वकालमिति । पर्यायस्त्वन्यश्चान्यश्च भवति तदपेक्षा समयादिका कल्प्यते । किमस्य विधान ?

**नारकादिसंख्येयासंख्येयानंतप्रकारो जीव** ॥ १३ ॥ नारकादय संख्येया असंख्येया अनतप्रकारा भिद्यते जीवस्य ।

**तथेतरेषामागमाविरोधान्निर्देशादिवचनं** ॥ १४ ॥ तेनैव प्रकारेणागमाविरोधेनेतरेषामजीवादीना निर्देशादयो वक्तव्या । तद्यथा—अजीवस्तावद्दशप्राणपर्यायरहित , नामादिर्वाजीवात्मैव, अजीवस्य स्वामी जीवो वा भोक्तृत्वात् । पुद्गलानामणुत्वादिसाधन भेदादि, तन्निमित्त वा कालादि । धर्माधर्मकालाकाशाना गतिस्थितिवर्तनावगाहहेतुता पारिणामिकी, अगुरुलघुगुणानुगृहीता, स्वात्मभूतसत्तासबधाज्जीवपुद्गला वा तदपेक्षत्वाद्गत्यादिहेतुताभिव्यक्ते । स्वात्मैवाधिकरण सर्वद्रव्याणा, स्वात्मव्यवस्थितत्वात् , आकाश साधारणमसाधारण च घटादिर्जलादीना । स्थितिर्द्रव्यापेक्षानाद्यवसाना, पर्यायापेक्षा समयादिका । विधान धर्मादित्रिक प्रतिनियतानादिपारिणामिकद्रव्यार्थादेशादेकैक पर्यायार्थिकनयादेशादनेक । संख्येयासंख्येयानंतानां द्रव्याणां गतिस्थित्यवगाहनाद्युपकारपर्यायादेशात्स्यादेक स्यादनेक स्यात्संख्येयं स्यादसंख्येय स्यादनंत । काल संख्येयोऽसंख्येयोनंतश्च भवति परप्रत्ययात् । पुद्गलद्रव्य रूपस्पर्शादि पारिणामिकद्रव्यार्थादेशात्स्यादेक प्रतिनियतैकानेकसंख्येयासंख्येयानंतप्रदेशपर्यायादेशात्स्यादनेक स्यात्संख्येय स्यादसंख्येय स्यादनंत । आश्रवनिर्देश कायवाङ्मन क्रियापरिणामो नामादिर्वा । जीवोस्य स्वामी, कर्म वा तन्निमित्तत्वात् । स्वात्मैव साधन, शुद्धस्य तदभावात् । कर्म वा सति तस्मिन्प्रवृत्ते । अधिकरणमात्मैव तत्र तत्फलदर्शनात् । कर्मणि, कर्मकृते च कायादावुपचारत । स्थितिर्वाङ्मनसाश्रवयोर्जघन्येनैकसमय , उत्कर्षेणांतर्मुहूर्त. । कायाश्रवस्य जघन्येनांतर्मुहूर्त , उत्कर्षेणानंतकाल । असंख्येया पुद्गलपरिवर्ता । विधान वाङ्मनसाश्रवयोश्चतुर्विकल्पसत्य, सत्यमृषोभयानुभयभेदात् । कायाश्रव सप्तविध औदारिकवैक्रियिकाहारकमिश्रकार्माण भेदात् । औदारिकौदारिकमिश्रकौ मनुष्यतिरश्चां । वैक्रियिकवैक्रियिकमिश्रकौ देवनारकाणां । आहारकाहारक मिश्रकौ सयतानामृद्धिप्राप्ताना । कार्मणकायाश्रवो विग्रहापन्नानां केवलिना चासमुद्घातगताना । अथवा श्रवस्य प्रकार शुभाशुभ । तत्र कायिको हिंसानृतस्तेयाब्रह्मादिषु प्रवृत्तिनिवृत्तिसज्ञ । वाचिक परुषाक्रोशपिशुनपरोपघातादिषु वचस्सु प्रवृत्तिनिवृत्तिसंज्ञ । मानसो मिथ्याश्रुतेर्ष्यासूयादिषु मनस प्रवृत्तिनिवृत्तिसंज्ञ । बधनिर्देश जीवकर्मप्रदेशान्योन्यसंश्लेषो बध , नामादिर्वा । स जीवस्य तत्र तत्फलदर्शनात्, कर्मणश्च तस्य द्विष्ठत्वात् । मिथ्यादर्शनाविरतिप्रमादकषाययोगा बधस्य साधन, तत्परिणतो वाऽऽत्मा । स्वामिसबधार्हमेव वस्त्वधिकरण भवति, विवक्षात कारकप्रवृत्ते । स्थितिर्जघन्योत्कृष्टा च । तत्र जघन्या वेदनीयस्य द्वादशमुहूर्ता । नामगोत्रयोरष्टौ । शेषाणामतर्मुहूर्ता । उत्कृष्टा ज्ञानदर्शनावरणवेदनीयातरायाणां त्रिंशत्सागरोपम कोटीकोट्य । मोहनीयस्य सप्तति । नामगोत्रयोर्विंशति । त्रयस्त्रिंशत्सागरोपमाण्यायुष । अथवा बधसतान-

---

१ "अधिकरणमात्मन्येवाद्ये" इत्यपि ग पुस्तके पाठ । २ तद्विशिष्टरशादित्यपि पाठ ।

पर्यायादेशात्स्यादनादिरनिधनश्चाभव्यानां । भव्यानां च केषाचिचेऽनतेनापि कालेन न सेत्स्यति । ज्ञानावरणादिकर्मोत्पादविनाशात्स्यात्सादि सनिधन । विधान, बध सामान्यादेशात्स्यादेक द्विविध शुभाशुभभेदात् । त्रिधा द्रव्यभावोभयविकल्पात् । चतुर्द्धा प्रकृतिस्थित्यनुभागप्रदेशभेदात् । पचधा मिथ्यादर्शनादिहेतुभेदात् । षोढा नामस्थापनाद्रव्यक्षेत्रकालभावै । सप्तधा तैरेव भावाधिके । अष्टधा ज्ञानावरणादिमूलप्रकृतिभेदात् । एव सख्येया असख्येया अनतविकल्पाश्च भवति हेतुफलभेदात् । सवरनिर्देश आश्रवनिरोध , नामादिर्वा जीवोस्य स्वामी, कर्म वा निरुध्यमानविषयत्वात् । निरोधस्य साधन, गुप्तिसमितिधर्मादय । स्वामिसबधार्हमेवाधिकरणमित्युक्त । स्थितिर्जघन्येनातर्मुहूर्तो । उत्कृष्टा पूर्वकोटीदेशोना । विधानमेकादिरष्टोत्तरशतविध स्तत उत्तरश्च सख्येयादिविकल्पो निरोध्यनिरोधकभेदाद्वेदितव्य (तत्राष्टोत्तरशतविध उच्यते तिस्रो गुप्तय । पच समितय । धर्मो दशविध अनुप्रेक्षा द्वादश । परीषहा द्वाविंशति । तपो द्वादशविध । प्रायश्चित नवविध । विनयश्चतुर्विध । वैयावृत्य दशविध । स्वाध्याय पचविध । व्युत्सर्गो द्विविध । धर्मध्यान दशविध । शुक्लध्यान चतुर्विधमिति ।) निर्जरा निर्देशो यथाविपाकात्तपसो वा, उपभुक्तवीर्य कर्म निर्जरा, नामादिर्वा, सा आत्मन कर्मणो वा द्रव्यभावभेदात् । साधन, तपो यथाकर्मविपाकश्च । अधिकरणमात्मा निर्जरात्मैव वा । विधान, सामान्यादेका निर्जरा । द्विविधा यथाकालमक्रमिकभेदात् । अष्टधा मूलकर्मप्रकृतिभेदात् । एव सख्येसख्येयानतविकल्पा भवति कर्मरसनिर्हरणभेदात् । मोक्षनिर्देश कृत्स्नकर्मसक्षयो मोक्ष , नामादिर्वा तस्य स्वामी परमात्मा मोक्षात्मैव वा । साधन सम्यग्दर्शनज्ञानचारित्राणि । स्वामिसबधार्हमेवाधिकरण तद्विषयत्वात् । स्थितिस्तस्य सादिरनिधना । विधान, सामान्यादेकोमोक्ष । द्रव्यभावमोक्तव्यभेदादनेक । सम्यग्दर्शननिर्देश तत्त्वार्थश्रद्धान सम्यग्दर्शन । नामादिर्वा । तत्पुनरात्मन स्वस्यैव वा । दर्शनमोहोपशमादिसाधन, बाह्यं चोपदेशादि, स्वात्मा वा । स्वामिसबधभागेवाधिकरण । स्थितिर्जघन्येनातर्मुहूर्तो उत्कर्षेण षट्षष्टिसागरोपमाणि सातिरेकाणि । अथवा सादि सनिधनमौपशमिकक्षायोपशमिक, साद्यनिधन क्षायिक । विधान सामान्यादेक द्विधा निसर्गजाधिगजभेदात् । त्रिधौपशमिकक्षायिकक्षायोपशमिकविकल्पात् । एव सख्येयानतविकल्प च भवत्यध्यवसानभेदात् । ज्ञाननिर्देश, जीवादितत्त्वप्रकाशन ज्ञान । नामादिर्वा । तदात्मन स्वाकारस्य वा । ज्ञानावरणादिकर्मक्षयोपशमादि साधन । स्वाविर्भावशक्तिर्वा । अधिकरणमात्मा स्वाकारो वा तत्र प्रतिष्ठानात् । स्थिति , सादिसनिधन क्षायोपशमिक ज्ञान चतुर्विकल्प । साद्यनिधन क्षायिक । विधान सामान्यादेक ज्ञान । प्रत्यक्षपरोक्षभेदाद् द्विधा । द्रव्यगुणपर्यायविषयभेदात् त्रिधा । नामादिविकल्पाच्चतुर्धा । मत्यादिभेदात्पचधा । इत्येव सख्येयासख्येयानतविकल्प च भवति ज्ञेयाकारपरिणतिभेदात् । चारित्रनिर्देश, कर्मादानकारणनिवृत्तिश्चारित्र । नामादिर्वा । तत्पुनरात्मन स्वरूपस्य वा । चारित्रमोहोपशमादि साधन, स्वशक्तिर्वा । स्वामिसबधभागेवाधिकरण । स्थितिर्जघन्येनातर्मुहूर्तो उत्कर्षेण पूर्वकोटीदेशोना । अथवा सादि सपर्यवसान औपशमिकक्षायोपशमिक साद्यपर्यवसान क्षायिक । शुद्धिव्यक्त्यपेक्षया साद्यनिधन । विधान सामान्यादेक । द्विधा बाह्याभ्यतरनिवृत्तिभेदात् । त्रिधौपशमिकक्षायिकक्षायोपशमिकविकल्पात् । चतुर्धा चतुर्यमभेदात् । पचधा सामायिकादिविकल्पात् । इत्येव सख्येयासख्येयानतविकल्प च भवति परिणामभेदात् । किमेतैरेव जीवादीनामधिगमो भवति उतान्योप्यधिगमोपायोस्ति इति, परिपृष्ट , अस्तीत्याह—

## सत्संख्याक्षेत्रस्पर्शनकालांतरभावाल्पबहुत्वैश्च ॥ ८ ॥

अधिगम इत्यनुवर्तते ।

**प्रशसादिषु सच्छन्दवृत्तेरिच्छातः सद्भावग्रहणं ॥ १ ॥** सच्छब्द प्रशसादिषु वर्तते तद्यथा-प्रशसायां तावत् "सत्पुरुष सदश्वश्चेति" । क्वचिदस्तित्वे "सद्घट सत्पट" इति । क्वचित्प्रतिज्ञायमाने "प्रव्रजित सन् कथमनृत ब्रूयात्, प्रव्रजित इति प्रतिज्ञायमान इत्यर्थ " । क्वचिदादरे "सत्कृत्यातिथीन् भोजयतीति" आदृत्येत्यर्थ । तत्रेहेच्छात सद्भावो गृह्यते ।

**अव्यभिचारात्सर्वमूलत्वाच्च तस्यादौ वचनं ॥ २ ॥** सत्त ह्यव्यभिचारि सर्वपदार्थविषयत्वात्,

नहि कश्चित्पदार्थः सत्तां व्यभिचरति, यदि व्यभिचरेद्वाग्विज्ञानगोचरातीतः स्यात्। गुणास्तु रूपादयो ज्ञानादयश्च केषुचित्सति केषुचिन्न सति। क्रिया च परिस्पंदात्मिका जीवपुद्गलेष्वस्ति नेतरेष्विति न व्याप्तिमती। सर्वेषां च विचारार्हाणामस्तित्वं मूलं। तेन हि निश्चितस्य वस्तुन उत्तरा चिंता युज्यते अतस्तस्यादौ वचनं क्रियते।

**सतः परिणामोपलब्धेः संख्योपदेशः ॥ ३ ॥** सतो हि वस्तुनः संख्यातासंख्यातानंतपरिणामोपलब्धेः संख्यातायन्यतमपरिणामावधारणार्थं संख्या भेदलक्षणोपदिश्यते।

**निर्ज्ञातसंख्यस्य निवासविप्रतिपत्तेः क्षेत्राभिधानं ॥ ४ ॥** निश्चयेन ज्ञातसंख्यस्यार्थस्योर्ध्वाधस्तिर्यग्निवासविप्रतिपत्तेरूर्ध्वाद्यन्यतमनिवासनिश्चयार्थं क्षेत्राभिधानं।

**अवस्थाविशेषस्य वैचित्र्यात्त्रिकालविषयोपश्लेषनिश्चयार्थं स्पर्शनं ॥ ५ ॥** अवस्थाविशेषो विचित्रस्त्र्यस्रचतुरस्रादिस्तस्य त्रिकालविषयमुपश्लेषणं स्पर्शनं। कस्य चित्तत्क्षेत्रमेव स्पर्शनं कस्यचिद्रज्जव एव कस्यचिद्रज्जवः षड्ष्टौ वेति। एकसर्वजीवसन्निधौ तन्निश्चयार्थं तदुच्यते,–

**स्थितिमतोऽवधिपरिच्छेदार्थं कालोपादानं ॥ ६ ॥** स्थितिमतोर्थस्यावधिपरिच्छेत्तव्य इति कालोपादानं क्रियते।

**अंतरशब्दस्यानेकार्थवृत्तेश्छिद्रमध्यविरहेष्वन्यतमग्रहणं ॥ ७ ॥** बहुष्वर्थेषु दृष्टः प्रयोगः क्वचिच्छिद्रे वर्तते 'सांतरं काष्ठं सच्छिद्रमिति'। क्वचिदन्यत्वे 'द्रव्याणि द्रव्यांतरमारभंत' इति क्वचिन्मध्ये हिमवत्सागरांतर इति। क्वचित्सामीप्ये "स्फटिकस्य शुक्लरक्ताद्यंतरस्थस्य तद्वर्णतेति शुक्लरक्तसमीपस्थस्येति गम्यते। क्वचिद्विशेषे"।

"वाजिवारणलोहानां काष्ठपाषाणवाससां। नारीपुरुषतोयानामंतरं महदंतरं" इति।

महान् विशेष इत्यर्थः। क्वचिद्बहिर्योगे 'ग्रामस्यांतरे कूपाः' इति क्वचिदुपसंव्याने 'अंतरे शाटकाः' इति। क्वचिद्विरहेऽनभिप्रेतश्रोतृजनांतरे मन्त्रं मन्त्रयते। तद्विरहे मन्त्रयत इत्यर्थः। तत्रेह छिद्रमध्यविरहेष्वन्यतमो वेदितव्यः।

**अनुपहतवीर्यस्य न्यग्भावे पुनरुद्भूतिदर्शनात्तद्वचनं ॥ ८ ॥** अनुपहतवीर्यस्य द्रव्यस्य निमित्तवशात्कस्य चित्पर्यायस्य न्यग्भावे सति पुनर्निमित्तांतरात्तस्यैवाविर्भावदर्शनात्तदंतरमित्युच्यते ॥

**परिणामप्रकारनिर्णयार्थं भाववचनं ॥ ९ ॥** औपशमिकादिः परिणामप्रकारो निर्णेतव्य इति भाववचनं क्रियते।

**संख्याताद्यन्यतमनिश्चयेऽप्यन्योन्यविशेषप्रतिपत्त्यर्थमल्पबहुत्ववचनं ॥ १० ॥** संख्यातादिष्वन्यतमेन परिणामेन निश्चितानामन्योन्यविशेषप्रतिपत्त्यर्थमल्पबहुत्ववचनं क्रियते। इमे एभ्योऽल्पा, इमे बहव इति। आह–

**निर्देशवचनात्सत्त्वप्रसिद्धेरसद्ग्रहणं ॥ ११ ॥** निर्देशवचनादेव सत्त्वं सिद्धं न ह्यसतो निर्देश इति तस्मादसद्ग्रहणं। अनर्थकं सद्ग्रहणमसद्ग्रहणं।

**न वा क्वास्ति क्व नास्तीति चतुर्दशमार्गणास्थानविशेषणार्थत्वात् ॥ १२ ॥** नैष दोषः, किं कारणं नानेन सम्यग्दर्शनादेः सामान्येन सत्त्वमुच्यते किन्तु गतीन्द्रियकायादिषु चतुर्दशसु मार्गणास्थानेषु क्वास्ति सम्यग्दर्शनादि, क्व नास्तीत्येवं विशेषणार्थं सद्वचनं।

**सर्वभावाधिगमहेतुत्वाच्च ॥ १३ ॥** अधिकृतानां सम्यग्दर्शनादीनां जीवादीनां च निर्देशवचने नास्तित्वमधिगतं स्यात्, येत्वनधिकृता जीवपर्याया क्रोधादयो ये वाऽजीवपर्याया वर्णादयो घटादयश्च तेषामस्तित्वाधिगमार्थं पुनर्वचनं।

**अनधिकृतत्वादिति चेन्न सामर्थ्यात् ॥ १४ ॥** स्यादेतदनधिकृतास्ते ततो न पुनर्युक्तमेषा ग्रहण मिति । तन्न किं कारण सामर्थ्यात् तेषामपि ग्रहण भवति ।

**विधानग्रहणात् सख्यासिद्धिरिति चेन्न भेदगणनार्थत्वात् ॥ १५ ॥** स्यादेतत् विधानग्रहणादेव सख्यासिद्धिरिति । तन्न किं कारण भेदगणनार्थत्वात् । प्रकारगणन हि तत् । भेदगणनार्थमिदमुच्यते । उपशमसम्यग्दृष्टय इयत । क्षायिकसम्यग्दृष्टय एतावत इति ।

**क्षेत्राधिकरणयोरभेद इति चेन्नोक्तत्वात् ॥ १६ ॥** स्यादेतद्यदेवाधिकरण तदेव क्षेत्र, अतस्तयोरभेदात्पृथग्ग्रहणमनर्थकमिति । तन्न किं कारण उक्तार्थत्वादुक्तमेतत् सर्वभावाधिगमार्थत्वादिति ।

**क्षेत्रे सति स्पर्शनोपलब्धेरंबुघटवत्पृथग्ग्रहण ॥ १७ ॥** यथेह सति घटे क्षेत्रेऽबुनोवस्थानात्तन्नियमाद्घटस्पर्शन, नह्येतदस्ति घटेंबु अवतिष्ठते, नच घट स्पृशतीति । तथाकाशक्षेत्रे जीवावस्थाना नियमादाकाशे स्पर्शनमिति क्षेत्राभिधानेनैव स्पर्शनस्यार्थगृहीतत्वात्पृथग्गृहणमनर्थक ।

**न वा विषयवाचित्वात् ॥१८॥** नवैष दोष किं कारण ? विषयवाचित्वात् । विषयवाची क्षेत्रशब्द । यथा राजा जनपदक्षेत्रेऽवतिष्ठते, नच कृत्स्न जनपद स्पृशति । स्पर्शन तु कृत्स्नविषयमिति ।

**त्रैकाल्यगोचरत्वाच्च ॥ १९ ॥** यथा साम्प्रतिकेनाम्बुना साप्रतिक घटक्षेत्रे स्पृष्ट, नातीतानागत । नैवमात्मन साप्रतिकक्षेत्रस्पर्शने स्पर्शनाभिप्राय । स्पर्शनस्य त्रिकालगोचरत्वात् ।

**स्थितिकालयोरर्थांतरत्वाभाव इतिचेन्न मुख्यकालास्तित्वसमत्ययार्थ ॥ २० ॥** स्यादेतत् स्थितिरेव काल काल एव स्थितिरित्यतो नास्त्यनयोरर्थांतरभाव इति । तन्न किं कारण ? मुख्यकालास्तित्वसप्रत्ययार्थं पुन कालग्रहण । द्विविधो हि कालो मुख्यो व्यावहारिकश्चेति । तत्र मुख्यो निश्चयकाल । पर्यायिपर्यायानवधिपरिच्छेदो व्यावहारिकस्तयोरुत्तरत्र निर्णयो वक्ष्यते । उक्तच-किमुक्त ? सर्वभावाधिगमहेतुत्वादिति ।

**नामादिषु भावग्रहणात्पुनर्भावाग्रहणमिति चेन्नौपशमिकाद्यपेक्षत्वात् ॥ २१ ॥** स्यादेतन्नामादिषु भावग्रहण कृत तेनैव सिद्धत्वात्पुनर्भावग्रहणमनर्थकमिति तन्न किं कारण ? औपशमिकाद्यपेक्षत्वात् । पूर्वं भावग्रहण द्रव्य न भवतीत्येव पर । इद त्वौपशमिकादिवक्ष्यमाणभावापेक्ष । किं सम्यग्दर्शन मौपशमिक, क्षायिकमित्यादि ।

**विनेयाशयवशो वा तत्त्वाधिगमहेतुविकल्प ॥ २२ ॥** अथवा सर्वेषामेव परिहार विनेयाशयवशो हि तत्त्वाधिगमहेतुविकल्पो वेदितव्य । केचित्सक्षेपेण प्रतिपाद्या केचिद्विस्तरेण, इतरथा हि प्रमाणग्रहणादेव सिद्धेरितरेषामधिगमोपायाना ग्रहणमनर्थक स्यादिति ।

इतितत्त्वार्थवार्तिके प्रथमेऽध्याये पचममाह्निक समाप्त ॥ ५ ॥

एव सम्यग्दर्शनस्यादावुद्दिष्टस्य लक्षणोत्पत्तिस्वामिविषयन्यासाधिगमोपाया निर्दिष्टास्तत्सबधेन च जीवादीना सज्ञापरिणामादि निर्दिष्ट तदनतरमिदानीं सम्यग्ज्ञान विचारार्हमित्याह—

---

## मतिश्रुतावधिमन पर्ययकेवलानि ज्ञानं ॥ ९ ॥

मत्यादय इति क एते शब्दा ?

**मतिशब्दो भावकर्तृकरणसाधनः ॥ १ ॥** अय मतिशब्दो भावकर्तृकरणेष्वन्यतमसाधनो वेदितव्य । मनेर्भावसाधने क्ति । तदावरणकर्मक्षयोपशमे सतींद्रियानिंद्रियापेक्षमर्थस्य मनन मति । औदासीन्येन तत्त्वकथनाद्बहुलापेक्षया कर्तृसाधन , करणसाधनो वा, मनुतेर्था मन्यतेऽनेनेति वा मति भेदाभेदविवक्षोपपत्ते. ।

नहि कश्चित्पदार्थः सत्तां व्यभिचरति, यदि व्यभिचरेद्वाग्विज्ञानगोचरातीतः स्यात्। गुणास्तु रूपादयो ज्ञानादयश्च केषु चित्सति केषुचिन्न सति। क्रिया च परिस्पदात्मिका जीवपुद्गलेष्वस्ति नेतरेष्विति न व्याप्तिमती। सर्वेषां च विचारार्हाणामस्तित्वं मूलं। तेन हि निश्चितस्य वस्तुन उत्तरा चिंता युज्यते अतस्तस्यादौ वचनं क्रियते।

**सतः परिणामोपलब्धेः संख्योपदेशः ॥ ३ ॥** सतो हि वस्तुनः संख्यातासंख्याताऽनंतपरिणामोपलब्धेः संख्यातायन्यतमपरिणामावधारणार्थं संख्या भेदलक्षणोपदिश्यते।

**निर्ज्ञातसंख्यस्य निवासविमतिपत्तेः क्षेत्राभिधानं ॥ ४ ॥** निश्चयेन ज्ञातसंख्यस्यार्थस्योर्ध्वाधस्तिर्यग्निवासविप्रतिपत्तेरूर्ध्वाद्यन्यतमनिवासनिश्चयार्थं क्षेत्राभिधानं।

**अवस्थाविशेषस्य वैचित्र्यात्त्रिकालविषयोपश्लेषनिश्चयार्थं स्पर्शनं ॥ ५ ॥** अवस्थाविशेषो विचित्रस्त्र्यस्रचतुरस्रादिस्तस्य त्रिकालविषयमुपश्लेषण स्पर्शनं। कस्य चित्तत्क्षेत्रमेव स्पर्शनं कस्यचिद्रज्जुरेवं कस्यचिद्रज्जवः षड्ष्टौ वेति। एकसर्वजीवसन्निधौ तन्निश्चयार्थं तदुच्यते,—

**स्थितिमतोऽवधिपरिच्छेदार्थं कालोपादानं ॥ ६ ॥** स्थितिमतोर्थस्यावधिपरिच्छेत्तव्य इति कालोपादनं क्रियते।

**अंतरशब्दस्यानेकार्थवृत्तेश्छिद्रमध्यविरहेष्वन्यतमग्रहणं ॥ ७ ॥** बहुष्वर्थेषु दृष्टः प्रयोगः क्वचिच्छिद्रे वर्तते 'सांतरं काष्ठं सच्छिद्रमिति'। क्वचिदन्यत्वे 'द्रव्याणि द्रव्यांतरमारभंत' इति क्वचिन्मध्ये हिमवत्सागरांतर इति। क्वचित्सामीप्ये "स्फटिकस्य शुक्लरक्ताद्यंतरस्थस्य तद्वर्णतेति शुक्लरक्तसमीपस्थस्येति गम्यते। क्वचिद्विशेषे"।

"वाजिवारणलोहानां काष्ठपाषाणवाससां। नारीपुरुषतोयानामंतरं महदंतरं" इति।

महान् विशेष इत्यर्थः। क्वचिद्बहिर्योगे 'ग्रामस्यांतरे कूपाः' इति क्वचिदुपसंव्याने 'अंतरे शाटकाः' इति। क्वचिद्विरहेऽनभिप्रेतश्रोतृजनांतरे मन्त्रं मन्त्रयते। तद्विरहे मन्त्रयत इत्यर्थः। तत्रेह छिद्रमध्यविरहेष्वन्यतमो वेदितव्यः।

**अनुपहतवीर्यस्य न्यग्भावे पुनरुद्भूतिदर्शनात्तद्वचनं ॥ ८ ॥** अनुपहतवीर्यस्य द्रव्यस्य निमित्तवशात्कस्य चित्पर्यायस्य न्यग्भावे सति पुनर्निमित्तांतरात्तस्यैवाविर्भावदर्शनात्तदंतरमित्युच्यते॥

**परिणामप्रकारनिर्णयार्थं भाववचनं ॥ ९ ॥** औपशमिकादिः परिणामप्रकारो निर्णेतव्य इति भाववचनं क्रियते।

**संख्याताद्यन्यतमनिश्चयेष्वन्योन्यविशेषप्रतिपत्त्यर्थमल्पबहुत्ववचनं ॥ १० ॥** संख्यातादिष्वन्यतमेन परिणामेन निश्चितानामन्योन्यविशेषप्रतिपत्त्यर्थमल्पबहुत्ववचनं क्रियते। इमे एभ्योऽल्पा इमे बहव इति। आह—

**निर्देशवचनात्सत्त्वप्रसिद्धेरसद्ग्रहणं ॥ ११ ॥** निर्देशवचनादेव सत्त्वं सिद्धं न ह्यसतो निर्देश इति तस्मादसद्ग्रहणं। अनर्थकं सद्ग्रहणमसद्ग्रहणं।

**न वा क्वास्ति क्व नास्तीति चतुर्दशमार्गणास्थानविशेषणार्थत्वात् ॥ १२ ॥** नैष दोषः, किं कारणं नानेन सम्यग्दर्शनादेः सामान्येन सत्त्वमुच्यते किन्तु गतीन्द्रियकायादिषु चतुर्दशसु मार्गणास्थानेषु क्वास्ति सम्यग्दर्शनादि, क्व नास्तीत्येवं विशेषणार्थं सद्वचनं।

**सर्वभावाधिगमहेतुत्वाच्च ॥ १३ ॥** अविकृतानां सम्यग्दर्शनादीनां जीवादीनां च निर्देशवचने नास्तित्वमधिगतं स्यात्, येत्वनधिकृता जीवपर्याया क्रोधादयो ये वाऽजीवपर्याया वर्णादयो घटादयश्च तेषामस्तित्वाधिगमार्थं पुनर्वचनं।

**अनधिकृतत्वादिति चेन्न सामर्थ्यात्** ॥ १४ ॥ स्यादेतदनधिकृतास्ते ततो न पुनर्युक्तमेषा ग्रहणमिति । तन्न किं कारण सामर्थ्यात् तेषामपि ग्रहण भवति ।

**विधानग्रहणात् संख्यासिद्धिरिति चेन्न भेदगणनार्थत्वात्** ॥ १५ ॥ स्यादेतत् विधानग्रहणादेव सख्यासिद्धिरिति । तन्न किं कारण भेदगणनार्थत्वात् । प्रकारगणन हि तत् । भेदगणनार्थमिदमुच्यते । उपशमसम्यग्दृष्टय इयत । क्षायिकसम्यग्दृष्टय एतावत इति ।

**क्षेत्राधिकरणयोरभेद इति चेन्नोक्तत्वात्** ॥ १६ ॥ स्यादेतद्यदेवाधिकरण तदेव क्षेत्र, अतस्तयोरभेदात्पृथग्ग्रहणमनर्थकमिति । तन्न किं कारण उक्तार्थत्वादुक्तमेतत् सर्वभावाधिगमार्थत्वादिति ।

**क्षेत्रे सति स्पर्शनोपलब्धेरंबुघटवत्पृथग्ग्रहण** ॥ १७ ॥ यथेह सति घटे क्षेत्रेऽम्बुनोवस्थानात्तन्नियमाद्घटस्पर्शन, नह्येतदस्ति घटेंबु अवतिष्ठते, नच घट स्पृशतीति । तथाकाशक्षेत्रे जीवावस्थानां नियमादाकाशे स्पर्शनमिति क्षेत्राभिधानेनैव स्पर्शनस्यार्थगृहीतत्वात्पृथग्गृहणमनर्थक ।

**न वा विषयवाचित्वात्** ॥१८॥ नवैष दोष किं कारण ? विषयवाचित्वात् । विषयवाची क्षेत्रशब्द । यथा राजा जनपदक्षेत्रेऽवतिष्ठते, नच कृत्स्न जनपद स्पृशति । स्पर्शन तु कृत्स्नविषयमिति ।

**त्रैकाल्यगोचरत्वाच्च** ॥ १९ ॥ यथा साम्प्रतिकेनाम्बुना साम्प्रतिक घटक्षेत्रे स्पृष्ट, नातीतानागत । नैवमात्मन साम्प्रतिकक्षेत्रस्पर्शने स्पर्शनाभिप्राय । स्पर्शनस्य त्रिकालगोचरत्वात् ।

**स्थितिकालयोरर्थांतरत्वाभाव इतिचेन्न मुख्यकालास्तित्वसमत्ययार्थं** ॥ २० ॥ स्यादेतत् स्थितिरेव काल काल एव स्थितिरित्यतो नास्त्यनयोरर्थांतरभाव इति । तन्न किं कारण ? मुख्यकालास्तित्वसप्रत्ययार्थं पुन कालग्रहण । द्विविधो हि कालो मुख्यो व्यावहारिकश्चेति । तत्र मुख्यो निश्चयकाल । पर्यायिपर्यायावधिपरिच्छेदो व्यावहारिकस्तयोरुत्तरत्र निर्णयो वक्ष्यते । उक्तच किमुक्त ? सर्वभावाधिगमहेतुत्वादिति ।

**नामादिषु भावग्रहणात्पुनर्भावाग्रहणमिति चेन्नौपशमिकाद्यपेक्षत्वात्** ॥ २१ ॥ स्यादेतन्नामादिषु भावग्रहण कृत तेनैव सिद्धत्वात्पुनर्भावग्रहणमनर्थकमिति तन्न किं कारण ? औपशमिकाद्यपेक्षत्वात् । पूर्वं भावग्रहण द्रव्य न भवतीत्येव पर । इद त्वौपशमिकादिवक्ष्यमाणभावापेक्ष । किं सम्यग्दर्शन मौपशमिक, क्षायिकमित्यादि ।

**विनेयाशयवशो वा तत्त्वाधिगमहेतुविकल्प** ॥ २२ ॥ अथवा सर्वेषामेव परिहार विनेयाशयवशो हि तत्त्वाधिगमहेतुविकल्पो वेदितव्य । केचित्सक्षेपेण प्रतिपाद्या केचिद्विस्तरेण, इतरथा हि प्रमाणग्रहणादेव सिद्धेरितरेषामधिगमोपायाना ग्रहणमनर्थक स्यादिति ।

इतितत्त्वार्थवार्तिके प्रथमेऽध्याये पचममाह्निक समाप्त ॥ ५ ॥

एव सम्यग्दर्शनस्यादावुद्दिष्टस्य लक्षणोत्पत्तिस्वामिविषयन्यासाधिगमोपाया निर्दिष्टास्तत्सबन्धेन च जीवादीना सज्ञापरिणामादि निर्दिष्ट तदनतरमिदानीं सम्यग्ज्ञान विचारार्हमित्याह—

---

## मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञान ॥ ९ ॥

मत्यादय इति क एते शब्दा ?

**मतिशब्दो भावकर्तृकरणसाधनः** ॥ १ ॥ अय मतिशब्दो भावकर्तृकरणेष्वन्यतमसाधनो वेदितव्य । मनेर्भावसाधने क्ति । तदावरणकर्मक्षयोपशमे सतींद्रियानिंद्रियापेक्षमर्थस्य मनन मति । औदासीन्येन तत्त्वकथनाद्बहुलापेक्षया कर्तृसाधन , करणसाधनो वा, मनुतेर्थान्मन्यतेऽनेनेति वा मति भेदाभेदविवक्षोपपत्ते. ।

नहि कश्चित्पदार्थः सत्ता व्यभिचरति, यदि व्यभिचरेद्वाग्विज्ञानगोचरातीतः स्यात् । गुणास्तु रूपादयो ज्ञानादयश्च केषु चित्सति केषुचिन्न सति । क्रिया च परिस्पदात्मिका जीवपुद्गलेष्वस्ति नेतरेष्विति न व्याप्तिमती । सर्वेषा च विचारार्हाणामस्तित्व मूल । तेन हि निश्चितस्य वस्तुन उत्तरा चिंता युज्यते अतस्तस्यादौ वचन क्रियते ।

**सतः परिणामोपलब्धेः सख्योपदेशः** ॥ ३ ॥ सतो हि वस्तुनः संख्यातासंख्याताऽनंतपरिणामोपलब्धेः सत्याताद्यन्यतमपरिणामावधारणार्थं सख्या भेदलक्षणोपदिश्यते ।

**निर्ज्ञातसंख्यस्य निवासविप्रतिपत्तेः क्षेत्राभिधानं** ॥ ४ ॥ निश्चयेन ज्ञातसख्यस्यार्थस्योर्ध्वाधस्तिर्यग्निवासविप्रतिपत्तेरूर्ध्वाद्यन्यतमनिवासनिश्चयार्थं क्षेत्राभिधान ।

**अवस्थाविशेषस्य वैचित्र्यात्त्रिकालविषयोपश्लेषनिश्चयार्थं स्पर्शनं** ॥ ५ ॥ अवस्थाविशेषो विचित्रस्त्र्यस्रचतुरस्रादिस्तस्य त्रिकालविषयमुपश्लेषणं स्पर्शन । कस्य चित्क्षेत्रमेव स्पर्शन कस्यचिद्रज्जुमेव कस्यचिद्रज्जव षडष्टौ वेति । एकसर्वजीवसन्निधौ तन्निश्चयार्थं तदुच्यते,—

**स्थितिमतोऽवधिपरिच्छेदार्थं कालोपादानं** ॥ ६ ॥ स्थितिमतोर्थस्यावधिपरिच्छेत्तव्य इति कालोपादन क्रियते ।

**अंतरशब्दस्यानेकार्थवृत्तेश्छिद्रमध्यविरहेष्वन्यतमग्रहण** ॥ ७ ॥ बहुष्वर्थेषु दृष्ट प्रयोगः क्वचिच्छिद्रे वर्तते 'सातर काष्ठ सछिद्रमिति' । क्वचिदन्यत्वे 'द्रव्याणि द्रव्यातरमारभत' इति क्वचिन्मध्ये हिमवत्सागरांतर इति । क्वचित्सामीप्ये "स्फटिकस्य शुक्लरक्ताद्यतरस्यस्य तद्वर्णतेति शुक्लरक्तसमीपस्थस्येति गम्यते । क्वचिद्विशेषे" ।

"वाजिवारणलोहाना काष्ठपाषाणवाससा । नारीपुरुषतोयानामतर महदतरं" इति ।

महान् विशेष इत्यर्थ । क्वचिद्बहिर्योगे 'ग्रामस्यातरे कूपा' इति क्वचिदुपसव्याने 'अतरे शाटका' इति । क्वचिद्विरहेऽनभिप्रेतश्रोतृजनातरे मन्त्र मन्त्रयते । तद्विरहे मन्त्रयत इत्यर्थ । तत्रेह छिद्रमध्यविरहेष्वन्यतमो वेदितव्य ।

**अनुपहतवीर्यस्य न्यग्भावे पुनरुद्भूतिदर्शनात्तद्वचनं** ॥ ८ ॥ अनुपहतवीर्यस्य द्रव्यस्य निमित्तवशात्कस्य चित्पर्यायस्य न्यग्भावे सति पुनर्निमित्तातरात्तस्यैवाविर्भावदर्शनात्तदतरमित्युच्यते ॥

**परिणामप्रकारनिर्णयार्थं भाववचनं** ॥ ९ ॥ औपशमिकादि परिणामप्रकारो निर्णेतव्य इति भाववचन क्रियते ।

**सख्याताद्यन्यतमनिश्चयेप्यन्योन्यविशेषप्रतिपत्त्यर्थमल्पबहुत्ववचनं** ॥ १० ॥ सख्यातादिष्वन्यतमेन परिणामेन निश्चितानामन्योन्यविशेषप्रतिपत्त्यर्थमल्पबहुत्ववचन क्रियते । इमे एभ्योऽल्पा इमे बहव इति । आह—

**निर्देशवचनात्सत्त्वप्रसिद्धेरसद्ग्रहण** ॥ ११ ॥ निर्देशवचनादेव सत्त्व सिद्ध न ह्यसतो निर्देश इति तस्मादसद्ग्रहण । अनर्थक सद्ग्रहणमसद्ग्रहण ।

**न वा क्वास्ति क्व नास्तीति चतुर्दशमार्गणास्थानविशेषणार्थत्वात्** ॥ १२ ॥ नवैष दोष, किं कारण नानेन सम्यग्दर्शनादि सामान्येन सत्त्वमुच्यते किन्तु गतीन्द्रियकायादिषु चतुर्दशसु मार्गणास्थानेषु क्वास्ति सम्यग्दर्शनादि, क्व नास्तीत्येव विशेषणार्थं सद्वचन ।

**सर्वभावाधिगमहेतुत्वाच्च** ॥ १३ ॥ अधिकृताना सम्यग्दर्शनादीना जीवादीना च निर्देशवचने नास्तित्वमधिगत स्यात्, येत्वनधिकृता जीवपर्याया क्रोधादयो ये वाऽजीवपर्याया वर्णादयो घटादयश्च तेषामस्तित्वाधिगमार्थं पुनर्वचन ।

र्तृत्व, तदनेकक्षणगोचरोच्चारणलब्धजन्मना कर्तृशब्देन कथमुच्यते । कथं वाऽयमेकक्षणे सन्वाचक स्यात् । सतानावस्थानाद्वाच्यवाचकभावसबध इति चेन्न । तस्य प्रतिविहितत्वात् । अथ मतेमतत्–खात्पतिता नो रत्नवृष्टि, अवाच्यमेव हि तत्त्वमिष्यते । अन्यापारेषु हि सर्वधर्मेषु वाग्व्यवहारो नास्त्येवेति, तदपि नोपपद्यते । स्ववचनविरोधात्, तत्त्वप्रतिपत्त्युपायापन्हवप्रसगाच्च । किं च–जानातीति ज्ञानमिति कर्तृसाधनत्व नोपपद्यते । कुत ? विशेषानुपलब्धे । येन हि कर्तृसाधनत्वमवगत । करणादिसाधनत्व, च तेनेद युज्यते वक्तु कर्तृसाधनमिद न करणादिसाधनमिति । नच क्षणिकवादिन प्रत्यर्थवशवर्तिज्ञानविकल्पनायामनवधारितोभयस्वभावस्य तद्विशेषोपलब्धिरस्ति । न हि शुक्लेतरविशेषानभिज्ञस्य शुक्लमिद न नीलादीति विशेषणमुपपद्यते ।

**अस्तित्वेप्यविक्रियस्य तदभावोनभिसबधात् ॥ ११ ॥** आत्मन अस्तित्वेपि ज्ञानस्य करणाद्यभाव , कुत ?, अनभिसबधात् । यस्य मतमात्मनो ज्ञानाख्यो गुणस्तस्मावार्थांतरभूत , 'आत्मेंद्रियमनोर्थसन्निकर्षात् यन्निष्पद्यते तदन्यदिति वचनादिति' तस्य ज्ञान कारण न भवितुमर्हति । कुत ?—

**पृथगात्मलाभाभावात् ॥ १२ ॥** दृष्टो हि लोके, छेत्तुर्देवदत्तादर्थांतरभूतस्य परशोस्तैक्ष्ण्यगौरवकाठिन्यादिविशेषलक्षणोपेतस्य सत करणभाव । नच तथा ज्ञानस्य स्वरूप पृथगुपलभामहे । किं च—

**अपेक्षाभावात् ॥ १३ ॥** दृष्टो हि परशोर्देवदत्ताधिष्ठितोद्यमननिपतनापेक्षस्य करणभाव । न च तथा ज्ञानेन किंचित्कर्तृसाध्य क्रियातर समपेक्ष्यमस्ति । किं च—

**तत्परिणामाभावात् ॥ १४ ॥** छेदनक्रियापरिणतेन हि देवदत्तेन तत्क्रियाया साचिव्ये, नियुज्यमान परशु" करणमित्येतद्युक्त । न च तथाऽऽत्मा ज्ञानक्रियापरिणत ।

* **अर्थांतरत्वे तस्याज्ञत्वात् ॥ १५ ॥** इह यज्ज्ञानादन्यद्भवति तदज्ञ, दृष्ट । यथा घटादिद्रव्य । तथा च ज्ञानादन्य आत्मा, इत्यज्ञत्वप्रसग । ज्ञानयोगाज्ज्ञत्व, दृष्टत्वात् दण्डिवदिति चेन्न । तत्स्वभावाभावे सबधनियमानुपपत्तिरिंद्रियमनोवत् । ज्ञस्वभावाभावे सत्यात्मन्येव योगो, न मनसेंद्रियेण वेति नियमाभाव । युतसिद्धयोश्च दण्डदण्डिनो सबध , दण्डस्य च प्रसिद्धस्य सतो विशेषणमात्रत्वेनोपादानात्, आत्मनश्च तदुत्पत्तौ हिताहितविचारणाविक्रियोपपत्तेरसाम्य । उभयोश्चाज्ञयो सबधेप्यज्ञत्वप्रसगो दृष्टत्वात्, जात्यधयो सबधे दर्शनशक्त्यभावत् । किं च—इद्रियमन प्रसगाद्यदि ज्ञायतेनेन ज्ञानमिति करणमभ्युपगम्यते, तेनेंद्रियाणां मनसश्च ज्ञानत्वप्रसग , विशेषाभावात्तैरपि ज्ञायत इति । किं च–उभयोर्निष्क्रियत्वात्, सर्वगतस्य तावदात्मन क्रिया नास्ति । नापि ज्ञानस्य क्रियावत्व । द्रव्यस्यैव लक्षणमिति वचनात् । तत क्रियाविरहितस्य कथ कर्तृत्व करणत्व वा स्यात् । यस्यापि मतमन्यत, गुणव्यतिरेकाच्छुद्ध पुरुषो नित्यश्च निर्विकारत्वादिति । तस्य ज्ञान करण न भवितुमर्हति । कुत ? अनभिसबधात् । या बुद्धिरिंद्रियमनोहकारमहद्भ्युपनीता, लोचनसकल्पाभिमानाध्यवसायरूपा, सा प्रकृति । पुरुष पुनरविक्रिय , शुद्धश्च । तस्य सा करण कथ स्यात् ? । क्रियापरिणतस्य हि देवदत्तस्य लोके करणसप्रयोगो दृष्ट । इत्येवमादि योज्य । नापि कर्तृसाधनत्व युज्यते । लोके हि करणत्वेन प्रसिद्धस्यासे , तत्प्रशसापरायामभिधानप्रवृत्तौ समीक्षिताया, तैक्ष्ण्यगौरवकाठिन्याहितविशेषायामेव, छिनत्तीति कर्तृधर्माध्यारोप क्रियते । न च तथा ज्ञान करणत्वेन प्रसिद्धमस्ति, पूर्वदोषोपपत्ते , अतोस्य कर्तृत्वमयुक्त । नच भावसाधनत्वमुपपत्तिमत्, अविक्रियस्य तत्परिणामाभावात् । विक्रियास्वभावस्य हि वस्तुनस्तडुलादे विक्लेदादिदर्शनात्, पचन पाक इत्येवमादि भावनिर्देशो युक्त , नाकाशस्येति । किं च–फलाभावात् । ज्ञान हि प्रमाणमिष्ट, प्रमाणेन च फलवता भवितव्य, नचाववोधनमतरेण फलमन्यदुपलभ्यते । तस्मादन्येन ज्ञानेन भवितव्य, यस्मिन् सति सा ज्ञातिरवबोध फलमात्मनो भवति, तच्च नास्त्यतो न भावसाधनत्व । अधिगमश्चात्र न भावातरमिति, फले प्रामाण्योपचार, इति चाऽयुक्त मुख्याभावात् । आकारभेदात् फलप्रमाणपरिकल्पना वा युक्ता । आकाराकारवतोर्भेदाभेदयोरनेकदोषोपपत्ते । निर्विकल्पकत्वाच्च तत्तत्स्याकारकल्पनाभाव । बाह्यवस्त्वाकारापोहेऽतरगाकारानुपपत्तिश्चेति । जैनेंद्राणा तु परमर्षिसर्वज्ञप्रणीतनयभगगहनप्रपचविपश्चिता स्याद्वादप्रकाशोन्मीलितज्ञानचक्षुषामेकस्मिन्नप्यर्थेऽनेकपर्यायसमवादुपपद्यते इति विमृष्टार्थमेव तत् ।

**श्रुतशब्दः कर्मसाधनश्च ॥ २ ॥** किं च पूर्वोक्तविषयसाधनश्चेति वर्तते । श्रुतावरणक्षयोपशमाद्यतरंगबहिरंगहेतुसन्निधाने सति श्रूयतेस्मेति श्रुतं । कर्तरि श्रुतपरिणत आत्मैव शृणोतीति श्रुतं । भेदविवक्षायां श्रूयतेऽनेनेति श्रुतं श्रवणमात्रं वा ।

**अवपूर्वस्य दधातेः कर्मादिसाधनः किः ॥ ३ ॥** कर्मादिषु साधनेष्वन्यतमे किरयं वेदितव्यः अवधिज्ञानावरणक्षयोपशमाद्युभयहेतुसन्निधाने सत्यवधीयतेऽवाग्दधात्यवाग्धानमात्रं वावधिः । अवधिशब्दोऽधः पर्यायवचनः, यथाऽधः क्षेपणमवक्षेपणं, इत्यधोगतभूयोद्रव्यविषयोऽह्यवधिः । अथ वावधिर्मर्यादा अवधिना प्रतिबद्धं ज्ञानमवधिज्ञानं । तथाहि-वक्ष्यते रूपिष्ववधेरिति । सर्वेषां प्रसंग इतिचेन्न । रूढिवशाद्‌व्यक्तस्योपपत्तेर्गोशब्दप्रवृत्तिवत् ।

**मनः प्रतीत्य प्रतिसंधाय वा ज्ञानं मनःपर्ययः ॥ ४ ॥** तदावरणकर्मक्षयोपशमादिद्वितयनिमित्तवशात्परकीयमनोगतार्थज्ञानं मनःपर्ययः । भावादिसाधनत्वं पूर्ववद्वेदितव्यं । कथं मनः प्रतीत्य प्रतिसंधाय वा ज्ञानमित्यत्रोच्यते-परकीयमनसि गतोर्थो मन इत्युच्यते तात्स्थ्यात्ताच्छब्द्यमिति । स च कः मनोगतोर्थो भावघटादिस्तमर्थं समंतादेत्यावलंब्य वा प्रसादादात्मनो ज्ञानं मनःपर्ययः ।

**मतिज्ञानप्रसंग इति चेन्नापेक्षामात्रत्वात् ॥ ५ ॥** स्यादेतन्मनःपर्ययज्ञानं मतिज्ञानं प्राप्नोति कुतो मनोनिमित्तत्वादेव ह्यार्षी प्रक्रिया मनसा मनः सपरिच्छिद्येति । तन्न किं कारणमपेक्षामात्रत्वात् स्वपरमनोपेक्षामात्रं तत्र क्रियते यथाऽभ्रे चंद्रमसं पश्येति । न तत्कार्यं मतिज्ञानवत् । आत्मशुद्धिनिमित्तत्वादेव तस्येति ।

**बाह्याभ्यंतरक्रियाविशेषात् यदर्थं केवते तत्केवलं ॥ ६ ॥** तपःक्रियाविशेषात् बाह्यमानसकार्याश्रयान् बाह्यानभ्यतरांश्च यदर्थमर्थिनः केवते सेवते तत्केवलं ।

**असहायार्थो वा केवलशब्दः ॥ ७ ॥** यथा केवलमन्नं भुक्ते देवदत्त इति । असहायं व्यंजनरहितं भुंक्ते इति गम्यते । तथा क्षायोपशमिकज्ञानासपृक्तं असहायं केवलमित्यव्युत्पन्नोयं शब्दो द्रष्टव्यः ।

**करणादिसाधनो ज्ञानशब्दो व्याख्यातः ॥ ८ ॥** अयं ज्ञानशब्दः करणादिसाधन इति व्याख्यातः पुरस्तात् ।

**इतरेषां तदभावः ॥ ९ ॥** इतरेषामेकांतवादिनां तस्य ज्ञानस्य करणादिसाधनत्वं नोपपद्यते । तत्कथमिति चेदुच्यते—

**आत्माभावे ज्ञानस्य करणादित्वानुपपत्तिः कर्तुरभावात् ॥ १० ॥** येषामात्मा न विद्यते तेषां ज्ञानस्य करणादित्वं नोपपद्यते, कुतः ? कर्तुरभावात् । सति हि देवदत्ते छेत्तरि परशोः करणत्वं दृष्टं । तथा चात्मन्यसति नास्य करणत्वं । तत एव भावसाधनत्वमपि नोपपद्यते, ज्ञातिर्ज्ञानमिति । न ह्यसति भाववति भाव इति । स्यादेतज्जानातीति ज्ञानमिति कर्तृसाधनत्वं, इति तन्न निरीहकत्वात् । न हि निरीहको भावः कर्तृत्वमास्कंदति निरीहकाश्च सर्वे भावाः । किंच—पूर्वोत्तरापेक्षस्य लोके कर्तृत्वं दृष्टं । नच तस्य ज्ञानस्य पूर्वोत्तरापेक्षास्ति क्षणिकत्वादतो निरपेक्षस्य कर्तृत्वाभावः । किंच—करणव्यापारापेक्षस्य लोके कर्तृत्वं दृष्टं । नच ज्ञानस्यान्यत्करणमस्ति । अतोस्य कर्तृत्वमपि नोपपद्यते । स्वशक्तिरेव करणमितिचेन्न । शक्तिशक्तिमद्भेदाभ्युपगमे आत्मास्तित्वसिद्धेः, अभेदे च स दोषस्तदवस्थ एवेति । संतानापेक्षया कर्तृकरणभेदोपचार

र्तृत्व, तदनेकक्षणगोचरोच्चारणलब्धजन्मना कर्तृशब्देन कथमुच्यते । कथं वाऽयमेकक्षणे सन्वाचकः स्यात् । सतानावस्थानाद्वाच्यवाचकभावसबंध इति चेन्न । तस्य प्रतिविहितत्वात् । अथ मतमेतत्—खात्पतिता नौ रत्नवृष्टि, अत्राप्यमेव हि तत्त्वमिष्यते । अव्यापारेषु हि सर्वधर्मेषु वाग्व्यवहारो नास्त्येवेति, तदपि नोपपद्यते । स्ववचनविरोधात्, तत्त्वप्रतिपत्त्युपायापन्हवप्रसंगाच्च । किं च—जानातीति ज्ञानमिति कर्तृसाधनत्वं नोपपद्यते । कुतः ? विशेषानुपलब्धेः । येन हि कर्तृसाधनत्वमवगतं । करणादिसाधनत्वं, च तेनेदं युज्यते वक्तुं कर्तृसाधनमिदं न करणादिसाधनमिति । नच क्षणिकवादिनः प्रत्यर्थवशवर्तिज्ञानविकल्पनायामनवधारितोभयस्वभावस्य तद्विशेषोपलब्धिरस्ति । न हि शुक्लेतरविशेषानभिज्ञस्य शुक्लमिदं न नीलादीति विशेषणमुपपद्यते ।

**अस्तित्वेप्यविक्रियस्य तदभावोनभिसंबंधात् ॥ ११ ॥** आत्मनः अस्तित्वेपि ज्ञानस्य करणाद्यभाव , कुत ?, अनभिसंबंधात् । यस्य मतमात्मनो ज्ञानाख्यो गुणस्तस्याचार्थांतरभूत , 'आत्मेंद्रियमनोर्थसन्निकर्षात् यन्निष्पद्यते तदन्यदिति वचनादिति' तस्य ज्ञानं कारणं न भवितुमर्हति । कुतः ?—

**पृथगात्मलाभाभावात् ॥ १२ ॥** दृष्टो हि लोके, छेत्तुर्देवदत्तादर्थांतरभूतस्य परशोस्तैक्ष्ण्यगौरवकाठिन्यादिविशेषलक्षणोपेतस्य सतः करणभावः । नच तथा ज्ञानस्य स्वरूपं पृथगुपलभामहे । किं च—

**अपेक्षाभावात् ॥ १३ ॥** दृष्टो हि परशोर्देवदत्ताधिष्ठितोद्यमननिपतनापेक्षस्य करणभावः । न च तथा ज्ञानेन किंचित्कर्तृसाध्यं क्रियांतरं समपेक्ष्यमस्ति । किं च—

**तत्परिणामाभावात् ॥ १४ ॥** छेदनक्रियापरिणतेन हि देवदत्तेन तत्क्रियायाः साचिव्ये, नियुज्यमानः परशुः करणमित्येतद्युक्तं । न च तथाऽऽत्मा ज्ञानक्रियापरिणतः ।

**अर्थांतरत्वे तस्याज्ञत्वात् ॥ १५ ॥** इह यज्ज्ञानादन्यद्भवति तदज्ञं, दृष्टं । यथा घटादिद्रव्यं । तथा च ज्ञानादन्य आत्मा, इत्यज्ञत्वप्रसंगः । ज्ञानयोगाज्ज्ञत्वं, दृष्टत्वात् दण्डिवदिति चेन्न । तत्स्वभावाभावे संबंधनियमानुपपत्तिरिंद्रियमनोवत् । ज्ञस्वभावाभावे सत्यात्मन्येव योगो, न मनसेंद्रियेण वेति नियमाभावः । युतसिद्धयोश्च दण्डदण्डिनोः संबंध , दण्डस्य च प्रसिद्धस्य सतो विशेषणमात्रत्वेनोपादानात्, आत्मनश्च तदुत्पत्तौ हिताहितविचारणाविक्रियोपपत्तेरसाम्य । उभयोश्चाज्ञयोः संबंधेप्यज्ञत्वप्रसंगो दृष्टत्वात्, जात्यंधयोः संबंधे दर्शनशक्त्यभाववत् । किं च—इंद्रियमनःप्रसंगाद्यदि ज्ञायतेनेन ज्ञानमिति करणमभ्युपगम्यते, तेनेंद्रियाणां मनसश्च ज्ञानत्वप्रसंगः, विशेषाभावात्तैरपि ज्ञायत इति । किं च—उभयोर्निष्क्रियत्वात्, सर्वगतस्य तावदात्मनः क्रिया नास्ति । नापि ज्ञानस्य क्रियावत्त्वं । द्रव्यस्यैव लक्षणमिति वचनात् । ततः क्रियाविरहितस्य कथं कर्तृत्वं करणत्वं वा स्यात् । यस्यापि मतमन्यत्, गुणव्यतिरेकाच्छुद्धः पुरुषो नित्यश्च निर्विकारत्वादिति । तस्य ज्ञानं करणं न भवितुमर्हति । कुतः ? अनभिसंबंधात् । या बुद्धिरिंद्रियमनोहंकारमहद्भ्युपनीता, लोचनसंकल्पाभिमानाध्यवसायरूपा, सा प्रकृतिः । पुरुषः पुनरविक्रियः, शुद्धश्च । तस्य सा करणं कथं स्यात् ? । क्रियापरिणतस्य हि देवदत्तस्य लोके करणसंप्रयोगो दृष्टः । इत्येवमादि योज्यं । नापि कर्तृसाधनत्वं युज्यते । लोके हि करणत्वेन प्रसिद्धस्यासेः, तत्प्रशंसापरायामभिधानप्रवृत्तौ समीक्षिताया, तैक्ष्ण्यगौरवकाठिन्याहितविशेषायमेव, छिनत्तीति कर्तृधर्माध्यारोपः क्रियते । न च तथा ज्ञानं करणत्वेन प्रसिद्धमस्ति, पूर्वदोषोपपत्तेः, अतोस्य कर्तृत्वमयुक्तं । नच भावसाधनत्वमुपपत्तिमत्, अविक्रियस्य तत्परिणामाभावात् । विक्रियास्वभावस्य हि वस्तुनस्तंडुलादेर्विक्लेदादिदर्शनात्, पचनं पाक इत्येवमादि भावनिर्देशो युक्तः, नाकाशस्येति । किं च—फलाभावात् । ज्ञानं हि प्रमाणमिष्टं, प्रमाणेन च फलवता भवितव्यं, नचाववोधनमंतरेण फलमन्यदुपलभ्यते । तस्मादन्येन ज्ञानेन भवितव्यं, यस्मिन् सति सा ज्ञातिरवबोधः फलमात्मनो भवति, तच्च नास्त्यतो न भावसाधनत्वं । अधिगमश्चात्र न भावांतरमिति, फले प्रामाण्योपचार, इति चाऽयुक्तं मुख्याभावात् । आकारभेदात् फलप्रमाणपरिकल्पना वा युक्ता । आकाराकारवतोर्भेदाभेदयोरनेकदोषोपपत्तेः । निर्विकल्पकत्वाच्च तत्त्वस्याकारकल्पनाभावः । बाह्यवस्त्वाकारापोहेऽतरंगाकारानुपपत्तिश्चेति । जैनेंद्राणां तु परमर्षिसर्वज्ञप्रणीतनयभंगगहनप्रपंचविपश्चिता स्याद्वादप्रकाशोन्मीलितज्ञानचक्षुषामेकस्मिन्नप्यर्थेऽनेकपर्यायसमयादुपपद्यते इति विमृष्टार्थमेव तत् ।

**उभयोरिन्द्रियानिन्द्रियनिमित्तत्वादिति चेन्न असिद्धत्वात् ॥ ३० ॥** स्यादेतदुभयोरिन्द्रियानिन्द्रियनिमित्तत्वादेकत्व । मतिज्ञान तावदिंद्रियानिंद्रियनिमित्तमिति प्रतीत । श्रुतमपि वक्तृश्रोतृजिह्वाश्रवणनिमित्तत्वाच तदुभयनिमित्तमिति । तन्न किं कारणमासिद्धत्वात् । जिह्वा हि शब्दोच्चारक्रियाया निमित्त, न ज्ञानस्य । श्रवणमपि स्वविषयमतिज्ञाननिमित्त, न श्रुतस्येत्युभयनिमित्तत्वमसिद्ध । सिद्धो हेतु साध्यमर्थं साधयेन्नासिद्ध । किं निमित्त तर्हि श्रुत ?

**अनिन्द्रियनिमित्तोऽर्थावगमः श्रुतं ॥ ३१ ॥** इंद्रियानिंद्रियबलाधानात्पूर्वमुपलब्धेर्थे नोइंद्रियप्राधान्याद्यदुत्पद्यते ज्ञान तत्, श्रुत ।

**ईहादिप्रसंग इति चेन्नावग्रहीतमात्रविषयत्वात् ॥ ३२ ॥** स्यादेतदीहादीनामपि श्रुतव्यपदेशः प्राप्त, तेप्यनिंद्रियनिमित्ता इति । तन्न किं कारण अवग्रहीतमात्रविषयत्वात्, इंद्रियेणावग्रहीतोऽर्थस्तन्मात्रविषया ईहादय । श्रुत पुनर्न तद्विषय । तर्हि ? श्रुतमपूर्वविषय, एकं घटमिंद्रियानिंद्रियाभ्यां निश्चित्यायं घट इति तज्जातीयमन्यमनेकदेशकालरूपादिविलक्षणमपूर्वमधिगच्छति यत्तच्छ्रुत । नानाप्रकारार्थप्ररूपणपरं यत्तद्वा श्रुत । अथवा इंद्रियानिंद्रियाभ्यामेकं जीवमजीवं चोपलभ्य तत्र सत्संख्याक्षेत्रस्पर्शनकालांतरभावाल्पबहुत्वादिभिः प्रकारैरर्थप्ररूपणे कर्तव्ये यत्समर्थं तच्छ्रुत ।

**श्रुत्वावधारणाच्छ्रुतमिति चेन्न मतिज्ञानप्रसंगात् ॥ ३३ ॥** श्रुत्वा यदवधारयति तच्छ्रुतमितिकेचिन्मन्यते । तन्न युक्त । कुत ? मतिज्ञानप्रसंगात् । तदपि शब्द श्रुत्वा गोशब्दोयमिति प्रतिपद्यतेऽसाधारणेन नाम लक्षणेन भवितव्य । श्रुत पुनस्तस्मिन्निंद्रियानिंद्रियगृहीतागृहीतपर्यायसमूहात्मनि शब्दे तदभिधेये च श्रोत्रेंद्रियव्यापारमतरेण जीवादौ नयादिभिरधिगमोपायैर्यथात्वेनाऽवबोध ।

प्रमाणनयैरधिगम इत्युक्त । प्रमाण केषाञ्चिज्ज्ञानमभिमत केषाञ्चित्सन्निकर्ष इत्यतोऽधिकृतानामेव मत्यादीना प्रमाणत्वख्यापनार्थमाह—

## तत्प्रमाणे ॥ १० ॥

**प्रमाणशब्दस्य कोर्थः ? भावकर्तृकरणत्वोपपत्ते प्रमाणशब्दस्येच्छातोर्थाध्यवसाय ॥१॥** अय प्रमाणशब्द, भावे कर्तरि करणे च वर्तते । तत्र भावे, तावत्प्रमेयार्थं प्रति निवृत्तव्यापारस्य तत्त्वकथनात् प्रमाणमिति । कर्तरि प्रमेयार्थं प्रति प्रमातृत्वशक्तिपरिणतस्याश्रितत्वात् तत् प्रमिणोति प्रमेयमिति प्रमाण । करणे प्रमातृप्रमेययो प्रमाणप्रमेययोश्च स्यादन्यत्वात् प्रमिणोत्यनेनेति प्रमाण ।

**अनवस्थेति चेन्न दृष्टत्वात्प्रदीपवत् ॥ २ ॥** स्यान्मतमिदमिह संप्रधार्य । प्रमाणसिद्धिः परतो वा स्यात्स्वत एव वेति ? । यदि यथा प्रमेयसिद्धि प्रमाणाधीना एव प्रमाणसिद्धिरपि प्रमाणातराधीनेति, तस्याप्यन्यत् तस्याप्यन्यदित्यनवस्था । अथ स्वत एव सिद्धि । एवमपि यथा प्रमाणस्य स्वत एव सिद्धिस्तथा प्रमेयस्यापि प्रमेयात्मन एव सिद्धिरिति, प्रमाणव्यवस्थाकल्पना न घटते । इच्छामात्रविशेषहेतुवचन चेति । तन्न किं कारण दृष्टत्वात्प्रदीपवत् । दृष्टो हि प्रदीपो घटादीना प्रकाशक स्वस्य च । तथा प्रमाणमपि इति । अथवायमपरोर्थ यदि भावकर्तृकरणानामन्यतमसाधनः प्रमाणशब्दः, अनवस्था प्राप्नोति नह्येकस्मिन्नर्थात्मनि निरुद्धशक्त्यवस्थानमिति । तन्न किं कारण ? दृष्टत्वात्, प्रदीपवत् । यथैकस्य प्रदीपस्य, प्रदीपन, प्रदीपयति, प्रदीप्यतेनेनेति वा, भावादिशक्त्यविरोध । तथा प्रमाणस्यापि, इति ।

**इतरथा हि प्रमाणव्यपदेशाभाव ॥ ३ ॥** यदि प्रमाण स्वस्याप्रकाशक स्यात्, परमेयत्वात्, अस्य प्रमाणव्यपदेशो न स्यात् ।

**विषयज्ञानतद्विज्ञानयोरविशेषः ॥ ४ ॥** विषयाकारपरिच्छेदात्मनि ज्ञाने, यदि स्वाकारपरिच्छेदो न स्यात्, तद्विषये विज्ञाने विषयाकाररूपतैवेति तयोरविशेष स्यात् ।

**मत्यादीनां ज्ञानशब्देन प्रत्येकमभिसंबंधो भुजिवत् ॥ १६ ॥** यथा देवदत्तजिनदत्तगुरुदत्ता भोज्यतामिति, देवदत्तादीना, भुजिना प्रत्येकमभिसबधो भवति। एवमिहापि प्रत्येकमभिसबध., मतिज्ञान श्रुतज्ञानमवधिज्ञान मन पर्ययज्ञान केवलज्ञानमिति । सत्यपि तत्सामानाधिकरण्ये उपात्तलिंगसख्यत्वात्तल्लिंगसख्योपादान नास्तीत्युक्त पुरस्तात् ।

**श्वंतरत्वादल्पाच्तरत्वादल्पविपयत्वाच्च मतिग्रहणमादौ ॥ १७ ॥** मतिरित्येतत् पदं श्वतमल्पाक्षर च, अवध्यादिभ्यो विषयश्चास्याल्प , चक्षुरादीना प्रतिनियतविषयत्वात्। तस्मादस्यादौ ग्रहण क्रियते।

**तदनंतर श्रुतं ॥ १८ ॥** तत्पूर्व हि श्रुतमिति वक्ष्यते । ततस्तदनतर श्रुत क्रियते । इतश्च—

**विषयनिबंधनतुल्यत्वाच्च ॥ १९ ॥** 'मतिश्रुतयोर्निबंधो द्रव्येष्वसर्वपर्यायेष्विति' वक्ष्यते । अतस्तुल्यत्वाच्च तदनतर श्रुत ।

**तत्सहायत्वाच्च ॥ २० ॥** यथा नारदपर्वतयो' सहायत्वाद्यत्र नारदस्तत्र पर्वत , यत्र पर्वतस्तत्र नारद. परस्परापरित्यागात्। तथा मतिश्रुतयो परस्परापरित्याग । यत्र मतिस्तत्र श्रुत यत्र श्रुत तत्र मतिरिति।

**प्रत्यक्षत्रयस्यादाववधिवचन विशुद्ध्यभावात् ॥ २१ ॥** सत्यपि मतिश्रुताभ्या प्रत्यक्षत्वाद्विशुद्धत्वेऽवधेरोपदिष्ट प्रत्यक्षज्ञानमपेक्ष्यावधिर्न विशुद्धस्ततोऽस्य प्रागुपन्यास ।

**ततो विशुद्धतरत्वान्मनःपर्ययग्रहणं ॥ २२ ॥** ततोऽवधेर्मन पर्ययज्ञान विशुद्धतर। किं कृतोऽयं विशुद्धिप्रकर्ष ? सयमगुणसन्निधानकृत । अतोऽस्य तदनतर ग्रहण ।

**अंते केवलग्रहणं ततः पर ज्ञानप्रकर्षाभावात् ॥ २३ ॥** सर्वेषा ज्ञानाना परिच्छेदने केवलसामर्थ्यात्, अस्य चान्येन ज्ञानेनाऽपरिच्छेद्यत्वान्नातोऽन्यत्प्रकृष्ट ज्ञानमस्तीति, तत पर ज्ञानप्रकर्षाभाव ।

**तेनैव सह निर्वाणाच्च ॥ २४ ॥** यतश्च केवलेनैव सह निर्वाण न क्षायोपशमज्ञानै सह, अतोंते केवलग्रहण । कश्चिदाह—

**मतिश्रुतयोरेकत्व साहचर्यादेकत्रावस्थानाच्चाऽविशेषात् ॥ २५ ॥** मतिश्रुतयोरेकत्व प्राप्नोति कुत साहचर्यादेकत्रावस्थानाच्चाऽविशेषात् ।

**नातस्तत्सिद्धे· ॥ २६ ॥** नाविशेष । कुत , अतस्तत्सिद्धि । यत एव मतिश्रुतयो साहचर्यमेकत्रावस्थान चोच्यते । अत एव विशेष सिद्ध । प्रतिनियतविशेषसिद्धयोर्हि साहचर्यमेकत्रावस्थान च युज्यते। नान्यथेति ।

**तत्पूर्वकत्वाच्च ॥ २७ ॥** 'मतिपूर्वं श्रुतमिति' वक्ष्यते। ततश्चानयोर्विशेष । यत्पूर्व यच्च पश्चात्तयो कथमविशेष ? ।

**तत एवाविशेषः, कारणसदृशत्वाद्युगपद्वृत्तेश्चेतिचेन्नात एव नानात्वात् ॥ २८ ॥** स्यादेतद्यतो मतिपूर्वकत्वमत एवाविशेष । कुत , कारणसदृशत्वात् कार्यस्य। कथ, ततुपटवत् । यथा शुक्लादितंतुकार्य पटद्रव्य, शुक्लादिगुणमेव । तथा मति कार्यत्वाच्छ्रुतस्यापि मत्यात्मकत्व । युगपद्वृत्तेश्च । यथाग्नावौष्ण्यप्रकाशनयोर्युगपद्वृत्तेरन्यात्मकत्व । तथा सम्यग्दर्शनाविर्भावादनतर युगपन्मतिश्रुतयोर्ज्ञानव्यपदेश इति । तन्न किं कारण ? अत एव नानात्वात् । यत एव कारणसदृशत्व युगपद्वृत्तिश्च चोद्यते। अत एव नानात्व सिद्ध । द्वयो , हि सादृश्य युगपद्वृत्तिश्चेति ।

**विषयाविशेषादिति चेन्न ग्रहणभेदात् ॥ २९ ॥** स्यादेतद्विषयाविशेषात्, मतिश्रुतयोर्निबंधो द्रव्येष्वसर्वपर्यायेष्विति । तन्न किं कारण ग्रहणभेदात् । अन्यथा हि मत्या गृह्यते अन्यथा श्रुतेन। यो हि मन्यते विषयाभेदादविशेष इति । तस्यैकघटविषयदर्शनस्पर्शनाविशेष स्यात् ।

१. भिन्न्यादिसर्वं , तत्त्वादिसविपाठ ।

**उभयोरिन्द्रियानिन्द्रियनिमित्तत्वादिति चेन्न असिद्धत्वात् ॥ ३० ॥** स्यादेतदुभयोरिन्द्रियानिन्द्रियनिमित्तत्वादेकत्वं। मतिज्ञानं तावदिन्द्रियानिन्द्रियनिमित्तमिति प्रतीतं। श्रुतमपि वक्तृश्रोतृजिह्वाश्रवणनिमित्तत्वाच्च तदुभयनिमित्तमिति। तन्न किं कारणमसिद्धत्वात्। जिह्वा हि शब्दोच्चारक्रियाया निमित्तं, न ज्ञानस्य। श्रवणमपि स्वविषयमतिज्ञाननिमित्तं, न श्रुतस्येत्युभयनिमित्तत्वमसिद्धं। सिद्धो हेतुः साध्यमर्थं साधयेन्नासिद्धः। किं निमित्तं तर्हि श्रुतं ?

**अनिन्द्रियनिमित्तोऽर्थावगमः श्रुतं ॥ ३१ ॥** इन्द्रियानिन्द्रियबलाधानात्पूर्वमुपलब्धेऽर्थे नोइन्द्रियप्राधान्याद्यदुत्पद्यते ज्ञानं तत्, श्रुतं।

**ईहादिप्रसंग इति चेन्नावगृहीतमात्रविषयत्वात् ॥ ३२ ॥** स्यादेतदीहादीनामपि श्रुतव्यपदेशः प्राप्तः, तेष्वनिन्द्रियनिमित्ता इति। तन्न किं कारणं अवगृहीतमात्रविषयत्वात्, इन्द्रियेणावगृहीतोऽर्थस्तन्मात्रविषया ईहादयः। श्रुतं पुनर्न तद्विषयं। तर्हि ? श्रुतमपूर्वविषयं, एकं घटमिन्द्रियानिन्द्रियाभ्यां निश्चित्यायं घट इति तज्जातीयमन्यमनेकदेशकालरूपादिविलक्षणमपूर्वमधिगच्छति यत्तच्छ्रुतं। नानाप्रकारार्थप्ररूपणपरत्वाद्वा श्रुतं। अथवा इन्द्रियानिन्द्रियाभ्यामेकं जीवमजीवं चोपलभ्य तत्र सत्संख्याक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वादिभिः प्रकारैरर्थप्ररूपणे कर्तव्ये यत्समर्थं तच्छ्रुतं।

**श्रुत्वावधारणाच्छ्रुतमिति चेन्न मतिज्ञानप्रसंगात् ॥ ३३ ॥** श्रुत्वा यदवधारयति तच्छ्रुतमिति केचिन्मन्यते। तन्न युक्तं। कुतः ? मतिज्ञानप्रसंगात्। तदपि शब्दं श्रुत्वा गोशब्दोऽयमिति प्रतिपद्यतेऽसाधारणेन नाम लक्षणेन भवितव्यं। श्रुतं पुनस्तस्मिन्निन्द्रियानिन्द्रियगृहीतागृहीतपर्यायसमूहात्मनि शब्दे तदभिधेये च श्रोत्रेन्द्रियव्यापारमन्तरेण जीवादौ नयादिभिरधिगमोपायैर्यथात्वेनाऽवबोधः।

प्रमाणनयैरधिगम इत्युक्तं। प्रमाणं केषाञ्चिज्ज्ञानमभिमतं केषाञ्चित्सन्निकर्षः इत्यतोऽधिकृतानामेव मत्यादीनां प्रमाणत्वख्यापनार्थमाह—

## तत्प्रमाणे ॥ १० ॥

**प्रमाणशब्दस्य कोऽर्थः ? भावकर्तृकरणत्वोपपत्तेः प्रमाणशब्दस्येच्छातोऽर्थाध्यवसायः ॥ १ ॥** अयं प्रमाणशब्दः, भावे कर्तरि करणे च वर्तते। तत्र भावे, तावत्प्रमेयार्थं प्रति निवृत्तव्यापारस्य तत्त्वकथनात् प्रमाणमिति। कर्तरि प्रमेयार्थं प्रति प्रमातृत्वशक्तिपरिणतस्याश्रितत्वात् तत् प्रमिणोति प्रमेयमिति प्रमाणं। करणे प्रमातृप्रमेययोः प्रमाणप्रमेययोश्च स्यादन्यत्वात् प्रमिणोत्यनेनेति प्रमाणं।

**अनवस्थेति चेन्न दृष्टत्वात्प्रदीपवत् ॥ २ ॥** स्यान्मतमिदमिह सम्प्रधार्यं। प्रमाणसिद्धिः परतो वा स्यात्स्वत एव वेति ? । यदि यथा प्रमेयसिद्धिः प्रमाणाधीना एवं प्रमाणसिद्धिरपि प्रमाणान्तराधीनेति, तस्याप्यन्यत् तस्याप्यन्यदित्यनवस्था। अथ स्वत एव सिद्धिः। एवमपि यथा प्रमाणस्य स्वत एव सिद्धिस्तथा प्रमेयस्यापि प्रमेयात्मन एव सिद्धिरिति, प्रमाणव्यवस्थाकल्पना न घटते। इच्छामात्रविशेषहेतुत्वं चान्न चेति। तन्न किं कारणं दृष्टत्वात्प्रदीपवत्। दृष्टो हि प्रदीपो, घटादीनां प्रकाशकः स्वस्य च। तथा प्रमाणमपि इति। अथवायमपरोऽर्थः यदि भावकर्तृकरणानामन्यतमसाधनः प्रमाणशब्दः, अनवस्था प्राप्नोति नह्येकस्मिन्नर्थात्मनि निरुद्धशक्त्यवस्थानमिति। तन्न किं कारणं ? दृष्टत्वात्, प्रदीपवत्। यथैकस्य प्रदीपस्य, प्रदीपनं, प्रदीपयति, प्रदीप्यतेऽनेनेति वा, भावादिशक्त्यविरोधः। तथा प्रमाणस्यापि, इति।

**इतरथा हि प्रमाणव्यपदेशाभावः ॥ ३ ॥** यदि प्रमाणं स्वस्याप्रकाशकं स्यात्, परसंवेद्यत्वात्, अस्य प्रमाणव्यपदेशो न स्यात्।

**विषयज्ञानतद्विज्ञानयोरविशेषः ॥ ४ ॥** विषयाकारपरिच्छेदात्मनि ज्ञाने, यदि स्वाकारपरिच्छेदो न स्यात्, तद्विषये विज्ञाने विषयाकाररूपतैवेति तयोरविशेषः स्यात्।

**स्मृत्यभावप्रसंगश्च** ॥ ५ ॥ न ह्यनुपलब्धपूर्वेऽर्थे स एवायमिति स्मृतिर्भवति। यदि च विज्ञान स्वात्मानं न निजानीयादुत्तरकालमनधिगतस्वात्मविज्ञान कथ ब्रूयात्? सोऽहमिति। तत स्मृतेरभाव स्यात्।

**फलाभाव इति चेन्नाऽर्थावबोधे प्रीतिदर्शनात्** ॥ ६ ॥ स्यादेतद्भावसाधने प्रमाणे प्रमैव प्रमाणमिति, न फलमन्यदुपलभ्यत इति फलाभाव इति। तन्न किं कारण ?, अर्थावबोधे प्रीतिदर्शनात्। ज्ञस्वभावस्यात्मन कर्ममलीमसस्य करणालम्बनादर्थनिश्चये प्रीतिरुपजायते सा फलमित्युच्यते।

**उपेक्षाऽज्ञाननाशो वा** ॥ ७ ॥ रागद्वेषयोरप्रणिधानमुपेक्षा अज्ञाननाशो वा फलमित्युच्यते।

**ज्ञातृप्रमाणयोरन्यत्वमिति चेन्नाऽज्ञत्वप्रसंगात्** ॥ ८ ॥ स्यान्मत प्रमिणोत्यात्मान पर वा प्रमाणमिति कर्तृसाधनत्वमयुक्त, यस्मादन्यत्प्रमाण ज्ञान, स च गुणः। अन्यश्च प्रमाताऽऽत्मा, स च गुणी। गुणिगुणयोश्चाऽन्यत्व द्रव्यरूपवत्। तथाचात्मेंद्रियमनोऽर्थसन्निकर्षाद्यन्निष्पद्यते, तदन्यदिति वचनात्, अन्यत्प्रमाणमन्य प्रमाता। तत करणसाधनत्वमेव युक्तमिति। तन्न किं कारणमज्ञत्वप्रसगात्। यदि ज्ञस्वभा आत्मा तस्याऽज्ञत्व प्राप्नोति। घटवत्।

**ज्ञानयोगादिति चेन्नाऽतत्स्वभावत्वे ज्ञातृत्वाभावोऽन्धप्रदीपसंयोगवत्** ॥ ९ ॥ स्यादेतज्ज्ञानयोगाज्ज्ञातृत्व भवतीति। तन्न किं कारणमतत्स्वभावत्वे ज्ञातृत्वाभाव। कथ ? अधप्रदीपसयोगवत्। यथा जात्यधस्य प्रदीपसयोगेपि न दृष्टृत्व। तथा ज्ञानयोगेपि अज्ञस्वभावस्यात्मनो न ज्ञातृत्व।

**प्रमाणप्रमेययोरन्यत्वमिति चेन्नानवस्थानात्** ॥ १० ॥ स्यान्मत अन्यत् प्रमाणमन्यत्प्रमेय। कुत ? लक्षणभेदात्, दीपघटवत् इति। तन्न किं कारणमनवस्थानात्। यदि यथा बाह्यात्प्रमेयाकारात्प्रमाणमन्यत्तथाभ्यतरप्रमेयाकारादन्यत्स्यात्।

**अनवस्थास्य स्यात्प्रकाशवदिति चेन्न प्रतिज्ञाहानेः** ॥ ११ ॥ तत्रैतत्स्यात् नानवस्थादोष। कथ ? प्रकाशवत्। यथा प्रकाशस्य घटादीनामात्मनश्च प्रकाशस्य नानवस्थादोष एवमिहापीति। तन्न किं कारण प्रतिज्ञाहाने। प्रकाशो हि स्वात्मनो स्वपरप्रकाशने समर्थ प्रदर्श्यमान. प्रमाणप्रमेययोरन्यत्वप्रतिज्ञा हापयति।

**अनन्यत्वमेवेति चेन्नोभयाभावप्रसगात्** ॥ १२ ॥ यद्यन्यत्वे दोषोऽनन्यत्व। तर्हि ज्ञातृप्रमाणयो. प्रमाणप्रमेययोश्चेति। तन्न किं कारण उभयाभावप्रसगात्। यदि ज्ञातुरन्यत्प्रमाण, प्रमाणाच्च प्रमेय, अन्यतराभावे तदविनाभाविनोऽवशिष्टस्याप्यभाव इत्युभयाभावप्रसग। कथ तर्हि सिद्धि ?—

**अनेकांतात्सिद्धि** ॥ १३ ॥ स्यादन्यत्व स्यादनन्यत्वमित्यादि। सज्ञालक्षणादिभेदात्स्यादन्यत्वं। व्यतिरेकेणानुपलब्धे स्यादनन्यत्वमित्यादि। तत सिद्धमेतत्प्रमेय, नियमात्प्रमेय। प्रमाण तु स्यात्प्रमाण स्यात्प्रमेयमिति।

**वक्ष्यमाणभेदापेक्षया द्वित्वनिर्देश** ॥ १४ ॥ आद्ये परोक्ष प्रत्यक्षमन्यदिति, वक्ष्यते। तदपेक्षया प्रमाणे इति, द्वित्वनिर्देश क्रियते।

**तद्वचन सन्निकर्षादिनिवृत्त्यर्थ** ॥ १५ ॥ तन्मत्यादि ज्ञान वर्णित, प्रमाणव्यपदेश लभते न सन्निकर्षादीनि। अथ सन्निकर्षादे प्रमाणत्वे को दोष ?—

**सन्निकर्षे प्रमाणे सकलपदार्थपरिच्छेदाभावस्तदभावात्** ॥ १६ ॥ यस्य मत सन्निकर्ष प्रमाण, अर्थाधिगम फलमिति, तस्य सकलपदार्थपरिच्छेदो नास्ति। कुत ,? तदभावात्तस्य सन्निकर्षस्याभावात्। कथ ? इति चेदुच्यते—येन केनचित्सर्वज्ञेन भवितव्य। तस्यार्थपरिच्छेदहेतुर्यदि सन्निकर्ष ?, स चतुष्टयत्रयद्वयविषय स्यात्। तत्र चतुष्टयविषयस्त्रयविषयश्च न सभवति। मनस इंद्रियाणा चाऽयुगपत्प्रवृत्तित्वात्[१], प्रतिनियतविषयत्वाच्च। अनंतो हि ज्ञेयस्त्रिकालविषय, सूक्ष्मातरितविप्रकृष्टरूप, स कथमिह तै सन्निकृष्यते ?

१ मनस इंद्रियाणां चा युगपदप्रवृत्तित्वात्, इत्यपि ग पुस्तके पाठ।

असन्निकृष्टे, न तत्फलमवबोध प्रवर्तते । अत सर्वज्ञाभाव स्यात् । तत एव द्वयसन्निकर्षोपि न भवति ।

**सर्वगतत्वादात्मन सकलेनार्थेन सन्निकर्ष इति चेन्न तस्य परीक्षायामनुपपत्तेः ॥ १७॥** यदि हि सर्वगत आत्मा स्यात्, तस्य क्रियाभावात्पुण्यपापयो कर्तृत्वाभावे तत्पूर्वकससारस्तद्विपरीतरूपश्च मोक्षो न योक्ष्यते इति । करणग्रामस्य ससार इति चेन्न तस्याचेतनत्वात्, तस्यैव मोक्षप्रसक्तेश्च ।

**सर्वेंद्रियसन्निकर्षाभावश्च चक्षुर्मनसो प्राप्यकारित्वाभावात् ॥ १८ ॥** सर्वेंद्रियविषय सन्निकर्षो न सभवति । प्राप्यकारित्वाभावश्चोपरिष्टाद्वक्ष्यते ।

**सर्वथा ग्रहणप्रसगश्च सर्वात्मना सन्निकृष्टत्वात् ॥१९॥** यानींद्रियाणि प्राप्यकारीणि, तैरपि सर्वथार्थस्य ग्रहण प्राप्नोति कुत सर्वात्मना सन्निकृष्टत्वात् ।

**तत्फलस्य साधारणत्वप्रसगः स्त्रीपुरुषसयोगवत् ॥ २० ॥** तस्य सन्निकर्षस्य प्रमाणस्य, यत्फलमर्थावबोधन, तेन च साधारणेन भवितव्य । कथ ? स्त्रीपुरुषसयोगवत् । यथा स्त्रीपुरुषसयोगज सुखमुभयोरपि साधारण । तथेंद्रियाणा मनसोर्थस्य भावबोधन प्राप्नोति ।

**शय्यावदिति चेन्नाचेतनत्वात् ॥ २१ ॥** स्यान्मत यथा शय्यादीना, पुरुषस्य च, सयोगे साधारणेपि, तत्फल सुख न शय्यादीना भवति । किं तर्हि पुरुषस्यैवेति । तथेहापीति । तन्न किं कारण अचेतनत्वात्, अचेतनाना शय्यादीना सत्यपि सयोगे, सुख न भवति ।

**इहापि तत एवेति चेन्नाविशेषात् ॥ २२ ॥** स्यादेतन्मन प्रभृतीना, सत्यपि सन्निकर्षे, न तत्फलमवबोधन भवति कुत' । अचेतनत्वादेवेति । तन्न किं कारणमविशेषात्, अज्ञस्वभावत्व तावत्सर्वेषामात्मादीनामविशिष्ट, तत्र किं कृतोय विशेष । सन्निकर्षफलमवबोधनमर्थांतरभूतमपि, सदात्मनैव सबध्यते । न मन प्रभृतिभिरिति । ज्ञस्वभावत्वे चात्मन॰ प्रतिज्ञाहानि ।

**समवायादिति चेन्नाविशेषात् ॥ २३ ॥** स्यादेतत्समवायो नामायुतसिद्धिलक्षण , सबधोस्ति । तत्कृतोय विशेष इति तन्न । किं कारण ? अविशेषात् । समवायो हि सर्वगत , ज्ञभावशून्यत्वे समानेपि, आत्मनैव ज्ञान योजयति, न मन प्रभृतिभिरिति वचन, न विपश्चिन्मन प्रीतिकर । एवमिंद्रियेपि योज्य ।

अनुमानौपम्ययोरनुमानागमयोरनुमानप्रत्यक्षयोरौपम्यप्रत्यक्षयोरौपम्यागमयोरागमप्रत्यक्षयो प्रत्यक्षपरोक्षयोश्च विपर्ययप्रसगे मत्यादीनामविशेषेण प्रमाणद्वयासक्तेरवधारणार्थमाह—

## आद्ये परोक्षं ॥ ११ ॥

**आदिशब्दस्यानेकार्थवृत्तित्वे विवक्षात॰ प्राथम्यार्थसग्रह' ॥ १ ॥** अयमादिशब्दोनेकार्थवृत्ति , क्वचित्प्राथम्ये वर्तते । अकारादयो वर्णा, ऋषभादयस्तीर्थकरा, इति । क्वचित्प्रकारे 'भुजगादय परिहर्तव्या, इति । क्वचिद्व्यवस्थाया, सर्वादि' सर्वनामेति' । क्वचित्सामीप्ये 'नद्यादीनि क्षेत्राणीति । क्वचिदवयवे, 'द्विदादिरिति' । तत्रेहादिशब्दस्य विवक्षात प्राथम्यार्थो वेदितव्य । आदौ भवमाद्य, किं पुनस्तत् ? मति श्रुत च ।

**श्रुताग्रहणमप्रथमत्वात् ॥२॥** श्रुतस्य ग्रहण न प्राप्नोति । कुत ? अप्रथमत्वात्, नहि सूत्रे श्रुत प्रथम

**उत्तरापेक्षयादित्वमिति चेन्नातिप्रसगात् ॥ ३ ॥** स्यान्मत अवध्याद्युत्तरमपेक्ष्य, श्रुतस्यादित्वमिति । तन्न किं कारण ? अतिप्रसगात् । उत्तरमपेक्ष्य, यद्यादित्व कल्प्यते, केवल स्युदस्य, सर्वस्यादित्व प्राप्नोति ?

**द्वित्वनिर्देशादितिचेन्न तदवस्थत्वात् ॥ ४ ॥** स्यादेतद् द्वित्वनिर्देशेन, सर्वग्रहण न भवति । अतो नातिप्रसग इति । तन्न किं कारण ? तदवस्थत्वात्, एवमप्यतिप्रसग एव भवति । कयोर्द्वयो ग्रहणमिति ?

**न वा प्रत्यासत्तेः श्रुतग्रहण ॥ ५ ॥** न वैषदोष किं कारण ? प्रत्यासत्ते श्रुतग्रहण भवति । द्वित्वनिर्देशाद्गृह्यमाणं यदाद्यस्य प्रत्यासन्न, तदेव गृह्यते । तस्य हि सामीप्यादौपचारिक प्राथम्यमस्तीति तथासामीप्यश्रुतेरर्थाच्च ।

**उपात्तानुपात्तपरप्राधान्यादवगमः परोक्षं ॥ ६ ॥** उपात्तानीन्द्रियाणि, मनश्च। अनुपात्तं प्रकाशोपदेशादि, तत्प्राधान्यादवगमः परोक्षं। यथा गतिशक्त्योपेतस्यापि स्वयमेव गन्तुमसमर्थस्य यष्ट्याद्यवलंबनप्राधान्यं गमनं। तथा मतिश्रुतावरणक्षयोपशमे सति ज्ञस्वभावस्यात्मनः स्वयमेवार्थानुपलब्धुमसमर्थस्य पूर्वोक्तप्रत्ययप्रधानं ज्ञानं, परायत्तत्वात्तदुभयं परोक्षमित्युच्यते।

**अत एव प्रमाणत्वाभाव इत्यनुपालंभः ॥७॥** अत्राऽन्ये उपालभते। परोक्षं प्रमाणं न भवति, प्रमीयतेऽनेनेति हि प्रमाणं, नच परोक्षेण किंचित्प्रमीयते परोक्षत्वादेवेति सोऽनुपालंभः। कुतः ? अत एव यस्मात्, परायत्तं परोक्षं इत्युच्यते नानवबोध इति ॥

अभिहितलक्षणात्परोक्षादितरस्य सर्वस्य प्रत्यक्षत्वप्रतिपादनार्थमाह—

## प्रत्यक्षमन्यत् ॥ १२ ॥

अन्यत्त्रिविधं प्रत्यक्षमित्युच्यते। किमिदं प्रत्यक्षं नाम ?

**इंद्रियानिंद्रियानपेक्षमतीतव्यभिचारं साकारग्रहणं प्रत्यक्षं ॥१॥** इंद्रियाणि चक्षुरादीनि पंच, अनिंद्रियं मनः, तेष्वपेक्षा यस्य न विद्यते। 'अतस्मिंस्तदिति ज्ञानं व्यभिचार' सोऽतीतोस्य। आकारो विकल्पः यत्सहाकारेण वर्तते तत्प्रत्यक्षमित्युच्यते। इंद्रियानिंद्रियानपेक्षमिति विशेषणं मतिश्रुतनिवृत्त्यर्थं। अतीतव्यभिचारमित्येतद्विभंगज्ञाननिवृत्त्यर्थं। तद्धि मिथ्यादर्शनोदयाद् व्यभिचरतीति। साकारग्रहणमित्येतदवधिकेवलदर्शनव्युदासार्थं। अनाकारं हि तदिति। किं गतमेतदियतासूत्रेण ? आहोस्विदेवं वक्तव्यमिति गतं प्रतिपन्नं कथमिति चेदुच्यते—

**अक्षं प्रतिनियतमिति परापेक्षानिवृत्तिः ॥ २ ॥** *अश्नोति व्याप्नोति जानातीति, अक्ष आत्मा,* प्राप्तक्षयोपशमः प्रक्षीणावरणो वा तमेव प्रतिनियतं प्रत्यक्षमिति, विग्रहात्परापेक्षानिवृत्तिः कृता भवति।

**अधिकारादनाकारव्यभिचारव्युदासः ॥ ३ ॥** अधिकृतमेतज्ज्ञानं, सम्यक्, इति च, ततोऽनाकारस्य दर्शनस्य, व्यभिचारिणो ज्ञानस्य, च व्युदासः कृतो भवति।

**करणात्यये ग्रहणाभाव इतिचेन्न दृष्टत्वादीशवत् ॥ ४ ॥** स्यादेतत्करणात्ययेऽर्थस्य ग्रहणं न प्राप्नोति। नह्यकरणस्य कस्यापि ज्ञानं दृष्टमिति। तन्न किं कारणं ? दृष्टत्वात्। कथं ?, ईशवत्। यथा रथस्य कर्ता अनीशः, उपकरणापेक्षो रथं करोति। स तदभावे न शक्यः। यः पुनरीशः, तपोविशेषात्परिप्राप्तर्द्धिविशेषः। स बाह्योपकरणगुणानपेक्षः स्वशक्त्यैव रथं निर्वर्तयन् प्रतीतः। तथा कर्ममलीमस आत्मा, क्षायोपशमिकेंद्रियानिंद्रियप्रकाशाद्युपकरणापेक्षोऽर्थान् संवेत्ति। स एव पुनः क्षयोपशमविशेषे क्षये च सति करणानपेक्षः स्वशक्त्यैवार्थान्वेत्ति। इति को विरोधः ?

**ज्ञानदर्शनस्वभावत्वाच्च भास्करादिवत् ॥ ५ ॥** यथा भास्करादयः, प्रकाशस्वभावत्वात्प्रकाशांतरानपेक्षाः, प्रकाश्यानर्थान्प्रकाशयंति। तथा ज्ञानदर्शनस्वभाव आत्मा, तदावरणक्षयक्षयोपशमविशेषे सति, स्वशक्त्यैवार्थानाविष्करोतीति सिद्धं।

**इंद्रियनिमित्तं ज्ञानं प्रत्यक्षं तद्विपरीतं परोक्षमित्यविसंवादिलक्षणमिति चेन्नाप्तस्य प्रत्यक्षाभावप्रसंगात् ॥ ६ ॥** स्यान्मतमिंद्रियव्यापारजनितं ज्ञानं प्रत्यक्षं, व्यतीतेंद्रियविषयव्यापारं परोक्षमित्येतदविसंवादिलक्षणं। तथाचोक्तं।

प्रत्यक्षं कल्पनापोढं नामजात्यादियोजना। असाधारणहेतुत्वादक्षैस्तद्व्यपदिश्यते ॥

इंद्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यं, अव्यभिचारि व्यवसायात्मकमात्मेंद्रियमनोर्थसंनिकर्षाद्यन्निष्पद्यते तदन्यच्छ्रोत्रादिवृत्तिः प्रत्यक्षं। सत्संप्रयोगे पुरुषस्येंद्रियाणां बुद्धिजन्म तत्प्रत्यक्षमिति वा। तत्प्रत्यक्षमिति च सर्वैरभ्युपगम्यते। अतएव तल्लक्षणमविसंवादि निश्चेतव्यमिति। तन्न किं कारणमाप्तस्य प्रत्यक्षाभावप्रसंगात्।

यदींद्रियनिमित्तमेव ज्ञान प्रत्यक्षमिष्यते, एव सत्यात्तस्य प्रत्यक्षज्ञान न स्यात्। न हि तस्येंद्रियपूर्वोर्थाधिगम। अथ तस्यापि करणपूर्वकमेव ज्ञान कल्प्यते ? तस्यासर्वज्ञत्व पुरस्तादुक्त।

**आगमादिति चेन्न तस्य प्रत्यक्षज्ञानपूर्वकत्वात् ॥ ७॥** स्यादेतदागमादतींद्रियार्थाधिगमे व्याहतशक्ति सर्वार्थावबोध इति। तन्न किं कारण ? तस्य प्रत्यक्षज्ञानपूर्वकत्वात्। आप्तेन हि क्षीणदोषेण, प्रत्यक्षज्ञानेन प्रणीत आगमो भवति न सर्व । यदि सर्व स्यात् ? अविशेष स्यात्। स च नास्तीत्यागमस्य प्रमाणाभाव।

**अपौरुषेयादिति चेन्न तदसिद्धे ॥ ८ ॥** स्यादेतदपौरुषेय आगमोस्ति, अनादिनिधनोऽस्तत-परोक्षेष्वप्यर्थेष्वप्रतिहतगतिस्तत सर्वार्थाधिगम इति। तन्न किं कारण ? तदसिद्धे। न च कश्चिदागमोऽपौरुषेय सिद्धोस्ति, हिंसादिविधायिन प्रामाण्यासिद्धे ।

**अतींद्रिय योगिप्रत्यक्षमिति चेन्नार्थाभावात् ॥ ९ ॥** स्यान्मत योगिनोऽतींद्रिय प्रत्यक्ष ज्ञानमस्ति आगमविकल्पातीत। तेनासौ सर्वार्थान् प्रत्यक्षं वेत्ति। उक्त च—"योगिना गुरुनिर्देशाद्व्यतिभिन्नार्थमात्रदृक्" इति। तन्न किं कारण ? अर्थाभावात्। अक्षमक्ष प्रति वर्तते इति प्रत्यक्ष। नचायमर्थो योगिनि विद्यते-अक्षाभावात्। अथवा न सति सर्वे भावा, स्वपरोभयहेत्वहेतुभ्य उत्पत्त्याद्यभावात्। सामान्यविशेषाधैकानेकयोर्दृस्यसभवादिदोषोपपत्ते । अतोर्थाभावान्निरालंबन योगिनो ज्ञान कथ स्यात् ? । परिकल्पितात्मना न सति भावा निर्विकल्पात्मना सतीति चायुक्त। तदधिगमोपायाभावात्। न हि निर्विकल्पोर्थोस्ति। तद्विषय ज्ञान चेति प्रतिपादयितु शक्य । लक्षणाभावात्।

**तदभावाच्च ॥ १० ॥** तस्य योगिनोभावाच। न हि कश्चित्तत्परिकल्पितो योगी विद्यते विशेषलक्षण-विरहात्, सर्वविरहाच्च । निर्वाणप्राप्तो तत्रैतत्स्यात्, निर्वाण द्विविध ?, सोपधिविशेष, निरुपधिविशेष चेति। तत्र सोपधिविशेषे निर्वाणे बोद्धास्तीति। तत्रापि यथा बाह्यस्याभाव कल्प्यते, तथाभ्यतरस्यापीति बोद्धुरभाव एव। योगजधर्मानुग्रहादात्मा करणविरहितोप्यवैतीति चेन्न। तस्य नि क्रियस्य नित्यस्य सतस्तत्क्रियातदनुग्रह-विकाराभावात्।

**तल्लक्षणानुपपत्तिश्च स्ववचनव्याघातात् ॥ ११॥** तस्य प्रत्यक्षस्योक्तलक्षणमपि नोपपद्यते, कुत. ? स्ववचनव्याघातात्। अन्यापोहकप्रतिनिहितान्येवाशेषप्रमाणलक्षणानि। ततस्तत्र नो नातितरा प्रतिविधानादर । किं तु तत्प्रमाणलक्षणगुणसभावनातिरस्कारार्थं किंचिद्व्याप्रियामहे। यदुक्त कल्पनापोढ प्रत्यक्षमिति। कल्पना हि जातिद्रव्यगुणक्रियापरिभाषाकृतो वागबुद्धिविकल्पस्ततोऽपोढ । किं तत् ? सर्वथाकल्पनापोढ, उताहो कथचिदिति ? यदि सर्वथास्ति प्रमाण ज्ञान कल्पनापोढमित्येवमादि कल्पनाभ्योप्यपोढमित्यस्त्यादिवचनव्याघात । अथास्त्यादिकल्पनाभ्योऽनपोढमिष्यते सर्वथाकल्पनापोढमिति वचनव्याघात । अथ कथ चित्कल्पनापोढ, एकातवादत्यागात् पुनरपि स्ववचनव्याघात एव। अथ मत नास्माकमेकात कल्पनापोढमेवेति । किमर्थं तर्हि विशेषण!, परमतापेक्ष विशेषण। परमते हि नामजात्यादिभेदोपचारकल्पना प्रोक्ता। ततोपोढ न स्वविकल्पादिति। उक्तच

सवितर्कविचारा हि पच विज्ञानधातव । निरूपणानुस्मरणविकल्पनविकल्पका इति

अत्रोच्यते—आलबने वितर्कस्तत्रैवानुमर्शन विचारस्तस्य नामादिभि प्रकल्पना निरूपण। पूर्वानुभूतानुसारेण विकल्पनमनुस्मरणमित्येते धर्मा क्षणमात्रावस्थानेष्वक्षविषयविज्ञानेषु निरन्वयेषु नोपपद्यते। युगपदुत्पत्तेरनवस्थानाच्च, अतो ग्राह्यग्रहणभावाभावश्च स्यात्। सव्येतरगोविषाणवत्। क्रमवृत्तित्वे च तेषा स्वार्थाभावप्रसगश्चेति। सततनाद्यपेक्षया तदुपपत्तिरिति चेन्न। तत्परीक्षाक्षमत्वात्। अत सर्वस्मिन्नसति विकल्पे, अय विकल्पोस्त्यय नास्तीति विज्ञानस्य विवेको नोपपद्यते। सर्वविकल्पविरहाच नास्तित्वमेवास्य स्यात्। अनुस्मरणाद्यभ्युपगमे चैकस्यानेकक्षणवर्तिनो वस्तुनोस्तित्व सिद्ध। अनुस्मरणादि हि स्वयमनुभूतस्यार्थस्य दृष्ट नानन्भूतस्य नान्यानुभूतस्येति। तथा मानसमपि प्रत्यक्ष नोपपद्यते। अपि च षण्णामनतरातीत विज्ञान

तन्मन इत्यतीतमसत्कथं विज्ञानस्य कारणं स्यात्। अथ पूर्वोत्तरनाशोत्पत्त्योर्युगपद्वृत्तेः कार्यकारणभावः कल्प्यते। भिन्नसंतानयोरपि विनश्यदुत्पद्यमानयोः कार्यकारणभावः स्यात्। एकसंताने शक्त्यनुगमाभ्युपगमे प्रतिज्ञाहानिश्च स्यात्।

**अपूर्वाधिगमलक्षणानुपपत्तिश्च सर्वस्य ज्ञानस्य प्रमाणत्वोपपत्तेः ॥ १२ ॥** अपूर्वाधिगमलक्षणं प्रमाणमित्येतच्च नोपपद्यते। कुतः ? सर्वस्य ज्ञानस्य प्रमाणत्वोपपत्तेः। प्रमीयतेऽनेनेति प्रमाणं। सर्वेण च ज्ञानेन प्रमीयते। यथान्धकारेऽवस्थितानामुत्पत्त्यनंतरं प्रकाशकः प्रदीपः उत्तरकालमपि न तं व्यपदेशं जहाति, तदवस्थानकारणत्वात्। एवं ज्ञानमुत्पत्त्यनंतरं घटादीनामवभासकं भूत्वा प्रमाणत्वमनुभूयोत्तरकालमपि न तं व्यपदेशं त्यजति, तदर्थत्वात्। अथ मतं क्षणे क्षणेऽन्य एव प्रदीपोऽपूर्वमेव प्रकाशकत्वमनुभवत इति। एवं सति ज्ञानमपि तादृगेवेति, क्षणे क्षणेऽन्यत्वोपपत्तेरपूर्वाधिगमलक्षणमविशिष्टमिति। तत्र यदुक्तं स्मृतीच्छाद्वेषादिवत् पूर्वाधिगतविषयत्वात् पुनः पुनरभिधानं ज्ञानं प्रमाणमिति तद्व्याहन्यते।

**स्वसंवित्तिफलानुपपत्तिश्चाऽर्थांतरत्वाभावात् ॥ १३ ॥** प्रमाणं लोके फलवदुपलब्धं। अत्र च प्रमाणस्य केनचित्फलेन भवितव्यमिति। कश्चिदाह—स्वाभासं हि ज्ञानमुत्पद्यते, स्वाभासं विषयाभासं च। तस्योभयाभासस्य यत्संवेदनं तत्फलमिति। तन्नोपपद्यते, कुतः ? अर्थांतरत्वाभावात्। लोके प्रमाणात् फलमर्थांतरभूतमुपगम्यते। तद्यथा-छेत्तृछेत्तव्यछेदनसन्निधाने द्वैधीभावः फलं। नच तथा स्वसंवेदनमर्थांतरभूतमस्ति। तस्मादस्य फलत्वं नोपपद्यते सत्यमेवमेतत्। अत एव तस्मिन्नधिगमरूपे फले सव्यापारप्रतीततामुपधाय प्रमाणोपचार इति।

**प्रमाणोपचारानुपपत्तिर्मुख्याभावात् ॥१४॥** सति मुख्ये लोके उपचारो दृश्यते। यथा सति सिंहे विशिष्टतिर्यग्गतिपंचेंद्रियजातिनखदंष्ट्रासटाटोपभासुरकपिलनयनतारकाद्यवयवविशिष्टेऽन्यत्रक्रौर्यशौर्यादिगुणसाधर्म्यात्सिंहोपचारः क्रियते। नच तथेह मुख्यं प्रमाणमस्ति तदभावात्फले प्रमाणोपचारो न युज्यते।

**आकारभेदाद्भेद इति चेन्नैकांतवादत्यागात् ॥ १५ ॥** स्यादेतद्ग्राहकविषयाभाससंवित्तिशक्तित्रयाकारभेदात्प्रमाणप्रमेयफलकल्पनाभेद इति। तन्न किं कारणमेकांतवादत्यागात्। एकमनेकाकारमित्येतज्जिनेंद्रदर्शनं, तत्कथमेकांतवादे युज्यते ?। यदि ह्येवमभ्युपगम्येत, द्रव्ये कोऽपरितोषः ?, रूपाद्यनेकात्मकमेकं परमाणुद्रव्यं, ज्ञानाद्यनेकात्मकमात्मद्रव्यमिति। अथ द्रव्यसिद्धिर्माभूदिति आकारा एव, न ज्ञानमिति कल्प्यते। एवं सति कस्य ते आकाराः ? इति तेषामप्यभावः स्यात्। किंच तेषामाकाराणां यौगपद्येन वा उत्पत्तिः स्यात् ? क्रमेण वा ? यदि यौगपद्येन, हेतुहेतुमद्भावो विरुध्यते। अथ क्रमेण, क्षणिकस्य विज्ञानस्याकाराणां, कथं क्रमः ?, यदि स्यात् ?, अधिगमश्चात्र न भावांतरमिति व्याहन्यते। अपि च बाह्यस्य विज्ञेयस्याभावे, अंतरंगाकारत्रयकल्पनायां, प्रमाणप्रमाणाभासौ नोपपद्येते। अंतरंगाकारभेदादसद्वस्तु यत्सदिति कल्पयति, तदप्रमाणाभासं। असदेवेति यत्प्रतिपाद्यते तत्प्रमाणं इत्यस्ति विशेषः। इति चेत्प्रमेयद्वयव्यवस्थापितप्रमाणद्वयकल्पनाव्याघातः। स्वलक्षणविषयं हि प्रत्यक्षं। सामान्यलक्षणविषयमनुमानं। स्वलक्षणमसाधारणोधर्मः विकल्पातीतत्वादिदं तदित्यव्यपदेश्यं। तद्विपरीतं सामान्यलक्षणमिति, सर्वस्यासत्वे किं कृतोयं विशेषः ? असत्वं हि न स्वतो भिद्यते सर्वावधिभेदात्स्याद्भेदः घटस्यासत्वं पटस्यासत्वमिति, तेषां घटादीनां सबधिनामभावे तद्विशेषाभाव इति। स्यान्मतं खात्पतिता नो रत्नवृष्टिरिष्टमेवाप्रतर्कितमुपस्थितं अत एव सर्वं विज्ञानाभिधानमयथार्थं परिकल्पितार्थत्वान्निर्विकल्पार्थगोचरमात्मीयमेव विज्ञानप्रमाणमिति। उक्तंच—

शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते। अनागमविकल्पा हि स्वयं विद्या प्रवर्तते इति ॥

एतच्चानुपपन्नं तदधिगमोपायाभावात्। उक्तंच—

प्रत्यक्षबुद्धिः क्रमते न यत्र तल्लिंगगम्यं न तदर्थलिंगं।
वाचो न वा तद्विषयेण योगः का तद्गतिः कष्टमशृण्वतां ते ॥

इत्याहितोभयप्रकारस्य प्रमाणस्य आदिप्रकारविशेषप्रतिपत्त्यर्थमाह—

## मति: स्मृतिः संज्ञा चिंताभिनिबोध इत्यनर्थांतरं ॥ १३ ॥

**इति शब्दस्यानेकार्थसंभवे विवक्षावशादाद्यर्थसंप्रत्ययः ॥ १ ॥** इति शब्दोनेकार्थे समवति। क्वचिद्धेतौ वर्तते, 'हतीति पलायते' 'वर्षतीति धावति' क्वचिदेवमित्यस्यार्थे वर्तते, इति स्म उपाध्यायः। कथयत्येव स्म इति गम्यते। क्वचित्प्रकारे वर्तते, यथा 'गौरश्वः शुक्लो नीलः, चरति प्लवते जिनदत्तो देवदत्त इति' एवं प्रकारा इत्यर्थः। क्वचिद्व्यवस्थाया वर्तते, यथा 'ज्वलितिकसताण्ण, इति। क्वचिदर्थविपर्यासे वर्तते। यथा 'गौरित्ययमाह, गौरिति जानीत इति,। क्वचित्समाप्तौ वर्तत इति 'प्रथममाह्निकमिति'। द्वितीयमाह्निकमिति। क्वचिच्छब्दप्रादुर्भावे वर्तते इति, श्रीदत्तमिति सिक्तसेनमिति। तत्रेह विवक्षावशादादिशब्दार्थो वेदितव्यः। मतिः स्मृतिः संज्ञा चिंताभिनिबोधादय इत्यर्थः। के पुनस्ते प्रतिभाबुद्ध्युपलब्ध्यादयः। प्रकारे वा एवं प्रकाराः, इति। कथमेषां शब्दानामनर्थांतरत्वं।

**मतिज्ञानावरणक्षयोपशमनिमित्तार्थोपलब्धिविषयत्वादनर्थांतरत्वं रूढिवशात् ॥ २ ॥** एतेषां मत्यादीनां शब्दानां मतिज्ञानावरणक्षयोपशमनिमित्तायामर्थोपलब्धौ वृत्तेरनर्थांतरत्वं वेदितव्यं। कथं पुनर्मननं मन्यत इति वा मतिः इत्येवमाद्यर्थविषयाणामेषामनर्थांतरत्वं?, इत्यत आह, रूढिवशादिति। यथा गच्छतीति गौरित्यर्गीकृतमपि गमनं न शब्दवृत्तिनियमकारणं रूढिवशात्कचिदेव वर्तते। तथा मत्यादयः शब्दा व्युत्पत्तिकर्मणि सत्यप्यर्थाश्रयेण भेदे क्वचिदेव वर्तंत इत्यनर्थांतरत्वमवसीयते।

**शब्दभेदादर्थभेदो गवाश्वादिवदिति चेन्नातः संशयात् ॥ ३ ॥** स्यादेतन्मत्यादीनां शब्दानां परस्परतोर्थांतरत्वमस्ति। कुतः? शब्दभेदात्, गवाश्वादिवदिति। तन्न किं कारणं अतः संशयात्। यत एव मत्यादीनां शब्दभेदादन्यत्वमाह भवान्, अत एव संशयः। कथं?—

**इंद्रादिवत् ॥ ४ ॥** यथेंद्रशक्रपुरंदरादिशब्दभेदेपि नार्थभेदः। तथा मत्यादिशब्दभेदेप्यर्थाभेद इति। न हि यत एव संशयस्तत एव निश्चयः। किं च--

**शब्दाभेदेप्यर्थैकत्वप्रसंगात् ॥ ५ ॥** यस्य शब्दभेदोर्थभेदे हेतुरिति मतं, तस्य वागादिनवार्थेषु गोशब्दाभेददर्शनाद्वागाद्यर्थानामेकत्वमस्तु। अथ नैतदिष्टं, न तर्हि शब्दभेदोऽन्यत्वस्य हेतुः। किं च--

**आदेशवचनात् ॥ ६ ॥** यथेंद्रादीनामेकद्रव्यपर्यायादेशात्स्यादेकत्वं, प्रतिनियतपर्यायार्थादेशाच्च स्यादन्यत्वं, इंदनादिंद्रः, शकनाच्छक्रः, पूर्दारणात्पुरंदरः, इति। तथा मत्यादीनामेकद्रव्यपर्यायादेशात्स्यादेकत्वं। प्रतिनियतार्थपर्यायादेशाच्च स्यान्नानात्वं। मननं मतिः। स्मरणं स्मृतिः। संज्ञानं संज्ञा। चिंतनं चिंता। आभिमुख्येन नियतं बोधनमभिनिबोध इति।

**पर्यायशब्दो लक्षणं नेति चेन्न ततोऽनन्यत्वात् ॥ ७ ॥** स्यान्मतं मत्यादयः अभिनिबोधपर्यायशब्दा नाभिनिबोधस्य लक्षणं मनुष्यादिवत्। यथा मनुष्यमर्त्यमनुजमानवादयः पर्यायशब्दा मनुष्यस्य लक्षणं न भवति। तन्न किं कारणं ततोऽनन्यत्वात्। इह पर्यायिणोऽनन्यपर्यायशब्दः, स लक्षणं। कथं?

**औष्ण्याग्निवत् ॥ ८ ॥** यथा पर्यायशब्दः, औष्ण्यमग्नेः पर्यायिणोऽनन्यत्वादग्नेर्लक्षणं भवति। तथा पर्यायशब्दा मत्यादयः आभिनिबोधिकज्ञानपर्यायिणोनन्यत्वेनाभिनिबोधस्य लक्षणं। अथवा ततोऽनन्यत्वात्। यथा मनुष्यमर्त्यमनुजमानवादयः असाधारणत्वादन्यघटादिद्रव्यासंबंधिनो मनुष्यादनन्यत्वात्तस्य लक्षणं। अन्यथा हि मनुष्यादिपर्यायाल्लक्षणत्वान्मनुष्याभावो भवेत्, यतो न मनुष्यादिलक्षणव्यतिरेकेणास्यान्यल्लक्षणमस्तीति। नचाभाव इष्टः, अतः पर्यायशब्दो लक्षणं। तथा मतिस्मृत्यादयोऽसाधारणत्वादन्यज्ञानासंभविनोऽभिनिबोधादनन्यत्वात्तल्लक्षणं। इतश्च पर्यायशब्दो लक्षणं। कस्मात्?—

**गत्वा प्रत्यागतलक्षणग्रहणात् ॥ ९ ॥** कथं?—

**अग्न्युष्णवत् ॥ १० ॥** यथाग्निरिति गत्वा ज्ञात्वा, बुद्धिरुष्णपर्यायशब्दं गच्छति, कोयमग्निः? य उष्ण

इति। उष्ण इति च गत्वा बुद्धिः प्रत्यागच्छति। कोयमुष्ण, ? योग्निरिति। तथा मतिरिति गत्वा बुद्धिः स्मृतिं गच्छति। का मतिः, ? या स्मृतिरिति। ततः स्मृतिरिति, गत्वा बुद्धिः प्रत्यागच्छति का स्मृतिः, ? या मतिरिति। एवमुत्तरेष्वपि। तस्माद्गत्वा प्रत्यागतलक्षणग्रहणात्पश्यामः पर्यायशब्दो लक्षणमिति। किं च—

**पर्यायद्वैविध्यादग्निवत्** ॥ ११ ॥ यथाग्नेरात्मभूत उष्णपर्यायो लक्षणं, न धूमः, तस्य बाह्येंधननिमित्तत्वे कादाचित्कत्वात्, तथा आभ्यतरो मत्यादिपर्यायः, आत्मभूतत्वाल्लक्षणं, नानात्मभूतो बाह्यो मत्यादिशब्दः पुद्गलः तत्प्रत्यायनसमर्थः, तस्य बाह्यकरणप्रयोगनिमित्तत्वादिति।

**करणस्य वाभिधेयार्थत्वादथवा** ॥ १२ ॥ इति करणोयमभिधेयार्थः प्रयुज्यते। मतिः स्मृतिः संज्ञा चिंताभिनिबोध इति योर्थोभिधीयते, तन्मतिज्ञानमिति। ततो लक्षणत्वमुपपद्यते।

**श्रुतादीनामेतैरनभिधानात्** ॥ १३ ॥ न ह्येतैर्मत्यादिभिः श्रुतादीन्यभिधीयते।

**वक्ष्यमाणलक्षणसद्भावाच्च** ॥ १४ ॥ श्रुतादीनां हि लक्षणं वक्ष्यते। ततः, तेषां मत्यप्रसंगः। यदेव लक्षणं मतिज्ञानमवध्रियते अथास्यात्मलाभे किं निमित्तं ?, इत्यत आह—

## तदिंद्रियानिंद्रियनिमित्तं ॥ १४ ॥

अथयात्मप्रसादाविशेषात्सर्वज्ञानानामेकत्वप्रसंगे, निमित्तभेदान्नानात्वं प्रतिपिपादयिष्यन् ब्रवीति। सत्यपि अमुष्मिन्नविशेषे प्रथक्त्वमेषामवेमः। कुतः ? यस्मात्तदिंद्रियानिंद्रियनिमित्तमिति। किमिदमिंद्रियं नाम ?—

**इंद्रस्यात्मनोऽर्थोपलब्धिर्लिंगमिंद्रियं** ॥ १ ॥ इंद्र आत्मा, तस्य कर्ममलीमसस्य स्वयमर्थान्ग्रहातुमसमर्थस्याऽर्थोपलभने यल्लिंगं, तदिंद्रियमित्युच्यते। अथ किमिदमनिंद्रियं ?

**अनिंद्रियं मनोऽनुदरावत्** ॥ २ ॥ मनोऽतःकरणमनिंद्रियमित्युच्यते। कथमिंद्रियप्रतिषेधेन मन उच्यते ?। यथायमब्राह्मण इत्युक्ते ब्राह्मणत्वरहिते कस्मिंश्चित्संप्रत्ययो भवति। तथा इंद्रलिंगविरहितेऽन्यस्मिन्ननिंद्रियमिति संप्रत्ययः स्यात्। न तु इंद्रलिंग एव मनसि। नैष दोषः ईषत्प्रतिषेधात्। कथं ? अनुदरावत्, यथानुदरा कन्या इति नास्या उदरं न विद्यते, किंतु गर्भभारोद्वहनसमर्थोदराभावादनुदरा। तथानिंद्रियमिति नास्येंद्रियत्वाभावः। किंतु चक्षुरादिवत्प्रतिनियतदेशविषयावस्थानाभावादनिंद्रियं मन इत्युच्यते।

**अतरंगं तत्करणमिंद्रियानपेक्षत्वात्** ॥ ३ ॥ नास्येंद्रियेष्वपेक्षास्तीतींद्रियानपेक्षं। न ह्यस्य गुणदोषविचारस्वविषयप्रवृत्तौ इंद्रियापेक्षास्ति ततोऽतरंगं तत्करणमिति, वेदितव्यं। तदुभयमवष्टभ्य यदुत्पद्यते तन्मतिज्ञानमिति।

**तदित्यग्रहणमनंतरत्वादिति चेन्नोत्तरार्थत्वात्** ॥ ४ ॥ स्यादेतन्मतिज्ञानस्यानंतरत्वादनेनाभिसंबंधो भवतीति तदित्येतद्ग्रहणमनर्थकमिति। तन्न किं कारणमुत्तरार्थत्वात्। उत्तरार्थं ह्येतत्। इतरथा हि अवग्रहेहावायधारणा मतिज्ञानभेदा इति विज्ञातुमशक्या, तद्ग्रहणे पुनः क्रियामाणे तन्मतिज्ञानमवग्रहादय इति संबंधः सुगमो भवति।

यदेतस्मिन्निमित्तद्वयसंनिधाने सत्यात्मलाभं प्रत्यागूर्णमनिर्वर्णितभेदमिति, तद्भेदप्रतिपत्त्यर्थमाह—

## अवग्रहेहावायधारणाः ॥ १५ ॥

**विषयविषयिसन्निपातसमनंतरमाद्यग्रहणमवग्रहः** ॥ १ ॥ विषयविषयिसन्निपाते दर्शनं भवति। तदनंतरमर्थस्य ग्रहणमवग्रहः।

**अवगृहीतेर्थे तद्विशेषाकांक्षणमीहा** ॥ २ ॥ यथा पुरुष इत्यवगृहीते, तस्य भाषावयोरूपादिविशेषैराकांक्षणमीहा।

**विशेषनिर्ज्ञानाद्याथात्म्यावगमनमवायः** ॥ ३ ॥ भाषादिविशेषनिर्ज्ञानात्तस्य याथात्म्येनावगमनमवायः। दाक्षिणात्योऽयं, युवा, गौरः, इति वा।

**निर्ज्ञातार्थाऽविस्मृतिर्धारणा ॥ ४ ॥** भाषावयोरूपादिविशेषैर्याथात्म्येन निर्णीतस्य पुरुषस्योत्तरकाल स एवायमित्यविस्मरण यतो भवति । सा, धारणा । त एते मतिज्ञानभेदा । अत्राहेदमानुपूर्व्यं किं कृतमेषा ?, उच्यते ।

**अवग्रहादीनामानुपूर्व्यमुत्पत्तिक्रियापेक्ष ॥ ५ ॥** अवग्रहपूर्वकत्वात् इतरेषामादावग्रह क्रियते । तथोत्तरेष्वपि योज्य । अत्राह—

**अवग्रहेहयोरप्रामाण्य तत्सद्भावेपि सशयदर्शनाच्चक्षुर्वत् ॥ ६ ॥** यथा चक्षुषि न निर्णय, सत्येव तस्मिन् किमय स्थाणुराहोस्वित्पुरुष इति सशयदर्शनात्। तथावग्रहेपि सति न निर्णय, ईहादर्शनात्, ईहाया च न निर्णय, यतो निर्णयार्थमीहा नत्वीहैव निर्णय । यश्च निर्णयो न भवति, स सशयजातीय इत्यप्रामाण्यमनयोरिति ।

**अवग्रहवचनादिति चेन्न सशयानतिवृत्तेरालोचनवत् ॥ ७ ॥** स्यादेतन्नावग्रह सशय । कुतोऽवग्रहवचनात्। यत उक्त: पुरुषोयमिति अवग्रहस्तस्य भाषावयोरूपादिविशेषाकाङ्क्षणमीहेति। सशयस्त्वप्रतिपत्तिरेवेति। तन्न किं कारण ? सशयानतिवृत्ते । कथ ? आलोचनवत्। यथोर्ध्वार्थालोचने किमयमूर्ध्वोर्थ स्थाणुरुत पुरुष इति सशयानतिवृत्ति । तथोर्ध्वोयमर्थ इत्यवग्रहे ईहाद्यपेक्षात्वात्सशयानतिवृत्ति । उच्यते—

**लक्षणभेदादन्यत्वमग्निजलवत् ॥ ८ ॥** यथाग्निजलयोर्दहनप्रकाशनादिद्रव्यतास्नेहनादिप्रतिनियतलक्षणभेदादन्यत्व । तथावग्रहसशययोर्लक्षणभेदादन्यत्व । कोसौ लक्षणभेद ? उच्यते—

**अनेकार्थानिश्चितापर्युदासात्मक: सशयस्तद्विपरीतोऽवग्रह: ॥ ९ ॥** स्थाणुपुरुषाद्यनेकार्थालबनसन्निधानादनेकार्थात्मक सशय । एकपुरुषाद्यन्यतमात्मकोऽवग्रह । स्थाणुपुरुषानेकधर्मानिश्चितात्मक सशय । यतो न स्थाणुधर्मान् पुरुषधर्मांश्च निश्चिनोति । अवग्रहस्तु पुरुषाद्यन्यतमैकधर्मनिश्चयात्मक । स्थाणुपुरुषानेकधर्माऽपर्युदासात्मक सशय । यतो न प्रतिनियतान् स्थाणुपुरुषधर्मान् पर्युदस्यति सशय । अवग्रह पुन पर्युदासात्मक । सह्यन्यान् भाषादीन् पर्यायान् पर्युदस्य, पुरुष इत्येकपर्यायालबन ।

**सशयतुल्यत्वमपर्युदासादिति चेन्न निर्णयविरोधात् सशयस्य ॥ १० ॥** स्यादेतत्सशयतुल्योऽवग्रह, कुत ? अपर्युदासात्। यथा सशय स्थाणुपुरुषविशेषापर्युदासात्मक। तथावग्रहोपि पुरुष इति भाषावयोरूपाद्यपर्युदासात्मक । अतश्चैतदेव यदुत्तरकाल तद्विशेषार्थमीहामारभत इति । तन्न किं कारण ? निर्णयविरोधात्, सशयस्य । सशयो हि निर्णयविरोधी, नत्ववग्रह ।

**निर्णयदर्शनादीहायां तत्प्रसग इति चेन्नार्थादानात् ॥ ११ ॥** स्यादेतद्यदि निर्णयाविरोध्यवग्रह इति न सशय । ननु ईहाया निर्णयविरोधित्वात्सशयत्वप्रसग इति । तन्न किं कारण ? अर्थादानात्, अवगृह्यार्थं तद्विशेषोपलब्ध्यर्थमर्थादानमीहा । सशय पुनर्नार्थविशेषालबन ।

**सशयपूर्वकत्वाच्च ॥ १२ ॥** सशयो हि पूर्वमुपजायते ईहाया, कथ ? इह पुरुषमवगृह्य, किमय दाक्षिणात्य उत औदीच्य ? इत्येवमाद्यप्रतिपत्तौ सशय, एव सशय । तस्योत्तरकाल विशेषोपलिप्सां प्रति यत्नमीहेति, सशयादर्थान्तरत्व ।

**अत एव सशयावचनमर्थगृहीते ॥१३॥** अत एव सूत्रे सशयो नोक्त । कुत, अर्थगृहीते । सति सशये ईहाया प्रवृत्तिर्नास्तीति । आह—किमयमपाय उतावाय इत्युभयथा न दोषोऽन्यतरवचनेऽन्यतरस्यार्थगृहीतत्वात् । यदा न दक्षिणात्योयमित्यपाय त्याग करोति तदौदीच्य इत्यवायोधिगमोर्थगृहीत । यदावौदीच्य इत्यवाय करोति तदा न दक्षिणात्योयमित्यपायोर्थगृहीत । कश्चिदाह—यदुक्त भवता विषयविषयिसन्निपाते दर्शन भवति, तदनतरमवग्रह इति । तदयुक्तमवैलक्षण्यात् । नह्यवग्रहाद्विलक्षण दर्शनमस्तीति। अत्रोच्यते-न, वैलक्षण्यात्। कथ इह चक्षुषा चक्षुर्दर्शनावरणीयवीर्यांतरायक्षयोपशमाङ्गोपागनामावष्टम्भादविभावितविशेषसामर्थ्येन किंचिदेतद्वस्त्वित्यालोकनमनाकार दर्शनमित्युच्यते बालवत्। यथा जातमात्रस्य

बालस्य, प्राथमिक उन्मेषोऽसावविभावितरूपद्रव्यविशेषालोचनाद्दर्शन विवक्षित। तथा सर्वेषा। ततो द्वित्र्यादि समयभाविपून्मेषेषु चक्षुरवग्रहमतिज्ञानावरणवीर्यांतरायक्षयोपशमागोपागनामावष्टंभाद्रूपमिदमिति विभावित विशेषोऽवग्रह । यत्प्रथमसमयोन्मेषितस्य बालस्य दर्शन तदथवग्रहजातीयत्वाज्ज्ञानमिष्ट, तन्मिथ्याज्ञान वा स्यात् सम्यग्ज्ञान वा ? मिथ्याज्ञानत्वेपि, सशयविपर्ययानध्यवसायात्मक ? स्यात्। तत्र न तावत्सशय, विपर्ययात्मक वा चेष्टितस्य सम्यग्ज्ञानपूर्वकत्वात्। प्राथमिकत्वाच्च नास्तीति। नवानध्यवसायरूप, जात्यधबधिररूपशब्दवत् वस्तुमात्रप्रतिपत्ते । न सम्यग्ज्ञानमर्थाकारावलबनाभावात्। किं च—

**कारणनानात्वात्कार्यनानात्वसिद्धेः ॥ १४ ॥** यथा मृत्तंतुकारणभेदात् घटपटकार्यभेदस्तथा दर्शनज्ञानावरणक्षयोपशमकारणभेदात्, तत्कार्यदर्शनज्ञानभेद इति। अस्ति प्राक् अवग्रहाद्दर्शन। तत शुक्लकृष्णादिरूपविज्ञानसामर्थ्योपेतस्यात्मन किं शुक्लमुत कृष्ण ? इत्यादिविशेषाप्रतिपत्ते सशय। तत शुक्लविशेषाकांक्षण प्रतीहनमीहा। तत शुक्लमेवेद न कृष्णमित्यवायनमवाय । अवेतस्यार्थस्याविस्मरण धारणा। एव श्रोत्रादिषु मनस्यपि योज्य, तदावरणकर्मक्षयोपशमविकल्पात्प्रत्येकमवग्रहादिज्ञानावरणभेद इष्यते। कथ ? ज्ञानावरणमूलप्रकृते पचोत्तरप्रकृतयस्तासामप्युत्तरोत्तरा प्रकृतिविशेषा सति। 'ज्ञानावरणस्योत्तरप्रकृतय असख्येयलोका इति वचनात्। आह—ईहादीनाममतिज्ञानप्रसग। कुत ? परस्परकार्यत्वात्। अवग्रह कारण, ईहा कार्यं। ईहा कारण, अवाय कार्यं। अवाय कारण धारणा कार्यं। नचेहीदानामिंद्रियानिंद्रियनिमित्तत्वमस्तीति। नैष दोष ईहादीनामनिंद्रियनिमित्तत्वान्मतिज्ञानव्यपदेश। यद्येव श्रुतस्यापि प्राप्नोति इंद्रियगृहीतविषयत्वात्। ईहादीनामिंद्रियनिमित्तत्वमप्युपचर्यते। न तु श्रुतस्याय विधिरस्ति तस्यानिंद्रियविषयत्वादिति श्रुतस्याप्रसग । यद्येव चक्षुरिंद्रियेहादिव्यपदेशाभाव इति चेन्नेंद्रियशक्तिपरिणतस्य जीवस्य भावेंद्रियत्वे तद्व्यापारकार्यत्वात्। इंद्रियभावपरिणतो हि जीवो भावेंद्रियमिष्यते तस्य विषयाकारपरिणामा ईहादय इति चक्षुरिंद्रियेहादिव्यपदेश इति। इमेऽवग्रहादयो मतिज्ञानप्रभेदा उक्तास्ते ज्ञानावरणक्षयोपशमनिमित्ता केषा भवति ?। इत्युच्यते-

## बहुबहुविधक्षिप्रानिःसृतानुक्तध्रुवाणां सेतराणां ॥ १६ ॥

**संख्यावैपुल्यवाचिनो बहुशब्दस्य ग्रहणमविशेषात् ॥ १ ॥** बहुशब्दो हि वैपुल्यवाची सख्यावाची च। तस्योभयस्यापि ग्रहण कस्मात् विशेषात्। सख्यायामेको द्वौ बहव इति। वैपुल्ये बहुरोदनो बहु सूप इति।

**बह्ववग्रहाद्यभावः प्रत्यर्थवशवर्तित्वादिति चेन्न सर्वदैकप्रत्ययप्रसगात् ॥ २ ॥** स्यादेतत्प्रत्यर्थवशवर्ति विज्ञान नानेकमर्थं गृहीतुमलमतो बह्ववग्रहादीनामभाव इति। तन्न किं कारण ? सर्वदैकप्रत्यय प्रसगात्। यथाऽरण्याटव्या कश्चिदेकमेव पुरुषमवलोकयन्नानेक इत्यवैति। मिथ्याज्ञानमन्यथा स्यात् एकत्रानेक बुद्धिर्यदि भवेत्। तथा नगरवनस्कधावारावगाहिनोपि तस्यैकप्रत्यय स्यात्सार्वकालिक। अतश्चानेकार्थग्राहि विज्ञानस्यात्यंताभवान्नगरवनस्कधावारप्रत्ययनिवृत्ति । नैता सज्ञा ह्येकार्थनिवेशिन्यस्तस्माल्लोकसव्यवहारनिवृत्ति । किं च नानात्वप्रत्ययाभावाद्यस्यैकार्थमेव नियमाज्ज्ञान, तस्य पूर्वज्ञाननिवृत्तावुत्तरज्ञानोत्पत्ति स्यादनिवृत्तौ वोभयथा च दोष। यदि पूर्वमुत्तरज्ञानोत्पत्तिकालेस्ति। यदुक्त 'एकार्थमेकमनस्त्वात्', इत्यदो विरुध्यते। यथैक मनोऽनेकप्रत्ययारभक तथैकप्रत्ययोनेकार्थो भविष्यति, अनेकस्य प्रत्ययस्यैककालसभवात् मत्वनेकार्थोपलब्धिरुपपत्स्यते, तत्र यदभिमतमेव, एकस्य ज्ञानमेक चार्थमुपलभते इत्यमुष्य व्याघात । अथ पुन निवृत्ते पूर्वस्मिन्नुत्तरज्ञानोत्पत्ति प्रतिज्ञायते, ननु सर्वथैकार्थमेकमेव ज्ञानमित्यत इदमस्मादन्यदित्येष व्यवहारो न स्यात्, अस्ति च स, तस्मान्न किंचिदेतत्। किं च—

**आपेक्षिकसव्यवहारनिवृत्तेः ॥ ३ ॥** यस्यैकज्ञानमनेकार्थविषय न विद्यते, तस्य मध्यमप्रदेशिन्योर्युगपदनुपलभात्तद्विषयदीर्घह्रस्वव्यवहारो विनिवर्तेत। आपेक्षिकोह्यसौ न वापेक्षास्ति। किं च—

**सशयाभावप्रसगात् ॥ ४ ॥** एकार्थविषयवर्तिनि विज्ञाने स्थाणौ पुरुषे वा प्राक्प्रत्ययजन्म स्यात् नोभयो, प्रतिज्ञातविरोधात्। यदि स्थाणौ पुरुषाभावात्स्थाणुवध्यापुत्रवत् सशयाभाव स्यात्। अथ पुरुषे तथा स्थाणुद्रव्यानपेक्षत्वात्सशयो न स्यात्, तत्पूर्ववत्। नत्वभाव इष्ट, अतोनेकार्थग्राहिविज्ञानकल्पना श्रेयसीति।

किं च–ईप्सितनिष्पत्ति, अनियमात्, विज्ञानस्यैकार्थावलम्बित्वे चित्रकर्मणि निष्णातस्य चैत्रस्य पूर्णकलशमालिखत तत्क्रियाकलशतत्प्रकारग्रहणविज्ञानभेदादितरेतरविषयसक्रमाभावात् अनेकविज्ञानोत्पादनिरोधक्रमे सत्यनियमेन निष्पत्ति स्यात्। दृष्टा तु सा नियमेन सा चैकार्थग्राहिणि विज्ञाने विरुध्यते। तस्मान्नानार्थोऽपि प्रत्ययोऽभ्युपेय।

**द्वित्र्यादिप्रत्ययाभावाच्च** ॥ ५ ॥ एकार्थविषयवर्तिनि विज्ञाने द्वाविमौ इमे त्रय इत्यादि प्रत्ययस्याभाव। यतो नैक विज्ञान द्वित्र्याद्यर्थाना ग्राहकमस्ति।

**सतानसस्कारकल्पनायां च विकल्पानुपपत्ति** ॥ ६ ॥ सताने सस्कारे च कल्प्यमाने विकल्पयोरनुपपत्ति। स सतान सस्कारश्च ज्ञानजातीयो वा स्यादज्ञानजातीयो वा ? यद्यज्ञानजातीयो न तत किंचित्प्रयोजनमस्ति। ज्ञानजातीयत्वेऽपि एकार्थग्राहित्व स्यादनेकार्थग्राहित्व वा ? यद्येकार्थग्राहित्व दोषविधिस्तदवस्थ। अथानेकार्थग्राहित्व ?, प्रतिज्ञा नि प्रसज्यते।

**विधग्रहण प्रकारार्थं** ॥ ७ ॥ विधयुक्तगतप्रकारा समानार्था इति प्रकारार्थो विधशब्द। बहुविध बहुप्रकारमित्यर्थ।

**क्षिप्रग्रहणमचिरप्रतिपत्त्यर्थं** ॥ ८ ॥ अचिरप्रतिपत्ति कथ स्यात् इति ? क्षिप्रग्रहण क्रियते।

**अनि सृतग्रहणमसकलपुद्गलोद्गमार्थं** ॥ ९ ॥ अनि सृतग्रहण क्रियते, असकलपुद्गलोद्गमार्थं।

**अनुक्तमभिप्रायेण प्रतिपत्ते** ॥ १० ॥ अभिप्रायेण प्रतिपत्तिरस्ति, इत्यनुक्तग्रहण क्रियते।

**ध्रुव यथार्थग्रहणात्** ॥ ११ ॥ ध्रुवग्रहण क्रियते, यथार्थग्रहणमस्तीति।

**सेतरग्रहणाद्विपर्ययावरोधः** ॥ १२ ॥ अल्पमल्पविध चिर नि सृतमुक्तमध्रुवमित्येतेषामवरोधो भवति, सेतरग्रहणात्।

**अवग्रहादिसबन्धात्कर्मनिर्देशः** ॥ १३ ॥ बह्वादीनामिति कर्मनिर्देशोऽवग्रहाद्यपेक्षो वेदितव्य।

**बह्वादीनामादौ वचन विशुद्धिप्रकर्षयोगात्** ॥ १४ ॥ ज्ञानावरणक्षयोपशमविशुद्धिप्रकर्षयोगे सति बह्वादीनामवग्रहादयो भवति, इति तेषा ग्रहणमादौ क्रियते।

**ते च प्रत्येकमिंद्रियानिंद्रियेषु द्वादशविकल्पा नेयाः** ॥ १५ ॥ तद्यथा प्रकृष्टश्रोत्रेंद्रियावरण वीर्यांतरायक्षयोपशमागोपागनामोपष्टभात्सभिन्नश्रोतान्यो वा युगपत्ततविततघनसुषिरादिशब्दश्रवणाद्बहुशब्दमवगृह्णाति। अल्पश्रोत्रेंद्रियावरणक्षयोपशमपरिणाम आत्मा, ततशब्दादीनामन्यतममल्प शब्दमवगृह्णाति। प्रकृष्टश्रोत्रेंद्रियावरणक्षयोपशमादिसन्निधाने सति, तताद़िशब्दविकल्पस्य प्रत्येकमेकद्वित्रिचतु सख्येयासख्येयानतगुणस्यानग्राहकत्वात् बहुविधमवगृह्णाति। अल्पविशुद्धिश्रोत्रेंद्रियादिपरिणामकारण आत्मा ततादिशब्दानामेकविधावग्रहणादेकविधमवगृह्णाति। प्रकृष्टश्रोत्रेंद्रियावरणक्षयोपशमादिपरिणामित्वात् क्षिप्र शब्दमवगृह्णाति। अल्पश्रोत्रेंद्रियावरणक्षयोपशमादिपारिणामिकत्वाच्चिरेण शब्दमवगृह्णाति। सुविशुद्धिश्रोत्रादिपरिणामात्साकल्येनानुच्चारितस्य ग्रहणादनि सृतमवगृह्णाति। नि सृत प्रतीत। प्रकृष्टविशुद्धिश्रोत्रेंद्रियादिपरिणामकारणादेकवर्णनिर्गमेऽपि अभिप्रायेणैवानुच्चारित शब्दमवगृह्णाति। इम भवान् शब्द वक्ष्यतीति। अथवा स्वरसचारणात्प्राक्तत्रीद्रव्यातोद्यामर्शनेनैव वादितमनुक्तमेव शब्दमभिप्रायेणावगृह्याऽऽचष्टे भवानिम शब्द वादयिष्यति इति। उक्त प्रतीत। सक्लेशपरिणामनिरुत्सुकस्य यथानुरूपश्रोत्रेंद्रियावरणक्षयोपशमादिपरिणामकारणावस्थितत्वात् यथा प्राथमिक शब्दग्रहण, तथावस्थितमेव शब्दमवगृह्णाति। नोन नाभ्यधिक। पौन पुन्येन सक्लेशविशुद्धिपरिणामकारणापेक्षस्यात्मनो यथानुरूपपरिणामोपात्तश्रोत्रेंद्रियसान्निध्येऽपि तदावरणस्येषदीषदाविर्भावात्पौन पुनिक प्रकृष्टावकृष्टश्रोत्रेंद्रियावरणादिक्षयोपशमपरिणामत्वाच्चाऽध्रुवमवगृह्णाति। शब्द कचिद्बहु कचिदल्प कचिद्बहुविध कचिदेकविध कचित् क्षिप्र कचिच्चिर कचिदनि सृत कचिन्निसृत कचिदुक्त कचिदनुक्त।

आह—बहुबहुविधयोः कः प्रतिविशेषो यावतोभयत्रापि ततादिशब्दग्रहणमविशिष्टमस्ति ? उच्यते, न, विशेषदर्शनात्। यथा कश्चित्, बहूनि शास्त्राणि मौनेन सामान्यार्थेनाविशेषितेन व्याचष्टे न तु बहुभिर्विशेषितार्थैः। कश्चिच्च तेषामेव बहूनां शास्त्राणां बहुभिरर्थैः परस्परातिशययुक्तैर्बहुकल्पैर्व्याख्यानं करोति। तथा ततादिशब्दग्रहणाविशेषेऽपि यत्प्रत्येकं ततादिशब्दानामेकद्वित्रिचतुःसंख्येयाऽसंख्येयाऽनंतगुणपरिणतानां ग्रहणं तद्बहुविधग्रहणं। यत्ततादीनां सामान्यग्रहणं तद्बहुग्रहणं।

आह—उक्तनिःसृतयोः कः प्रतिविशेषः ? । यतः सकलशब्दनिःसरणान्निःसृतमुक्तमप्येवंविधमेव। उच्यते अन्योपदेशपूर्वकं शब्दग्रहणं, उक्तं। गोशब्दोऽयमिति। स्वत एव ग्रहणं निःसृतं। चक्षुषा तु विशुद्धचक्षुरिंद्रियावरणक्षयोपशमपरिणामकारणत्वाच्छुक्लकृष्णरक्तनीलपीतरूपपर्यायं बहुमवगृह्णाति। अल्पं पूर्ववत्। प्रकृष्टविशुद्धिचक्षुरिंद्रियादिक्षयोपशमपरिणामकारणत्वाच्छुक्लादिपंचतयरूपगुणस्य प्रत्येकमेकद्वित्रिचतुःसंख्येयासंख्येयानंतगुणपरिणामिनोऽवग्राहकत्वसामर्थ्याद्बहुविधरूपमवगृह्णाति, एकविधं पूर्ववत्। क्षिप्रचिरयोरप्युक्त एव क्रमः। पंचवर्णवस्त्रकंबलचित्रपटादीनां सकृदेकदेशविषयपंचवर्णग्रहणात्कृत्स्नपंचवर्णेष्वदृष्टेष्वनिःसृतेष्वपि तद्वर्णाविष्करणसामर्थ्यादनिःसृतमवगृह्णाति। अथवा देशांतरस्थपंचवर्णपरिणतैकवस्त्रादिकथनात्साकल्येनाऽकथितस्याप्येकदेशकथनेनैव तत्कृत्स्नपंचवर्णग्रहणादनिःसृतं। निःसृतं प्रतीतं। सुविशुद्धिचक्षुरिंद्रियादिक्षयोपशम आत्मा शुक्लकृष्णादिवर्णमिश्रीकरणदर्शनात्परेणाकथितमपि वर्णमभिप्रायेणैव प्रतिपद्यते। भवानिमं वर्णमेतद्वर्णद्वयमिश्रणात्करिष्यतीत्येवं ग्रहणादनुक्तं रूपमवगृह्णाति। अथवा देशांतरस्थपंचवर्णकद्रव्यकथने ताल्वादिकरणसंश्लेषात्प्राक् सकृदप्यकथितमेव द्रव्यमाचष्टे भवानेवं विधमस्माकं पंचवर्णं व्यतिकरिष्यतीत्यनुक्तं रूपमवगृह्णाति। परकीयाभिप्रायानपेक्षमात्मीयचक्षुरिंद्रियपरिणामसामर्थ्यादेवोक्तं रूपमवगृह्णाति। संक्लेशपरिणामनिरुत्सुकस्य यथानुरूपं चक्षुरिंद्रियावरणक्षयोपशमपरिणामकारणावस्थितत्वाद्यथा प्राथमिकं रूपग्रहणं तथावस्थितमेव रूपमवगृह्णाति। नोनं नाभ्यधिकं। पौनःपुन्येन संक्लेशविशुद्धिपरिणामापेक्षस्याऽऽत्मनो यथानुरूपपरिणामोपात्तचक्षुरिंद्रियसान्निध्येपि तदावरणस्येषदीषदाविर्भावात् पौनःपुनिकं प्रकृष्टावकृष्टचक्षुरिंद्रियावरणक्षयोपशमपरिणामकारणत्वाच्चाध्रुवमवगृह्णाति रूपं। क्वचिद्बहु क्वचिदल्पं क्वचिद्बहुविधं, क्वचिदेकविधं, क्वचित् क्षिप्रं, क्वचिच्चिरेण, क्वचिदनिःसृतं, क्वचिन्निःसृतं, क्वचिदनुक्तं। क्वचिदुक्तं, एवं घ्राणाद्यवग्रहेष्वपि योज्यं। तथेहावायधारणा अपि बह्वादिभिः सेतरैरवसेयाः। कश्चिदाह—श्रोत्रघ्राणस्पर्शनरसनचतुष्टयस्य प्राप्यकारित्वादनिःसृतानुक्तशब्दाद्यवग्रहेहावायधारणा न युक्ता। इत्युच्यते—अप्राप्तत्वात्। कथं ? पिपीलिकादिवत्। यथा पिपीलिकादीनां घ्राणरसनदेशाप्राप्तेपि गुडादिद्रव्ये गंधरसज्ञानं, तच्च येष्व यावद्भिश्चास्मदाद्यप्रत्यक्षसूक्ष्मगुडावयवैः पिपीलिकादिघ्राणरसनेंद्रिययोः परस्परानपेक्षावृत्तिस्ततो न दोषः।

**अस्मदादीनां तदभाव इति चेन्न श्रुतापेक्षत्वात्** ॥ १६ ॥ यथा भूगृहसंवर्धितोत्थितस्य पुंसश्चक्षुरादिभिरवभासितेष्वपि घटादिषु घटोयं रूपमिदमित्यादि यद्विशेषपरिज्ञानं तच्छ्रुतापेक्षं परोपदेशापेक्षत्वात्। तथास्मदादीनामप्यनिःसृतानुक्तमपि ज्ञानविकल्पशब्दाद्यवग्रहादिज्ञानं तच्छ्रुतापेक्षं। किं च—

**लब्ध्यक्षरत्वात्** ॥ १७ ॥ श्रुतज्ञानप्रभेदप्ररूपणायां लब्ध्यक्षरश्रुतकथनं षोढा प्रविभक्तं। तद्यथा—चक्षुःश्रोत्रघ्राणरसनस्पर्शनमनोलब्ध्यक्षरमित्यार्ष उपदेशः। अतश्चक्षुःश्रोत्रघ्राणरसनस्पर्शनेंद्रियमनोलब्ध्यक्षरसान्निध्यादेतत्सिध्यति, अनिःसृतानुक्तानामपि शब्दानां अवग्रहादिज्ञानं। यद्यवग्रहादयो बह्वादीनां कर्मणामाक्षेप्तारो बह्वादीनि पुनर्विशेषणानि कस्य ?, इत्यत आह—

## अर्थस्य ॥ १७ ॥

चक्षुरादिविषयोर्थस्तस्य बह्वादिविशेषणविशिष्टस्याऽवग्रहादयो भवंति।

**इयर्ति पर्यायानर्यते वा तैरित्यर्थो द्रव्यं** ॥ १ ॥ प्रत्यात्मसंबंधिनः पर्यायानुभयानिमित्तवशादुत्पत्तिप्रत्यागूर्णानियर्ति गच्छत्यर्यते गम्यते वा तैरित्यर्थः. कः ? पुनरसौ ? द्रव्यं। किमर्थमिदमुच्यते—

**अर्थवचन गुणग्रहणनिवृत्त्यर्थं** ॥ २ ॥ केचिद्रूपादयो गुणा एवेंद्रिये संनिकृष्यते। ततस्तद्ग्रहणमिति मन्यते। तन्मतनिवृत्त्यर्थमर्थस्येत्युच्यते। न हि ते रूपादयो गुणा अमूर्ता इंद्रियसंनिकर्षमापद्यते इति। तत्प्रचयविशेषे सति संनिकर्षसमय? । इति चेन्न, गुणादीना प्रचयानुपपत्तेः। सत्यपि वा प्रचयेऽर्थांतर प्रादुर्भावाभावात् सूक्ष्मात्स्थानतिक्रमादग्रहणमेवैषा स्यात्। न तर्हीदानीमिद भवति रूप मया दृष्ट गंधो वा घ्रात? इति। भवति च। अर्थग्रहणात् तदव्यतिरेकात्तेषामपि ग्रहणोपपत्ते ।

**तेषु सत्सु मतिज्ञानात्मलाभात्सप्तमीप्रसंग** ॥ ३ ॥ यतो विषयेषु सत्सु मतिज्ञानमाविर्भवति अतोऽर्थे इति वाच्य। न, अनेकांतात्। नायमेकांतोऽस्ति सत्यर्थे मतिज्ञान भवतीति। यत सत्यप्यर्थेऽजनितलभवन सभूतस्य कुमारस्योत्तीर्णमात्रस्य घटरूपादिमतिज्ञानाभाव । अथवा नायमेकांतोऽस्त्यधिकरणस्य सत्वात्सप्तमीप्रसग इति। कस्मात्तस्याविवक्षितत्वात्। विवक्षावशाद्धि कारकाणि भवति।

**क्रियाकारकसंबंधस्य विवक्षितत्वात्** ॥ ४ ॥ अवग्रहादय क्रियाविशेषा उक्तास्तेषामवश्य केन चित् कर्मणा भवितव्यमिति बह्वादिविकल्पस्यार्थस्येत्युच्यते।

**बह्वादिसामानाधिकरण्याद्बहुत्वप्रसंग** ॥ ५ ॥ यतो बह्वादिरेवार्थ नातोऽन्यस्ततो बह्वादिसामानाधिकरण्यादर्थानामिति बहुत्व प्राप्नोति ?

**न वानभिसंबंधात्** ॥ ६ ॥ न वैष दोष.। किं कारण ?, अनभिसंबंधात्। नह्यस्य बहुत्वादिभिरभिसंबंध क्रियते। केन तर्हि ?

**अवग्रहणादिभिः** ॥ ७ ॥ कस्येत्युक्तेऽर्थस्येतीह संबध्यते। तद्विशेषण बह्वादिग्रहण।

**सर्वस्य वाऽर्यमाणत्वात्** ॥ ८ ॥ अथवा सर्वस्यार्यमाणस्यार्थत्वमतो जातिप्रधानत्वान्निर्देशस्यार्थस्येत्येकत्वनिर्देशो युक्त ।

**प्रत्येकमभिसंबंधाद्वा** ॥ ९ ॥ अथवा प्रत्येकमभिसंबंध क्रियते। बहोरर्थस्य बहुविधस्यार्थस्येति।

किममी अवग्रहादय सर्वस्येंद्रियानिंद्रियार्थस्य भवत्युत कश्चिद्विषयविशेषोऽस्ति ?, इत्यत आह—

## व्यंजनस्यावग्रहः ॥ १८ ॥

व्यंजनमव्यक्त शब्दादिजात। तस्यावग्रहो भवति किमर्थमिद ? नियमार्थं। अवग्रह एव नेहादय इति। स तर्ह्येवकार कर्तव्य ?

**न वा सामर्थ्यादवधारणप्रतीतेरब्भक्षवत्** ॥ १ ॥ न वा कर्तव्य । किं कारण ?, सामर्थ्यादवधारणप्रतीते । कथ ? अब्भक्षवत्। यथा न कश्चिदपो न भक्षयतीति सामर्थ्यादवधारण प्रतीयते, अप एव भक्षयतीति। तथा सर्वेषामवग्रहादीनां प्रसिद्धौ अवग्रहवचनमवधारणार्थं नि[illegible]यते।

**स्यादेतद्व्यंजनार्थयोरभेदो ग्रहणाविशेषादिति चेन्न व्यक्ताव्यक्तभेदादभिनवशरावत्** ॥ २ ॥ स्यादेत-
तयोरर्थावग्रहव्यंजनावग्रहयोर्नास्तिभेद', ग्रहणाविशेषात्। न हि शब्दादिग्रहण प्रति विशेषोऽस्तीति। तन्न किं कारण? व्यक्ताव्यक्तभेदात्। व्यक्तग्रहणमर्थावग्रह । अव्यक्तग्रहण व्यंजनावग्रह। कथ ? अभिनवशरावत्। यथा सूक्ष्मजलकणद्वित्रिसिक्त शरावोऽभिनवो नार्द्रो भवति। स एव पुन पुन सिच्यमान शनैस्तिम्यति। तथात्मन शब्दादीना व्यक्तग्रहणात्प्राक् व्यंजनावग्रह । व्यक्तग्रहणमर्थावग्रह ।

सर्वेंद्रियाणामविशेषेण व्यंजनावग्रहप्रसंगे यत्रासंभवस्तदर्थं प्रतिषेधमाह—

## न चक्षुरनिंद्रियाभ्यां ॥ १९ ॥

चक्षुषा अनिंद्रियेण च व्यंजनावग्रहो न भवति। कुत ?

**व्यंजनावग्रहाभावश्चक्षुर्मनसोरप्राप्यकारित्वात्** ॥ १ ॥ यतोऽप्राप्तमर्थमविदिक युक्त संनिकर्षविषयेऽवस्थित बाह्यप्रकाशाभिव्यक्तमुपलभते। चक्षुर्मनश्चाऽप्राप्त, ततो नानयोर्व्यंजनावग्रहोऽस्ति।

१ सप्तम्यंतमित्यर्थ ।

**इच्छामात्रमिति चेन्न सामर्थ्यात् ॥ २ ॥** स्यादेतदिच्छामात्रमिदमासार्थावग्राहि चक्षुरिति, तन्न किं कारण ? सामर्थ्यात्। कथ सामर्थ्यं ?

**आगमतो युक्तितश्च ॥ ३ ॥** आगमस्तावत्—गाथा

पुट्ठ सुणोदि सद्द अपुट्ठ पुणवि पस्सदे रूव । गध रस च पास पुट्ठ पुट्ठ विजाणादि ॥ इति

युक्तितोपि अप्राप्यकारि चक्षु स्पृष्टानवग्रहात्। यदि प्राप्यकारि स्यात्, त्वगिंद्रियवत्स्पृष्टमजन गृह्णीयात्। न च गृह्णात्यतो मनोवदप्राप्यकारीत्यवसेय। अत्र केचिदाहु., प्राप्यकारि चक्षुरावृतानवग्रहात् त्वगिंद्रियवदिति। अत्रोच्यते—काचाभ्रस्फटिकावृतार्थावग्रहे सत्यव्यापकत्वादसिद्धो हेतु। वनस्पतिचैतन्ये स्वापवत्। तथा सशयहेतु, अप्राप्यकारिण्ययस्कातोपले साध्यविपक्षेपि दर्शनादिति। भौतिकत्वात्प्राप्यकारि चक्षुरग्निवदिति चेन्न। अयस्कातेनैव प्रत्युक्तत्वात्। बाह्येंद्रियत्वात्प्राप्यकारि चक्षुरिति चेन्न। द्रव्येंद्रियोपकरणस्य भावेंद्रियस्य प्राधान्यात्। अप्राप्यकारित्वे व्यवहितातिविप्रकृष्टग्रहणप्रसग इति चेन्न अयस्कातेनैव प्रत्युक्तत्वात्। अयस्कातोपलमप्राप्य लोहमाकर्ष्यदपि न व्यवहितमाकर्षति नातिविप्रकृष्टमिति। सशयावस्थमेतदित्यप्राप्यकारित्वे सशयविपर्ययभाव इति चेत्, तत्प्राप्यकारित्वेपि, तदविशेषात्। कश्चिदाह—रश्मिवच्चक्षु, तैजसत्वात्तस्मात्प्राप्यकारीत्यग्निवदित्येतच्चायुक्तमनभ्युपगमात्। न हि वयमभ्युपगच्छामस्तैजस चक्षुरिति। तेजोलक्षणमौष्ण्यमिति कृत्वा चक्षुरिंद्रियस्थानमुष्ण स्यात्। न च तद्देश स्पर्शनेंद्रियमुष्णस्पर्शोपलभि दृष्टमिति। इतश्चातैजस चक्षुर्भासुरत्वानुपलब्धे। अदृष्टवशादनुष्णाभासुरत्वमिति चेन्नादृष्टस्य गुणत्वात्, अक्रियस्य भानस्य भावनिग्रहासामर्थ्यात्। नक्तचररश्मिदर्शनाद्रश्मिवच्चक्षुरिति चेन्नातैजसोपि पुद्गलद्रव्यस्य भासुरत्वपरिणामोपपत्तेरिति। किं च—गतिमद्वैधर्म्यादिह यद्गतिमद्भवति न तत्सनिकृष्टविप्रकृष्टावभिन्नकाल प्राप्नोति। न च तथा चक्षु। चक्षुर्हि शाखाचद्रमसामभिन्नकालमुपलभते, यावता कालेन शाखा प्राप्नोति तावता चद्रमसमिति स्पष्ट गतिमद्वैधर्म्यं तस्मान्न गतिमच्चक्षुरिति। यदि च प्राप्यकारि चक्षु स्यात्तमिस्राया रात्रौ दूरेऽग्नौ प्रज्वलति समीपगतद्रव्योपलभन भवति कुतोनातरालगतद्रव्यालोचन। प्रकाशाभावादिति चेन्न तैजसत्वादग्न्यादिवत् सहायातरापेक्षत्वप्रसगात्। किं च यदि प्राप्यकारि चक्षु स्यात्सातराधिकग्रहण न प्राप्नोति। नहींद्रियाणा निरतरे विषये गधादौ सातरग्रहण दृष्ट। नाप्यधिकग्रहण। अथ मत बहिरधिष्ठानाद्वृत्तिरिंद्रियस्य अत उपपन्न तद्विषयस्य सातराधिकग्रहणमिति तदयुक्त—यस्मान्न वहिरधिष्ठानादिंद्रिय तत्र चिकित्सादिदर्शनादन्यथाधिष्ठानपिधानेपि ग्रहणप्रसगो मनसश्चाबहिर्भावात्। मनसाधिष्ठित हि इद्रिय स्वविषये व्याप्रियते न च मनोबहिरधिष्ठानमस्ति तदभावादग्रहणप्रसग अनुवृत्तौ च सभवाभावाद्विप्रकीर्ण चक्षूरश्मिसमूह, कथमणुमनोधिष्ठस्येति। कश्चिदाह—श्रोत्रमप्राप्यकारि विप्रकृष्टविषयग्रहणादिति। एतच्चायुक्त असिद्धत्वात्। साध्य तावदेतद्विप्रकृष्ट शब्द गृह्णाति श्रोत्र ? उतघ्राणेंद्रियवदवगाढ स्वविषयभावपरिणत पुद्गलद्रव्य गृह्णातीति ? विप्रकृष्टशब्दग्रहणे च स्वकर्णातर्बिलगतमशकशब्दो नोपलभ्यते नहींद्रिय किंचिदेक दूरस्पष्टविषयग्राहि दृष्टमिति। आकाशगुणत्वाच्छब्दस्य स्पर्शवद्गुणत्वाभाव इति चेन्नाऽमूर्तगुणस्यात्मगुणवदिंद्रियविषयत्वादर्शनादिति। प्राप्तावग्रहे श्रोत्रस्य दिग्देशभेदविशिष्टविषयग्रहणाभाव इति चेन्न शब्दपरिणतविसर्पत्पुद्गलवेगशक्तिविशेषस्य तथाभावापत्ते। सूक्ष्मत्वाप्रतिघातात्समतत प्रवेशाच्च। सिद्धमेतच्चक्षुर्मनसी वर्जयित्वा शेषाणामिंद्रियाणा व्यजनावग्रह। सर्वेषामिंद्रियाणामर्थावग्रह इति।

**मनसोऽनिंद्रियव्यपदेशाभाव स्वविषयग्रहणे करणांतरानपेक्षत्वाच्चक्षुर्वत् ॥ ४ ॥** यथा चक्षूरूपग्रहणे करणातर नापेक्षत इति इद्रियव्यपदेश लभते तथा मनोपि गुणदोषविचारादिस्वव्यापारे करणातर नापेक्षत इतींद्रिय प्राप्नोति नानिंद्रियमिति।

**न वाप्रत्यक्षत्वात् ॥५॥** नैष दोष किं कारण ? अप्रत्यक्षत्वात्। यथा चक्षुरादिपरस्परस्यैंद्रियकत्वाप्रत्यक्ष न तथा मन ऐंद्रियक। कुत ? सूक्ष्मद्रव्यपरिणामात्तस्मादनिंद्रियमित्युच्यते। अत्राह—कथमवगम्यते प्रत्यक्ष तदस्तीति ?

**अनुमानात्तस्याधिगम ॥ ६ ॥** अप्रत्यक्षाणामप्यर्थानां लोकेऽनुमानादधिगतिर्दृष्टा, यथा, आदित्यस्य गति । वनस्पतीनां च वृद्धिह्रासौ । तथा मनसोऽप्यस्तित्वमनुमानादवगम्यते । कोऽसावनुमान ?

**युगपज्ज्ञानक्रियानुत्पत्तिर्मनसो हेतु ॥ ७ ॥** सत्सु चक्षुरादिकरणेषु शक्तिमत्सु च बाह्येषु रूपादिषु, सति चानेकस्मिन् प्रयोजने, यतो ज्ञानानां क्रियाणां च युगपदनुत्पत्ति , तदस्ति मन इत्यनुमीयते ।

**अनुस्मरणदर्शनाच्च ॥ ८ ॥** यत सकृद्दृष्ट श्रुत वानुस्मर्यते । अतस्तद्दर्शनात्तदस्तित्वमवसेय । अत्राह—एकस्यात्मन कुत करणभेद ?

**एकस्वभावस्यापि करणभेदोऽनेककलाकुशलदेवदत्तवत् ॥ ९ ॥** यथा अनेकज्ञानक्रियाशक्तियुक्तस्यापि देवदत्तस्य करणभेदो दृश्यते । चित्रकर्मणि वर्तमानस्य वर्तिकालेखनीकूर्चिकाद्युपकरणापेक्षा । काष्ठकर्मणि वर्तमानस्य वासीघटमुखवृक्षादानादिकरणापेक्षा । तथात्मनोऽपि क्षयोपशमभेदात् ज्ञानक्रियापरिणामशक्तियुक्तस्य चक्षुराद्यनेककरणापेक्षा न विरुध्यते ।

**स नामकर्मसामर्थ्यात् ॥ १० ॥** स एव करणभेद नामकर्मसामर्थ्याद्वेदितव्य । कथ इह यदेतच्छरीरनामकर्मोदयापादित यवनालिकासस्थान श्रोत्रेन्द्रिय, एतदेव शब्दोपलब्धिसहिष्णु नेतराणि । तथा यदेतद् घ्राणेन्द्रिय अतिमुक्तकचन्द्रकसस्थान, एतदेव गन्धावगमसमर्थं नेतराणि । तथा यदेतज्जिह्वेन्द्रिय क्षुरप्राकृति, एतदेव रसावगमे नान्यानि । तथा यदेतत्स्पर्शनेन्द्रियमनेकाकृति तदेव स्पर्शोपलम्भने नेतराणि । तथा यदेतच्चक्षुरिन्द्रिय मसूरिकाकार कृष्णताराधिष्ठान, तदेव रूपाविष्करणेऽल नेतराणि । इत्येवमाभिनिबोधिक द्रव्यक्षेत्रकालभावैरवसेय । द्रव्यतो मतिज्ञानी सर्वद्रव्याण्यसर्वपर्यायाण्युपदेशेन जानाति । क्षेत्रत उपदेशेन सर्वक्षेत्राणि जानाति । अथवा क्षेत्र विषय । चक्षुष क्षेत्र सप्तचत्वारिंशद्योजनसहस्राणि त्रिषष्ट्यधिके च द्वे योजनशते योजनस्य चैकविंशतिषष्टिभागा । श्रोत्रस्य क्षेत्र द्वादशयोजनानि । घ्राणरसनस्पर्शनानां नवयोजनानि । कालत उपदेशेन सर्वकाल जानाति । भावत उपदेशेन जीवादीनामौदयिकादीन् भावान् जानाति । तत्सामान्यादेक, इन्द्रियानिन्द्रियभेदाद्द्विधा, अवग्रहादिभेदाच्चतुर्धा, तैरिन्द्रियगुणितैश्चतुर्विंशतिविध, तैरेव व्यजनावग्रहाधिकैरष्टाविंशतिविध । तैरेव मूलभगाधिकैर्द्रव्यादिसहितैर्वा द्वात्रिंशद्विध । त एते प्रयोविकल्पा बह्वादिभि षड्भिरितरानपेक्षैर्गुणिताश्चतुश्चत्वारिंशच्छत, अष्टषष्ठ्युत्तर शत, द्वानवत्यधिक शतमिति च भवति । त एव बह्वादिभिर्द्वादशगुणिता द्वे शते अष्टाशीत्युत्तरे, त्रीणिशतानि षट्त्रिंशानि, चतुरशीत्यधिकानि त्रीणिशतानि च भवति । आह—व्यजनावग्रह बह्वाद्यभाव कस्मात् ? अव्यक्तत्वात् । उच्यते, अवग्रहवत् तत्सिद्धि । यथाऽव्यक्तग्रहणमवग्रहस्तथा बह्वादिविकल्पोऽव्यक्तरूपेणैव वेदितव्य । अथानि सूते कथ ? तत्रापि ये च यानतश्च पुद्गला सूक्ष्माणि सूता सति, सूक्ष्मास्तु साधारणैर्न गृह्यते ? तेषामिन्द्रियस्थानावगाहन अनि सूत व्यजनावग्रह । परोक्षद्वैविध्ये सत्युपक्लृप्तलक्षणविकल्पमतिज्ञानविधर्मि, यद् द्वितीयमुपदिष्ट तत्किंनिमित्त कतिविध च ? इत्युच्यते—

## श्रुतं मतिपूर्वं द्व्यनेकद्वादशभेद ॥ २० ॥

**श्रुतशब्दो जहत्स्वार्थवृत्ती रूढिवशात् कुशलशब्दवत् ॥ १ ॥** यथा कुशलशब्द कुशलवनक्रिया प्रतीत्य व्युत्पादित तद्वित्वा सर्वत्र पर्यवदाते वर्तते । तथा श्रुतशब्दोऽपि श्रवणमुपादाय व्युत्पादितो रूढिवशात् कस्मिंश्चिज्ज्ञानविशेषे वर्तते ।

**कार्यमतिपालनात् पूरणाद्वा पूर्वं कारण ॥ २ ॥** कार्यं पालयति पूरयतीति वा पूर्वं कारण लिंग निमित्तमित्यनर्थान्तर । मतिज्ञान व्याख्यात तत्पूर्वमस्येति । पूर्व, मतिकारणकमित्यर्थ ।

**मतिपूर्वकत्वे श्रुतस्य तदात्मकत्वप्रसगो घटवत्, अतदात्मकत्वे वा तत्पूर्वकत्वाभाव ॥३॥** कश्चिदाह मतिपूर्वं श्रुत तदपि मत्यात्मक प्राप्नोति । कारणगुणानुविधान हि कार्यं दृष्ट । यथा मृन्निमित्तो घटो मृदात्मक । अथाऽतदात्मकत्वमिष्यते तत्पूर्वकत्व तर्हि तस्य हीयते इति ।

१ कुशा लुनातीत्यर्थ ।

**न वा निमित्तमात्रत्वाद्दंडादिवत्** ॥ ४ ॥ न वैष दोष । किं कारण ? निमित्तमात्रत्वाद्दडादिवत् । यथा मृद स्वयमंतर्घटभवनपरिणामाभिमुख्ये, दण्डचक्रपौरुषेयप्रयत्नादिनिमित्तमात्र भवति । यत सत्स्वपि दडादिनिमित्तेषु शर्करादिप्राचितो मृत्पिंड स्वयमतर्घटभवनपरिणामनिरुत्सुकत्वान्न घटीभवति । अतो मृत्पिंड एव बाह्यदडादिनिमित्तापेक्ष आभ्यतरपरिणामसान्निध्याद् घटो भवति, न दडादय, इति दडादीनां निमित्तमात्रत्व । तथा पर्यायिपर्याययो स्यादन्यत्वादात्मन, स्वयमत श्रुतभवनपरिणामाभिमुख्ये मतिज्ञान निमित्तमात्र भवति । यत सत्यपि सम्यग्दृष्टे श्रोत्रेंद्रियबलाधाने बाह्याचार्यपदार्थोपदेशसनिधाने च श्रुतज्ञानावरणोदयवशीकृतस्य स्वयमत श्रुतभवननिरुत्सुकत्वादात्मनो न श्रुत भवति । ततो बाह्यमतिज्ञानादिनिमित्तापेक्ष आत्मा, एव, अभ्यतरश्रुतज्ञानावरणक्षयोपशमापादितश्रुतभवनपरिणामाभिमुख्याच्छ्रुती भवति । न मतिज्ञानस्य श्रुतभवनमस्ति, तस्य निमित्तमात्रत्वात् ।

**अनेकांताच्च** ॥ ५ ॥ नायमेकातोस्ति, कारणसदृशमेव कार्यमिति । कुतस्तत्रापि सप्तभगीसभवात्, कथ [१] घटवत् । यथा घट कारणेन मृत्पिंडेन स्यात्सदृश, स्यान्न सदृश इत्यादि । इति मृद्द्रव्याजीवानुपयोगाद्यादेशात्स्यात्सदृश । पिंडघटसस्थानादिपर्यायादेशान्न सदृश । पूर्ववदुत्तरे भगा नेतव्या । यस्यैकातेन कारणानुरूप कार्य, तस्य घटपिंडशिविकादिपर्याया न उपलभ्यते । किं च—घटेन जलधारणादिव्यापारो न क्रियेत मृत्पिंडे तददर्शनात । अपि च मृत्पिंडस्य घटत्वेन परिणामवद्, घटस्यापि घटत्वेन परिणाम स्यात्, एकातसदृशत्वात्, नचैव भवति । अतो नैकातेन कारणसदृशत्व । तथा श्रुत सामान्यादेशात्स्यात्कारणसदृश यतो मतिरपि, ज्ञान, श्रुतमपि । अव्यवहिताभिमुखग्रहणनानाप्रकारार्थप्ररूपणसामर्थ्यादिपर्यायादेशात्स्यान्न कारणसदृश । पूर्ववदुत्तरे भगा नेतव्या ।

**श्रोत्रमतिपूर्वस्यैव श्रुतत्वमसंगस्तदर्थत्वादिति चेन्नोक्तत्वात्** ॥ ६ ॥ स्यादेतच्छ्रोत्रमतिपूर्वस्यैव श्रुतत्व प्राप्नोति । कुत ? तदर्थत्वात् । श्रुत्वावधारणाद्धि श्रुतमित्युच्यते । तेन चक्षुरादिमतिपूर्वकस्यैव श्रुतत्व न प्राप्नोति । तन्न किं कारण ? उक्तत्वात् । उक्तमेव श्रुतशब्दोय रूढिशब्द इति । रूढिशब्दाश्च स्वोत्पत्तिक्रियानपेक्षा प्रवर्तत, इति सर्वमतिपूर्वस्य श्रुतत्वसिद्धिर्भवति ।

**आदिमतोऽतवत्त्वाच्छ्रुतस्याऽनादिनिधनत्वानुपपत्तिरिति चेन्न द्रव्यादिसामान्यापेक्षया तत्सिद्धेः** ॥ ७ ॥ स्यादेतच्छ्रुतस्याऽऽदिमत्वमभ्युपगत, मतिपूर्वमिति वचनात् । आदिमतश्च लोकेऽतवत्त्व दृष्ट । तत आद्यतसभवादनादिनिधन श्रुतमिति व्याहन्यते । ततश्च पुरुषकृतित्वादप्रामाण्य स्यादिति । नैष दोष । द्रव्यादिसामान्यापेक्षया तत्सिद्धि । द्रव्यक्षेत्रकालभावाना विशेषस्याविवक्षाया श्रुतमनादिनिधनमित्युच्यते । न हि केनचित्पुरुषेण क्वचित् कदाचित्कथचिदुत्प्रेक्षितमिति । तेषामेव विशेषापेक्षया आदिरतश्च सभवतीति मतिपूर्वमित्युच्यते । यथाकुरो बीजपूर्वक । स च सतानापेक्षयानादिनिधन इति । न वा पुरुषकृतित्वमप्रामाण्यकारण चौर्याद्युपदेशस्यास्मर्यमाणकर्तृकस्य प्रामाण्यप्रसगात् । अनित्यस्य च प्रत्यक्षादे प्रामाण्ये को विरोध ।

**सम्यक्त्वोत्पत्तौ युगपन्मतिश्रुतोत्पत्तेर्मतिपूर्वकत्वाभाव इति चेन्न सम्यक्त्वस्य तदपेक्षत्वात्** ॥ ८ ॥ स्यान्मत मत्यज्ञानश्रुताज्ञानयो प्रथमसम्यक्त्वोत्पत्तौ युगपज्ज्ञानपरिणामान्मतिपूर्वकत्व श्रुतस्य नोपपद्यत इति । तन्न किं कारण सम्यक्त्वस्य तदपेक्षत्वात् । तयोर्हि सम्यक्त्व, सम्यग्दर्शनोत्पत्तौ युगपद्भवति । आत्मलाभस्तु क्रमवान्, इति मतिपूर्वकत्व युक्त, पितापुत्रवत् ।

**मतिपूर्वकत्वाविशेषाच्छ्रुताविशेष इति चेन्न कारणभेदात्तद्भेदसिद्धेः** ॥ ९ ॥ स्यादेतत्सर्वेषां प्राणिना श्रुतमविशिष्ट प्राप्नोति । कुत ? कारणाविशेषात् । मतिपूर्वत्व हि कारणमिष्ट, तच्च सर्वेषामविशिष्टमिति । तन्न किं कारण कारणभेदात्तद्भेदसिद्धे । प्रतिपुरुष हि मतिश्रुतावरणक्षयोपशमो बहुधा भिन्नस्तद्भेदाद्बाह्यनिमित्तभेदाच्च श्रुतस्य प्रकर्षाप्रकर्षयोगो भवति, मतिपूर्वकत्वाविशेषेपि ।

---

१ उपलभेरन्, इत्यपिपाठ. । २ कथंचित्कारणसदृश ।

**श्रुताच्छ्रुतप्रतिपत्तेर्लक्षणाव्याप्तिरिति चेन्न तस्योपचारतो मतित्वसिद्धेः ॥ १० ॥** स्यान्मत, यदा शब्दपरिणतपुद्गलस्कधादाहितवर्णपदवाक्यादिभावाच्चक्षुरादिविषयाच्चाऽऽद्यश्रुतविषयभावमापन्नादविनाभाविन कृतसंगतिर्जनो घटाज्जलधारणादिकार्य सबध्यतर प्रतिपद्यते । धूमादेर्वाग्न्यादिद्रव्य । तदा श्रुताच्छ्रुतप्रतिपत्तिरिति कृत्वा मतिपूर्वलक्षणमव्यापीति । तन्न किं कारण ? तस्योपचारतो मतित्वसिद्धे. । मतिपूर्वं हि श्रुत कश्चिन्मतिरित्युपचर्यते । अथवा व्यवहिते पूर्वशब्दो वर्तते । तद्यथा पूर्वं मथुराया. पाटलीपुत्रमिति । तत. साक्षान्मतिपूर्व परपरया वा मतिपूर्वमपि मतिपूर्वग्रहणेन गृह्यते ।

**भेदशब्दस्य प्रत्येक परिसमाप्तिर्भुजिवत् ॥ ११ ॥** यथा देवदत्तजिनदत्तगुरुदत्ता भोज्यतामिति भुजि प्रत्येक परिसमाप्यते । तथेहापि भेदशब्द प्रत्येकमभिसबध्यते । द्विभेदमनेकभेद द्वादशभेद चेति ।

**तत्रागमविष्टमगबाह्य चाति द्विविधमगप्रविष्टमाचारादिद्वादशभेद बुद्ध्यतिशयर्द्धियुक्तगणधरानुस्मृतग्रथरचन ॥१२॥** भगवदर्हत्सर्वज्ञहिमवन्निर्गतवाग्गंगाऽर्थविमलसलिलप्रक्षालितांत करणैर्बुद्ध्यतिशयर्द्धियुक्तैर्गणधैररनुस्मृतग्रथरचन, आचारादिद्वादशविधमगप्रविष्टमित्युच्यते । तद्यथा–आचार , सूत्रकृत, स्थान, समवायो, व्याख्याप्रज्ञप्ति , ज्ञातृधर्मकथा, उपासकाध्ययन, अतकृद्दश, अनुत्तरौपपादिकदश, प्रश्नव्याकरण, विपाकसूत्र, दृष्टिवाद, इति । आचारे, चर्याविधान शुद्ध्यष्टकपचसमितिगुप्तिविकल्प कथ्यते । सूत्रकृते, ज्ञानविनयप्रज्ञापना कल्प्याकल्प्यच्छेदोपस्थापना व्यवहारधर्मक्रिया प्ररूप्यते । स्थाने, अनेकाश्रयाणामर्थाना निर्णय क्रियते । समवाये, सर्वपदार्थाना समवायश्चिंत्यते । स चतुर्विध द्रव्यक्षेत्रकालभावविकल्पै । तत्र धर्माधर्मास्तिकायलोकाकाशैकजीवानां तुल्या सख्येयप्रदेशत्वादेकेन प्रमाणेन द्रव्याणां समवायनाद् द्रव्यसमवाय । जबूद्वीपसर्वार्थसिद्ध्यप्रतिष्ठाननरकनदीश्वरैकवापीना तुल्ययोजनशतसहस्रविष्कम्भप्रमाणेन क्षेत्रसमवायनात् क्षेत्रसमवाय । उत्सर्पिण्यवसर्पिण्योस्तुल्यदशसागरोपमकोटाकोटीप्रमाणात् कालसमवायनात्कालसमवाय । क्षायकसम्यक्त्वकेवलज्ञानकेवलदर्शनयथाख्यातचारित्राणां योभाव तदनुभवस्य तुल्यानतप्रमाणत्वाद्भावसमवायनाद् भावसमवाय । व्याख्याप्रज्ञप्तौ, षष्टिव्याकरणसहस्राणि, किमस्तिजीव , ? नास्ति ? इत्येवमादीनि निरूप्यते । ज्ञातृधर्मकथाया, आख्यानोपाख्यानां बहुप्रकाराणा कथनं । उपासकाध्ययने, श्रावकधर्मलक्षणं । ससारस्यात कृतो यैस्तेंतकृत नमिमतगसोमिलरामपुत्रसुदर्शनयमवाल्मीकवलीकनिष्कबलपालांबष्टपुत्रा इत्येते दश वर्धमानतीर्थकरतीर्थे । एवमृषभादीना त्रयोविंशतेस्तीर्थेष्वन्येऽन्ये च दश दशानगारा दारुणानुपसर्गान्निर्जित्य कृत्स्नकर्मक्षयादतकृत दश, अस्यां वर्ण्यते इति अतकृद्दश अथवा,अतकृता दश, अतकृद्दश तस्यामर्हदाचार्यविधि सिध्यतां च । उपपादो जन्म प्रयोजन येषां त इमे औपपादिका , विजयवैजयतजयतापराजितसर्वार्थसिद्धाख्यानि पचानुत्तराणि । अनुत्तरेष्वौपपादिका अनुत्तरोपपादिका । ऋषिदास-धन्य-सुनक्षत्र-कार्तिक-नंद-नदन-शातिभद्र-अभय वारिषेण-चिलातपुत्रा इत्येते दश वर्धमानतीर्थकरतीर्थे । एवमृषभादीना त्रयोविंशतेस्तीर्थेष्वन्येऽन्ये च दश दशानगारा दश दश दारुणानुपसर्गान्निर्जित्य विजयाद्यनुत्तरेषूत्पन्ना इत्येवमनुत्तरौपपादिका दशास्या वर्ण्यत इत्यनुत्तरौपपादिकदश । अथवानुत्तरौपपादिकानां दश अनुत्तरौपपादिकदश तस्यामायुर्वैक्रियिकानुबधविशेष । आक्षेपविक्षेपैर्हेतुनयाश्रितानां प्रश्नानां व्याकरण, प्रश्नव्याकरण तस्मिंल्लौकिकवैदिकानामर्थाना निर्णया । विपाकसूत्रे सुकृतदुष्कृतानां विपाकश्चिंत्यते । द्वादशमग दृष्टिवाद इति कौत्कलकाडे विद्धि । कौशिक-हरिश्मश्रु माछपिक रोमसहारीत मुडाश्वलायलादीनां क्रियावाददृष्टीनामशीतिशत । मरीच-कुमार-कपिलोलूक-गार्ग्य-व्याघ्रभूति-वाद्वालिमाठर-मौद्गल्यायनादीनामक्रियावाददृष्टीना चतुरशीति । शकल्य-वाल्कल-कुथुमिसात्यमुद्रि-नारायणकठमाध्यदिन-मौद-पैप्पलाद-वादरायणाबष्टी-कृदौकायन-वसु-जैमिन्यादीनामज्ञानकुदृष्टीना सप्तषष्टि । वशिष्टपाराशर-जतुकीर्ण-वाल्मीकि-रोमर्षि-सत्यदत्त व्यासैलापुत्रोपमन्यवैंद्रदत्तायस्थूणादीना वैनयिकदृष्टीनां द्वात्रिंशदेषा दृष्टिशतानां त्रयाणा त्रिषष्ट्युत्तराणा प्ररूपण निग्रहश्च दृष्टिवादे क्रियते । स पचविध परिकर्म, सूत्र प्रथमानुयोग -पूर्वगत-चूलिकाचेति । तत्र पूर्वगत चतुर्दशप्रकार- उत्पादपूर्व अग्रायण वार्यप्रवाद अस्तिनास्तिप्रवाद ज्ञानप्रवाद सत्यप्रवाद आत्मप्रवाद कर्मप्रवाद च प्रत्याख्याननामधेय विद्यानुवाद कल्याणनाम-

**न वा निमित्तमात्रत्वाद्दडादिवत्** ॥ ४ ॥ नैष दोष । किं कारणं ? निमित्तमात्रत्वाद्दडादिवत् । यथा मृद स्वयमंतर्घटभवनपरिणामाभिमुख्ये, दडचक्रपौरुषेयप्रयत्नादिनिमित्तमात्र भवति । यत सत्स्वपि दडादिनिमित्तेषु शर्करादिप्राचितो मृत्पिड स्वयमतर्घटभवनपरिणामनिरुत्सुकत्वान्न घटीभवति । अतो मृत्पिंड एव बाह्यदडादिनिमित्तापेक्ष आभ्यतरपरिणामसान्निध्याद् घटो भवति, न दडादय, इति दडादीनां निमित्तमात्रत्व । तथा पर्यायिपर्याययो स्यादन्यत्वादात्मन, स्वयमत श्रुतभवनपरिणामाभिमुख्ये मतिज्ञान निमित्तमात्र भवति । यत सत्यपि सम्यग्दृष्टे श्रोत्रेंद्रियबलाधाने बाह्याचार्यपदार्थोपदेशसनिधाने च श्रुतज्ञानावरणोदयवशीकृतस्य स्वयमत श्रुतभवननिरुत्सुकत्वादात्मनो न श्रुत भवति । ततो बाह्यमतिज्ञानादिनिमित्तापेक्ष आत्मा, एव, अभ्यतरश्रुतज्ञानावरणक्षयोपशमापादितश्रुतभवनपरिणामाभिमुख्याच्छ्रुती भवति । न मतिज्ञानस्य श्रुतभवनमस्ति, तस्य निमित्तमात्रत्वात् ।

**अनेकांताच्च** ॥ ५ ॥ नायमेकातोस्ति, कारणसदृशमेव कार्यमिति । कुतस्तत्रापि सप्तभगीसभवात्, कथ ? घटवत् । यथा घट कारणेन मृत्पिडेन स्यात्सदृश, स्यान्न सदृश इत्यादि । इति मृद्द्रव्याजीवानुपयोगादेशात्स्यात्सदृश । पिंडघटसस्थानादिपर्यायादेशान्न सदृश । पूर्ववदुत्तरे भगा नेतव्या । यस्यैकातेन कारणानुरूप कार्यं, तस्य घटपिंडशिविकादिपर्याया न उपलभ्यते । किं च—घटेन जलधारणादिव्यापारो न क्रियेत मृत्पिडे तददर्शनात् । अपि च मृत्पिडस्य घटत्वेन परिणामवद्, घटस्यापि घटत्वेन परिणाम स्यात्, एकातसदृशत्वात्, नचैव भवति । अतो नैकातेन कारणसदृशत्व । तथा श्रुत सामान्यादेशात्स्यात्कारणसदृश यतो मतिरपि, ज्ञान, श्रुतमपि । अव्यवहिताभिमुखग्रहणनानाप्रकारार्थप्ररूपणसामर्थ्यादिपर्यायादेशात्स्यान्न कारणसदृश । पूर्ववदुत्तरे भगा नेतव्या ।

**श्रोत्रमतिपूर्वस्यैव श्रुतत्वमसगस्तदर्थत्वादिति चेन्नोक्तत्वात्** ॥ ६ ॥ स्यादेतच्छ्रोत्रमतिपूर्वस्यैव श्रुतत्व प्राप्नोति । कुत ? तदर्थत्वात् । श्रुत्वावधारणाद्धि श्रुतमित्युच्यते । तेन चक्षुरादिमतिपूर्वकस्यैव श्रुतत्व न प्राप्नोति । तन्न किं कारण ? उक्तत्वात् । उक्तमेव श्रुतशब्दोय रूढिशब्द इति । रूढिशब्दाश्च स्वोत्पत्तिक्रियानपेक्षा प्रवर्तंत, इति सर्वमतिपूर्वस्य श्रुतत्वसिद्धिर्भवति ।

**आदिमतोऽतवत्त्वाच्छ्रुतस्याऽनादिनिधनत्वानुपपत्तिरिति चेन्न द्रव्यादिसामान्यापेक्षया तत्सिद्धे** ॥ ७ ॥ स्यादेतच्छ्रुतस्याऽऽदिमत्वमभ्युपगत, मतिपूर्वमिति वचनात् । आदिमतश्च लोकेऽतवत्त्व दृष्ट । तत आयतसमवादनादिनिधन श्रुतमिति व्याहन्यते । ततश्च पुरुषकृतित्वादप्रामाण्य स्यादिति । नैष दोष । द्रव्यादिसामान्यापेक्षया तत्सिद्धि । द्रव्यक्षेत्रकालभावाना विशेषस्याविवक्षाया श्रुतमनादिनिधनमित्युच्यते । न हि केनचित्पुरुषेण क्वचित् कदाचित्कथचिदुत्प्रेक्षितमिति । तेषामेव विशेषापेक्षया आदिरतश्च सभवतीति मतिपूर्वमित्युच्यते । यथाकुरो बीजपूर्वक । स च सतानापेक्षयानादिनिधन इति । न वा पुरुषकृतित्वमप्रामाण्यकारण चौर्याद्युपदेशस्यास्मर्यमाणकर्तृकस्य प्रामाण्यप्रसगात् । अनित्यस्य च प्रत्यक्षादे प्रामाण्ये को विरोध ।

**सम्यक्त्वोत्पत्तौ युगपन्मतिश्रुतोत्पत्तेर्मतिपूर्वकत्वाभाव इति चेन्न सम्यक्त्वस्य तदपेक्षत्वात्** ॥ ८ ॥ स्यान्मत मत्यज्ञानश्रुताज्ञानयो प्रथमसम्यक्त्वोत्पत्तौ युगपज्ज्ञानपरिणामान्मतिपूर्वकत्व श्रुतस्य नोपपद्यत इति । तन्न किं कारण सम्यक्त्वस्य तदपेक्षत्वात् । तयोर्हि सम्यक्त्व, सम्यग्दर्शनोत्पत्तौ युगपद्भवति । आत्मलाभस्तु क्रमवान्, इति मतिपूर्वकत्व युक्त, पितापुत्रवत् ।

**मतिपूर्वकत्वाविशेषाच्छ्रुताविशेष इति चेन्न कारणभेदात्तद्भेदसिद्धे** ॥ ९ ॥ स्यादेतत्सर्वेषां प्राणिनां श्रुतमविशिष्ट प्राप्नोति । कुत ? कारणाविशेषात् । मतिपूर्वत्व हि कारणमिष्ट, तच्च सर्वेषामविशिष्टमिति । तन्न किं कारण कारणभेदात्तद्भेदसिद्धे । प्रतिपुरुष हि मतिश्रुतावरणक्षयोपशमो बहुधा भिन्नस्तद्भेदाद्बाह्यनिमित्तभेदाच्च श्रुतस्य प्रकर्षाप्रकर्षयोगो भवति, मतिपूर्वकत्वाविशेषेपि ।

---

१ उपलभ्येरन्, इत्यपिपाठ । २ कथंचित्कारणसदृश ।

अच्युतांते पट्। आलोकान्तात्। तथा लोकमध्यादधो यावच्छर्कराप्रुथिव्यन्तस्तावदेका रज्जु । ततोध पृथिवीना पचाना प्रत्येकमतेऽते रज्जुरेकैका वृद्धा ततोऽवस्तमस्तम प्रभाया आलोकातादेका रज्जु । एव सप्ताधो रज्जव । घनोदधिघनानिलतनुवातवलयानि त्रीणि यैरयपरिक्षिप्त सर्वे समताल्लोक । त्रयाणामधोलोकदिग्वि-दिक्पार्श्वभाविना प्रत्येक विस्तारो विंशतियोजनसहस्राणि । तत उपरि क्रमतो हानिवशात्तिर्यग्लोकभावि दिग्विदिक्पार्श्वेष्वष्टासु प्रत्येक त्रीण्यपि वलयानि, पचचतुस्त्रियोजनविस्तीर्णानि । पुनरुपरि वृद्धिवशाद्ब्रह्म-लोके दिग्विदिक्पार्श्वेष्वष्टासु प्रत्येक त्रीण्यपि वलयानि सप्तपचचतुर्योजनविस्तीर्णानि । पुनर्हानिवशाल्लो-काग्रेऽष्टास्वपि दिग्विदिक्पार्श्वेषु प्रत्येक त्रीण्यपि वलयानि पचचतुस्त्रियोजनविस्तीर्णानि दडवलयानि पुनरु परि अधश्च त्रीण्यपि। उपरि लोकाग्रे घनोदधेर्द्विगव्यूती, घनानिलस्य क्रोश, तनुवातस्य देशोन क्रोशो विस्तार । अध कल्कलपृथिवीपर्यंते घनोदधे सप्त, घनानिलस्य पच, तनुवातस्य चत्वारि योजनानि विस्तार । अ लोकमूले दिग्विदिक्षु विष्कभ सप्तरज्जव । तिर्यग्लोके रज्जुरेका। ब्रह्मलोके पच। पुनर्लोकाग्रे रज्जुरेका लो मध्यादधोरज्जुमवगाह्य शर्करांते अष्टास्वपि दिग्विदिक्षु विष्कम रज्जुरेका। रज्ज्वाश्च पट्सप्तभागास्त रज्जुमवगाह्य वालुकाते द्वे रज्जू, रज्ज्वाश्च पचसप्तभागा । ततो रज्जुमवगाह्य पकाते तिस्रो रज्जव, रज्ज्वा त्वार सप्तभागा । ततो रज्जुमवगाह्य धूमाते चतस्रो रज्जव, रज्ज्वाश्च त्रय सप्तभागा । ततो रज्जुमवगा तम प्रभाते पचरज्जव, रज्ज्वाश्च द्वौ सप्तभागौ । ततो रज्जुमवगाह्य तमस्तम प्रभाते पड्रज्जव, रज्ज्वा स भागश्चैक । ततो रज्जुमवगाह्य कल्कलाते विष्कभ सप्तरज्जव । वज्रतलादुपरि रज्जुमुत्क्रम्य विष्कभो रज्जू, रज्ज्वाश्चैक सप्तभाग । ततो रज्जुमुत्क्रम्य तिस्रो रज्जव, रज्ज्वाश्च द्वौ सप्तभागौ । ततो रज्जुमुत्क्रम चतस्रो रज्जव, रज्ज्वाश्च त्रय सप्तभागा । ततोऽर्धरज्जुमुत्क्रम्य रज्जव पच। ततोऽर्धरज्जुमुत्क्रम्य चतस्रो रज्जव रज्ज्वाश्च त्रय सप्तभागा । ततो रज्जुमुत्क्रम्य तिस्रो रज्जव, रज्ज्वाश्च द्वौ सप्तभागौ। ततो रज्जुमुत्क्रम्य द्वे रज्जू रज्ज्वाश्चैक सप्तभाग । ततो रज्जुमुत्क्रम्य लोकाते रज्जुरेका विष्कभ । एष रज्जुविधि ।

हतेर्गमिक्रियात्वात्सभूयात्मप्रदेशाना च वहिरुद्गमन समुद्घात । स सप्तविध । वेदनाकषायमारणाति कतेजोविक्रियाऽऽहारककेवलिविषयभेदात् । तत्र वातिकादिरोगविषादिद्रव्यसबध सतापापादितवेदनाकृतो वेदनासमुद्घात । द्वितीयप्रत्ययप्रकर्षोत्पादितक्रोधादिकृत कषायसमुद्घात । औपक्रमिकानुपक्रमायु क्षयाविर्भूतमरणातप्रयोजनो मारणातिकसमुद्घात । जीवानुग्रहोपघातप्रवणतेज शरीरनिर्वर्तनार्थस्तैजसस मुद्घात । एकत्वपृथक्त्वनानाविधविक्रियशरीरवाक्प्रचारप्रहरणादिविक्रियाप्रयोजनो वैक्रियिकसमुद्घात । अथोक्तविधिनाऽल्पसावद्यसूक्ष्मार्थग्रहणप्रयोजनाऽऽहारकशरीरनिर्वृत्त्यर्थ आहारकसमुद्घात । वेदनीयस्य बहुत्वादल्पत्वाच्चायुषो नाभोगपूर्वकमायु समकरणार्थ द्रव्यस्वभावत्वात् सुराद्रव्यस्य फेनवेगबुद्बुदाविर्भावोप-शमनवद्देहस्थात्मप्रदेशाना वहि समुद्घातन केवलिसमुद्घात । आहारकमारणातिकसमुद्घातावेकदिक्कौ । यत आहारकशरीरमात्मा निर्वर्तयन् श्रेणिगतित्वादेकदिक्कानात्मप्रदेशानसख्यातान्निर्गमय्य–आहारकशरीरमरत्निमात्र निर्वर्तयति । अन्यक्षेत्रसमुद्घातकारणाभावात्, यत्रानेन नरकादावुत्पत्तव्य तत्रैव मारणातिकसमुद्घातेना-ऽऽत्मप्रदेशा एकदिक्का समुद्गम्यते नान्यक्षेत्रे, अतस्तावेकदिक्कौ । शेषा पच समुद्घाता षड्दिक्का । यतो वेदनादिसमुद्घातवशाद्वहिर्नि सृतानामात्मप्रदेशाना पूर्वापरदक्षिणोत्तरोर्ध्वाधोदिक्षु गमनमिष्ट श्रेणिगतित्वा-दात्मप्रदेशाना । वेदना-कषाय-मारणातिक तेजो-वैक्रियिकाऽऽहारकसमुद्घाता पट् सख्येयसमयिका । केवलिसमुद्घात अष्टसमयिक । दड कपाट प्रतर लोकपूरणानि चतुर्षु समयेषु, पुन प्रतर कपाट दड स्वशरीरानुप्रवेशाश्चतुर्षु इति । रविशशिग्रहनक्षत्रतारागणाना चारोपपादगतिविपर्ययफलानि शकुनव्याहृत, अर्हद्बलदेव-वासुदेव-चक्रधरादीना गर्भावतरणादिमहाकल्याणानि च यत्रोक्तानि तत्कल्याणनामधेय । काय-चिकित्साद्यष्टाग आयुर्वेद भूतिकर्मजागुलिप्रक्रम प्राणापानविभागोपि यत्र विस्तारेण वर्णितस्तत्प्राणावाय । लेखादिका कला, द्वासप्ततिर्गुणाश्च, चतु षष्टि स्त्रैण्या, शिल्पानि काव्यगुणदोषक्रियाछदोविचितिक्रिया क्रियाफलोपभोक्तारश्च यत्र व्याख्यातास्तत्क्रियाविशाल । यत्राष्टौ व्यवहाराश्चत्वारि बीजानि परिकर्मराशि-क्रियाविभागश्च सर्वश्रुतसपदुपदिष्टा तत्खलु लोकबिंदुसार ।

भेय प्रणवाय क्रियाविशालं लोकबिंदुसारमिति । कालपुद्गलजीवादीनां यदा यत्र यथा च पर्यायेणो त्पादो वर्ण्यते, तदुत्पादपूर्वं । क्रियावादादीनां प्रक्रिया अग्रायणी चांगादीनां स्वसमयविषयश्च यत्र ख्यापित- स्तदग्रायणं । छद्मस्थकेवलिनां वीर्यं, सुरेंद्रदैत्याधिपानां ऋद्धयो, नरेंद्रचक्रधरबलदेवानां च वीर्यलाभो द्रव्याणां सम्यक्त्वलक्षणं च यत्राभिहितं च तद्वीर्यप्रवादं । पंचानामस्तिकायानामर्थो नयानां चानेकपर्यायैरिदमस्तीदं नास्तीति च कार्त्स्न्येन यत्रावभासितं तदस्तिनास्तिप्रवादं । अथवा षण्णामपि द्रव्याणां भावाभावपर्यायविधिना स्वपरपर्यायाभ्यामुभयनयवशीकृताभ्यामर्पितानर्पितसिद्धाभ्यां यत्र निरूपणं तदस्तिनास्तिप्रवादं । पंचाना- मपि ज्ञानानां प्रादुर्भावविषयायतनानां ज्ञानिनां अज्ञानिनामिंद्रियाणां च प्राधान्येन यत्र विभागो विभावित स्तज्ज्ञानप्रवादं । वाग्गुप्तिसंस्कारकारणप्रयोगो द्वादशधा भाषा वक्तारश्चानेकप्रकारमृषाभिधानं दशप्रकारश्च सत्यसद्भावो यत्र प्ररूपितं तत्सत्यप्रवादं । गुप्तिर्वक्ष्यमाणा । वाक्संस्कारकारणानि शिरः कंठादीनि अष्टौ स्थानानि । वाक्प्रयोगः शुभेतरलक्षणो वक्ष्यते । अभ्याख्यानकलहपैशुन्यासंबद्धप्रलापरत्यरत्युपधिनिकृत्य प्रणतिमोषसम्यग्दर्शनमिथ्यादर्शनात्मिका भाषा द्वादशधा । हिंसादेः कर्मणः कर्तुर्विरतस्य विरताविरतस्य वाऽयमस्य कर्तेत्यभिधानमभ्याख्यानं । कलहः प्रतीतः । पृष्टतो दोषाविष्करणं पैशुन्यं । धर्मार्थकाममोक्षा संबद्धा वाग्, असंबद्धप्रलापः । शब्दादिविषयदेशादिषु रत्युत्पादिका रतिवाक् । तेष्वेवारत्युत्पादिका, अरतिवाक् । यां वाचं श्रुत्वा परिग्रहार्जनरक्षणादिष्वासज्यते सोपधिवाक् । वणिग्व्यवहारे यामवधार्य निकृतिप्रवण आत्मा भवति सा निकृतिवाक् । यां श्रुत्वा तपोविज्ञानाधिकेष्वपि न प्रणमति सा प्रणतिवाक् । यां श्रुत्वा स्तेये वर्तते सा मोषवाक् । सम्यङ्मार्गस्योपदेष्ट्री सा सम्यग्दर्शनवाक् । तद्विपरीता मिथ्यादर्शनवाक् । वक्तारश्चा- ऽऽविष्कृतवक्तृत्वपर्याया द्वींद्रियादयः । द्रव्यक्षेत्रकालभावाश्रयमनेकप्रकारमनृतं । दशविधः सत्यसद्भावः — नाम-रूप-स्थापना-प्रतीत्य-संवृति-संयोजना-जनपद-देश-भाव-समय-सत्यभेदेन । तत्र सचेतनेतरद्रव्यस्या- सत्यप्यर्थे यद्व्यवहारार्थं संज्ञाकरणं तन्नामसत्यं, इंद्र इत्यादि । यदर्थासंनिधानेपि रूपमात्रेणोच्यते तद्रूपसत्यं । यथा चित्रपुरुषादिषु असत्यपि चैतन्योपयोगादावर्थे पुरुष इत्यादि । असत्यप्यर्थे यत्कार्यार्थं स्थापितं द्यूताक्ष निक्षेपादिषु तत्स्थापनासत्यं । आदिमदनादिमदौपशमिकादीन् भावान् प्रतीत्य यद्वचनं तत्प्रतीत्यसत्यं । यल्लोके संवृत्यानीतं वचस्तत्संवृतिसत्यं, यथा पृथिव्याद्यनेककारणत्वेपि सति, पंके जातं पंकजमित्यादि । धूप चूर्णवासानुलेपनप्रघर्षादिषु पद्म-मकर-हंस-सर्वतोभद्र-क्रौंचव्यूहादिषु वा सचेतनेतरद्रव्याणां यथा भाग- विधिसंनिवेशाविर्भावकं यद्वचस्तत्संयोजनासत्यं । द्वात्रिंशत्सहस्रजनपदेष्वार्यानार्यभेदेषु धर्मार्थकाममोक्षाणां प्रापकं यद्वचस्तज्जनपदसत्यं । ग्रामनगरराजगणपाखंडजातिकुलादिधर्माणामुपदेष्टृ यद्वचस्तद्देशसत्यं । छद्मस्थज्ञानस्य द्रव्ययाथात्म्यादर्शनेपि संयतस्य संयतासंयतस्य वा स्वगुणपरिपालनार्थं प्रासुकमिदमप्रासुक- मित्यादि यद्वचस्तद्भावसत्यं । प्रतिनियतषट्तयद्रव्यपर्यायाणामागमगम्यानां याथात्म्याविष्करणं तद्वच स्तत्समयसत्यं । यत्रात्मनोऽस्तित्वनास्तित्वनित्यत्वानित्यत्वकर्तृत्वभोक्तृत्वादयो धर्माः षड्जीवनिकायभेदाश्च युक्तितो निर्दिष्टाः, तदात्मप्रवादं । बंधोदयोपशमनिर्जरापर्याया अनुभवप्रदेशाधिकरणानि स्थितिश्च जघन्य मध्यमोत्कृष्टा यत्र निर्दिश्यते तत्कर्मप्रवादं । व्रत-नियम-प्रतिक्रमण-प्रतिलेखन-तपः-कल्पोपसर्गाचार-प्रतिमा विराधनाराधनविशुद्ध्युपक्रमाः श्रामण्यकारणं च परिमितापरिमितद्रव्यभावप्रत्याख्यानं च यत्राख्यातं, तत्प्र- त्याख्याननामधेयं । समस्ता विद्याः, अष्टौ महानिमित्तानि तद्विषयो रज्जुराशिविधिः क्षेत्रं श्रेणी लोकप्रतिष्ठा संस्थानं समुद्घातश्च यत्र कथ्यते तद्विद्यानुवादं । तत्रांगुष्ठप्रसेनादीनामल्पविद्यानां सप्तशतानि रोहिण्यादीनां महाविद्यानां पंचशतानि । अंतरिक्ष-भौमांग-स्वर स्वप्न लक्षण-व्यंजन छिन्नानि-अष्टौ-महानिमित्तानि तेषां विषयो लोकः क्षेत्रमाकाशं पटसूत्रवद्धर्माऽधर्मद्रव्यवदानुपूर्व्येणोर्ध्वाधस्तिर्यग्व्यवस्थिता असंख्याता आकाशप्रदेशभूमय श्रेणय उक्ताः । अलोकाकाशस्यानंतस्य बहुमध्ये सुप्रतिष्ठकसंस्थानो लोकः । ऊर्ध्वमधस्तिर्यङ्मृदंगवेत्रा- सनझल्लर्याकृतिः । तनुवातवलयपरिक्षिप्तमूर्ध्वाधस्तिर्यक्षु प्रतरवृत्तश्चतुर्दशरज्ज्वायामो मेरुप्रतिष्ठवज्रवैडूर्यपट- लांतररुचकसंस्थिता अष्टावाकाशप्रदेशा लोकमध्यं । लोकमध्यादावधेर्देशानांतस्तावदेकारज्जुरर्धं च । माहेंद्रांते तिस्रः । ब्रह्मलोकांतेऽर्धचतुर्थी । कापिष्टांते चतस्रः । महाशुक्रांतेऽर्धपंचमी । सहस्रांते पंच । प्राणतांतेऽर्धषष्ठी ।

प्रसग स्यात् ? इष्यते च प्रकर्षाप्रकर्षभावेन वृत्ति । कथ पुनर्भवो हेतु , ? इतिचेद्व्रतानियमाद्यभावात् । यथा तिरश्चा मनुष्याणा चाऽहिंसादिव्रतनियमहेतुकोवधिर्न तथा देवाना नारकाणा चाऽहिंसादिव्रतनियमाभिसधिरस्ति । कुतो भव प्रतीत्य कर्मोदयस्य तथाभावात् । तस्मात्तत्र भव एव बाह्यसाधनमित्युच्यते ।

**अविशेषात्सर्वप्रसग इतिचेन्न सम्यगधिकारात्** ॥ ५ ॥ स्यादेतत् , देवनारकाणामित्यविशेषवचनान्मिथ्यादृष्टीनामप्यवधिप्रसग इति । तन्न किं कारण सम्यगधिकारात् । सम्यग्दर्शनसम्यज्ञानमिति वर्तते, तत्सबधात्सम्यग्दृष्टीनामवधि , मिथ्यादृष्टीना विभगो वेदितव्य । अथवा वक्ष्यमाणाभिसबधान्न सर्वप्रसग । वक्ष्यते हि एतन्मतिश्रुतावधयो विपर्ययश्चेति । अथवा व्याख्यानाद्विशेषप्रतिपत्ति ।

**आगमे प्रसिद्धेर्नारकशब्दस्य पूर्वनिपात इति चेन्नोभयलक्षणप्राप्तत्वाद्देवशब्दस्य** ॥ ६ ॥ स्यादेतन्नारकशब्दस्य पूर्वनिपातेन भवितव्य । कुत ? आगमे प्रसिद्धे । आगमे हि जीवस्थानादिसदादिष्वनुयोगद्वारेणाऽऽदेशवचने नारकाणामेवादौ सदादिप्ररूपणा कृता, ततो नारकशब्दस्य पूर्वनिपातेन भवितव्यमिति । तन्न किं कारण उभयलक्षणप्राप्तत्वाद्देवशब्दस्य । देवशब्दो हि अल्पाजभ्यर्हितश्चेति वृत्तौ पूर्वप्रयोगार्ह । आगमे वाक्यविषयो निर्देश इति नास्ति नियम । आहोक्त भवतेष्यते प्रकर्षाप्रकर्षभावेन वृत्तिरिति तत्कथ इति चेदुच्यते—देवेषु तावद्भवनवासिना दशप्रकाराणामपि जघन्योवधि पचविंशति योजनानि । उत्कृष्टोऽ सुराणामसख्याता योजनकोटिकोटयोध । ऊर्ध्वमृजुविमानस्योपरि पर्यंत । नागादिकुमाराणा नवानिधानामप्युत्कृष्टोवधि , अधोऽसख्यातानि योजनसहस्राणि । ऊर्ध्व मदिरचूलिकाया उपरिपर्यंतस्तिर्यगसख्यातानि योजनसहस्राणि । व्यतराणामष्टविधाना जघन्योवधि पचविंशतियोजनानि । उत्कृष्टोप्यसख्यातानि योजनसहस्राणि, अध । ऊर्ध्व स्वविमानस्योपरिपर्यंतस्तिर्यगसख्याता योजनकोटीकोटय । ज्योतिषा जघन्योवधिरध सख्येयानि योजनानि । उत्कृष्टश्चाऽसख्येयानि योजनसहस्राणि । उर्ध्वमात्मीयविमानस्योपरिपर्यंतस्तिर्यगसख्याता योजनकोटीकोटय । वैमानिकेषु सौधर्मैशानीयाना जघन्योवधिर्ज्योतिषामुत्कृष्ट । रत्नप्रभाया अधश्चरम उत्कृष्ट । सानत्कुमारमाहेंद्राणा जघन्योवधि रत्नप्रभाया अधश्चरम उत्कृष्ट । शर्कराप्रभाया अधश्चरम । ब्रह्मब्रह्मोत्तरलातवकापिष्ठाना जघन्योवधि । शर्कराप्रभाया अधश्चरम उत्कृष्ट , वालुकाप्रभाया अधश्चरम । शुक्रमहाशुक्रसतारसहस्राणा जघन्योवधि , वालुका प्रभाया अधश्चरम , उत्कृष्ट । पकप्रभाया अधश्चरम ।

आनतप्राणताऽऽरणाऽच्युताना जघन्योवधि पकप्रभाया अधश्चरम उत्कृष्ट । धूमप्रभाया अधश्चरम । नवाना ग्रैवेयिकाना जघन्योवधिर्धूमप्रभाया अधश्चरम उत्कृष्ट । तम प्रभाया अधश्चरम । नवानामनुदिशाना पचानुत्तरविमानवासिना च लोकनालिपर्यंतोऽवधि । सौधर्मादीनामनुत्तरातानामूर्ध्व स्वविमानस्योपरिपर्यंत , तिर्यगसख्याता योजनकोटीकोट्य । अथैषा कालद्रव्यभावेषु कोवधि ? इत्यत्रोच्यते—योस्य यावत्क्षेत्रावधिस्तस्य तावदाकाशप्रदेशपरिछिन्ने कालद्रव्ये भवत । तावत्सु असमयेष्वतीतेष्वनागतेषु च ज्ञान वर्तते तावद्सख्यातभेदेषु अनतप्रदेशेषु पुद्गलस्कधेषु जीवेषु च सकर्मकेषु भावत स्वविषयपुद्गलस्कधाना रूपादिविकल्पेषु जीवपरिणामेषु चौदयिकौपशमिकक्षयोपशमिकेषु वर्तते । कुत ? पौद्गलिकत्वादेषा । नारकेषु योजनमर्धगव्यूतहीनमागव्यूतात् । तद्यथा रत्नप्रभाया योजनमवधि ,अध । द्वितीयायामध ,अर्धचतुर्थानि गव्यूतानि । तृतीयायामध त्रीणि गव्यूतानि । चतुर्थ्यामधोऽर्धतृतीयानि गव्यूतानि । पचम्या द्वे गव्यूते । षष्ठ्यामधोऽर्धाधिक गव्यूत सप्तम्यामधो गव्यूत । सर्वासु पृथिवीषु नारकाणामवधिरुपरि आत्मीयनरकावासोंतास्तिर्यगसख्याता योजनकोटीकोट्य । कालद्रव्यभावपरिमाण पूर्ववद्वेदितव्य । यदि भवप्रत्ययोवधिर्देवनारकाणामथ क्षयोपशमहेतुक केषा ? इत्यत । आह—

## क्षयोपशमनिमित्त‌ः षड्विकल्पः शेषाणां ॥ २२ ॥

अवधिज्ञानावरणस्य देशघातिस्पर्धकानामुदये सति सर्वघातिस्पर्धकानामुदयाभाव क्षय । तेषा

१ परिमित ।

**आरातीयाचार्यकृताङ्गार्थप्रत्यासन्नरूपमङ्गबाह्यं ॥१३॥** यद्गणधरशिष्यै प्रशिष्यैरारातीयैरधिग तश्रुतार्थतत्त्वै कालदोषादल्पमेधायुर्बलानां प्राणिनामनुग्रहार्थमुपनिबद्ध संक्षिप्ताङ्गार्थवचनविन्यास तदङ्गबाह्य ।

**तदनेकविधं कालिकोत्कालिकादिविकल्पात् ॥१४॥** तदङ्गबाह्यमनेकविध कालिकमुत्कालिक मित्येवमादिविकल्पात्। स्वाध्यायकाले नियतकाल कालिक। अनियतकालमुत्कालिक। तद्भेदा उत्तराध्ययन दयोऽनेकविधा. । अत्राह—अनुमानादीनां पृथगनुपदेश. किमर्थ ?

**अनुमानादीनां पृथगनुपदेशः श्रुतावरोधात् ॥ १५ ॥** यस्मादेतान्यनुमानादीनि ... तस्मात्तेषा पृथगुपदेशो न क्रियते । तद्यथा—प्रत्यक्षपूर्वक त्रिविधमनुमान, पूर्ववत्, शेषवत्, सामान्यतो चेति। तत्र येनाग्नेर्नि सरन् पूर्वं धूम दृष्ट, स प्रसिद्धाग्निधूमसबधाहितसस्कार ... पूर्ववदग्निं गृह्णातीति पूर्ववदनुमान। तथा येन पूर्वविषाणविषाणिनो सबध उपलब्ध, तस्य विषाणरूप ... द्विषाणिन्यनुमान शेषवत्। तथा देवदत्तस्य देशांतरप्राप्तिं गतिपूर्विका दृष्ट्वा सबध्यतरे सवितरि दे प्राप्तिदर्शनाद्गतेरत्यंतपरोक्षाया अनुमान सामान्यतो दृष्ट । तदेतत्त्रितयमपि ... परप्रतिपादितकालेऽक्षरश्रुत। यथा गौस्तथा गवय केवल सास्नारहित इत्युपपन्नमपि ... यत्वादक्षरानक्षरश्रुतेऽन्तर्भवति। तथा शब्दमपि प्रमाण श्रुतमेव। ऐतिह्यस्य चेतीह स भगवान् इति परपरीणपुरुषागमाद्गृह्यते इति श्रुतेंतर्भाव । प्रकृतिपुरुषो दिवा न भुक्ते, अथ च जीवती. रात्रौ भुक्ते इत्यर्थापत्ति । चत्वार प्रस्था आढकमिति सति ज्ञाने आढक दृष्ट्वा सभवत्यर्धाढक प्रतिपत्तिसभव । तृणगुल्मादीना प्ररोहपर्णफलाद्यभाव दृष्ट्वानुमीयते नूनमत्र न वृष्ट पर्जन्य ... एतेषामप्यर्थापत्त्यादीनामनुक्तानामनुमानसमानमिति पूर्ववच्छ्रुतान्तर्भाव ।

व्याख्यात परोक्ष प्रत्यक्षमिदानीं वक्तव्य। तद्द्वेधा देशप्रत्यक्ष सर्वप्रत्यक्ष च। देशप्रत्यक्ष, ... पर्ययज्ञाने । सर्वप्रत्यक्ष केवल । यद्येवमिदमेव तावदवधिज्ञान त्रिप्रकारप्रत्यक्षस्याद्य व्याक्रियता च्यते—व्याख्यातमस्य लक्षण । आत्मप्रसादविशेषे सत्यन्वर्थसंज्ञाकरणादवधीयते ... तस्येदानीं भेदो वक्तव्य । उच्यते-द्विविधोऽवधि, भवगुणप्रत्ययभेदात्। देशसर्वावधिभेदाद्वा। यद्ये नोपपद्यते [1], देशावधि परमावधि सर्वावधिश्चेति [2] नैष दोष सर्वशब्दस्य निरवशेषवाचित्वात्सर्व. परमावधेर्देशावधित्वमेवेति वक्ष्याम । तत्र योऽसौ भवप्रत्ययस्तत्प्रतिपादनार्थमाह—

## भवप्रत्ययोऽवधिर्देवनारकाणां ॥ २१ ॥

भव इत्युच्यते को नाम भव ?

**आयुर्नामकर्मोदयविशेषापादितपर्यायो भवः ॥ १ ॥** आत्मनो य पर्याय, आयुर्नो दयाविशेषाच्छेपकारणापेक्षादाविर्भवति साधारणलक्षणो भव इत्युच्यते ।

**प्रत्ययशब्दस्यानेकार्थसंभवे विवक्षातो निमित्तार्थगतिः ॥ २ ॥** अय प्रत्ययशब्दोऽने.. क्वचिज्ज्ञाने वर्तते 'यथार्थाभिधानप्रत्यया' इति । क्वचिच्छपथे वर्तते यथा परद्रव्यहरणादिषु ... प्रत्ययोऽनेन कृत इति । क्वचिद्धेतौ वर्तते, यथाऽविद्याप्रत्यया सस्कारा इति। तत्रेह विवक्षातो निमित्त... वेदितव्य । भवप्रत्ययो भवनिमित्त इति ।

**क्षयोपशमाभाव इति चेन्न तस्मिन् सति तद्भावात्तर्ते पतत्त्रिगतिवत् ॥ ३ ॥** स्यादेतत्... तत्र भवनिमित्तोऽवधि कर्मण क्षयोपशमोऽनर्थक इति। तन्न किं कारण। तस्मिन् सति तद्भवात्। खे पतत्त्रि गतिवत्। यथाकाशे सति पक्षिणो गतिर्भवति तथावधिज्ञानावरणक्षयोपशमेऽतरंग हेतौ सत्यवधेर्भाव भवस्तु बाह्यो हेतु ।

**इतरथा ह्यविशेषप्रसंग ॥४॥** यदि भव एव हेतु स्यात्सर्वथा देवनारकाणां तुल्य इत्यवधेरविशेष-

---

१ धान्यविशेषा । २ मेघ । ३ भवप्रत्ययो गुणप्रत्ययश्चेत्यर्थ. । ४ क्षपथ । ५ कारणानि । ६ आकाश

सख्येयगुणवृद्धिरसख्येयगुणवृद्धिरनतगुणवृद्धिरिति। अनया क्षेत्रकालद्रव्यभाववृद्ध्योक्तया आसर्वलोकात् वृद्धिरवसेया। हानिरपि तथैव। योंगुलसख्येयभागक्षेत्रोवधिस्तस्यावलिकाया सख्येयभाग काल। अगुलसख्येयभागक्षेत्राकाशप्रदेशप्रमाण द्रव्य। भाव पूर्वोदनतो वा स्यादसख्येयो वा स्यात्सख्येयो वा स्यात्। योंगुलमात्र क्षेत्रोवधिस्तस्येषदूना आवलिका काल। द्रव्यभावौ पूर्ववत्। योऽगुलपृथक्त्वक्षेत्रोवधिस्तस्याऽऽवलिकाल। द्रव्यभावौ पूर्ववत्। यो हस्तप्रमाणक्षेत्रोवधिस्तस्याऽऽवलिकापृथक्त्व काल। द्रव्यभावौ पूर्ववत्। यो गव्यूतिमात्रक्षेत्रोवधिस्तस्य साधिकोच्छ्वास काल। द्रव्यभावौ पूर्ववत्। यो योजनमात्रक्षेत्रोवधिस्तस्य भिन्नमुहूर्त काल द्रव्यभावौ पूर्ववत्। य पचविंशतियोजनप्रमाणक्षेत्रोवधिस्तस्येषदूनो दिवस काल, द्रव्यभावौ पूर्ववत्। यो भरतक्षेत्रमात्रोवधि, तस्य अर्धमास काल। द्रव्याभावौ पूर्ववत्। यो जबूद्वीपमात्रक्षेत्रोवधि, तस्य साधिकोमास काल। द्रव्यभावौ पूर्ववत्। यो मनुष्यलोकमात्रक्षेत्रोवधि, तस्य सवत्सर काल। द्रव्यभावौ पूर्ववत्। यो रुचकांतप्रमाणक्षेत्रोवधि, तस्य सवत्सरपृथक्त्व काल। द्रव्यभावौ पूर्ववत्। य सख्येयद्वीपसमुद्रक्षेत्रोवधि, तस्य सख्येया सवत्सरा काल। द्रव्यभावौ पूर्ववत्। योऽसख्येयद्वीपसमुद्रक्षेत्रोवधि तस्याऽसख्येया सवत्सरा काल। द्रव्यभावौ पूर्ववत्। एव जघन्योत्कृष्टस्तिर्यङ्नराणा देशावधिरुक्त। अथ तिरश्चामुत्कृष्टदेशावधिरुच्यते—क्षेत्रमसख्येया द्वीपसमुद्रा। कालोप्यसख्येया सवत्सरा। तेजश्शरीरप्रमाण द्रव्य कियत्? तदसख्येयद्वीपसमुद्राकाशप्रदेशपरिच्छिन्नाभिरसख्येयाभिस्तेज शरीरद्रव्यवर्गणाभिर्निर्वर्तित तावदसख्येयस्कधाननतप्रदेशान् जानातीत्यर्थ। भाव पूर्ववत् तिरश्चा। मनुष्याणा च जघन्यो देशावधिर्भवति। तिरश्चां तु देशावधिरेव न परमावधिर्नापि सर्वावधि। अथ मनुष्याणामुत्कृष्टो देशावधिरुच्यते—क्षेत्रमसख्येया द्वीपसमुद्रा। कालोप्यसख्येया सवत्सरा। द्रव्य कार्मणद्रव्य कियत्? तदसख्येयद्वीपसमुद्राकाशप्रदेशपरिच्छिन्ना असख्येया ज्ञानावरणादिकार्मणद्रव्यवर्गणा। भाव पूर्ववत्। एष देशावधिरुत्कृष्टो मनुष्याणां सयतानां भवति। परमावधिरुच्यते—जघन्यस्य परमावधे क्षेत्र, देशाधिको लोक। काल प्रदेशाधिकलोकाकाशप्रदेशावधृतप्रमाणा अविभागिन समयास्तेचाऽसख्याता सवत्सरा। द्रव्य प्रदेशाधिकलोकाकाशप्रदेशावधृतप्रमाण। भाव पूर्ववत्। अत पर क्षेत्रवृद्धिर्नानाजीवैकजीवानामविशेषेण विशुद्धिवशादसख्येया लोका। एव तावदसख्येया लोका वृद्धिर्यावदुत्कृष्टपरमावधिक्षेत्र। कियतश्च ते असख्येया, ? आवलिकाया असख्येयभागप्रमाणा। कालद्रव्यभावा पूर्ववत्। उत्कृष्टपरमावधे क्षेत्र सलोकालोकप्रमाणा असख्येया लोका। कियतस्ते? अग्निजीवतुल्या। कालद्रव्यभावा पूर्ववत्। एष त्रिविधोपि परमावधिरुत्कृष्टचारित्रयुक्तस्यैव भवति नान्यस्य। वर्धमानो भवति न हीयमान। अप्रतिपाती न प्रतिपाती। यस्य यावति स लोके लोकप्रमाणासख्येयलोकक्षेत्रे जातस्तस्य तावत्यवस्थानादवस्थितो भवत्यनवस्थितश्च वृद्धिं प्रति न हानिं। ऐहलौकिकदेशातरगमनादनुगामि पारलौकिकदेशातरानुगमनाभावादननुगामि। सर्वावधिरुच्यते—असख्येयानामसख्येयभेदत्वादुत्कृष्टपरमावधिक्षेत्रमसख्येयलोकगुणितमस्य क्षेत्र। कालद्रव्यभावा पूर्ववत्। स एष न वर्धमानो न हीयमानो नानवस्थितो न प्रतिपाति आक्षयसयतभवक्षयादवस्थितोऽप्रतिपाति भवातर प्रत्यननुगामि, देशांतर प्रत्यनुगामि। सर्वशब्दस्य साकल्यवाचित्वाद्द्रव्यक्षेत्रकालभावै सर्वावधेरत पातिपरमावधिरत परमावधिरपि देशावधिरवेति द्विविध एवावधि सर्वावधिर्देशावधिश्च। उक्तायां वृद्धौ यदा कालवृद्धिस्तदा चतुर्णामपि वृद्धिर्नियता। क्षेत्रवृद्धौ कालवृद्धिर्भाज्या स्यात्कालवृद्धि स्यान्नेति, द्रव्यभावयोस्तु वृद्धिर्नियता। द्रव्यवृद्धौ भाववृद्धिर्नियता क्षेत्रकालवृद्धि पुनर्भाज्या स्याद्वा न वेति। भाववृद्धावपि द्रव्यवृद्धिर्नियता क्षेत्रकालवृद्धिर्भाज्या स्याद्वा न वेति। स एषोऽवधिज्ञानोपयोगो द्विधा भवति एकक्षेत्रोऽनेकक्षेत्रश्च। श्रीवृषभस्वस्तिकनद्यावर्ताद्यन्यतमोपयोगोपकरण एकक्षेत्र। तदनेकोपकरणोपयोगोऽनेकक्षेत्र। यद्येव परायत्तत्वात्परोक्षत्वप्रसग? न, इंद्रियेषु परत्वरूढे। इंद्रियाणि पराण्याहुरिंद्रियेभ्य पर मनो मनसस्तु परा बुद्धिर्बुद्धे परतरो हि स। इत्येव बहुधा व्याख्यातमवधिज्ञान।

मन पर्ययस्येदानीमवसरप्राप्तस्य भेदपुरस्सर लक्षण व्याचिख्यासुरिदमाह—

## ऋजुविपुलमती मन·पर्यय· ॥ २३ ॥

ग्रहणानि गत्यागत्यादिभि प्ररूपयति। क्षेत्रतो जघन्येन गव्यूतिपृथक्त्वस्याभ्यतर न बहि-। उत्कर्षेण योजनपृथक्त्वस्याभ्यतर न बहि ।

द्वितीयः षोढा ऋजुवक्रमनोवाक्कायविषयभेदात् ॥ १० ॥ द्वितीयो विपुलमति षोढा भिद्यते। कुत ? ऋजुवक्रमनोवाक्कायविषयभेदात्। ऋजुविकल्पा पूर्वोक्ता वक्रविकल्पाश्च तद्विपरीता योज्या। तथाऽऽत्मन परेषा च चिंताजीवितमरणसुखदुःखलाभालाभादीन् अव्यक्तमनोभिर्व्यक्तमनोभिश्च चिंतितान् अचिंतितान् जानाति विपुलमति । कालतो जघन्येन सप्ताष्टानि भवग्रहणानि। उत्कर्षेणाऽसख्येयानि गत्यागतिभि प्ररूपयति। क्षेत्रतो जघन्येन योजनपृथक्त्व। उत्कर्षेण मानुषोत्तरशैलाभ्यंतर न बहिः। एव द्विभेदो मन पर्ययो वर्णित । तस्य किं परस्परतो विशेषोऽस्त्युत नास्ति ?। अत आह—

## विशुद्ध्यप्रतिपाताभ्यां तद्विशेषः ॥ २४ ॥

तदावरणकर्मक्षयोपशमे सति आत्मन प्रसादो विशुद्धि । प्रतिपतन प्रतिपात । उपशांतकषायस्य चारित्रमोहोद्रेकात्प्रच्युतसयमशिखरस्य प्रतिपातो भवति। क्षीणकषायस्य प्रतिपातकारणाभावादप्रतिपात । विशुद्धिश्चाऽप्रतिपातश्च विशुद्ध्यप्रतिपातौ ताभ्यां विशुद्ध्यप्रतिपाताभ्या तयोर्विशेषस्तद्विशेष । पूर्वसूत्र एव तयोर्विशेषो निर्ज्ञात किमर्थं पुनरिदमुच्यते ?

विशेषांतरप्रतिपत्त्यर्थं पुनर्वचन ॥ १ ॥ य पूर्वसूत्रे विशेष उक्त. तावतास्य न परितोषस्ततो विशेषांतरप्रतिपत्त्यर्थं पुनरिदमुच्यते।

च शब्दप्रसग इति चेन्न प्राथमकल्पिकभेदाभावात् ॥ २ ॥ यथा मन पर्ययस्य ऋजुविपुलमती भेदौ तथा विशुद्ध्यप्रतिपातावपि तस्यैव भेदौ यदि स्यातां युक्तश्चशब्द स्यात्। यतस्तु विशुद्ध्यप्रतिपातो ऋजुविपुलमत्योर्विशेषौ न भेदौ, अतश्चशब्दाऽप्रसग । तत्र विशुद्ध्या तावदृजुमतेर्विपुलमतिर्द्रव्यक्षेत्रकालभावैर्विशुद्धतर । कथ ? इह य कार्माणद्रव्यानतभागोऽन्त्य सर्वावधिना ज्ञातस्तस्य पुनरनतभागीकृतस्य मन पर्ययज्ञेयोऽनंतभागोऽनतस्याऽनतभेदत्वात्। ऋजुमतिकार्मणद्रव्याऽनतभागाद्दूरविप्रकृष्टोऽल्पीयाननतभाग । विपुलमतेर्द्रव्यक्षेत्रकालविशुद्धिरुक्ता । भावतो विशुद्धि- सूक्ष्मतरद्रव्यविषयत्वादेव वेदितव्या। प्रकृष्टक्षयोपशमविशुद्धिभावयोगादप्रतिपातेनापि विपुलमतिर्विशिष्ट । स्वामिनां प्रवर्धमानचारित्रोदयत्वात्। ऋजुमति पुन प्रतिपाती स्वामिनां कषायोद्रेकाद्धीयमानचारित्रोदयत्वात्। यद्यस्यमन पर्ययस्य प्रत्यात्मकमय विशेष' अथानयोरवधिमन पर्यययो कुतो विशेष ? इत्यत आह—

## विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमन पर्यययो· ॥ २५ ॥

विशुद्धि प्रसाद । क्षेत्र यत्रस्थान् भावान् प्रतिपद्यते। स्वामी प्रयोक्ता। विषयो ज्ञेय ।

अवधिज्ञानान्मनःपर्ययस्य विशुद्ध्यभावोऽल्पद्रव्यविषयत्वादिति चेन्न भूय पर्यायज्ञानात् ॥ १ ॥ स्यान्मतमवधिज्ञानान्मन पर्ययो विशुद्धतर । कुत ? अल्पद्रव्यविषयत्वात्। यत सर्वावधिरूपिद्रव्यानतभागो मन पर्ययद्रव्यमिति । तन्न किं कारण भूय पर्यायज्ञानात् । यथा कश्चिद्बहूनि शास्त्राणि व्याचष्टे एकदेशेन न साकल्येन तद्गतमर्थं शक्नोति वक्तु, अपरस्त्वेक शास्त्र साकल्येन व्याचष्टे यावतस्तस्यार्थास्तान् सर्वान् शक्नोति वक्तु, अय पूर्वस्माद्विशुद्धतरविज्ञानो भवति। तथाऽवधिज्ञानविषयानतभागज्ञोपि मन पर्ययो विशुद्धतर । यतस्तमनतभाग रूपादिभिर्बहुभि पर्यायै प्ररूपयति। क्षेत्रमुक्त। विषयो वक्ष्यते। स्वामित्व प्रत्युच्यते—

विशिष्टसयमगुणैकार्थसमवायी मन पर्ययः ॥ २ ॥ विशिष्ट संयमगुणो यत्र विद्यते तत्रैव वर्तते मन पर्यय । तथाचोक्त मनुष्येषु मन पर्यय आविर्भवति, न देवनारकतैर्यग्योनेषु। मनुष्येषु चोत्पद्यमान गर्भजेषूत्पद्यते न सम्मूर्छजेषु। गर्भजेषूत्पद्यमान कर्मभूमिजेषूत्पद्यते नाकर्मभूमिजेषु। कर्मभूमिजेषूत्पद्यमान पर्याप्तकेषूत्पद्यते नापर्याप्तकेषु । पर्याप्तकेषूपजायमान सम्यग्दृष्टिषूपजायते न मिथ्या-

**ऋज्वी निर्वर्तिता प्रगुणा च ॥ १ ॥** कस्मात् निर्वर्तिता ? वाक्कायमनस्कृतार्थस्य परकीयमनोगतस्य विज्ञानात् । ऋज्वी मतिर्यस्य सोऽयमृजुमतिः ।

**अनिर्वर्तिता कुटिला च विपुला ॥ २ ॥** कस्मात् अनिर्वर्तिता ? वाक्कायमनस्कृतार्थस्य परकीयमनोगतस्य विज्ञानात्, विपुला मतिरस्य स विपुलमतिः । ऋजुमतिश्च विपुलमतिश्च ऋजुविपुलमती । एकस्य मतिशब्दस्य गतार्थत्वादप्रयोगः । अथवा ऋजुश्च विपुला च ऋजुविपुले ऋजुविपुले मती ययोस्तौ ऋजुविपुलमती इति । स एष मनःपर्ययो द्विधा ऋजुमतिर्विपुलमतिरिति । अत्रोक्तो भेदः । लक्षणमस्येदानीं वक्तव्यमित्यत्रोच्यते—

**मनःसंबंधेन लब्धवृत्तिर्मनःपर्ययः ॥ ३ ॥** वीर्यांतरायमनःपर्ययज्ञानावरणक्षयोपशमांगोपांगनामलाभोपष्टंभादात्मीयपरकीयमनःसंबंधेन लब्धवृत्तिरुपयोगो मनःपर्ययः ।

**मतिज्ञानप्रसंग इति चेन्नाऽन्यदीयमनोऽपेक्षामात्रत्वादभ्रे चंद्रव्यपदेशवत् ॥ ४ ॥** स्यान्मतं यथा मनश्चक्षुरादिसंबंधाच्चक्षुरादिज्ञानमाविर्भवति तन्मतिज्ञानं । तथा मनःपर्ययोपि मनःसंबंधाल्लब्धवृत्तिरिति मतिज्ञानं प्राप्नोतीति । तन्न किं कारणं ? अन्यदीयमनोऽपेक्षामात्रत्वात् । कथं ? अभ्रे चंद्रव्यपदेशवत् । यथाऽभ्रे चंद्रमसं पश्येति अभ्रमपेक्षाकारणमात्रं भवति न च चक्षुरादिवन्निर्वर्तकं चंद्रज्ञानस्य । तथाऽन्यदीयमनोप्यपेक्षाकारणमात्रं भवति परकीयमनसि व्यवस्थितमर्थं जानाति मनःपर्ययः इति । ततो नास्य तदायत्तप्रभव इति न मतिज्ञानप्रसंगः ।

**स्वमनोदेशे वा तदावरणकर्मक्षयोपशमव्यपदेशाच्चक्षुष्यवधिज्ञानानिर्देशवत् ॥ ५ ॥** अथवा चक्षुर्देशस्थानामात्मप्रदेशानामवध्यावरणक्षयोपशमाद्यथा चक्षुष्यवधिज्ञानव्यपदेश इष्टः । नचाऽवधिर्मतिर्भवति तथा मनःपर्ययज्ञानावरणक्षयोपशमात् स्वमनोदेशस्थानामात्मप्रदेशानां मनःपर्ययव्यपदेशः, नचास्य मतित्वं ।

**मनःप्रतिबंधज्ञानादनुमानप्रसंग इति चेन्न प्रत्यक्षलक्षणाऽविरोधात् ॥ ६ ॥** स्यान्मतं यथा धूमप्रतिबंधाद्धूमसंपृक्तेऽग्नावनुमानं तथान्यदीयमनःप्रतिबंधात्तन्मनःसंपृक्तानर्थान् जानन्मनःपर्ययोऽनुमानमिति । तन्न किं कारणं प्रत्यक्षलक्षणाऽविरोधात् । यत्प्रत्यक्षलक्षणमुक्तं (इंद्रियानिंद्रियनिरपेक्षमतीतव्यभिचारं साकारग्रहणं प्रत्यक्षमिति) तेनाऽविरोधो न मनःपर्ययोऽनुमानं । अनुमानं हि तेन निरुध्यते ।

**उपदेशपूर्वकत्वाच्चक्षुरादिकरणनिमित्तत्वाद्वाऽनुमानस्य ॥ ७ ॥** उपदेशाद्धि अयमग्निरयं धूम इत्युपलभ्य पश्चाद्धूमदर्शनादग्न्यनुमानं करोति । चक्षुरादिकरणसंबंधाच्च । ततोस्योक्तं प्रत्यक्षलक्षणं निरुध्यते । न च तथा मनःपर्यय उपदेशचक्षुरादिकरणसंबंधं चाऽपेक्षते ।

**स द्वेधा सूत्रोक्तविकल्पात् ॥ ८ ॥** स मनःपर्ययो द्वेधा । कुतः ? सूत्रोक्तविकल्पात् । ऋजुमतिर्विपुलमतिरिति ।

**आद्यस्त्रेधाऽर्जुमनोवाक्कायविषयभेदात् ॥ ९ ॥** आद्य ऋजुमतिमनःपर्ययस्त्रेधा । कुतः ? ऋजुमनोवाक्कायविषयभेदात् । ऋजुमनस्कृतार्थज्ञः ऋजुवाक्कृतार्थज्ञः ऋजुकायकृतार्थज्ञश्चेति । तद्यथा मनसार्थं व्यक्तं संचिंत्य वाचं वा धर्मादियुक्तामसंकीर्णामुच्चार्य कायप्रयोगं चोभयलोकफलनिष्पादनार्थमंगोपांगप्रत्यंगनिपातनाकुंचनप्रसारणादिलक्षणं कृत्वा पुनरनंतरे समये कालांतरे वा तमेवार्थं चिंतितमुक्तं कृतं वा, विस्मृतत्वान्न शक्नोति चिंतयितुं । तमेवंविधमर्थं ऋजुमतिमनःपर्ययः पृष्टोऽपृष्टो वा जानात्ययममावर्थं अनेन विधिना त्वया चिंतित उक्तः कृतो वेति । कथमयमर्थोलभ्यते ? आगमाविरोधात् । आगमे ह्युक्तं मनसा मनः परिच्छिद्य परेषां संज्ञादीन् जानाति इति मनसाऽऽत्मनेत्यर्थः । परमनः समंताद्विदित्वा परमनसा चिंतितस्य सचेतनेतरस्याऽर्थस्य मनस्यवस्थान्मनोव्यपदेशः । मंचस्थानां पुरुषाणां मंचव्यपदेशवत् । तमात्मना आत्माऽनवुध्याऽऽत्मनः परेषां च चिंता जीवितमरणसुखदुःखलाभालाभादीन् विजानाति । व्यक्तमनसा जीवानामर्थं जानाति नाऽव्यक्तमनसा । व्यक्तं स्फुटीकृतोऽर्थश्चिंतया सुनिर्वर्तितो यैस्ते जीवा व्यक्तमनसस्तैरर्थं चिंतितं ऋजुमतिर्जानाति नेतरे । कालतो जघन्येन जीवानामात्मनश्च द्वित्राणि, उत्कर्षेण सप्ताष्टानि भव-

**तदुपलक्षणार्थत्वात्तदविनाभाविरसादिग्रहणं ॥३॥** तद्रूप द्रव्यस्योपलक्षणत्वेनोपादीयते अतस्तद विनाभाविनो रसादयोपि गृह्यते। यद्येव तद्गतेषु सर्वेष्वनतपर्यायेषु अवधेर्विषयनिबध प्राप्नोतीत्यत आह—

**असर्वपर्यायग्रहणानुवृत्तेर्न सर्वगतिः ॥ ४ ॥** असर्वपर्यायेष्वित्येतद्ग्रहणमनुवर्तते। यथा-देवदत्ताय गौर्दीयता, जिनदत्ताय कवल इति दीयतामित्यभिसबध्यते। एवमिहाप्यसर्वपर्यायेष्वित्यभि-सबधान्न सर्वगतिर्भवति। ततो रूपिषु पुद्गलेषु प्रागुक्तद्रव्यादिपरिमाणेषु, जीवपर्यायेषु औदयिकोपश-मिकक्षायोपशमिकेषूत्पद्यतेऽवधिज्ञान। रूपिद्रव्यसबधात्न क्षायिकपारिणामकेषु। नापि धर्मास्तिकाया-दिषु तत्सबधाभावात्। अथ मनःपर्ययस्य को विषयनिबध ? इत्यत आह—

## तदनंतभागे मनःपर्ययस्य ॥ २८ ॥

यद्रूपिद्रव्य सर्वावधिज्ञानस्य विषयत्वेन समर्थित तस्यानतभागीकृतस्यैकस्मिन्भागे मन पर्यय प्रव-र्तते। अथात यन्निर्दिष्ट केवलज्ञान तस्य को विषयनिबध ? इत्यत आह—

## सर्वद्रव्यपर्यायेषु केवलस्य ॥ २९ ॥

अत्राह—किं द्रव्य ?

**स्वपर्यायान् द्रवति द्रूयते वा तैरिति द्रव्यं ॥ १ ॥** आत्मन पर्यायान् द्रवति गच्छतीति द्रव्य। बहुलापेक्षया कर्तरि साधुत्व। द्रूयते वा तैरिति द्रव्य॥

**कथचिद्भेदसिद्धौ तत्कर्तृकर्मव्यपदेशसिद्धिः ॥ २ ॥** द्रव्यस्य पर्यायाणां च कथचिद्भेदे सत्युक्त कर्तृकर्मव्यपदेश सिद्ध्यति॥

**इतरथा हि तदसिद्धेरत्यताव्यतिरेकात् ॥ ३ ॥** यद्येकातेनैकत्वमवधार्येत तस्य कर्तृकर्म-व्यपदेशासिद्धि स्यात्। कुत ? अत्यताव्यतिरेकात्। न हि तदेव निर्विशेषमेक शक्त्यतरापेक्षया विना कर्तृ-कर्म च भवितुमर्हति। अथ क पर्यायस्तस्य ?

**मिथोभवन प्रतिविरोध्यविरोधिनां धर्माणामुपात्तानुपात्तहेतुकानां शब्दांतरात्मलाभ-निमित्तत्वादर्पितव्यवहारविषयोऽवस्थाविशेषः पर्यायः ॥ ४ ॥** मिथोभवन प्रति केचिद्ध-र्माविरोधिन। केचिदविरोधिन। तत्र जीवस्य तावदनादिपारिणामिकचैतन्यजीवद्रव्यभव्याभव्योर्ध्व-गतिस्वभावास्तित्वादिभिरौदयिकादयो भावा यथासभव युगपद्भावादविरोधिन। विरोधिनश्च नारकतैर्यग्योन देवमनुष्यस्त्रीपुनपुसकएकद्वित्रिचतु पचेंद्रियबाल्यकौमारकोपप्रसादादय, सहानवस्थानात्। तथा पौ-द्गलिका अनादिपारिणामिका रूपरसगधस्पर्शशब्दसामान्यास्तित्वादय शुक्लादिपचकतिक्तादिपचक गध-द्वयस्पर्शाष्टकशब्दषट्कपर्यायै प्रत्येकमेकद्वित्रिचतु पचादिसख्येयानतगुणपरिणामिभिर्यथासभव युगप-द्भावादविरोधिन। विरोधिनश्च शुक्लकृष्णनीलतिक्तकटुकसुरभेतरगधादय प्रायोगिका वैश्रसिकाश्च परमाणुषु स्कधेषु च सहानवस्थानात्। एव धर्मास्तिकायादिष्वप्यमूर्तत्वाऽचेतनत्वाऽसख्येयप्रदेशत्व गतिकारणस्वभावाऽस्तित्वादयोऽनतभेदागुरुलघुगुणहानिवृद्धिविकारै स्वप्रत्ययै परप्रत्ययैश्च गतिकारण-त्वविशेषादिभिरविरोधिन परस्परविरोधिनश्च ज्ञेया। तेषु केचिदुपात्तहेतुका द्रव्यक्षेत्रकालभावनिमित्ता औदयिकादय। अनुपात्तहेतुकाश्च त्रिषु कालेष्वविकारिण पारिणामिकाश्चैतन्यादय। तेषा विरोध्यविरो-धिना धर्माणामुपात्तानुपात्तहेतुकाना शब्दातरात्मलाभस्य निमित्तत्वाच्चेतनो नारको बालक इत्यर्पितव्यवहार विषय इति व्यवहार-ऋजुसूत्रशब्दत्रिविधनयात्मक, द्रव्यार्थिकानर्पणात्पर्यायार्थिकेनार्पित, तस्य द्रव्यस्या-ऽवस्थाविशेष पर्याय इत्युच्यते।

**तयोरितरेतरयोगलक्षणो द्वद्वः ॥ ५ ॥** तयोरितरेतरयोगलक्षणो द्वद्वो वेदितव्य। द्रव्याणि च पर्यायाश्च द्रव्यपर्याया इति।

दृष्टिसासादनसम्यग्दृष्टिसम्यङ्मिथ्यादृष्टिषु। सम्यग्दृष्टिषूपजायमानः संयतेषूपजायते नाऽसंयतसम्यग्दृष्टिसंयतासंयतेषु। संयतेषूपजायमानः प्रमत्तादिषु क्षीणकषायांतेषूपजायते नोत्तरेषु। तत्र चोपजायमानः प्रवर्धमानचारित्रेषूपजायते न हीयमानचारित्रेषु। सप्रवर्धमानचारित्रेषूपजायमानः सप्तविधान्यतमर्द्धिप्राप्तेषु जायते नेतरेषु। ऋद्धिप्राप्तेषु च केषुचिन्न सर्वेष्विति विशिष्टसंयमग्रहणं वाक्ये कृतं। अवधिः पुनश्चातुर्गतिकेष्विति। स्वामिभेदादप्यनयोर्विशेषः। इदानीं केवलज्ञानलक्षणाभिधानं प्राप्तकालं तदुल्लंघ्य ज्ञानानां विषयनिबंधः परीक्ष्यते। कुतः? तस्य, मोहक्षयाज्ज्ञानदर्शनावरणांतरायक्षयाच्च केवलमित्यत्र वक्ष्यमाणत्वात्। यद्येवमाद्ययोरेव तावन्मतिश्रुतयोर्विषयनिबंध उच्यतामित्यत आह—

## मतिश्रुतयोर्निबंधो द्रव्येष्वसर्वपर्यायेषु ॥ २६ ॥

निबंधनं निबंधः। कस्य? मतिश्रुतविषयस्य। तत्तर्हि विषयग्रहणं कर्तव्यं न कर्तव्यं ॥

**प्रत्यासत्तेः प्रकृतविषयग्रहणाभिसंबंधः ॥ १ ॥** प्रकृतं विषयग्रहणमस्ति। क्व प्रकृतं? विशुद्धिक्षेत्रस्वामिविषयेभ्य इति। तत्र प्रत्यासत्तेर्विषयग्रहणमिहाभिसंबध्यते। ननु च स विभक्त्यंतरनिर्दिष्टो न शक्यते इह संबद्धुं?। अर्थवशाद्विभक्तिपरिणामः। यथोच्चानि देवदत्तस्य गृहाणि आमंत्रयस्वैनं देवदत्तमिति गम्यते। देवदत्तस्य गावोऽश्वाहिरण्यमाढ्यो वैधवेयो देवदत्त इति गम्यते। एवमिहापि निबंधः। कस्य? विषयस्येत्यभिसंबध्यते। अथ द्रव्येष्विति बहुत्वनिर्देशः किमर्थः?—

**द्रव्येष्विति बहुत्वनिर्देशः सर्वद्रव्यपर्यायसंग्रहार्थः ॥ २ ॥** जीवधर्माऽधर्माकाशकालपुद्गलाभिधानानि षडत्र द्रव्याणि तेषां सर्वेषां संग्रहार्थः द्रव्येष्विति बहुत्वनिर्देशः क्रियते ॥

**तद्विशेषणार्थमसर्वपर्यायग्रहणं ॥ ३ ॥** तेषां द्रव्याणामविशेषेण मतिश्रुतयोर्विषयभावप्रसंगे तद्विशेषणार्थमसर्वपर्यायग्रहणं क्रियते। तानि द्रव्याणि मतिश्रुतयोर्विषयभावमापद्यमानानि कतिपयैरेव पर्यायैर्विषयभावमास्कंदंति न सर्वपर्यायैरनंतैरपीति। तत्कथं? इह मतिश्चक्षुरादिकरणनिमित्ता रूपाद्यालंबना। सा यस्मिन् द्रव्ये रूपादयो वर्तंते न तत्र सर्वान् पर्यायानवगृह्णाति चक्षुरादिविषयानेवाऽऽलंबते श्रुतमपि शब्दलिंगं शब्दाश्च सर्वे संख्येया एव, द्रव्यपर्यायाः पुनरसंख्येयानंतभेदा न ते सर्वे विशेषाकारेण तैर्विषयीक्रियते। उक्तंच—

पण्णवणिज्जा भावा अणंतभागो दु अणभिलप्पाणं। पण्णवणिज्जाणं पुण अणंतभागो सुदणिबद्धो ॥

**अतींद्रियेषु मतेरभावात्सर्वद्रव्यासंप्रत्यय इति चेन्न नोइंद्रियविषयत्वात् ॥ ४ ॥** स्यान्मतं धर्मास्तिकायादिषु मतेरभावोऽतींद्रियत्वात्। ततो मतिः सर्वद्रव्यविषयनिबंधेति लक्षणमयुक्तमिति। तन्न किं कारणं? नोइंद्रियविषयत्वात्। नोइंद्रियावरणक्षयोपशमलब्ध्यपेक्षं नोइंद्रियं, तेषु व्याप्रियते। अथ हि तत्र न वर्तेताऽनधिना सह निर्दिश्येत रूपिष्वेव वृत्तेः। अथ मतिश्रुतयोरनंतरनिर्देशार्हस्यावधेः को विषयनिबंधः? इत्यत आह—

## रूपिष्ववधेः ॥ २७ ॥

**रूपशब्दस्याऽनेकार्थत्वे सामर्थ्याच्छुक्लादिग्रहणं ॥ १ ॥** अयं रूपशब्दोऽनेकार्थः। क्वचिच्चाक्षुषे वर्तते यथा—रूपरसगंधस्पर्शा इति। क्वचित्स्वभावे वर्तते यथा अनंतरूपमनंतस्वभावमिति। तत्रेह सामर्थ्याच्चक्षुर्विषये शुक्लादौ वर्तमानो गृह्यते। यदि स्वभाववाचिना ग्रहणं स्यादनर्थकं स्यात्, न हि कस्यचित्स्वभावो नास्तीति ॥

**भूमाद्यनेकार्थसंभवे नित्ययोगोऽभिधानवशात् ॥ २ ॥** यद्यपि मत्वर्थीयस्य भूमादयोऽर्था बहवः संभवंति। इहाभिधानवशान्नित्ययोगो वेदितव्यः। नित्यं हि पुद्गला युक्ता रूपेणेति, यथा क्षीरिणो वृक्षा इति। यद्येवमवधिज्ञानस्य पुद्गला रूपमुखेनैव विषयभावं प्रतिपद्येरन् न रसादिमुखेन? नैष दोषः—

---

१ मति। २ द्रव्ये।

मुखमनुमुखमस्येति वृत्तावेकस्य मुखशब्दस्य निवृत्ति , एवमिहापि एकादिरादिर्येषा तानीमान्येकादीति इत्येकस्यादिशब्दस्य निवृत्ति ।

**अवयवेन विग्रहः समुदायो वृत्त्यर्थः ॥६॥** अवयवेन विग्रह क्रियते, वृत्त्यर्थ समुदायो भवति। तेनैकादीन्यभ्यतरीकृत्य भाज्यान्यर्पयितव्यानीत्यर्थ । किं सर्वाणि । नेत्याह आचतुर्भ्य । कुत एतत् ?–

**केवलस्याऽसहायत्वादितरेषां च क्षयोपशमनिमित्तत्वाद्यौगपद्यभाव ॥७॥** यत केवल ज्ञान तदसहाय, इतराणि च ज्ञानानि क्षयोपशमनिमित्तानि, अतो विरोधाद्युगपदसभवस्तस्मादुच्यते आ चतुर्भ्य इति।

**नाभावोऽभिभूतत्वादहनि नक्षत्रवदिति चेन्न क्षायिकत्वात् ॥८॥** स्यादेतन्नाभाव क्षायोपशमिकानां ज्ञानानां केवलिनि, किंतु केवलज्ञानेन महताऽभिभूतानि स्वप्रयोजनेन व्याप्रियते । भास्करप्रभाभिभिभूतनक्षत्रवदिति । तन्न किं कारण क्षायिकत्वात् सक्षीणमकलज्ञानावरणे भगवत्यर्हति कथ क्षायोपशमिकानां ज्ञानानां सभव । न हि परिप्राप्तसर्वशुद्धौ पदे प्रदेशाऽशुद्धिरस्ति ।

**इन्द्रियत्वादिति चेन्नाऽऽर्षार्थानवबोधात् ॥ ९ ॥** स्यादेतदेवमागम प्रवृत्त । पचेंद्रिया असज्ञिपचेंद्रियादारभ्य आ अयोगिकेवलिन इति । अत इन्द्रियवत्त्वात्तत्कार्येणापि ज्ञानेन भवितव्यमिति । तन्न किं कारण आर्षार्थानवबोधात्। आर्षे हि सयोग्ययोगिकेवलिनो पचेंद्रियत्व द्रव्येंद्रिय प्रत्युक्त न भावेंद्रिय प्रति । यदि हि भावेंद्रियमभविष्यत् , अपि तर्हि असक्षीणमकलावरणत्वात्सर्वज्ञतैवास्य न्यवर्तिष्यत । तस्मादेतदुक्त भवति एकस्मिन्नात्मनि द्वे मतिश्रुते, कचित्त्रीणि मतिश्रुतावधिज्ञानानि, मतिश्रुतमन पर्ययज्ञानानि वा क्वचिच्चत्वारि मतिश्रुतावधिमन पर्ययज्ञानानि, न पचैकस्मिन् युगपत्सभवति ।

**सख्यावचनो वैकशब्दः ॥ १० ॥** अथवा सख्यावचनोऽयमेकशब्द । एकमादिर्येषा तानीमान्येकादीनि, कथ मतिज्ञानमेकस्मिन्नात्मनि एक यदक्षरश्रुत द्व्यनेकद्वादशभेदमुपदेशपूर्वक तद्भजनीय स्याद्वा नवेति । इतरत्पूर्ववत् । पर आह–असख्यासहायप्रधान्यवचने एकशब्दे सति एकादीनि केवलादीनीत्यर्थ । एकस्मिन्नात्मन्येक केवलज्ञान क्षायिकत्वात्। द्वे मतिश्रुते इत्यादिपूर्ववत्। अथोक्तानि मत्यादीनि ज्ञानव्यपदेशमेव लभत उतान्यथापीत्यत आह–

## मतिश्रुतावधयो विपर्ययश्च ॥३१॥

विपर्ययोऽन्यथा । कुत । सम्यगधिकारात् । चशब्द समुच्चयार्थ विपर्ययश्च सम्यक् चेति । कुत पुनरेषां विपर्यय ?

**मिथ्यादर्शनपरिग्रहान्मत्यादिविपर्ययः ॥ १ ॥** योसौ दर्शनमोहनीयोदये सति मिथ्यादर्शन परिणाम तेन सहैकार्थसमवाया मत्यादीनां विपर्ययो भवति । ननु च मणिकनकादीना वर्चोगृहगतानामपि स्वभावविनाशो न भवति तद्वन्मत्यादीनामपि स्यात् ? नैष दोष —

**सरजसकटुकालाबूगतदुग्धवत्स्वगुणविनाश ॥२॥** यथा सरजसकटुकालाबूभाजने निहित दुग्ध स्वगुणं परित्यजति । तथा मत्यादीन्यपि मिथ्यादृष्टिभाजनगतानि दुष्यतीति। आधारस्य दोषाद्धि आधेयस्य दोषो जायते । ननु च नायमेकात उक्तमेतन्मणिकनकादयो वर्चोगृहगता अपि स्वभाव न त्यजतीति तत्र कथमेतदवसीयते अलाबूदुग्धवद्दुष्यति मत्यादीनि न पुनर्मण्यादिवन्न दुष्यतीति ?

**पारिणामिकशक्तिविशेषात् ॥ ३ ॥** पारिणामिकस्य हि वस्तुन शक्तिविशेषादन्यथाभावो भवति । यथालाबूद्रव्य दुग्धं विपरिणामयितु शक्नोति तथा मिथ्यादर्शनमपि मत्यादीनामन्यथात्व कर्तुमल । तदुदयेऽन्यथानिरूपणदर्शनात् । वर्चोगृह तु मण्यादीना विकार नोत्पादयितुमल विपरिणामकद्रव्य सनिधाने तेषामपि भवत्येवान्यथात्व । यदा तु सम्यग्दर्शन प्रादुर्भूत तदा मिथ्यापरिणामदर्शनाभावात्तेषा मत्यादीनां सम्यक्त्व अत सम्यग्दर्शनमिथ्यादर्शनोदयविशेषात्तेषा त्रयाणा द्विधा क्लृप्तिर्भवति । मतिज्ञान

१ समासे । २ समासार्थः । ३ प्रतिपादित ।

**द्वंद्वेऽन्यत्वं प्लक्षन्यग्रोधवदिति चेन्न तस्य कथंचिद्भेदेपि दर्शनाद्गोत्वगोपिंडवत्** ॥ ६ ॥ स्यान्मत यदि द्वंद्व ?, प्लक्षन्यग्रोधवदन्यत्व द्रव्यपर्यायाणा प्राप्नोतीति । तन्न किं कारण तस्य कथंचिद्भेदे दर्शनात् । गोत्वगोपिंडवत् । यथा गोत्व च गोपिंडश्च गोत्वगोपिंडावित्यनन्यत्वेपि द्वंद्वो भवति तथा द्रव्य पर्यायेष्विति । ननु सामान्यविशेषयोरन्यत्वात्साध्यसममेतदिति । नैष दोषः उक्तमेतदनन्यत्व सामान्य विशेषयो ।

**द्रव्यग्रहणं पर्यायविशेषणं चेन्नानर्थक्यात्** ॥ ७ ॥ स्यादेतद् द्रव्याणा पर्याया द्रव्यपर्याया इति द्रव्यग्रहण पर्यायविशेषणमिति । तन्न किं कारण आनर्थक्यात् । एवंसति द्रव्यग्रहणमनर्थक स्यात् । नह्यद्र व्यस्य पर्याया सतीति ।

**द्रव्याज्ञानप्रसंगाच्च** ॥ ८ ॥ केवलेन पर्याया एव ज्ञायते न द्रव्याणीति द्रव्याज्ञान प्राप्नोत्युत्तर पदार्थप्रधानत्वात् । अथ मतमेतत् सर्वेषु पर्यायेषु ज्ञातेषु न किंचिदज्ञातमस्ति ततो व्यतिरिक्तस्य द्रव्यस्या भावात् । यद्येव द्रव्यग्रहणमनर्थकमित्युक्त पुरस्तात् । तस्मात्साधूक्त द्वंद्वोयमिति । ननु च द्वंद्वेपि द्रव्यग्रहणम नर्थक पर्यायव्यतिरेकेणाऽनुपलब्धेरिति । नैष दोष सज्ञास्वालक्षण्यादिभेदाद्भेदोपपत्ते । अथ सर्वग्रहण किमर्थं ननु बहुवचननिर्देशादेव बहुत्वसप्रत्ययसिद्धे ।

**सर्वग्रहणं निरवशेषप्रतिपत्त्यर्थं** ॥ ९ ॥ ये लोकालोकभेदभिन्नास्त्रिकालविषया द्रव्यपर्याया अनंतास्तेषु निरवशेषेषु केवलज्ञानविषयनिबध इति प्रतिपत्त्यर्थं सर्वग्रहण । यावाल्लोकालोकस्वभावोऽनतः तावतोऽनतानता यद्यपि स्युस्तानपि ज्ञातुमस्य सामर्थ्यमस्तीत्यपरिमितमाहात्म्य केवलज्ञान वेदितव्य । आह- विषयनिबधोवधृतो मत्यादीना, इद तु न निर्ज्ञातमेकस्मिन्नात्मनि स्वनिमित्तसनिधानोपजनितवृत्तीनि ज्ञानानि यौगपद्येन कति भवति ? इत्यत आह—

## एकादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ॥ ३० ॥

एक इति कोय शब्द ?

**अनेकार्थसंभवे विवक्षात' प्राथम्यवचन एकशब्द'** ॥ १ ॥ अयमेकशब्दोऽनेकस्मिन्नर्थे दृष्ट- प्रयोग' । क्वचित्सख्याया वर्तते, एको द्वौ बहव इति । क्वचिदन्यत्वे, एके आचार्या अन्ये आचार्या इति । क्वचिदसहाये, एकाकिनस्ते विचरति वीरा इति । क्वचित्प्राधम्ये, एकमागमन प्रथममागमनमिति । क्वचित्प्रा- धान्ये एकहता सेना करोमि प्रधानहता सेना करोमीत्यर्थ । तत्रेह विवक्षात प्राथम्यवचन एकशब्दो वेदितव्य ।

**आदिशब्दश्चावयववचन** ॥ २ ॥ आदिशब्दश्चायमनेकार्थसभवे, विवक्षात इहावयववचनो वेदितव्य । क्वचिद्व्यवस्थायां वर्तते ब्राह्मणादयश्चत्वारो वर्णा ब्राह्मणव्यवस्थाः ब्राह्मणक्षत्रियविट्शूद्रा इत्यर्थ । क्वचित्प्रकारे भुजगादय परिहर्तव्या , भुजगप्रकारा विषवत इत्यर्थ । क्वचित्सामीप्ये नद्यादीनि क्षेत्राणि नदीसमीपानीत्यर्थ । क्वचिदवयवे ऋगादिमधीते ऋगवयवमधीते इत्यर्थ । तेनैतदुक्त भवति एक- स्यादिरेकादि प्रथमावयव इति । कस्य ? प्रथमस्य परोक्षस्य । क पुनरवयव ? मतिज्ञान ।

**सामीप्यवचनो वा** ॥ ३ ॥ अथवाऽयमादिशब्द सामीप्यवचनो द्रष्टव्य । तेन प्रथमस्य मतिज्ञानस्य श्रुत समीपमित्युक्त भवति ।

**मतेर्बहिर्भावप्रसंग इति चेन्नाऽनयो सदाऽव्यभिचारात्** ॥४॥ स्यादेतदेव सति मतेर्बहिर्भाव- प्राप्नोतीति । तन्न किं कारणमनयो सदाऽव्यभिचारात् । एते हि मतिश्रुते सर्वकालमव्यभिचारिणी, नारद- पर्वतवत् । तस्मादनयोरन्यतरग्रहणे इतरस्य ग्रहण सन्निहित भवति ।

**ततोन्यपदार्थे वृत्तावेकस्यादिशब्दस्य निवृत्तिरुष्ट्रमुखवत्** ॥ ५ ॥ यथोष्ट्रस्य मुखमुष्ट्रमुख, उष्ट्र-

मत्यज्ञान श्रुतज्ञान श्रुताज्ञान अवधिज्ञान विभंगज्ञामिति । अत्राह—रूपादि विषयोपलब्धिव्यभिचाराभावा द्विपर्ययाभाव यथैव मतिज्ञानेन सम्यग्दृष्टयो रूपादीनुपलभते यथा मिथ्यादृष्टयोऽपि मत्यज्ञानेन । यथैव घटादिषु रूपादीन् श्रुतेन निश्चन्वत्युपदिशति च परेभ्यस्तथा श्रुताज्ञानेनापि । तथैवावधिना रूपिणोर्थानवयंति तथा विभंगेनापीति । तस्मान्नास्ति विपर्यय इत्यत आह—

## सदसतोरविशेषाद्यदृच्छोपलब्धेरुन्मत्तवत् ॥ ३२ ॥

**सच्छब्दस्यानेकार्थसंभवे विवक्षात. प्रशस्तार्थग्रहणं** ॥ १ ॥ अय सच्छब्दोनेकार्थ इति व्याख्यात । तस्येह विवक्षात प्रशसार्थस्य ग्रहण वेदितव्य प्रशस्त तत्त्वज्ञामित्यर्थ । असदज्ञान । तयो सदसतोरविशेषेण यदृच्छयोपलब्धेर्विपर्ययो भवति । कथमुन्मत्तवत्, यथा उन्मत्तो दोषोदयादुपहतेंद्रियमति विपरीतग्राही भवति सोश्व गौरित्यध्यवस्यति । गा वाऽश्व , इति । लोष्ठ सुवर्णं, सुवर्णं लोष्ठमिति । लोष्ठ लोष्ठमिति सुवर्णं सुवर्णमिति तस्यैवमविशेषेणाध्यवस्यतोऽज्ञानमेव भवति । तद्वत् मिथ्यादर्शनोपहतेंद्रियमतेर्मति श्रुतावधयोप्यज्ञानमेव भवतीति ॥

**भवत्यर्थग्रहणं वा** ॥२॥ अथवा सच्छब्दोय भवत्यर्थे वेदितव्य । सद्विद्यमानमित्यर्थ असदविद्यमान, तयोरविशेषेण यदृच्छोपलब्धे विपर्ययो भवति कदाचिद्रूपादि सदप्यसदिति प्रतिपद्यते असदपि सदिति । कदाचित्तु सत्सदेवाऽसदप्यसदेवेति । कुत [1]—

**प्रवादिपरिकल्पनाभेदाद्विपर्ययग्रह** ॥ ३ ॥ प्रवादिनां कल्पनाभेदाद्विपर्ययग्रहो भवति तद्यथा केचित्तावदाहु —द्रव्यमेव न रूपादय इति । अपर आहु रूपादय एव न द्रव्यमिति । अपरेषां दर्शन अन्यद्द्रव्यमन्ये च रूपादय इति । कथमेषा विपर्ययग्रह' [1] उच्यते । यदि द्रव्यमेव न रूपादय [1], लक्षणाभावाल्लक्ष्यानवधारणप्रसग । किंचेंद्रियेण सनिकृष्यमाण द्रव्यं रूपाद्यभावे सर्वात्मना संनिकृष्येत तत' सर्वात्मना ग्रहणप्रसग । करणभेदाभावप्रसगश्च । नचासौ दृष्ट इष्टो वा । अथ रूपादय एव न द्रव्य, एवमपि निराधारत्वादभावप्रसग । किं च परस्परविलक्षणानां रूपादीना समुदयेपि सति एकानर्थांतरभावात् समुदस्य सर्वाभाव परस्परतोर्थांतरभूतत्वात् । अथ ह्यन्यद्द्रव्य अन्ये रूपादय , एवमपि तेषा लक्ष्यलक्षण भावाभाव परस्परतोर्थांतरत्वात् । दडिदडवत् लक्ष्यलक्षणभाव इति चेन्न वैषम्यात् । पृथक्सतोर्लक्ष्य लक्षणभावो युक्तो नासतोरिति । किं च रूपादिषु गुणेष्वमूर्तेषु द्रव्यादर्थांतरभूतेषु नेंद्रियसनिकर्षो युक्त स्ततश्च ज्ञानाभाव । न चार्थांतरभूत द्रव्य कारण भवितुमर्हति । किं च—

**मूलकारणविप्रतिपत्तेः** ॥ ४ ॥ एषा घटरूपादीना मूलकारणे प्रवादिना विप्रतिपत्ति । तद्यथा केचिदाहु अव्यक्तान्महदहकारतन्मात्रेंद्रियमहाभूतमृत्पिंडादिनिर्वृत्तिक्रमेण घटादेर्विश्वरूपस्य जगत उत्पाद । इति तदयुक्त न हि प्रधानस्यामूर्तत्वनिरवयवत्वनि ष्क्रियत्वाऽतींद्रियत्वानत्यनित्यत्वापरप्रयोज्यत्वादिविशेषोपेतस्य तद्विलक्षणो घटादि कार्यो भवितुमर्हति अदृष्टत्वात् । न वा परप्रयोज्यस्य प्रधानस्य स्वयमभिप्रायरहितस्याभिप्रायपूर्वकप्रसवक्रमो युक्त । पुरुषस्तावन्निष्क्रियत्वान्न महदादिसर्गार्थं प्रधान प्रयुक्ते । स्वय च निष्क्रियत्वात्प्रधान नात्मान महदादिसर्गार्थं प्रयोक्तुमर्हति । न हि स्वय गतिविकल पंगुरात्मानमेवा वष्टभ्योत्थाय गच्छन्दृष्ट । किंचाप्रयोजनस्य प्रधानस्य महदादि सर्गो न युक्तिमान् । पुरुषभोग प्रयोजनमिति चेन्न स्वार्थाभावात् । नित्यस्य विभोरात्मन भोगपरिणामाभावाच्च । किंचाऽचेतनत्वात् । इह लोके चेतनश्चैत्र ओदनार्थी क्रियाफलसाधनज्ञ तदर्थेष्वग्निसधुक्षणादिषु प्रवर्तमानो दृष्ट । न च तथा प्रधान चेतनमतोऽस्य महदादिक्रियाप्रसवक्रमाभाव । नच पुरुषस्तस्य क्रमस्य प्रयोजको निष्क्रियत्वात् । अपर आहु. परमाणुभ्य प्रतिनियतपार्थिवादिजातिविशिष्टेभ्योऽदृष्टादिसंनिधाने सति सहतेभ्योऽर्थांतरभूतघटादिकार्यात्मलाभ इति तदप्ययुक्त—नित्यत्वादणूना कार्यारंभशक्त्यभावात् । सति चारंभे नित्यत्वहानि । नचार्थांतरभूतस्य कार्यस्यारभो युक्त व्यतिरेकानुपलब्धेरुपलब्धौ चाणुमहत्वाभाव । न च जातिप्रतिनियमोस्ति भिन्न-

१ अवगच्छति ।

जातीयानामप्यारम्भदर्शनात् । भिन्नजातीयेषु समुदायमात्रमिति चेत्तुल्यजातीयेष्वपि तत्प्रसग । न चात्मनो घटाद्यारम्भे कर्तृत्वमुपपन्न निष्क्रियत्वान्नित्यत्वाच्च । नाप्यात्मगुणस्यादृष्टादेर्निष्क्रियत्वादेव । न च निष्क्रियोऽर्थांतरे क्रियाहेतुर्दृष्ट. । अन्ये मन्यते वर्णादिपरमाणुसमुदयात्मका रूपपरमाणवोऽतींद्रिया समुदिता सत इद्रियग्राह्यत्वमनुभूय घटादिकार्यात्मलाभहेतुत्व प्रतिपद्यत इति, तदयुक्त प्रत्येकरूपपरमाणूनामतींद्रियत्वात्ततोऽन्यस्य कार्यस्याप्यतींद्रियत्वप्रसगात् ततश्च दृश्यविषयप्रमाणप्रमाणाभासविकल्पाभाव । कार्याभावाच्च तल्लिंगकारणस्याप्यभाव । किं च क्षणिकत्वान्निष्क्रियत्वाच्च कार्यारम्भाभाव । विविक्तशक्तीनां परस्पराभिसबधाभावश्च । न चान्योर्थश्चेतनस्तेषा सघस्य कर्तास्ति तदभावात्सबधाभाव । एवमन्येष्वपि प्रवादिषु सत्यसदिति असत्यपि सदिति विपर्ययो मिथ्यादर्शनोदयवशाद्वेदितव्य । पित्तोदयाकुलितरसनेंद्रियविपर्ययवत् । ततो यदुक्त रूपादिविषयोपलब्धिव्यभिचाराभावान्न मिथ्यादृष्टेर्ज्ञानत्रयमज्ञानमिति तदसम्यक् । व्याख्यात ज्ञान लक्षणादिभि. । इदानीं चारित्र निर्देष्टव्य तदुल्लघ्य नया उच्यते कस्मात् ? मोक्षविधाने तस्य वक्ष्यमाणत्वात् । कुत पुनस्तन्मोक्षविधौ वक्ष्यते ? इति चेन्मोक्ष प्रति प्रधानकारणत्वात् । किं कृत प्राधान्य ? कृत्स्नकर्मेंधननिर्दहनकृत । यत आत्मा व्युपरतक्रियाध्यानाविर्भूतात्मबल कृत्स्नकर्मेंधननिर्दहन समर्थो भवति । ननु क्षायिकसम्यक्त्वकेवलज्ञानोपेतोपि यदि स्यात् क्षायिककेवलज्ञानोत्पत्त्यनतरमेव कृत्स्नकर्मक्षय स्यात् । व्युपरतक्रियाध्यानोत्पत्त्यनतरमेव भवति तच्चोत्तम चारित्र, 'कर्मादानहेतुक्रियाव्युपरति श्चारित्रमिति वचनात्' । यदीह तदुच्यते मोक्षविधानेपि तद्वक्तव्यमिति गौरव स्यादेवमपि जीवादयो निर्देष्टव्या उच्यते । प्रमाण व्याख्यात प्रमाणैकदेशा नया । 'प्रमाणनयैरधिगम ' इति वचनात् । तदनतरवचनार्हा नया । यद्येव के ते नया ? इत्यत आह–

## नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवंभूता नयाः ॥ ३३ ॥

शब्दापेक्षयेकादिसख्येयविकल्पा नया । तत्रातिसक्षेपादप्रतिपत्ति , अतिविस्तरे चाल्पप्रज्ञानामननुग्रह इति मध्यतया प्रतिपत्त्या सप्तनया अत्रोच्यते । तेषा सामान्यविशेषलक्षण वक्तव्य । तत्र सामान्यलक्षणमुच्यते–

**प्रमाणप्रकाशितोऽर्थविशेषप्ररूपको नय ॥ १ ॥** प्रकर्षेण मान प्रमाण सकलादेश इत्यर्थ , तेन प्रकाशिताना न प्रमाणाभासपरिगृहीतानामित्यर्थ , तेषामर्थानामस्तित्वनास्तित्वनित्यत्वाद्यनतात्मना जीवादीना ये विशेषा पर्यायास्तेषा प्रकर्षेण रूपक प्ररूपक निरुद्धदोषानुसगद्वारेणेत्यर्थ , एव लक्षणो नयस्तस्य द्वौ मूलभेदौ द्रव्यास्तिक पर्यायास्तिक इति । द्रव्यमस्तीति मतिरस्य द्रव्यभवनमेव नातोऽन्ये भावविकारा नाप्यभावस्तद्व्यतिरेकेणानुपलब्धेरिति द्रव्यास्तिक । पर्याय एवास्ति, इति मतिरस्य जन्मादिभावविकारमात्रमेव भवन न ततोऽन्यद्द्रव्यमस्ति तद्व्यतिरेकेणानुपलब्धेरिति पर्यायास्तिक । अथवा द्रव्यमेवार्थोस्य न गुणकर्मणी तदवस्थारूपादिति द्रव्यार्थिक । पर्याय एवार्थोस्य रूपाद्युत्क्षेपणादिलक्षणो न ततोन्यद्द्रव्यमिति पर्यायार्थिक । अथवाऽर्यते गम्यते निष्पाद्यत इत्यर्थ । कार्य द्रवति गच्छतीति द्रव्य कारण । द्रव्यमेवार्थोस्य कारणमेव कार्य नार्थांतर, न च कार्यकारणयो कश्चिद्रूपभेद तदुभयमेकाकारमेव पर्वांगुलिद्रव्यवदिति द्रव्यार्थिक । परि समतादाय पर्याय । पर्याय एवार्थ कार्यमस्य न द्रव्यमतीतानागतयोर्विनष्टानुत्पन्नत्वेन व्यवहाराभावात् स एवैक कार्यकारणव्यपदेशभागिति पर्यायार्थिक । अथवाऽर्थनमर्थ प्रयोजन द्रव्यमेवार्थोस्य प्रत्ययाभिधानानुप्रवृत्तिलिंगदर्शनस्य निह्नोतुमशक्यत्वादिति द्रव्यार्थिक । पर्यायोर्थ प्रयोजनमस्य वाग्विज्ञानव्यावृत्तिनिबधव्यवहारप्रसिद्धेरिति पर्यायार्थिक । तद्भेदा नैगमादय । एषां विशेषलक्षणमुच्यते–

**अर्थसकल्पमात्रग्राही नैगम ॥ २ ॥** निगच्छन्त्यस्मिन्निति निगमनमात्र वा निगम , निगमे कुशलो भवो वा नैगमस्तस्य लोके व्यापार । अर्थसकल्पमात्रग्रहण प्रस्थेंद्रगृहगम्यादिषु । तद्यथा–कश्चित्प्रगृह्य परशु पुरुष गच्छतमभिसमीक्ष्याह किमर्थं गच्छति भवानिति स तस्मै व्याचष्टे प्रस्थार्थमिति । एव-

मत्यज्ञान श्रुतज्ञान श्रुताज्ञान अवधिज्ञान विभङ्गज्ञामिति । अत्राह—रूपादि विषयोपलब्धिव्यभिचाराभा द्विपर्ययाभाव यथैव मतिज्ञानेन सम्यग्दृष्टयो रूपादीनुपलभते यथा मिथ्यादृष्टयोपि मत्यज्ञानेन । यथैव प्र दिषु रूपादीन् श्रुतेन निश्चन्वत्युपदिशति च परेभ्यस्तथा श्रुताज्ञानेनापि । तथैवावधिना रूपिणोर्थानेवयं तथा विभंगेनापीति । तस्मान्नास्ति विपर्यय इत्यत आह—

## सदसतोरविशेषाद्यदृच्छोपलब्धेरुन्मत्तवत् ॥ ३२ ॥

**सच्छब्दस्यानेकार्थसंभवे विवक्षात प्रशंसार्थग्रहण ॥ १ ॥** अय सच्छब्दोनेकार्थे इ स्याद्यात । तस्येह विवक्षात प्रशसार्थस्य ग्रहण वेदितव्य प्रशस्त तत्त्वज्ञमित्यर्थ । असदज्ञान । तयो स सतोरविशेषेण यदृच्छयोपलब्धेर्विपर्ययो भवति । कथमुन्मत्तवत्, यथा उन्मत्तो दोषोदयादुपहतेंद्रियम विपरीतग्राही भवति सोश्व गौरित्यध्यवस्यति । गा वाऽश्व , इति । लोष्ठ सुवर्णं, सुवर्णं लोष्ठमिति । लोष्ठ लोष्ठ मिति सुवर्णं सुवर्णमिति तस्यैवमविशेषेणाध्यवस्यतोऽज्ञानमेव भवति । तद्वत् मिथ्यादर्शनोपहतेंद्रियमतेर्म श्रुतावधयोप्यज्ञानमेव भवतीति ॥

**भवत्यर्थग्रहणं वा ॥२॥** अथवा सच्छब्दोय भवत्यर्थे वेदितव्य । सद्विद्यमानमित्यर्थ. असदविद्यमान तयोरविशेषेण यदृच्छोपलब्धे विपर्ययो भवति कदाचिद्रूपादि सदप्यसदिति प्रतिपद्यते असदपि सदिति कदाचित्तु सत्सदेवाऽसदप्यसदेवेति । कुत [1]—

**प्रवादिपरिकल्पनाभेदाद्विपर्ययग्रह ॥ ३ ॥** प्रवादिनां कल्पनाभेदाद्विपर्ययग्रहो भवति तद्यथा केचित्तावदाहु —द्रव्यमेव न रूपादय इति । अपर आहु रूपादय एव न द्रव्यमिति । अपरेषा दर्शन अन्यद्द्रव्यमन्ये च रूपादय इति । कथमेषां विपर्ययग्रह [1] उच्यते । यदि द्रव्यमेव न रूपादय [1], लक्षणा भावाल्लक्ष्यस्यानवधारणप्रसग । किंचेंद्रियेण सनिकृष्यमाण द्रव्य रूपाद्यभावे सर्वात्मना सनिकृष्येत तत सर्वात्मना ग्रहणप्रसग । करणभेदाभावप्रसगश्च । नचासौ दृष्ट इष्टो वा । अथ रूपादय एव न द्रव्य, एव मपि निराधारत्वादभावप्रसग । किं च परस्परविलक्षणानां रूपादीना समुदयेपि सति एकानर्थांतरभावात समुदयस्य सर्वाभाव परस्परतोर्थांतरभूतत्वात् । अथ ह्यन्यद्द्रव्य अन्ये रूपादय , एवमपि तेषा लक्ष्यलक्षण भावाभाव परस्परतोर्थांतरत्वात् । दडिदडवत् लक्ष्यलक्षणभाव इति चेन्न वैषम्यात् । पृथक्सतोर्लक्ष्य लक्षणभावो युक्तो नासतोरिति । किं च रूपादिषु गुणेष्वमूर्तेषु द्रव्यादर्थांतरभूतेषु नेंद्रियसनिकर्षो युक्त स्ततश्च ज्ञानाभाव । न चार्थांतरभूत द्रव्य कारण भवितुमर्हति । किं च—

**मूलकारणविप्रतिपत्तेः ॥ ४ ॥** एषा घटरूपादीना मूलकारणे प्रवादिना विप्रतिपत्ति । तद्यथा केचिदाहु- अव्यक्तान्महदहकारतन्मात्रेंद्रियमहाभूतमृत्पिंडादिनिर्वृत्तिक्रमेण घटादेर्विश्वरूपस्य जगत उत्पाद । इति तदयुक्त न हि प्रधानस्यामूर्तत्वनिरवयवत्वनि ष्क्रियत्वाऽतींद्रियत्वानित्यत्वापरप्रयोज्य- त्वादिविशेषोपेतस्य तद्विलक्षणो घटादि कार्यो भवितुमर्हति अदृष्टत्वात् । न वा परप्रयोज्यस्य प्रधानस्य स्वयमभिप्रायरहितस्याभिप्रायपूर्वकप्रसवक्रमो युक्त । पुरुषस्तावन्निष्क्रियत्वान्न महदादिसर्गार्थं प्रधान प्रयुक्ते । स्वय च निष्क्रियत्वात्प्रधान नात्मान महदादिसर्गार्थं प्रयोक्तुमर्हति । न हि स्वय गतिविकल पगुरात्मानमेवा यष्टम्योत्थाय गच्छन्दृष्ट । किंचाप्रयोजनस्य प्रधानस्य महदादि सर्गो न युक्तिमान् । पुरुषभोग प्रयोजनमिति चेन्न स्वार्थाभावात् । नित्यस्य विभोरात्मन भोगपरिणामाभावाच्च । किंचाऽचेतनत्वात् । इह लोके चेतनश्चैत्र ओदनार्थी क्रियाफलसाधनज्ञ तदर्थेष्वग्निसधुक्षणादिषु प्रवर्तमानो दृष्ट । न च तथा प्रधान चेतनमतोऽस्य- महदादिक्रियाप्रसवक्रमाभाव । नच पुरुषस्तस्य क्रमस्य प्रयोजको निष्क्रियत्वात् । अपर आहु परमाणु भ्य प्रतिनियतपार्थिवादिजातिविशिष्टेभ्योऽदृष्टादिसनिधाने सति सहतेभ्योऽर्थांतरभूतघटादिकार्यात्म- लाभ इति तदप्ययुक्त—नित्यत्वादणूना कार्यारभशक्त्यभावात् । सति चारभे नित्यत्वहानि । नचार्थांतर- भूतस्य कार्यस्यारभो युक्त व्यतिरेकानुपलब्धेरुपलब्धौ चाणुमहत्वाभाव । न च जातिप्रतिनियमोस्ति भिन्न-

१ अवगच्छति ।

सर्वांस्त्रिकालविषयानतिशय्य वर्तमानविषयकालमादत्ते । अतीतानागतयोर्विनष्टानुत्पन्नत्वेन व्यवहाराभावात् समवायमात्रमस्य निर्दिधिक्षित। कषायो भैषज्यमित्यत्र च सजातरस कषायो भैषज्य न प्राथमिककषायोऽल्पोऽनभिव्यक्तरसत्वादस्य विषय ।पच्यमान पक्व पक्वस्तु स्यात्पच्यमान स्यादुपरतपाक इति। असदेतद्विरोधात् । पच्यमान इति वर्तमान पक्व इत्यतीतस्तयोरेकस्मिन्नवरोधो विरोधीति। नैष दोष पचनस्यादाव विभागसमये कश्चिदशो निर्वृत्तो वा न वा। यदि न निर्वृत्तस्तद्वितीयादिष्वप्यनिर्वृत्ते पाकाभाव स्यात् । ततोभिनिर्वृत्तेस्तदपेक्षया पच्यमान. पक्व इतरथा हि समयस्य त्रैविध्यप्रसग स एवौदन पच्यमान पक्व स्यात्पच्यमान इत्युच्यते पक्तुरभिप्रायस्यानिर्वृत्ते । पक्तुर्हि सुविशदसुस्विन्नौदने पक्वाभिप्राय स्यादुपरतपाक इति चोच्यते । कस्यचित्पक्तुस्तावतैव कृतार्थत्वादेव क्रियमाणकृतभुज्यमानभुक्तबध्यमानबद्धासिध्यसिद्धादयो योज्या । तथा प्रतिष्ठ तेऽस्मिन्निति प्रस्थ. यदैव मिमीतेऽतीतानागतधान्यमानासभवात्कुभकाराभावः । शिविकादिपर्यायकरणे तदभिधानाभावात्कुभपर्यायसमये च स्वावयवेभ्य एव निर्वृत्ते । स्थितिप्रश्ने च कुतोद्यागच्छसीति न कुतश्चिदित्यय मन्यते तत्कालक्रियापरिणामाभावात् । यमेवाकाशमवगाढ समर्थ आत्मपरिणाम वा तत्रैवास्य वसति । न कृष्ण काक उभयोरपि स्वात्मकत्वात्कृष्ण कृष्णात्मको न काकात्मक । यदि काकात्मक स्याद् भ्रमरादीनामपि काकत्वप्रसग काकश्च काकात्मको न कृष्णात्मक । यदि कृष्णात्मक शुक्लकाकाभाव स्यात् पचवर्णत्वाच्च पित्तास्थिरुधिरादीना पीतशुक्लरक्तादिवर्णत्वात्तद्व्यतिरेकेण काकाभावाच्च । न सामानाधिकरण्यमेकस्य पर्यायेभ्योऽनन्यत्वात्पर्याया एव विविक्तशक्तयो द्रव्य नाम न किंचिदस्तीति । कृष्णगुणप्राधान्यादिति चेन्नास्थिरक्तादिष्वतिप्रसगात्कषायमधुरे च मधुनि विरोधात् अप्रत्यक्षे चाख्यायमाने सशयदर्शनात् । कृष्णकाकविशेषणेन केनचिद्द्वीपातरनिवासिन्यनुपलब्धकृष्णकाकविशेषे पुरुषे प्रतिपद्यमाने सशयो जायते किमय काकस्य कार्ष्ण्यं गुणप्राधान्यादाचष्टे द्रव्यत्वेन वा तथा परिणामादित्यत पलालादिदाहाभाव. ।प्रतिविशिष्टकालपरिग्रहादस्य हि नयस्याविभागो वर्तमानसमयो विषय । अग्निसबधनदीपनज्वलनदहनान्यसख्येयसमयातरालानि यतोस्य दहनाभाव ।किं च यस्मिन् समये दाह न तस्मिन् पलाल भस्मताभिनिर्वृत्ते यस्मिंश्च पलाल न तस्मिन् दाह इति । यत्पलाल तद्दहतीति चेन्न सावशेषात् । समुदायाभिधायिना शब्दानामवयवेषु वृत्तदर्शनाददोष इति चेन्न तदवस्थत्वात् । एकदेशदाहाभावस्योक्तत्वान्निरवशेषदाहासभवादिति चेन्न वचनविरोधात् तदवस्थत्वाच्च । वचनविरोधस्तावद्यदि निरवशेषस्य पलालस्य दाहस्यासभव इत्येकदेशदाहात्पलालदाहो नादाह । ननु भवद्वचनस्य निरवशेषपरपक्षदूषकत्वाभावात् परपक्षैकदेशस्य दूषकत्वमत , एकदेशदूषकत्वात्कृत्स्नमर्याद दूषकमेवेत्यस्य साधकत्वसामर्थ्याभाव इति तदवस्थमप्येकसमयदाहाभाव इत्युक्तत्वादवयवानेकत्वे यथवयवदाहात्सर्वत्र दाहोऽवयवातरादाहात् ननु सर्वदाहाभाव । अथ दाह सर्वत्र कस्मान्नादाहोऽतो न दाह । एव पानभोजनादिव्यवहाराभाव । न शुक्ल कृष्णो भवत्युभयोर्भिन्नकालावस्थत्वात्प्रत्युत्पन्नविषये निवृत्तिपर्यायानभिसबधात्सर्वसव्यवहारलोप इति चेन्न विषयमात्रप्रदर्शनात् पूर्वनयवक्तव्यात्सव्यवहारसिद्धिर्भवति ।

शपत्यर्थमाह्वयति प्रत्याययतीति शब्द ॥ ८ ॥ उच्चरित शब्द कृतसगते पुरुषस्य स्वाभिधेये प्रत्ययमादधाति इति शब्द इत्युच्यते ।

स च लिंगसख्यासाधनादिव्यभिचारनिवृत्तिपरः ॥ ९ ॥ लिंग स्त्रीत्वपुस्त्वनपुसकानि । सख्या एकत्वद्वित्वबहुत्वानि । साधनमस्मदादि । एवमादीना व्यभिचारोन न्याय्य इति तन्निवृत्तिपरोऽय नय । तद्यथा—लिंगव्यभिचारस्तावत्स्त्रीलिंगे पुल्लिंगाभिधान तारका स्वातिरिति । पुल्लिंगे स्त्र्यभिधानमवगमो विद्येति । स्त्रीत्वे नपुसकाभिधान वीणाऽऽतोद्यमिति । नपुसके स्त्र्यभिधानमायुध शक्तिरिति । पुल्लिंगे नपुसकाभिधान पटो वस्त्रमिति । नपुसके पुल्लिंगाभिधान द्रव्य परशुरिति । सख्याव्यभिचार , एकत्वे द्वित्व, नक्षत्र पुनर्वसू इति, एकत्वे बहुत्व नक्षत्र शतभिषज इति । द्वित्वे एकत्व गोदौ ग्राम इति । द्वित्वे बहुत्व पुनर्वसू पचतारका इति । बहुत्वे एकत्वमाम्रा वनमिति । बहुत्वे द्वित्व देवमनुष्या उभौ राशी इति । साधनव्यभिचार—एहि मन्ये रथेन यास्यसि नहि यास्यसि यातस्ते पितेति । आदिशब्देन आदिष्वपि

मिद्रगृहादावपि तथा कतरोत्र गमीत्युक्ते आचष्टे अहं गमीति सप्रत्यगच्छत्सपि गमीति व्यवहार । एव प्रकारेन्योपि नैगमनयस्य विषय ।

**भाविसंज्ञाव्यवहार इति चेन्न भूतद्रव्यासंनिधानात् ॥ ३ ॥** स्यादेतन्नाय नैगमनयविषयो भाविसंज्ञाव्यवहार इति तन्न । किं कारण ? भूतद्रव्यासनिधानात् । भूत हि कुमारतडुलादिद्रव्यमाश्रित्य राजौदनादिका भाविनी सज्ञा प्रवर्तते । न च तथा नैगमनयविषये किंचित्तद्भूत द्रव्यमस्ति यदाश्रया भाविनी सज्ञा विज्ञायेत ।

**उपकारानुपलंभात्सव्यवहारानुपपत्तिरिति चेन्नाप्रतिज्ञानात् ॥ ४ ॥** स्यादेतन्नैगमनयवक्तव्ये उपकारो नोपलभ्यते भाविसज्ञाविषये तु राजादावुपलभ्यते ततो नाय युक्त इति तन्न । किं कारण-अप्रतिज्ञानात् नैतदस्माभि प्रतिज्ञातमुपकारे सति भवितव्यमिति । किं तर्हि अस्य नयस्य विषय. प्रदर्श्यते अपि चोपकार प्रत्यभिमुखत्वादुपकारवानेव ।

**स्वजात्यविरोधेनैकत्वोपनयात्समस्तग्रहणं संग्रह॰ ॥ ५ ॥** बुद्ध्यभिधानानुप्रवृत्तिलिंग सादृश्य स्वरूपानुगमो वा जाति सा चेतनाचेतनाद्यात्मिका शब्दप्रवृत्तिनिमित्तत्वेन प्रतिनियमात्स्यार्थव्यपदेशभाक् । स्वा जाति स्वजाति । अप्रच्यवनमविरोध , स्वजातेरविरोध स्वजात्यविरोधस्तेन स्वजात्यविरोधेनैकत्वोपनयात् । केषा ? भेदाना समस्तग्रहण सग्रहो यथा सद्द्रव्य घट इत्यादि । सदित्युक्ते सत्तासबन्धार्हाणा द्रव्यपर्यायतद्भेदप्रभेदानां द्रव्यत्वाविरोधात्तेनैकत्वेन सग्रह । घट इति चोक्ते नामादिभेदान्मृत्सुवर्णादिकारणविशेषाद्वर्णसस्थानादिविकाराच्च भिन्नाना घटशब्दवाच्याना तदव्यतिरेकादेकत्वेन सग्रह । एवमितरेष्वपीति । तत्राभिधानप्रत्ययौ सामान्य निराकृतविशेषाभावात् । आह सत्ताद्यर्थांतरभूतमस्ति तदभिसबन्धात्सदादिर्व्यपदेश इति तन्न । उभयथानुपपत्ते इदमिह सप्रधार्य सत्तासबधात्प्राग् द्रव्यादिषु सादित्यभिधान प्रत्ययश्च स्याद्वा नवेति ? यदि स्यात् ? सत्तासबधवैयर्थ्य । प्रकाशितप्रकाशनवैयर्थ्यवत् सत्ताद्वयप्रसगश्च । एकाभ्यतरी अपरा वाह्यस्तश्च समयविरोध । सल्लिंगाविशेषाद्विशेषलिंगाभावाच्चैको भाव इति । अथ नास्ति खरविषाणादिष्वतिप्रसग । समवायकृतोय विशेष इति चेन्न तस्य प्रतिषिद्धत्वात् । किं च सत्ताया सदितिव्यपदेशस्य सत्तांतरहेतुकत्वाहेतुकत्वयोरनवस्था प्रतिज्ञाहानिदोषप्रसग । अथ पदार्थशक्तिप्रतिनियमाद्द्रव्यादिषु सदिति व्यपदेशो निमित्तांतरहेतुक , सत्ताया स्वत एवेति चे ससर्गनादत्याग इच्छामात्रकल्पनाप्रसगश्च । किं च सत्तादे पदार्थांतरस्य द्रव्यादिषु वृत्ति सोऽस्येति वा स्यात्सोयमिति वा ? यदि सोस्येतिवृत्तिर्मत्वर्थो येन भवितव्य सत्तावद्द्रव्यमिति यथा गोमान् यवमानित्यतो मत्वर्थस्य भावार्थस्य च निवृत्तिर्वक्तव्या । अथ सोयमित्यभिसबधेन वृत्ति सत्ताद्रव्यमिति प्राप्नोति । यथा यष्टि पुरुष इति न सद्द्रव्यमिति तत्र भावार्थस्य निवृत्तिर्वक्तव्या । किंच दृष्टाताभावान्नह्येक किंचिदनेकसबधि दृष्ट यदभिसमीक्ष्य सत्तैकाऽनेकसबन्धिनी गम्येत । नीलीद्रव्यवदिति चेन्न तस्यानेकत्वात् । नीलित्ववदिति चेन्न तस्यासिद्धत्वात् ।

**अतो विधिपूर्वकमवहरणं व्यवहारः ॥ ६ ॥** एतस्मादत , कुत । सग्रहात् सग्रहनयाक्षिप्तानामर्थाना विधिपूर्वकमवहरण व्यवहार । को विधि सग्रहगृहीतोर्थस्तदानुपूर्व्येणैव व्यवहार प्रवर्तते इत्यय विधिस्तद्यथा—सर्वसग्रहेण सत्सगृहीत तच्चानपेक्षितविशेष नाल सव्यवहारायेति व्यवहारनय आश्रीयते । यत्सत्तद् द्रव्य गुणो वेति । द्रव्येणापि च सग्रहाक्षिप्तेन जीवाजीवाविशेषानपेक्षेण न शक्य सव्यवहार इति जीवद्रव्यमजीवद्रव्यमिति वा व्यवहार आश्रीयते । जीवाजीवावपि च सग्रहाक्षिप्तौ नाल सव्यवहारायेति प्रत्येक देवनारकादिर्घटादिश्च व्यवहारेणाश्रीयते । कषायो भैषज्यमित्युक्ते च सामान्यस्य विशेषात्मकत्वाभैयमोघादिविशेषसामर्थ्य नहि शक्य प्रभुणापि चक्रभृता सर्व कषायसमाहार कर्तुं । नामस्थापनाद्रव्याणि च सग्रहोपात्तानि नाल व्यवहारायेति भाव एव गृह्यते । एवमय नयस्तावद्वर्तते यावत्पुनर्नास्ति विभाग ।

**सूत्रपातवदृजुसूत्रः ॥ ७ ॥** यथा ऋजु सूत्रपातस्तथा ऋजु प्रगुण सूत्रयति तन्त्रयति ऋजुसूत्र ।

सर्वांस्त्रिकालविषयानतिशय्य वर्तमानविषयकालमादत्ते । अतीतानागतयोर्विनष्टानुत्पन्नत्वेन व्यवहाराभावात् समवायमात्रमस्य निर्दिधिक्षित । कषायो भैषज्यमित्यत्र च सजातरस कषायो भैषज्य न प्राथमिककषायोऽल्पोऽनभिव्यक्तरसत्वादस्य विषय । पच्यमान पक्व पक्षस्तु स्यात्पच्यमान स्यादुपरतपाक इति । असदेतद्विरोधात् । पच्यमान इति वर्तमान पक्व इत्यतीतस्तयोरेकस्मिन्नवरोधो विरोधीति । नैष दोष पचनस्यादाव विभागसमये कश्चिदशो निर्वृत्तो वा न वा । यदि न निर्वृत्तस्तद्द्वितीयादिष्वप्यनिर्वृत्ते पाकाभाव स्यात् । ततोऽभिनिर्वृत्तेस्तदपेक्षया पच्यमान पक्व इतरथा हि समयस्य त्रैविध्यप्रसग स एवौदन पच्यमान पक्व स्यात्पच्यमान इत्युच्यते पक्तुरभिप्रायस्यानिर्वृत्ते । पक्तुर्हि सुविशदसुस्विन्नौदने पक्वाभिप्राय स्यादुपरतपाक इति चोच्यते । कस्यचित्पक्तुस्तावतैव कृतार्थत्वादेव क्रियमाणकृतमुज्यमानमुक्तबध्यमानबद्धासिध्यत्सिद्धादयो योज्या । तथा प्रतिष्ठ तेऽस्मिन्निति प्रस्थ. यदैव मिमीतेऽतीतानागतधान्यमानासभवात्कुभकाराभाव. । शिविकादिपर्यायकरणे तदभिधानाभावात्कुभपर्यायसमये च स्वावयवेभ्य एव निर्वृत्ते । स्थितिप्रश्ने च कुतोऽद्यागच्छसीति न कुतश्चिदित्यय मन्यते तत्कालक्रियापरिणामाभावात् । यमेवाकाशमवगाढ समर्थ आत्मपरिणाम वा तत्रैवास्य वसति । न कृष्ण काक उभयोरपि स्वात्मकत्वात्कृष्ण कृष्णात्मको न काकात्मक । यदि काकात्मक स्याद् भ्रमरादीनामपि काकत्वप्रसग काकश्च काकात्मको न कृष्णात्मक । यदि कृष्णात्मक शुक्लकाकाभाव स्यात् पचवर्णत्वाच्च पित्तास्थिरुधिरादीना पीतशुक्लरक्तादिवर्णत्वात्तद्व्यतिरेकेण काकाभावाच्च । न सामानाधिकरण्यमेकस्य पर्यायेभ्योऽनन्यत्वात्पर्याया एव विविक्तशक्तयो द्रव्य नाम न किंचिदस्तीति । कृष्णगुणप्राधान्यादिति चेन्नास्थिरक्तादिष्वतिप्रसगात्कषायमधुरे च मधुनि विरोधात् अप्रत्यक्षे चाख्यायमाने सशयदर्शनात् । कृष्णकाकविशेषज्ञेन केनचिद्द्वीपातरनिवासिन्यनुपलब्धकृष्णकाकविशेषे पुरुषे प्रतिपद्यमाने सशयो जायते किमय काकस्य कार्ष्ण्य गुणप्राधान्यादाचष्टे द्रव्यस्यैव वा तथा परिणामादित्यत पलालादिदाहाभाव । प्रतिविशिष्टकालपरिग्रहादस्य हि नयस्याविभागो वर्तमानसमयो विषय । अग्निसबधनदीपनज्वलनदहनान्यसख्येयसमयातरालानि यतोऽस्य दहनाभाव । किं च यस्मिन् समये दाह न तस्मिन् पलाल भस्मताभिनिवृत्ते यस्मिंश्च पलाल न तस्मिन् दाह इति । यत्पलाल तद्दहतीति चेन्न सावशेषात् । समुदायाभिधायिना शब्दानामवयवेषु वृत्तिदर्शनाददोष इति चेन्न तदवस्थत्वात् । एकदेशदाहाभावस्योक्तत्वान्निरवशेषदाहासभवादिति चेन्न वचनविरोधात् तदवस्थत्वाच्च । वचनविरोधस्तावद्यदि निरवशेषस्य पलालस्य दाहस्यासभव इत्येकदेशदाहात्पलालदाहो नादाह । ननु भवद्वचनस्य निरवशेषपरपक्षदूषकत्वाभावात् परपक्षैकदेशस्य दूषकत्वमत, एकदेशदूषकत्वात्कृत्स्नमर्याद दूषकमेवेत्यस्य साधकत्वसामर्थ्याभाव इति तदवस्थमप्येकसमयदाहाभाव इत्युक्तत्वादवयवानेकत्वे यद्यवयवदाहात्सर्वत्र दाहोऽनवयवातरादाहात् ननु सर्वदाहाभाव । अथ दाह सर्वत्र कस्मान्नादाहोऽतो न दाह. । एव पानभोजनादिव्यवहाराभाव । न शुक्ल कृष्णो भवत्युभयोर्भिन्नकालावस्थत्वात्प्रत्युत्पन्नविषये निवृत्तिपर्यायानभिसबधात्सर्वसव्यवहारलोप इति चेन्न विषयमात्रप्रदर्शनात् पूर्वनयवक्तव्यात्सव्यवहारसिद्धिर्भविष्यति ।

**शपत्यर्थमाह्वयति प्रत्याययतीति शब्द ॥ ८ ॥** उच्चरित शब्द कृतसगते पुरुषस्य स्वाभिधेये प्रत्ययमादधाति इति शब्द इत्युच्यते ।

**स च लिंगसख्यासाधनादिव्यभिचारनिवृत्तिपरः ॥ ९ ॥** लिंग स्त्रीत्वपुस्त्वनपुसकत्वानि । सख्या एकत्वद्वित्वबहुत्वानि । साधनमस्मदादि । एवमादीना व्यभिचारोन न्याय्य इति तन्निवृत्तिपरोऽय नय । तद्यथा—लिंगव्यभिचारस्तावत्स्त्रीलिंगे पुल्लिंगाभिधान तारका स्वातिरिति । पुल्लिंगे स्त्र्यभिधानमवगमो विद्येति । स्त्रीत्वे नपुसकाभिधान वीणाऽऽतोद्यमिति । नपुसके स्त्र्यभिधानमायुध शक्तिरिति । पुल्लिंगे नपुसकाभिधान पटो वस्त्रमिति । नपुसके पुल्लिंगाभिधान द्रव्य परशुरिति । सख्याव्यभिचार, एकत्वे द्वित्व, नक्षत्र पुनर्वसू इति, एकत्वे बहुत्व नक्षत्र शतभिषज इति । द्वित्वे एकत्व गोदौ ग्राम इति । द्वित्वे बहुत्व पुनर्वसू पचतारका इति । बहुत्वे एकत्वमाम्रा वनमिति । बहुत्वे द्वित्व देवमनुष्या उभौ राशी इति । साधनव्यभिचार.—एहि मन्ये रथेन यास्यसि नहि यास्यसि यातस्ते पितेति । आदिशब्देन आदि

मिंद्रगृहादावपि तथा कतरोत्र गमीत्युक्ते आचष्टे अह गमीति सप्रत्यगच्छत्यपि गमीति व्यवहार । एव प्रकारेण्योपि नैगमनयस्य विषय ।

**भाविसंज्ञाव्यवहार इति चेन्न भूतद्रव्यासंनिधानात् ॥ ३ ॥** स्यादेतन्नायं नैगमनयविषयो भाविसंज्ञाव्यवहार इति तन्न । किं कारण ? भूतद्रव्यासनिधानात् । भूत हि कुमारतडुलादिद्रव्यमाश्रित्य राजौदनादिका भाविनी सज्ञा प्रवर्तते । न च तथा नैगमनयविषये किंचित्तद्भूत द्रव्यमस्ति यदाश्रया भाविनी संज्ञा विज्ञायेत ।

**उपकारानुपलंभात्सव्यवहारानुपपत्तिरिति चेन्नाप्रतिज्ञानात् ॥ ४ ॥** स्यादेतन्नैगमनयवक्तव्ये उपकारो नोपलभ्यते भाविसज्ञाविषये तु राजादावुपलभ्यते ततो नाय युक्त इति तन्न । किं कारणम्-प्रतिज्ञानात् नैतदस्माभि प्रतिज्ञातमुपकारे सति भवितव्यमिति । किं तर्हि अस्य नयस्य विषय प्रदर्श्यते अपि चोपकार प्रत्यभिमुखत्वादुपकारवानेव ।

**स्वजात्यविरोधेनैकत्वोपनयात्समस्तग्रहणं संग्रह ॥ ५ ॥** बुद्ध्यभिधानानुप्रवृत्तिलिंग सादृश्य स्वरूपानुगमो वा जाति सा चेतनाचेतनाद्यात्मिका शब्दप्रवृत्तिनिमित्तत्वेन प्रतिनियमात्स्वार्थव्यपदेशभाक् । स्वा जाति स्वजाति । अप्रच्यवनमविरोध , स्वजातेरविरोध स्वजात्यविरोधस्तेन स्वजात्यविरोधेनैकत्वोपनयात् । केषा ? भेदानां समस्तग्रहण समहो यथा सद्द्रव्य घट इत्यादि । सदित्युक्ते सत्तासबधार्हाणा द्रव्यपर्यायतद्भेदप्रभेदानां द्रव्यत्वाविरोधात्तैनैकत्वेन सग्रह । घट इति चोक्ते नामादिभेदा मृत्सुवर्णादिकारणनिक्षेपाद्वर्णसस्थानादिविकाराच्च भिन्नाना घटशब्दवाच्याना तदव्यतिरेकादेकत्वेन सग्रह । एवमितरेष्वपीति । तत्राभिधानप्रत्ययौ सामान्य निराकृतविशेषाभावात् । आह सत्ताद्यर्थांतरभूतमस्ति तदभिसबधात्सदादिव्यपदेश इति तन्न । उभयथानुपपत्ते॰ इदमिह सप्रधार्यं सत्तासबधात्प्राग् द्रव्यादिषु सदित्यभिधान प्रत्ययश्च स्याद्वा नवेति ? यदि स्यात् ? सत्तासबधवैयर्थ्य । प्रकाशितप्रकाशनवैयर्थ्यवत् सत्ताद्वयप्रसगश्च । एकाम्यवरी अपरा वादेत्यतश्च समयविरोध । सल्लिंगाविशेषाद्विशेषलिंगाभावाच्चैको भाव इति । अथ नास्ति खरविषाणादिष्वतिप्रसग । समवायकृतोऽय विशेष इति चेन्न तस्य प्रतिषिद्धत्वात् । किं च सत्ताया सदितिव्यपदेशस्य सत्तांतरहेतुकत्वाहेतुकत्वयोरनवस्था प्रतिज्ञाहानिदोषप्रसग । अथ पदार्थशक्तिप्रतिनियमाद्द्रव्यादिषु सदिति व्यपदेशो निमित्तांतरहेतुक , सत्ताया स्वत एवेति चेत्ससर्गवादत्याग इच्छामात्रकल्पनाप्रसगश्च । किं च सत्तादे पदार्थांतरस्य द्रव्यादिषु वृत्ति सोऽस्येति वा स्यात्सोयमिति वा ? यदि सोस्येतिवृत्तिर्मत्वर्थी येन भवितव्य सत्तावद्द्रव्यमिति यथा गोमान् यवमानिति ततो मत्वर्थस्य भावार्थस्य च निवृत्तिर्वक्तव्या । अथ सोयमित्यभिसबधेन वृत्ति सत्ताद्रव्यमिति प्राप्नोति । यथा यष्टि पुरुष इति न सद्द्रव्यमिति तत्र भावार्थस्य निवृत्तिर्वक्तव्या । किंच दृष्टांताभावान्नहोक किंचिदनेकसबंधि दृष्ट यदभिसमीक्ष्य सत्तैकाऽनेकसबधिनी गम्येत । नीलीद्रव्यवदिति चेन्न तस्यानेकत्वात् । नीलित्ववदिति चेन्न तस्यासिद्धत्वात् ।

**अतो विधिपूर्वकमवहरणं व्यवहारः ॥ ६ ॥** एतस्मादत , कुत । सग्रहात् सग्रहनयाक्षिप्तानामर्थाना विधिपूर्वकमवहरण व्यवहार । को विधि सग्रहगृहीतोर्थस्तदानुपूर्व्येणैव व्यवहार प्रवर्तते इत्यय विधिस्तद्यथा—सर्वसग्रहेण सत्सगृहीत तच्चानपेक्षितविशेष नाल सव्यवहारायेति व्यवहारनय आश्रीयते । यत्सत्तद् द्रव्य गुणो वेति । द्रव्येणापि च सग्रहाक्षिप्तेन जीवाजीवाविशेषानपेक्षेण न शक्य सव्यवहार इति जीवद्रव्यमजीवद्रव्यमिति वा व्यवहार आश्रीयते । जीवाजीवावपि च सग्रहाक्षिप्तौ नाल सव्यवहारायेति प्रत्येक देवनारकादिर्घटादिश्च व्यवहारेणाश्रीयते । कषायो भैषज्यमित्युक्ते च सामान्यस्य विशेषात्मकत्वाद्वैयग्रोधादिविशेषसामर्थ्यं नहि शक्य प्रभुणापि चक्रभृता सर्वे कषायसमाहार कर्तुं । नामस्थापनाद्रव्याणि च सग्रहोपात्तानि नाल व्यवहारायेति भाव एव गृह्यते । एवमय नयस्तावद्वर्तते यावत्पुनर्नास्ति विभाग ।

**सूत्रपातवदृजुसूत्रः ॥ ७ ॥** यथा ऋजु सूत्रपातस्तथा ऋजु प्रगुण सूत्रयति तत्रयति ऋजुसूत्र ।

# अथ द्वितीयोऽध्यायः ।

अत्राह मोक्षमार्गव्याख्याप्रसंगेन सम्यग्दर्शनादीन्युपदिश्यते । तेषां च लक्षणोत्पत्तिविषयनिबंधाः । दीनि व्याख्यातानि तत्र तत्त्वार्थश्रद्धानं सम्यग्दर्शनमुद्दिष्टं तत्त्वार्थश्च जीवादयस्तत्रादावुद्दिष्टस्य जीवस्य किं श्रद्धातव्यं यदवधारणप्रतिपत्त्युपासनादिभ्यस्तन्निष्पद्यत इत्युच्यते तत्त्वमात्मनः स्वभावः श्रद्धेयः । यद्येवं मुच्यतां तदीयं किं तत्त्वमित्यत उत्तरं पठति—

## औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च

अथवा प्रमाणनया अनंतरं विनिर्दिष्टाः । ते च प्रमेयाधिगमरूपाः प्रमेयाश्च जीवादयः पदार्था इदानीं निर्देष्टव्याः । यद्येवमस्त्वेव तावदाद्युपदिष्टजीवस्य किं तत्त्वमित्यत आह—औपशमिकादीनि ।

**कर्मणोऽनुद्भूतस्ववीर्यवृत्तितोपशमोऽधःप्रापितपंकवत् ॥ १ ॥** यथा सकलुषस्याम्भसः कतकादिद्रव्यसंपर्कादधः प्रापितमलद्रव्यस्य तत्कृतकालुष्याभावात्प्रसाद उपलभ्यते । तथा कर्मणः कारणवशादनुद्भूतस्ववीर्यवृत्तिता आत्मनो विशुद्धिरुपशमः ।

**क्षयो निवृत्तिरात्यंतिकी ॥ २ ॥** यथा तस्यैवाम्भसोऽधःशमितपंकस्य शुचिभाजनांतरसंक्रांतस्य प्रसाद आत्यंतिकः, स्तथात्मनोपि कर्मणोऽत्यंतविनिवृत्तौ विशुद्धिरात्यंतिकी क्षय इत्युच्यते ।

**उभयात्मको मिश्रः क्षीणाक्षीणमदशक्तिकोद्रववत् ॥ ३ ॥** यथा प्रक्षालनविशेषात् क्षीणाक्षीणमदशक्तिकस्य कोद्रवद्रव्यस्य द्विधा वृत्तिः तथा यथोक्तक्षयहेतुसंनिधाने सति कर्मण एकदेशस्य क्षयादेकदेशस्य च वीर्योपशमादात्मनो भाव उभयात्मको मिश्र इति व्यपदिश्यते ।

**द्रव्यादिनिमित्तवशात् कर्मणः फलप्राप्तिरुदयः ॥ ४ ॥** द्रव्यादिनिमित्तं प्रतीत्य कर्मणो विपच्यमानस्य फलोपनिपात उदय इतीमामाख्यां लभते ।

**द्रव्यात्मलाभमात्रहेतुकः परिणामः ॥ ५ ॥** यस्य द्रव्यात्मलाभमात्रमेव हेतुर्भवति नान्यन्निमित्तमस्ति स परिणाम इति परिभाष्यते ।

**तत्प्रयोजनत्वाद्वृत्तिवचनं ॥ ६ ॥** ते उपशमादयः प्रयोजनमस्येति वृत्तिः क्रियते स उपशमः प्रयोजनमस्येत्यौपशमिकः, क्षयः प्रयोजनमस्येति क्षायिकः, उदयः प्रयोजनमस्येत्यौदयिकः परिणामः प्रयोजनमस्येति पारिणामिकः । ते भावा जीवस्य स्वतत्त्वं स्वं तत्त्वं स्वतत्त्वं स्वो भावोऽसाधारणो धर्मः ।

**व्याप्तेरौदयिकपारिणामिकग्रहणमादाविति चेन्न भव्यजीवधर्मविशेषख्यापनार्थत्वादादावौपशमिकादिभाववचनं ॥ ७ ॥** स्यादेतत्सर्वजीवसाधारणत्वाद्व्याप्तेरौदयिकपारिणामिकग्रहणमादौ न्याय्यमिति । तन्न किं कारणं भव्यजीवधर्मविशेषख्यापनार्थत्वाद्भव्यस्य मोक्षप्रतिपादनार्थो ह्ययं प्रयासः । अतोऽस्य धर्मविशेष औपशमिकादिभाव आदावुच्यते ।

**तत्र चादावौपशमिकवचनं तदादित्वात्सम्यग्दर्शनस्य ॥ ८ ॥** सम्यग्दर्शनस्य हि आदिरौपशमिको भावस्ततः क्षायोपशमिकस्ततः क्षायिक इत्यत औपशमिकस्यादौ ग्रहणं क्रियते ।

**अल्पत्वाच्च ॥ ९ ॥** अल्पश्चौपशमिको भावः क्षायिकात् क्षायोपशमिकाच्च कुतोऽल्पत्वं संचयकालस्याल्पत्वात् तद्यथा—उपशमसम्यग्दर्शनस्य कालोऽन्तर्मुहूर्तं सोऽन्तर्मुहूर्तोऽसंख्येयाः समयाः तत्र समये समये नैरंतर्येण संचीयमाना उपशमसम्यग्दृष्टय आअंतर्मुहूर्तसमाप्तेः पल्योपमाऽसंख्येयभागप्रमाणा इति सर्वेभ्योऽल्पे ।

गृह्यते, विश्वदृश्वास्य पुत्रो जनिता भावि कृत्यमासीदिति कालव्यभिचारः। संतिष्ठते प्रतिष्ठते विरमत्युपरमतीत्युपग्रहव्यभिचारः। एवमादयो व्यभिचारा अयुक्ता, कुतः? अन्यार्थस्याऽन्यार्थेन संबंधाभावात्। यदि स्यात्? घटः पटो भवतु पटो प्रासाद इति तस्माद्यथा—लिंगं यथासंख्यं यथासाधनादि च न्याय्यमभिधानम्। लोकसमयविरोध इति चेद्विरुध्यतां तत्त्वं मीमांस्यते न भैषज्यमातुरेच्छानुवर्ति।

**नानार्थसमभिरोहणात्समभिरूढः ॥ १० ॥** यतो नानार्थान् समतीत्यैकमर्थमाभिमुख्येन रूढस्ततः समभिरूढः। कुतः? वस्त्वंतरासंक्रमेण तन्निष्ठत्वात् कथं? अवितर्कध्यानवत्। यथा तृतीयशुक्लं सूक्ष्मक्रियमवितर्कमवीचारं ध्यानमर्थव्यंजनयोगसंक्रांत्यभावात्सूक्ष्मकाययोगनिष्ठत्वात्। तथा गौरित्ययं शब्दो वागादिषु वर्तमानो गव्यधिरूढः। एवं शेषेष्वपि रूढिशब्देष्वयं विषयः। अथवार्थगत्यर्थः शब्दप्रयोग इति तत्रैकस्यार्थस्यैकेन गतत्वात् पर्यायशब्दप्रयोगोऽनर्थकः शब्दभेदश्चेदस्ति अर्थभेदेनाप्यवश्यं भवितव्यमिति। नानार्थसमभिरोहणात्समभिरूढः इंदनादिंद्रः शकनाच्छक्रः पूर्दारणात्पुरंदर इत्येवं सर्वत्र। अथवा यो यत्राभिरूढः स तत्र समेत्याभिमुख्येनारोहात्समभिरूढः। यथा क्व भवानास्ते स्वात्मनीति। कुतः? वस्त्वंतरे वृत्त्यभावात् यद्यन्यस्यान्यत्र वृत्तिः स्याज्ज्ञानादीनां रूपादीनां चाकाशे वृत्तिः स्यात्।

**येनात्मना भूतस्तेनैवाऽध्यवसाययतीत्येवंभूतः ॥ ११ ॥** येनात्मना येनाभिधेयेन भूतः शब्दस्तेनैवाऽध्यवसाययति। यथेंद्रशब्दः परमैश्वर्यत्वाभिधेयः स परिणामो यत्र यदा वर्तते तत्र तदैव युक्तो न नामस्थापनाद्रव्येषु तत्परिणामाभावात्। इत्येवमितरेष्वपि शब्देषु स्वाभिधेयक्रियापरणतिक्षण एव युक्तिर्नान्यदेति। अथवा येनात्मना येन स्वरूपेण भूतोर्थस्तेनैवाध्यवसाययति यथा गच्छतीति गौरिति यदैव गच्छति तदैव गौरिति न स्थितो न शयित इति। पूर्वोत्तरकालयोस्तदर्थाभावाद्डित्थवत्। एवमितरेष्वपि। अथवा येनात्मना येन ज्ञानेन भूतः परिणतस्तेनैवाध्यवसाययति यथेंद्राग्निज्ञानपरिणत आत्मैवेंद्रोऽग्निश्चेत्येवंभूतार्थप्रत्यायनाच्छब्द एवंभूतः तत्कार्यात्ताच्छब्द्यसिद्धेः।

**दाहकत्वाद्यतिप्रसंग इति चेत्तद्व्यतिरेकादप्रसंग इति ॥ १२ ॥** स्यादेतदग्न्यादिव्यपदेशो यद्यात्मनि क्रियते दाहकत्वाद्यतिप्रसज्यते? इत्युच्यते तद्व्यतिरेकादप्रसंगस्तानि नामादीनि येन रूपेण व्यपदिश्यते ततस्तेषामव्यतिरेकः प्रतिनियतार्थवृत्तित्वाद्धर्माणां। ततो नो आगमभावाग्नौ वर्तमानं दाहकत्वं कथमागमभावाग्नौ वर्तेत। उक्ता नैगमादयो नया उत्तरोत्तरसूक्ष्मविषयत्वादेषां क्रमः पूर्वपूर्वहेतुकत्वाच्च। एवमेते नयाः पूर्वपूर्वविरुद्धमहाविषया उत्तरोत्तरानुकूलाल्पविषया द्रव्यस्यानंतशक्तेः प्रतिशक्तिभिद्यमाना बहुविकल्पा जायंते। एते गुणप्रधानतया परस्परतंत्राः सम्यग्दर्शनहेतवः पुरुषार्थक्रियासाधनसामर्थ्यात्तंत्वादय इव यथोपायं विनिवेश्यमानाः पटादिसंज्ञाः स्वतंत्राश्चाऽसमर्थाः। तंत्वादिवदेव विषम उपन्यासस्तंत्वादयो निरपेक्षा अपि कांचिदर्थमात्रां जनयंति। भवति हि कश्चित् प्रत्येकं तंतुस्त्वक्त्राणे समर्थः एकश्च वल्कलो बंधने समर्थः। इमे पुनर्नया निरपेक्षाः संतः न कांचिदपि सम्यग्दर्शनमात्रां प्रादुर्भावयंतीति। नैष दोषः। अभिहितानवबोधात् अभिहितमर्थमनवबुध्य परेणेदमुपालभ्यते। एतदुक्तं निरपेक्षेषु तंत्वादिषु पटादिकार्यं नास्तीति यत्तु तेनोपदर्शितं न तत्पटादिकार्यं किं तर्हि तंत्वादिकार्यं तंत्वादिकार्यमपि तंत्ववयवेषु निरपेक्षेषु नास्त्येवेत्यस्मत्पक्षसिद्धिरेव। अथ तंत्वादिकार्यं शक्त्यपेक्षयास्तीत्युच्यते नयेष्वपि निरपेक्षेषु बुद्ध्यभिधानरूपेषु कारणवशात् सम्यग्दर्शनहेतुत्वविपरिणतिसद्भावाच्छक्त्यात्मनाऽस्तित्वमिति साम्यमेवोपन्यासस्य। ज्ञानदर्शनयोस्तत्त्वं नयानां चैव लक्षणं। ज्ञानस्य च प्रमाणत्वमध्यायेस्मिन्निरूपितमिति ॥

जीयाच्चिरमकलंकब्रह्मा लघुहव्वनृपतिवरतनयः।
अनवरतनिखिलविद्वज्जननुतविद्यः प्रशस्तजनहृद्यः ॥

इति तत्त्वार्थराजवार्तिके व्याख्यानालंकारे प्रथमोध्यायः ॥ १ ॥

**स्वभावपरित्यागापरित्यागयोः शून्यतानिर्मोक्षप्रसंग इति चेन्नाऽऽदेशवचनात् ॥ २३ ॥** इदमिह संप्रधार्यं आत्मा औपशमिकादिभावपरित्यागी वा स्यादपरित्यागी वा । किं चातो यदि तावत्परित्यजति शून्यता प्राप्नोत्यात्मन स्वभावाभावादग्नेरौष्ण्यस्वभावपरित्यागेऽभाववत् । अथाऽपरित्यागी क्रोधादिस्वभावापरित्यागादात्मनोऽनिर्मोक्ष प्राप्नोतीति । तन्न किं कारण ? आदेशवचनात् । अनादिपारिणामिकचैतन्यद्रव्यार्थादेशात् स्यात्स्वभावाऽपरित्यागी आदिमदौदयिकादिपर्यायार्थादेशात् स्यात्स्वभावपरित्यागी इत्यादि सप्तभंगी पूर्ववत् । यस्यैकांतेन स्वभावपरित्याग स्यादपरित्यागो वा तस्य यथोक्तदोष स्यान्नानेकांतवादिन ।

**अप्रतिज्ञानात् ॥ २४ ॥** नैतत्प्रतिजानीमहे स्वभावपरित्यागादपरित्यागाद्वा मोक्ष किं तर्हि अष्टतयकर्मपरिणामवशीकृतस्यात्मन द्रव्यादिबाह्यनिमित्तसंनिधाने सत्यान्यतरसम्यग्दर्शनादिमोक्षमार्गप्रकर्षात्कृत्स्नकर्मसंक्षयान्मोक्षो विवक्षितस्ततो न दोष , न चाग्नेरुष्णस्वभावपरित्यागेऽप्यभाव कस्माद्द्रव्यार्थावस्थानात् पुद्गलद्रव्यस्य हि पर्याय उष्णभावस्तस्याभावेपि सदचेतनत्वादिभिरवस्थान । किं च—

**कर्मसंनिधाने तदभावे चोभयभावविशेषोपलब्धेर्नेत्रवत् ॥ २५ ॥** यथा नेत्र रूपोपलब्धिस्वभाव यदा रूप नोपलभते तदा रूपोपलब्धिस्वभावपरित्यागान्नास्त्यभावो यथा वा क्षायोपशमिकत्वे रूपोपलब्धिस्वभावस्य नेत्रस्य सक्षीणसकलावरणे केवलिनि मतिज्ञानाभावान्नेत्रात्मकस्य रूपोपलब्धिस्वभावस्य परित्यागेपि द्रव्यनेत्रावस्थानान्न नेत्राभावस्तथा कर्मनिमित्तानामौदयिकादीनामभावेपि क्षायिकभावसंनिधानादात्मनो नाऽभावो विशेषोपलब्धिरित्यत्र । आह तस्यात्मनो ये भावा औपशमिकादयस्ते किं भेदवत उताऽभेदा इति । अत्रोच्यते भेदवत यद्येव ते उच्यतां कतिभेदा इत्यत उत्तर पठति—

# द्विनवाष्टादशैकविंशतित्रिभेदा यथाक्रमं ॥ २ ॥

कोय निर्देश ?

**द्व्यादीनां कृतद्वंद्वानां भेदशब्देन वृत्तिः ॥ १ ॥** द्वौ च नव चाष्टादश चैकविंशतिश्च त्रयश्च द्विनवाष्टादशैकविंशतित्रय इति द्वंद्वे कृते पश्चाद्भेदशब्देन वृत्तिरियं वेदितव्या । ननु चेतरेतरयोगे द्वंद्व स च तुल्ययोगे भवति न चात्र तुल्ययोगोस्ति कथं द्व्यादय शब्दा सख्येयप्रधाना एकविंशतिशब्द सख्यानप्रधान इति ? नैष दोष सख्याशब्दानाममीषां सख्येयप्रधानत्वेपि निमित्तानुविधानात् सख्यानेपि वृत्तिर्भवति प्रधान हि किंचिन्निमित्तमपेक्ष्यगुणमनुविधत्ते । यथा प्रधानभूतोपि राजा मन्त्रिण गुणमाश्रयते तत्प्रयुक्तक्रियाफलार्थित्वात् तस्य प्राधान्यमप्यनुजानातीति । अस्त्ययं तर्काश्रयसमाधि लक्षणशास्त्रेण तु विरुध्यते एव हि तत्रोक्तमेकादय प्राग्विंशते सख्येयप्रधाना विंशत्यादयस्तु कदाचित्सख्यानप्रधाना कदाचित्सख्येयप्रधाना इति । यदि द्व्यादय सख्यानेपि वर्तेरन् विंशत्यादिभिस्तुल्या स्यु तत्र को दोष सत्राधिना व्यतिरेकनिमित्तविभक्तिश्रवण स्यात् स्वतश्च सख्यानस्यैकत्वादेकवचन श्रूयते विंशतिर्गवामिति यथा । ननु च तत्रैव सख्याने वृत्तिरुपलभ्यते द्व्येकयोरिति नासौ सख्याने प्रयोग किं तर्ह्युपसर्जनावयवे समुदाये प्रयोग यथा बहुशक्तिकीटकमिति । सख्याप्रधानत्वेपि तद्विषयत्वमेवान्तरेणापि भावप्रत्यय गुणप्रधानो भवति निर्देश इत्येव तर्हि द्व्यादय शब्दा सख्येयप्रधाना एव । एकविंशतिशब्दोपि सख्येयवृत्ति परिगृह्यत इति तुल्ययोगोपपत्तेर्युक्तो द्वंद्वो भेदशब्देन किं स्वपदार्था वृत्तिराहोस्विदन्यपदार्था स्वपदार्थप्रधाना कथं "विशेषण विशेष्येणेति" द्विनवाष्टादशैकविंशतित्रय एव भेदा द्विनवाष्टादशैकविंशतित्रिभेदा इति । ननु च द्वियमुनमित्येवमादिषु पूर्वपदार्थप्रधाना वृत्तिरिति द्व्यादीनां विशेष्यत्वमुक्त तेन भेदशब्दस्य विशेषणत्वे सति पूर्वनिपात प्राप्नोति ? नैषदोष सामान्योपक्रमे विशेषाभिधाने तदुक्त के द्वे यमुने इति ह्युक्ते द्विशब्द प्रयोग एवानर्थक इति । इह तु बहुत्वात्सदेह । भेदा इत्युक्ते कतीति द्विनवाष्टादशकविंशतित्रय इति चोक्ते के ते इत्यत उभयव्यभिचाराद्विशेषणविशेष्ययोर्यथेष्टत्वात् । द्व्यादीनां गुणशब्दत्वाच्च विशेषणत्व विव

**ततो विशुद्धिप्रकर्षयुक्तत्वात् क्षायिकः ॥ १० ॥** औपशमिकाद्धि क्षायिक प्रकृष्टशुद्ध्युपेतं मिथ्यात्वसम्यङ्मिथ्यात्वसम्यक्त्वाना साकल्येन सक्षयात् तत औपशमिकात्पर क्षायिकवचन ।

**बहुत्वाच्च ॥ ११ ॥** बहवो हि क्षायिकसम्यग्दृष्टय औपशमिकसम्यक्त्वेभ्य । कुत ? गुणकारविशेषात् को गुणकार ? आवलिकाया असख्येयभाग सोऽसख्येया समया. कुतोऽसख्येयस्य राशेरसख्येया एव इति । तत आवलिकाया असख्येभागेन गुणिता उपशमसम्यग्दृष्टय क्षायिकसम्यग्दृष्टीन्प्राप्नुवति। कुत सचयकालस्य महत्वात् । इह क्षायिकसम्यग्दृष्टेस्त्रयस्त्रिंशत्सागरोपमाणि सातिरेकाणि कालस्तस्य प्राथमिकसमयादारभ्य समये समये सचीयमाना आतत्कालपरिसमाप्तेर्बहवो भवति ।

**तदसंख्येयगुणत्वाचदनंतरं मिश्रवचन ॥ १२ ॥** क्षायिकादसख्येयगुण क्षायोपशमिक द्रव्यतो न भावत क्षायोपशमिकाद्धि क्षायिको भावतोऽनतगुण , विशुद्धिप्रकर्षयोगात् , स्याद्रव्यतोऽसख्येयगुण क्षायिकात्क्षायोपशमिक. । कुत ? गुणकारविशेषात् । को गुणकार ? आवलिकाया असख्येयभाग । कुत सचयकालस्य महत्वात् । इह क्षायोपशमिकसम्यग्दृष्टेः षट्षष्टिसागरोपमाणि पूर्णानि कालस्तस्य प्रथमसमयादारभ्य समये समये सचीयमानाः क्षायोपशमिकसम्यग्दृष्टय आतत्कालपरिसमाप्तेर्भूयासो भवति ।

**तदनंतगुणत्वादंते द्वयवचनं ॥ १३ ॥** तेषां सर्वेषामेवानतगुणा औदयिका पारिणामिकाश्च तवेति तेपा वचन क्रियते ।

**तैरेव चात्मनः समधिगमात् ॥ १४ ॥** अतींद्रियत्वादात्मनो मनुष्यतैर्यग्योनादिभिरौदयिकैः पारिणामिकैश्च चैतन्यजीवत्वादिभि समधिगमो भवति ।

**सर्वजीवतुल्यत्वाच्च ॥ १५ ॥** सर्वेषा हि जीवाना तुल्या औदयिका. पारिणामिकाश्च ततस्तेषामते वचनं न्याय्य ।

**तत्त्वमिति बहुवचनप्रसंग इति चेन्न भावस्यैकत्वात् ॥ १६ ॥** स्यादेतदौपशमिकादिपचतयभावसामानाधिकरण्यात्तत्त्वस्य बहुवचन प्राप्नोतीति तन्न । किं कारण भावस्यैकत्वात्तत्त्वमित्येष एको भाव ।

**फलभेदान्नानात्वमिति चेन्न स्वात्मभावभेदस्याऽविवक्षितत्वाद्गावोधनमिति यथा ॥१७॥** स्यादेतदौपशमिकादिपचतयत्वफलभेदाद्भावनानात्वमिति तन्न । किं कारण स्वात्मभावभेदस्याऽविवक्षितत्वाद्यथा गावोधनमिति । धिनोतेर्धन तवैकत्वेन विवक्षित तथा तत्त्वमिति ।

**प्रत्येकमभिसंबंधाच्च ॥ १८ ॥** एकत्वमुपपद्यते औपशमिको भाव स्वतत्त्वमित्यादि ।

**द्वंद्वनिर्देशो युक्त इति चेन्नोभयधर्मव्यतिरेकेणाऽन्यभावप्रसंगात् ॥ १९ ॥** स्यान्मत द्वंद्वनिर्देशोत्र युक्त , औपशमिकक्षायिकमिश्रौदयिकपारिणामिका इति । तत्रायमप्यर्थो द्विश्चशब्दो न कर्तव्यो भवतीति.। तन्न किं कारणमुभयधर्मव्यतिरेकेणान्यभावप्रसगात् । उभाभ्या भावाभ्या व्यतिरेकेणान्योभावः प्राप्नोति चशब्दे पुन सति पूर्वोक्तानुकर्षणार्थो युक्तो भवति ।

**क्षायोपशमिकग्रहणमिति चेन्न गौरवात् ॥ २० ॥** यद्येव क्षायोपशमिकग्रहणमेव कर्तव्यमन्यभावनिवृत्त्यर्थ तन्न किं कारण गौरवात् गौरव स्यादिति ।

**मध्ये मिश्रवचन क्रियते पूर्वोत्तरापेक्षार्थं ॥ २१ ॥** मध्ये मिश्रवचन क्रियते पूर्वोत्तरापेक्षार्थं किमपेक्षाया प्रयोजन ? भव्यानामौपशमिकक्षायिकौ भावौ सम्यक्त्वचारित्राख्यौ क्षायोपशमिकाश्च ज्ञान दर्शनचारित्रभावा । औदयिकपारिणामिका अभव्यानामपि क्षायोपशमिकाश्चेति । तत्र चाभव्याना भव्याना च मिथ्यादृष्टीना चारित्राद्दते क्षायोपशमिका ज्ञानदर्शनविकल्पा ।

**जीवस्येतिवचनमन्यद्रव्यनिवृत्त्यर्थं ॥ २२ ॥** जीवस्येद स्वतत्त्व नान्यस्येति ।

**स्वभावपरित्यागापरित्यागयोः शून्यतानिर्मोक्षप्रसंग इति चेन्नाऽऽदेशवचनात् ॥ २३ ॥** इदमिह सप्रधार्यं आत्मा औपशमिकादिभावपरित्यागी वा स्यादपरित्यागी वा। किं चातो यदि तावत्परित्यजति शून्यता प्राप्नोत्यात्मन स्वभावाभावादग्नेरौष्ण्यस्वभावपरित्यागेऽभाववत्। अथाऽपरित्यागी क्रोधादिस्वभावापरित्यागादात्मनोऽनिर्मोक्षः प्राप्नोतीति। तन्न किं कारण ? आदेशवचनात्। अनादिपारिणामिकचैतन्यद्रव्यार्थादेशात् स्यात्स्वभावाऽपरित्यागी आदिमदौदयिकादिपर्यायार्थादेशात् स्यात्स्वभावपरित्यागी इत्यादि सप्तभंगी पूर्ववत्। यस्यैकांतेन स्वभावपरित्याग स्यादपरित्यागो वा तस्य यथोक्तदोष स्यान्नानेकांतवादिन।

**अप्रतिज्ञानात् ॥ २४ ॥** नैतत्प्रतिजानीमहे स्वभावपरित्यागादपरित्यागाद्वा मोक्ष किं तर्हि अष्टतयकर्मपरिणामवशीकृतस्यात्मन द्रव्यादिबाह्यनिमित्तसंनिधाने सत्याभ्यंतरसम्यग्दर्शनादिमोक्षमार्गप्रकर्षात्तौ कृत्स्नकर्मसंक्षयात् मोक्षो विवक्षितस्ततो न दोष, न चाग्नेरुष्णस्वभावपरित्यागेप्यभाव कस्माद्द्रव्यार्थावस्थानात् पुद्गलद्रव्यस्य हि पर्याय उष्णभावस्तस्याभावेपि सदचेतनत्वादिभिरवस्थान। किं च—

**कर्मसंनिधाने तदभावे चोभयभावविशेषोपलब्धेर्नेत्रवत् ॥ २५ ॥** यथा नेत्र रूपोपलब्धिस्वभाव यदा रूप नोपलभते तदा रूपोपलब्धिस्वभावपरित्यागान्नास्त्यभावो यथा वा क्षायोपशमिकत्वे रूपोपलब्धिस्वभावस्य नेत्रस्य संक्षीणसकलावरणे केवलिनि मतिज्ञानाभावान्नेत्रात्मकस्य रूपोपलब्धिस्वभावस्य परित्यागेपि द्रव्यनेत्रावस्थानान्न नेत्राभावस्तथा कर्मनिमित्तानामौदयिकादीनामभावेपि क्षायिकभावसंनिधानादात्मनो नाऽभावो विशेषोपलब्धिरस्तीत्यव। आह तस्यात्मनो ये भावा औपशमिकादयस्ते किं भेदवत उताऽभेदा इति। अत्रोच्यते भेदवत यद्येव ते उच्यता कतिभेदा इत्यत उत्तर पठति—

## द्विनवाष्टादशैकविंशतित्रिभेदा यथाक्रमं ॥ २ ॥

कोय निर्देश ?

**द्व्यादीनां कृतद्वंद्वानां भेदशब्देन वृत्तिः ॥ १ ॥** द्वौ च नव चाष्टादश चैकविंशतिश्च त्रयश्च द्विनवाष्टादशैकविंशतित्रय इति द्वंद्वे कृते पश्चाद्भेदशब्देन वृत्तिरिय वेदितव्या। ननु चेतरेतरयोगे द्वंद्व स च तुल्ययोगे भवति न चात्र तुल्ययोगोस्ति कथ द्व्यादय शब्दा संख्येयप्रधाना एकविंशतिशब्द संख्यानप्रधान इति ? नैष दोष संख्याशब्दानाममीषा संख्येयप्रधानत्वेपि निमित्तानुविधानात् संख्यानेपि वृत्तिर्भवति प्रधान हि किंचिन्निमित्तमपेक्ष्यगुणमनुविधत्ते। यथा प्रधानभूतोपि राजा मंत्रिण गुणमाश्रयते तत्प्रयुक्तक्रियाफलार्थित्वात् तस्य प्राधान्यमप्यनुजानातीति। अस्त्यय तर्काश्रयसमाधि लक्षणशास्त्रेण तु निरुच्यते एव हि तत्रोक्तमेकादय आविंशते संख्येयप्रधाना विंशत्यादयस्तु कदाचित्संख्यानप्रधाना कदाचित्संख्येयप्रधाना इति। यदि द्व्यादय संख्यानेपि वर्तेरन् विंशत्यादिभिस्तुल्या स्यु तत्र को दोष संबंधिनां व्यतिरेकनिमित्तविभक्तिश्रवण स्यात् स्वतश्च संख्यानस्यैकत्वादेकवचन श्रूयते विंशतिर्गवामिति यथा। ननु च तत्रैव संख्याने वृत्तिरुपलभ्यते द्व्येकयोरिति नासौ संख्याने प्रयोग किं तर्ह्युपसर्जनावयवे समुदाये प्रयोग यथा बहुशक्तिकीटकमिति। संख्याप्रधानत्वेपि तद्विषयत्वमेवांतरेणापि भावप्रत्यय गुणप्रधानो भवति निर्देश इत्येव तर्हि द्व्यादय शब्दा संख्येयप्रधाना एव। एकविंशतिशब्दोपि संख्येयवृत्ति परिगृह्यत इति तुल्ययोगोपपत्तेर्युक्तो द्वंद्वो भेदशब्देन किं स्वपदार्था वृत्तिराहोस्विदन्यपदार्था स्वपदार्थप्रधाना कथ "विशेषण विशेष्येणेति" द्विनवाष्टादशैकविंशतित्रय एव भेदा द्विनवाष्टादशैकविंशतित्रिभेदा इति। ननु च द्वियमुनमित्येवमादिषु पूर्वपदार्थप्रधाना वृत्तिरिति द्व्यादीना विशेष्यत्वमुक्त तेन भेदशब्दस्य विशेषणत्वे सति पूर्वनिपात प्राप्नोति ? नैषदोष सामान्योपक्रमे विशेषाभिधाने तदुक्त के द्वे यमुने इति द्युक्ते द्विशब्द प्रयोग एवानर्थक इति। इह तु बहुत्वात्संदेह। भेदा इत्युक्ते कतीति द्विनवाष्टादशैकविंशतित्रय इति चोक्ते के ते इत्यत उभयव्यभिचाराद्विशेषणविशेष्ययोर्यथेष्टत्वात्। द्व्यादीना गुणशब्दत्वाच्च विशेषणत्व विग

क्षित । अथ पुनरस्त्वन्यपदार्थो वृत्ति, द्विनवाष्टादशैकविंशतित्रयो भेदा येषां त इमे द्विनवाष्टादशैकविंशतित्रिभेदा । इत्यत्र हि संख्याशब्दस्य विशेष्यत्वेपि सर्वनामसंख्येयोरुपसंख्यानमिति संख्यायाः पूर्वनिपात । पूर्वस्मिन्नर्थवशाद्विभक्तिपरिणाम इत्यौपशमिकादीनामित्यभिसंबंध उत्तरत्र पठितक्रमेणैव ।

**भेदशब्दस्य प्रत्येक परिसमाप्तिर्भुजिवत्** ॥ २ ॥ यथा देवदत्तजिनदत्तगुरुदत्ता भोज्यंतामिति प्रत्येक भुजि परिसमाप्यते । एव भेदशब्दस्यापि प्रत्येकपरिसमाप्तिर्वेदितव्या द्विभेद नवभेद इत्यादि ।

**यथा निर्दिष्टौपशमिकादिभावाभिसंबंधार्थं द्व्यादिक्रमवचनं** ॥ ३ ॥ क्रम, आनुपूर्व्यं यो य क्रमो यथाक्रम यथौपशमिकादयो भावा निर्दिष्टास्तथैव द्व्यादिभिरभिसंबंध । कथ स्याद् ? इति यथाक्रममित्युच्यते तत्रानिर्धारिते संख्येयाना द्व्यादीना संख्याशब्दाना प्रतिनियताभिधेयानिर्देशे प्राप्तकाले सति यौगपद्यासंभवात् । योऽसावादावुपदिष्ट औपशमिको भावस्तद्भेदप्रदर्शनार्थमाह—

## सम्यक्त्वचारित्रे ॥ ३ ॥

व्याख्यातलक्षणे सम्यक्त्वचारित्रे । औपशमिकत्व कथमिति चेदुच्यते—

**सप्तप्रकृत्युपशमादौपशमिक सम्यक्त्वं** ॥ १ ॥ अनंतानुबंधिन कषायां क्रोधमानमायालोभाश्चत्वार चारित्रमोहस्य । मिथ्यात्वसम्यङ्मिथ्यात्वसम्यक्त्वानि त्रीणि दर्शनमोहस्य । आसा सप्ताना प्रकृतीनामुपशमादौपशमिक सम्यक्त्वमिति अनादिमिथ्यादृष्टेर्भव्यस्य कर्मोदयापादिते कालुष्ये सति कुतस्तदुपशम ?

**काललब्ध्याद्यपेक्षया तदुपशम** ॥ २ ॥ काल लब्ध्यादीन्प्रत्ययानपेक्ष्य तासां प्रकृतीनामुपशमो भवति । तत्र काललब्धिस्तावत्–कर्माविष्ट आत्मा भव्य कालेऽर्धपुद्गलपरिवर्तनाख्येऽवशिष्टे प्रथमसम्यक्त्वग्रहणस्य योग्यो भवति नाधिक इतीय काललब्धिरेका । अपरा कर्मस्थितिका काललब्धिरुत्कृष्टस्थितिकेषु कर्मसु जघन्यस्थितिकेषु प्रथमसम्यक्त्वलाभो न भवति । क तर्हि भवति ? अत कोटीकोटिसागरोपमस्थितिकेषु कर्मसु बंधमापद्यमानेषु विशुद्धपरिणामवशात् सत्कर्मसु च तत संख्येयसागरोपम सहस्रोनायां अत कोटीकोटिसागरोपमस्थितौ स्थापितेषु प्रथमसम्यक्त्वयोग्यो भवति । तथाऽपरा काललब्धिर्भावापेक्षा सा वक्ष्यते । आदिशब्देन जातिस्मरणादय परिगृह्यते । स पुनर्भव्य पचेंद्रिय संज्ञी मिथ्यादृष्टि पर्याप्तक सर्वविशुद्ध प्रथम सम्यक्त्वमुत्पादयति । उत्पादयन्नसावतर्मुहूर्तमेव वर्तयति अनतरं च मिथ्यात्वकर्म त्रिधा विभजते सम्यक्त्व मिथ्यात्व सम्यङ्मिथ्यात्व चेति दर्शनमोहनीय कर्मोपशमयन् क्षोपशमयति चतसृषु गतिषु । तत्र नारका प्रथमसम्यक्त्वमुत्पादयत पर्याप्तका उत्पादयति नापर्याप्तका पर्याप्तकाश्चातर्मुहूर्तस्योपरि उत्पादयति नाधस्तात् । एव सप्तसु पृथिवीषु । तत्रोपरि त्रिसृषु पृथिवीषु नारकास्त्रिभि कारणै सम्यक्त्वमुपजनयति केचिज्जातिं स्मृत्वा केचिद्धर्मं श्रुत्वा केचिद्वेदनाभिभूता । अधस्ताच्चतसृषु पृथिवीषु द्वाभ्या कारणाभ्या केचिज्जातिं स्मृत्वा अपरे वेदनाभिभूता । तिर्यचश्चोत्पादयत पर्याप्तका उत्पादयति नापर्याप्तका पर्याप्तकाश्च दिवसपृथक्त्वस्योपरि नाधस्तादेव सर्वेषु द्वीपसमुद्रेषु तिरश्चा त्रिभि कारणै सम्यक्त्वस्योत्पत्ति केचिज्जातिं स्मृत्वा अपरे धर्मं श्रुत्वा अन्ये जिनबिंब दृष्ट्वा । मनुष्या उत्पादयत पर्याप्तका उत्पादयति नापर्याप्तका पर्याप्तकाश्चाष्टवर्षेभ्य उपर्युत्पादयति नाधस्तादेवमर्धतृतीयद्वीपसमुद्रेषु तेषा त्रिभि कारणै सम्यक्त्वस्योत्पत्ति । केषाचिज्जातिस्मरणादपरेषा धर्मश्रवणादन्येषा जिनबिंबदर्शनात् । देवा सम्यक्त्वमुत्पादयत पर्याप्तका उत्पादयति नापर्याप्तका पर्याप्तकाश्चातर्मुहूर्तस्योपरि नाधस्तादेवमा उपरिमग्रैवेयकेभ्य देवा भवनवास्यादय आसहस्रारकल्पाच्चतुर्भि कारणै प्रथमसम्यक्त्व लभते केचिज्जातिस्मरणेन इतरे धर्मश्रवणेन अपरे जिनमहिमावेक्षणेनान्ये देवर्द्धिनिरीक्षणेन । आनतप्राणतारणाच्युतेषु तैरेव देवर्द्धिविरहितै । नवसु ग्रैवेयकेषु द्वाभ्या कारणाभ्या जातिस्मरणाद्धर्मश्रवणाच्च । उपरि देवा नियमेन सम्यग्दृष्टय ।

**अष्टाविंशतिमोहविकल्पोपशमादौपशमिकं चारित्रं ॥ ३ ॥** अनंतानुबन्ध्यप्रत्याख्यानप्रत्याख्यानसंज्वलनविकल्पाः षोडश कषायाः हास्यरत्यरतिशोकभयजुगुप्सा स्त्रीपुंनपुंसकवेदा नव नोकषाया इत्येवं चारित्रमोहः पंचविंशतिविकल्पः । मिथ्यात्वसम्यङ्मिथ्यात्वसम्यक्त्वभेदात् त्रितयो दर्शनमोहः । एषामष्टाविंशतिमोहविकल्पानामुपशमादौपशमिकं चारित्रं ।

**सम्यक्त्वस्यादौ वचनं तत्पूर्वकत्वाचारित्रस्य ॥ ४ ॥** पूर्वं हि सम्यक्त्वं पर्यायेणाविर्भावं आत्मनस्ततः क्रमाचारित्रपर्याय आविर्भवतीति सम्यक्त्वस्यादौ ग्रहणं क्रियते । यः क्षायिको भावो नवविध उद्दिष्टस्तद्भेदस्वरूपप्रतिपादनार्थमाह—

## ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि च ॥ ४ ॥

चशब्देन सम्यक्त्वचारित्रे समुच्चीयेते ।

**ज्ञानदर्शनावरणक्षयात्केवले क्षायिके ॥ १ ॥** ज्ञानावरणस्य कर्मणः दर्शनावरणस्य च कृत्स्नस्य च क्षयात् केवले ज्ञानदर्शने क्षायिके भवतः ।

**अनंतप्राणिगणानुग्रहकरं सकलदानांतरायक्षयादभयदानं ॥ २ ॥** दानांतरायस्य कर्मणोऽत्यंतसंक्षयादाविर्भूतं त्रिकालगोचरानंतप्राणिगणानुग्रहकरं क्षायिकमभयदानं ।

**अशेषलाभांतरायनिरासात् परमशुभपुद्गलानामादानं लाभः ॥ ३ ॥** लाभांतरायस्याशेषनिरासात् परित्यक्तकवलाहारक्रियाणां केवलिनां यतः शरीरबलाधानहेतवोऽन्यमनुजासाधारणाः परमशुभाः सूक्ष्माः अनंताः प्रतिसमयं पुद्गलाः संबंधमुपयाति स क्षायिको लाभः । तस्मादौदारिकशरीरस्य किंचिन्न्यूनपूर्वकोटिवर्षस्थितिः कवलाहारमंतरेण कथं संभवतीति यद्वचनं तदशिक्षितकृतं विज्ञायते ।

**कृत्स्नभोगांतरायतिरोभावात्परमप्रकृष्टो भोगः ॥ ४ ॥** कृत्स्नस्य भोगांतरायस्य तिरोभावादाविर्भूतोऽतिशयवाननंतो भोगः क्षायिको यत्कृताः पंचवर्णसुरभिकुसुमवृष्टिविविधदिव्यगंधचरणनिक्षेपस्थानसप्तपद्मपंक्तिसुगंधिधूपसुखशीतमारुतादयो भावाः ।

**निरवशेषोपभोगांतरायप्रलयादनंतोपभोगः क्षायिकः ॥ ५ ॥** निरवशेषस्योपभोगांतरायकर्मणः प्रलयात्प्रादुर्भूतोऽनंत उपभोगः क्षायिको यत्कृताः सिंहासनवालव्यजनाशोकपादपछत्रत्रयप्रभामंडलगंभीरस्निग्धस्वरपरिणामदेवदुंदुभिप्रभृतयो भावाः ।

**वीर्यांतरायात्यंतसंक्षयादनंतवीर्यं ॥ ६ ॥** आत्मनः सामर्थ्यस्य प्रतिबंधिनो वीर्यांतरायकर्मणोऽत्यंतसंक्षयादुद्भूतवृत्ति क्षायिकमनंतवीर्यं ।

**पूर्वोक्तमोहप्रकृतिनिरवशेषक्षयात् सम्यक्त्वचारित्रे ॥ ७ ॥** पूर्वोक्तस्य दर्शनमोहत्रिकस्य चारित्रमोहस्य च पंचविंशतिविकल्पस्य निरवशेषक्षयात्क्षायिके सम्यक्त्वचारित्रे भवतः । यद्यनंतदानलब्ध्यादय उक्ता अभयदानादिहेतवो दानांतरायादिसंक्षयाद्भवंति सिद्धेष्वपि तत्प्रसंगः ? नैष दोषः शरीरनामकर्मोदयाद्यपेक्षत्वात्तेषां तदभावे तदप्रसंगः । परमानंताव्याबाधरूपेणैव तेषां च तत्र वृत्तिः केवलज्ञानरूपेणानंतवीर्यवृत्तिवत् । सिद्धत्वमपि क्षायिकमागमोपदिष्टमस्ति तस्योपसंख्यानमिह कर्तव्यं न कर्तव्यं, विशेषेषु निर्दिष्टेषु तद्विषयसामान्यमनुक्तसिद्धमेव पर्वादिनिर्देशेंगुलिसिद्धिवत् । सिद्धत्वं हि सर्वेषां क्षायिकाणां भावानां साधारणमिति । य उक्तः क्षायोपशमिको भावोऽष्टादशविकल्पस्तद्भेदनिरूपणार्थमाह—

## ज्ञानाज्ञानदर्शनलब्धयश्चतुस्त्रित्रिपंचभेदाः सम्यक्त्वचारित्रसंयमासंयमाश्च ५

**चतुरादीनां कृतद्वंद्वानां भेदशब्देन वृत्तिः ॥ १ ॥** चत्वारश्च त्रयश्च त्रयश्च पंच च चतुस्त्रित्रि

क्षित । अथ पुनरस्त्वन्यपदार्थो वृत्ति, द्विनवाष्टादशैकविंशतित्रयो भेदा येषां त इमे द्विनवाष्टादशैकविंशतित्रिभेदा । इत्यत्र हि संख्याशब्दस्य विशेष्यत्वेपि सर्वनामसंख्येयोरुपसंख्यानमिति संख्यायाः पूर्वनिपात । पूर्वस्मिन्नर्थवशाद्विभक्तिपरिणाम इत्यौपशमिकादीनामित्यभिसबंध उत्तरत्र पठितक्रमेणैव ।

**भेदशब्दस्य प्रत्येकं परिसमाप्तिर्भुजिवत् ॥ २ ॥** यथा देवदत्तजिनदत्तगुरुदत्ता भोज्यंतामिति प्रत्येकं भुजिः परिसमाप्यते । एवं भेदशब्दस्यापि प्रत्येकपरिसमाप्तिर्वेदितव्या द्विभेद नवभेद इत्यादि ।

**यथा निर्दिष्टौपशमिकादिभावाभिसंबंधार्थं द्व्यादिक्रमवचनं ॥ ३ ॥** क्रम आनुपूर्व्यं यो य. क्रमो यथाक्रमं यथौपशमिकादयो भावा निर्दिष्टास्तथैव द्व्यादिभिरभिसबंध । कथ स्याद् ? इति यथाक्रममित्युच्यते तत्रानिर्धारित संख्येयाना द्व्यादीना संख्याशब्दाना प्रतिविशिष्टाभिधेयनिर्देशे प्राप्तकाले सति यौगपद्यासंभवात् । योऽसावादावुपदिष्ट औपशमिको भावस्तद्भेदप्रदर्शनार्थमाह—

## सम्यक्त्वचारित्रे ॥ ३ ॥

व्याख्यातलक्षणे सम्यक्त्वचारित्रे । औपशमिकत्व कथमिति चेदुच्यते—

**सप्तप्रकृत्युपशमादौपशमिकं सम्यक्त्वं ॥ १ ॥** अनतानुबंधिन कषायाः क्रोधमानमायालोभाश्चत्वार चारित्रमोहस्य । मिथ्यात्वसम्यङ्मिथ्यात्वसम्यक्त्वानि त्रीणि दर्शनमोहस्य । आसा सप्ताना प्रकृतीनामुपशमादौपशमिकं सम्यक्त्वमिति अनादिमिथ्यादृष्टेर्भव्यस्य कर्मोदयापादिते कालुष्ये सति कुतस्तदुपशम ?

**काललब्ध्याद्यपेक्षया तदुपशम ॥ २ ॥** काल लब्ध्यादीन्प्रत्ययानपेक्ष्य तासां प्रकृतीनामुपशमो भवति । तत्र काललब्धिस्तावत्–कर्माविष्ट आत्मा भव्य कालेऽर्धपुद्गलपरिवर्तनाख्येऽवशिष्टे प्रथमसम्यक्त्वग्रहणस्य योग्यो भवति नाधिक इतीय काललब्धिरेका । अपरा कर्मस्थितिका काललब्धिरुत्कृष्टस्थितिकेषु कर्मसु जघन्यस्थितिकेषु प्रथमसम्यक्त्वलाभो न भवति । क तर्हि भवति ? अत कोटीकोटिसागरोपम स्थितिकेषु कर्मसु बन्धमापद्यमानेषु विशुद्धपरिणामवशात् सत्कर्मसु च तत संख्येयसागरोपम सहस्रोनाया मत कोटीकोटिसागरोपमस्थितौ स्थापितेषु प्रथमसम्यक्त्वयोग्यो भवति । तथाऽपरा काललब्धिर्भवापेक्षा सा वक्ष्यते । आदिशब्देन जातिस्मरणादय परिगृह्यते । स पुनर्भव्य पंचेंद्रिय संज्ञी मिथ्यादृष्टि पर्याप्तक सर्वविशुद्ध प्रथम सम्यक्त्वमुत्पादयति । उत्पादयन्नसावंतर्मुहूर्तमेव वर्तयति अपवर्त्य च मिथ्यात्वकर्म त्रिधा विभजते सम्यक्त्व मिथ्यात्व सम्यङ्मिथ्यात्व चेति दर्शनमोहनीय कर्मोपशमयन् क्षोपशमयति चतसृषु गतिषु । तत्र नारका प्रथमसम्यक्त्वमुत्पादयत पर्याप्तका उत्पादयति नापर्याप्तका पर्याप्तकाश्चांतर्मुहूर्तस्योपरि उत्पादयति नाधस्तात् । एव सप्तसु पृथिवीषु । तत्रोपरि तिसृषु पृथिवीषु नारकास्त्रिभि कारणै सम्यक्त्वमुपजनयति केचिज्जातिं स्मृत्वा केचिद्धर्मं श्रुत्वा केचिद्वेदनाभिभूता । अधस्ताच्चतसृषु पृथिवीषु द्वाभ्या कारणाभ्या केचिज्जातिं स्मृत्वा अपरे वेदनाभिभूता । तिर्यंचश्चोत्पादयत पर्याप्तका उत्पादयति नापर्याप्तका पर्याप्तकाश्च दिवसपृथक्त्वस्योपरि नाधस्तादेव सर्वेषु द्वीपसमुद्रेषु तिरश्चा त्रिभि कारणै सम्यक्त्वस्योत्पत्ति केचिज्जातिं स्मृत्वा अपरे धर्मं श्रुत्वा अन्ये जिनबिंब दृष्ट्वा । मनुष्या उत्पादयत पर्याप्तका उत्पादयति नापर्याप्तका पर्याप्तकाश्चाष्टवर्षस्थितेरुपर्युत्पादयति नाधस्तादेवमर्धतृतीयद्वीपसमुद्रेषु तेषा त्रिभि कारणै सम्यक्त्वस्योत्पत्ति । केषाचिज्जातिस्मरणादपरेषा धर्मश्रवणादन्येषा जिनबिंबदर्शनात् । देवा सम्यक्त्वमुत्पादयत पर्याप्तका उत्पादयति नापर्याप्तका पर्याप्तकाश्चांतर्मुहूर्तस्योपरि नाधस्तादेवमा उपरिमग्रैवेयकेभ्य देवा भवनवास्यादय आसहस्रारकल्पाच्चतुर्भि कारणै प्रथमसम्यक्त्व लभते केचिज्जातिस्मरणेन इतरे धर्मश्रवणेन अपरे जिनमहिमावेक्षणेनान्ये देवर्द्धिनिरीक्षणेन । आनतप्राणतारणाच्युतेषु तैरेव देवर्द्धिविरहितै । नवसु ग्रैवेयकेषु द्वाभ्या कारणाभ्या जातिस्मरणाद्धर्मश्रवणाच्च । उपरि देवा नियमेन सम्यग्दृष्टय. ।

अष्टाविंशतिमोहविकल्पोपशमादौपशमिकं चारित्रं ॥ ३ ॥ अनंतानुबंध्यप्रत्याख्यानप्रत्याख्यानसंज्वलनविकल्पाः षोडशकषायाः हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुंनपुंसकवेदा नव नोकषायाः इत्येवं चारित्रमोहः पंचविंशतिविकल्पः । मिथ्यात्वसम्यङ्मिथ्यात्वसम्यक्त्वभेदात् त्रितयो दर्शनमोहः । एषामष्टाविंशतिमोहविकल्पानामुपशमादौपशमिकं चारित्रं ।

सम्यक्त्वस्यादौ वचनं तत्पूर्वकत्वाच्चारित्रस्य ॥ ४ ॥ पूर्वं हि सम्यक्त्वपर्यायेणाविर्भाव आत्मनस्ततः क्रमाच्चारित्रपर्याय आविर्भवतीति सम्यक्त्वस्यादौ ग्रहणं क्रियते । यः क्षायिको भावो नवविध उद्दिष्टस्तद्भेदस्वरूपप्रतिपादनार्थमाह—

## ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि च ॥ ४ ॥

चशब्देन सम्यक्त्वचारित्रे समुच्चीयेते ।

ज्ञानदर्शनावरणक्षयात्केवले क्षायिके ॥ १ ॥ ज्ञानावरणस्य कर्मणः दर्शनावरणस्य च कृत्स्नस्य च क्षयात् केवले ज्ञानदर्शने क्षायिके भवतः ।

अनंतप्राणिगणानुग्रहकरं सकलदानांतरायक्षयादभयदानं ॥ २ ॥ दानांतरायस्य कर्मणोऽत्यंतसंक्षयादाविर्भूतं त्रिकालगोचरानंतप्राणिगणानुग्रहकरं क्षायिकमभयदानं ।

अशेषलाभांतरायनिरासात् परमशुभपुद्गलानामादानं लाभः ॥ ३ ॥ लाभांतरायस्याशेषनिरासात् परित्यक्तकवलाहारक्रियाणां केवलिनां यतः शरीरबलाधानहेतवोऽन्यमनुजासाधारणाः परमशुभाः सूक्ष्मा अनंताः प्रतिसमयं पुद्गलाः संबंधमुपयांति स क्षायिको लाभः । तस्मादौदारिकशरीरस्य किंचिन्न्यूनपूर्वकोटिवर्षस्थितिः कवलाहारमंतरेण कथं स्यादिति यद्वचनं तदशिक्षितकृतं विज्ञायते ।

कृत्स्नभोगांतरायतिरोभावात्परमप्रकृष्टो भोगः ॥ ४ ॥ कृत्स्नस्य भोगांतरायस्य तिरोभावादाविर्भूतोऽतिशयवाननंतो भोगः क्षायिको यत्कृताः पंचवर्णसुरभिकुसुमवृष्टिविविधदिव्यगंधचरणनिक्षेपस्थानसप्तपद्मपंक्तिसुगंधिधूपसुखशीतमारुतादयो भावाः ।

निरवशेषोपभोगांतरायप्रलयादनंतोपभोगः क्षायिकः ॥ ५ ॥ निरवशेषस्योपभोगांतरायकर्मणः प्रलयात्प्रादुर्भूतोऽनंत उपभोगः क्षायिको यत्कृताः सिंहासनबालव्यजनाशोकपादपछत्रत्रयप्रभामंडलगंभीरस्निग्धस्वरपरिणामदेवदुंदुभिप्रभृतयो भावाः ।

वीर्यांतरायात्यंतसंक्षयादनंतवीर्यं ॥ ६ ॥ आत्मनः सामर्थ्यस्य प्रतिबंधिनो वीर्यांतरायकर्मणोऽत्यंतसंक्षयादुद्भूतवृत्ति क्षायिकमनंतवीर्यं ।

पूर्वोक्तमोहप्रकृतिनिरवशेषक्षयात् सम्यक्त्वचारित्रे ॥ ७ ॥ पूर्वोक्तस्य दर्शनमोहत्रिकस्य चारित्रमोहस्य च पंचविंशतिविकल्पस्य निरवशेषक्षयात्क्षायिके सम्यक्त्वचारित्रे भवतः । यद्यनंतदानलब्ध्यादय उक्ता अभयदानादिहेतवो दानांतरायादिसंक्षयाद्भवंति सिद्धेष्वपि तत्प्रसंगः? नैष दोषः शरीरनामकर्मोदयाद्यपेक्षत्वात्तेषां तदभावे तदप्रसंगः । परमानंताव्याबाधरूपेणैव तेषां च तत्र वृत्तिः केवलज्ञानरूपेणानंतवीर्यवृत्तिवत् । सिद्धत्वमपि क्षायिकमागमोपदिष्टमस्ति तस्योपसंख्यानमिह कर्तव्यं न कर्तव्यं, विशेषेषु निर्दिष्टेषु तद्विषयसामान्यमनुक्तसिद्धमेव पर्वादिनिर्देशेंगुलिसिद्धिवत् । सिद्धत्वं हि सर्वेषां क्षायिकाणां भावानां साधारणमिति । य उक्तः क्षायोपशमिको भावोऽष्टादशविकल्पस्तद्भेदनिरूपणार्थमाह—

## ज्ञानाज्ञानदर्शनलब्धयश्चतुस्त्रित्रिपंचभेदाः सम्यक्त्वचारित्रसंयमासंयमाश्च ५

चतुरादीनां कृतद्वंद्वानां भेदशब्देन वृत्तिः ॥ १ ॥ चत्वारश्च त्रयश्च त्रयश्च पंच च चतुस्त्रि

पञ्च ते भेदा यासा ताश्चतुस्त्रित्रिपञ्चभेदा इति द्वन्द्वगर्भा वृत्ति । त्रिशब्दस्य द्वन्द्वापवाद एकशेष कस्मान्न भवति ? सख्यया अर्थसप्रत्ययादस्यापदार्थत्वाच्चानेकशेष । पृथगभिधाने प्रयोजनसद्भावाच्च । यथाक्रमवचन ज्ञानादिभिरानुपूर्व्यसबधार्थं । इह यथाक्रममिति वक्तव्य । किं प्रयोजन ? चतुर्भेद ज्ञानमित्येवमाद्यभिसबधार्थं तर्हि वक्तव्य । न वक्तव्य यथाक्रममित्यनुवर्तते । क्व प्रकृत ? द्विनवाष्टादशैकविंशतित्रिभेदा यथाक्रममिति । कस्य क्षयात्कस्य चोपशमात्क्षायोपशमिको भावो भवतीत्युच्यते—

**सर्वघातिस्पर्धकानामुदयक्षयात्तेषामेव सदुपशमाद्देशघातिस्पर्धकानामुदये क्षायोपशमिको भाव ॥ २ ॥** द्विविध स्पर्धक देशघातिस्पर्धक सर्वघातिस्पर्धक चेति । तत्र यदा सर्वघातिस्पर्धकस्योदयो भवति तदेषदप्यात्मगुणस्याभिव्यक्तिर्नास्ति तस्मात्तदुदयस्याभाव क्षय इत्युच्यते । तस्यैव सर्वघातिस्पर्धकस्यानुदयप्राप्तस्य सदवस्था उपशम इत्युच्यते । अनुद्भूतस्ववीर्यवृत्तित्वादात्मसाद्भावितसर्वघातिस्पर्धकस्योदयक्षये देशघातिस्पर्धकस्य चोदये सति सर्वघात्यभावादुपलभ्यमानो भाव क्षायोपशमिक इत्युच्यते । किमिद स्पर्धक नाम ? उच्यते—

**अविभागपरिच्छिन्नकर्मप्रदेशरसभागप्रचयपंक्तिक्रमवृद्धि क्रमहानि स्पर्धकं ॥ ३ ॥** उदयप्राप्तस्य कर्मण प्रदेशा अभव्यानामनतगुणा सिद्धानामनतभागप्रमाणा । तत्र सर्वजघन्यगुण प्रदेश परिगृहीतस्तस्यानुभाग प्रज्ञाछेदेन तावद्वा (२) परिच्छिन्न यावत्पुनर्विभागो न भवति ते अविभागपरिच्छेदा सर्वजीवानामनतगुणा एको राशि कृत । एव तत्प्रमाणा सर्वे तथैव परिच्छिन्ना पक्तीकृता वर्गा वर्गणा । अपर एकाविभागपरिच्छेदाधिक प्रदेश परिगृहीतस्तथैव तस्याविभागपरिच्छेदा कृता स एको राशिर्वर्ग । तथैव समगुणा पक्तीकृता वर्गा वर्गणा । एव पक्तय कृता यावदेकाविभागपरिच्छेदाधिकलाभ । तदलाभेनतर भवत्येवमेतासा पक्तीनां विशेषहीनाना क्रमवृद्धिक्रमहानियुक्ताना समुदय स्पर्धकमित्युच्यते । तत उपरि द्वित्रिचतु सख्येया सख्येयगुणरसा न लभ्यते अनतगुणरसा एव तत्रैकप्रदेशो जघन्यगुण परिगृहीतस्तस्य चानुभागाविभागपरिच्छेदा पूर्ववत्कृता । एव समगुणा वर्गा समुदिता वर्गणा भवति । एकाविभागपरिच्छेदाधिका पूर्ववद्विरलीकृता वर्गा वर्गणाश्च भवति यावदतर भवति तावदेकस्पर्धक भवति । एवमनेन क्रमेण विभागे क्रियमाणेऽभव्यानामनतगुणानि सिद्धानामनतभागप्रमाणानि स्पर्धकानि भवति । तदेतत्समुदितमेकमुदयस्थान भवति ।

**तत्र ज्ञान चतुर्विध क्षायोपशमिकमाभिनिबोधिकज्ञानं श्रुतज्ञानमवधिज्ञानं मनःपर्ययज्ञान चेति ॥ ४ ॥** वीर्यांतरायमतिश्रुतज्ञानावरणाना सर्वघातिस्पर्धकानामुदयक्षयात्सदुपशमाच्च देशघातिस्पर्धकानामुदये सति मतिज्ञान श्रुतज्ञान च भवति । देशघातिस्पर्धकाना रसस्य प्रकर्षाप्रकर्षयोगाद् गुणघातस्यातिशयानतिशयवत्वात्तज्ज्ञानभेदो भवति । एवमवधिमन पर्ययज्ञानयोरपि स्वावरणक्षयोपशमभेदात्क्षायोपशमिकत्व वेदितव्य ।

**अज्ञानं त्रिविधं मत्यज्ञान श्रुताज्ञान विभग चेति ॥ ५ ॥** तेषा क्षायोपशमिकत्व पूर्ववत् । ज्ञानाज्ञानविभागस्तु मिथ्यात्वकर्मोदयानुदयापेक्ष ।

**दर्शनं त्रिविधं क्षायोपशमिकं चक्षुर्दर्शनमचक्षुर्दर्शनमवधिदर्शन चेति ॥ ६ ॥** एतान्त्रितयमपि पूर्ववत् स्वावरणक्षयोपशमापेक्ष द्रष्टव्य ।

**लब्धय पच क्षायोपशमिकाः दानलब्धिर्लाभलब्धिर्भोगलब्धिरुपभोगलब्धिर्वीर्यलब्धिश्चेति ॥ ७ ॥** दानातरायादिसर्वघातिस्पर्धकक्षयोपशमे देशघातिस्पर्धकोदयसद्भावे ता पचलब्धयो भवति । सम्यक्त्वग्रहणेन वेदकसम्यक्त्वमिह परिगृह्यते । अनतानुबधिकषायचतुष्टयस्य मिथ्यात्वसम्यङ्मिथ्यात्वयोश्चोदयक्षयात्सदुपशमाच्च सम्यक्त्वस्य देशघातिस्पर्धकस्योदये सति तत्त्वार्थश्रद्धान क्षायोपशमिक सम्यक्त्व । अनतानुबध्यप्रत्याख्यानप्रत्याख्यानद्वादशकषायोदयक्षयात्सदुपशमाच्च सज्वलनकषायचतु-

ष्वन्यतमदेशघातिस्पर्धकोदये सति नोकषायनवकस्य यथासंभवोदये च निवृत्तिपरिणाम आत्मनः क्षायोपशमिकं चारित्रं । अनंतानुबन्ध्यप्रत्याख्यानकषायाष्टकोदयक्षयात्सदुपशमाच्च प्रत्याख्यानकषायोदये सञ्ज्वलनकषायस्य देशघातिस्पर्धकोदये नोकषायनवकस्य यथासंभवोदये च विरताविरतपरिणाम क्षायोपशमिक संयमासंयम ।

**संज्ञित्वसम्यङ्मिथ्यात्वयोगोपसंख्यानमिति चेन्न ज्ञानसम्यक्त्वलब्धिग्रहणेन गृहीतत्वात् ॥ ८ ॥** स्यादेतत् संज्ञित्वसम्यङ्मिथ्यात्वयोगोपसंख्यानं कर्तव्यं तेऽपि हि क्षायोपशमिका इति । तन्न, किं कारणं ? ज्ञानसम्यक्त्वलब्धिग्रहणेन गृहीतत्वात् । संज्ञित्वं हि मतिज्ञानेन गृहीतं सम्यङ्मिथ्यात्वं सम्यक्त्वग्रहणेन । नोइंद्रियावरणक्षयोपशमापेक्षत्वादुभयात्मकस्य एकात्मपरिग्रहाच्चोदकन्यामिश्रक्षीरव्यपदेशवद्योगश्च वीर्यलब्धिग्रहणेन गृहीत इति । अथवा चशब्देन समुच्चयो वेदितव्यः । अथ पंचेंद्रियत्वे समाने नोइंद्रियावरणक्षयोपशमः कस्यचिद्भवति कस्यचिन्नेति कुतोऽयं विकल्प ? उच्यते—संज्ञिजातिनामकर्मविशेषोदये बललाभे सति नोइंद्रियावरणक्षयोपशमो भवति तदभावे न भवतीत्ययं विशेषः । एकेंद्रियजातिनामाद्युदयविशेषापेक्षया एकेंद्रियादिक्षयोपशमभेदवत् । य एकविंशतिविकल्प औदयिको भाव उद्दिष्टः तस्य भेदसंज्ञासंकीर्तनार्थमिदमारभ्यते—

## गतिकषायलिंगमिथ्यादर्शनाज्ञानासंयतासिद्धलेश्याश्चतुश्चतुस्त्र्येकैकैकैकषड्भेदाः ॥ ६ ॥

गत्यादीनामितरेतरयोगो द्वंद्वः चतुरादीनां च द्वंद्वगर्भोऽन्यपदार्थप्रधाना वृत्तिः पूर्ववदेकशेषाभावः ।

**गतिनामकर्मोदयादात्मनस्तद्भावपरिणामाद्गतिरौदयिकी ॥ १ ॥** येन कर्मणा आत्मनो नारकादिभावावाप्तिर्भवति तद्गतिनाम चतुर्विधं नरकगतिनाम तिर्यग्गतिनाम मनुष्यगतिनाम देवगतिनाम चेति । तत्र नरकगतिनामकर्मोदयान्नारको भावो भवतीति स औदयिकः । एवं तिर्यग्गतिनामकर्मोदयात्तिर्यग्भाव औदयिकः । मनुष्यगतिनामकर्मोदयान्मनुष्यभाव औदयिकः । देवगतिनामकर्मोदयाद्देवभाव औदयिकः ।

**चारित्रमोहोदयात्कलुषभावः कषाय औदयिकः ॥ २ ॥** चारित्रमोहस्य कषायवेदनीयस्योदयादात्मनः कालुष्यं क्रोधादिरूपमुत्पद्यमानं कषत्यात्मानं हिनस्तीति कषाय इत्युच्यते स औदयिकश्चतुर्विधः, क्रोधो मानो माया लोभश्चेति । तद्भेदा अनंतानुबन्ध्यप्रत्याख्यानप्रत्याख्यानसञ्ज्वलनविकल्पाः ।

**वेदोदयापादितोऽभिलापविशेषो लिंगं ॥ ३ ॥** लिंगं द्विविधं द्रव्यलिंगं भावं च । तत्र यद्द्रव्यलिंगं नामकर्मोदयापादितं तदिह नाधिकृतमात्मपरिणामप्रकरणात् । भावलिंगमात्मपरिणामः स्त्रीपुंनपुंसकान्योन्याभिलाषलक्षणः स पुनश्चारित्रमोहविकल्पस्य नोकषायस्य स्त्रीवेदपुंवेदनपुंसकवेदस्योदयाद्भवतीत्यौदयिकः ।

**दर्शनमोहोदयात्तत्त्वार्थाश्रद्धानपरिणामो मिथ्यादर्शनं ॥ ४ ॥** तत्त्वार्थरुचिस्वभावस्यात्मनस्तत्प्रतिबंधकारणस्य दर्शनमोहस्योदयात्तत्त्वार्थेषु निरूप्यमाणेष्वपि न श्रद्धानमुत्पद्यते तन्मिथ्यादर्शनमौदयिकमित्याख्यायते ।

**ज्ञानावरणोदयादज्ञानं ॥ ५ ॥** ज्ञस्वभावस्यात्मनस्तदावरणकर्मोदये सति नावबोधो भवति तदज्ञानमौदयिकं । घनसमूहस्थगितदिनकरतेजोनभिव्यक्तिवत् । तद्यथा—एकेंद्रियस्य रसनघ्राणश्रोत्रचक्षुरिन्द्रियाणां प्रतिनियताभिनिबोधिकज्ञानावरणस्य सर्वघातिस्पर्धकस्योदयाद्रसगंधशब्दरूपाज्ञानं यत्तदौदयिकं । एवं द्वित्रिचतुरिंद्रियेषु शेषेंद्रियविषयाज्ञानं वाच्यं पंचेंद्रियतिर्यक्षु शुकसारिकादिवर्जितेषु मनुष्येषु च केषुचिदक्षरश्रुतावरणस्य सर्वघातिस्पर्धकस्योदयादक्षरश्रुतनिर्वृत्यभावादक्षरश्रुताज्ञानमौदयिकं । नोइंद्रियावरणस्य सर्वघातिस्पर्धकस्योदयाद्धिताहितपरीक्षां प्रत्यसामर्थ्यमसंज्ञित्वमौदयिकं तदप्यत्रैवांतर्भवति ।

एवमवधिमनःपर्ययकेवलज्ञानावरणोदयात्प्रत्येकमज्ञानमौदयिक वाच्यमिति ।

**चारित्रमोहोदयादनिवृत्तिपरिणामोऽसयतः ॥ ६ ॥** चारित्रमोहोदयस्य सर्वघातिस्पर्धकस्योदयात्प्राण्युपघातेंद्रियविषये द्वेषाभिलापनिवृत्तिपरिणामरहितोऽसयत औदयिक ।

**कर्मोदयसामान्यापेक्षोऽसिद्धः ॥ ७ ॥** अनादिकर्मबन्धसतानपरतत्रस्यात्मन कर्मोदयसामान्ये सति असिद्धत्वपर्यायो भवतीत्यौदयिक' स पुनर्मिथ्यादृष्ट्यादिषु सूक्ष्मसापरायिकातेषु कर्माष्टकोदयापेक्ष. शातक्षीणकषाययो सप्तकर्मोदयापेक्ष सयोगिकेवल्ययोगिकेवलिनोरघातिकर्मोदयापेक्ष ।

**कषायोदयरंजिता योगप्रवृत्तिर्लेश्या ॥ ८ ॥** द्विविधा लेश्या। द्रव्यलेश्या भावलेश्या चेति। तत्र द्रव्यलेश्या पुद्गलविपाकिकर्मोदयापादितेति सा नेह परिगृह्यत आत्मनो भावप्रकरणात् । भावलेश्या कषायोदयरजिता योगप्रवृत्तिरिति कृत्वा औदयिकीत्युच्यते । ननु च योगप्रवृत्तिरात्मप्रदेशपरिस्पदक्रिया सा वीर्यलब्धिरिति क्षायोपशमिकी व्याख्याता कषायश्चौदयिको व्याख्यातस्ततो लेश्यानर्थांतरभूतेति ' नैषदोष कषायोदयतीव्रमदावस्थापेक्षाभेदादर्थांतरत्व । सा षड्विधा—कृष्णलेश्या नीललेश्या कपोतलेश्या तेजोलेश्या पद्मलेश्या शुक्ललेश्या चेति । तस्यात्मपरिणामस्याऽशुद्धिप्रकर्षापेक्षया कृष्णादिशब्दोपचार क्रियते । ननु चोपशातकषाये क्षीणकषाये सयोगकेवलिनि च शुक्ललेश्यास्ति इत्यागमस्तत्र कषायानुरजनाभावादौदयिकत्व नोपपद्यते ' नैषदोष पूर्वभावप्रज्ञापननयापेक्षया यासौ योगप्रवृत्ति कषायानुरजिता सैवेयमित्युपचारादौदयिकीत्युच्यते । तदभावादयोगिकेवल्यलेश्य इति च निश्चीयते । अत्र चोद्यते यथाऽज्ञानमौदयिकमेवमदर्शनमपिदर्शनावरणोदयाद्भवतीत्यौदयिक निद्रानिद्रादयश्चौदयिका वेदनीयोदयात् सुखदुःखमौदयिक नोकषायाश्च हास्यरत्यादय षडौदयिका आयुरुदयाद्भवधारण भवत्यौदयिकमुच्चैर्नीचैर्गोत्रकर्मोदयादुच्चनीचगोत्रपरिणामो भवतीत्यौदयिको नामकर्मणि च जात्यादय औदयिका एतेषामपरिग्रहान्न्यून लक्षणमिति ' अथ मतमात्मपरिणामस्याधिकृतत्वाच्छरीरादीनामौदयिकत्वेपि पुद्गलविपाकित्वात्तेषामसग्रह इति । एवमपि ये जीवविपाकिनस्तेषा ग्रहण कर्तव्य जात्यादीनामत उत्तर पठति—

**मिथ्यादर्शने दर्शनावरोधः ॥९॥** मिथ्यादर्शने दर्शनावरोधो भवति निद्रानिद्रादीनामपि दर्शनसामान्यावरणत्वात्तत्रैवातर्भाव । ननु च तत्त्वार्थाश्रद्धान मिथ्यादर्शनमित्युक्त सत्यमुक्त सामान्यनिर्देशे विशेषातर्भावात् । सोप्येको विशेषोऽयमपरो विशेषोऽदर्शनमप्रतिपत्तिर्मिथ्यादर्शनमिति ।

**लिंगग्रहणे हास्यरत्याद्यंतर्भावः सहचारित्वात् ॥ १० ॥** लिंगग्रहणे हास्यरत्यादीनामतर्भावो भवति कुत सहचारित्वात् पर्वतग्रहणेन नारदग्रहणवत् ।

**गतिग्रहणमघात्युपलक्षणं ॥ ११ ॥** अघातिकर्मोदयापादिता ये भावा तेषा गतिग्रहणमुपलक्षण यथा काकेभ्यो रक्षता सर्पिरिति काकग्रहणमुपघातकोपलक्षण । तेन जात्यादयो भावा नामकर्मविशेषोदयापादिता वेदनीयायुर्गोत्रोदयकृताश्च गृह्यते । इह यथाक्रममिति वक्तव्य गतिश्चतुर्विधेत्येवमाद्यानुपूर्व्यसप्रत्ययार्थं । न वक्तव्य यथाक्रममित्यनुवर्तते । य पारिणामिको भावस्त्रिभेद उक्तस्तद्विकल्पस्वरूपप्रतिपादनार्थमाह—

## जीवभव्याभव्यत्वानि च ॥ ७ ॥

**अन्यद्रव्यासाधारणास्त्रयः पारिणामिकाः ॥ १ ॥** जीवत्व भव्यत्वमभव्यत्वमित्येते पारिणामिका आत्मनस्त्रयो भावा अन्यद्रव्यासाधारणा वेदितव्या । कुत पुनरेषा पारिणामिकत्व '

**कर्मोदयक्षयोपशमक्षयोपशमानपेक्षत्वात् ॥ २ ॥** न ह्येवविध कर्मास्ति यस्योदयात् क्षयात् क्षायोपशमाद्वा जीवो भव्योऽभव्यो वेति चोच्यते । तदभावादनादिद्रव्यभवनसबधपरिणामनिमित्तत्वात्पारिणामिका इति व्यपदिश्यते ।

**आयुर्द्रव्यापेक्ष जीवत्वं न पारिणामिकमिति चेन्न पुद्गलद्रव्यसंबन्धे सत्यन्यद्रव्यसामर्थ्याभावात् ॥ ३ ॥** स्यादेतदायुर्द्रव्योदयाज्जीवतीति जीवो नानादिपारिणामिकत्वादिति चेन्न किं कारणं पुद्गलद्रव्यसम्बन्धे सत्यन्यद्रव्यसामर्थ्याभावात्। आयुर्हि पौद्गलिकं द्रव्यं यदि च तत्सम्बन्धाज्जीवत्वं स्यान्नन्वेवमन्यद्रव्यस्यापि धर्मादेरायुःसंबन्धाज्जीवत्वं स्यात्। किं च—

**सिद्धस्याजीवत्वप्रसंगात् ॥ ४ ॥** यद्यायुःसम्बन्धापेक्षं जीवत्वं ननु सिद्धस्यायुरभावादजीवत्वं प्रसज्येत। ततस्तदनपेक्षत्वाज्जीवत्वं पारिणामिकमेव।

**जीवे त्रिकालविषयविग्रहदर्शनादिति चेन्न रूढिशब्दस्य निष्प्रत्ययार्थत्वात् ॥ ५ ॥** स्यान्मतं जीवत्यजीवज्जीविष्यतीति त्रिकालविषयो विग्रहो दृश्यते ततः प्राणधारणार्थत्वात्कर्मापेक्षत्वेन पारिणामिकत्वमिति? तच्च न। कस्मात्? रूढिशब्दस्य निष्प्रत्ययार्थत्वात्। रूढिशब्देषु हि क्रियोपात्तकाला व्युत्पत्त्यर्थैव न तत्र यथा गच्छतीति गौरिति।

**चैतन्यमेव वा जीवशब्दस्यार्थः ॥ ६ ॥** अथवा चैतन्यं जीवशब्देनाभिधीयते तच्चानादिद्रव्यभवननिमित्तत्वात् पारिणामिकं।

**सम्यग्दर्शनज्ञानचारित्रपरिणामेन भविष्यतीति भव्यः ॥ ७ ॥** भव्यादीनां प्रायेण भविष्यत्कालविषयत्वात् सम्यग्दर्शनादिपर्यायेण य आत्मा भविष्यति स भव्य इतीमं व्यपदेशमास्कन्दति॥

**तद्विपरीतोऽभव्यः ॥ ८ ॥** यो न तथा भविष्यत्यसावभव्य इत्युच्यते। किं कृतोऽयं विशेषः? द्रव्यस्वभावकृतोऽतः पारिणामिकत्वमनयोः।

**योऽनन्तेनापि कालेन न सेत्स्यत्यसावभव्य एवेति चेन्न भव्यराश्यन्तर्भावात् ॥ ९ ॥** स्यादेतदनन्तकालेनापि यो न सेत्स्यत्यसावभव्यतुल्यत्वादभव्य एव। अथ सेत्स्यति सर्वो भव्यस्ततः उत्तरकालं भव्यशून्यं जगत् स्यादिति? तन्न, किं कारणं? भव्यराश्यन्तर्भावात् यथा योऽनन्तेनापि कालेन कनकपाषाणो न कनको भविष्यति न तस्यांधपाषाणत्वं कनकपाषाणशक्तियोगात्। यथा वाऽऽगामिकालो योऽनन्तेनापि कालेन नागमिष्यति न तस्यागामित्वं हीयते। तथा भव्यस्यापि स्वशक्तियोगादसत्यामपि व्यक्तौ न भव्यत्वहानिः।

**भावस्यैकत्वनिर्देशो युक्त इति चेन्न द्रव्यभेदाद्भावभेदसिद्धेः ॥ १० ॥** स्यादेतज्जीवश्च भव्यश्चाऽभव्यश्च जीवभव्याभव्या इति द्वंद्वे कृते तेषां भावे विवक्षिते एकत्वनिर्देशो युक्तो जीवभव्याभव्यानां भावो जीवभव्याभव्यत्वमिति? तन्न, किं कारणं? द्रव्यभेदाद्भावभेदसिद्धेः। नहि भाव एकत्वेन वक्तव्य इति नियमोऽस्ति। ततो द्रव्यभेदाद्भेदे सति बहुत्वनिर्देशो युक्तो जीवभव्याभव्यानां भावा जीवभव्याभव्यत्वानीति। पुनः प्रत्येकमभिसंबंधो भवति जीवत्वं भव्यत्वमभव्यत्वमिति।

**द्वितीयगुणग्रहणमार्षोक्तत्वादिति चेन्न तस्य नयापेक्षत्वात् ॥ ११ ॥** अथ मतं द्वितीयगुणग्रहणमिह कर्तव्यं। कोऽसौ द्वितीयगुणः सासादनसम्यग्दृष्टिः सोऽपि जीवस्य साधारणः पारिणामिक एवं ह्यार्षे उक्तं सासादनसम्यग्दृष्टिरिति। को भावः? पारिणामिको भाव इति। न कर्तव्यं कुतस्तस्य नयापेक्षत्वात्। मिथ्यात्वकर्मण उदयं क्षयमुपशमं वा नापेक्षत इत्यार्षे पारिणामिक इह पुनरसावौदयिक इत्येवं गृह्यतेऽनन्तानुबंधिकषायोदयात्तस्य निर्वृत्तेः। चशब्दः किमर्थः?

**अस्तित्वान्यत्वकर्तृत्वभोक्तृत्वपर्यायवत्त्वाऽसर्वगतत्वाऽनादिसंततिबंधनबद्धत्वप्रदेशवत्त्वारूपत्वनित्यत्वादिसमुच्चयार्थश्चशब्दः ॥ १२ ॥** अस्तित्वादयोऽपि पारिणामिका भावाः सन्ति तेषां समुच्चयार्थश्चशब्दः। यदि तेऽपि पारिणामिकाः सूत्रे तेषां ग्रहणं कस्मान्न कृतं?

**अन्यद्रव्यसाधारणत्वादसूत्रिताः ॥ १३ ॥** अस्तित्वादयो हि धर्मा अन्येषामपि द्रव्याणां

साधारणास्ततस्ते न सूचिता । तद्यथा—अस्तित्वं तावत्साधारणं षड्द्रव्यविषयत्वात् । तत्कर्मोदयक्षयक्षयोपशमानपेक्षत्वात्पारिणामिकं । अन्यत्वमपि साधारणं सर्वद्रव्याणां परस्परतोन्यत्वात् कर्मोदयाद्यपेक्षाभावात् तदपि पारिणामिकं । कर्तृत्वमपि साधारणं क्रियानिष्पत्तौ सर्वेषां स्वातंत्र्यात् । ननु च जीवपुद्गलानां क्रियापरिणामयुक्तानां कर्तृत्वं युक्तं धर्मादीनां कथं ? तेषामपि अस्त्यादिक्रियाविशेषविषयकमस्ति कर्तृत्वं कर्मोदयाद्यपेक्षाभावात्तत्पारिणामिकं । ननु चात्मप्रदेशपरिस्पंदस्य योगसंज्ञकस्य यत्कर्तृत्वं न तत्साधारणमिति असाधारणेषूपसंख्येयं न तस्य क्षयोपशमनिमित्तत्वात् यदस्य पुण्यपापयोः कर्तृत्वं तदन्यद्रव्याणामसाधारणमपि सन्नपारिणामिकं । कस्मात् ? उदयक्षयोपशमनिमित्तत्वात् । मिथ्यादर्शनं हि दर्शनमोहोदयनिमित्तमविरतिप्रमादकषायाश्चारित्रमोहोदयनिमित्ता योगाश्च क्षायोपशमिका इत्यन्यद्रव्यासाधारणानादिपारिणामिकचैतन्यसंनिधाने पुण्यपापयोः कर्तृत्वमिति पारिणामिकमिति चेन्न सर्वकालिककर्तृत्वप्रसंगात् । मुक्तानामपि चैतन्यमस्तीति पुण्यपापयोः कर्तृत्वं स्यात्संसारिणां चाविशिष्टं स्यात् । चैतन्यकारणस्याभेदाद्भोक्तृत्वमपि साधारणं । कुतः ? तल्लक्षणोपपत्तेर्वीर्यप्रकर्षात्परद्रव्यवीर्यादानसामर्थ्यं भोक्तृत्वलक्षणं यथात्माहारादेः परद्रव्यस्यापि वीर्यात्मसात्करणाद्भोक्ता । तथापि विषस्याचेतनस्य वीर्यप्रकर्षात् कोद्रवद्रव्यादिसारसप्रहाद्भोक्तृत्वं । लवणादीनां च वीर्यप्रकर्षात्काष्ठादिद्रव्यलवणकरणाद्भोक्तृत्वं कर्मोदयापेक्षाभावात्तदपि पारिणामिकं यच्चात्मनः शुभाशुभकर्मफलस्योपभोक्तृत्वं न तत्साधारणं न च पारिणामिकं तस्य क्षयोपशमनिमित्तत्वात् । वीर्यांतरायक्षयोपशमांगोपांगनामलाभावष्टंभादात्मनः शुभाशुभकर्मफलोपभोगे सामर्थ्यमाविर्भवति । आहारादिर्वीर्यात्मसात्करणलक्षणोपभोगश्च भोगांतरायक्षयोपशमादुपात्तस्य च जरणं वीर्यांतरायक्षयोपशमात्कर्मांतरेण विषादीनां कथं भोक्तृत्वमिति चेत्प्रतिनियतशक्तित्वाद्द्रव्याणां भास्करप्रतापवत् । पर्यायवत्त्वमपि साधारणं सर्वद्रव्याणां प्रतिनियतपर्यायोपपत्तेः कर्मोदयाद्यपेक्षाभावात्तदपि पारिणामिकं । असर्वगतत्वमपि साधारणं परमाण्वादीनामविभुत्वाद्धर्मादीनां च परिमितासंख्यातप्रदेशत्वात्कर्मोदयाद्यपेक्षाभावात्तदपि पारिणामिकं । यदस्य कर्मोपात्तशरीरप्रमाणानुविधायित्वं तदसाधारणमपि सन्नपारिणामिकं कर्मनिमित्तत्वात् । अनादिसंततिबंधनबद्धत्वमपि साधारणं । कस्मात् ? तस्य सर्वद्रव्याणां स्वात्मीयसंतानबंधनबद्धत्वं प्रत्यनादित्वात् । सर्वाणि द्रव्याणि जीवधर्माधर्माकाशकालपुद्गलाख्यानि प्रतिनियतानि पारिणामिकचैतन्योपयोगगतिस्थित्यवकाशदानवर्तनापरिणामवर्णगंधरसस्पर्शादिपर्यायसंतानबंधनबद्धानि कर्मोदयाद्यपेक्षाभावात्तदपि पारिणामिकं । यदस्यानादिकर्मसंततिबंधनबद्धत्वं तदसाधारणमपि सन्नपारिणामिकं कर्मोदयनिमित्तत्वाद्वक्ष्यते हि अनादिसंबंधे च सर्वस्येति । प्रदेशवत्त्वमपि साधारणं संख्येयाऽसंख्येयानंतप्रदेशोपेतत्वात्सर्वद्रव्याणां तदपि कर्मोदयाद्यपेक्षाभावात्पारिणामिकं । अरूपत्वमपि साधारणं जीवधर्माधर्मकालाकाशानां रूपयोगाभावात् तदपि कर्मोदयाद्यपेक्षाभावात्पारिणामिकं । नित्यत्वमपि साधारणं द्रव्यार्थादेशात्सर्वद्रव्याणां व्ययोदययोगाभावात् तच्च कर्मोदयाद्यपेक्षाभावात्पारिणामिकं । ऊर्ध्वगतित्वमपि साधारणमग्न्यादीनामूर्ध्वगतिपारिणामिकत्वात् तच्च कर्मोदयाद्यपेक्षाभावात्पारिणामिकमेव । अन्ये चात्मनः साधारणाः पारिणामिका योज्याः ।

**अनंतरसूत्रनिर्दिष्टोपसंग्रहार्थश्चशब्द इति चेन्नाऽनिष्टत्वात्** ॥ १४ ॥ स्यान्मतमनंतरसूत्रे निर्दिष्टानां गत्यादीनामुपसंग्रहार्थश्चशब्दो नास्तित्वादिसमुच्चयार्थ इति, तन्न—किं कारणं अनिष्टत्वात् । नहि गत्यादीनां पारिणामिकत्वमिष्यते तल्लक्षणाभावात् ।

**त्रिभेदपारिणामिकभावप्रतिज्ञानाच्च** ॥ १५ ॥ यतश्चौपशमिकादिभावसंख्याविधायिनि सूत्रे त्रिभेदः पारिणामिक इति प्रतिज्ञातमतो न गत्यादिसमुच्चयार्थश्चशब्दः ।

**गत्यादीनामुभयवत्त्वं क्षायोपशमिकभाववदिति चेन्नाऽन्वर्थसंज्ञाकरणात्** ॥ १६ ॥ अथ मतमेतत् यथा क्षायोपशमिकभावस्य क्षयोपशमात्मकत्वादुभयवत्त्वं तथा गत्यादीनामुभयवत्त्वादौदयिकपारिणामिकश्च त्रिभेद इति सिद्धमिति । तन्न, किं कारणं ? अन्वर्थसंज्ञाकरणात् । परिणामः स्वभावः प्रयोजनमस्येति पारिणामिक इत्यन्वर्थसंज्ञा । न चासौ स्वभावो गत्यादिषु विद्यते कर्मोदयनिमित्तत्वात् । किं च—

**तथानभिधानात् ॥ १७ ॥** यथोभयवत्त्वाज्ज्ञानादयः क्षायोपशमिका इत्यभिधीयन्ते तथा गत्यादय औदयिकपारिणामिका इत्यभिधीयेरन्। न चाभिधीयन्ते तथानभिधानात् क्षायोपशमिकवद्गत्यादयो नोभयवन्तः। किं च—

**अनिर्मोक्षप्रसंगात् ॥ १८ ॥** गत्यादीनामुभयवत्त्वात्पारिणामिकत्वे सत्यनिर्मोक्षप्रसंगः सातत्यावस्थानात्। तस्मात्स्थितमेतदस्तित्वादिसमुच्चयार्थ एव चशब्द इति।

**आदिग्रहणमत्र न्याय्यमिति चेन्न त्रिविधपारिणामिकभावप्रतिज्ञाहाने ॥ १९ ॥** स्यादेतज्जीवभव्याभव्यत्वानीत्यत्रादिग्रहणं न्याय्यं। अस्तित्वादीनामपीष्टत्वादिति। तन्न, किं कारणं? त्रिविधपारिणामिकभावप्रतिज्ञाहाने। आदिग्रहणे हि क्रियमाणे जीवभव्याभव्यत्वास्तित्वादीनां पारिणामिकभावत्वात्त्रिविध इति यत्पुरस्तात्प्रतिज्ञातं तस्य हानिः स्यात्।

**समुच्चयार्थेपि चशब्दे तुल्यमिति चेन्न प्रधानापेक्षत्वात् ॥ २० ॥** स्यान्मतं समुच्चयार्थेपि चशब्देऽस्तित्वादीनां पारिणामिकत्वेन समुच्चयात्त्रिभेदप्रतिज्ञाहानिस्तुल्येति। तन्न, किं कारणं? प्रधानापेक्षत्वात्। कण्ठोक्तानि त्रीणि प्रधानानि तदपेक्षा त्रिभेदप्रतिज्ञेति नास्ति विरोधः। अस्तित्वादीनि तु साधारणत्वाच्चशब्देन द्योतितानीति तेषां गुणभावः। आदिशब्दे हि क्रियमाणेऽस्तित्वादीनां प्राधान्यं स्यात् जीवत्वादीनामुपलक्षणार्थत्वादप्राधान्यं। तद्गुणसंविज्ञाने चोभयेषां प्राधान्यं प्रसज्येत।

**सान्निपातिकभावोपसंख्यानमिति चेन्नाऽभावात् ॥ २१ ॥** स्यादेतदार्षे सान्निपातिकभाव उक्तः स इहोपसंख्यातव्य इति। तन्न, किं कारणं? अभावात्नहि षष्ठो भावोस्ति।

**मिश्रशब्देनाक्षिप्तत्वाच्च ॥ २२ ॥** यद्यप्यसौ विद्यते मिश्रशब्देनासावाक्षिप्तः। ननु च मिश्रशब्दः क्षायोपशमिकसंग्रहार्थो न सान्निपातिकग्रहणार्थ इत्युच्यते—

**चशब्दवचनात् ॥ २३ ॥** औपशमिकक्षायिको भावो मिश्रो जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ चेति सिद्धे यन्मिश्रशब्दसमीपे चशब्दकरणं तेन ज्ञायते मिश्रशब्देनोभयमुच्यते इति। मिश्रश्च क्षायोपशमिको भावः सान्निपातिकश्चेति इदमयुक्तं वर्तते। किमत्रायुक्तं? यद्यस्ति सान्निपातिकोभावोऽभावादिति निरुच्यते। अथ नास्ति, कथमार्षे सान्निपातिको भावो नास्तीत्यभावादित्युच्यते संयोगभंगापेक्षयास्तीत्यार्षे वचनं। तत्राभावपक्षे आदिसूत्रे पूर्वोक्तानुकर्षणार्थश्चशब्द उक्तो भावपक्षे सान्निपातिकप्रतिपादनार्थश्चशब्दः पूर्वोक्तानुकर्षणपेक्षया वेदितव्यः। अथार्षोक्तः सान्निपातिकभावः कतिविध इत्यत्रोच्यते—

**षड्विंशतिविधः षट्त्रिंशद्विधः एकचत्वारिंशद्विध इत्येवमादिरागमे उक्तः ॥ २४ ॥** तत्र-दुग तिग चदु पंचे वय सजोगा होंति सण्णिवादेसु। दस दस पंचय एक्कय भावा छव्वीस पिंडेण। द्विभावसंयोगेन दशौदयिकः परिगृह्यौपशमिकादिचतुष्टयस्य चैकैकत्यागेन प्रथमे द्विभेदसंयोगे चत्वारो भंगाः। तत्रैक औदयिकौपशमिकसान्निपातिकजीवभावो नाम मनुष्य उपशांतक्रोधः। द्वितीयः औदयिकक्षायिकसान्निपातिकः जीवभावो नाम मनुष्यः क्षीणकषायः। तृतीयः औदयिकक्षायोपशमिकसान्निपातिकः जीवभावो नाम मनुष्यः पंचेंद्रियः। चतुर्थ औदयिकपारिणामिकसान्निपातिकजीवभावो नाम मनुष्यो जीवः द्वितीयद्विभावसंयोगे औदयिकं परित्यज्यौपशमिकपरिग्रहात् क्षायिकादिभावत्रयस्यैकैकत्यागेन त्रयो भंगाः। तत्रैक औपशमिकक्षायिकसान्निपातिकजीवभावो नामोपशांतलोभः क्षीणदर्शनमोहत्वात् क्षायिकसम्यग्दृष्टिः। द्वितीयः औपशमिकक्षायोपशमिकसान्निपातिकजीवभावो नामोपशांतमानः आभिनिबोधिकज्ञानी। तृतीयः औपशमिकपारिणामिकसान्निपातिकजीवभावो नाम उपशांतमायो भव्यः। तृतीयद्विभावसंयोगे औपशमिकं परित्यज्य क्षायिकपरिग्रहात्क्षायोपशमिकपारिणामिकयोरेकैकत्यागाद्द्वौ भंगौ। तत्रैकः क्षायिकक्षायोपशमिकसान्निपातिकजीवभावो नाम क्षायिकसम्यग्दृष्टिः श्रुतज्ञानी। द्वितीयः क्षायिकपारिणामिकसान्निपातिकजीवभावो नाम क्षीणकषायो भव्यः। चतुर्थद्विभावसंयोगे क्षायिकपरित्यागादेकः क्षायोपशमिकसान्निपातिक

जीवभावो नामाऽवधिज्ञानी जीवः । त एते द्विभावसयोगभगा समुदिता. दश । प्रथमत्रिभावसयोगे औद-यिकौपशमिकौ परिगृह्य क्षायिकादिभावत्रयस्यैकैकभावपरिग्रहात्त्रयो भगा । तत्रैक औदयिकौपशमिकक्षा-यिकसान्निपातिकजीवभावो नाम मनुष्य उपशातमोह क्षायिकसम्यग्दृष्टि । द्वितीय औदयिकौपश-मिकक्षायोपशमिकसान्निपातिकजीवभावो नाम मनुष्य उपशातक्रोधो वाग्योगी । तृतीय औदयिकौपशमि-कपारिणामिकसान्निपातिकजीवभावो नाम मनुष्य उपशातमानो जीव । द्वितीयत्रिभावसयोगे औपशमिक परित्यज्यौदयिकक्षायिकौ परिगृह्य क्षायोपशमिकपारिणामिकयोरेकैकस्य परिग्रहाद् द्वौ भगौ । तत्रैक औदयि-कक्षायिकक्षायोपशमिकसान्निपातिकजीवभावो नाम मनुष्य. क्षीणकषाय श्रुतज्ञानी । द्वितीय औदयि कक्षायिकपारिणामिकसान्निपातिकजीवभावो नाम मनुष्य क्षीणदर्शनमोहो जीव । तृतीयत्रिभावस-योगे औदयिकपरिग्रहादौपशमिकक्षायिकत्यागादेक औदयिकक्षायोपशमिकपारिणामिकसान्निपातिकजीव-भावो नाम मनुष्यमनोयोगी जीव । चतुर्थत्रिभावसयोगे औदयिक परित्यज्यौपशमिकादिभावचतुष्टय-स्यैकैकत्यागे चत्वारो भगा । तत्रैक औपशमिकक्षायिकक्षायोपशमिकसान्निपातिकजीवभावो नामोपशा-तमान क्षीणदर्शनमोह. काययोगी । द्वितीय औपशमिकक्षायिकपारिणामिकसान्निपातिकजीवभावो नामोपशातवेद क्षायिकसम्यग्दृष्टिर्भव्य । तृतीय औपशमिकक्षायोपशमिकपारिणामिकसान्निपातिक-जीवभावो नामोपशातमानो मतिज्ञानी जीव । चतुर्थ. क्षायिकक्षायोपशमिकपारिणामिकसान्निपातिक-जीवभावो नाम क्षीणमोह पचेंद्रिय भव्य. । त एते त्रिभावसयोगभगा समुदिता दश । चतुर्भावसं-योगेन पचभगा औदयिकादीनामेकैकत्यागात् । तत्रैक औपशमिकक्षायिकक्षायोपशमिकपारिणामिक सान्निपातिकजीवभावो नामोपशातलोभ क्षीणदर्शनमोह पचेंद्रियो जीव । द्वितीय औदयिकक्षायिक क्षायोपशमिकपारिणामिकसान्निपातिकजीवभावो नाम मनुष्य क्षीणकषायो मतिज्ञानी भव्य । तृतीय औदयिकौपशमिकक्षायोपशमिकपारिणामिकसान्निपातिकजीवभावो नाम मनुष्य उपशातवेद श्रुतज्ञानी जीव । चतुर्थ औदयिकौपशमिकक्षायिकपारिणामिकसान्निपातिकजीवभावो नाम मनुष्य उपशातराग क्षीणदर्शनमोहो जीव । पचम औदयिकौपशमिकक्षायोपशमिकसान्निपातिकजीवभावो नाम मनुष्य उपशातमोह क्षायिकसम्यग्दृष्टिरवधिज्ञानी । पचभावसयोगेनैक औदयिकौपशमिकक्षायिकक्षायोपशमिक पारिणामिकसान्निपातिकजीवभावो नाम मनुष्य उपशातमोह क्षायिकसम्यग्दृष्टि पचेंद्रियो जीव । एव षड्विंशतिविध सान्निपातिकभाव ।

षड्त्रिंशद्विध उच्यते—द्वयोरौदयिकयो सन्निपातादौदयिकस्यौपशमिकादिभि चतुर्भिरेकश. सान्नि-पातात्पच भगा । तत्र प्रथम औदयिकौदयिकसान्निपातिकजीवभावो नाम मनुष्य क्रोधी शात । द्वितीय औदयिकौपशमिकसान्निपातिकजीवभावो नाम मनुष्य उपशातक्रोध । तृतीय औदयिकक्षायिकसान्नि-पातिकजीवभावो नाम मनुष्य क्षीणकषाय । चतुर्थ औदयिकक्षायोपशमिकसान्निपातिकजीवभावो नाम क्रोधी मतिज्ञानी । पचम औदयिकपारिणामिकसान्निपातिकजीवभावो नाम मनुष्यो भव्य । द्वयो-रौपशमिकयो सन्निपातादौपशमिकस्यौदयिकादिभिरेकश सान्निपातात्पच भगा । तत्रैक औपशमिकौ-पशमिकसान्निपातिकजीवभावो नामोपशमसम्यग्दृष्टिरुपशातकषाय । द्वितीय औपशमिक औदयिकसान्निपा तिकजीवभावो नामोपशातकषायो मनुष्य. । तृतीयऔपशमिकक्षायिकसान्निपातिकजीवभावो नामोपशा-तक्रोध क्षायिकसम्यग्दृष्टि । चतुर्थ औपशमिकक्षायोपशमिकसान्निपातिकजीवभावो नामोपशातकषाय अवधिज्ञानी । पचम औपशमिकपारिणामिकसान्निपातिकजीवभावो नामोपशातदर्शनमोहो जीव । द्वयो क्षायिकयो सान्निपातात् क्षायिकस्य चौदयिकादिभि चतुर्भिरेकश सन्निपातात्पच भगा । तत्रैक क्षायिकक्षा-यिकसान्निपातिकजीवभावो नाम क्षायिकसम्यग्दृष्टि क्षीणकषाय । द्वितीय क्षायिकौदयिकसान्निपातिकजी-वभावो नाम क्षीणकषायो मनुष्य । तृतीय क्षायिकौपशमिकसान्निपातिकजीवभावो नाम क्षायिकसम्यग्दृष्टि-रुपशातवेद । चतुर्थ क्षायिकक्षायोपशमिकसान्निपातिकजीवभावो नाम क्षीणकषायो मतिज्ञानी पचम क्षायि-कपारिणामिकसान्निपातिकजीवभावो नाम क्षीणमोहो भव्य । द्वयो क्षायोपशमिकयो सन्निपातात्क्षायोपशमि-

कस्य चौदयिकादिभिश्चतुर्भिरेकश सन्निपातात् पचभगा । तत्रैक क्षायोपशमिकक्षायोपशमिकसान्निपातिकजीवभावो नाम सयतोऽवधिज्ञानी । द्वितीय क्षायोपशमिकौदयिकसान्निपातिकजीवभावो नाम सयतो मनुष्य । तृतीय क्षायोपशमिकोपशमिकसान्निपातिकजीवो नाम सयत उपशातकषाय । चतुर्थ क्षायोपशमिकक्षायिकसन्निपातिकजीवभावो नाम सयतासयत क्षायिकसम्यग्दृष्टि । पचम क्षायोपशमिकपारिणामिकसान्निपातिकजीवभावो नाम अप्रमत्तसयतो जीव । द्वयो पारिणामिकयो सन्निपातात् पारिणमिकत्वात् पारिणमिकस्य चौदयिकादिभि चतुर्भिरेकश सान्निपातात्पच भगा । तत्रैक परिणामिकपारिणामिकसान्निपातिकजीवभावो नाम जीवो भव्य । द्वितीय पारिणामिकोदयिकसान्निपातिकजीवभावो नाम जीव, क्रोधी । तृतीय पारिणामिकोपशमिकसान्निपातिकजीवभावो नाम भव्य उपशातकषाय । चतुर्थ पारिणामिकक्षायिकसान्निपातिकजीवभावो नाम भव्य क्षीणकषाय । पचम पारिणामिकक्षायोपशमिकसान्निपातिकजीवभावो नाम सयतो भव्य । ततस्त एते द्विभावसयोगा पचविंशतिस्त्रिभावसयोगभगा दश पूर्वोक्ता पचभावसयोगेन चैक । एते सपिंडिता षड्त्रिंशत्पूर्वोत्पन्नचतुर्भावसयोगात्पच पच भगसक्षेपादेत एव षड्त्रिंशदेकचत्वारिंशद्भगा भवति । एवमादयोऽन्ये च विकल्पा नेतव्या आगमाविरोधेन ॥

**औपशमिकाद्यात्मतत्त्वानुपपत्तिरतद्भावादिति चेन्न तत्परिणामात् ॥ २५ ॥** स्यान्मत य एत औपशमिकादयो भावा एतेषामात्मतत्त्वव्यपदेशो नोपपद्यते कुतोऽतद्भावात् । सर्वे हि ते पौद्गलिका कर्मबधोदयनिर्जरापेक्षत्वादिति ? तन्न, किं कारण ? तत्परिणामात् । पुद्गलद्रव्यशक्तिविशेषवशीकृत आत्मा तद्व्यजन सस्तन्निमित्त य य परिणाममास्कदति यदा तदा त मयत्वात्तल्लक्षण एव भवति । उक्त च—परिणमदि जेण दव्व तक्काल तम्मयत्ति पण्णत्त तह्मा धम्मपरिणदो आदा धम्मो मुणेयव्वो इति ॥ स परिणामोऽन्यद्रव्यासाधारणत्त्वादात्मतत्त्वमित्याख्यायते ॥

**अमूर्तत्वादभिभवानुपपत्तिरिति चेन्न तद्विशेषसामर्थ्योपलब्धेश्चैतन्यवत् ॥ २६ ॥** अथ मतमेतत्मूर्तिरात्मा कर्मपुद्गलैर्नाभिभूयते ततस्तत्परिणामाभाव इति ? तन्न, किं कारण ? तद्विशेषसामर्थ्योपलब्धे । नोस्यानादिकर्मबधसतानोस्तीति तद्वास्तद्वतो विशेषसामर्थ्य । कथ ? चैतन्यवत् । यथाऽनादिपारिणामिकचैतन्यवशीकृत आत्मा तद्वान् तस्य तद्वतश्चैतन्यवत नारकादिमत्यादिपर्यायविशेषवृत्तिरपि चेतना । तथाऽनादिकार्मणशरीरासक्तत्वात्कर्मवत आत्मनो मूर्तिमत्वाद्गत्यादिपर्यायविशेषसामर्थ्योपलब्धिरपि मूर्तिमतित्येव सति नामूर्तिरात्मा । किं च—

**अनेकातात् ॥ २८ ॥** अनादिकर्मबधसतानपरतत्रस्यात्मन अमूर्ति प्रत्यनेकातो बधपर्याय प्रत्येकत्वात्स्यान्मूर्त्ति । तथापि ज्ञानादिस्वलक्षणापरित्यागात्स्यादमूर्त्तिरित्यादि पूर्ववत् । यस्यैकातेनाऽमूर्त्तिश्चेवात्मा भवेत्तस्याय दोषो नार्हतस्य । किं च—

**सुराभिभवदर्शनात् ॥ २८ ॥** मदमोहविभ्रमकरीं सुरा पीत्वा नष्टस्मृतिर्जन काष्ठवदपरिस्पद उपलभ्यते । तथा कर्मेंद्रियाभिभवादात्मा नाविर्भूतस्वलक्षणो मूर्त इति निश्चीयते ।

**करणमोहकर मद्यमिति चेन्न तद्द्विविधकल्पनाया दोषोपपत्तेः ॥ २९ ॥** स्यादाकूत चक्षुरादीना करणाना व्यामोहकारण मद्य पृथिव्यादिभूतप्रसादात्मकत्वादिंद्रियाणा नात्मगुणस्याऽमूर्तित्वादिति । तन्न, किं कारण ? तद्द्विविधकल्पनाया दोषोपपत्ते । इदमिह सप्रधार्य तानि करणानि चेतनानि वा स्युरचेतनानि वा ? यद्यचेतनानि, अचेतनत्वात्तेषा न मदकर मद्य यदि स्यात्पात्रेऽस्य स्वभाजनाना मदकर स्यात् । अथ चेतनानि पृथगनुपलब्धचैतन्यस्वभावाना पृथिव्यादीना चेतनाद्रव्यसबधत्वादेव चैतन्यव्यपदेश इत्यात्मगुणस्यैव मोहकरत्व सिद्ध । अथ मतमेतत्पृथिव्यादीनामेव सयोगविशेषे सति पिष्टकिण्वोदकादिसमाहारे मदशक्तिव्यक्तिवत् सुखदु खाद्यभिव्यक्तिरिति नैतद्युक्त रूपादिवैधर्म्यात् । रूपादयो हि पृथिव्यादिगुणा सतो विभक्तेष्वविभक्तेषु च क्रमेणैव हनिमास्कदति । न च तथा शरीरावयवेषु विभक्तेष्वविभक्तेषु

च सुखादीना क्रमेणैव हानिर्युगपच्चोपलभ्यते तस्मान्न पृथिव्यादिगुणा। किंच यदि पृथिव्यादिगुणा सुखादयो नव शवशरीरावस्थायामप्युपलभ्येरन् रूपादिवत्। सूक्ष्मभूतापगमान्नोपलब्धिरिति चेद् भूयसा स्थूलाना सभयात् तदुपलब्धि स्यात्। किं च— तदपाये तदनुपलब्धेस्तेपामेव ते गुणा इति समुदायधर्मत्वाभावान्नयद्यद्यतायुक्ति। किं च भूतसूक्ष्मास्तित्वसिद्धिवदात्मसिद्धिरपि स्यात्। अथवा तान्यत करणानि वा स्यु वहि करणानि वा ? यदि वहि करणानि तेषामचेतनत्वात् व्यामोहाभाव। अथात करणानि तेषामपि चेतनत्वमचेतनत्व वा। स्यादचेतनत्व पूर्ववन्मोहाभाव· चेतनत्वे विज्ञानरूपत्वाद् व्यामोहो युक्तो न युक्तममूर्तत्वादभिभवाभाव इति। यद्येव कर्मोदयमद्यावेशवशीकृतस्य तस्यास्तित्व दुरुपलक्ष्य ? नैपदोप, तदावेशेपि स्वलक्षणत्वेनोपलब्धिर्भवति। उक्त च—वध पडि एयत्त लक्खणदो होदि तस्स णाणत्त। तह्मा अमुत्तिभावो णेयतो होदि जीवस्स। यद्येव तदेव तावदुच्यता लक्षण यत्सानिधानाद्बधपरिणाम प्रत्यविवेकेपि सति विभागोवगृह्यते जीवस्येत्यत आह—

## उपयोगो लक्षणं ॥ ८ ॥

उपयोग इत्युच्यते। क उपयोगो नाम ?

**वाह्याभ्यंतरहेतुद्वयसंनिधाने यथा संभवमुपलब्धुश्चैतन्यानुविधायी परिणाम उपयोगः ॥ १ ॥** द्विविधो हेतुर्वाह्य आभ्यतरश्च। द्वाववयवौ यस्य स द्वय। ननु च स्वरूपनिर्देशादेव द्वित्वप्रतीतेर्द्वयवचनमनर्थक ? नानर्थक प्रत्येक द्वैविध्यसप्रत्ययार्थं वाह्यो हेतुर्द्वय आभ्यतरश्चेति। तत्र वाह्यो हेतुर्द्विविध आत्मभूतोनात्मभूतश्चेति। तत्रात्मना सवधमापान्नविशिष्टनामकर्मोपात्तपरिच्छिन्नस्थानपरिणामनिर्माणश्चक्षुरादिकरणग्राम आत्मभूत। प्रदीपादिरनात्मभूत। आभ्यतरश्च द्विविध। अनात्मभूत आत्मभूतश्चेति। तत्र मनोवाक्कायवर्गणालक्षणो द्रव्ययोगश्चिताद्यालवनभूतोंतराभिनिविष्टत्वादाभ्यतर इति व्यपदिश्यमान आत्मनोऽन्यत्वादनात्मभूत इत्यभिधीयते। तन्निमित्तो भावयोगो वीर्यांतरायज्ञानदर्शनावरण क्षयक्षयोपशमनिमित्त आत्मन· प्रसादश्चात्मभूत इत्याख्यामर्हति। तस्यैतस्य हेतुविकल्पस्य यथासभवमुपलब्धु सनिधान भवति। तद्यथा—प्रदीपादेस्तावत् केषाचित्सनिधान तेन विना चक्षुरादिविज्ञानाप्रवृत्ते· केषाचित्तु द्वीपिमार्जारादीना तमतरेणाप्युपलब्धेरनियम। चक्षुरादीनामपि पचेंद्रियविकलेंद्रियैकेंद्रियविषयत्वेन सनिधान प्रत्यनियम। अत करणमपि असज्ञिना मनोवर्जित। सज्ञिना नितय। एकेंद्रियाणा विग्रहगतिमुपगताना समुद्घातगताना च सयोगकेवलिनामेक एव काययोग भावयोगश्च तत्कृत तच्च तत्र नियत क्षयोपशमश्चाक्षीणकषायात्। अत ऊर्ध्वं क्षय इत्येव यथा सभव सनिधाने सति चैतन्यमात्मन· स्वभावोऽनादि तमनुविधदातीत्येव शीलश्चैतन्यानुविधायी सुवर्णभावानुविधायी कटकागदकुडलादिविकारवत्। स एव प्रकार आत्मन· परिणाम उपयोगइत्युपदिश्यते। अत्र कश्चिदाह—चैतन्य सुखदु खमोहरूपं तदनुविधायिना परिणामेन सुखदु खक्रोधादिना भवितव्य उत्तरत्र च उपयोगप्रकारा ज्ञानदर्शनविकारा वक्ष्यते तदिद पूर्वापरविरुद्धमालक्ष्यत इति ? नैप दोप चैतन्य नामात्मधर्म· सामान्यभूतो यस्याऽसनिधानादितरेषु द्रव्येषु जीवस्य जीवव्यपदेशो नास्ति यद्भेदाश्चैते ज्ञानदर्शनादयस्तेषा समुदाये वर्तमानश्चैतन्यशब्द· क्वचिदवयवेपि सुखादौ वर्तते इति। समुदायेषु हि प्रवृत्ता· शब्दा अवयवेष्वपि वर्तंते इति। इह पुन समुदाय एव वर्तमान परिगृहीत। उत्तरत्र च तद्भेदा ज्ञानदर्शनविकारा वक्ष्यते इति नास्ति विरोध। अथ किं लक्षण ?

**परस्परव्यतिकरे सति येनान्यत्वं लक्ष्यते तल्लक्षणं ॥ २ ॥** वधपरिणामानुविधानात् परस्परप्रवेशाद्व्यतिकीर्णस्वभावत्वेपि सत्यन्यत्वप्रतिपत्तिकारण लक्षणमिति समाख्यायते। यथा सुवर्णरजतयो सत्यपि वध प्रत्येकत्वे वर्णप्रमाणादिरसाधारणो धर्म ॥

**अलक्षणमुपयोगो गुणगुणिनोरन्यत्वमिति चेन्नोक्तत्वात् ॥ ३ ॥** स्यादेतदौष्ण्य गुणोग्नि

गुणी तथा ऽऽत्मा गुणी ज्ञानादिर्गुण इति। तयोश्च लक्षणभेदादन्यत्वमिति ? तन्न, किं कारण ? उक्तत्वात्। उक्तमेतत्—अतत्स्वभाव्येऽनवधारणप्रसंगोऽग्निवदित्यादि ॥

**लक्ष्यलक्षणभेदादिति चेन्नाऽनवस्थानात् ॥ ३॥** अथमतमेतत् लक्ष्यो गुणी गुणो लक्षण तस्माच्च लक्षणेनार्थान्तरभूतेन भवितव्यमित्यतोऽनयोरन्यत्वमिति ? तन्न,किं कारण ? अनवस्थानात् येन लक्षणेन लक्ष्य लक्ष्यते तत्सलक्षणमलक्षण वा ? यदि तदलक्षण मण्डूकशिखण्डवदभावमापद्येत। असति च तस्मिन् लक्ष्यानवधारण । अथ सलक्षण तदपि ततोन्यत्तदपि ततोन्यदित्यनवस्था स्यात् । किंच—

**आदेशवचनात् ॥ ४ ॥** लक्ष्यलक्षणयोर्व्यतिरेकात्स्यादेकत्व संज्ञादिभेदत्वाच्च स्यान्नानात्वमित्यादेशवचनादेकान्तदोषानुपगमाभाव ॥ कश्चिदाह—

**नोपयोगलक्षणो जीवस्तदात्मकत्वात् ॥ ५ ॥** इह लोके यद्यदात्मक न तत्तेनोपयुज्यते यथा क्षीर क्षीरात्मक न तत्तेनैवात्मनोपयुज्यते । एवमात्मनोपि ज्ञानाद्यात्मकत्वान्न तेनैवोपयोग इति जीवस्योपयोगाभाव । कुतश्च—

**विपर्ययप्रसंगात् ॥ ६ ॥** सति चानन्यत्वे उपयोगमिच्छतोऽनिच्छितश्च कस्यचिद्विपर्यय प्राप्नोति कथमविपर्ययवत् । तद्यथा—जीव एव ज्ञानादनन्यत्वे सति ज्ञानात्मनोपयुज्यत इति मन्यसे न क्षीरादय क्षीराद्यात्मभिरेव क्षीरादय एव क्षीराद्यात्मभि परिणमेयु । ननु जीवो ज्ञानात्मना नोपयुज्यतेऽनिष्ट चैतत् ?

**नातस्तत्सिद्धेः ॥ ७ ॥** नैतद्युक्त कुतोऽतस्तत्सिद्धेर्यत एवानन्यत्वमत एवोपयोग सिद्ध । नह्यन्यतमन्यत्वे उपयोग सिध्यति आकाशस्य रूपाद्युपयोगाभावात् । ननु चोक्त यथा क्षीर क्षीरात्मक न तत्तेनात्मनोपयुज्यत इति नातस्तत्सिद्धेरित्येव । यथा तृणजलादिकारणवशात् क्षीरभावावाप्ति प्रत्यभिमुख क्षीर क्षीरव्यपदेशभाक् तत्स्वरूपाव्यतिरेकात्क्षीरात्मना परिणमति इत्युच्यते । तथात्मापि ज्ञानादिस्वभावशक्तिप्रत्ययवशात् घटपटाद्याकारावग्रहरूपेण परिणमतीत्युपयोग सिद्ध इतरथा ह्यतद्भावे तद्भावाऽभावादुपयोगाभाव स्यात् । किं च—

**उभयथापि त्वद्वचनासिद्धेः ॥ ८ ॥** अनेकान्तवादप्रवणमार्हत्न्यायमविज्ञाय यदुपादिक्षत् भवान् यद्यदात्मक न तस्य तेनैव परिणाम इति नन्वेवमुभयथापि त्वदीयस्य वचसोऽसिद्धिस्तद्यथा तदात्मकानुपयोगवादिन स्ववचस स्वपरपक्षसाधनदूषणात्मकस्य स्वपक्षपरपक्षयो साधकत्वदूषकत्वापरिणामाद्यत्रोपदिष्ट तत्रासाधकस्तेऽय हेतुर्यथा क्षीरस्य दधित्वेन परिणाम इष्यते न क्षीरत्वेनैव तथैव त्वद्वचस स्वपक्षसाधनात्मकस्य तेनैवापरिणामाद् दूषकत्वेन परिणाम एषितव्यो न साधकत्वेन । अस्यैव च परपक्षदूषकात्मकस्य तेनैवापरिणामात् साधकत्वेन परिणाम एषितव्यो न दूषकत्वेनातस्तदात्मकत्वेनुपयोगादिति त्वद्वचनासिद्धि । अथ त्वद्वचन स्वपरपक्षसाधकदूषकात्मकमपि सत् स्वपरपक्षयो साधकदूषकपर्यायाभ्या परिणमति। नन्वेवमपि यदवोचद्भवास्तदात्मकत्वेनुपयोगान्न तस्य तेनैव परिणाम इति तदसत् । किंच—

**स्वसमयविरोधात् ॥ ९ ॥** यदि यद्यदात्मक न तत्तेनैव परिणमतीष्ट व । ननु पृथिव्यप्तेजोवायुमहाभूताना रूपाद्यात्मकत्वाद्रूपाद्यात्मना विपरिणाम स्यादिष्यते च शुक्लादिरूपादिविशेषपरिणाम । अत स्वसमयविरोध । किं च—

**केनचिद्विज्ञानात्मकत्वात् ॥ १० ॥** यस्यैकान्तेन ज्ञानात्मक आत्मा स्यात्तस्य ज्ञानात्मना परिणामाभाव परिणतत्वादार्हतस्य तु केनचिद्विज्ञानात्मकस्तत्पर्यायादेशात् केनचिदन्यात्मक इतरपर्यायादेशादिति कथंचित्तदात्मकत्वात्केनचिदतदात्मकत्वात्परिणामसिद्धि । यदि चैकान्तेन ज्ञानात्मक एव स्यादितरात्मक एव वा तद्भावाविराम स्याद्विरामे चात्मनोपि विराम प्रसक्त । किं च—

**तदात्मकस्य तेनैव परिणामदर्शनात् क्षीरवत् ॥ ११ ॥** यथा क्षीरं द्रवमधुरादिक्षीरस्वभावमजहद्गुडादिद्रव्यसंबंधाद् गुडक्षीरादिपरिणामांतरमास्कंदति गवादेः स्तनांतरनिर्गतमात्रं चोष्णं पुनः शीतं भवति पुनश्चाग्निद्रव्यसंबंधादुष्णं घनं च भवति तदभावे च शीतमिति क्षीरजातिमजहद्गुणक्षीरादिव्यपदेशभागिति क्षीरं क्षीरात्मनैव परिणतं। यदि क्षीरं क्षीरात्मना न परिणमेत्तत्र तत्र क्षीरव्यपदेशाभावः स्यात्। तथोपयोगात्मक आत्मा उपयोगस्वभावमजहज्ज्ञानात्मना परिणाममियर्तीति नास्ति विरोधः।

**अतश्चैतदेवं यदि हि न स्यान्निःपरिणामत्वप्रसंगोऽर्थस्वभावसंकरो वा ॥ १२ ॥** यदि यद्यदात्मकं तस्य तेनापरिणामः स्याज्ज्ञानानां निष्परिणामत्वप्रसंगस्ततश्च सर्वथा नित्यत्वे क्रियाकारकव्यवहारलोपः स्यात्। परिणामवत्त्वे च परात्मना परिणामात्सर्वपदार्थस्वभावसंकरप्रसंगः स्यात्। अथैतदुभयेनेष्यते सिद्धः स्वेनात्मना परिणामः। कश्चिदाह—

**उपयोगलक्षणानुपपत्तिर्लक्ष्याभावात् ॥ १३ ॥** इह लोके सतो लक्ष्यस्य लक्षणं भवति यथा सतो देवदत्तस्य दंडादि न चासतः शशविषाणादेः किंचिल्लक्षणमस्ति। तथा स एवात्मा लक्ष्यो दुरुपपादस्तदभावात्कुत उपयोगस्य लक्षणत्वमिति। तत्कथं? इति चेदुच्यते—

**तदभावश्चाकारणत्वादिभिः ॥ १४ ॥** तस्य लक्ष्यस्यात्मनोऽभावः कुतः अकारणत्वादेः मंडूकशिखंडवत्।

**सत्यपि लक्षणत्वानुपपत्तिरनवस्थानात् ॥ १५ ॥** सत्यात्मनि लक्ष्य उपयोगस्य लक्षणं च नोपपद्यते कुतोऽनवस्थानात्। उपयोगो हि ज्ञानदर्शनस्वभावः स चानवस्थितः क्षणिकत्वात् न चानवस्थितं लक्षणं भवति। तदपाये तदनुपलब्धेर्यथाकतरद्देवदत्तस्य गृहमदो यत्रासौ काक इत्युत्पतिते काके नष्टं तद्गृहं भवति तथा ज्ञानादिलक्षणस्यात्मनस्तदभावेऽभावः प्राप्नोति इत्यत्रोच्यते—

**आत्मनिह्नवो न युक्तः साधनदोषदर्शनात् ॥ १६ ॥** इहात्मनो निह्नवो न युक्तः कुतः साधनदोषदर्शनात्। यत्तावदुक्तं नास्त्यात्मा अकारणत्वान्मंडूकशिखंडवदिति—

**हेतुरयमसिद्धो विरुद्धोऽनैकांतिकश्च ॥ १७ ॥** कारणवानेवात्मा इति निश्चयो न नरकादिभवव्यतिरिक्तद्रव्यार्थाभावात्तस्य च मिथ्यादर्शनादिकारणत्वादसिद्धता। अत एव द्रव्यार्थाभावात्पर्यायस्य च पर्यायांतरानाश्रयत्वादाश्रयाभावादप्यसिद्धताकारणमेव ह्यस्ति सर्वं घटादि तेनायं द्रव्यार्थिकस्य विरुद्ध एव सतोऽकारणत्वात् यदस्ति तन्नियमेनैवाकारणेन हि किंचिदस्ति च कारणवच्च यदि तदस्त्येव किमस्य कारणेन निष्पन्निर्वृत्तत्वात् कारणत्वं चासत एव कार्यार्थत्वात्कारणस्येति विरुद्धार्थता। मंडूकशिखंडकादीनाममत्प्रत्ययहेतुत्वेन परिच्छिन्नसत्त्वानामभ्युपगमात्तेषां च कारणाभावात्। उभयपक्षवृत्तेरनैकांतिकत्वं। दृष्टांतोऽपि साध्यसाधनोभयधर्मविकलः कर्मविशवशान्नानाजातिसंबंधमापन्नवतो जीवतो जीवस्य मंडूकभवावाप्तौ तद्व्यपदेशभाजः। पुनर्युवतिजन्मन्यवाप्ते यः शिखंडकः स एवायमित्येकजीवसंबंधत्वान्मंडूकशिखंड इत्यस्ति पुद्गलद्रव्यस्याप्यनाद्यनंतपरिणामस्य युवतिभुक्ताहारादिकेशभावपरिणामाच्छिखंडनिष्पत्तेः कारणत्वमिति नास्तित्वाकारणत्वधर्माभावात्। एवं वंध्यापुत्रशशविषाणादिष्वपि योज्यं। आकाशकुसुमे कथं? तत्रापि यथा वनस्पतिनामकर्मोदयापादितविशेषस्य वृक्षस्य जीवपुद्गलसमुदायस्य पुष्पमिति व्यपदिश्यते। अन्यदपि पुद्गलद्रव्यं पुष्पभावेन परिणतं तेन व्याप्तत्वादेवमाकाशेनापि व्याप्तत्वं समानमिति तत्तस्यापीति व्यपदेशो युक्तः। अथ तत्कृतोपकारापेक्षया तस्येत्युच्यते आकाशकृतावगाहनोपकारापेक्षया कथं तस्य न स्याद् वृक्षात्प्रच्युतमप्याकाशान्न प्रच्यवते इति नित्यं तत्संबंधिः अर्थांतरभावात्तस्य न स्यादिति मतं वृक्षस्यापि न स्यात्सर्वमैत्रमात्रं नामाद्यपेक्षया संबंधो योजयितव्यः। बहिरंगार्थाकारपरिणतविज्ञानविषयत्वापेक्षया वा दोषो-

द्भावनर्मुक्तिस्य। यदप्युच्यते नास्त्यात्मा ऽप्रत्यक्षत्वाच्छशशृंगवदित्ययमपि न हेतु । असिद्धविरुद्धानैकान्तिकताप्रच्युते । सकलविषयकेवलज्ञानप्रत्यक्षत्वाच्छुद्धात्मा प्रत्यक्ष । कर्मनोकर्मबंधपरतन्त्रपिंडात्मा च अवधिमन पर्ययज्ञानयोरपि प्रत्यक्ष इत्यप्रत्यक्षत्वादित्यसिद्धो हेतु । इन्द्रियप्रत्यक्षत्वाभावादप्रत्यक्ष इति चेन्न तस्य परोक्षत्वाभ्युपगमात्। अप्रत्यक्षा घटादयोऽग्राहकनिमित्तग्राह्यत्वाद् धूमाद्यनुमिताग्निवदग्राहकमिंद्रिय तद्विगमेपि गृहीतस्मरणाद्गवाक्षवत्। किं च प्रत्यक्षादन्यो प्रत्यक्ष इति पर्युदासो वा स्यात्? प्रत्यक्षो न भवतीत्यप्रत्यक्ष इति प्रसज्यप्रतिषेधो वा? यदि पर्युदासोऽन्यत्वस्य द्विष्ठत्वाद्वस्तुत्वसिद्धे नास्तित्वविरोध्यस्तित्वसाधनाद्विरुद्ध । अथ प्रसज्यप्रतिषेध सति प्रतिषेध्ये प्रतिषेधसिद्धे विधिविषयसिद्धिरिति कथंचित्प्रत्यक्षत्वोपपत्ते पुनरप्यसिद्धता। असति च शशशृंगादौ सति च विज्ञानादौ अप्रत्यक्षत्वस्य वृत्तेरनैकान्तिकता। अथ विज्ञानादे स्वसंवेद्यत्वात्, योगिप्रत्यक्षत्वाच्च हेतोरभाव इति चेदात्मनि कोऽपरितोष । दृष्टान्तोपि साध्यसाधनोभयधर्मविकल पूर्वोक्तेन विधिनाऽप्रत्यक्षत्वस्य नास्तित्वस्य चासिद्धे। किं च सर्वस्य वागर्थस्य विधिप्रतिषेधात्मकत्वात्, न हि किंचिद्वस्तु सर्वनिषेधगम्यमस्ति। अस्तित्वे? तदुभयात्मक यथा कुरवका रक्तश्वेतत्युदासेपि नावर्णा भवति नापि रक्ता एव श्वेता एव वा प्रतिषिद्धत्वात्। एव वस्त्वपि परात्मना नास्तीति प्रतिषेधेपि स्वात्मनानास्तीत्यसिद्ध। तथा चोक्त,—

अस्तित्वमुपलब्धिश्च कथंचिदसत स्मृतेर्नास्तितानुपलब्धिश्च कथंचित्सत एव ते ॥ १ ॥

सर्वथैव सतो नेमौ धर्मौ सर्वात्मदोषत सर्वथैवाऽसतो नेमौ वाचा गोचरताऽत्ययादिति ॥ २ ॥

नास्तित्वाप्रत्यक्षत्वाभ्यामपि रहित तदवस्त्विति धर्म्यऽसिद्धिश्च। एवमन्येपि हेतव एकान्तवादिभिरुपर्नीतादीपवत्तयोत्प्रेक्ष्या । तदस्तित्व च साध्यते—

**ग्रहणविज्ञानासंभविफलदर्शनाद्गृहीतृसिद्धिः ॥ १८ ॥** यान्यमूनि ग्रहणानि पूर्वकृतकर्मनिर्वर्तितानि हि[1]रूकृतस्वभावसामर्थ्यजनितभेदानि रूपरसगंधस्पर्शशब्दग्राहकाणि चक्षूरसनघ्राणत्वक्श्रोत्राणि। एतानि च ज्ञानानि तत्सन्निकर्षजनितानि तेष्वसंभविफलमुपलभ्यते। किं पुनस्तदात्मस्वभावस्थानज्ञान विषयसम्प्रतिपत्ति । तदेतद्ग्रहणानां तावन्न संभवत्यचेतनत्वा क्षणिकत्वाच्च। विज्ञानाना च न संभवत्येकार्थग्राहित्वादुत्पत्यनंतरनिरोधाच्च। दृश्यते चेदमकस्माच्च न भवतीति तत्प्रतिपत्तिपटुना ततो व्यतिरिक्तेन केनचिद्भवितव्यमिति गृहीतृसिद्धि । किं च—

**अस्मदात्मास्तित्वप्रत्ययस्य सर्वविकल्पेष्विष्टसिद्धेः ॥ १९ ॥** योयमस्माकमात्मास्तीति प्रत्यय स संशयानध्यवसायविपर्ययसम्यक्प्रत्ययेषु य कश्चित्स्यात् सर्वेषु विकल्पेष्विष्ट सिध्यति। न तावत्संशय निर्णयात्मकत्वात् सत्यपि संशये तदालंबनात्मसिद्धे । न हि अवस्तुविषय संशयो भवति । नाप्यनध्यवसायो जात्यंधबधिररूपशब्दवत् अनादिसप्रतिपत्ते । स्याद्विपर्यय एवमप्यात्मास्तित्वसिद्धि । पुरुषे स्थाणुप्रतिपत्तौ स्थाणुसिद्धिवत् स्यात्सम्यक्प्रत्यय । अविवादमेतदात्मास्तित्वमिति सिद्धो न पक्ष ।

**संतानादिति चेन्न तस्य संवृतिसत्त्वाद् द्रव्यसत्त्वे वा संज्ञाभेदमात्रं ॥ २० ॥** स्या मतं संतानो नाम कश्चिदर्थोस्ति एकोनेकक्षणवृत्ति तदाश्रय ग्रहणविज्ञानात्मस्वभावस्थानादिसंप्रतिपादनमिति। तन्न किं कारण? तस्य संवृत्तिसत्त्वात्। स हि संतान संवृति सन् तस्मिन्नसति कल्पितात्मनि कथ स्याद्विशेषप्रत्यय । अथ द्रव्यमतमस्यावसीयते? संज्ञाभेदमात्रमात्मसंतान इति नार्थविप्रतिपत्ति । यदुक्त सत्यपि लक्षणत्वानुपपत्तिरनवस्थानादिति? कथंचिदवस्थानादुपयोगस्य लक्षणत्वोपपत्ति । न हि सर्वथा विनाशोऽवस्थान वोपयोगस्याभ्युपगम्यते, किं तर्हि कथंचिद्विनाश कथंचिदवस्थान च। पर्ययार्थादेशात्सतोर्थस्यानुपलब्धेर्विनाशो द्रव्यार्थादेशादवस्थानमिति असकृत्परीक्षित। तस्मादुपयोगस्य लक्षणत्वमुपपद्यते।

**तदुपरमाभावाच्च ॥ २१ ॥** कस्य चिदुपयोगस्योत्पाद कस्यचिद्विनाश इत्युपयोगपरंपरा नोपरमतीति तस्य लक्षणत्वमवसेय।

---

१ प्रथक।

**सर्वथाविनाशे पुनरनुस्मरणाभावः ॥ २२ ॥** यदि सर्वथोपयोगस्य विनाशः स्यादनुस्मरणं न स्यात्। अनुस्मरणं हीदं स्वयमनुभूतस्यार्थस्य भवति नाननुभूतस्य नान्येनानुभूतस्य तदभावात्तन्मूलः सर्वलोकसंव्यवहारो विनाशमुपगच्छेत्।

**उपयोगसंबंधो लक्षणमिति चेन्नाऽन्यत्वे संबंधाभावात् ॥ २३ ॥** स्यान्मतमुपयोगो लक्षणमात्मनो नोपपद्यते कुतोऽन्यत्वात्। किं तर्हि? तत्संबंधो लक्षणं। यथा देवदत्तस्य न दंडो लक्षणं किं तर्हि संबंधः, यदि हि दंडो लक्षणमसक्तोपि लक्षणं स्यादेव च कल्वोक्तं क्रियावद्गुणवत्समवायिकारणं द्रव्यलक्षणमिति? तन्न किं कारणमन्यत्वे संबंधाभावाद् द्रव्याद् गुणोऽर्थांतरभूतो यदि स्यात्तस्य संबंधाभाव इत्युक्तं पुरस्तात्। तस्मादात्मभूत उपयोगो लक्षणमिति न कश्चिद्दोषः। य उक्त उपयोगस्तद्भेददर्शनार्थमाह-

## स द्विविधोऽष्टचतुर्भेदः ॥ ९ ॥

कथं द्विविधः?

**साकारानाकारभेदाद् द्विविधः॥१॥** साकार उपयोगोऽनाकार उपयोगश्चेति द्विविधः। साकारं ज्ञानमनाकारं दर्शनं।

**अभ्यर्हितत्वाज्ज्ञानग्रहणमादौ ॥ २ ॥** ज्ञानं ह्यभ्यर्हितमर्थानां विभावकत्वाद्दर्शनमालोचनामात्रमतस्तस्मात्पूर्वकालभाविनोपि दर्शनाज्ज्ञानं प्राग्गृह्यते। कथं पुनर्ज्ञायते ज्ञानग्रहणमादौ क्रियत इति?—

**संख्याविशेषनिर्देशात्तन्निश्चयः ॥ ३ ॥** यतः संख्याविशेषनिर्देशः क्रियतेऽष्टभेदश्चतुर्भेद इति ततस्तस्य निश्चयो वेदितव्यः। ननु च चतुःशब्दस्य पूर्वनिपातेन भवितव्यं "संख्याया अल्पीयस्याः"-इति वचनात् यथा चतुर्दशेति? नेपदोषः उक्तमेतदभ्यर्हितत्वात्पूर्वनिपात इति। तत्र ज्ञानोपयोगोऽष्टविधो मतिज्ञानं श्रुतज्ञानमवधिज्ञानं मनःपर्ययज्ञानं केवलज्ञानं मत्यज्ञानं श्रुताऽज्ञानं विभंगज्ञानं चेति। दर्शनोपयोगश्चतुर्विधः चक्षुर्दर्शनमचक्षुर्दर्शनमवधिदर्शनं केवलदर्शनं चेति। एषां च लक्षणादीनि व्याख्यातानि। अवग्रहाज्ज्ञानान्यद्दर्शनमिति चेद्व्याख्यातमन्यत्वं। छद्मस्थेषु तयोः क्रमेण वृत्तिर्निरावरणेषु युगपत्। यथोक्तेनानेनाहितपरिणामेन सर्वात्मसाधारणेनोपलक्षिताः उपयोगिनः, ते द्विविधाः-

## संसारिणो मुक्ताश्च ॥ १० ॥

**आत्मोपचितकर्मवशादात्मनो भवांतरावाप्तिः संसारः ॥ १ ॥** आत्मोपचितं कर्माष्टविधं प्रकृतिस्थित्यनुभागप्रदेशभेदाभिन्नं तद्वशादात्मनो भवांतरावाप्तिः संसार इत्युच्यते। द्विरात्मग्रहणं किमर्थं? आत्मैव कर्मणः कर्ता तत्फलस्य चाऽऽत्मैव भोक्तेत्येतस्य प्रदर्शनार्थं। अन्ये तु त्रैगुण्यं कर्तृ, परमात्मा भोक्तेति मन्यंते तदयुक्तमचेतनस्य पुण्यपापविषयकर्तृतानुपपत्तेर्घटादिवत्। परकृतफलभोगे चा निर्मोक्षप्रसंगः स्यात् कृतप्रणाशश्चेति तस्माच्च कर्ता स एव भोक्तेति युक्तं। संसारः पंचविधो द्रव्यतः क्षेत्रतः कालतो भावतो भवतश्चेति।

**स येषामस्ति ते संसारिणः ॥२॥ निरस्तद्रव्यभावबंधा मुक्ताः ॥३॥** बंधो द्विविधो द्रव्यबंधो भावबंधश्चेति। तत्र द्रव्यबंधः कर्मनोकर्मपरिणतः पुद्गलद्रव्यविषयः। तत्कृतः क्रोधादिपरिणामवशीकृतो भावबंधः स उभयोपि निरस्तो यैः ते मुक्ताः।

**द्वंद्वनिर्देशो लघुत्वादिति चेन्नाऽर्थांतरप्रतीतेः ॥४॥** स्यान्मतं द्वंद्वनिर्देशोत्र युक्तः, कुतो लघुत्वात् द्वंद्वे हि सति उक्तार्थत्वाच्चशब्दाप्रयोगे लाघवं भवति इति। तन्न किं कारणमर्थांतरप्रतीतेः संसारिणश्च मुक्ताश्चेति। द्वंद्वे सति अल्पाक्षरत्वादभ्यर्हितत्वाच्च मुक्तशब्दस्य पूर्वनिपाते सति मुक्तसंसारिण इति प्राप्नोति। तथा च सत्यर्थांतरं प्रतीयेत मुक्तः संसारो येन भावेन मुक्तसंसारस्तद्वंतः मुक्तसंसारिणः इति तथा सति मुक्तानामेवोपयोगवत्त्वमुक्तं स्यान्न संसारिणामतो वाक्यमेव क्रियते।

**समुच्चयाभिव्यक्त्यर्थं च शब्दोनर्थक इति चेन्नोपयोगस्य गुणभावप्रदर्शनार्थत्वात् ॥५॥** स्यात मत च शब्दोनर्थक कुत ? अर्थभेदात्समुच्चयसिद्धे । भिन्ना हि ससारिणो मुक्ताश्च तता विशेषणविशेष्यत्वानुपपत्ते समुच्चय सिद्ध यथा पृथिव्यप्तेजोवायुरिति । तन्न किं कारणमुपयोगस्य गुणभावप्रदर्शनार्थत्वात् । नाय च शब्द समुच्चये किं तर्हन्वाचये । तत्र एक प्रधानभूत इतरे गुणभूता । यथा भक्ष चर देवदत्त चानयेति प्रधानशिष्ट भैक्ष्यचरण, देवदत्तानयनमप्रधानशिष्ट । तथा समरिण प्राधान्येनोपयोगिनो मुक्ता गुणभावेनेत्येतस्य प्रदर्शनार्थ । कथ ससारिषु मुख्य उपयोग कथ वा मुक्तेषु गोण ?—

**परिणामांतरसक्रमाभावाद् ध्यानवत् ॥ ६ ॥** यथैकाग्रचिंतानिरोधो ध्यानमिति छद्मस्थे ध्यानशब्दार्थो मुख्यश्चितानिक्षेपवत तन्निरोधोपपत्ते । तदभावात्केवलिन्युपचरित फलदर्शनात् । तथोपयोगशब्दार्थोपि ससारिषु मुख्य परिणामातरसक्रमात् । मुक्तेषु तदभावाद्गोण कल्प्यते उपलब्धिसामान्यात् ।

**ससारिग्रहणमादौ बहुविकल्पत्वात्तत्पूर्वकत्वाच्च स्वसवेद्यत्वाच्च ॥७॥** ससारिग्रहणमादो क्रियते बहुविकल्पत्वात् । बहवो हि ससारिणा विकल्पा गत्यादय । किं च तत्पूर्वकत्वात् । ससारिपूर्वका हि मुक्ता , पूर्वा ससारिण इति । स्वसवेद्यत्वा च स्वसवेद्या हि ससारिणो गत्यादिपरिणामानामनुभूतत्वात् । मुक्ता पुनरत्यतपरोक्षास्तदनुभवस्याप्राप्तत्वात् । तत्र यदेते शुभाशुभकर्मफलानुभवनसबधवशीकृतस्वभावा अप्रस्तुतसतरणा पूर्वकृतनामकर्मनिमित्तजनितविशेषा प्राणिनस्ते खलु—

## समनस्काऽमनस्काः ॥ ११ ॥

मन सनिधानासनिधानापेक्षया द्विविधा ससारिण । मनो द्विविध द्रव्यमनो भावमनश्चेति । तत्र पुद्गलविपाकिकर्मोदयापेक्ष द्रव्यमनो वीर्यांतरायनोइंद्रियावरणक्षयोपशमापेक्षा आत्मनो विशुद्धिर्भावमन । तेन मनसा सह वर्तंत इति समनस्का । न विद्यते मनो येषा तेऽमनस्का इति द्विविधा ससारिणो भवति । अत्राह—

**द्विविधजीवप्रकरणाद्यथासंख्यप्रसंगः ॥ १ ॥** द्विविधा हि जीवा प्रकृता ससारिणो मुक्ताश्च । तत्र ससारिण समनस्का मुक्ताश्चाऽमनस्का इति यथासख्य प्राप्नोति ।

**इष्टमिति चेन्न सर्वसंसारिणा समनस्कत्वप्रसगात् ॥ २ ॥** स्यादेतदिष्टमेवेद ससारिण समनस्का मुक्ताश्चामनस्का इति ? तन्न किं कारण ? सर्वससारिणा समनस्कत्वप्रसगात् । एकद्वित्रिचतुरिंद्रियाणा पचेंद्रियेषु च केषाचि मनोविषयविशेषव्यवहाराभावात् अमनस्कत्वेष्टा तव्द्याघातोत स्यादत्रोच्यते—

**पृथग्योगप्रक्रमे संसारिसमत्ययः ॥ ३ ॥** यदिद पृथग्योगकरण तेन ज्ञायते ससारिणोऽत्र सबध्यत इति । इतरथाहि एक एव योग क्रियते ससारिणो मुक्ताश्च 'समनस्कामनस्का' इति ।

**उपरिष्टससारिवचनप्रत्यासत्तेश्च ॥ ४ ॥** उपरिष्टमस्ति ससारिवचन तस्य प्रत्यासत्तेरभिसबधाच्च ससारिसप्रत्ययो भवति ॥

**अत्राह तदभिसबधे यथासख्यप्रसगः ॥ ५ ॥** यदि तदभिसबध क्रियते तत्तत्र त्रसस्थावरग्रहणमस्ति तेन यथासख्य प्राप्नोति समनस्कास्त्रसा अमनस्का स्थावरा इति ।

**इष्टमेवेति चेन्न सर्वत्रसाना समनस्कत्वप्रसगात् ॥ ६ ॥** स्यादेतदिष्टमेवेद त्रसा समनस्का स्थावरा अमनस्का इति ? तन्न किं कारण सर्वत्रसाना समनस्कत्वप्रसगात् । द्वित्रिचतुरिंद्रियाणामसज्ञिपचेंद्रियाणामपि समनस्कत्व प्रसज्येत । अनिष्ट चेतदत्रोच्यते—नानभिसबधात् ससारिग्रहणमात्रमत्राभिसबध्यते न त्रसस्थावरग्रहण । इच्छावशेन हि सबधो भवति एकयोगाकरणात् । यदि त्रसस्थावरग्रहणेनापि सबध इष्ट स्यादेक एव योग क्रियते समनस्कामनस्का ससारिणस्त्रसस्थावरा इति नत्वेव कृत तेन ज्ञायते त्रसस्थावरग्रहण न सबध्यत इति । अथवैकयोगाकरणान्मन्यामहेऽतातस्य ससारिमुक्तग्रहणस्य वक्ष्यमाणस्य च त्रसस्थावरग्रहणस्य "समनस्कामनस्का" ग्रहणेनाभिसबधो न भवतीति ।

**इतरथान्यतरत्र संसारिग्रहणे सतीष्टार्थत्वादुपरिसंसारिग्रहणमनर्थकं ॥ ७ ॥** इतरेण प्रकारेणेतरथा कथं ? यदि संसारिमुक्तग्रहणेन च त्रसस्थावरग्रहणेन चास्याभिसंबंधः स्यादेक एव योगः क्रियेत संसारिमुक्ताः समनस्कामनस्कास्त्रसस्थावराश्चेति । तथा सत्यन्यतरत्र संसारिग्रहणं कर्तव्यं स्यात् क्वान्यतरत्र ? समनस्कामनस्का सूत्रस्यादावेवं नैव सतीष्टार्थस्य सिद्धत्वात्संसारिणः त्रसस्थावरा इत्यत्र संसारिग्रहणमनर्थकं स्यात् ।

**आदौ समनस्कग्रहणमभ्यर्हितत्वात् ॥ ८ ॥** आदौ समनस्कग्रहणं क्रियते कुतोऽभ्यर्हितत्वात् । कथमभ्यर्हितत्वं ? तत्र हि समग्राणि करणानीति । य एते स्वकृतकर्मफलापेक्षपरिपूर्णापरिपूर्णकरणग्रामाहितद्वैविध्यविशिष्टाः कार्मणशरीरप्रणालिकापादितनियतावस्थाविशेषास्ते खलु—

## संसारिणस्त्रसस्थावराः ॥ १२ ॥

अत्राह के त्रसाः के स्थावरा इत्युच्यते—

**त्रसनामकर्मोदयापादितवृत्तयस्त्रसाः ॥ १ ॥** त्रसनामकर्मणो जीवविपाकिन उदयापादितवृत्तिविशेषाः, त्रसा इति व्यपदिश्यते ।

**त्रसेरुद्वेजनक्रियस्य त्रसा इति चेन्न गर्भादिषु तदभावादत्रसत्वप्रसंगात् ॥ २ ॥** स्यान्मतं त्रसेरुद्वेजनक्रियस्य त्रस्यतीति त्रसा इति ? तन्न किं कारणं गर्भादिषु तदभावादत्रसत्वप्रसंगात् । गर्भाण्डजमूर्च्छितसुषुप्तादीनां त्रसानां बाह्यभयनिमित्तोपनिपाते सति चलनाभावादत्रसत्वं स्यात् । कथं तर्ह्यस्य निष्पत्तिस्त्रस्यतीति त्रसा इति ? व्युत्पत्तिमात्रमेव नार्थः प्राधान्येनाश्रियते गोशब्दप्रवृत्तिवत् ।

**स्थावरनामकर्मोदयोपजनितविशेषाः स्थावराः ॥ ३ ॥** स्थावरनामकर्मणो जीवविपाकिन उदयेनोपजनितविशेषाः स्थावरा इत्याख्यायते ।

**स्थानशीलाः स्थावरा इति चेन्न वाय्वादीनामस्थावरत्वप्रसंगात् ॥ ४ ॥** स्यादेतत्तिष्ठतीत्येवं शीलाः स्थावरा इति ? तन्न किं कारणं वाय्वादीनामस्थावरत्वप्रसंगात् वायुतेजोंभसां हि देशांतरप्राप्तिदर्शनादस्थावरत्वं स्यात् । कथं तर्ह्यस्य निष्पत्तिः ? स्थावरा इत्येवं रूढिविशेषबललाभात् क्वचिदेव वर्तते ।

**इष्टमेवेति चेन्न समयार्थानवबोधात् ॥ ५ ॥** अथ मतमेतदिष्टमेव वाय्वादीनामस्थावरत्वमिति ? तन्न किं कारणं समयार्थानवबोधात् । एवं हि समयोवस्थितः सत्प्ररूपणायां कायानुवादे त्रसानां द्वींद्रियादारभ्य आ अयोगिकेवलिन इति । तस्मान्न चलनाचलनापेक्षं त्रसस्थावरत्वं कर्मोदयापेक्षमेवेति स्थितं ।

**त्रसग्रहणमादावल्पाच्तरत्वादभ्यर्हितत्वाच्च ॥ ६ ॥** त्रसग्रहणमादौ क्रियते कुतः ? अल्पाच्तरत्वादभ्यर्हितत्वाच्च सर्वोपयोगसंभवादभ्यर्हितत्वं । सामान्यविशेषसंज्ञाहितभेदमात्रविज्ञाने सति विशेषेणाऽनिर्ज्ञातानां त्रसस्थावराणां निर्ज्ञाने कर्तव्ये एकेंद्रियाणामतिबहुवक्तव्याभावाद्विभज्यानुपूर्व्यास्थावरभेदप्रतिपत्त्यर्थमाह—

## पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः ॥ १३ ॥

**नामकर्मोदयनिमित्ताः पृथिव्यादयः संज्ञाः ॥ १ ॥** स्थावरनामकर्मभेदाः पृथिवीकायादयः संति तदुदयनिमित्ता जीवेषु पृथिव्यादयः संज्ञा वेदितव्याः । प्रथनादिप्रकृतिनिष्पन्ना अपि रूढिवशात्प्रथनाद्यनपेक्षा वर्तंते । एषां पृथिव्यादीनामार्षे चातुर्विध्यमुक्तं । प्रत्येकं तत्कथमितिचेदुच्यते—पृथिवी पृथिवीकायः पृथिवीकायिकः पृथिवीजीवइत्यादि । तत्राऽचेतना वैस्रसिकपरिणामनिर्वृत्ता काठिन्यादिगुणात्मिका पृथिवी । अचेतनत्वादसत्यपि पृथिवीकायिकनामकर्मोदये प्रथनक्रियोपलक्षितैवेयं । अथवा पृथिवीसामान्यं, उत्तरत्रयेऽपि संभवात् । कायः शरीरं पृथिवीकायिकजीवपरित्यक्तः पृथिवीकायः, मृतमनुष्यादिकायवत् । पृथिवी कायो-

ऽस्यास्तीति पृथिवीकायिकः तत्कायसंबंधवशीकृत आत्मा समवाप्तपृथिवीकायिकनामोदयः कार्माणकाययोगस्थः, यो न तावत्पृथिवीं कायत्वेन गृह्णाति स पृथिवीजीवः । एवमापः, अप्कायः, अप्कायिकः, अप्जीवः । तेजः, तेजस्कायः, तेजस्कायिकः, तेजोजीवः । वायुर्वायुकायो वायुकायिको वायुजीवः । वनस्पतिर्वनस्पतिकायो वनस्पतिकायिको वनस्पतिजीव इति योज्यं ।

**सुखग्रहणहेतुत्वात्स्थूलमूर्तित्वादुपकारभूयस्त्वाच्चादौ पृथिवीग्रहणं ॥ २ ॥** पृथिव्यां हि सत्यामपां कुंभादिभिस्तेजसः शरावादिभिर्वायोश्च चर्मघटादिभिः सुखेन ग्रहणं क्रियते । स्थूलमूर्तिश्च पृथिवी विमानभवनप्रस्तारादिभावपरिणामात् । स्नानाद्युपकारादपां, पाकशोषप्रकाशनाद्युपकाराच्चाग्नेः, खेदस्वेदापनोदोपकाराच्च वायोर्भूयानुपकारः पृथिव्याः अशनाच्छादनरसनादिभावो वनस्पतेः । अबादीनां यथोक्त उपकारः प्रतिनियत इति स सत्यां पृथिव्यां समंजति, इतरथा हि क्वावस्थितानां स उपकारः स्यादतः पृथिव्याः ग्रहणमादौ क्रियते ।

**तदनंतरमपां वचनं भूमितेजसोर्विरोधादाधेयत्वाच्च ॥ ३ ॥** तदनंतरमपां वचनं क्रियते कुतः ? भूमितेजसोर्विरोधादाधेयत्वाच्च । भूमेर्हि तेजो विरोधि, विनाशकत्वादतोऽद्भिर्व्यवधानं क्रियते । भूरपामाधारः आधेया आप इति च ।

**ततस्तेजोग्रहणं तत्परिपाकहेतुत्वात् ॥ ४ ॥** पृथिव्या अपां च परिपाकहेतुस्तेजस्तदनंतरं तस्य ग्रहणं क्रियते ।

**तेजोऽनंतरं वायुग्रहणं तदुपकारकत्वात् ॥ ५ ॥** वायुर्हि तिर्यक्पवनकर्मा तेजसः प्रेरणेनोपकरोतीति तदनंतरं गृह्यते ।

**अंते वनस्पतिग्रहणं सर्वेषां तत्प्रादुर्भावे निमित्तत्वादनंतगुणत्वाच्च ॥ ६ ॥** वनस्पतिप्रादुर्भावे हि पृथिव्यादयः सर्वे निमित्ततामुपव्रजंति । सर्वेषां तेषां वनस्पतिकायिका अनंतगुणास्ततोंऽते वनस्पतिग्रहणं क्रियते । एते पंचविधाः प्राणिनः स्थावराः । कति पुनरेषां प्राणाः ? चत्वारः, स्पर्शनेंद्रियप्राणः कायबलप्राणः उच्छ्वासनिश्वासप्राणः आयुःप्राणश्चेति । अथ के त्रसाः ? इत्यत्रोच्यते—

## द्वींद्रियादयस्त्रसाः ॥ १४ ॥

**आदिशब्दस्यानेकार्थत्वे विवक्षातो व्यवस्था ॥ १ ॥** प्रकारसामीप्यादिवचनत्वाचत्र विवक्षात इह व्यवस्थाया गृहीते । आगमे हि ते व्यवस्थिता द्वींद्रियस्त्रींद्रियश्चतुरिंद्रियः पचेंद्रियश्चेति । कोऽस्य विग्रहः ?, द्वे इंद्रिये यस्य सोऽयं द्वींद्रियः स आदिर्येषां ते द्वींद्रियादय इति । यत्नेन—

**अन्यपदार्थनिर्देशाद्द्वींद्रियाग्रहणं ॥ २ ॥** अन्यपदार्थोऽत्र प्राधान्येनाश्रितः, द्वींद्रियग्रहणमुपलक्षणं अतस्त्रसग्रहणे द्वींद्रियस्य ग्रहणं न प्राप्नोति यथा पर्वतादीनि क्षेत्राणीति न पर्वतः क्षेत्रग्रहणेन गृह्यते ?

**न वा तद्गुणसंविज्ञानात् ॥ ३ ॥** न वैष दोषः, किं कारणं ? तद्गुणसंविज्ञानात् यथा शुक्लवाससमानयेति तद्गुणमानीयते तथेहापि द्वींद्रियस्याप्यंतर्भावो भवति ।

**अवयवेन विग्रहे सति समुदायस्य वृत्त्यर्थत्वाद्वा ॥ ४ ॥** अथ वाऽवयवेन विग्रहः समुदायो वृत्त्यर्थ इति द्वींद्रियस्योपलक्षणस्यापि त्रसत्वेंऽतर्भावः, यथा सर्वादि सर्वनाम इति । कथं तर्हि पर्वतादीनि क्षेत्राणीति पर्वतस्य बहिर्भावः, पर्वतस्य क्षेत्रत्वसंभवाभावाद् व्युदासः । ते, एते चतुर्विधाः प्राणिनस्त्रसाः । कति पुनरेषां प्राणाः ?— द्वींद्रियस्य तावत्षट्प्राणाः, स्पर्शनरसनेंद्रियप्राणौ, वाक्कायबलप्राणौ उच्छ्वासनिश्वासप्राणः आयुःप्राणश्चेति । त्रींद्रियस्य सप्त त एव प्राणाः घ्राणाधिकाः । चतुरिंद्रियस्याष्टौ, त एव चक्षुरधिकाः । पचेंद्रियस्य तिरश्चोऽसंज्ञिनो नव प्राणास्त एव श्रोत्राधिकाः । संज्ञिपचेंद्रियतिर्यङ्मनुष्यदेवनारकाणां दश प्राणा मनोबलाधिकास्त एव । आदिशब्देन निर्दिष्टानामिंद्रियाणामनिर्ज्ञातसंख्यानामियत्तावधारणार्थमाह—

**इतरथान्यतरत्र संसारिग्रहणे सतीष्टार्थत्वादुपरिसंसारिग्रहणमनर्थकं ॥ ७ ॥** इतरेण प्रकारेणेतरथा कथं ? यदि संसारिमुक्तग्रहणेन च त्रसस्थावरग्रहणेन चास्याभिसंबंधः स्यादेक एव योगः क्रियेत संसारिमुक्ताः समनस्कामनस्कास्त्रसस्थावराश्चेति । तथा सत्यन्यतरत्र संसारिग्रहणं कर्तव्यं स्यात् क्वान्यतरत्र ? समनस्कामनस्का सूत्रस्यादावतेनैव सतीष्टार्थस्य सिद्धत्वात्संसारिणः त्रसस्थावरा इत्यत्र संसारिग्रहणमनर्थकं स्यात् ।

**आदौ समनस्कग्रहणमभ्यर्हितत्वात् ॥ ८ ॥** आदौ समनस्कग्रहणं क्रियते कुतोऽभ्यर्हितत्वात् । कथमभ्यर्हितत्वं ? तत्र हि समग्राणि करणानीति । य एते स्वकृतकर्मफलापेक्षपरिपूर्णापरिपूर्णकरणग्रामाहितद्वैविध्यविशिष्टाः कार्मणशरीरप्रणालिकापादितनियतावस्थाविशेषास्ते खलु—

## संसारिणस्त्रसस्थावराः ॥ १२ ॥

अत्राह के त्रसाः के स्थावरा इत्युच्यते—

**त्रसनामकर्मोदयापादितवृत्तयस्त्रसाः ॥ १ ॥** त्रसनामकर्मणो जीवविपाकिन उदयापादितवृत्तिविशेषा, त्रसा इति व्यपदिश्यते ।

**त्रसेरुद्वेजनक्रियस्य त्रसा इति चेन्न गर्भादिषु तदभावादत्रसत्वप्रसंगात् ॥ २ ॥** स्यान्मतं त्रसेरुद्वेजनक्रियस्य त्रस्यतीति त्रसा इति ? तन्न किं कारणं गर्भादिषु तदभावादत्रसत्वप्रसंगात् । गर्भांडजमूर्च्छितसुषुप्तादीनां त्रसानां बाह्यभयनिमित्तोपनिपाते सति चलनाभावादत्रसत्वं स्यात् । कथं तर्ह्यस्य निष्पत्तिस्त्रस्यतीति त्रसा इति ? व्युत्पत्तिमात्रमेव नार्थः प्राधान्येनाश्रियते गोशब्दप्रवृत्तिवत् ।

**स्थावरनामकर्मोदयोपजनितविशेषाः स्थावराः ॥ ३ ॥** स्थावरनामकर्मणो जीवविपाकिन उदयेनोपजनितविशेषाः स्थावरा इत्याख्यायते ।

**स्थानशीलाः स्थावरा इति चेन्न वाय्वादीनामस्थावरत्वप्रसंगात् ॥ ४ ॥** स्यादेतत्तिष्ठतीत्येवं शीलाः स्थावरा इति ? तन्न किं कारणं वाय्वादीनामस्थावरत्वप्रसंगात् वायुतेजोंभसां हि देशांतरप्राप्तिदर्शनादस्थावरत्वं स्यात् । कथं तर्ह्यस्य निष्पत्तिः ? स्थावरा इत्येवं रूढिविशेषबललाभात् क्वचिदेव वर्तते ।

**इष्टमेवेति चेन्न समयार्थानवबोधात् ॥ ५ ॥** अथ मतमेतदिष्टमेव वाय्वादीनामस्थावरत्वमिति ? तन्न किं कारणं समयार्थानवबोधात् । एवं हि समयोऽवस्थितः सत्प्ररूपणायां कायानुवादे त्रसानां द्वींद्रियादारभ्य आ अयोगिकेवलिन इति । तस्मान्न चलनाचलनापेक्षं त्रसस्थावरत्वं कर्मोदयापेक्षमेवेति स्थितं ।

**त्रसग्रहणमादावल्पाच्तरत्वादभ्यर्हितत्वाच्च ॥ ६ ॥** त्रसग्रहणमादौ क्रियते कुतः ? अल्पाच्तरत्वादभ्यर्हितत्वाच्च सर्वोपयोगसंभवादभ्यर्हितत्वं । सामान्यविशेषसंज्ञाहितभेदमात्रविज्ञाने सति विशेषेणाऽनिर्ज्ञातानां त्रसस्थावराणां निर्ज्ञाने कर्तव्ये एकेंद्रियाणामतिबहुवक्तव्याभावाद्विभज्यानुपूर्वीस्थावरभेदप्रतिपत्त्यर्थमाह—

## पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः ॥ १३ ॥

**नामकर्मोदयनिमित्ताः पृथिव्यादयः संज्ञाः ॥ १ ॥** स्थावरनामकर्मभेदाः पृथिवीकायादयः संति तदुदयनिमित्ता जीवेषु पृथिव्यादयः संज्ञा वेदितव्याः । प्रथनादिप्रकृतिनिष्पन्ना अपि रूढिवशात्प्रथनाद्यनपेक्षा वर्तंते । एषां पृथिव्यादीनामार्षे चातुर्विध्यमुक्तं । प्रत्येकं तत्कथमितिचेदुच्यते—पृथिवी पृथिवीकायः पृथिवीकायिकः पृथिवीजीवइत्यादि । तत्राऽचेतना वैश्रसिकपरिणामनिर्वृत्ता काठिन्यादिगुणात्मिका पृथिवी । अचेतनत्वादसत्यपि पृथिवीकायिकनामकर्मोदये प्रथनक्रियोपलक्षितैवेयं । अथवा पृथिवीसामान्यं, उत्तरत्रयेऽपि संभवात् । कायः शरीरं पृथिवीकायिकजीवपरित्यक्तः पृथिवीकायः, मृतमनुष्यादिकायवत् । पृथिवी कायो-

## लब्ध्युपयोगौ भावेंद्रियं ॥ १८ ॥

लब्धिरिति ? कोय शब्द ?, लाभो लब्धि । यद्येव पितादङ्प्राप्नोति ? अनुबन्धकृतमनित्यमिति न भवति यथा वर्णानुपलब्धौ वा तदर्थगतेरित्येवमादिषु। अथवा स्त्रिया क्ति लभादिभ्यश्चेति क्तिर्भवति, इष्टाश्च लभादय इति। अथ कोऽस्यार्थ ?

**इंद्रियनिर्वृत्तिहेतुः क्षयोपशमविशेषो लब्धिः ॥ १ ॥** यत्संनिधानादात्मा द्रव्येंद्रियनिर्वृत्तिं प्रति व्याप्रियते स ज्ञानावरणक्षयोपशमविशेषो लब्धिरिति विज्ञायते।

**तन्निमित्तः परिणामविशेष उपयोगः ॥ २ ॥** तदुक्त निमित्त प्रतीत्य उत्पद्यमान आत्मनः परिणाम उपयोग इत्युपदिश्यते तदुभय भावेंद्रियमिति।

**उपयोगस्य फलत्वादिंद्रियव्यपदेशानुपपत्तिरिति चेन्न कारणधर्मस्य कार्यानुवृत्तेः ॥३॥** स्यान्मतमिंद्रियफलमुपयोग स कथमिहेंद्रियव्यपदेशमापद्यत इति ? तन्न किं कारण कारणधर्मस्य कार्यानुवृत्ते। कार्यं हि लोके कारणमनुवर्तमान दृष्ट यथा घटाकारपरिणत विज्ञान घट इति। तथेंद्रियनिमित्त उपयोग इंद्रियमिति व्यपदिश्यते।

**शब्दार्थसंभवाच्च ॥ ४ ॥** य शब्दार्थ इन्द्रस्य लिंगमिंद्रेण सृष्टमिति वा स उपयोगे प्राधान्येन विद्यत इतींद्रियव्यपदेशो युक्त। उक्तानां पचानामिंद्रियाणा सज्ञानुपूर्व्यविशेषप्रतिपादनार्थमाह—

## स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि ॥ १९ ॥

**स्पर्शनादीनां करणसाधनत्वं पारतंत्र्यात् कर्तृसाधनत्वं च स्वातंत्र्याद्बहुलवचनात्॥१॥** इमानि स्पर्शनादीनि करणसाधनानि। कुत ? पारतन्त्र्यात् इंद्रियाणा हि लोके पारतन्त्र्येण विवक्षा विद्यते, आत्मन स्वातन्त्र्यविवक्षाया यथानेनाऽक्ष्णा सुष्ठु पश्यामि, अनेन कर्णेन सुष्ठु शृणोमीति। ततो वीर्यांतरायप्रतिनियतेंद्रियावरणक्षयोपशमांगोपांगनामलाभावष्टम्भात् स्पर्शत्यनेनात्मेति स्पर्शन, रसयत्यनेनात्मेति रसन, जिघ्रत्यनेनात्मेति घ्राण, चष्टेरनेकार्थत्वाद्दर्शनार्थविवक्षाया चष्टेऽर्थान् पश्यत्यनेनात्मेति चक्षु शृणोत्यनेनात्मेति श्रोत्र। कर्तृसाधनत्व च भवति स्वातन्त्र्यविवक्षाया, इंद्रियाणा हि लोके स्वातन्त्र्येण विवक्षा, यथेद मेऽक्षि सुष्ठु पश्यति, अय मे कर्ण सुष्ठु शृणोति इति। तेन पूर्वोक्तहेतुसन्निधाने सति स्पृशत्यात्मेनेति स्पर्शन ? कथ ? कर्तरि युट् बहुलवचनात्। रसयतीति रसन, जिघ्रतीति घ्राण, चष्टे इति चक्षु, शृणोतीति श्रोत्रमिति। अत्रेंद्रियाणीति केषाचित्पाठ नासौ युक्त। कुत ?

**अधिकृतत्वादिंद्रियाणीत्यवचन ॥ २ ॥** पचेंद्रियाणीत्यत इंद्रियग्रहणमनुवर्तते तेनेहेंद्रियाणीति वचनमनर्थक।

**स्पर्शनग्रहणमादौ शरीरव्यापित्वात् ॥ ३ ॥** यतो वितत्य शरीरमवतिष्ठते स्पर्शनमतोऽस्य ग्रहणमादौ क्रियते "वनस्पत्यतानामेकमिति"। तत्र स्पर्शनस्य ग्रहणार्थमादौ वचन।

**सर्वसंसारिषूपलब्धेश्च ॥ ४ ॥** सर्वेषु ससारिषु स्पर्शनमस्त्यतो नानाजीवापेक्षया व्यापित्वाच्चादौ ग्रहण क्रियते।

**ततो रसनघ्राणचक्षुषां क्रमवचनमुत्तरोत्तराल्पत्वात् ॥ ५ ॥** तत पश्चाद्रसनादीना त्रयाणा क्रमवचन क्रियते, कुत, उत्तरोत्तराल्पत्वात्, तद्यथा— सर्वत स्तोकाश्चक्षुःप्रदेशा। श्रोत्रेंद्रियप्रदेशा सख्येयगुणा। घ्राणेंद्रिये विशेषाधिका जिह्वायामसख्येयगुणा, स्पर्शनेऽनतगुणा इति। यद्यव चक्षुषोंते ग्रहण कर्तव्य सर्वेभ्योऽल्पीयस्त्वात् ? सत्यमेवमेतत् तथापि—

**श्रोत्रस्यांते वचन बहूपकारित्वात् ॥ ६ ॥** यत श्रोत्रबलाधानादुपदेश श्रुत्वा हिताहितप्राप्ति परिहारार्थमा[1] द्रियतेऽत श्रोत्र बहूपकारीति, अंते गृह्यते।

[1] जना इति शेष।

## पंचेंद्रियाणि ॥ १५ ॥

अथवा स्वा प्रक्रिया, आचिख्यासवः केचित् पच षडेकादश चेंद्रियाणि इत्यध्यवस्यति तत्रानिष्टनिवृत्त्यर्थं नियमयन्नाह पचेंद्रियाणि नाधिकानीति—

**इंद्रस्यात्मनो लिंगमिंद्रियं ॥ १ ॥** उपभोक्तुरात्मनोऽनिवृत्तकर्मबंधस्यापि परमेश्वरत्वशक्तियोगादिंद्रव्यपदेशमर्हत स्वयमर्थान् गृहीतुमसमर्थस्योपयोगोपकरणं लिंगमिंद्रियमित्युच्यते।

**इंद्रेण कर्मणा सृष्टमिति वा ॥ २ ॥** अथवा स्वकृतकर्मविपाकवशादात्मा देवेंद्रादिषु तिर्यगादिषु चेष्टानिष्टमनुभवतीति कर्मैव तत्रेंद्र, तेन सृष्टमिंद्रियमित्याख्यायते। तद्भेदा स्पर्शनादय पच वक्ष्यमाणा।

**मनोपींद्रियमिति चेन्नानवस्थानात् ॥ ३ ॥** स्यान्मत मनोपींद्रियमि युपसख्येय, कर्ममलीमसस्यात्मनोऽसहायस्य स्वयमेवार्थचिंतन प्रत्यसहिष्णोर्बलाधान भवति मन, कर्मकृत चेति ? तन्न। किं कारण? अनवस्थानात्। यथा चक्षुरादीनि प्रतिनियतदेशावस्थानानि न तथा मन इत्यनींद्रिय तत्।

**इंद्रियपरिणामाच्च प्राक् तद्व्यापारात् ॥ ४ ॥** चक्षुरादीना रूपादिविषयोपयोगपरिणामात्प्राक् मनसो व्यापार। कथ? शुक्लादिरूप दिदृक्षु प्रथम मनसोपयोग करोति। एवविध रूप पश्यामि रसमास्वादयामि इति ततस्तद्बलाधानीकृत्य चक्षुरादीनि विषयेषु व्याप्रियते ततश्चास्याऽनिंद्रियत्व।

**कर्मेंद्रियोपसंख्यानमिति चेन्नोपयोगप्रकरणात् ॥ ५ ॥** स्यादेतत्कर्मेंद्रियाणि वागादीनि वचनादिक्रियानिमित्तानि सति तेषामिहोपसख्यान कर्तव्यमिति ? तन्न किं कारणमुपयोगप्रकरणादुपयोगोऽत्र प्रकृत, तदुपकरणानींहेंद्रियाणि गृह्यते, तेन कर्मेंद्रियाणामप्रसग।

**अनिंद्रियत्वं वा तेषामनवस्थानात् ॥ ६ ॥** न वागादीनामिंद्रियत्वमस्ति उपयोगसाधनेषु हींद्रियव्यपदेशो युक्तो न क्रियासाधनेषु। यदि च क्रियासाधनेष्वपि स्यादनवस्था प्रसज्येत सर्वाणि ह्यगोपागादीनि मूर्धादीनि क्रियासाधनानीति। इष्टानिष्टविषयोपलब्ध्यर्थानि भोक्तुरात्मनो यान्यमूनींद्रियाणि तेषामुक्तसामर्थ्यविशेषाद्बुपनियतभेदाना प्रत्येक भेदप्रतिपत्त्यर्थमाह—

## द्विविधानि ॥ १६ ॥

**विधशब्दस्य प्रकारवाचिनो ग्रहणं ॥ १ ॥** अय विधशब्द. प्रकारवाची गृह्यते विधयुक्तगत प्रकारा समानार्था इति। द्वौ विधो येषा तानि द्विविधानि द्विप्रकाराणीत्यर्थ कौ च द्वौ प्रकारौ ? द्रव्येंद्रिय भावेंद्रियमिति। तत्र द्रव्येंद्रियस्वरूपनिर्ज्ञानार्थमाह—

## निर्वृत्युपकरणे द्रव्येंद्रियं ॥ १७ ॥

**निर्वर्त्यत इति निर्वृत्तिः ॥ १ ॥** कर्मणा या निर्वर्त्यत निष्पाद्यते सा निर्वृत्तिरित्युपदिश्यते। सा—

**द्वेधा बाह्याभ्यंतरभेदात् ॥ २ ॥ तत्र विशुद्धात्मप्रदेशवृत्तिराभ्यंतरा ॥ ३ ॥** उत्सेधागुलस्याऽसख्येयभागप्रमिताना विशुद्धानामात्मप्रदेशाना प्रतिनियतचक्षुरादींद्रियसस्थानमानावमानावस्थिताना वृत्तिराभ्यतरा निर्वृत्ति।

**तत्र नामकर्मोदयापादितावस्थाविशेषः पुद्गलप्रचयो बाह्या ॥ ४ ॥** तेष्वात्मप्रदेशेष्विंद्रियव्यपदेशभाक्षु य प्रतिनियतसस्थानो नामकर्मोदयापादितावस्थाविशेष पुद्गलप्रचय, स बाह्या निर्वृत्ति।

**उपक्रियतेऽनेनेत्युपकरणं ॥ ५ ॥** येन निर्वृत्तिरुपकार क्रियते तदुपकरण—

**तद्द्विविधं पूर्ववत् ॥ ६ ॥** तदुपकरण द्विविध पूर्ववद्बाह्याभ्यतरभेदात्।

**तत्राभ्यतरं शुक्लकृष्णमंडलं बाह्यमक्षिपत्रपक्ष्मद्वयादि ॥ ७ ॥** एव शेषेष्वपींद्रियेषु ज्ञेय। भावेंद्रियमुच्यते—

## लब्ध्युपयोगौ भावेंद्रियं ॥ १८ ॥

लब्धिरिति[?] कोय शब्द [?], लाभो लब्धि । यद्येव पित्रादद्व्प्राप्नोति[?] अनुगनकृतमनित्यमिति न भवति यथा वर्णानुपलब्धौ वा तदर्थगतेरित्येवमादिषु। अथवा स्त्रिया क्ति लभादिभ्यश्चेति क्तिर्भवति, इष्टाश्च लभादय इति । अथ कोऽस्यार्थ ?

**इंद्रियनिर्वृत्तिहेतुः क्षयोपशमविशेषो लब्धिः ॥ १ ॥** यत्सन्निधानादात्मा द्रव्येंद्रियनिर्वृत्तिं प्रति व्याप्रियते स ज्ञानावरणक्षयोपशमविशेषो लब्धिरिति विज्ञायते ।

**तन्निमित्तः परिणामविशेष उपयोगः ॥ २ ॥** तदुक्त निमित्त प्रतीत्य उत्पद्यमान आत्मन परिणाम उपयोग इत्युपदिश्यते तदुभय भावेंद्रियमिति ।

**उपयोगस्य फलत्वादिंद्रियव्यपदेशानुपपत्तिरिति चेन्न कारणधर्मस्य कार्यानुवृत्तेः ॥३॥** स्यान्मतमिंद्रियफलमुपयोग स कथमिहेंद्रियव्यपदेशमापद्यत इति ? तन्न किं कारण कारणधर्मस्य कार्यानुवृत्ते । कार्यं हि लोके कारणमनुवर्तमान दृष्ट यथा घटाकारपरिणत विज्ञान घट इति । ततेंद्रियनिमित्त उपयोग इंद्रियमिति व्यपदिश्यते ।

**शब्दार्थसंभवाच्च ॥ ४ ॥** य शब्दार्थ इंद्रस्य लिंगमिंद्रेण सृष्टमिति वा स उपयोगे प्राधान्येन विद्यत इतींद्रियव्यपदेशो युक्त । उक्ताना पचानामिंद्रियाणा सज्ञानुपूर्व्यविशेषप्रतिपादनार्थमाह—

## स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि ॥ १९ ॥

**स्पर्शनादीना करणसाधनत्व पारतन्त्र्यात् कर्तृसाधनत्वं च स्वातन्त्र्याद्बहुलवचनात्॥१॥** इमानि स्पर्शनादीनि करणसाधनानि। कुत ? पारतन्त्र्यात् इंद्रियाणा हि लोके पारतन्त्र्येण विवक्षा विद्यते, आत्मन स्वातन्त्र्यविवक्षाया यथानेनाऽक्ष्णा सुष्ठु पश्यामि, अनेन कर्णेन सुष्ठु शृणोमीति । ततो वीर्यांतरायप्रतिनियतेंद्रियावरणक्षयोपशमागोपागनामलाभावष्टंभात् स्पृशत्यनेनात्मेति स्पर्शन, रसयत्यनेनात्मेति रसन, जिघ्रत्यनेनात्मेति घ्राण, चक्षेरनेकार्थत्वात्सद्दर्शनार्थविवक्षाया चष्टेऽर्थान् पश्यत्यनेनात्मेति चक्षु शृणोत्यनेनात्मेति श्रोत्र । कर्तृसाधनत्व च भवति स्वातन्त्र्यविवक्षाया, इंद्रियाणा हि लोके स्वातन्त्र्येण विवक्षा, यथेद मेऽक्षि सुष्ठु पश्यति, अय मे कर्ण सुष्ठु शृणोति इति । तेन पूर्वोक्तहेतुसन्निधाने सति स्पृशतीति स्पर्शन ? कथ ? कर्तरि युट् बहुलवचनात्। रसयतीति रसन, जिघ्रतीति घ्राण, चष्टे इति चक्षु, शृणोतीति श्रोत्रमिति। अत्रेंद्रियाणीति केषाचित्पाठ नासौ युक्त । कुत ?

**अधिकृतत्वादिंद्रियाणीत्यवचन ॥ २ ॥** पचेंद्रियाणीत्यत इंद्रियग्रहणमनुवर्तते तेनेहेंद्रियाणीति वचनमनर्थक ।

**स्पर्शनग्रहणमादौ शरीरव्यापित्वात् ॥ ३ ॥** यतो विततं शरीरमवतिष्ठते स्पर्शनमतोऽस्य ग्रहणमादौ क्रियते "वनस्पत्यन्तानामेकमिति" । तत्र स्पर्शनस्य ग्रहणार्थमादौ वचन ।

**सर्वससारिषूपलब्धेश्च ॥ ४ ॥** सर्वेषु ससारिषु स्पर्शनमस्त्यतो नानाजीवापेक्षया व्यापित्वाच्चादौ ग्रहण क्रियते ।

**ततो रसनघ्राणचक्षुषा क्रमवचनमुत्तरोत्तराल्पत्वात् ॥ ५ ॥** ततः पश्चाद्रसनादीनां त्रयाणा क्रमवचन क्रियते, कुत ,उत्तरोत्तराल्पत्वात्, तद्यथा— सर्वत स्तोकाश्चक्षुःप्रदेशा । श्रोत्रेंद्रियप्रदेशा सख्येयगुणा । घ्राणेंद्रिये विशेषाधिका जिह्वायामसख्येयगुणा, स्पर्शनेऽनतगुणा इति । यद्यव चक्षुरंते ग्रहण कर्तव्य सर्वेभ्योऽल्पीयस्त्वात् ? सत्यमेवमेतत् तथापि—

**श्रोत्रस्यांते वचन बहूपकारित्वात् ॥ ६ ॥** यत श्रोत्रबलाधानादुपदेश श्रुत्वा हिताहितप्राप्तिपरिहारार्थमा[1]द्रियतेऽत श्रोत्र बहूपकारीति, अते गृह्यते ।

१ जना इति शेष ।

**रसनमपि वक्तृत्वेनेति चेन्नाभ्युपगमात् ॥७॥** स्यादेतद्रसनमपि बहूपकारि, कथ? वक्तृत्वेन यतो रसनमभ्युदयनिःश्रेयसार्थोच्चारणाऽध्ययनादिषु प्रमाणमतो रसनमेवाते वाच्यमिति? तन्न किं कारण? अभ्युपगमात्। अभ्युपगम्य श्रोत्रस्य बहूपकारित्व रसनस्यापि बहूपकारित्व वर्णयता भवता तदभ्युगतमिति अवसितोभिमतो वाद । अनभ्युपगमे वा? प्रसगनिवृत्ति, रसनमपि बहूपकारीति। किं च—

**श्रोत्रप्रणालिकापादितोपदेशात् ॥ ८ ॥** श्रो[१]त्रप्रणालिकयोपदेशमुपश्रुत्य रसन वक्तृत्व प्रति व्याप्रियते श्रोत्रमेव बहूपकारि।

**सर्वज्ञे तदभाव इति चेन्नेंद्रियाधिकारात् ॥ ९ ॥** स्यान्मत न हि सर्वज्ञ श्रोत्रेंद्रियबलाधानात् परत उपश्रुत्य वक्तृत्वमास्कदति किंतु सकलज्ञानावरणसक्षयाविर्भूतातींद्रियकेवलज्ञान रसनोष्टपभमात्रादेव वक्तृत्वेन परिणत' सकलान् श्रुतिविषयानर्थानुपदिश्यति अतो रसनमेव बहूपकारीति? तन्न किं कारणमिंद्रियाधिकारोयमतो येष्विद्रियकृतो हिताहितोपदेश साकल्येनास्ति तान्प्रत्येतदुक्त, न सर्वज्ञ प्रतीति नास्ति दोष'।

**एकैकवृद्धिक्रमज्ञापनार्थं च स्पर्शनादिवचनं ॥ १० ॥** कृमिपिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानीति वक्ष्यते तत्र वृद्धिक्रमज्ञापनार्थं च स्पर्शनादीनामानुपूर्व्यं वेदितव्य।

**एषां च स्वतस्तद्वतश्चैकत्वपृथक्त्व प्रत्यनेकांतः ॥ ११ ॥** एषा च स्पर्शनादीनामिंद्रियाणा स्वतस्तद्वतश्चैकत्वपृथक्त्व प्रत्यनेकातो वेदितव्य । स्यादेकत्व स्यात्पृथक्त्वमित्यादि। तद्यथा स्वतस्तावज्ज्ञानावरणक्षयोपशमशक्तेरभेदविवक्षाया स्पर्शनादीना स्यादेकत्व, समुदायव्यतिरेकाभावात् समुदायिनां समुदायस्यैकत्वादवयवानामप्येकत्वमिति वा स्यादेकत्व। प्रतिनियतक्षयोपशमलब्धिविशेषापेक्षया स्यान्नानात्व, अवयवभेदविवक्षाया वा स्यान्नानात्व। इंद्रियबुद्ध्यभिधानानुवृत्तिव्यावर्तनार्पणाभेदाद्वा स्यादेकत्व स्यात्पृथक्त्व च। तद्वतोपि चैतन्यापरित्यागेनोभयपरिणामकारणापेक्षयेंद्रियपर्यायात्मलाभे सति निष्प्रत्नाय पिंडवत् तथा परिणामात्तद्व्यतिरेकेणेंद्रियस्यानुपलब्धेरिति स्यादिंद्रियेभ्यस्तद्वतो रेकत्व। इतरथैकातान्यत्वेऽनिंद्रिय आत्मा स्यात् घटवत् तथान्यतमेंद्रियनिवृत्तौ तद्वतोवस्थानात् स्यान्नानात्व। पर्यायिपर्यायभेदाच्च स्यान्नानात्व। सज्ञाभेदाभेदविवक्षोपपत्तेश्च स्यादेकत्व स्यान्नानात्व वाऽनयेन पूर्ववदुत्तरे च भगा नेतव्या। तेषामिंद्रियाणा विषयप्रदर्शनार्थमाह—

## स्पर्शरसगंधवर्णशब्दास्तदर्थाः ॥ २० ॥

**स्पर्शादीनां कर्मभावसाधनत्वं द्रव्यपर्यायविवक्षोपपत्तेः ॥ १ ॥** स्पर्शादीना कर्मसाधनत्व भावसाधनत्व च भवति। कुत? द्रव्यपर्यायविवक्षोपपत्ते। यदा द्रव्य प्राधान्येन विवक्षित तदेंद्रियेण द्रव्यमेव सन्निकृष्यते ततो न व्यतिरिक्ता' स्पर्शादय केचन सतीति। एतस्या विवक्षाया कर्मसाधनत्व स्पर्शादीना मवसीयते, स्पृश्यत इति स्पर्श', रस्यत इति रस', गध्यत इति गध, वर्ण्यत इति वर्ण, शब्द्यत इति शब्द'। यदा तु पर्याय प्राधान्येन विवक्षितस्तदा भेदोपपत्तेरौदासीन्यावस्थितभावकथनाद्भावसाधनत्व स्पर्शादीनां युज्यते। तत स्पर्शन स्पर्श, रसन रस, गधन गध, वर्णन वर्ण, शब्दन शब्द इति। यद्येव सूक्ष्मेषु परमाण्वादिषु स्पर्शादिव्यवहारो न प्राप्नोति? नैष दोष सूक्ष्मेष्वपि ते स्पर्शादय' सति तत्कार्येषु स्थूलेषु दर्शनादनुमीयमाना। न ह्यत्यतमसता प्रादुर्भावोस्तीति। किंत्विंद्रियग्रहणयोग्या न भवत्ययोन्यत्रोपि तेषु स्पर्शादिव्यवहारो रूढिवशाद्भवति। तदर्था इति कोय शब्द? तेषामर्थास्तदर्था इति तेषा केषामिंद्रियाणा। यद्येव—

**तदर्था इति वृत्त्यनुपपत्तिरसमर्थत्वात् ॥ २ ॥** तदर्था इति वृत्तिर्नोपपद्यते कुतोऽसमर्थत्वात् समर्थानां पदानां हि वृत्त्या भवितव्य। नचात्र साम[illegible] सापेक्षमसमर्थं भवति। इंद्रियाणि ह्यत्रापेक्ष्यते?

१ श्रोत्रवश[illegible]

**न वा गमकत्वान्नित्यसापेक्षेषु संबंधिशब्दवत्** ॥३॥ न वैषदोष ,किं कारण ? गमकत्वादत्र वृत्तिर्भवति। गमकत्वं च नित्यसापेक्षेषु। कथ ? सबंधिशब्दवत्। यथा सबधिशब्देषु देवदत्तस्य गुरुकुल, देवदत्तस्य गुरुपुत्र, इत्येवमादिषु वृत्तिर्भवति गुरुशब्दो हि नित्यशिष्यमपेक्षत इति। एवमिहापि तच्छब्द सामान्यवचनोऽविशेषाकांक्षी सन् प्रकृतानीन्द्रियाण्यपेक्षमाणोपि वृत्तिं लभते।

**स्पर्शादीनामानुपूर्व्येण निर्देश इंद्रियक्रमाभिसंबंधार्थः** ॥ ४ ॥ स्पर्शश्च रसश्च गधश्च वर्णश्च शब्दश्च स्पर्शरसगधवर्णशब्दा इत्यानुपूर्व्येण निर्देश स्पर्शनादिभिरिंद्रियै क्रमेणाभिसबधो यथा स्यात्, इति एते पुद्गलद्रव्यस्य गुणा अविशेषेण वेदितव्या। अत्र केचिद्विशिष्य तान् कल्पयति–रूपरसगधस्पर्शवती पृथिवी। रूपरसस्पर्शवन्त्य आपो द्रवा स्निग्धाश्च। तेजो रूपस्पर्शवत्। वायु स्पर्शवानिति तदयुक्त–रूपादिमान् वायु स्पर्शवत्वाद्घटवत्। तेजोपि रसगधवद्रूपवत्वाद्गुडवत्। आपोपि गधवत्य रसवत्त्वादाम्रफलवत्। किंचाऽश्वादिषु गधादीनां साक्षादुपलब्धेश्च। पार्थिवपरमाणुसंयोगादुपलब्धिरिति चेन्न विशेषहेत्वभावात्। नात्र विशेषहेतुरस्ति पार्थिवपरमाणूनामेते गुणा ससर्गात्तन्यत्रोपलभ्यते नत्ववादीनामिति। वय ब्रूमहे तद्गुण तत्रोपलब्धेरिति। यदि हि सयोगादुपलब्धि कल्प्यते रसाद्युपलब्धिरपि सयोगादेव कल्प्यता। नच पृथिव्यादीना जातिभेदोस्ति पुद्गलजातिमजहत परमाणुस्कधविशेषा निमित्तवशाद्विश्वरूपतामापद्यत इति दर्शनात्। दृश्यते हि पृथिव्या कारणवशाद्द्रवता। द्रवाणां चापां करकात्मभावेन घनभावो दृष्ट, घनश्च द्रवभाव। तेजसोपि मषीभाव। वायोरपि दृष्टा रूपादय। कथ गम्यत इतिचेत्परमाणुषु तेषा रूपादीना कथ गति ?, तत्कार्येषु दर्शनादनुमानमिति चेदिहापि तत एव वेदितव्य।

**तेषा च स्वतस्तद्वतश्चैकत्वं पृथक्त्वं प्रत्यनेकांतः** ॥ ५ ॥ तेषा च स्पर्शादीना स्वतस्तद्वतश्चैकत्वपृथक्त्व प्रत्यनेकातो वेदितव्य। स्यादेकत्व स्यात्पृथक्त्वमित्यादि। अत्रान्ये एकत्व पृथक्त्व चैकातेनाभ्युपयति ? तदयुक्त कथ ? यद्येकातेनैकत्व स्यात्स्पर्शनेन स्पर्शोपलब्धौ रसादीनामप्युपलब्धि स्यात्। तद्वतोपि तेषामपृथक्त्वे तदेव वा स्यात्त एव वा ? तदेव चेल्लक्षणाभावात्तस्याभाव, अथ त एव ? निराधारत्वात्तेषामप्यभाव। अथैकातेन प्रथक्त्व, घटरूपोपलब्धौ घटानुरूपानुपलब्धिवत् स्पर्शोपलब्धौ रूपादीनामनुपलब्धे स्पृष्टो घटोयमिति न ज्ञायेत स्पर्शाद्यनात्मकत्वात् तस्मात्तद्वतोप्यत्यतप्रथक्त्वे ?, उभयेषामभाव स्यात्। ग्रहणभेदात्स्पर्शादीनामन्यत्वमिति चेन्न। ग्रहणाभेदेपि नानात्वोपलब्धे शुक्लकृष्णादिषु सख्यापरिमाणप्रथक्त्वसंयोगविभाग परत्वापरत्वकर्मसत्तागुणत्वाना रूपसमवायाच्च गुणाणा नानात्वोपलब्धेश्च। सज्ञा स्वतत्त्वमिति लक्षणभेदान्नानात्वमिति चेन्न। तदभेदेपि द्रव्यगुणकर्मणा नानात्वोपलब्धे। अनानात्वमिति चेन्न प्रतिज्ञाविरोधात्। यदि ह्येवं स्यान्मृदादिपरिणताना सत्त्वरजस्तमसा व्यतिरेकेणानुपलभ्यमानानामपि प्रतिज्ञातमन्यत्व हीयते। यदि हि तत्राप्यनन्यत्वमेव स्यात् ? व्यक्त व्यक्त लक्षणभेदकल्पनाऽनर्थिका स्यात् तस्मात्स्यादेकत्व स्यात्प्रथक्त्व चाभ्युपगत व्य द्रव्यार्पणादेकत्व पर्यायार्पणान्नानात्वमिति। अत्राह— य मनोनवस्थानादिंद्रिय न भवतीति प्रत्याख्यात तत्किमुपयोगस्योपकारकमुत नेति ? तदप्युपकारिव तेन विनेंद्रियाणा विषयेषु स्वप्रयोजनवृत्त्यभावात्। किमस्यैषा सह कारित्वमात्रमेव प्रयोजनमुतान्यदपीत्यत आह—

## श्रुतमनिंद्रियस्य ॥ २१ ॥

श्रुतज्ञानविषयोर्थ श्रुत स विषयोनिंद्रियस्य। परिप्राप्तश्रुतज्ञानावरणक्षयोपशमस्यात्मन श्रुतार्थेऽनिंद्रियालबनज्ञानप्रवृत्ते। अथवा श्रुतज्ञान श्रुत तदनिंद्रियस्यार्थ प्रयोजनमिति यावत् तत्पूर्वकत्वात्तस्य। इत्ययमनिंद्रियस्येंद्रियव्यापारनिर्मुक्तोर्थ।

**श्रुत श्रोत्रेंद्रियस्य विषय इति चेन्न श्रोत्रेंद्रियग्रहणे श्रुतस्य मतिज्ञानव्यपदेशात्** ॥ १ ॥ स्यान्मत न श्रुतमनिंद्रियस्य विषय, कस्य तर्हि ? श्रोत्रेंद्रियस्येति, तन्न। किं कारण श्रोत्रेंद्रियग्रहणात् श्रुतस्य मति-

**रसनमपि वक्तृत्वेनेति चेन्नाभ्युपगमात् ॥७॥** स्यादेतद्रसनमपि बहूपकारि, कथं ? वक्तृत्वेन यतो रसनमभ्युदयनिःश्रेयसार्थोच्चारणाऽध्ययनादिषु प्रमाणमतो रसनमेवात्र वाच्यमिति ? तन्न किं कारणं ? अभ्युपगमात्। अभ्युपगम्य श्रोत्रस्य बहूपकारित्वं रसनस्यापि बहूपकारित्वं वर्णयता भवता तदभ्युगतमिति अवसितोभिमतो वादः। अनभ्युपगमे वा ? प्रसंगनिवृत्तिः, रसनमपि बहूपकारीति। किं च—

**श्रोत्रप्रणालिकापादितोपदेशात् ॥ ८ ॥** श्रो[1]त्रप्रणालिकयोपदेशमुपश्रुत्य रसनं वक्तृत्वं प्रति व्याप्रियते श्रोत्रमेव बहूपकारि।

**सर्वज्ञे तदभाव इति चेन्नेंद्रियाधिकारात् ॥ ९ ॥** स्यान्मतं न हि सर्वज्ञः श्रोत्रेंद्रियबलाधानात् परत उपश्रुत्य वक्तृत्वमास्कंदति किंतु सकलज्ञानावरणसंक्षयाविर्भूतातींद्रियकेवलज्ञानः रसनोष्टपभमात्रादेव वक्तृत्वेन परिणतः सकलान् श्रुतिविषयानर्थानुपदिश्यति अतो रसनमेव बहूपकारीति ? तन्न किं कारणमिंद्रियाधिकारोयमतो येष्विंद्रियकृतो हिताहितोपदेशः साकल्येनास्ति तान्प्रत्येतदुक्तं, न सर्वज्ञं प्रतीति नास्ति दोषः।

**एकैकवृद्धिक्रमज्ञापनार्थं च स्पर्शनादिवचनं ॥ १० ॥** कृमिपिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानीति वक्ष्यते तत्र वृद्धिक्रमज्ञापनार्थं च स्पर्शनादीनामानुपूर्व्यं वेदितव्यं।

**एषां च स्वतस्तद्वतश्चैकत्वपृथक्त्वं प्रत्यनेकांतः ॥ ११ ॥** एषां च स्पर्शनादीनामिंद्रियाणां स्वतस्तद्वतश्चैकत्वपृथक्त्वं प्रत्यनेकांतो वेदितव्यः। स्यादेकत्वं स्यात्पृथक्त्वमित्यादि। तद्यथा स्वतस्तावज्ज्ञानावरणक्षयोपशमशक्तेरभेदविवक्षायां स्पर्शनादीनां स्यादेकत्वं, समुदायव्यतिरेकाभावात् समुदायिनां समुदायस्यैकत्वादवयवानामप्येकत्वमिति वा स्यादेकत्वं। प्रतिनियतक्षयोपशमलब्धिविशेषापेक्षया स्यान्नानात्वं, अवयवभेदविवक्षायां वा स्यान्नानात्वं। इंद्रियबुद्ध्यभिधानानुवृत्तिव्यावर्तनार्पणाभेदाद्वा स्यादेकत्वं, स्यात्पृथक्त्वं च। तद्वतोपि चैतन्यापरित्यागेनोभयपरिणामकारणापेक्षयेंद्रियपर्यायात्मलाभे सति निष्टप्तायःपिंडवत् तथा परिणामात्तद्व्यतिरेकेणेंद्रियस्यानुपलब्धेरिति स्यादिंद्रियैरितरेतरैकत्वं। इतरथैकातान्यत्वेऽनिंद्रिय आत्मा स्यात् घटवत् तथान्यतमेंद्रियनिवृत्तौ तद्वतोवस्थानात् स्यान्नानात्वं। पर्यायिपर्यायभेदाच्च स्यान्नानात्वं। संज्ञाभेदाभेदविवक्षोपपत्तेश्च स्यादेकत्वं स्यान्नानात्वं वाऽयमेव पूर्ववदुत्तरे च भंगा नेतव्याः। तेषामिंद्रियाणां विषयप्रदर्शनार्थमाह—

## स्पर्शरसगंधवर्णशब्दास्तदर्थाः ॥ २० ॥

**स्पर्शादीनां कर्मभावसाधनत्वं द्रव्यपर्यायविवक्षोपपत्तेः ॥ १ ॥** स्पर्शादीनां कर्मसाधनत्वं भावसाधनत्वं च भवति। कुतः ? द्रव्यपर्यायविवक्षोपपत्तेः। यदा द्रव्यं प्राधान्येन विवक्षितं तदेंद्रियेण द्रव्यमेव संनिकृष्यते ततो न व्यतिरिक्ताः स्पर्शादयः केचन संतीति। एतस्यां विवक्षायां कर्मसाधनत्वं स्पर्शादीनामवसीयते, स्पृश्यत इति स्पर्शः, रस्यत इति रसः, गंध्यत इति गंधः, वर्ण्यत इति वर्णः, शब्द्यत इति शब्दः। यदा तु पर्यायः प्राधान्येन विवक्षितस्तदा भेदोपपत्तेरौदासीन्यावस्थितभावकथनाद्भावसाधनत्वं स्पर्शादीनां युज्यते। ततः स्पर्शनं स्पर्शः, रसनं रसः, गंधनं गंधः, वर्णनं वर्णः, शब्दनं शब्द इति। यद्येवं सूक्ष्मेषु परमाण्वादिषु स्पर्शादिव्यवहारो न प्राप्नोति ? नैष दोषः सूक्ष्मेष्वपि ते स्पर्शादयः संति तत्कार्येषु स्थूलेषु दर्शनादनुमीयमाना। न ह्यत्यंतमसतां प्रादुर्भावोस्तीति। किंचिदिंद्रियग्रहणयोग्या न भवत्ययोग्यत्वेपि तेषु स्पर्शादिव्यवहारो रूढिवशाद्भवति। तदर्था इति कोयं शब्दः ? तेषामर्थास्तदर्था इति तेषां केषामिंद्रियाणां। यद्येवं—

**तदर्था इति वृत्त्यनुपपत्तिरसमर्थत्वात् ॥ २ ॥** तदर्था इति वृत्तिर्नोपपद्यते कुतोऽसमर्थत्वात् समर्थानां पदानां हि वृत्त्या भवितव्यं। नचात्र सामर्थ्यमस्ति कुतः ? सापेक्षमसमर्थं भवति। इंद्रियाणि ह्यत्रापेक्ष्यंते ?

१ श्रोत्रप्रणालिकायामित्यपि पुस्तके पाठः।

**न वा गमकत्वान्नित्यसापेक्षेषु संबंधिशब्दवत् ॥३॥** न वैषदोष ,किं कारण ? गमकत्वादत्र वृत्ति-र्भवति। गमकत्वं च नित्यसापेक्षेषु। कथ ? सबंधिशब्दवत् । यथा सबंधिशब्देषु देवदत्तस्य गुरुकुल, देवदत्तस्य गुरुपुत्र, इत्येवमादिषु वृत्तिर्भवति गुरुशब्दो हि नित्यशिष्यमपेक्षत इति । एवमिहापि तच्छब्द सामान्यवच-नोऽविशेषाकांक्षी सन् प्रकृतानीद्रियाण्यपेक्षमाणोपि वृत्तिं लभते ।

**स्पर्शादीनामानुपूर्व्येण निर्देश इंद्रियक्रमाभिसंबंधार्थः ॥ ४ ॥** स्पर्शश्च रसश्च गधश्च वर्णश्च शब्दश्च स्पर्शरसगधवर्णशब्दा इत्यानुपूर्व्येण निर्देश स्पर्शनादिभिरिंद्रियै क्रमेणाभिसबधो यथा स्यात्, इति एते पुद्गलद्रव्यस्य गुणा अविशेषेण वेदितव्या । अत्र केचिद्विशिष्य तान् कल्पयति–रूपरसगधस्पर्श-वती पृथिवी। रूपरसस्पर्शवत्य आपो द्रवा स्निग्धाश्च। तेजो रूपस्पर्शवत्। वायु स्पर्शवानिति तदयुक्त–रूपादि-मान् वायु स्पर्शवत्वाद्घटवत् । तेजोपि रसगधवद्रूपवत्वाद्गुडवत् । आपोपि गधवत्य रसवत्त्वादाम्रफलवत् । किंचाऽयादिषु गधादीनां साक्षादुपलब्धेश्च । पार्थिवपरमाणुसंयोगादुपलब्धिरिति चेन्न विशेषहेत्वभावात्। नात्र विशेषहेतुरस्ति पार्थिवपरमाणूनामेते गुणा ससर्गादन्यत्रोपलभ्यते नत्वबादीनामिति । वय ब्रूमहे तद्गुण त्वात्रोपलब्धेरिति। यदि हि सयोगादुपलब्धि कल्प्यते रसाद्युपलब्धिरपि सयोगादेव कल्प्यतां। नच पृथिव्यादीनां जातिभेदोस्ति पुद्गलजातिमजहत परमाणुस्कधविशेषा निमित्तवशाद्विश्वरूपतामापद्यत इति दर्शनात्। दृश्यते हि पृथिव्या कारणवशाद्द्रवता। द्रवाणा चापा करकात्मभावेन घनभावो दृष्ट , घनश्च द्रवभाव । तेजसोपि मषीभाव । वायोरपि दृष्टा रूपादय । कथ गम्यत ? इतिचेत्परमाणुषु तेषा रूपादीना कथ गति ?, तत्कार्येषु दर्शनादनुमानमिति चेदिहापि तत एव वेदितव्य ।

**तेषा च स्वतस्तद्वतश्चैकत्व पृथक्त्वं प्रत्यनेकांतः ॥ ५ ॥** तेषां च स्पर्शादीना स्वतस्तद्वत-श्चैकत्वपृथक्त्व प्रत्यनेकांतो वेदितव्य । स्यादेकत्व स्यात्पृथक्त्वमित्यादि । अत्रान्ये एकत्व पृथक्त्व चैकातेना-भ्युपयति ? तदयुक्त कथ ? यद्येकातेनैकत्व स्यात्स्पर्शनेन स्पर्शोपलब्धौ रसादीनामप्युपलब्धि स्यात्। तद्वतोपि तेषामपृथक्त्वे तदेव वा स्यात्त एव वा ? तदेव चेल्लक्षणाभावाल्लक्ष्याभाव , अथ त एव ? निराधारत्वात्तेषामप्यभाव । अथैकातेन प्रथक्त्व, घटरूपोपलब्धौ घटानुरूपानुपलब्धिवत् स्पर्शोपलब्धौ रूपादीनामनुपलब्धे स्पृष्टो घटोय मिति न ज्ञायेत स्पर्शाद्यनात्मकत्वात् तस्मात्तद्वतोप्यत्यतप्रथक्त्वे ?, उभयेषामभाव स्यात् । ग्रहणभेदात्स्पर्शादी-नामन्यत्वमिति चेन्न । ग्रहणाभेदेपि नानात्वोपलब्धे शुक्लकृष्णादिषु सख्यापरिमाणप्रथक्त्वसंयोगविभाग परत्वापरत्वकर्मसत्तागुणत्वाना रूपसमवाया च चक्षुग्राणा नानात्वोपलब्धेश्च । सज्ञा स्वतत्त्वमिति लक्षणभेदा-न्नानात्वमिति चेन्न। तदभेदेपि द्रव्यगुणकर्मणा नानात्वोपलब्धे । अनानात्वमिति चेन्न। प्रतिज्ञाविरोधात्। यदि ह्येव स्यान्मृदादिपरिणताना सत्वरजस्तमसा व्यतिरेकेणानुपलभ्यमानानामपि प्रतिज्ञातमन्यत्व हीयते। यदि हि नवा प्यनन्यत्वमेव स्यात् ? व्यक्ताव्यक्तलक्षणभेदकल्पनाऽनर्थिका स्यात् तस्मात्स्यादेकत्व स्यात्प्रथक्त्व चाभ्युपगत व्य द्रव्यार्पणादेकत्व पर्यायार्पणान्नानात्वमिति । अत्राह— य मनोनवस्थानादिंद्रिय न भवतीति प्रत्याख्यात तत्कि-मुपयोगस्योपकारकमुत नेति ? तदप्युपकार्यव तेन विनेंद्रियाणा विषयेषु स्वप्रयोजनवृत्त्यभावात्। किमस्यैषा सह कारित्वमात्रमेव प्रयोजनमुतान्यदपीष्यत आह—

## श्रुतमनिंद्रियस्य ॥ २१ ॥

श्रुतज्ञानविषयोर्थ' श्रुत स विषयोनिंद्रियस्य । परिप्राप्तश्रुतज्ञानावरणक्षयोपशमस्यात्मन श्रुतार्थेऽनिंद्रि-यालबनज्ञानप्रवृत्ते । अथवा श्रुतज्ञान श्रुत तदनिंद्रियस्यार्थ प्रयोजनमिति यावत् तत्पूर्वकत्वात्तस्य । इत्ययमनिं-द्रियस्येंद्रियव्यापारनिर्मुक्तोर्थ ।

**श्रुतं श्रोत्रेंद्रियस्य विषय इति चेन्न श्रोत्रेंद्रियग्रहणे श्रुतस्य मतिज्ञानव्यपदेशात् ॥ १ ॥** स्यान्मत न श्रुतमनिंद्रियस्य विषय , कस्य तर्हि ? श्रोत्रेंद्रियस्येति, तन्न। किं कारण श्रोत्रेंद्रियग्रहणात् श्रुतस्य मति-

ज्ञानमिति व्यपदेशात्। यदा हि श्रोत्रेण गृह्यते तदा तन्मतिज्ञानमवग्रहादि व्याख्यात, तत उत्तरकाल यत्तत्पूर्वक जीवादिपदार्थस्वरूपाधिगमनं तत् श्रुतमनिंद्रियस्येत्यवसेय। उक्तानामिंद्रियाणां प्रतिनियतविषयाणां स्वामित्वनिर्देशे कर्तव्ये यत्प्रथमगृहीत स्पर्शन तस्य तावत्स्वामित्वावधारणार्थमाह—

## वनस्पत्यंतानामेकं ॥ २२ ॥

**अंतशब्दस्याऽनेकार्थत्वे विवक्षातोवसानगतिः ॥१॥** अयमतशब्दोनेकार्थ, क्वचिदवयवे, यथा वस्त्रातो वसनात। क्वचित्सामीप्ये, यथोदकात गत उदकसमीपे गत इति। क्वचिदवसाने वर्तते यथा ससारात गत ससारावसान गत इति। तत्रेह विवक्षातोवसानगतिर्वेदितव्या। वनस्पत्यताना, वनस्पत्यवसानानामिति।

**सामीप्यवचने हि वायुत्रससंप्रत्ययप्रसंगः ॥ २ ॥** वनस्पत्यंताना वनस्पतिसमीपानामित्यर्थे गृह्यमाणे वायुकायिकाना त्रसाना च सप्रत्यय प्रसज्येत ?

**अंतशब्दस्य संबंधिशब्दत्वादादिसंप्रत्ययः ॥ ३ ॥** अयमत शब्द सबंधिशब्दत्वात् कांश्चित् पूर्वानपेक्ष्य वर्तते, ततोर्थादादिसप्रत्ययो भवति। तस्मादयमर्थो गम्यते, पृथिव्यादीना वनस्पत्यतानामेकमिंद्रियमिति। अत्राह—

**अविशिष्टैकेंद्रियप्रसंगोऽविशेषात् ॥४॥** पृथिव्यादीना वनस्पत्यताना स्पर्शनादिषु चाविशिष्टमेकमिंद्रिय प्राप्नोति। कुत ?, अविशेषात्। न हि कश्चिद्विशेषोस्त्यनेनैवैकेन भवितव्यमिति। सख्यावाची ह्ययमेकशब्द ?

**न वा प्राथम्यवचने स्पर्शनसंप्रत्ययात् ॥ ५ ॥** नवैष दोष। किं कारण ? प्राथम्यवचने स्पर्शन सप्रत्ययात्। अयमेकशब्द प्राथम्यवचन[1]। सूत्रपाठे च प्राथम्यमाश्रित, तत स्पर्शनस्य सप्रत्ययो भवति। अस्ति च लोके प्राथम्यवचन, एको गोत्रे प्रथमो गोत्र इति। तस्योत्पत्तिकारणमुच्यते— वीर्यांतरायस्पर्शनेंद्रियावरणक्षयोपशमे शेषेंद्रियसर्वघातिस्पर्धकोदये च शरीरांगोपांगलाभोपष्टभे, एकेंद्रियजातिनामोदयवशवर्तिताया च सत्या, स्पर्शनमेकमिंद्रियमाविर्भवति। इतरेषामिंद्रियाणां स्वामित्वप्रदर्शनार्थमाह—

## कृमिपिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानि ॥ २३ ॥

**एकैकमिति वीप्सानिर्देशः ॥ १ ॥** एकैकमितिशब्दो वीप्साया द्रष्टव्य।

**बहुत्वनिर्देशः सर्वेंद्रियापेक्षः ॥ २ ॥** सर्वाणींद्रियाण्यपेक्ष्य बहुत्वनिर्देश. कृत। एकैकवृद्धमेषा तान्येकैकवृद्धानीति। तत्र किं पूर्वमुत्तर ? इति सदेह —

**असंदिग्धं स्पर्शनमेकैकेन वृद्धमित्यादिविशेषणात् ॥ ३ ॥** स्पर्शनमित्यनुवर्तते तदारभ्यैकैकेन वृद्धमित्यादि विशेषणात् नास्ति सदेह। तत्कथ ?

**वाक्यांतरोपप्लवात् ॥ ४ ॥** अस्मात्रिवचनव्याख्यानाद्वाक्याद्वाक्यांतराण्युपप्लवते यथा— अक्ष इत्येतस्मादक्षो भक्ष्यता, अक्षो भज्यता, अक्षो दीव्यतामिति वाक्यांतरोपप्लव क्रियते। एवमिहापि स्पर्शन रसनवृद्ध कृम्यादीना। स्पर्शनरसने घ्राणवृद्धे पिपीलिकादीना। स्पर्शनरसनघ्राणानि चक्षुर्वृद्धानि भ्रमरादीना। तानि श्रोत्रवृद्धानि मनुष्यादीनामिति वाक्यांतराण्युपप्लवते।

**आदिशब्दः प्रकारे व्यवस्थायां वा वेदितव्यः ॥ ५ ॥** यदागमो नापेक्षितस्तदा प्रकारे कृमिप्रकारा कृम्यादय इति। यदा त्वागमोऽपेक्षते तदा व्यवस्थाया, आगमे हि ते व्यवस्थिता इति तेषा निवृत्ति स्पर्शनोत्पत्त्या व्याख्याता, उत्तरोत्तरसर्वघातिस्पर्धकोदयेन। एवमेतेषु ससारिषु द्वित्रिचतुरिंद्रियभेदात्पचविधेषु ये पचेंद्रियास्तद्भेदस्यानुक्तस्य प्रतिपत्त्यर्थमाह—

---

१ प्राथम्यवचन एकशब्द इत्यर्थ।

## संज्ञिनः समनस्काः ॥ २४ ॥

मनो व्याख्यातं सह तेन ये वर्तन्ते ते संज्ञिनः। अत्र चोद्यते—

**समनस्कविशेषणमनर्थकं संज्ञिशब्देन गतत्वात् ॥ १ ॥** संज्ञिन इत्यनेनैव विशेषणेन गतत्वात्समनस्का इति विशेषणमनर्थकं। कथमिति चेदुच्यते—

**हिताहितप्राप्तिपरिहारयोर्गुणदोषविचारणात्मिका संज्ञा ॥ २ ॥** इदं हितमिदमहितमस्य प्राप्तौ परिहारे चायं गुणोऽयं दोष इति च विचारणात्मिका संज्ञेत्युच्यते।

**शीतादिपाठादिति, सिद्धिः ॥३॥** तस्मात्समनस्कशब्दोपात्तादिपाठादिति सति संज्ञिन इति सिध्यति।

**न वा शब्दार्थव्यभिचारात् ॥ ४ ॥** सञ्ज्ञाशब्दार्थो हि व्यभिचरति तत्र को दोष संज्ञाना ?, इति चेन्निरर्थाभावो (?) यदि सञ्ज्ञाशब्दः अभिधीयते सा सर्वेषां प्राणिनां प्रतिनियतासीत्यसाद्विनाशाभावात्सिनिरर्थाभाव स्यात्। संज्ञानं संज्ञा ज्ञानमिति चेत्तस्य को निरर्थाभाव ?, सर्वेषां प्राणिनां ज्ञानात्मकत्वात्।

**आहारादिसंज्ञेति चेन्नाऽनिष्टत्वात् ॥ ५ ॥** स्यादेतदाहार–भय–मैथुन–परिग्रहविषया संज्ञेति ? तन्न किं कारणमनिष्टत्वात्। सर्वे हि संसारिण आहार-भय-मैथुन-परिग्रहसंज्ञासंनिधानात्संज्ञिनः स्युः। अनिष्टं चैतत्तस्मात्समनस्का इति विशेषणार्थवत्। एवं च कृत्वा गर्भाण्ड–मूर्छित–सुषुप्ताद्यवस्थासु हिताहितपरीक्षाभावेऽपि मनःसंनिधानात् संज्ञित्वमुपपन्नं भवति। यद्यस्य संसारिणो हिताहितप्राप्तिनिवृत्तिहेतुः परिस्पदो मनःकारणसंनिधाने सति भवति। अथाभिनवशरीरं प्रत्यागूर्णस्य विशीर्णपूर्वमूर्तेरमनसो निर्मनस्कस्य यत्कर्म तत्कुतः ? इत्यत्रोच्यते—

## विग्रहगतौ कर्मयोगः ॥ २५ ॥

अथवा यदि सम्प्रधार्य समनस्काः प्राणिनः क्रियाः प्रारभन्ते भिन्नदेहस्याऽसति मनस्युपपादक्षेत्रं प्रत्याभिमुख्येन या प्रवृत्तिर्विग्रहार्था सा कुतो भवतीत्यत आह विग्रहगतौ कर्मयोग इति—

**विग्रहो देहस्तदर्था गतिर्विग्रहगतिः ॥ १ ॥** औदारिकादिशरीरनामोदयात्तन्निर्वृत्तिसमर्थान्विविधान् गृह्णाति विगृह्यते वासौ संसारिणेति विग्रहो देहः, विग्रहाय गतिर्विग्रहगतिः। ननु विकृतिप्रकृत्यभिसंबन्धे सति तादर्थ्ये वृत्तिः, इह विकृतिप्रकृत्यसंबन्धाभावादवृत्तिर्न प्राप्नोति ? नैष दोषः अश्वघासादिवद्वृत्तिर्वेदितव्या तादर्थ्यं चतुर्थ्या वाक्ये प्रदर्श्यते।

**विरुद्धो ग्रहो विग्रहो व्याघात इति वा ॥ २ ॥** अथवा विरुद्धो ग्रहो विग्रहो व्याघातः पुद्गलाधाननिरोध इत्यर्थः।

**विग्रहेण गतिर्विग्रहगतिः ॥ ३ ॥** आधाननिरोधेन गतिरित्यर्थः।

**कर्मेति सर्वशरीरप्ररोहणसमर्थं कार्मणं ॥ ४ ॥** सर्वाणि शरीराणि यतः प्ररोहन्ति तद्बीजभूतं कार्मणं शरीरं कर्मेत्युच्यते।

**योग आत्मप्रदेशपरिस्पदः ॥५॥** कायादिवर्गणानिमित्त आत्मप्रदेशपरिस्पदः योग इत्याख्यायते।

**कर्मनिमित्तो योगः कर्मयोग ॥ ६ ॥** तस्यां विग्रहगतौ कार्माणशरीरकृतो योगो भवति यत्कृतं कर्मादानं। यदुपपादिता चाऽमनस्कस्यापि विग्रहार्था गतिः। अथाकाशप्रदेशेषु परमाणुप्रतिष्ठासम्बन्धेनोपचरितेष्वाधेया जीवपुद्गला देशान्तरप्राप्तिं प्रत्यभिमुखाः किं निराकृतप्रदेशक्रमा व्यक्त्यामभिनिर्वर्तयन्ति, उताक्रान्तप्रदेशक्रमामिति विचारे सति तन्निर्धारणार्थमाह—

## अनुश्रेणिगतिः ॥ २६ ॥

**आकाशप्रदेशपंक्तिः श्रेणिः ॥ १ ॥** लोकमध्यादारभ्योर्ध्वमधस्तिर्यक्क्रमाकाशप्रदेशानां ( क्रमसन्निविष्टानां ) पंक्तिः श्रेणिरित्युच्यते।

**अनोरानुपूर्व्ये वृत्तिः ॥ २ ॥** अनुशब्दस्यानुपूर्व्ये वृत्तिर्भवति श्रेणिरानुपूर्व्येणानुश्रेणिरिति।

**जीवाधिकारात्पुद्गलासंप्रत्यय इति चेन्न गतिग्रहणात् ॥ ३ ॥** स्यादेतज्जीवाधिकारात्पुद्गलानामनुश्रेणिगतिसंप्रत्ययो न भवतीति ? तन्न। किं कारणं ? गतिग्रहणात्। यदि हि जीवस्यैव गतिरिहेष्टा स्याद् गत्यधिकारे पुनर्गतिग्रहणमनर्थकं स्यात्ततो ज्ञायते सर्वेषां गतिमतां गतिर्गृह्यते।

**क्रियांतरे निवृत्त्यर्थं गतिग्रहणमितिचेन्नावस्थानाद्यसंभवात् ॥ ४ ॥** स्यान्मतं गतिग्रहणं क्रियांतरनिवृत्त्यर्थं गतिरेव नान्या क्रियेति ? तन्न किं कारणमवस्थानाद्यसंभवात्। न विग्रहगतिमापन्नस्य जतोरवस्थानशयनादयः क्रियाः संभवति।

**उत्तरसूत्रे जीवग्रहणाच्च ॥ ५ ॥** "अविग्रहा जीवस्य" इत्युत्तरत्र जीवग्रहणाच्च मन्यामहे इहोभयगतिराश्रितेति।

**विश्रेणिगतिदर्शनान्नियमायुक्तिरितिचेन्न कालदेशनियमात् ॥ ६ ॥** स्यादेतद्विश्रेणिगतिरपि दृश्यते चक्रादीनां ज्योतिषां च मेरुप्रदक्षिणगतीनां मंडलिकवायूनां विद्याधराणां च मेर्वादिप्रदक्षिणकाले, ततोऽनुश्रेणिगतिरिति नियमो नोपपद्यते ? तन्न। किं कारणं कालदेशनियमात्। कालनियमस्तावज्जीवानां मरणकाले भवांतरसंक्रमे। मुक्तानां चोर्ध्वगमनकालेऽनुश्रेण्येव गतिः। देशनियमोपि चोर्ध्वलोकादधोगतिरधोलोकाच्चोर्ध्वगतिस्तिर्यग्लोकाच्चाधोगतिरूर्ध्वं वानुश्रेण्येव। पुद्गलानामपि च या लोकांतप्रापणी सा नियमादनुश्रेणिगतिः। यात्वन्या सा भजनीया। ततो भ्रमणरेचनादिगतिः सिद्धा। पूर्वभावप्रज्ञापकनयावभासितव्यवहारमतनीय रूढिवशाद्वा विनिर्मुक्तकर्मबंधनस्यापि जीवत्वमवधृत्येदमुपादिक्षत्—

## अविग्रहा जीवस्य ॥ २७ ॥

विग्रहो व्याघातः कौटिल्यमित्यनर्थांतरं स यस्यां न विद्यतेऽसावविग्रहा गतिः, कस्य ? जीवस्य। कीदृशस्य ? मुक्तस्य। कथं गम्यते ?—

**उत्तरत्र संसारिग्रहणादिह मुक्तगतिः ॥ १ ॥** उत्तरसूत्रे संसारिग्रहणादिह मुक्तगतिर्विज्ञायते किमर्थमिदमुच्यते ? ननु श्रेण्यंतरसंक्रमो विग्रहस्तस्याभावोनुश्रेणिगतिरित्यनेनैव सिद्धः, नार्थोऽनेन ? इदं प्रयोजनं पूर्वसूत्रे जीवपुद्गलानां कश्चिद्विश्रेणिरपि गतिर्भवतीत्येतस्य ज्ञापनार्थं। ननु तत्रैवोक्तं कालदेशनियमादनुश्रेणिर्भवति न सर्वत्रेति, न अतस्तत्सिद्धेः। यद्यसंगस्यात्मनोऽप्रतिबंधेन गतिरालोकांतादवधृतकाला प्रतिज्ञायते सदेहस्य पुनर्गतिः किं प्रतिबंधिन्युत मुक्तात्मवदिति परिप्रश्ने सतीदमुच्यते—

## विग्रहवती च संसारिणः प्राक्चतुर्भ्यः ॥ २८ ॥

**कालपरिच्छेदार्थं प्राक्चतुर्भ्य इति वचनं ॥ १ ॥** समयो वक्ष्यते चतुर्भ्यः समयेभ्यः प्राक् विग्रहवती गतिर्भवतीति कालपरिच्छेदार्थं प्राक्चतुर्भ्य इत्युच्यते। ऊर्ध्वं कस्मान्नेतिचेत् ? विग्रहनिमित्ताभावात्। सर्वोत्कृष्टविग्रहनिमित्तनिष्कुटक्षेत्रे उत्पित्सुः प्राणी निष्कुटक्षेत्रानुपूर्व्यर्जुश्रेण्यभावात्, इषुगत्यभावे निष्कुटक्षेत्रप्रापणनिमित्तां त्रिविग्रहां गतिमारभते नोर्ध्वं तथाविधोपपादक्षेत्राभावात्। तेनैव च कालेनोपपादक्षेत्रप्राप्तेः षष्टिकायात्मलाभवत्। यथा षष्टिकादीनां व्रीहीणां परिच्छिन्नकालावधिपरिपाको न न्यूनेन नाप्यधिकेनेह तथान्तरभवे कालनियमो वेदितव्यः।

**चशब्दः समुच्चयार्थः ॥ २ ॥** चशब्द उपपादक्षेत्र प्रति ऋज्वी गतिरविग्रहा, कुटिला विग्रहवती।

**आङ्ग्रहण लघ्वर्थमिति चेन्नाभिविधिप्रसंगात् ॥ ३ ॥** स्यादेतदाङ्ग्रहण कर्तव्य लघ्वर्थमिति ? तन्न किं कारण ? अभिविधिप्रसङ्गात्। तेन चतुर्थसमयमभिव्याप्य विग्रह प्रवर्तेते स चानिष्ट ॥

**उभयसभवे व्याख्यानान्मर्यादासंप्रत्यय इति चेन्न प्रतिपत्तेर्गौरवात् ॥ ४ ॥** स्यान्मत मर्यादाभिविध्योराङ् तत्र व्याख्यानतो विशेषप्रतिपत्तिरिति मर्यादासप्रत्यय इत्याद्यपि सति न दोष इति ? तन्न। किं कारण ? प्रतिपत्तेर्गौरवात्। एव सति प्रतिपत्तेर्गौरव स्यात्, तस्माद्विस्पष्टार्थं प्राग्ग्रहण क्रियते। आसां चतसृणां गतीनामार्षोक्ता सज्ञा —इषुगति, पाणिमुक्ता, लागलिका, गोमूत्रिका, चेति। तत्राविग्रहा प्राथमिकी, शेषा विग्रहवत्य। इषुगतिरिवेषुगति, क उपमार्थ ? यथेषोर्गतिरालक्ष्यदेशादृज्वी, तथा ससारिणां सिध्यता च जीवानां ऋज्वी गतिरेकसमयिकी। पाणिमुक्तेव पाणिमुक्ता, क उपमार्थ ? यथा पाणिना तिर्यक् प्रक्षिप्तस्य द्रव्यस्य गतिरेकविग्रहा तथा ससारिणामेकविग्रहा गति पाणिमुक्ता द्वैसमयिकी। लागलमिव लागलिका, क उपमार्थ ? यथा लागल द्विवक्रित, तथा द्विविग्रहा गतिर्लांगलिका त्रैसमयिकी। गोमूत्रिकेव गोमूत्रिका, क उपमार्थ ? यथा गोमूत्रिका बहुवक्रा, तथा त्रिविग्रहा गतिर्गोमूत्रिका चातु समयिकी। यद्यमुष्या विग्रहवत्या क्रियायाश्चातु समयिक्यवस्था निर्धार्यते परिलक्तव्याबाधा पुनर्गति कियत्काला भवतीत्यत आह—

## एकसमयाऽविग्रहा ॥ २९ ॥

**अधिकृतगतिसामानाधिकरण्यात् स्त्रीलिंगनिर्देशः ॥ १ ॥** गतिरधिकृता तत्सामानाधिकरण्यादत्र स्त्रीलिंगनिर्देशो द्रष्टव्य, एक समयोऽस्या एकसमया, न विद्यते विग्रहोऽस्याऽविग्रहेति। गतिमता हि जीवपुद्गलानामव्याघातेनैकसमयिकी गतिरालोकान्तादपीति।

**आत्मनोऽक्रियावत्त्वसिद्धेरयुक्तमिति चेन्न क्रियापरिणामहेतुसद्भावाल्लोष्टवत् ॥ २ ॥** स्यादेतत्सर्वगतत्वान्निष्क्रियस्यात्मन क्रियावत्व नास्ति ततो गतिकल्पनमयुक्तमिति ? तन्न। किं कारण ? क्रियापरिणामहेतुसद्भावात्, कथ ? लोष्टवत्। यथा लोष्ट स्वय क्रियापरिणामित्वाद्बाह्याभ्यन्तरकारणापेक्षो देशांतरप्राप्तिसमर्थां क्रियामारभमाणो दृष्ट। तथात्मा कर्मवशात् शरीरपरिणामानुविधायी तद्विधेया क्रियामास्कन्दति। तदभावे च प्रदीपशिखावत् स्वाभाविकीमिति नास्ति दोष। सर्वगतत्वे तु ? ससाराभाव। यदि च सर्वगत आत्मा स्यात् ? क्रियाभावात्ससाराभाव स्यात्। बधसततिं प्रत्यनादौ कर्मोपचयहेतुसंबंधेन चादिमति पचविधेपि द्रव्यक्षेत्रकालभवभावे मिथ्यादर्शनादिप्रत्ययसनिधाने च सत्युपयोगात्मकोऽयमात्मा सातत्येन कर्माण्याददानो विग्रहगतावप्याहारक प्रसक्तस्ततो नियमार्थमिदमुच्यते—

## एकं द्वौ त्रीन्वाऽनाहारकः ॥ ३० ॥

**समयसप्रत्ययः प्रत्यासत्तेः ॥ १ ॥** एकसमया विग्रहा' इत्यत्र समयशब्द उक्तस्तेनेह प्रत्यासत्तेरभिसबधो वेदितव्य। एक समय, द्वौ समयौ, त्रीन्समयान् इति। ननु च तत्र समयशब्द उपसर्जनीभूत कथमिहाभिसबध्यते ? अन्यस्यासभवात् सामर्थ्यात्सबधो द्रष्टव्य।

**वा शब्दोत्र विकल्पार्थो ज्ञेयः ॥ २ ॥** विकल्पश्च यथेच्छातिसर्गे, एक वा द्वौ वा त्रीन्वेति।

**सप्तमीप्रसंग इति चेन्नात्यंतसयोगस्य विवक्षितत्वात् ॥ ३ ॥** स्यादेतदाहरणक्रियाया अधिकरण काल इति सप्तमी प्राप्नोतीति ? तन्न किं कारण ? अत्यतसयोगस्य विवक्षितत्वात्। अत्यतसयोगे हि तदपवादा द्वितीया विधीयते ॥

**त्रयाणां शरीराणा षण्णां पर्याप्तीनां योग्यपुद्गलग्रहणमाहारः ॥ ४ ॥** तेजसकार्मण

शरीरे हि आससारातान्नित्यमुपचीयमानस्वयोग्यपुद्गले, अत शेषाणा त्रयाणां शरीराणामौदारिकवैक्रियिकाहारकाणामाहाराद्यभिलाषकारणानां षण्णा पर्याप्तीनां योग्यपुद्गलग्रहणमाहार इत्युच्यते।

**विग्रहगतावसंभवादाहारकशरीरनिवृत्तिः ॥ ५ ॥** ऋद्धिप्राप्तानामृषीणामाहारकशरीरमाविर्भवति इति विग्रहगतौ तस्यासंभवान्निवृत्ति ।

**शेषाहाराभावो व्याघातात् ॥६॥** विग्रहगतौ शेषस्याहारस्याभाव, कुतश्च[१] व्याघातात्, अष्टविधकर्मपुद्गलसूक्ष्मपरिणतोपचितमूर्तिकार्मणशरीरवशात् प्रावृट्कालपरिणतजलधरनिर्गतसलिलग्रहणसमर्थनिक्षिप्ततप्तायससायकवत् पूर्वदेहनिर्वृत्तिसमुद्घात[२] दुःखोष्मत्वाद्व्रजन्नप्याहारकः, वक्रगतिवशादेक द्वौ त्रीन्वा समयाननाहारको भवति। तत्रैकसमयिक्यामिषुगतौ उक्तमाहारमनुभवन्नेव गच्छति। पाणिमुक्तायामेकविग्रहाया द्विसमयाया प्रथमसमयेऽनाहारक। लांगलिकाया द्विविग्रहाया त्रिसमयाया प्रथमद्वितीयो समययोरनाहारकस्तृतीये आहारक। गोमूत्रिकाया त्रिविग्रहाया चतु समयाया चतुर्थसमये आहारक इतरेष्वनाहारक। तस्य खलु ससारिण शुभाशुभफलप्रदकार्मणशरीरानुगृहीतक्रियाविशेषस्यानुश्रेण्यास्कदत पूर्वोपात्तानुभवन प्रति कर्मभिरापूर्यमाणस्याविग्रहविग्रहवक्रमनद्वयाक्षिप्तदेशान्तरस्याभिनवमूर्त्यंतरनिर्वृत्तिप्रकारप्रतिपादनार्थमिदमाह—

## संमूर्छनगर्भोपपादा जन्म ॥ ३१ ॥

**समंततो मूर्छनं संमूर्छनं ॥१॥** त्रिषु लोकेषूर्ध्वमधस्तिर्यक् च देहस्य समततो मूर्छनमवयवप्रकल्पन।

**शुक्रशोणितगरणाद्गर्भः ॥ २ ॥** यत्र शुक्रशोणितयोर्गरण मिश्रण भवति स गर्भ ।

**मात्रोपभुक्ताहारात्मसात्करणाद्वा ॥३॥** अथवा मात्रोपभुक्तस्याहारस्यात्मसात्करणाद्गरणाद्गर्भ ।

**उपेत्युपपद्यतेऽस्मिन्नित्युपपादः ॥ ४ ॥** हल इत्यधिकरणसाधनो घञ्। देवनारकोत्पत्तिस्थानविशेषस्य सज्ञेति। एते त्रय ससारिणा जीवाना जन्मप्रकारा।

**संमूर्छनग्रहणमादौ अतिस्थूलत्वात् ॥ ५ ॥** समूर्छनज हि शरीरमतिस्थूलमतोऽस्य ग्रहणमादौ क्रियते। ननु गर्भजशरीरमपि वैक्रियिकशरीरादतिस्थूल तयो कस्यादौ वचन न्याय्यमित्युच्यते—

**अल्पकालजीवित्वात् संमूर्छनं ॥ ६ ॥** गर्भौपपादिकजीवेभ्य समूर्छनजा प्राणिनोऽल्पकालजीविनस्तत समूर्छनस्यादौ न्याय्य। किं च—

**तत्कार्यकारणप्रत्यक्षत्वात् ॥ ७ ॥** गर्भोपपादजन्मनो कार्यकारणेऽप्रत्यक्षे यत्पुन समूर्छनजन्मन कारण मासादि तत्कार्यं च शरीर तदुभयलोके प्रत्यक्ष ततश्चास्यादौ ग्रहण क्रियते।

**तदनंतरं गर्भग्रहणं कालप्रकर्षनिष्पत्तेः ॥ ८ ॥** गर्भजन्म हि समूर्छनजन्मन कालप्रकर्षेण निष्पद्यते ततस्तदनतर तस्य ग्रहण न्याय्य।

**उपपादग्रहणमंते दीर्घजीवित्वात् ॥ ९ ॥** समूर्छनजेभ्यो गर्भजेभ्यश्चौपपादिका दीर्घजीविन इत्यंते गृहण क्रियते। किं कृतोय जन्मविकल्प इत्युच्यते—

**अध्यवसायविशेषात्कर्मभेदे तत्कृतो जन्मविकल्पः ॥ १० ॥** अध्यवसाय परिणाम सोऽसख्येयलोकविकल्प तद्भेदात्तत्कार्यकर्मबंधविकल्पस्ततस्तत्फल जन्मविकारो वेदितव्य। कारणानुरूप हि लोके दृश्यते कार्यं। शुभाशुभलक्षण कर्म तद्रूपमेव जन्म प्रादुर्भावयति।

**प्रकारभेदाज्जन्मभेद इति चेन्न तद्विषयसामान्योपादानात् ॥ ११ ॥** स्यादेतत्प्रकारा बहव स्तत्सामानाधिकरण्याज्जन्मनोपि बहुत्व प्राप्नोति यथा जीवादय पदार्था इति ? तन्न। किं कारण? तद्विषयसामान्योपादानात् तत्प्रकारविषयमिह सामान्य जन्मशब्देनोपादीयते, तत एकत्वनिर्देश, यथा जीवादयस्तत्त्वमिति। अथाधिकृतस्य ससारिविषयोपभोगलब्ध्यधिष्ठानप्रवणस्य जन्मनो योनिविकल्पो वक्तव्य इत्यत आह—

१ द्वितीयातमेतत्। २ दुःखोष्णत्वादित्यपि ग पुस्तके पाठ।

## सचित्तशीतसंवृताः सेतरा मिश्राश्चैकशस्तद्योनयः ॥ ३२ ॥

**आत्मनः परिणामविशेषश्चित्तं ॥ १ ॥** आत्मनश्चैतन्यस्य परिणामविशेषश्चित्त, तेन सह वर्तत इति सचित्ता ।

**शीत इति स्पर्शविशेषः ॥ २ ॥** शीत इत्यनेन स्पर्शविशेषो गृह्यते, शुक्लादिवदुभयवचनत्वा-त्तद्युक्त द्रव्यमप्याह ।

**संवृतो दुरुपलक्षः ॥ ३ ॥** सम्यग्वृत संवृत इति दुरुपलक्ष प्रदेश उच्यते ।

**सेतराः सप्रतिपक्षाः ॥४॥** सह इतरै सेतरा सप्रतिपक्षा इत्यर्थ के पुनरितरे ? अचित्तोष्णविवृत्ता ।

**मिश्रग्रहणमुभयात्मकसंग्रहार्थं ॥ ५ ॥** मिश्रग्रहण क्रियते उभयात्मकसंग्रहार्थं सचित्ताचि-त्तशीतोष्णसंवृतविवृता इति ।

**चशब्दः प्रत्येकसमुच्चयार्थः ॥ ६ ॥** मिश्राश्चेति च शब्द क्रियते प्रत्येकसमुच्चयार्थ । इतरथा हि पूर्वोक्तानामेव विशेषण स्यात् । तेन सचित्त-शीत-संवृता सेतरा यदा मिश्रास्तदा योनयो भवतीत्ययमर्थो लभ्येत । चशब्दे पुन सचित्तादय प्रत्येक च योनयो भवती मिश्राश्चेत्ययमर्थो लभ्य । न चातेरणापि तत्प्रती-ते । नैतत् प्रयोजनमस्ति कुतोऽन्तरेणापि तत्प्रतीतिरन्तरेणापि हि चशब्द समुच्चयार्थ प्रतीयते यथा पृथिव्यापस्ते-जोवायुरिति । ननु चोक्तमितरथा हि पूर्वोक्तानामेव विशेषण स्यादिति नैष दोष विशेषणस्य समुच्चयस्य चैं सभवे समुच्चय इति व्याख्यायते ।

**इतरयोनिभेदसमुच्चयार्थस्तु ॥ ७ ॥** सूत्रेऽनुक्ताना योनिभेदाना समुच्चयार्थस्तर्हि चशब्द । के पुनस्ते ? उत्तरत्र वक्ष्यते ।

**एकशो ग्रहणं क्रममिश्रप्रतिपत्त्यर्थं ॥ ८ ॥** एकैक, एकश इति वीप्सायां शस्, तस्य ग्रहण क्रम-मिश्रप्रतिपत्त्यर्थं । यथैव विज्ञायेत सचित्तश्चाऽचित्तश्च शीतश्चोष्णश्च संवृतश्च विवृतश्चेति । मैव विज्ञायि सचित्त शीतश्चेत्यादि ।

**तद्ग्रहणं क्रियते प्रकृतापेक्षार्थ ॥ ९ ॥** तेषा योनयस्तद्योनय केषा संमूर्छनादीनामिति ।

**यूयत इति योनि ॥ १० ॥ सचित्तादिद्वंद्वे पुंवद्भावाभावो भिन्नार्थत्वात् ॥ ११ ॥** योनि शब्दोय स्त्रीलिंगस्तदपेक्षास्सचित्तादय शब्दा स्त्रीलिंगास्तेषा द्वंद्वे पुंवद्भावो न प्राप्नोति सचित्ताश्च शीताश्च संवृताश्च सचित्तशीतसंवृता इति । कुत ? भिन्नार्थत्वादेकाश्रये हि पुंवद्भाव उक्त ? ।

**न वा योनिशब्दस्योभयलिंगत्वात् ॥ १२ ॥** न वैष दोष, किं कारण ? उभयलिंगत्वाद्योनिश-ब्दस्य, इह पुलिंगो वेदितव्य ।

**योनिजन्मनोरविशेष इति चेन्नाऽऽधाराधेयभेदाद्विशेषोपपत्तेः ॥ १३ ॥** स्यान्मत योनिजन्म-नोरविशेष ? यत आत्मैव देवादिजन्मपर्यायादौपपादिक इत्युच्यते सैव च योनिरिति ? तन्न किं कारण ? आधा-राधेयविशेषोपपत्ते । आधारो हि योनिराधेय जन्म, यत सचित्तादियोन्यधिष्ठान आत्मा समूर्छनादिजन्मना शरीराहारेंद्रियादियोग्यान् पुद्गलानादत्ते ।

**सचित्तग्रहणमादौ चेतनात्मकत्वात् ॥ १४ ॥** सचित्तग्रहणमादौ क्रियते कुतश्चेतनात्मकत्वात्, चेतनात्मको लोके ह्यर्थ प्रधान ।

**तदनंतर शीताभिधान तदाप्यायनहेतुत्वात् ॥ १५ ॥** तदनंतर शीताभिधान क्रियते कुत-स्तदाप्यायनहेतुत्वात् सचेतनस्य ह्यर्थस्य शीतमाप्यायनकारण भवति ।

---

१ ग पुस्तके वार्तिकस्वरूपे पठितमिद वाक्य । २ चशब्दमतरेणापीत्यर्थ । ३ नाय ग पुस्तके चकार ।

शरीरे हि आमसारातान्नित्यमुपचीयमानस्तयोग्यपुद्गले, अत शेपाणा त्रयाणां शरीराणामौदारिकवैक्रियिकाहारकाणामाहाराद्यभिलापकारणाना पण्णा पर्याप्तीना योग्यपुद्गलग्रहणमाहार इत्युच्यते ।

**विग्रहगतावसंभवादाहारकशरीरनिवृत्तिः ॥ ५ ॥** ऋद्धिप्राप्तानामृषीणामाहारकशरीरमाविर्भवति इति विग्रहगतौ तस्यासभवान्निवृत्ति ।

**शेषाहाराभावो व्याघातात् ॥६॥** विग्रहगतौ शेपस्याहारस्याभाव, कुतश्च[2] व्याघातात्, अष्टविधकर्मपुद्गलसूक्ष्मपरिणतोपचितमूर्तिकार्मणशरीरवशात् प्रावृट्कालपरिणतजलधरनिर्गतसलिलग्रहणसमर्थ निक्षिप्ततप्तायसायकवत् पूर्वदेहनिवृत्तिसमुद्वात दुं खोष्मत्वाद्व्रजन्नप्याहारक, चक्रगतिवशादेक द्वौ त्रीन्वा समयाननाहारको भवति । तत्रैकसमयिक्यामिषुगतौ उक्तमाहारमनुभवन्नेव गच्छति । पाणिमुक्तायामेकविग्रहाया द्विसमयाया प्रथमसमयेऽनाहारक । लागलिकाया द्विविग्रहाया त्रिसमयाया प्रथमद्वितीयो समययोरनाहारकस्तृतीये आहारक । गोमूत्रिकाया त्रिविग्रहाया चतु समयाया चतुर्थसमये आहारक इतरेष्वनाहारक । तस्य खलु ससारिण शुभाशुभफलप्रदकार्मणशरीरानुगृहीतक्रियाविशेपस्यानुश्रेण्यास्कदत पूर्वोपात्तानुभवन प्रति कर्मभिरापूर्यमाणस्याविग्रहविग्रहवद्भ्रमनद्याक्षिप्तदेशांतरस्याभिनवमूर्त्यंतरनिर्वृत्तिप्रकारप्रतिपादनार्थमिदमाह—

## संमूर्छनगर्भोपपादा जन्म ॥ ३१ ॥

**समंततो मूर्छनं संमूर्छन ॥१॥** त्रिपु लोकेपूर्ध्वमधस्तिर्यक् च देहस्य समततो मूर्छनमवयवप्रकल्पन ।

**शुक्रशोणितगरणाद्गर्भः ॥ २ ॥** यत्र शुक्रशोणितयोर्गरण मिश्रण भवति स गर्भ ।

**मात्रोपभुक्ताहारात्मसात्करणाद्वा ॥३॥** अथवा मात्रोपभुक्तस्याहारस्यात्मसात्करणाद्गरणाद्गर्भ ।

**उपेत्युपपद्यतेऽस्मिन्नित्युपपादः ॥ ४ ॥** हल इत्यधिकरणसाधनो घञ् । देवनारकोत्पत्तिस्थानविशेपस्य सज्ञेति । एते त्रय ससारिणा जीवाना जन्मप्रकारा ।

**संमूर्छनग्रहणमादौ अतिस्थूलत्वात् ॥ ५ ॥** समूर्छनज हि शरीरमतिस्थूलमतोस्य ग्रहणमादौ क्रियते । ननु गर्भजशरीरमपि वैक्रियिकशरीरादतिस्थूल तयो कस्यादौ वचन न्याय्यमित्युच्यते—

**अल्पकालजीवित्वात् संमूर्छनं ॥ ६ ॥** गर्भौपपादिकजीवेभ्य समूर्छनजा प्राणिनोऽल्पकालजीविनस्तत समूर्छनस्यादो न्याय्य । किं च—

**तत्कार्यकारणप्रत्यक्षत्वात् ॥ ७ ॥** गर्भोपपादजन्मनो कार्यकारणेऽप्रत्यक्षे यत्पुन समूर्छनजन्मन कारण मासादि तत्कार्यं च शरीर तदुभयलोके प्रत्यक्ष ततश्चास्यादौ ग्रहण क्रियते ।

**तदनंतरं गर्भग्रहणं कालप्रकर्षानिष्पत्तेः ॥ ८ ॥** गर्भजन्म हि समूर्छनजन्मन कालप्रकर्षेण निष्पद्यते ततस्तदनतर तस्य ग्रहण न्याय्य ।

**उपपादग्रहणमंते दीर्घजीवित्वात् ॥ ९ ॥** समूर्छनजेभ्यो गर्भजेभ्यश्चौपपादिका दीर्घजीविन इत्यते ग्रहण क्रियते । किं कृतोय जन्मविकल्प[?] इत्युच्यते—

**अध्यवसायविशेषात्कर्मभेदे तत्कृतो जन्मविकल्पः ॥ १० ॥** अध्यवसाय परिणाम सोऽसख्येयलोकविकल्प तद्भेदात्तत्कार्यकर्मबधविकल्पस्ततस्तत्फल जन्मविकारो वेदितव्य । कारणानुरूप हि लोके दृश्यते कार्यं । शुभाशुभलक्षण कर्म तद्रूपमेव जन्म प्रादुर्भावयति ।

**प्रकारभेदाज्जन्मभेद इति चेन्न तद्विपयसामान्योपादानात् ॥ ११ ॥** स्यादेतत्प्रकारा बहव स्तत्सामानाधिकरण्याज्जन्मनोपि बहुत्व प्राप्नोति यथा जीवादय पदार्था इति ? तन्न । किं कारण ? तद्विपयसामान्योपादानात् तत्प्रकारविपयमिह सामान्य जन्मशब्देनोपादीयते, तत एकत्वनिर्देश, यथा जीवादयस्तत्त्वमिति । अथाधिकृतस्य ससारिविपयोपभोगलब्ध्यधिष्ठानप्रवणस्य जन्मनो योनिविकल्पो वक्तव्य इत्यत आह—

१ द्वितीयांतमेतत् । २ दु खोष्णत्वादित्यपि ग पुस्तके पाठ ।

## सचित्तशीतसवृताः सेतरा मिश्राश्चैकशस्तद्योनयः ॥ ३२ ॥

**आत्मनः परिणामविशेषश्चित्तं ॥ १ ॥** आत्मनश्चैतन्यस्य परिणामविशेषश्चित्त, तेन सह वर्तत इति सचित्ता ।

**शीत इति स्पर्शविशेषः ॥ २ ॥** शीत इत्यनेन स्पर्शविशेषो गृह्यते, शुक्लादिवदुभयवचनत्वात्तद्युक्त द्रव्यमप्याह ।

**सवृतो दुरुपलक्षः ॥ ३ ॥** सम्यग्वृत सवृत इति दुरुपलक्ष प्रदेश उच्यते ।

**सेतराः सप्रतिपक्षाः ॥४॥** सह इतरै सेतरा सप्रतिपक्षा इत्यर्थ के पुनरितरे ? अचित्तोष्णविवृत्ता ।

**मिश्रग्रहणमुभयात्मकसंग्रहार्थं ॥ ५ ॥** मिश्रग्रहण क्रियते उभयात्मकसग्रहार्थं सचित्ताचित्तशीतोष्णसवृतविवृता इति ।

**चशब्द प्रत्येकसमुच्चयार्थः ॥ ६ ॥** मिश्राश्चेति च शब्द क्रियते प्रत्येकसमुच्चयार्थ । इतरथा हि पूर्वोक्तानामेव विशेषण स्यात् । तेन सचित्त-शीत-सवृता सेतरा यदा मिश्रास्तदा योनयो भवतीत्ययमर्थो लभ्येत । चशब्दे पुन सचित्तादय प्रत्येक च योनयो भवती मिश्राश्चेत्ययमर्थो लब्ध । न चातेरणापि तत्प्रतीते । नैतत् प्रयोजनमस्ति कुतोऽन्तरेणापि तत्प्रतीतिरन्तरेणापि हि चशब्द समुच्चयार्थ प्रतीयते यथा पृथिव्यापस्तेजोवायुरिति । ननु चोक्तमितरथा हि पूर्वोक्तानामेव विशेषण स्यादिति नैष दोष विशेषणस्य समुच्चयस्य च सभवे समुच्चय इति व्याख्यायते ।

**इतरयोनिभेदसमुच्चयार्थस्तु ॥ ७ ॥** सूत्रेऽनुक्ताना योनिभेदाना समुच्चयार्थस्तर्हि चशब्द । के पुनस्ते ? उत्तरत्र वक्ष्यते ।

**एकशो ग्रहणं क्रममिश्रप्रतिपत्त्यर्थं ॥ ८ ॥** एकैक, एकश इति वीप्साया शस्, तस्य ग्रहण क्रममिश्रप्रतिपत्त्यर्थं । यथैव विज्ञायेत सचित्तश्चाऽचित्तश्च शीतश्चोष्णश्च सवृतश्च विवृतश्चेति । मैव विज्ञायि सचित्त शीतश्चेत्यादि ।

**तद्ग्रहणं क्रियते प्रकृतापेक्षार्थ ॥ ९ ॥** तेषा योनयस्तद्योनय केषा समूर्छनादीनामिति ।

**यूयत इति योनि ॥ १० ॥ सचितादिद्वद्वे पुंवद्भावाभावो भिन्नार्थत्वात् ॥ ११ ॥** योनि शब्दोय स्त्रीलिंगस्तदपेक्षास्सचित्तादय शब्दा स्त्रीलिंगास्तेषा द्वद्वे पुवद्भावो न प्राप्नोति सचित्ताश्च शीताश्च सवृताश्च सचित्तशीतसवृता इति । कुत ? भिन्नार्थत्वादेकाश्रये हि पुवद्भाव उक्त [1] ।

**न वा योनिशब्दस्योभयलिंगत्वात् ॥ १२ ॥** न वैष दोष, किं कारण ? उभयलिंगत्वाद्योनिशब्दस्य, इह पुलिंगो वेदितव्य ।

[2] **योनिजन्मनोरविशेष इतिचेन्नाऽऽधाराधेयभेदाद्विशेषोपपत्तेः ॥ १३ ॥** स्यान्मत योनिजन्मनोरविशेष ? यत आत्मैव देवादिजन्मपर्यायादौपपादिक इत्युच्यते सैव च योनिरिति ? तन्न किं कारण ? आधाराधेयविशेषोपपत्ते । आधारो हि योनिराधेय जन्म, यत सचित्तादियोन्यधिष्ठान आत्मा समूर्छनादिजन्मना शरीराहारेंद्रियादियोग्यान् पुद्गलानादत्ते ।

**सचित्तग्रहणमादौ चेतनात्मकत्वात् ॥ १४ ॥** सचित्तग्रहणमादौ क्रियते कुतश्चेतनात्मकत्वात्, चेतनात्मको लोके ह्यर्थ प्रधान ।

**तदनतर शीताभिधान तदाप्यायनहेतुत्वात् ॥ १५ ॥** तदनतर शीताभिधान क्रियते कुतस्तदाप्यायनहेतुत्वात् सचेतनस्य ह्यर्थस्य शीतमाप्यायनकारण भवति ।

---

१ ग पुस्तके वार्तिकस्वरूपे पठितमिद वाक्य । २ चशब्दमतरेणापीत्यर्थ । ३ नायं ग पुस्तके चकार ।

अंते संवृतग्रहणं गुप्तरूपत्वात् ॥ १६ ॥ अते सवृतग्रहण क्रियते, कुतः? गुप्तरूपत्वात्। गुप्तरूप हि लोके कर्मग्राह्य भवति।

एक एव योनिरिति चेन्न प्रत्यात्मं सुखदुःखानुभवनहेतुसद्भावात् ॥ १७ ॥ स्यान्मत मेक एव योनिरस्तु सर्वेषा जीवानामिति ? तन्न। किं कारण ? प्रत्यात्म सुखदु खानुभवनसद्भावात्। शुभाशुभ परिणामा हि प्रत्यात्म भिन्नास्तज्जनितश्च कर्मबधो विचित्र, अतस्तेन सुखदु खानुभवनकारण बहुविधमारभ्यते।

तत्राऽचित्तयोनिका देवनारकाः ॥ १८ ॥ देवाश्च नारकाश्चाऽचित्तयोनिकास्तेषा हि योनिरु पपादप्रदेशपुद्गलप्रचयोऽचित्त।

गर्भजा मिश्रयोनयः ॥ १९ ॥ गर्भजा ये जीवास्ते मिश्रयोनयो वेदितव्यास्तेषा हि मातुरुदरे शुक्रशोणितमचित्त, तदात्मना चित्तवता मिश्र।

शेषास्त्रिविकल्पाः ॥ २० ॥ शेषा समूर्छनजास्त्रिविकल्पा भवति। केचित्सचित्तयोनय, अन्येऽचित्तयोनय, परे मिश्रयोनय इति। तत्र सचित्तयोनय साधारणशरीरा। कुत ? परस्पराश्रयत्वात्। इतरेऽचित्तयोनयो मिश्रयोनयश्च।

शीतोष्णयोनयो देवनारकाः ॥ २१ ॥ देवा नारकाश्च शीतयोनयो भवति। उष्णयोनयश्च, तेषा चोपपादनस्थानानि कानि चिदुष्णानि कानि चिच्छीतानीति।

उष्णयोनिस्तेजस्कायिकः ॥ २२ ॥ अग्निकायिको जीव उष्णयोनिर्द्रष्टव्य।

इतरे त्रिप्रकाराः ॥ २३ ॥ इतरे जीवास्त्रिप्रकारयोनयो भवति केचिच्छीतयोनयोऽन्ये, उष्णयोनय, अपरे मिश्रयोनय इति।

देवनारकैकेंद्रियाः संवृतयोनयः ॥ २४ ॥ देवनारका एकेंद्रियाश्च सवृतयोनयो भवति।

विकलेंद्रिया जीवा विवृतयोनयो वेदितव्याः ॥ २५ ॥

मिश्रयोनयो गर्भजाः ॥ २६ ॥ गर्भजा जीवा मिश्रयोनयोऽवगतव्या।

तद्भेदाश्च शब्दसमुच्चिताः प्रत्यक्षज्ञानिदृष्टा इतरेषामागमगम्याश्चतुरशीतिशतसहस्रसंख्याः ॥ २७ ॥ तेषा नवाना योनीना भेदा कर्मभेदजनितविविक्तवृत्तय प्रत्यक्षज्ञानिभिर्दिव्येन चक्षुषा दृष्टा, इतरेषा छद्मस्थानामागमेन श्रुताख्येन गम्याश्चतुरशीतिशतसहस्रसख्या आख्यायते। तद्यथा— नित्यनिगोताना सप्तशतसहस्राणि, अनित्यनिगोताना च सप्तशतसहस्राणि। के पुनर्नित्यनिगोता ? केचाऽनित्यनिगोता ?। त्रिष्वपि कालेषु त्रसभावयोग्या ये न भवति ते नित्यनिगोता त्रसभावमवाप्ता अवाप्स्यति च ये तेऽनित्यनिगोता। पृथिव्यप्तेजोवायूना सप्तशतसहस्राणि, वनस्पतिकायिकाना दशशतसहस्राणि, विकलेंद्रियाणा षट् सहस्राणि, देवनारकपचेंद्रियतिरश्चा प्रत्येक चत्वारिंशत्सहस्राणि, मनुष्याणा चतुर्दशशतसहस्राणि तान्येतानि समुदितानि चतुरशीतिशतसहस्राणि आख्यायते॥ उक्त च— "णिच्चिदरधादुसत्तय तरुदस वियलिंदिएसु छच्चेव सुरणिरयतिरियचउरो चोद्दसमणुए सदसहस्सा इति"। एवमेतास्मिन्नयोनिभेदसकटे त्रिविधे जन्मनि सर्वप्राणिभृतामनियमेन प्रसक्तेऽवधारणार्थमाह—

## जरायुजांडजपोतानां गर्भः ॥ ३३ ॥

जालवत्प्राणिपरिवरणं जरायुः ॥ १ ॥ यज्जालवत्प्राणिपरिवरण विततमासशोणित तज्जरायुरित्युच्यते।

शुक्रशोणितपरिवरणमुपात्तकाठिन्यं नखत्वक्सदृशं परिमंडलमंड ॥ २ ॥ यत्र खलु नखत्वक्सदृशमुपात्तकाठिन्य शुक्रशोणितपरिवरण मडल तदडमित्याख्यायते।

**संपूर्णावयवः परिस्पंदादिसामर्थ्योपलक्षितः पोतः ॥ ३ ॥** किंचित् परिवरणमंतरेण परिपूर्णावयवो योनिनिर्गतमात्र एव परिस्पंदादिसामर्थ्योपेतः पोत इत्युच्यते। जरायौ जाता जरायुजा, अंडे जाता अंडजा, जरायुजाश्चाऽडजाश्च पोताश्च जरायुजांडजपोता।

**पोतजा इत्ययुक्तमर्थभेदाभावात्॥४॥** केचित्पोतजा इति पठंति तदयुक्तं। कुतः? अर्थभेदाभावात् न हि पोते कश्चिदन्यो जातोस्ति॥

**आत्मा पोतज इतिचेन्न तत्परिणामात् ॥ ५ ॥** स्यान्मतमात्मा पोते जातः पोतज इत्यर्थभेदोस्तीति? तन्न किं कारणं? तत्परिणामादात्मैव पोतपरिणामेन परिणतः पोत इत्युच्यते न पृथगात्मनः पोतो नाम कश्चिदस्ति। जरायुजत्पोतोऽजानिष्ट पोतज इतिचेदर्थविशेषो नास्ति॥

**जरायुजग्रहणमादावभ्यर्हितत्वात् ॥ ६ ॥** जरायुजग्रहणमादौ क्रियते कुतोऽभ्यर्हितत्वात् कथमभ्यर्हितत्वं?

**क्रियारंभशक्तियोगात् ॥७॥** अंडजपोतासाधारण्यो हि भाषाध्ययनादयः क्रिया जरायुजेषु दृश्यते।

**केषांचिन्महाप्रभावत्वात् ॥ ८ ॥** तत्र हि जाताः केचन चक्रधरवासुदेवादयो महाप्रभावा भवंति। किं च—

**मार्गफलाभिसंबंधात॥९॥** सम्यग्दर्शनादिमार्गफलेन मोक्षसुखेनाभिसंबंधो नान्येषामित्यभ्यर्हितत्वं।

**तदनंतरमंडजग्रहणं पोतेभ्योभ्यर्हितत्वात् ॥ १० ॥** तदनंतरमंडजग्रहणं क्रियते। कुतः? पोतेभ्योभ्यर्हितत्वात्। अंडजेषु हि केषुचित् शुकसारिकादयोऽक्षरोच्चारणादिषु क्रियासु कुशला भवंतीत्यभ्यर्हिता पोतेभ्यः।

**उद्देशवन्निर्देश इति चेन्न गौरवप्रसंगात् ॥ ११ ॥** स्यान्मतमुद्देशवन्निर्देशेन भवितव्यमिति संमूर्छनजानां प्राग्ग्रहणं कर्तव्यमिति? तन्न किं कारणं? गौरवप्रसंगात्। यदि हि संमूर्छनजनिर्देश आदौ क्रियते शास्त्रगौरवं स्यादेकद्वित्रिचतुरिंद्रियाणां पंचेंद्रियाणां तिरश्चां मनुष्याणां च केषांचित्संमूर्छनं, इत्यतो गर्भजोपपादिकानुक्त्वा शेषाणां संमूर्छनमिति लघुनोपायेन निर्देक्ष्यामीत्युद्देशक्रमोऽतिक्रांतः।

**सिद्धे विधिरवधारणार्थः ॥ १२ ॥** जरायुजादीनां सामान्येन सिद्धे गर्भजन्मसंबंधे पुनर्विधिरारभ्यमाणो नियमार्थः, जरायुजांडजपोतानामेव। गर्भ एवेति नियमः कस्मान्न भवति? उत्तरत्र शेषाणामिति वचनात्। यद्यमीषां जरायुजांडजपोतानां गर्भोभिधीयते, अथोपपादः खलु केषां भवतीत्यत आह—

## देवनारकाणामुपपादः ॥ ३४ ॥

**देवादिगत्युदय एवास्य जन्मेति चेन्न शरीरनिर्वर्तकपुद्गलाभावात् ॥ १ ॥** स्यान्मतं मनुष्यस्तैर्यग्योनो वा छिन्नायुः कार्मणकाययोगस्थो देवादिगत्युदयात्, देवादिव्यपदेशभागिति कृत्वा तदेवास्य जन्मेति मतमिति? तन्न। किं कारणं? शरीरनिर्वर्तकपुद्गलाभावात्। देवादिशरीरनिर्वृत्तौ हि देवादिजन्मेष्टं तस्यां चावस्थायामनाहारकत्वान्न देवादिशरीरनिर्वृत्तिरस्ति ततः उपपादो जन्म युक्तं, तच्च देवनारकाणामिति। निर्दिष्टजन्मभेदेभ्यो जरायुजादिभ्योऽन्येषां किं जन्म? इत्यत आह—

## शेषाणां संमूर्छनं ॥ ३५ ॥

**उभयत्र नियमः पूर्ववत् ॥१॥** उभयोरपि योगयोः पूर्ववन्नियमो वाच्यः, देवनारकाणामेवोपपादः, शेषाणामेव संमूर्छनं नोक्तानामिति। कथं पूर्ववत्? पूर्वत्र जन्मनियमो न जन्मवन्नियमः शेषग्रहणाज्ज्ञायते पूर्वत्र जन्मनियम इति। जरायुजांडजपोतानामेव गर्भो देवनारकाणामेवोपपादः गर्भोपपादजन्मनी नियते, जरायुजादयो न नियमात् संमूर्छनाः प्रतिमतः शेषग्रहणं क्रियते

सम्मूर्छन नोक्तानामित्यनवधारणार्थं । यदि हि जन्मवता नियमः स्याज्जरायुजाण्डजपोतानां गर्भ एव देवनारकाणामुपपाद एवेति गर्भोपपादयोरनवधारणात् यत्र सम्मूर्छनं चान्यच्चास्ति तत्र सम्मूर्छनमेवेति नियमाच्छेषग्रहणमनर्थकं स्यात्। अर्हेद सूत्रमनर्थकं कथं? पूर्वयोर्योगयोरुभयतो नियमे सति जरायुजादीनां गर्भोपपादयोश्चाऽसति व्यभिचारे, शेषाणामेव सम्मूर्छनमुत्सर्गोऽवतिष्ठते इति। उच्यते स एवोभयो नियमो दुर्लभ ,यत्तस्यैकत्वात्, अतोन्यतरनियम एवाश्रयितव्यस्तस्मिंश्च सति सूत्रमिदमारब्धव्यं। तेषां पुनः संसारिणां त्रिविधजन्मनां माहितबहुविकल्पनवयोनिभेदानां शुभाशुभनामकर्मनिर्वर्तितानि निबंधफलानुभवनाधिष्ठानानि शरीराणि कानीत्यत आह—

## औदारिकवैक्रियिकाहारकतैजसकार्मणानि शरीराणि ॥ ३६ ॥

**शीर्यंत इति शरीराणि घटाद्यतिप्रसंग इति चेन्न नामकर्मनिमित्तत्वाभावात् ॥ १ ॥** यदि शीर्यंत इति शरीराणि घटादीनामपि विशरणमस्तीति शरीरत्वमति प्रसज्येत ? तन्न। किं कारणं? नामकर्मनिमित्तत्वाभावात् । शरीरं नामकर्मोदयाच्छरीरं न च घटादिषु सोऽस्तीति नास्त्यतिप्रसंगः ।

**विग्रहाभाव इति चेन्न रूढिशब्देष्वपि व्युत्पत्तौ क्रियाश्रयात् ॥ २ ॥** स्यान्मतं यदि शरीरनामकर्मोदयाच्छरीरव्यपदेशः शीर्यंत इति शरीराणीति विग्रहो नोपपद्यते इति ? तन्न। किं कारणं? रूढिशब्देष्वपि व्युत्पत्तौ क्रियाश्रयाद्। यथा गच्छतीति गौरिति विगृह्यते, एवं शीर्यंत इति शरीराणि इति विग्रहो भवति ।

**शरीरत्वादिति चेन्न तदभावात् ॥ ३ ॥** स्यान्मतं शरीरत्वं नाम सामान्यविशेषोस्ति। तद्योगाच्छरीरं न नाम कर्मोदयादिति ? तन्न। किं कारणं? तदभावादतत्स्वभावेऽनवधारणप्रसंगोऽग्निवदित्येवमादिनार्थांतरभूतजातिसंबंधकल्पना प्रतिविहितेति नास्ति शरीरत्वं ।

**उदारात्स्थूलवाचिनो भवे प्रयोजने वा ठञ् ॥ ४ ॥** उदारं स्थूलमिति यावत्, ततो भवे प्रयोजने वा ठञि, औदारिकमिति भवति ।

**विक्रियाप्रयोजनं वैक्रियिकं ॥ ५ ॥** अष्टगुणैश्वर्ययोगादेकानेकाणुमहच्छरीरविविधकरणं विक्रिया सा प्रयोजनमस्येति वैक्रियिकं ।

**आह्रियते तदित्याहारकं ॥ ६ ॥** सूक्ष्मपदार्थनिर्ज्ञानार्थमसंयमपरिजिहीर्षया च प्रमत्तसंयतेनाह्रियते निर्वर्त्यते तदित्याहारकं ।

**तेजोनिमित्तत्वात्तैजसं ॥७॥** यत्तेजोनिमित्तं तत्तैजसमिदं तेजसि भवं वा तैजसमित्याख्यायते।

**कर्मणामिदं कर्मणां समूह इति वा कार्मणं ॥ ८ ॥** कर्मणामिदं कार्यं कर्मणां समूह इति वा कथंचिद्भेदाविवक्षोपपत्तेः कार्मणमिति व्यपदिश्यते ।

**सर्वेषां कार्मणत्वप्रसंग इति चेन्न प्रतिनियतौदारिकादिनिमित्तत्वात् ॥ ९ ॥** स्यान्मतं यदि कर्मणामिदं कर्मणां समूह इति वा कार्मणमित्युच्यते सर्वेषामपि तत्तुल्यमित्यौदारिकादीनामपि कार्मणत्वप्रसंग इति ? तन्न। किं कारणं? प्रतिनियतौदारिकादिनिमित्तत्वात्। औदारिकशरीरनामादीनि हि प्रतिनियतानि कर्माणि संति तदुभयभेदाद्भेदो भवति ।

**तत्कृतत्वेऽप्यन्यत्वदर्शनाद्घटादिवत् ॥ १० ॥** यथा मृत्पिंडकारणाविशेषेपि घटशरावादीनां संज्ञास्वालक्षण्यादिभेदाद्भेदस्तथा कर्मकृतत्वाविशेषेपि औदारिकादीनां संज्ञादिभेदाद्भेदोऽवसेयः ।

---

१ तार्किकोपकल्पितजातिरित्यर्थः ।

तत्प्रणालिकयाप्यभिनिष्पत्तेः ॥ ११ ॥ कार्मणशरीरप्रणालिकया चौदारिकादीनामभिनिष्पत्तिरत कार्यकारणभेदान्न सर्वेषा कार्मणत्व । किं च—

विस्रसोपचयेन व्यवस्थानात् क्लिन्नगुडरेणुश्लेषवत् ॥ १२ ॥ यथा वैस्रसिकपरिणामात् क्लिन्नगुडे रेणूनामुपश्लिष्टानामवस्थान तथा कर्मण्यप्यौदारिकादीना वैस्रसिकोपचयेनावस्थानमिति नानात्व सिद्ध।

कार्मणमसन्निमित्ताभावादिति चेन्न निमित्तनिमित्तिभावात्तस्यैव प्रदीपवत् ॥ १३ ॥ स्यादेतन्न कार्मण नाम शरीरमस्ति कुत ? निमित्ताभावात्। यस्य च निमित्त नास्ति तदसत् यथा खरविषाणमिति? तन्न । किं कारण ? तस्यैव निमित्तनिमित्तिभावात्प्रदीपवत् यथा प्रदीपात्मैवात्मप्रकाशनात्प्रकाश्य प्रकाशकश्च तथा कार्मणमेवात्मनो निमित्त निमित्ति चेति सिद्ध ।

मिथ्यादर्शनादिनिमित्तत्वाच्च ॥ १४ ॥ न कार्मणस्य निमित्त नास्ति, किं तर्हि निमित्त ? मिथ्यादर्शनादि, ततो ऽसिद्धमेतन्निमित्ताभावादिति ।

इतरथा ह्यनिर्मोक्षप्रसंगः ॥१५॥ यदि कार्मणमनिमित्तमिति गृहीत अनिर्मोक्ष स्यात्, अहेतुकस्य विनाशहेतुत्वाभावात् ।

अशरीरं विशरणाभावादिति चेन्नोपचयापचयधर्मत्वात् ॥ १६ ॥ स्यादेतद्यथौदारिकादि शीर्यत इति शरीर न तथा कार्मण शीर्यत इत्यशरीरत्वमस्येति ? तन्न। किं कारण उपचयापचयधर्मत्वात् । निमित्तवशाद्धि कर्मायव्ययौ सतत स्त इति विशरणमस्त्येव ।

तद्ग्रहणमादाविति चेन्न तदनुमेयत्वात् ॥ १७ ॥ स्यादेतत्कार्मणग्रहणमादौ कर्तव्य कुतस्तदधिष्ठानत्वादितरेषामिति ? तन्न। किं कारण ? तदनुमेयत्वात्, यथा घटादिकार्योपलब्धे परमाण्वाद्यनुमान तथौदारिकादिकार्योपलब्धे कार्मणानुमान । कार्यलिंग हि कारणमिति ।

तत एव कर्मणो मूर्तिमत्वं सिद्धं ॥ १८ ॥ यस्मान्मूर्तिमदस्य कार्यं तत एव कर्मण कारणस्य मूर्तिमत्व सिद्ध। न ह्यमूर्तेनात्मगुणेन निष्क्रियेणाऽदृष्टेन मूर्तिमत क्रियावतो द्रव्यस्यारंभो युक्त इति ।

औदारिकग्रहणमादावतिस्थूलत्वात् ॥१९॥ अतिस्थूलमिदमौदारिकमिन्द्रियग्राह्यत्वात्ततोस्य ग्रहणमादौ क्रियते ।

उत्तरेषां क्रमः सूक्ष्मक्रमप्रतिपत्त्यर्थं ॥ २० ॥ उत्तरेषा वैक्रियिकादीना पाठक्रम सूक्ष्मक्रमप्रतिपत्त्यर्थो वेदितव्य । वक्ष्यते हि पर पर सूक्ष्ममिति । यथौदारिकस्येन्द्रियैरुपलब्धिस्तथेतरेषा कस्मान्न भवतीत्यत आह—

## पर परं सूक्ष्मं ॥ ३७ ॥

परशब्दस्यानेकार्थत्वे विवक्षातो व्यवस्थार्थगतिः ॥ १ ॥ परशब्दोयमनेकार्थवचन, क्वचिद्व्यवस्थाया वर्तते यथा पूर्व पर इति। क्वचिदन्यार्थे वर्तते यथा परपुत्र परभार्येति अन्यपुत्रोन्यभार्येति गम्यते। क्वचित्प्राधान्ये वर्तते यथा परमिय कन्याऽस्मिन्कुटुम्बे प्रधानमिति गम्यते। क्वचिदिष्टार्थे वर्तते यथा पर धाम गत इष्ट धाम गत इत्यर्थ । तत्रेह विवक्षातो व्यवस्थार्थो गृह्यते ।

पृथग्भूताना शरीराणा सूक्ष्मगुणेन वीप्सानिर्देशः ॥ २ ॥ सज्ञा–लक्षण–प्रयोजनादिभि पृथग्भूताना शरीराणा सूक्ष्मगुणेन वीप्सानिर्देश क्रियते पर परमिति । यदि पर पर सूक्ष्म प्रदेशतोपि न्यून पर पर हीनमिति विपरीतप्रतिपत्तिनिवृत्त्यर्थमाह—

**बहुद्रव्योपचितत्वात्तदुपलब्धिप्रसग इति चेन्नोक्तत्वात्** ॥ ६ ॥ स्यादेतद्बहुद्रव्योपचितत्वात्तैजसकार्मणयोरुपलब्धि प्राप्नोतीति ? तन्न। किं कारणमुक्तमेतत्प्रचयविशेषात्सूक्ष्मपरिणाम इति। तत्रैतत्स्याच्छल्यकवन्मूर्तिमद्द्रव्योपचितत्वात्ससारिणो जीवस्याभिप्रेतगतिनिरोधप्रसग इति तन्न। किं कारण ? यस्मादुभे अप्येते—

## अप्रतीघाते ॥ ४० ॥

**प्रतीघातो मूर्त्यन्तरेण व्याघात** ॥ १ ॥ मूर्तिमतो मूर्त्यन्तरेण व्याघात प्रतीघात इत्युच्यते।

**तदभावः सूक्ष्मपरिणामादयःपिंड तन्यानुप्रवेशवत्** ॥ २ ॥ यथाऽय पिंडस्यात सूक्ष्मपरिणामादग्नेरनुप्रवेशो दृष्टस्तथा तैजसकार्मणयोरपि नास्ति वज्रपटलादिषु व्याघात इत्यप्रतिघाते इत्युच्यते।

**वैक्रियिकाहारकयोरप्यप्रतिघात इति चेन्न सर्वत्र विवक्षितत्वात्** ॥ ३ ॥ स्यान्मत वैक्रियिकाहारकयोरपि प्रतिघातो नास्ति सूक्ष्मपरिणामादेव, तत्र किमुच्यते तैजसकार्मणे एवाप्रतिघाते इति ? तन्न। किं कारण ? सर्वत्र विवक्षितत्वात्। आलोकातात्सर्वत्र तैजसकार्मणयोर्नास्ति प्रतिघात इत्यय विशेषो विवक्षित। वैक्रियिकाहारकयोस्तु न तथास्ति प्रतिघात। आह किमेतावानेव विशेष आहोस्वित्कश्चिदन्योऽप्यस्ति ? इत्यत आह—

## अनादिसबधे च ॥ ४१ ॥

अथवानादित्वादात्मन शरीरस्यादिमत्त्वाद्विकरणस्यादिशरीरसबध किं कृत ? इत्यत आह—अनादिसबधे चेति। च शब्द किमर्थ —

**चशब्दो विकल्पार्थः** ॥ १ ॥ च शब्दो विकल्पार्थो वेदितव्य, अनादिसबधे सादिसबधे चेति। कथमिति चेदुच्यते—

**बंधसंतत्यपेक्षयानादि सबधः सादिश्च विशेषतो बीजवृक्षवत्** ॥ २ ॥ यथा वृक्षो बीजादुत्पन्न, तच्च बीजमपरस्माद्वृक्षात्, स चापरस्माद्बीजादिति कार्यकारणसबधसामान्यापेक्षयाऽनादिसबध। अस्माद्बीजादय वृक्षोऽस्माच्च वृक्षादिद बीजमिति विशेषापेक्षया सादि। एव तैजसकार्मणयोरपि पौनर्भविकनिमित्तनैमित्तिकसततत्यपेक्षयाऽनादिसबध, विशेषापेक्षया सादिरिति।

**एकांतेनादिमत्त्वेऽभिनवशरीरसबधाभावो निर्निमित्तत्वात्** ॥ ३ ॥ यस्यैकातेनादिमान् शरीरसबधस्तस्य प्रागात्यतिकीं शुद्धिमादधतो जीवस्याभिनवशरीरसबधो न स्यात् कुत ? निर्निमित्तत्वात्।

**मुक्तात्माभावप्रसंगश्च** ॥ ४ ॥ यद्येकातेन सादिसबधो यथा सादिशरीरमकस्मात्सबध्यते एव मुक्तात्मनोऽप्याकस्मिकशरीरसबध स्यादिति मुक्तात्माभावप्रसग स्यात्।

**एकांतेनानादित्वे चानिर्मोक्षः प्रसंग** ॥ ५ ॥ अथैकातेनानादिरव कल्प्यते एवमपि यस्यानादित्व तस्यातोपि नास्तीत्याकाशवत्कार्यकारणसबधाभावात् ततश्चानिर्मोक्ष प्रसजति। ननु चानादेरपि बीजवृक्षसतानस्याग्निसबधे सत्यतो दृष्ट न तस्यैकातेनाऽनादित्वाभावात्। बीजवृक्षौ हि विशेषापेक्षयाऽऽदिमतावेति। तस्मात्साधूक्त केनचित्प्रकारेण, अनादिसबध केनचित्प्रकारेणादिमानिति। ते एते तैजसकार्मणे किं कस्यचिदेव भवत उताऽविशेषेणेत्यत आह—

## सर्वस्य ॥ ४२ ॥

**सर्वशब्दो निरवशेषवाची** ॥१॥ निरवशेषस्य ससारिणो जीवस्य ते द्वे अपि शरीरे भवत इत्यर्थ।

**ससरणधर्मसामान्यादेकवचननिर्देशः** ॥ २ ॥ ससरणधर्मसामान्ययोगादेकवचननिर्देश

## प्रदेशतोऽसंख्येयगुणं प्राक् तैजसात् ॥ ३८ ॥

**प्रदेशाः परमाणवः ॥ १ ॥** प्रदिश्यते इति प्रदेशा परमाणवस्ते हि घटादिष्ववयवत्वेन प्रदिश्यते, प्रदिश्यते एभिरिति वा प्रदेशास्तैर्हि आकाशादीना क्षेत्रविभागः प्रदिश्यते ।

**प्रदेशेभ्यः प्रदेशतः ॥ २ ॥** अपादाने हीयरुहाविति तसिः ।

**प्रदेशैर्वा प्रदेशतः ॥ ३ ॥** तसि प्रकरणे आद्यादिभ्य उपसख्यानमिति तसि ।

**संख्यानातीतोऽसंख्येयः ॥ ४ ॥** सख्यान गणनमतीतो यः सोऽसख्येयः, असख्येयो गुणोस्य तदिदमसख्येयगुण ।

**परंपरमित्यनुवृत्तेः प्राक् तैजसादिति वचनं ॥ ५ ॥** परपरमित्यनुवर्तते तेन आकर्मणादसख्येयगुणत्वे प्राप्ते मर्यादानिर्णयार्थं प्राक् तैजसादित्युच्यते ।

**प्रदेशत इति विशेषणमवगाहक्षेत्रनिवृत्त्यर्थं ॥ ६ ॥** प्रदेशत परपरमसख्येयगुण नावगाहक्षेत्रत इत्येतस्य प्रतिपत्त्यर्थं प्रदेशत इति विशेषणमुपादीयते। तेनैतदुक्त भवति–औदारिकाद्वैक्रियिकमसख्येयगुणप्रदेश वैक्रियिकादाहारकमसख्येयगुणप्रदेशमिति । को गुणकार पल्योपमस्यासख्येयभागः ।

**उत्तरोत्तरस्य महत्त्वप्रसंग इति चेन्न प्रचयविशेषादयःपिंडतूलनिचयवत् ॥ ७ ॥** स्यान्मत यद्युत्तरोत्तरमसख्येयगुणप्रदेश परिमाणमहत्वेनापि भवितव्यमिति ? तन्न। किं कारण ? प्रचयविशेषादय पिंडतूलनिचयवत् । यथाऽय पिंडस्य बहुप्रदेशत्वेपि अल्पपरिमाणत्व तूलनिचयस्य चाल्पप्रदेशत्वेपि महापरिमाणत्व प्रचयविशेषात् । तथोत्तरस्य शरीरस्यासंख्येयगुणप्रदेशत्वेपि अल्पपरिमाणत्व बधविशेषाद्वेदितव्य । उक्त प्राक् तैजसात्पर परमसख्येयगुणमिति, अथोत्तरयो किं समप्रदेशत्वमुतास्ति कश्चिद्विशेष ? अस्तीत्याह–

## अनंतगुणे परे ॥ ३९ ॥

प्रदेशत इत्यनुवर्तते तेनैवमभिसबध क्रियते आहारकात्तैजस प्रदेशतोऽनतगुण तैजसात्कार्मण प्रदेशतोनतगुणमिति । को गुणकारः अभव्यानामनतगुण सिद्धानामनतभाग ।

**अनंतगुणत्वादुभयोस्तुल्यत्वमिति चेन्नानंतस्यानंतविकल्पात् ॥ १ ॥** स्यादेतदनतगुणत्वादुभयोस्तैजसकार्मणयोस्तुल्यत्वमिति। तन्न। किं कारणमनतस्यानतविकल्पादनतो ह्यनतविकल्प सख्येयस्य सख्येयविकल्पवत् ।

**आहारकादुभयोरनंतगुणत्वमिति चेन्न परं परमित्यभिसंबंधात् ॥ २ ॥** स्यान्मतमाहारकादुभयोरनतगुणत्वमेव गम्यते न तैजसात्कार्मणस्यानतगुणत्वमतस्तयोस्तुल्यप्रदेशत्व प्राप्नोतीति तन्न। किं कारण ? परपरमित्यभिसबधत्वात्पर परमनतगुणमिति गम्यते ।

**परस्मिन्सत्यारातीयस्यापरत्वात् परापर इति निर्देशः ॥ ३ ॥** पर कार्मण तस्मिन् सति तैजसमपर भवत्यत परापरे इति निर्देशो न्याय्य ।

**न वा बुद्धिविषयव्यापारात् ॥४॥** न वैषदोषः किं कारण? बुद्धिविषयव्यापारात्। न शब्दोच्चारण क्रमेण तैजसकार्मणयो परव्यपदेश किं, तर्हि ? बुद्ध्या तैजसकार्मणे तिर्यग्व्यवस्थाप्याहारकात् परे इति व्यपदेश ।

**व्यवहिते वा परशब्दप्रयोगात् ॥ ५ ॥** अथवा व्यवहिते परशब्दप्रयोगो दृश्यते यथा परा, पाटलिपुत्रान्मथुरेति तथाहारकात्तैजसस्य परत्व तैजसेन व्यवहितस्यापि कार्मणस्य परत्वमिति ।

**यद्द्रव्योपचितत्वात्तदुपलब्धिप्रसग इति चन्नोक्तत्वात्** ॥ ६ ॥ स्यादेतद्बहुद्रव्योपचित-त्वात्तैजसकार्मणयोरुपलब्धि प्राप्नोतीति ? तन्न। किं कारणमुक्तमेतत् प्रचयविशेषात् सूक्ष्मपरिणाम इति। स्यादेतत्स्यादल्पकत्व मूर्तिमद्द्रव्योपचितत्वात्संसारिणो जीवस्याभिप्रेतगतिनिरोधप्रसग इति तन्न। किं कारण ? यस्मादुभे अप्येते—

## अप्रतीघाते ॥ ४० ॥

**प्रतीघातो मूर्त्यंतरेण व्याघात.** ॥ १ ॥ मूर्तिमतो मूर्त्यंतरेण व्याघात प्रतीघात इत्युच्यते।

**तदभावः सूक्ष्मपरिणामादयःपिंड तेजोनुप्रवेशवत्** ॥ २ ॥ यथाऽय पिंडस्यात सूक्ष्मपरिणामात्तेजोऽनुप्रवेशो दृष्टस्तथा तैजसकार्मणयोरपि नास्ति वज्रपटलादिषु व्याघात इत्यप्रतिघाते इत्युच्यते।

**वैक्रियिकाहारकयोरप्यप्रतिघात इति चेन्न सर्वत्र विवक्षितत्वात्** ॥ ३ ॥ स्यान्मत वैक्रियिकाहारकयोरपि प्रतिघातो नास्ति सूक्ष्मपरिणामादेव, तत्र किमुच्यते तैजसकार्मणे एवाप्रतिघाते इति ? तन्न। किं कारण ? सर्वत्र विवक्षितत्वात्। आलोकांतात्सर्वत्र तैजसकार्मणयोर्नास्ति प्रतिघात इत्यय विशेषो विवक्षित। वैक्रियिकाहारकयोस्तु न तथास्ति प्रतिघात। आह किमेतावानेव विशेष आहोस्वित्कश्चिदन्योऽप्यस्ति ? इत्यत आह—

## अनादिसबंधे च ॥ ४१ ॥

अथवानादित्वादागमन शरीरस्याभिन्नत्वाद्विकरणम्यादिशरीरसबध किं कृत ? इत्यत आह—अनादिसबंधे चेति। च शब्द किमर्थ —

**चशब्दो विकल्पार्थः** ॥ १ ॥ च शब्दो विकल्पार्थो वेदितव्य, अनादिसबधे सादिसबधे चेति। कथमिति चेदुच्यते—

**वंधसंतत्यपेक्षयानादि सबधः सादिश्च विशेषतो वीजवृक्षवत्** ॥ २ ॥ यथा वृक्षो वीजादुत्पन्न, तच्च वीजमपरस्माद्वृक्षात्, स चापरस्माद्वीजादिति कार्यकारणसबधसामान्यापेक्षयाऽनादिसबध। अस्माद्वीजादय वृक्षोऽस्माच्च वृक्षादिद बीजमिति विशेषापेक्षया सादि। एव तैजसकार्मणयोरपि पौनर्भविकनिमित्तनैमित्तिकसतत्यपेक्षयाऽनादिसबध, विशेषापेक्षया सादिरिति।

**एकांतेनादिमत्वेऽभिनवशरीरसबधाभावो निर्निमित्तत्वात्** ॥ ३ ॥ यस्यैकांतेनादिमान् शरीरसबधस्तस्य प्रागात्यंतिकी शुद्धिमादधतो जीवस्याभिनवशरीरसबधो न स्यात् कुत ? निर्निमित्तत्वात्।

**मुक्तात्माभावप्रसंगश्च** ॥ ४ ॥ यद्येकांतेन सादिसबधो यथा सादिशरीरमकस्मात्सबध्यते एव मुक्तात्मनोप्याकस्मिकशरीरसबध स्यादिति मुक्तात्माभावप्रसग स्यात्।

**एकांतेनानादित्वे चानिर्मोक्षः प्रसग** ॥ ५ ॥ अथैकांतेनानादित्व कल्प्यते एवमपि यस्यानादित्व तस्यांतोपि नास्तीत्याकाशवत्कार्यकारणसबधाभावात् ततश्चानिर्मोक्ष प्रसजति। ननु चानादेरपि बीजवृक्षसतानस्याग्निसबधे सत्यतो दृष्ट न तस्यैकांतेनाऽनादित्वाभावात्। वीजवृक्षौ हि विशेषापेक्षयाऽऽदिमताविति। तस्मात्साधूक्त केनचित्प्रकारेण, अनादिसबध केनचित्प्रकारेणादिमानिति। ते एते तैजसकार्मणे किं कस्यचिदेव भवत उताऽविशेषेणेत्यत आह—

## सर्वस्य ॥ ४२ ॥

**सर्वशब्दो निरवशेषवाची** ॥१॥ निरवशेषस्य ससारिणो जीवस्य ते द्वे अपि शरीरे भवत इत्यर्थ।

**ससरणधर्मसामान्यादेकवचननिर्देशः** ॥ २ ॥ ससरणधर्मसामान्ययोगादेकवचननिर्देश

क्रियते । यदि हि कस्यचित्ससारिणस्ते न स्याता ससारित्वमेवास्य न स्यात् । अविशेषाभिधानात्तैरौदारिकादिभि सर्वस्य ससारिणो यौगपद्येन सबधप्रसगे सभविशरीरप्रदर्शनार्थमिदमुच्यते—

## तदादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ॥ ४३ ॥

**तद्ग्रहणं प्रकृतशरीरद्वयप्रतिनिर्देशार्थं ॥ १ ॥** प्रकृते द्वे शरीरे तैजसकार्मणे, तत्प्रतिनिर्देशार्थं तदित्युच्यते ।

**आदिशब्देन व्यवस्थावाचिना शरीरविशेषणं ॥ २ ॥** पूर्वसूत्रे व्यवस्थिताना शरीराणामानुपूर्व्यप्रतिपादनेनाऽऽदिशब्देन विशेषण क्रियते, ते आदिर्येषा तानीमानि तदादीनीति ।

**पृथक्त्वादेव तेषां भाज्यग्रहणमनर्थकमिति चेन्न, एकस्य द्वित्रिचतु शरीरसंबंधविभागोपपत्ते ॥ ३ ॥** भाज्यानि, पृथक् कर्तव्यानीत्यर्थ । तान्यौदारिकादीनि परस्परत आत्मनश्च पृथग्भूतान्येव लक्षणभेदादतो भाज्यग्रहणमनर्थकमिति ? तन्न, किं कारण ? एकस्य द्वित्रिचतु शरीरसबधविभागोपपत्ते कस्यचिदात्मनो द्वे तैजसकार्मणे, अपरस्य त्रीण्यौदारिकतैजसकार्मणानि, वैक्रियिकतैजसकार्मणानि वा, अन्यस्य चत्वार्यौदारिकाऽऽहारकतैजसकार्मणानीति विभाग क्रियते ।

**युगपदिति कालैकत्वे ॥ ४ ॥** युगपदित्यय निपात कालैकत्वे द्रष्टव्य एकस्मिन् काले, कालभेदे तु पचापि भवन्त्येव ।

**आङभिव्यर्थः ॥ ५ ॥** आङयमभिविध्यर्थो द्रष्टव्य, तेन चत्वार्यपि कस्यचिद्भवति । मर्यादायां सत्यां चत्वारि न स्यु । अथ पच युगपत्कस्मान्न भवतीति ।

**वैक्रियिकाहारकयोर्युगपदसंभवात् पचाभावः ॥ ६ ॥** यस्य सयतस्याहारक न तस्य वैक्रियिक, यस्य देवस्य नारकस्य वा वैक्रियिक न तस्याहारकमिति युगपत्पचानामसभव । पुनरपि तेषा शरीराणा विशेषप्रतिपत्त्यर्थमाह—

## निरुपभोगमंत्यं ॥ ४४ ॥

सूत्रक्रमापेक्षयान्तेभवमन्त्य कार्मण, निरुपभोगमिति वचनात् अर्थादापन्नमेतदितराणि सोपभोगानीति ।

**कर्मादाननिर्जरासुखदुःखानुभवनहेतुत्वात् सोपभोगमिति चेन्न विवक्षितापरिज्ञानात् ॥ १ ॥** स्यान्मत कार्मणकाययोगेन कर्मादत्ते निर्जयति च, सुखदु ख चानुभवति, तत सोपभोगमेव न निरुपभोगमिति ? तन्न, किं कारण ? विवक्षितापरिज्ञानात् । विवक्षितमुपभोगमपरिज्ञाय परेणेद चोदित । कोऽसौ विवक्षित उपभोग ?

**इंद्रियनिमित्तशब्दाद्युपलब्धिरुपभोगः ॥ २ ॥** इद्रियप्रणालिकया शब्दादीनामुपलब्धिरुपभोग इत्युच्यते । विग्रहगतौ सत्यामपींद्रियोपलब्धौ द्रव्येंद्रियनिर्वृत्त्यभावाच्छब्दादिविषयानुभवनाभावान्निरुपभोग कार्मणमिति कथ्यते । ननु तैजसमपि निरुपभोग तत्र किमुच्यते निरुपभोगमन्त्य ? इत्यत आह—

**तैजसस्य योगनिमित्तत्वाभावादनधिकारः ॥ ३ ॥** तैजस शरीर योगनिमित्तमपि न भवति ततोऽस्योपभोगविचारेऽनधिकारस्ततो योगनिमित्तेषु शरीरेष्वन्त्य निरुपभोग । सोपभोगानीतराणीत्ययमर्थोऽत्र विवक्षित । तत्राम्नातलक्षणेषु जन्मस्वमूनि शरीराणि प्रादुर्भावमापद्यमानानि किमविशेषेण भवति उत कश्चिदस्ति प्रतिविशेष ? अस्तीत्याह—

## गर्भसंमूर्छनजमाद्यं ॥ ४५ ॥

सूत्रक्रमापेक्षयाऽऽदौ भवमाद्यमौदारिकमित्यर्थ । यद्गर्भज यच्च समूर्छनज तत्सर्वमौदारिक द्रष्टव्य । तदनतर यन्निर्दिष्ट तत्कस्मिन् जन्मनीत्यत आह—

## औपपादिकं वैक्रियिकं ॥ ४६ ॥

उपपादे भवमौपपादिक। अध्यात्मादित्वादिक, तत्सर्वं वैक्रियिक वेदितव्य। यद्यौपपादिक वैक्रियिकमनौपपादिकस्य वैक्रियिकत्वाभाव ? इत्यत आह—

## लब्धिप्रत्यय च॥ ४७ ॥

वैक्रियिकमित्यभिसबध्यते—

**प्रत्ययशब्दस्यानेकार्थत्वे विवक्षातः कारणगतिः ॥ १ ॥** अयं प्रत्ययशब्दोऽनेकार्थ क्वचिज्ज्ञाने वर्तते, यथार्थाभिधानप्रत्यया इति। क्वचित्सत्यताया वर्तते, प्रत्यय कुरु सत्य कुर्वित्यर्थ। क्वचित्कारणे वर्तते मिथ्यादर्शनाविरतिप्रमादकषाययोगा प्रत्यया इति। तत्रेह विवक्षात कारणपर्यायवाची वेदितव्य।

**तपोविशेषर्द्धिप्राप्तिर्लब्धिः ॥ २ ॥** तपोविशेषाद् ऋद्धिप्राप्तिर्लब्धिरित्युच्यते, लब्धि प्रत्ययो यस्य तल्लब्धिप्रत्यय। अथ लब्ध्युपपादयो को विशेष ?

**निश्चयकादाचित्कीकृतो विशेषो लब्ध्युपपादयोः ॥ ३ ॥** उपपादो हि निश्चयेन भवति जन्मनिमित्तत्वात्? लब्धिस्तु कादाचित्कीति जातस्य सत उत्तरकाल तपोविशेषाद्यपेक्षत्वात्, इत्ययमनयोर्विशेष।

**सर्वशरीराणां विनाशित्वाद्वैक्रियिकविशेषानुपपत्तिरिति चेन्न विवक्षितापरिज्ञानात् ॥४॥** स्यान्मत विक्रिया विनाश, सा च सर्वशरीराणा साधारणी मुहुर्मुहुरुपचयापचयधर्मत्वादुच्छेदाच्च, ततो न वैक्रियिके कश्चिद्विशेषोऽस्तीति ? तन्न, किं कारण ? विवक्षितापरिज्ञानात्। नात्र विक्रियेति विनाशो विवक्षित, किं तर्हि ? विविधकरण विक्रिया, सा द्वेधा—एकत्वविक्रिया पृथक्त्वविक्रिया चेति। तत्रैकत्वविक्रिया स्वशरीरादपृथग्भावेन सिंहव्याघ्रहसकुररादिभावेन विक्रिया। पृथक्त्वविक्रिया स्वशरीरादन्यत्वेन प्रासादमडपादि विक्रिया। सा, उभयी च विद्यते भवनवासिव्यतरज्योतिष्ककल्पवासिना। वैमानिकाना आसर्वार्थसिद्धे प्रशस्तरूपैकत्वविक्रियैव। नारकाणा त्रिशूलचक्रासिमुद्गरपरशुभिंडिमालाद्यनेकायुधैकत्वविक्रिया न पृथक्त्वविक्रिया। आ षष्ठ्या सप्तम्या महागोकीटप्रमाणलोहितकुंथुरूपैकत्वविक्रिया, नानेकप्रहरणविक्रिया, न च पृथक्त्वविक्रिया। तिरश्चां मयूरादीना कुमारादिभाव प्रति विशिष्टैकत्वविक्रिया, न पृथक्त्वविक्रिया। मनुष्याणा तपोविद्यादिप्राधान्यात्प्रतिविशिष्टैकत्वपृथक्त्वविक्रिया। किमेतदेव लब्ध्यपेक्षमुतान्यदप्यस्ति ? इत्यत आह—

## तैजसमपि ॥ ४८ ॥

ननु च वैक्रियिकानन्तरमाहारक वक्तव्यमकालप्राप्त तैजस किमर्थमिहोच्यते ?

**लब्धिप्रत्ययापेक्षार्थं तैजसग्रहण ॥ १ ॥** लब्धिप्रत्ययमित्यनुवर्तते, तदभिसमीक्ष्येह तैजसग्रहण क्रियते। वैक्रियिकानतर यदुपदिष्ट तस्य स्वरूपनिर्धारणार्थं स्वामिनिर्देशनार्थं चाह—

## शुभं विशुद्धमव्याघाति चाहारकं प्रमत्तसंयतस्यैव ॥ ४९ ॥

**शुभकारणत्वाच्छुभव्यपदेशोऽन्नप्राणवत् ॥१॥** यथा प्राणकारणेष्वन्नेषु प्राणव्यपदेश, "अन्न वै प्राणा इति" तथा शुभकर्मण आहारककाययोगस्य कारणत्वादाहारक शरीर शुभमित्युच्यते।

**विशुद्धकार्यत्वाद्विशुद्धाभिधान कार्पासततुवत् ॥ २ ॥** यथा कार्पासकार्येषु ततुषु कार्पास व्यपदेश कार्पासास्ततव इति। तथा विशुद्धस्य पुण्यकर्मणोऽशबलस्य निरवद्यस्य कार्यत्वाद्विशुद्धमित्याख्यायते।

**उभयतो व्याघाताभावादव्याघाति ॥ ३ ॥** न ह्याहारकशरीरेणान्यस्य व्याघातो नाप्यन्येनाहारकस्येत्युभयतो व्याघाताभावादव्याघातीति व्यपदिश्यते।

**चशब्दस्त प्रयोजनसमुच्चयार्थः ॥ ४ ॥** तस्य प्रयोजनसमुच्चयार्थश्चशब्द क्रियते। तद्यथा—

कदाचिल्लब्धिविशेषसद्भावज्ञानार्थं, कदाचित्सूक्ष्मपदार्थनिर्धारणार्थं, संयमपरिपालनार्थं च भरतैरावतेषु केवलिविरहे जातसंशयस्तन्निर्णयार्थं महाविदेहेषु केवलिसकाशं जिगमिषुरौदारिकेण मे महानसंयमो भवतीति विद्वानाहारकं निर्वर्तयति।

**आहारकमिति प्रागुक्तस्य प्रत्याम्नायः ॥ ५ ॥** एवं प्रकारमाहारकमित्येतस्य प्रतिपादनार्थं पुनस्तस्य प्रत्याम्नायः क्रियते।

**प्रमत्तसंयतग्रहणं स्वामिविशेषप्रतिपत्त्यर्थं ॥ ६ ॥** यदाहारकशरीरं निर्वर्तयितुमारभते तदा प्रमत्तो भवतीति प्रमत्तसंयतस्येत्युच्यते।

**इष्टतोऽवधारणार्थमेवकारोपादानं ॥ ७ ॥** यथैवं विज्ञायते प्रमत्तसंयतस्यैवाहारकं नान्यस्येति। मैवं विज्ञायि प्रमत्तसंयतस्याहारकमेवेति माऽभूदौदारिकादिनिवृत्तिरिति।

**एषां शरीराणां परस्परतः संज्ञास्वालक्षण्यस्वकारणस्वामित्वसामर्थ्यप्रमाणक्षेत्रस्पर्शनकालांतरसंख्याप्रदेशभावाल्पबहुत्वादिभिर्विशेषोवसेयः ॥ ८ ॥** उक्तानुक्तार्थसंग्रहार्थमिदं वाक्यं। तत्र संज्ञातोऽन्यत्वमौदारिकादीनां घटपटादिवत्। स्वालक्षण्यान्नानात्वं, स्थौल्यलक्षणमौदारिकं। विविधर्द्धिगुणयुक्तविकरणं वैक्रियिकं। दुरधिगमसूक्ष्मपदार्थतत्त्वनिर्णयलक्षणमाहारकं। शुक्लतेजःप्रभालक्षणं तैजसं। तद्द्विविधं निःसरणात्मकमितरच्च। औदारिकवैक्रियिकाहारकदेहाभ्यन्तरस्थं देहस्य दीप्तिहेतुरनिःसरणात्मकं। यतेरुग्रचारित्रस्यातिक्रुद्धस्य जीवप्रदेशसंपृक्तं बहिर्निष्क्रम्य दाह्यं परिवृत्यावतिष्ठमानं निष्पावकहरितपरिपूर्णां स्थालीमग्निरिव पचति पक्त्वा च निवर्तते, अथ चिरमवतिष्ठते अग्निसाद्दाह्योर्थो भवति तदेतन्निःसरणात्मकं। सर्वकर्मशरीरप्ररोहलक्षणं कार्मणं। स्वकारणतोऽन्यत्वं– औदारिकशरीरनामकरणमौदारिकं, वैक्रियिकशरीरनामकारणं वैक्रियिकं, आहारकशरीरनामकरणमाहारकं, तैजसशरीरनामकारणं तैजसं, कार्मणशरीरनामकारणं कार्मणं। स्वामिभेदादन्यत्वं– औदारिकं तिर्यङ्मनुष्याणां, वैक्रियिकं देवनारकाणां, तेजोवायुकायिकपचेंद्रियतिर्यङ्मनुष्याणां च केषां चित्। आह चेदेकं जीवस्थाने योगभंगे सप्तविधकाययोगश्च तिर्यङ्मनुष्याणां, वैक्रियिककाययोगो वैक्रियिकमिश्रकाययोगश्च देवनारकाणामुक्तः, इह तिर्यङ्मनुष्याणामपीत्युच्यते– तदिदमार्षविरुद्धं, इत्यत्रोच्यते न,अन्यत्रोपदेशात्। व्याख्याप्रज्ञप्तिदंडकेषु शरीरभंगे वायोरौदारिकवैक्रियिकतैजसकार्मणानि चत्वारि शरीराण्युक्तानि मनुष्याणां च एवमप्यार्षयोस्तयोर्विरोधः, न विरोधः अभिप्रायकत्वाज्जीवस्थाने सर्वदेवनारकाणां सर्वकालवैक्रियिकदर्शनात् तद्योगविधिरित्यभिप्रायः नैवं तिर्यङ्मनुष्याणां लब्धिप्रत्ययं वैक्रियिकं सर्वेषां सर्वकालमस्ति कादाचित्कत्वाद्व्याख्याप्रज्ञप्तिदंडकेष्वस्तित्वमात्रमभिप्रेत्योक्तं। आहारकं प्रमत्तसंयतस्य। तैजसकार्मणे सर्वसंसारिणां। सामर्थ्यतोऽन्यत्वं–औदारिकस्य सामर्थ्यं द्वेधा भवगुणप्रत्ययभेदात्, तिर्यङ्मनुष्याणामिहाष्टपदचक्रधरवासुदेवादीनां प्रकृष्टविकृष्टवीर्यदर्शनाद्भवप्रत्ययं। तपोबलानामृषीणां यच्छरीरविकरणसामर्थ्यं तद्गुणप्रत्ययं। तपःसामर्थ्यं तदिति चेन्नौदारिकशरीरादृते तपसः केवलस्य शरीरविकरणसामर्थ्याभावात्। वैक्रियिकस्य सामर्थ्यं मेरुप्रचलनसकलमहीमंडलोद्वर्तनादि। आहारकस्य सामर्थ्यमप्रतिहतवीर्यता। वैक्रियिकस्याप्यप्रतिहतसामर्थ्यं वज्रपटलादिष्वप्रतिघातदर्शनात् ? इति चेन्नेंद्रसामानिकादीनां प्रकर्षदर्शनादनंतवीर्ययतिना चेंद्रवीर्यस्य प्रतिघातश्रुतेः सप्रतिघातसामर्थ्यं वैक्रियिकं। सर्वाणि चाहारकशरीराणि तुल्यवीर्यत्वादप्रतिहतत्वाच्चाऽप्रतिघातवीर्याणि। तैजसस्य सामर्थ्यं कोपप्रसादापेक्षं दाहानुग्रहरूपं। कार्मणस्य सामर्थ्यं सर्वकर्मावकाशदानं। प्रमाणतोऽन्यत्वं। सर्वजघन्येनांगुलासंख्येयभागप्रमाणं सूक्ष्मनिगोतौदारिकं, उत्कर्षेण साधिकयोजनसहस्रप्रमाणं नंदीश्वरवापीपद्मौदारिकं। वैक्रियिकं मूलशरीरतो जघन्येनारत्निप्रमाणं सर्वार्थसिद्धिदेवस्य, उत्कर्षेण पंचधनुःशतप्रमाणं, तमस्तमःप्रभायां नारकस्य विक्रियियोत्कर्षेण जंबूद्वीपप्रमाणं, वैक्रियिकं शरीरं विकरोति देवः। आहारकमरत्निप्रमाणं। तैजसकार्मणे जघन्येन यदोपात्तौदारिकशरीर

प्रमाणे, उत्कर्षेण केवलिसमुद्घाते सर्वलोकप्रमाणे । क्षेत्रतोऽन्यत्व– औदारिकवैक्रियिकाहारकाणि लोकस्यासख्येयभागक्षेत्रे । तैजसकार्मणे लोकस्यासख्येयभागेऽसख्येयेषु भागेषु सर्वलोके वा प्रतरलोकपूरणयो ।
स्पर्शनतोऽन्यत्व– औदारिकादानीमेकजीव प्रति वक्ष्याम । औदारिकेण तिर्यग्भि सर्वलोक स्पृष्ट । मनुष्यै लोकस्यासख्येयभाग । मूलवैक्रियिकशरीरेण लोकस्यासख्येयभागा उत्तरवैक्रियिकेणाऽष्टौ चतुर्दशभागा देशोना, कथ ? सौधर्मदेवा स्वपरप्रधान्यादारणाच्युतविहारात् षड्रज्जुर्गच्छति स्वप्राधान्यात्, अथ आ वालुकपृथिव्या द्वे रज्जू इति । आहारकेण लोकस्यासख्येयभाग स्पृशति, तैजसकार्मणाभ्या सर्वलोक ।
कालतोऽन्यत्व– एक जीव प्रति वक्ष्याम । मिश्रक वर्जयित्वौदारिकस्य तिर्यङ्मनुष्याणा जघन्येनातर्मुहूर्त, उत्कर्षेण त्रीणि पल्योपमान्यतर्मुहूर्तोनानि, स चातर्मुहूर्तोऽपर्याप्तकाल । वैक्रियिकस्य देवान्प्रति मूलवैक्रियिकदेहस्य जघन्येन दशवर्षसहस्राण्यपर्याप्तकालातर्मुहूर्तोनानि, उत्कर्षेण त्रयस्त्रिंशत्सागरोपमाण्यपर्याप्तकालातर्मुहूर्तोनानि, उत्तरवैक्रियिकस्य जघन्य उत्कृष्टश्चाऽतर्मुहूर्त । तीर्थकरजन्मनदीश्वराहदायतनादिपूजासु कथमिति चेत् पुन पुनर्निकरणात्सातत्यान्नच्छेद । आहारकस्य कालो जघन्यउत्कृष्टश्चातर्मुहूर्त, तैजसकार्मणयो सतत्यादेशादभव्यान्प्रत्यनादिरपर्यवसान काल । भव्याश्च काश्चित्प्रति येऽनतेनापि कालेन न सेत्स्यति । ये सेत्स्यति तान् प्रत्यनादि सपर्यवसान एकसमयिक । निषेक प्रति तैजसस्य षट्षष्टिसागरोपमाणि । कार्मणस्य कर्मस्थिति सप्ततिसागरोपमकोटिकोट्य । अतरेऽन्यत्वमौदारिकादीनामेकजीव प्रति वक्ष्यामि– मिश्रक वर्जयित्वौदारिकस्यातर्मुहूर्तोतर जघन्य, कतरोतर्मुहूर्त ? औदारिकमिश्रकालोतर्मुहूर्त । कथ ? इह चातुर्गतिक तिर्यङ्मनुष्येषूत्पन्नोतर्मुहूर्तमपर्याप्तको भूत्वा पर्याप्तकत्व प्राप्यातर्मुहूर्त जीवित्वा मृत, पुनस्तिर्यङ्मनुष्ययोरन्यतरत्रोत्पन्न अपर्याप्तिकीमातर्मुहूर्तिकीमनुभूय पर्याप्तको जात, लब्धमौदारिकातर । उत्कर्षेण त्रयस्त्रिंशत्सागरोपमाणि सातिरेकाणि । कथ ? यो मनुष्यस्त्रयस्त्रिंशत्सागरोपमायुष्षु देवेषूत्पद्य स्थितिक्षये प्रच्युत पुनर्मनुष्येषूत्पद्यते तस्य यो पर्याप्तिकालस्तेनाधिकानि त्रयस्त्रिंशत्सागरोपमाणि । वैक्रियिकस्य जघन्यमतरमतर्मुहूर्त, कथ ? मनुष्यस्तिर्यग्वा मृत, दशवर्षसहस्रायुष्कदेवेषूत्पद्य च्युत मनुष्येषु तिर्यक्षु चोत्पद्याऽपर्याप्तकालमनुभूय पुनर्देवायुर्बद्ध उत्पद्यते लब्धमतर, वैक्रियिकस्योत्कर्षेणातरमनतकाल, कथ ? देवत्वाच्च्युतोऽनतकाल तिर्यङ्मनुष्येष्वटित्वा देवो जात, अपर्याप्तकालमनुभूय वैक्रियिकशरीरो दृष्ट लब्धमतर, आहारकस्यातर जघन्यमतर्मुहूर्त प्रमत्तसयत आहारक निर्वर्त्यातर्मुहूर्तमाहारकेण स्थित प्रकृताहारकशरीरकार्यमुपसहृत्य पुनर्लब्धिसनिधानादतर्मुहूर्तमवस्थाय निर्वर्तयतीति लब्धमतर । उत्कर्षेणार्धपुद्गलपरिवर्त अतर्मुहूर्तोन, कथ ? योऽनादिमिथ्यादर्शनमोहमुपशम्योपशमसम्यक्त्व सयम च युगपत्प्रतिपन्न उपशमसम्यक्त्वाच्च्युतो वेदक सम्यक्त्वेनोत्पद्यातर्मुहूर्तस्थित सन्नप्रमत्तसयतस्थाने आहारक बध्वा तत प्रमत्तसयतो निर्वर्त्य मूलशरीर प्रविश्य मिथ्यात्व गत सोऽर्धपुद्गलपरिवर्त देशोनमटित्वा मनुष्येषूत्पद्य पूर्वविधिना सम्यक्त्वमुत्पाद्याऽसयतसम्यग्दृष्टिसयतासयतयोऽन्यतरत्र दर्शनमोह क्षपयित्वा सयम प्रतिपद्याप्रमत्ताहारस्य बधक प्रमत्तो निर्वर्तयतीति लब्धमतर । अत्र ये क्षयोपशमप्राथमिकाश्चत्वारोतर्मुहूर्तास्ते कतरे ? प्रथमो दर्शनमोहोपशमसम्यक्त्वसमानकालसयमातर्मुहूर्त । द्वितीयो वेदकसम्यक्त्वातर्मुहूर्त । तृतीय आहारकबधातर्मुहूर्त । चतुर्थ आहारकनिर्वृत्त्यतर्मुहूर्त । एते चत्वार आद्या अतर्मुहूर्ता उत्तरकालमाहारकशरीर निर्वृत्त्यतर्मुहूर्त पचमो मूलशरीर प्रविश्य प्रमत्ताप्रमत्ताभ्या बहून्वारानभवतो बहवोतर्मुहूर्ता अतोध प्रवृत्तकरणविशुद्ध्या विशुद्धो विश्रात । अपूर्वकरणानिवृत्तिसूक्ष्मसापरायक्षीणकषायसयोग्ययोगिनामेकैकोऽतर्मुहूर्त इयता कालेन हीनोऽर्धपुद्गलपरिवर्त । तैजसकार्मणयोर्नास्त्यतर सर्वससारिषु सर्वकाल सनिधानात् । सख्यातोऽन्यत्व– औदारिकाण्यसख्येया लोका, वैक्रियिकाण्यसख्याता श्रेणयो लोकप्रतरस्यासख्येयभाग, आहारकाणि सख्येयानि चतु पचाशत, तैजसकार्मणान्यनतानि अनतानतलोका । प्रदेशतोऽन्यत्व– औदारिकस्यानता प्रदेशा अभव्यानामनतगुणा सिद्धानामनतभागा । एव शेषाणा चतुर्णामपि शरीराणामनतस्यानतविकल्पत्वादुत्तरोत्तराण्यधिकानि, आधिक्यपरिमाण प्रागुक्त । भावतोऽन्यत्व– औदारिकादित्वशरीर-

नामोदयात्सर्वाण्यौदयिकभावा । अल्पबहुत्वतोऽन्यत्व– सर्वत स्तोकान्याहारकाणि, वैक्रियिकाण्यसंख्येयगुणानि को गुणकार असख्याता ? श्रेणय., लोकप्रतरस्यासख्येयभाग ,तत औदारिकाणि असख्येयगुणानि। को गुणकार ? असख्येया लोका । तजैसकार्मणानामनतगुणानि को गुणकार सिद्धानामनतगुणा ।आत्माश्रितकार्मणनिमित्तविजृंभितानि शरीराणि बिभ्रता ससारिणा चातुर्विध्यवतामिंद्रियसबधप्रतिविकल्पभाजा प्रतिप्राणिन ।किं त्रिलिंगसनिधानमुतलिंगानियम कश्चिदस्तीत्यत उत्तर पटति—

## नारकसंमूर्छिनो नपुंसकानि ॥ ५० ॥

**धर्मार्थकाममोक्षकार्यनरणान्नराः ॥ १ ॥** धर्मार्थकाममोक्षलक्षणानि कार्याणि नृणति नयतीति नरा ।

**नरान् कायंतीति नरकाणि ॥ २ ॥** शीतोष्णासद्वेद्योदयापादितवेदनया नरान् कायति शब्दायत इति नरकाणि ।

**नृणंतीति वा ॥ ३ ॥** अथवा पापकृत प्राणिन आत्यतिक दु ख नृणति नयतीति नरकाणि । औणादिक कर्तर्यक. ।

**नरकेषु भवा नारकाः ॥ ४ ॥**

**संमूर्छनं संमूर्छः सः एषामस्तीति संमूर्छिनः ॥५॥** नारकाश्च समूर्छिनश्च नारकसमूर्छिन. ।

**नपुंसकवेदाशुभनामोदयान्नपुंसकानि ॥ ६ ॥** चारित्रमोहविकल्पनोकषायभेदस्य नपुसकवेदस्याशुभनाम्नश्चोदयान्न स्त्रियो न पुमास इति नपुसकानि भवति। नारकसमूर्छिनो नपुसकान्येवेति नियम । तत्र हि स्त्रीपुसविषया मनोज्ञशब्दगधरूपरसस्पर्शसबधनिमित्ताऽल्पापि सुखमात्रा नास्ति । यद्येवमवध्रियतेऽर्थादापन्नमेतदुक्तेभ्योऽन्ये ये ससारिण, तेषा त्रिलिंगत्वमिति । यत्रात्यतनपुसकलिंगस्याभावस्तत्प्रतिपादनार्थमाह—

## न देवाः ॥ ५१ ॥

**स्त्रीपुंसविषयनिरतिशयसुखानुभवनाद्देवेषु नपुंसकाभावः ॥ १ ॥** स्त्रैण पौंस्न च यन्निरतिशय सुख शुभगतिनामोदयापेक्ष तदेवानुभवतीति न तेषु नपुसकानि सति तच्चोपरि वक्ष्यते । अथेतरे कियल्लिंगा इत्यत आह—

## शेषास्त्रिवेदाः ॥ ५२ ॥

त्रयो वेदा येषा ते त्रिवेदा के पुनस्ते ? स्त्रीत्व पुस्त्व नपुसकत्वमिति । कथ तेषा सिद्धि ?

**नामकर्मचारित्रमोहनोकषायोदयाद्वेदत्रयसिद्धिः ॥ १ ॥** नामकर्मणश्चारित्रमोहविकल्पस्य नोकषायस्य चोदयाद्वेदत्रयस्य सिद्धिर्भवति । वेद्यत इति वेदो लिंगमित्यर्थ तल्लिंग द्विविध द्रव्यलिंग भावलिंग चेति। नामकर्मोदयाद्योनिमेहनादि द्रव्यलिंग भवति । नोकषायोदयाद्भावलिंग । तत्र स्त्रीवेदोदयात्स्त्यायत्यस्या गर्भ इति स्त्री, पुवेदोदयात्सूते जनयत्यपत्यमिति पुमान्, नपुसकवेदोदयात्तदुभयशक्तिविकल नपुसक। रूढिशब्दाश्चैते। रूढिषु च क्रिया व्युत्पत्त्यर्थैव, यथा गच्छतीति गौरिति। इतरथा हि गर्भधारणादिक्रियाप्राधान्ये बालवृद्धाना तिर्यङ्मनुष्याणा देवाना कार्मणकाययोगस्थाना च तदभावात्स्त्रीत्वादिव्यपदेशो न स्यात् । तत्र हि स्त्रीवेदोऽगारवत् पुवेदस्तृणाग्निवत् इष्टकाग्निवन्नपुसकवेदस्त एते त्रयोऽपि वेदा. शेषाणा गर्भजाना भवति । य इमे जन्मयोनिशरीरलिंगसबंधाहितविशेषा प्राणिनो निरदिश्यत देवादयो विचित्रधर्माधर्मवशीकृतास्चतसृषु गतिषु शरीराणि धारयत ।किं यथाकालमुपभुक्तायुषो मूर्त्यतराण्यास्कदति उतायथाकालमपीत्यत उत्तर पठति—

**औपपादिकचरमोत्तमदेहा संख्येयवर्षायुषोऽनपवर्त्यायुषः ॥ ५३ ॥**

**औपपादिका उक्ता. ॥ १ ॥** उक्ता व्याख्याता औपपादिका देवनारका इति ।

**चरमशब्दस्यांतवाचित्वात्तज्जन्मनि निर्वाणार्हग्रहणं ॥ २ ॥** चरमशब्दोऽन्त्यपर्यायवाची चरमो देहो येषा त इमे चरमदेहा इति परीतससारास्तज्जन्मनिर्वाणार्हा गृह्यते ।

**उत्तमशब्दस्योत्कृष्टवाचित्वाच्चक्रधरादिग्रहणं ॥ ३ ॥** अयमुत्तमशब्द उत्कृष्टवाची उत्तमो देहो येषा त इमे उत्तमदेहा इति चक्रधरादिग्रहण वेदितव्य ।

**उपमाप्रमाणगम्यायुषोऽसंख्येयवर्षायुषः ॥ ४ ॥** अतीतसंख्यानामुपमाप्रमाणेन पल्यादिना गम्यमायुर्येषा त इमेऽसंख्येयवर्षायुषस्तिर्यङ्मनुष्याणामुत्तरकुर्वादिषु प्रसूता ।

**बाह्यप्रत्ययवशादायुषो ह्रासोपवर्तः ॥ ५ ॥** बाह्यस्योपघातनिमित्तस्य विषशस्त्रादे सति सन्निधाने ह्रासोऽपवर्त इत्युच्यते । अपवर्त्यमायुर्येषा त इमेऽपवर्त्यायुष , नापवर्त्यायुषोऽनपवर्त्यायुष ,एते औपपादिकादय उक्ता अनपवर्त्यायुषो न हि तेषामायुषो बाह्यनिमित्तवशादपवर्तोऽस्ति ।

**अत्यचक्रधरवासुदेवादीनामायुषोपवर्तदर्शनादव्याप्ति ॥ ६ ॥** उत्तमदेहाश्चक्रधरादयोऽनपवर्त्यायुष इत्येतत् लक्षणमव्यापि।कुत ? अतस्य चक्रधरस्य ब्रह्मदत्तस्य वासुदेवस्य च कृष्णस्य अन्येषा च तादृशाना बाह्यनिमित्तवशादायुरपवर्तदर्शनात् ?

**न वा चरमशब्दस्योत्तमविशेषणत्वात् ॥ ७॥** न वैषदोष किं कारण ? चरमशब्दस्योत्तमविशेषणत्वात् । चरम उत्तमो देह एषा ते चरमोत्तमदेहा इति ।

**उत्तमग्रहणमेवेति चेन्न तदनिवृत्ते. ॥ ८ ॥** स्यादेतदुत्तमग्रहणमेवास्तु उत्तमदेहा इति ? तन्न किं कारण ? तदनिवृत्ते , यो दोष उक्तोऽव्याप्तिरिति स तदवस्थ एव तेषामप्युत्तमदेहत्वात् ।

**चरमग्रहणमेवेति चेन्न तस्योत्तमत्वप्रतिपादनार्थत्वात् ॥ ९ ॥** स्यान्मत चरमग्रहणमेवास्तु चरमदेहा इति नार्थ उत्तमग्रहणेनेति ? तन्न किं कारण ? तस्योत्तमत्वप्रतिपादनार्थत्वात् । स हि चरमो देह सर्वेषामुत्तम इत्यर्थ प्रतिपाद्यते। चरमदेहा इति केषाचित्पाठ एतेषा नियमेनायुरनपवर्त्यमितरेषामनियम ।

**अप्राप्तकालस्य मरणानुपलब्धेरपवर्ताभाव इति चेन्न दृष्टत्वादाम्रफलादिवत् ॥१०॥** यथावधारितपाककालात्प्राक् सोपायोपक्रमे सत्याम्रफलादीना दृष्ट पाकस्तथा परिच्छिन्नमरणकालात् प्रागुदीरणाप्रत्यय आयुषो भवत्यपवर्त ।

**आयुर्वेदसामर्थ्याच्च ॥ ११ ॥** यथाष्टाङ्गायुर्वेदविद्भिषक् प्रयोगेऽतिनिपुणो यथाकालवाताद्युदयात्प्राग्वमनविरेचनादिनानुदीर्णमेव श्लेष्मादि निराकरोति । अकालमृत्युव्युदासार्थं रसायन चोपदिशत्यन्यथा रसायनोपदेशस्य वैयर्थ्यं न वादोऽस्ति ? अत आयुर्वेदसामर्थ्यादस्त्यकालमृत्यु ।

**दुःखप्रतीकारार्थ इति चेन्नोभयथा दर्शनात् ॥ १२ ॥** स्यान्मत दु खप्रतीकारार्थ आयुर्वेदस्येति ? तन्न किं कारण ? उभयथा दर्शनात् । उत्पन्नवेदनयोर्हि चिकित्सादर्शनात् ।

**कृतप्रणाशप्रसंग इति चेन्न दत्त्वैव फलं निवृत्ते ॥ १३ ॥** स्यान्मत यद्यकालमृत्युरिति कृतप्रणाश प्रसज्यते इति ? तन्न किं कारण ? दत्त्वैव फल निवृत्तेनाकृतस्य कर्मण फलमुपभुज्यते नच कृतकर्मफलविनाश , अनिर्मोक्षप्रसगाद्, दानादिक्रियारम्भाभावप्रसगाच्च । किंतु कृत कर्म कर्त्रे फल दत्त्वैव निवर्तते विततार्द्रपटशोषवत् अयथाकालनिर्वृत्त पाक इत्यय विशेष ।

इति तत्त्वार्थवार्तिके व्याख्यानालकारे द्वितीयोध्यायः ॥ २ ॥

---

# अथ तृतीयोऽध्यायः ।

ओंनमः सिद्धेभ्यः ।

मोक्षमार्गे त्रिविधे कृते आदावुद्दिष्टस्य सम्यग्दर्शनस्य विषयप्रदर्शनार्थे जीवादिपदार्थोपदेशे कर्तव्ये जीवा निर्दिष्टा । इदानीं तदधिष्ठानव्याख्यानप्रसंगेन लोकविभागो वक्तव्य स पुनस्त्रिविध अधोलोकस्तिर्यग्लोक ऊर्ध्वलोक । तत्र क्रमप्राप्तस्याऽधोलोकस्य वर्णनार्थमुच्यते। अथवा संवेगहेतुत्वात् स नारकी शीतोष्णनिमित्ता सुतीव्रवेदना श्रुत्वाऽथ कथ सविग्न स्यादिति प्रथममधोलोक उच्यते । अथवा भवप्रत्ययोऽवधिर्देवनारकाणामित्येवमादिषु नारका श्रुता, तत पृच्छति के ते नारका ? इति तत्प्रतिपादनार्थं तदधिकरणनिर्देश क्रियते—

## रत्नशर्करावालुकापंकधूमतमोमहातमःप्रभाभूमयो घनांबुवाताकाशप्रतिष्ठाः सप्ताधोधः ॥ १ ॥

**रत्नादीनामितरेतरयोगे द्वंद्वः ॥ १ ॥** रत्न च शर्करा च वालुका च पकश्च धूमश्च तमश्च महातमश्च रत्नशर्करावालुकापंकधूमतमोमहातमांसीति इतरेतरयोगे द्वंद्वो द्रष्टव्य ।

**प्रभाशब्दस्य प्रत्येकं परिसमाप्तिर्भुजिवत् ॥ २ ॥** यथा देवदत्तजिनदत्तगुरुदत्ता भोज्यतामिति प्रत्येक भुजि परिसमाप्यते । एव प्रभाशब्दस्यापि प्रत्येक परिसमाप्तिर्वेदितव्या । रत्नप्रभा शर्कराप्रभा वालुकाप्रभा पकप्रभा धूमप्रभा तम प्रभा महातम प्रभा चेति ।

**साहचर्यात्ताच्छब्द्यसिद्धिर्यष्टिवत् ॥ ३ ॥** यथा यष्टिसहचरितो देवदत्तो यष्टिरित्युच्यते तथा चित्र-वज्र-वैडूर्य-लोहित-क्षमसार-गल्व-गोमेद-प्रवाल-ज्योती-रसाजन-मूलकाक-स्फटिक-चदन-वर्चक-बकुल-शिलामयाख्यषोडशधापरिष्कृतरत्नप्रभासहचरितत्वाद्रत्नप्रभा भूमि । शर्कराप्रभासहचरिता शर्कराप्रभा, वालुकाप्रभासहचरिता वालुकाप्रभा, पकप्रभासहचरिता पकप्रभा, धूमप्रभासहचरिता धूमप्रभा, तम प्रभासहचरिता तम प्रभा, महातम प्रभासहचरिता महातम प्रभेति ।

**तमःप्रभेति विरुद्धमिति चेन्न स्वात्मप्रभोपपत्तेः ॥ ४ ॥** स्यन्मत तमोंऽधकार, प्रभा प्रकाश इति विरुद्धावेतावर्थौ यदि तमो न प्रभा, अथ प्रभा न तमस्तमप्रभेत्यभिधानमनुपपन्नमिति ? तन्न किं, कारण ? स्वात्मप्रभोपपत्ते । न दीप्तिरूपैव प्रभा किं तर्हि द्रव्याणा स्वात्मैव मृजा प्रभा यत्सनिधानान्मनुष्यादीनामय सव्यवहारो भवति स्निग्धकृष्णप्रभमिद रूक्षकृष्णप्रभमिति ततस्तम प्रभेति ।

**भेदे रूढिशब्दानामगमकत्वमवयवार्थाभावादिति चेन्न सूत्रस्य प्रतिपादनोपायत्वात् ॥ ५ ॥** स्यादेतद्यद्येते नैमित्तिका रूढिशब्दा भेदे गमकात्मेषा नास्ति कुतोऽवयवार्थाभावादिति ? तन्न किं,कारण सूत्रस्य प्रतिपादनोपायत्वात् तेषा सज्ञाशब्दाना प्रतिपादनोपायभूतमिदमस्मान्निमवचनस्थानाच्छन्दांतराण्युपप्लवते यैरर्थो सज्ञायते ।

**भूमिग्रहणमधिकरणविशेषप्रतिपत्त्यर्थं ॥ ६ ॥** यथा स्वर्गपटलानि भूमिमनाश्रित्यावस्थितानि न तथा नारकावासा, किं तर्हि ? भूमीराश्रित्य व्यवस्थिता इत्यधिकरणविशेषप्रतिपत्त्यर्थं भूमिग्रहण ।

**घनांब्वादिग्रहण तदालंबननिर्ज्ञानार्थं ॥ ७ ॥** तासा भूमीनामालम्बननिर्ज्ञानार्थं घनाम्ब्वादिग्रहण क्रियते घनमेवाबु घनाबु घनाबु च वातश्चाकाश च घनाबुवाताकाशानि तानि प्रतिष्ठाऽऽश्रयो यासां ता घनाबुवाताकाशप्रतिष्ठा । सर्वा एता भूमय घनोदधिवलयप्रतिष्ठा, घनोदधिवलय घनवातवलयप्रतिष्ठ,घनवात वलय तनुवातवलयप्रतिष्ठ, तनुवातवलयमाकाशप्रतिष्ठमाकाशमात्मप्रतिष्ठ, तस्यैवाधाराधेयत्वात् । त्रीण्यप्येतानि

वलयान्यन्वर्थसंज्ञानि प्रत्येक विंशतियोजनसहस्रबाहुल्यानि। तत्र घनोदधयो मुद्गसन्निभा, घनवाता गोमूत्रवर्णा, अव्यक्तवर्णास्तनुवाता। तत्र रत्नप्रभाया बाहुल्यमेकयोजनशतसहस्रमशीतिश्च योजनसहस्राणि। तस्यास्त्रयोभागा खरपृथिवीभाग, पंकबहुल, अब्बहुलश्चेति। तत्र चित्रादिषोडशधाप्रकल्परत्नाचित खरपृथिवी भाग षोडशयोजनसहस्रबहुल। पंकबहुल चतुरशीतियोजनसहस्रबहुल। अब्बहुलोऽशीतियोजनसहस्रबहुल। तत्र खरपृथिवीभागस्योपर्यधश्चैकैक योजनसहस्र परित्यज्य मध्यमभागेषु चतुर्दशसु योजनसहस्रेषु किंनरकिंपुरुषमहोरगगंधर्वयक्षराक्षसभूतपिशाचाना सप्ताना व्यंतराणा, नागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराणा नवाना भवनवासिना चावासा। पंकबहुलभागेऽसुरराक्षसानामावासा। अब्बहुलभागे नरकाणि। शर्कराप्रभाया बाहुल्य द्वात्रिंशद्योजनसहस्राणि ततोऽधोधस्तानि चतुर्भिश्चतुर्भिर्योजनसहस्रोनानि बाहुल्यानि वेदितव्यानि आषष्ठ्या। सप्तम्या अष्टौ योजनसहस्राणि। सर्वासा तासामंतराणि तिर्यक् चासंख्येया योजनकोटीकोट्य।

**सप्तग्रहणमियत्तावधारणार्थं ॥ ८ ॥** यथा गम्येत सप्तैव नरकाधारभूमयो नाष्टौ न षड् चेति संख्यांतरनिवृत्त्यर्थं। संति हि केचित्तंत्रांतरीया अनंतेषु लोकधातुष्वनंता पृथिवीप्रस्तारा इत्यध्यवसिता। कथ तेषा निवृत्ति ? स्याद्वादनीतिनिरूपितकर्मफलसंबंधादियुक्तिसद्भावात्। आर्हतस्यागमस्य प्रामाण्य न शेषाणा तदभावादिति।

**अधोधोवचनं तिर्यक्प्रचयनिवृत्त्यर्थं ॥ ९ ॥** यथा गम्येताधोध एव सप्तापि भूमयो न तिर्यक्प्रचयेनावस्थिता इति प्रतिपत्त्यर्थमधोधोग्रहण।

**सामीप्याभावाद् द्वित्वानुपपत्तिरिति चेन्नांतरस्याविवक्षितत्वात् ॥ १० ॥** स्यान्मत प्रत्येक भूमानामंतराण्यसंख्यातयोजनकोटाकोटिपरिमाणानि तत सामीप्याभावाद् द्वित्वाभाव इति ? तन्न। किं कारण ? अंतरस्याविवक्षितत्वात्। कथमविवक्षा सत ? सतोऽप्यविवक्षा भवति यथा लोमिकाडका अनुदरा कन्येति।

**तुल्यजातीयेनाव्यवधानं सामीप्यमिति वा ॥ ११ ॥** अथवा यदंतर तत्पूर्वोत्तरभागांतपातित्वात्सामीप्यमिति तद्द्योतनार्थं द्वित्व।

**पृथुतरा इति केषांचित्पाठः ॥१२॥** केचिदत्र पृथुतरा इति पठंति अत्र तरनिर्देश, कुत ? प्रकर्षाभावात्। द्वयोर्द्वयोर्वाभिसंबंधे सति महत्त्वविशेषप्रख्यापनार्थस्तरशब्द। एवमपि रत्नप्रभाया पृथुतराव्यपदेशो नास्ति प्रतियोग्यभावादपि च शर्कराप्रभादीना प्रकर्षाभावोऽधोधोहीनपरिमाणत्वात् तस्मादधोध पृथुतरा इति व्यपदेशो नोपपद्यते। स्यादेतदधोलोकस्य वेत्रासनसंस्थानस्याधोध पृथुत्वप्रकर्षात् पृथुतरा इति व्यपदेश इति तन्न न भूमिभ्यो बहिस्तत्पृथुत्वमेव युक्त स्वयंभूरमणसमुद्रातादवगाहिता रज्जु सप्तम्या भूमेरवसाने पूर्वादिदिग्विभागावगाहिकालमहाकालरौरवमहारौरवांते पततीति। अथापि कथंचित्स्यात्प्रकर्षे तिर्यक् पृथुतरा इति वक्तव्य स्यान्नाधोध इति। अथापि कश्चिदनेन विशेषणेनार्थ एवंग्राह्यमधोधो वेदनाप्रकर्षाप्रकर्षयोगादायुर्योतिशयाद्वा तन्निमित्तस्य तद्व्यपदेशदर्शनात् तत्संबंधाद्वा भूमय पृथुतरा इति व्यपदिश्यते। एवमपि रत्नप्रभाया पृथुतराव्यपदेशो नोपपद्यत एव। अत्राह किं ता भूमयो नारकाणा सर्वत्रावासा आहोस्वित् क्वचित् क्वचिदिति ? तन्निर्धारणार्थमाह—

## तासु त्रिंशत्पंचविंशतिपंचदशदशत्रिपंचोनैकनरकशतसहस्राणि पंच चैव यथाक्रमं ॥ २ ॥

तासु रत्नप्रभादिषु भूमिषु नरकाण्यनेन संख्यायते।

**त्रिंशदादीनां परस्पराभिसंबंधे वृत्तिः ॥ १ ॥** त्रिंशदादीनां पदानां परस्पराभिसंबंधे सति वृत्तिर्वेदितव्या। पंचभिरूनं पंचोनं पंचोनं च यदेकं च तत्पंचोनैकं त्रिंशच्च पंचविंशतिश्च पंचदश च दश च त्रयश्च पंचोनैकं च त्रिंशत्पंचविंशतिपंचदशदशत्रिपंचोनैकानि, शतानां सहस्राणि शतसहस्राणि नरकाणां शतसहस्राणि नरकशतसहस्राणि, त्रिंशत्पंचविंशतिपंचदशदशत्रिपंचोनैकनरकशतसहस्राणि । यथाक्रमवचनं यथासंख्याभिसंबंधार्थं । यो यः क्रमो यथाक्रमं, तस्य वचनं रत्नप्रभादिभिः त्रिंशतादीनां यथासंख्यमभिसंबंधो यथा स्यादिति । तद्यथा– रत्नप्रभायां त्रिंशन्नरकशतसहस्राणि। शर्कराप्रभायां पंचविंशतिनरकशतसहस्राणि। वालुकाप्रभायां पंचदशनरकशतसहस्राणि। पंकप्रभायां दशनरकशतसहस्राणि। धूमप्रभायां त्रीणि नरकशतसहस्राणि। तमःप्रभायां पंचोनमेकनरकशतसहस्रं। महातमःप्रभायां पंचनरकाणि। तत्र रत्नप्रभायां अब्बहुलभागे उपर्यधश्चैकैकं योजनसहस्रं वर्जयित्वा मध्ये नरकाणि भवंति। तानि त्रिधा वर्ण्यंते, इंद्रकश्रेणिपुष्पप्रकीर्णकविभागेन। तत्र रत्नप्रभायां त्रयोदशनरकप्रस्ताराः, त्रयोदशैवेंद्रकनरकाणि-सीमंतक-निरय-रौरव-उद्भ्रांत– उद्भ्रांत-संभ्रांत– असंभ्रांत-विभ्रांत-तप्त-त्रस्त-व्युत्क्रांत– अवक्रांत विक्रांतनामानि। शर्कराप्रभायामेकादश नरकप्रस्ताराः एकादशैवेंद्रकनरकाणि, स्तनक-संस्तनक-वनक-मनक-घाट-संघाट-जिह्व– उज्जिह्विक– अलोल-लोलुक-स्तनलोलुकाख्यानि। वालुकाप्रभायां नव नरकप्रस्ताराः नवैवेंद्रकनरकाणि तप्त-त्रस्त-तपन-आतपन-निदाघ प्रज्वलित-उज्ज्वलित-संज्वलित-संप्रज्वलितसंज्ञकानि। पंकप्रभायां सप्तनरकप्रस्ताराः सप्तैवेंद्रकनरकाणि आर-मार-तार-वर्चस्क-वैमनस्क-खाट– अखाटाख्यानि। धूमप्रभायां पंच नरकप्रस्ताराः पंचैवेंद्रकनरकाणि तम-भ्रम-झष– अंध-तमिस्राभिधानानि। तमःप्रभायां त्रयो नरकप्रस्ताराः, त्रीण्येवेंद्रकनरकाणि हिम, वर्दल, लल्लकनामधेयानि। महातमःप्रभायामेको नरकप्रस्तारः, एकमेवेंद्रकनरकमप्रतिष्ठानाख्यं। तत्र सीमंतनरकस्य चतसृषु दिक्षु चतस्रो नरकश्रेण्यो निर्गतास्तथा विदिक्ष्वपि। तदंतरेषु पुष्पप्रकीर्णकनरकाणि। तत्रैकैकस्यां दिङ्नरकश्रेण्यामेकान्नपंचाशदेकोनपंचाशन्नरकाणि तथैकैकस्यां विदिङ्नरकश्रेण्यामष्टचत्वारिंशदष्टचत्वारिंशन्नरकाणि। एवं निरयादिष्वप्येकैकं परिहाप्य नेतव्यानि– तत्र प्रथमायां पृथिव्यां श्रेणींद्रकनरकाणां संख्या चतुश्चत्वारिंशच्छतानि त्रयस्त्रिंशानि। पुष्पप्रकीर्णकानामेकोनत्रिंशच्छतसहस्राणि पंचनवतिश्च सहस्राणि पंचशतानि सप्तषष्ठ्यधिकानि। एतावुभावपि राशी संपिंडितौ त्रिंशन्नरकशतसहस्राणि। द्वितीयायां श्रेणींद्रकनरकसंख्या षड्विंशति शतानि पंचनवत्युत्तराणि। पुष्पप्रकीर्णकानां संख्या चतुर्विंशति शतसहस्राणि सप्तनवति सहस्राणि त्रीणि शतानि पंच च, एतावुभावपि राशी संपिंडितौ पंचविंशतिनरकशतसहस्राणि। तृतीयायां श्रेणींद्रकनरकसंख्या चतुर्दशशतानि पंचाशीत्यधिकानि। पुष्पप्रकीर्णकसंख्या चतुर्दशशतसहस्राणि अष्टानवति सहस्राणि पंचशतानि पंचदशाधिकानि एतावुभावपि राशी संपिंडितौ पंचदशनरकशतसहस्राणि। चतुर्थ्यां श्रेणींद्रकनरकसंख्या सप्ताधिकानि सप्तशतानि। पुष्पप्रकीर्णकसंख्या नवनरकशतसहस्राणि नवनवतिश्च सहस्राणि द्वे शते त्रिनवत्युत्तरे। एतावुभावपि राशी संपिंडितौ दशनरकशतसहस्राणि। पंचम्यां श्रेणींद्रकनरकसंख्या द्वे नरकशते पंचषष्ट्यधिके। पुष्पप्रकीर्णकसंख्या द्वे शतसहस्रे नवनवतिश्च सहस्राणि सप्तशतानि पंचत्रिंशानि च एतावुभावपि राशी [illegible] त्रीणि नरक[illegible] [illegible]णि। षष्ठ्यां श्रेणींद्रकनरकसंख्या त्रिप-

चत्वार । सप्तम्यां सर्वेंद्रकनरकबाहुल्य स्वेंद्रकबाहुल्य स्वत्रिभागपरिवर्धित तच्छ्रेण्या श्रेणींद्रकबाहुल्यसहित ज्ञेय प्रकीर्णकस्य । तान्येतानि नरकाणि उष्ट्रकाद्यशुभसस्थानानि शोचनरोदनाक्रदनाद्यशुभनामानि वेदितव्यानि । अथ तेषु सीमतकादिषु नरकेषु पापकर्मवशात्प्रादुर्भवत प्राणिन किंलक्षणा ? इत्यत आह--

## नारका नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः ॥ ३ ॥

**लेश्यादिशब्दा उक्तार्थाः ॥ १ ॥** लेश्यादय शब्दा उक्तार्था वेदितव्या । लेश्या च परिणामश्च देहश्च वेदना च विक्रिया च लेश्यापरिणामदेहवेदनाविक्रिया । लोके प्रतियोग्यतरापेक्षया प्रकर्षो दृष्ट, इह ऽशुभतरा इति किमपेक्ष्य प्रकर्षनिर्देश ? उच्यते---

**तिर्यग्व्यपेक्षोऽतिशयनिर्देशः ॥ २ ॥** तिरश्चामप्यशुभा लेश्यादयो नारकाणा च । तत प्रकर्षेण नारकाणामित्यशुभतरा ।

**ऊर्ध्वापेक्षो वाऽधोगतानां ॥ ३ ॥** अथवा ऊर्ध्वनरकाशुभतरलेश्याद्यपेक्षयाऽधोगतानां प्रकर्षो दृष्टव्य ।

**नित्यग्रहणाल्लेश्याद्यनिवृत्तप्रसंग इति चेन्नाभीक्ष्ण्यवचनत्वात् नित्यप्रहसितवत् ॥ ४ ॥** स्यादेतन्नित्यशब्दोय कूटस्थेष्वविचलेषु भावेषु दृष्ट, यथा नित्या द्यौ नित्या पृथिवी नित्यमाकाशमिति तथा लेश्यादीनामपि व्ययोदयाभावान्नित्यत्वे सति नरकादप्रच्यव स्यादिति ? तन्न किं कारणमाभीक्ष्ण्यवचनान्नित्यप्रहसितवत् । यथा नित्यप्रहसितो देवदत्त इत्युच्यते योऽभीक्ष्ण प्रहसति नच तस्य प्रहसनानिवृत्ति ? कारणे सति भावात् । तथा शुभकर्मोदयनिमित्तवशात् लेश्यादयोऽनारत प्रादुर्भवतीति आभीक्ष्ण्यवचनो नित्यशब्द प्रयुक्त । नित्यमशुभतरा नित्याशुभतरा सुप्सुपेति वृत्तिर्मयूरव्यसकादित्वाद्वा । नित्याशुभतरा लेश्यापरिणामदेहवेदनाविक्रिया येषा त इमे नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रिया । तत्राशुभतरलेश्या इति,प्रथमद्वितीययो कापोतलेश्या । तृतीयायामुपरिष्टात्कापोती अधोनीला । चतुर्थ्यां नीला । पचम्यामुपरि नीलाऽध कृष्णा । षष्ठ्या कृष्णा । सप्तम्या परमकृष्णा । एतेषा नारकाणा स्वायु प्रमाणावधृता द्रव्यलेश्या उक्ता, भावलेश्यास्तु षडपि प्रत्येकमतर्मुहूर्तपरिवर्तिन्य । अशुभतरपरिणामा इति स्पर्शरसगधवर्णशब्दपरिणामा क्षेत्र विशेषनिमित्तवशादतिदु खहेतवोऽशुभतरा । अशुभतरदेहा इति तेषा शरीराण्यशुभनामप्रत्ययादशुभागोपांगस्पर्शरसगधवर्णस्वराणि हुडसस्थानानि लूनाडजशरीराकृतीनि क्रूरकरणबीभत्सप्रतिभयदर्शनानि, यथेह श्लेष्ममूत्रपुरीषमलरुधिरवसामेद पूयवमनपूतिमासकेशास्थिचर्माद्यशुभमौदारिकगत ततोप्यतीवाशुभत्व वैक्रियिकशरीरत्वेपि । तत्र रत्नप्रभाया नारकशरीरोत्सेध सप्तधनूषि त्रयोहस्ता षट्चागुल्य । अधोधो द्विगुणद्विगुण उत्सेध । अशुभतरवेदना इति अभ्यतरासद्वेद्योदये सत्यनादिपारिणामिकशीतोष्णबाह्यनिमित्तजनिता सुतीव्रवेदना भवति नारकाणा । तद्यथा-- निदाघे मध्याह्ने व्यभ्रे नभसि पटुतपनकिरणसततादिगतराले दूरीकृतशीतवाते दवाग्निदाहोद्दाहिप्यसमीरणे रूक्षदेशे सर्वतो दीप्ताग्निशिखापरीतस्य तृष्णार्तस्य पित्तज्वर सतापितशरीरस्य निष्प्रतीकारस्य यादृगुष्णज दु ख ततोप्यनतगुणमुष्णनरकेषु दु ख भवति । माघमासे हिमानीपतनव्याप्तशीतादिगतराले नभसि, प्रसपदजलाप्लुतकर्दममहीतले, रात्रौ शीतवातपातप्रस्फुरितगात्रकृंतदतवीणस्य शीतज्वराभिभूततनोर्निरस्ताश्रयप्रावरणस्य यादृक् शीतसमुद्भव दु ख ततोप्यनतगुण कष्ट शीतनरकेषु दु ख भवति । अथवा हिमवन्मात्रस्ताम्रगिरिरुष्णनरकेषु यदि निक्षिप्येत क्षिप्रमेव हि द्रवीभवेत् । स एवा द्रवीभूत शीतनरकेषु यदि निक्षिप्येत अक्षिनिमेषमात्र एव घन स्यादित्येवमनुमीयमान शीतोष्ण तत्र वेदितव्य । प्रथमाद्वितीयातृतीयाचतुर्थीषूष्णवेदनान्येव नरकाणि । पचम्यामुपरि उष्णवेदने द्वे नरकशतसहस्रे, अध शीतवेदनानामेक शतसहस्र, षष्ठीसप्तम्यो शीतवेदनान्येव सर्वसमुदायेन द्व्यशीतिर्नरकशतसहस्राणि उष्णवेदनानि; द्वे नरकशतसहस्रे शीतवेदने । अशुभतरविक्रिया इति शुभ करिष्याम इत्यशुभतर-

चत्वारि । सप्तम्यां सर्वेन्द्रकनरकबाहुल्यं सेन्द्रकबाहुल्यं सत्रिभागपरिवर्धितं तच्छ्रेण्या श्रेणीन्द्रकबाहुल्यसहितं शेषप्रकीर्णकस्य । तान्येतानि नरकाणि उष्ट्रिकाद्यशुभसंस्थानानि शोचनरोदनाक्रन्दनाद्यशुभनामानि वेदितव्यानि । अथ तेषु सीमन्तकादिषु नरकेषु पापकर्मवशात्प्रादुर्भवन्तः प्राणिनः किंलक्षणा इत्यत आह—

## नारका नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः ॥ ३ ॥

**लेश्यादिशब्दा उक्तार्थाः ॥ १ ॥** लेश्यादयः शब्दा उक्तार्था वेदितव्याः । लेश्या च परिणामश्च देहश्च वेदना च विक्रिया च लेश्यापरिणामदेहवेदनाविक्रियाः । लोके प्रतियोग्यन्यतरापेक्षया प्रकर्षो दृष्टः, इह अशुभतरा इति किमपेक्ष्य प्रकर्षनिर्देशः ? उच्यते—

**तिर्यग्व्यपेक्षोऽतिशयनिर्देशः ॥ २ ॥** तिरश्चामप्यशुभा लेश्यादयो नारकाणां च । ततः प्रकर्षेण नारकाणामित्यशुभतराः ।

**ऊर्ध्वापेक्षो वाऽधोगतानां ॥ ३ ॥** अथवा ऊर्ध्वनरकाशुभतरलेश्याद्यपेक्षयाऽधोगतानां प्रकर्षो द्रष्टव्यः ।

**नित्यग्रहणाल्लेश्याद्यनिवृत्तिप्रसंग इति चेन्नाभीक्ष्ण्यवचनत्वात् नित्यप्रहसितवत् ॥ ४ ॥** स्यादेतन्नित्यशब्दोऽयं कूटस्थेष्वविचलेषु भावेषु दृष्टः, यथा नित्या द्यौः नित्या पृथिवी नित्यमाकाशमिति तथा लेश्यादीनामपि व्ययोदयाभावान्नित्यत्वे सति नरकादप्रच्यवः स्यादिति ? तन्न; किं कारणमाभीक्ष्ण्यवचनान्नित्यप्रहसितवत् । यथा नित्यप्रहसितो देवदत्त इत्युच्यते योऽभीक्ष्णं प्रहसति न च तस्य प्रहसननिवृत्तिः कारणे सति भावात् । तथा अशुभकर्मोदयनिमित्तवशात् लेश्यादयोऽनारतं प्रादुर्भवन्तीति आभीक्ष्ण्यवचनो नित्यशब्दः प्रयुक्तः । नित्यमशुभतरा नित्याशुभतराः सुप्सुपेति वृत्तिर्मयूरव्यंसकादित्वाद्वा । नित्याशुभतरा लेश्यापरिणामदेहवेदनाविक्रिया येषां त इमे नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः । तत्राशुभतरलेश्या इति, प्रथमद्वितीययोः कापोतलेश्या । तृतीयायामुपरिष्टात्कापोती अधो नीला । चतुर्थ्यां नीला । पञ्चम्यामुपरि नीलाऽधः कृष्णा । षष्ठ्यां कृष्णा । सप्तम्यां परमकृष्णा । एतेषां नारकाणां स्वायुःप्रमाणावधृता द्रव्यलेश्या उक्ताः, भावलेश्यास्तु षडपि प्रत्येकमन्तर्मुहूर्तपरिवर्तिन्यः । अशुभतरपरिणामा इति स्पर्शरसगन्धवर्णशब्दपरिणामाः क्षेत्रविशेषनिमित्तवशादतिदुःखहेतवोऽशुभतराः । अशुभतरदेहा इति तेषां शरीराण्यशुभनामकर्मोदयादशुभाङ्गोपाङ्गस्पर्शरसगन्धवर्णस्वराणि हुण्डसंस्थानानि लूनाण्डजशरीराकृतीनि क्रूरकरुणबीभत्सप्रतिभयदर्शनानि, यथेह श्लेष्ममूत्रपुरीषमलरुधिरवसामेदपूयवमनपूतिमांसकेशास्थिचर्माद्यशुभमौदारिकगतं ततोऽप्यतीवाशुभत्वं वैक्रियिकशरीरत्वेऽपि । तत्र रत्नप्रभायां नारकशरीरोत्सेधः सप्त धनूंषि त्रयो हस्ताः षट् चाङ्गुलयः । अधोऽधो द्विगुणद्विगुण उत्सेधः । अशुभतरवेदना इति अभ्यन्तरासद्वेद्योदये सत्यनादिपारिणामिकशीतोष्णबाह्यनिमित्तजनिता सुतीव्रवेदना भवति नारकाणां । तद्यथा— निदाघे मध्याह्ने व्यभ्रे नभसि पटुतपनकिरणसंततदिगन्तराले दूरीकृतशीतवाते दवाग्निदाहोद्ग्राहिव्यसमीरणे रूक्षदेशे सर्वतो दीप्ताग्निशिखापरीतस्य तृष्णार्तस्य पित्तज्वरसंतापितशरीरस्य निष्प्रतीकारस्य यादृगुष्णजं दुःखं ततोऽप्यनन्तगुणमुष्णनरकेषु दुःखं भवति । माघमासे हिमानीपतनव्याप्तशीतदिगन्तराले नभसि, प्रस्यन्दजलाप्लुतकर्दममहीतले, रात्रौ शीतवातपातप्रस्फुरितगात्रकृतदन्तवीणस्य शीतज्वराभिभूततनोर्निरस्ताश्रयप्रावरणस्य यादृक् शीतसमुद्भवं दुःखं ततोऽप्यनन्तगुणं कष्टं शीतनरकेषु दुःखं भवति । अथवा हिमवन्मात्रस्ताम्रगिरिरुष्णनरकेषु यदि निक्षिप्येत क्षिप्रमेव हि द्रवीभवेत् । स एव द्रवीभूतः शीतनरकेषु यदि निक्षिप्येत अक्षिनिमेषमात्र एव घनः स्यादित्येवमनुमीयमानं शीतोष्णं तत्र वेदितव्यं । प्रथमाद्वितीयातृतीयाचतुर्थीषूष्णवेदनान्येव नरकाणि । पञ्चम्यामुपरि उष्णवेदने द्वे नरकशतसहस्रे, अधः शीतवेदनानामेकं शतसहस्रं, षष्ठीसप्तम्योः शीतवेदनान्येव सर्वसमुदायेन द्व्यशीतिर्नरकशतसहस्राणि उष्णवेदनानि; द्वे नरकशतसहस्रे शीतवेदने । अशुभतरविक्रिया इति शुभं करिष्याम इत्यशुभतर-

मेव निकुर्वंति। दुःखाभिभूतमनसश्च दुःखप्रतीकारचिकीर्षया गरीयस एव दुःखहेतून् निकुर्वंति। एते भावा अधोधोऽशुभतरा वेदितव्याः। किमेषां नारकाणां शीतोष्णजनितमेव दुःखमुतान्यथापि भवतीत्यत आह—

# परस्परोदीरितदुःखाः ॥ ४ ॥

कथं परस्परोदीरितदुःखत्वं?

निर्दयत्वात्परस्परदर्शने सति कोपोत्पत्तेः श्ववत् ॥ १ ॥ यथा श्वानः शाश्वतिककारणानादिकालप्रवृत्तजातिकृतवैरापादितनिर्दयत्वात्परस्परभक्षणभेदनछेदनाद्यादीरितदुःखा भवंति, तथा नारका अपि भवप्रत्ययेनावधिज्ञानेन मिथ्यादर्शनोदयाद्विभंगव्यपदेशभाजा च दूरादेव दुःखहेतूनवगम्योत्पन्नदुःखाः प्रत्यासत्तौ परस्परालोकनाच्च प्रज्वलितकोपाग्नयः स्वविकृतासिवासीपरशुभिंडिपालादिभिः परस्परदेहतक्षणभेदनछेदनपीडनादिभिरुदीरितदुःखा भवंति। किमेतावानेव दुःखोत्पत्तिकारणप्रकार उतान्योऽपि कश्चिदस्तीत्यत आह—

# संक्लिष्टासुरोदीरितदुःखाश्च प्राक् चतुर्थ्याः ॥ ५ ॥

पूर्वभवसंक्लेशपरिणामोपात्ताशुभकर्मोदयात्सततं क्लिष्टाः संक्लिष्टाः ॥ १ ॥ पूर्वजन्मनि भावितेनातिसंक्लेशपरिणामेन यदुपार्जितं पापकर्म तस्योदयात्सततमविरतं क्लिष्टाः संक्लिष्टाः।

असुरनामकर्मोदयादसुराः ॥ २ ॥ देवगतिनामकर्मविकल्पस्यासुरत्वसंवर्तनस्य कर्मण उदयादस्यंति परानित्यसुराः॥

संक्लिष्टविशेषणमन्यासुरनिवृत्त्यर्थं ॥ ३ ॥ न सर्वेऽसुरा नारकाणां दुःखमुत्पादयंति किं तर्हि? अंबांबरीषादय एव केचनेति प्रदर्शनार्थं संक्लिष्टविशेषणं।

असुराणां गतिविषयनियमप्रदर्शनार्थं प्राक्चतुर्थ्या इति वचनं ॥ ४ ॥ तेषां संक्लिष्टानामसुराणां वेदनोदीरणकारणानां त्रिषु पृथिवीषु गतिर्नातः परमिति प्रदर्शनार्थं प्राक्चतुर्थ्या इत्युच्यते।

आङो ग्रहणं लघ्वर्थमिति चेन्न संदेहात् ॥ ५ ॥ स्यान्मतमाङत्र प्रयोक्तव्यः, लघ्वर्थं स एव मर्यादां गमयतीति? तन्न किं कारणं? संदेहादभिविधावपि आङ् वर्तते मर्यादायामपि ततः संदेहः स्यात् किं सह चतुर्थ्या उत ततः प्रागित्यतोऽसंदेहार्थं प्राग्वचनमेव युक्तं।

चशब्दः पूर्वहेतुसमुच्चयार्थः ॥ ६ ॥ संक्लिष्टासुरोदीरितदुःखाश्च पूर्वोक्तहेतूदीरितदुःखाश्चेति समुच्चयार्थश्चशब्दः इतरथा हि तिसृषु भूमिषु पूर्वोक्तहेत्वभावः प्रतीयते।

अनंतरत्वादुदीरितग्रहणानर्थक्यमिति चेन्न तस्य वृत्तौ परार्थत्वात् ॥ ७ ॥ स्यान्मतमनंतरमुदीरितग्रहणमस्ति तेनैवात्राभिसंबंधः कर्तव्यः, अनर्थकं पुनरुदीरितग्रहणमिति? तन्न किं कारणं? तस्य वृत्तौ परार्थत्वात्। स ह्युदीरितशब्दः वृत्तौ परार्थे संव्यवस्थित इह संबंद्धुमशक्यः।

वाक्यवचनमिति चेन्नोदीरणहेतुप्रकारदर्शनार्थत्वात् ॥ ८ ॥ स्यादेतद्वाक्यमेव वक्तव्यं परस्परेणोदीरितदुःखाः संक्लिष्टासुरैश्च प्राक् चतुर्थ्या इति? तन्न किं कारणं? उदीरणहेतुप्रकारदर्शनार्थत्वात् पुनरुदीरितग्रहणेनोदीरणकारणप्रकाराः प्रदर्श्यंते तद्यथा— तप्तायोरसपायननिष्टप्तायस्तंभालिंगनकूटशाल्मल्यारोहणावतरणायोधनाभिघातवासिक्षुरतक्षणक्षारतप्ततैलावसेचनायःकुंभीपाकांबरीषभर्जनयंत्रपीडनैः शूलशलाकाव्यधनक्रकचपाटनांगारधानीवाहनसूचीशाड्वलावकर्षणैः व्याघ्रर्क्षद्वीपिश्वशृगालवृककोकमार्जारनकुलाखुसर्पवायसगृध्रककोलूकश्येनादिखादनैः तप्तवालुकाविचरणासिपत्रवनप्रवेशनवैतरण्यवतारणपरस्परचोदनादिभिश्च ते संक्लिष्टासुरा दुःखमुदीरयंति नारकाणां, किमर्थं त एवं कुर्वंतीति चेत् पापकर्माभिरतत्वात्, यथा गोमहिषमेषवराहकुक्कुटवर्तिकालावकान् मल्लांश्च युद्ध्यमानान् परस्परं घ्नतश्च

दृष्ट्वा रागद्वेषमोहाभिभूतानां अकुशलानुबंधिपुण्यानां नराणां प्रीतिरुत्पद्यते । तथा तेषामसुराणां नारकांस्तथा कारयतामन्योन्यं च घ्नतः पश्यतां परा प्रीतिरुपजायते । तेषां सत्यपि देवत्वे मायानिदानमिथ्यादर्शनशल्यतीव्रकषायोपहतस्यानालोचितभावदोषस्याप्रत्यवमर्शस्याकुशलानुबंधस्य पुण्यस्य कर्मणस्तपसश्च भावदोषानुकर्षिणस्तत्फलं यत्सत्स्वपि अनेकेषु प्रीतिहेतुषु अशुभा एव प्रीतिहेतव इति । एवं छेदभेदादिभिः शकलीकृतमूर्तिनामपि तेषां न मरणमकाले म्रियते, कुतः ? औपपादिका अनपवर्त्यायुष इति वचनात् । तेषं हि जघन्यमध्यमोत्कृष्टभेदभिन्नं यावदायुरवबद्धं तावद्यथाकालमेव निपच्यते नोदीरणाप्रत्ययवशादपवर्त्यते । यद्येवं तदेव तावदुच्यतां नारकाणां कियदायुरित्यत आह—

## तेष्वेकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमा सत्वानां परा स्थितिः ॥ ६ ॥

सागरोपमेति कोयं शब्दः ? सागर उपमा यस्याः सेयं सागरोपमा कः उपमार्थः ?

**सागरस्योपमात्वं द्रव्यभूयस्त्वात्** ॥ १ ॥ यथा सागरो जलसमूहेन भूयसा युक्तस्तथायुःकर्मापि भवधारणपुद्गलद्रव्यसमूहेन महता योगात्सागरेणोपमीयते ।

**एकादीनां कृतद्वंद्वानां सागरोपमाविशेषणत्वं** ॥ २ ॥ एकादयः शब्दाः कृतद्वंद्वाः सागरोपमाशब्दस्य विशेषणत्वेन नियुज्यते एका च तिस्रश्च सप्त च दश च सप्तदश च द्वाविंशतिश्च त्रयस्त्रिंशच्च एकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशतस्ता एव सागरोपमा एकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमा । कथमेकशब्दस्य पुंवद्भावः ननु भिन्नाधिकरणत्वान्न प्राप्नोति ? नायं पुंवद्भावः उत्तरपदिकं ह्रस्वत्वं, यथैकक्षीरमिति । अथवा सागर उपमा यस्य तत्सागरोपममायुरेकं च त्रीणि च सप्त च दश च सप्तदश च द्वाविंशतिश्च त्रयस्त्रिंशच्च एकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपममायुर्यस्याः सैकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमेति स्थित्यपेक्षः स्त्रीलिंगनिर्देशः ।

**रत्नप्रभादिभिरानुपूर्व्येण संबंधो यथाक्रमानुवृत्तेः** ॥ ३ ॥ यथाक्रममित्यनुवर्तते ततो रत्नप्रभादिभिरेकादीनामानुपूर्व्येण संबंधो वेदितव्यः । रत्नप्रभायामेकसागरोपमा स्थितिः, शर्कराप्रभायां त्रिसागरोपमा स्थितिः, वालुकाप्रभायां सप्तसागरोपमा स्थितिः, पंकप्रभायां दशसागरोपमा स्थितिः, धूमप्रभायां सप्तदशसागरोपमा स्थितिः, तमःप्रभायां द्वाविंशतिसागरोपमा स्थितिः, महातमःप्रभायां त्रयस्त्रिंशत्सागरोपमास्थितिरिति ।

**नरकप्रसंगस्तेष्विति वचनादिति चेन्न रत्नप्रभाद्युपलक्षितत्वात्** ॥४॥ स्यान्मतं तेष्वितिवचनान्नरकाभिसंबंधः प्राप्नोति, ततः किं, ? रत्नप्रभायां त्रयोदशेंद्रकनरकसंज्ञानि तत्रारादेव सीमंतकादिष्विंद्रकनरकेषु स्थितिरियं परिसमाप्येत नेष्यते च तस्मात्तेष्विति वचनमयुक्तमिति ? तन्न किं कारणं ? रत्नप्रभाद्युपलक्षितत्वात् यानि रत्नप्रभाद्यधिकरणत्वेनोपलक्षितानि त्रिंशच्छतसहस्राद्यवधृतपरिमाणानि तेष्वेकत्रिसागरोपमादिका स्थितिरिति नास्ति दोषः ।

**साहचर्याद्वा ताच्छब्द्यसिद्धिः** ॥ ५ ॥ अथवा नरके सहचरिता भूमयोपि नरकाणीत्युच्यतेऽतस्तेषु रत्नप्रभादिषु नरकेषु प्रादुर्भवतां सत्वानामेकसागरोपमादिका स्थितिरित्यभिसंबंधः, एवं च कृत्वा तष्विति वचनमर्थवत्, इतरथा हि व्यवधानाद् भूमिभिरनभिसंबंधः स्यात् ।

**नरकस्थितिप्रसंग इतिचेन्न सत्वानामिति वचनात्** ॥६॥ स्यादेतद्यदि पृथिव्युपलक्षितनरकाभिसंबंधः इष्टः, ननु नरकाणामेवैकसागरोपमादिस्थितिसंबंधः प्राप्नोति न नारकाणामिति ? तन्न किं कारणं ? सत्वानामिति वचनात्, तेषु नरकेषु सत्वानामियं स्थितिर्न नरकाणामिति ।

**परोत्कृष्टेति पर्यायौ** ॥७॥ परा उत्कृष्टेति पर्यायशब्दाविमौ तेन नरकाणामुक्ता स्थितिरुत्कृष्टा । रत्न-

प्रभादिषु प्रतिप्रस्तार जघन्यापि स्थितिरुच्यते– सीमतकेंद्रके तच्छ्रेणिषु चाष्टास्वपि नारकाणा जघन्या-स्थितिर्दशवर्षसहस्राण्युत्कृष्टा नवतिवर्षसहस्राणि, अजघन्योत्कृष्टा मध्ये समयोत्तरा। निरयेंद्रके तच्छ्रेणिषु चाष्टास्वपि नारकाणा जघन्या नवतिर्वर्षसहस्राणि, "दशवर्षसहस्राणीति क्वापि पाठः" उत्कृष्टा नवतिर्वर्षशतसहस्राणि अजघन्योत्कृष्टा मध्ये समयोत्तरा। रोरुकेंद्रके तच्छ्रेणिषु चाष्टास्वपि नारकाणा जघन्या एका पूर्वकोटी, उत्कृष्टेना सख्याता पूर्वकोट्य, अजघन्योत्कृष्टा मध्ये समयोत्तरा। भ्रातेंद्रके तच्छ्रेणिषु चाष्टास्वपि नारकाणा जघन्या असख्याताः पूर्वकोट्यः, उत्कर्षेण सागरोपमस्यैकोदशभाग, अजघन्योत्कृष्टा मध्ये समयोत्तरा। उद्भ्रातेंद्रके तच्छ्रेणिषु चाष्टास्वपि नारकाणा जघन्या सागरोपमस्यैको दशभाग, उत्कृष्टा सागरोपमस्य द्वौ दशभागौ, अजघन्योत्कृष्टा मध्ये समयोत्तरा। सभ्रातेंद्रके तच्छ्रेणिषु चाष्टास्वपि नारकाणा जघन्या सागरोपमस्य द्वौ दशभागौ उत्कर्षेण सागरोपमस्य त्रयोदशभागा, अजघन्योत्कृष्टा मध्ये समयोत्तरा, असभ्रातेंद्रके तच्छ्रेणिषु चाष्टास्वपि नारकाणा जघन्या सागरोपमस्य त्रयोदशभागा, उत्कृष्टा सागरोपमस्य चत्वारो दशभागा अजघन्योत्कृष्टा मध्ये समयोत्तरा। विभ्रातेंद्रके तच्छ्रेणिषु चाष्टास्वपि नारकाणा जघन्या सागरोपमस्य चत्वारो दशभागा उत्कृष्टा सागरोपमस्य पचदशभागा, अजघन्योत्कृष्टा मध्ये समयोत्तरा। तप्तेंद्रके तच्छ्रेणिषु चाष्टास्वपि नारकाणा जघन्या सागरोपमस्य पचदशभागा, उत्कृष्टा सागरोपमस्य षड्दशभागा, अजघन्योत्कृष्टा मध्ये समयोत्तरा। त्रस्तेंद्रके तच्छ्रेणिषु चाष्टास्वपि नारकाणा जघन्या सागरोपमस्य षड्दशभागा, उत्कृष्टा सागरोपमस्य सप्तदशभागा, अजघन्योत्कृष्टा मध्ये समयोत्तरा। व्युत्क्रातेंद्रके तच्छ्रेणिषु चाष्टास्वपि नारकाणा जघन्या सागरोपमस्य सप्तदशभागा, उत्कृष्टा सागरोपमस्याष्टौ दशभागा, अजघन्योत्कृष्टा मध्ये समयोत्तरा। अवक्रातेंद्रके तच्छ्रेणिषु चाष्टास्वपि नारकाणा जघन्या सागरोपमस्याष्टौ दशभागा, उत्कृष्टा सागरोपमस्य नवदशभागा, अजघन्योत्कृष्टा मध्ये समयोत्तरा। विक्रातेंद्रके तच्छ्रेणिषु चाष्टास्वपि नारकाणा जघन्या सागरोपमस्य नवदशभागा, उत्कृष्टा सागरोपमा, अजघन्योत्कृष्टा मध्ये समयोत्तरा। शर्कराप्रभादिषु प्रतिप्रस्तारमुत्कृष्टा स्थितिकरणक्रमेण वेदितव्या कथमितिचेदुच्यते। 'आर्या' उपरिस्थितेर्विशेष स्वप्रतरविभाजितेष्टसगुणित उपरिमक्षितिस्थितियुत स्वेष्टप्रतरस्थितिर्महती। १। उपर्युत्कृष्टाऽधो जघन्या सर्वत्रसमयाधिका अजघन्योत्कृष्टा मध्यमा समयोत्तरा अथैतेषा नारकाणामुत्पादविरहकाल कियानित्यत्रोच्यते–सर्वासु पृथिवीषु जघन्य एकसमय, उत्कृष्टश्चतुर्विंशतिमुहूर्ता, सप्तरात्रिंदिवानि, पक्ष, मास, द्वौ मासौ, चत्वारो मासा, षण्मासा इति रत्नप्रभादिषु क्रमेण ज्ञेया। अथोत्पाद क केषामित्यत्रोच्यते-प्रथमायामसज्ञिन उत्पद्यते। प्रथमाद्वितीययो सरीसृपा। तिसृषु पक्षिण। चतसृषूरगा। पचसु सिंहा। षट्सु स्त्रिय। सप्तसु मत्स्यमनुष्या। न च देवनारका वा नरकेषु उत्पद्यते। प्रथमायामुत्पद्यमाना नारका मिथ्यात्वेनाधिगता केचिन्मिथ्यात्वेन निर्यांति। मिथ्यात्वेनाधिगता केचित्सासादनसम्यक्त्वेन निर्यांति। मिथ्यात्वेनाधिगता केचित्सम्यक्त्वेन। केचित्सम्यक्त्वेनाधिगता सम्यक्त्वेनैव निर्यांति। क्षायिकसम्यग्दृष्ट्यपेक्षया द्वितीयादिषु पचसु नारका मिथ्यात्वेनाधिगता केचिन्मिथ्यात्वेन निर्यांति। मिथ्यात्वेनाधिगता केचित् सासादनसम्यक्त्वेन निर्यांति। मिथ्यात्वे प्रविष्टा केचित् सम्यक्त्वेन निर्यांति। सप्तम्या नारका मिथ्यात्वेनाधिगता मिथ्यात्वेनैव निर्यांति। षड्भ्य उपरि पृथिवीभ्यो मिथ्यात्वसासादनसम्यक्त्वाभ्यामुद्वर्तिताः केचित्तिर्यङ्मनुष्यगतिमायाति। तिर्यक्ष्वायाता पचेद्रियगर्भजसज्ञिपर्याप्तकसख्येयवर्षायुष्षूत्पद्यते, नेतरेषु। मनुष्येष्वायाता गर्भजपर्याप्तकेषु सख्येयवर्षायु षूत्पद्यते नेतरेषु। नारका सम्यग्मिथ्यादृष्टयस्तेन गुणेन नोद्वर्तते। नारका सम्यग्दृष्टय सम्यक्त्वेनोद्वर्तिता एकामेव मनुष्यगतिमायाति, मनुष्येष्वायाता गर्भजपर्याप्तकसख्येयवर्षायु षूत्पद्यते नेतरेषु। सप्तम्या नारका मिथ्यादृष्टयो नरकेभ्य उद्वर्तिता एकामेव तिर्यग्गतिमायाति तिर्यक्ष्वायाता पचेद्रियगर्भजपर्याप्तकसख्येयवर्षायु षूत्पद्यते नेतरेषु। तत्र चोत्पन्ना सर्वे मतिश्रुतावधिसम्यक्त्वसम्यङ्मिथ्यात्वसयमासयमान्नोत्पादयति, षष्ठ्या उद्वर्तिता नारकास्तिर्यङ्मनुष्येषु जाता केचिन्मतिश्रुतावधिसम्यक्त्वसम्यङ्मिथ्यात्वसयमासयमान् षडुत्पादयति न सर्वे नाप्यतोन्यत्, पचम्या उद्वर्तितास्तिर्यक्षूत्पन्नाः

केचित्षडुत्पादयंति न सर्वे नाप्यतोन्यत्, मनुष्येपूत्पन्ना केचिन्मतिश्रुतावधिमनःपर्ययसम्यक्त्वसम्यङ्मिथ्यात्वसंयमासंयमसंयमानुत्पादयंति न सर्वे नाप्यतोन्यत् । चतुर्थ्या उद्वर्तितास्तिर्यक्षूत्पन्ना केचिन्मत्यादीन् षडुत्पादयंति न सर्वे नाप्यतोन्यत्, मनुष्येपूत्पन्ना केचिन्मतिश्रुतावधिमनःपर्ययकेवलसम्यक्त्वसम्यङ्मिथ्यात्वसंयमासंयमसंयमानुत्पादयंति, न च बलदेववासुदेवचक्रधरतीर्थकरत्वान्युत्पादयंति, केचित्कर्माष्टकातकरा सिध्यंति। उपरि तिसृभ्य उद्वर्तितास्तिर्यक्षु जाता केचित्षडुत्पादयंति। मनुष्येपूत्पन्ना केचिन्मतिश्रुतावधिमनःपर्ययकेवलसम्यक्त्वसम्यङ्मिथ्यात्वसंयमासंयमसंयमानुत्पादयंति न च बलदेववासुदेवचक्रधरत्वान्युत्पादयंति केचित्तीर्थकरत्वमुत्पादयंति, अपरे कर्माष्टकातकरा सिध्यंति । उक्तः सप्तानिविस्तीर्णोऽधोलोकः । इदानीं तिर्यग्लोकोवसरप्राप्तो व्याख्येय । तत्रैतत्स्यात्किमत्र व्याख्येय, द्वीपसमुद्राधिष्ठातृधरणीधरणाधरवनक्षेत्रांतरपरिमाणादि। यद्येवं तदवतिष्ठतामिदमेव तावद्व्याक्रियतां कुतः पुनरियं तिर्यग्लोकसंज्ञा प्रवृत्ता ? इत्युच्यते यतोऽसंख्येया स्वयंभूरमणपर्यंतास्तिर्यक्प्रचयविशेषेणावस्थिता द्वीपसमुद्रास्ततः तिर्यग्लोक इति, यद्येवं के पुनस्तिर्यगवस्थिता इत्यत आह—

## जंबूद्वीपलवणोदादयः शुभनामानो द्वीपसमुद्राः ॥ ७ ॥

आह कुतः पुनरियं जंबूद्वीपसंज्ञेत्युच्यते—

**प्रतिविशिष्टजंबूवृक्षासाधारणाधिकरणत्वाज्जंबूद्वीपः ॥ १ ॥** अयं हि द्वीपः प्रतिविशिष्टस्य जंबूवृक्षस्य सपरिवारस्याधारणाधिकरणत्वं बिभर्ति नान्ये धातकीखंडादयो द्वीपास्ततोस्य तत्साहचर्यात् जंबूद्वीप इति संज्ञाऽनादिकालप्रवृत्ता। तद्यथा– उत्तरकुरुमध्ये जगती पंचयोजनशतायामविष्कंभा तत्त्रिगुणसातिरेकपरिक्षेपा ततः प्रदेशहान्या बहिः परिहीयमाणा मध्ये द्वादशयोजनबाहुल्या, अंते क्रोशद्वयबाहुल्या सा चैकया पद्मवरवेदिकया जाबूनदमया परिक्षिप्ता, तस्या बहुदेशमध्यभागे नानारत्नमयमेकं पीठमष्टयोजनायामं चतुर्योजनविष्कंभं तावदुच्छ्रायं द्वादशभिः पद्मवेदिकाभिः परिक्षिप्तं, तासां च पद्मवेदिकानां प्रत्येकं चत्वारि तोरणानि श्वेतानि वरकनकस्तूपिकानि, तस्योपरि मणिमयमुपपीठं योजनायामविष्कंभं क्रोशद्वयोच्छ्रायं, तन्मध्ये जंबूवृक्षः सुदर्शनाख्यो योजनद्वयोच्छ्रितस्कंधः षड्योजनोत्सेधविटपः, मध्ये षड्योजनविष्कंभपरिमंडलः अष्टयोजनायामः तदर्धमुच्छ्रितानां जंबूनामष्टशतेन परिवृत्तः सुरवनिताक्रांतस्तद्योगाज्जंबूद्वीपः ।

**लवणरसांबुयोगाल्लवणोदः ॥ २ ॥** लवणरसेनांबुना योगात्समुद्रो लवणोद इति संज्ञायते उदक्शब्दस्य पूर्वपदभूतस्य उत्तरपदभूतस्य च संज्ञायामुदभावोन्याख्यातः । जंबूद्वीपश्च लवणोदश्च जंबूद्वीपलवणोदौ तावादी येषां ते जंबूद्वीपलवणोदादयः । द्वीपाश्च समुद्राश्च द्वीपसमुद्राः यथासंख्यमभिसंबंधः । जंबूद्वीपादयो द्वीपा लवणोदादयः समुद्रा इति । किं नामानस्ते शुभनामानः, यानि लोके शुभानि नामानि तान्येषां नामानि तद्यथा– जंबूद्वीपो लवणोदः धातुकीखंडः कालोदः पुष्करवरः पुष्करोदः वारुणीवरः वारुणोदः क्षीरवरः क्षीरोदः घृतवरः घृतोदः इक्षुवरः इक्षूदः नंदीश्वरवरः नंदीश्वरोदः इत्येवमादयोऽसंख्येया द्वीपसमुद्राः स्वयंभूरमणद्वीपस्वयंभूरमणोदयर्यंताः । कियदसंख्येया ? अर्धतृतीयसागरोपमसमयसंख्याः । अमीषां विष्कंभसंनिवेशसंस्थानविशेषप्रतिपत्त्यर्थमाह—

## द्विर्द्विर्विष्कंभाः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः ॥ ८ ॥

**द्विर्द्विरिति वीप्साभ्यावृत्तिवचनं विष्कंभद्विगुणत्वव्याप्त्यर्थं ॥ १ ॥** आद्यस्य द्वीपस्य यो विष्कंभस्तद्द्विगुणो जलधिस्तद्द्विगुणविष्कंभो द्वितीयो द्वीपः तद्द्विगुणविष्कंभो द्वितीयो जलधिरिति द्वैगुण्यव्याप्त्यर्थं द्विर्द्विरित्युच्यते । द्विर्द्विर्विष्कंभो येषां ते द्विर्द्विर्विष्कंभाः ननु च वृत्त्याभ्यावृत्तिरुच्यते द्विदश द्विदशा इति वीप्सा च क्वचिदुच्यते सप्तपर्णं इति तद्वदिह वीप्साभ्यावृत्त्योर्वृत्त्योक्तत्वात् द्वित्वस्य सुचश्चाप्रयोगः प्राप्नोति ? नैष दोषः यत्र गम्यते न तत्र प्रयुज्यते, इह तु द्विविष्कंभा इत्युक्ते तदर्थागतेर्द्विर्द्विरित्युच्यते ।

**अनिष्टविनिवेशव्यावृत्त्यर्थं पूर्वपूर्वपरिक्षेपिवचनं ॥ २ ॥** ग्रामनगरादिवदनिष्टविनिवेशो मा विज्ञायीति पूर्वपूर्वपरिक्षेपिण इत्युच्यते । तेनोत्तरोत्तरानन्तर्यसिद्धिर्भवति । पूर्वं पूर्वं परिक्षिपन्तीत्येवं शीला पूर्वपूर्वपरिक्षेपिण, अत्राप्यगमकत्वाद् द्वित्व ।

**चतुरस्रादिनिवृत्त्यर्थं वलयाकृतिवचनं ॥ ३ ॥** आकृतिस्संस्थान, वलयस्येवाकृतिर्येषा ते वलयाकृतय॰ एतेन चतुरस्रादिसंस्थानान्तरनिवृत्ति कृता भवति। ततो मिथ्यावादिप्रणीतसंस्थानान्तरप्रतिकल्पना न तत्त्व। अत्राह जंबूद्वीपस्य प्रदेशसंस्थानविष्कंभा वक्तव्या, तन्मूलत्वादितरविष्कंभादिविज्ञानस्येत्यत आह—

## तन्मध्ये मेरुनाभिर्वृत्तो योजनशतसहस्रविष्कंभो जंबूद्वीपः ॥९॥

**तच्छब्दः पूर्वद्वीपसमुद्रनिर्देशार्थः ॥ १ ॥** पूर्वोक्तानामसंख्येयाना द्वीपसमुद्राणा निर्देशार्थ स्तच्छब्दो दृष्टव्य तेषा मध्ये नाभिरिव नाभि, मेरुनाभिर्यस्य स भवति मेरुनाभि, वृत्त आदित्यमंडलोपमान शताना सहस्र शतसहस्र योजनाना शतसहस्र योजनशतसहस्र विष्कंभो यस्य सोय योजनशतसहस्रविष्कंभ स्तस्य परिक्षेप । त्रीणि शतसहस्राणि षोडशसहस्राणि द्वे शते, सप्तविंशतिश्च योजनाना, त्रीणि गव्यूतानि शत धनुषामष्टाविंशत्युत्तर, त्रयोदशांगुलय अर्धांगुल सातिरेक तस्य समतात् परिक्षेत्री जगत्येकाऽर्धयोजनान्नवगाहाऽष्टयोजनोत्सेधा मूलमध्यान्तेषु द्वादशाष्टचतुर्योजनविष्कंभा वज्रमयमूला वैडूर्यमयान्ता सर्वरत्ननिर्मितमध्या गवाक्षघंटामुक्ता हेममणिकिंकिणीकपद्मरत्नकनकरत्नसर्वरत्नजालैर्नवभिरुपर्युपरिस्थितै प्रत्येकमर्धयोजनोच्छ्राये पंचधनुश्शतविष्कंभजगती समायामै रलंकृता। तस्या पूर्वदक्षिणापरोत्तरासु चतसृषु दिक्षु विजयवैजयन्तजयन्तापराजितसंज्ञानि चत्वारि महाद्वाराणि, यथाक्रम तानि चतुर्योजनविष्कंभाण्यष्टयोजनोत्सेधानि विष्कंभसमप्रवेशानि । तत्र विजयवैजयन्तयोरन्तरमेकोनाशीतिसहस्राणि द्विपंचाशद्योजनान्यर्धयोजन योजनचतुर्भाग अर्धगव्यूत गव्यूतचतुर्भाग द्वात्रिंशच्च धनूंषि तिस्रोऽगुलय अंगुलचतुर्भागोऽर्धांगुलचतुर्भागश्च सातिरेक॰ । एवमितरेषामभ्यन्तराणा प्रमाण वेदितव्य । तत्र जंबूद्वीपे षड्भि कुलपर्वतैर्विभक्तानि सप्तक्षेत्राणि कानि तानीत्यत आह—

## भरतहैमवतहरिविदेहरम्यकहैरण्यवतैरावतवर्षा॰ क्षेत्राणि ॥१०॥

भरत इति संज्ञा, कुत ?

**भरतक्षत्रिययोगाद्वर्षो भरतः ॥१॥** विजयार्धस्य दक्षिणतो जलधेरुत्तर गंगासिंध्वोर्बहुमध्यदेशभागे विनीता नाम नगरी द्वादशयोजनायामा, नवयोजनविस्तारा, तस्यामुत्पन्न सर्वराजलक्षणसंपन्नो भरतो नामाद्यश्चक्रधर षट्खंडाधिपति, अवसर्पिण्या राज्यविभागकाले तेनादौ भुक्तत्वात् तद्योगाद्भरत इत्याख्यातं वर्षं ।

**अनादिसंज्ञासंबंधाद्वा ॥ २ ॥** अथवा जगतोनादित्वादहेतुकाऽनादिसंबंधपरिणामिकी भरतसंज्ञा । अथ क्व भरत इत्यत्रोच्यते—

**हिमवत्समुद्रत्रये मध्ये भरतः ॥ ३ ॥** हिमवतोऽद्वेस्त्रयाणा समुद्राणा पूर्वदक्षिणपराणा मध्ये भरतो वेदितव्य॰। स पुनर्गंगासिंधुभ्या विजयार्धेन च षड्भागसंविभक्त॰ । कोसौ विजयार्धो नाम ?

**पंचाशद्योजनविस्तारस्तदर्धोत्सेधः सक्रोशषड्योजनावगाहो रजताद्रिर्विजयार्धोऽन्वर्थः ॥ ४ ॥** चक्रभृद्विजयार्धकरत्वाद्विजयार्ध इति गुणत कृताभिधानो रजताद्रिस्तस्य पंचाशद्योजनानि विस्तार पंचविंशतियोजनान्युत्सेध सक्रोशानि षड्योजनान्यवगाह पूर्वापरकोटिभ्याममौ पूर्वापरजलधी स्पृशति। तस्य पूर्वापरपार्श्वनाहु चत्वारि योजनशतानि अष्टाशीत्यधिकानि षोडश चैकोनविंशतिभागा

योजनस्यार्धभागश्च सातिरेकः । विजयार्धोत्तरपार्श्वज्या दशयोजनसहस्राणि सप्त च शतानि विंशतियोजनानां द्वादश चैकोनविंशतिभागा योजनस्य किंचिद्विशेषोना। अस्या ज्याया धनुः पृष्ठं दशयोजनानां सहस्राणि सप्तशतानि त्रिचत्वारिंशानि पंचदश चैकान्नविंशतिभागा योजनस्य सविशेषा । विजयार्धदक्षिणपार्श्वज्या नवसहस्राणि सप्तशतान्यष्टचत्वारिंशानि योजनानां द्वादशभागा किंचिद्विशेषाधिका । अस्या ज्याया धनुःपृष्ठं नवसहस्राणि सप्तशतानि षट्षष्ठ्युत्तराणि योजनानामेकश्च भागः सविशेषः । तस्योभयोः पार्श्वयोरर्धयोजनविष्कंभपर्वतसमानायामावर्धयोजनोच्छ्रायपंचधनुःशतविष्कंभवनसमायामाभ्यां क्वचित्कविलकनकस्तूपिकाभ्यामलंकृतबहुतोरणोपेतपद्मवरवेदिकाभ्यां प्रत्येकं परिक्षिप्तौ सर्वर्तुजफलकुसुमतरुवरमंडितौ वनखंडौ । तस्य द्वे गुहे तमिश्रखंडप्रपातसंज्ञे पंचाशद्योजनोदग्दक्षिणायते, प्राक्प्रत्यग्द्वादशयोजनविष्कंभे, अष्टयोजनोत्सेधोत्तरदक्षिणद्वारद्वये, षट्क्रोशषड्योजनविष्कंभक्रोशबाहुल्याष्टयोजनोच्छ्रायवज्रमयकपाटे । याभ्यां चक्रवर्ती उत्तरभरतविजयार्थं याति। यतश्च गंगासिंधू निर्गते। तत्र चाभ्यंतरे विजयार्धप्रभवे प्रत्येकं द्विनद्यौ गंगासिंधू अनुप्रविष्टे,उन्मग्नजला निमग्नजला चान्वर्थसंज्ञे। तृणादे पतितस्य द्रव्यस्याहत्योपरितलप्रक्षेपणादुन्मग्नजला । तथा तृणादेः पतितस्याधस्तलप्रक्षेपणान्निमग्नजला । तस्यैवाद्रेर्भूमितलाद्दशयोजनान्युत्प्लुत्योभयोः पार्श्वयोर्दशयोजनविस्तारे पर्वतसमायामे द्वे विद्याधरश्रेण्यौ भवतः । तत्र दक्षिणश्रेण्यां रथनूपुरचक्रवालादीनि पंचाशद्विद्याधरनगराणि। उत्तरश्रेण्यां गगनवल्लभादीनि षष्टिर्विद्याधरनगराणि। तन्निवासिनो विद्याधरा भरतवत् षट्कर्मजीविनः केवलं प्रज्ञप्त्यादिविद्याधरणमात्रादेव विशिष्टाः । ततो दशयोजनान्युत्प्लुत्योभयोः पार्श्वयोर्दशयोजनविस्तारे पर्वतसमायामे द्वे व्यंतरश्रेण्यौ भवतः । तत्र शक्रलोकपालानां सोमयमवरुणवैश्रवणानां अभियोग्यव्यंतरदेवानां निवासा भवंति । ततः पंचयोजनान्युत्प्लुत्य शिखरतलं भवति दशयोजनविष्कंभपर्वतसमायामं । तत्र प्राच्यां दिशि षड्योजनक्रोशाधिकोच्छ्रायविष्कंभं सिद्धायतनकूटं पद्मवरवेदिकापरिवृत्तं तस्योपर्युदग्दक्षिणायामं प्राक्प्रत्यग्विस्तारं क्रोशायामं क्रोशार्धविष्कंभं देशोनक्रोशोच्छ्रायं पद्मवरवेदिकापरिवृतं अर्हदायतनं पूर्वोत्तरदक्षिणद्वारं अर्हदायतनवर्णनोपेतं। तस्य पश्चाद्दक्षिणार्धभरतकूट-खंडकप्रपातकूट-माणिभद्रकूट-विजयार्धकूट-पूर्णभद्रकूट-तामिस्रगुहाकूट-उत्तरार्धभरतकूट-वैश्रवणकूटनामान्यष्टौकूटानि सिद्धायतनकूटसमोच्छ्रायविष्कंभायामानि। तेषामुपरि दक्षिणार्धभरतदेव-वृत्तमाल्यदेव-माणिभद्रदेव विजयार्धगिरिकुमारदेव-पूर्णभद्रदेव-कृतमालदेव-उत्तरार्धभरतदेव-वैश्रवणदेवानां यथाक्रमं प्रासादाः सिद्धायतनसमायामविष्कंभोच्छ्रायाः । सोयं विजयार्धपर्वतो नवभिः कूटैर्मुकुटैरिवोद्वतैर्गिरिराजत्वं प्राप्त इवाभाति। अथो हैमवत इति कथं संज्ञा ?

**हिमवतो दूरभवः सोऽस्मिन्नस्तीति वा हैमवतः ॥ ५ ॥** हिमवान्नाम पर्वतः तस्याददूरभवः सोऽस्मिन्नस्तीति वाऽपि सति हैमवतो वर्षः । क्व पुनरसौ ?

**क्षुद्रहिमवन्महाहिमवतोर्मध्ये ॥ ६ ॥** क्षुद्रहिमवंतमुत्तरेण दक्षिणेन महाहिमवंतं पूर्वापरसमुद्रयोर्मध्ये हैमवतं ।

**तन्मध्ये शब्दवान् वृत्तवेदाढ्यः ॥ ७ ॥** तस्य हैमवतस्य मध्ये शब्दवान्नाम पटहाकारः वृत्तत्वाद् वृत्तवेदाढ्य इत्यन्वर्थसंज्ञः योजनसहस्रोच्छ्रायः अर्धतृतीययोजनशतावगाहः उपरि मूले च योजनसहस्रायामविष्कंभस्त्रिगुणसातिरेकपरिक्षेपः पर्वतः, अर्धयोजनविष्कंभाद्द्विपरिक्षेपायामयुक्तया पूर्वादिदिग्विभागविनिवेशिचतुस्तोरणविभक्तया पद्मवरवेदिकयालंकृतः । तत्तलमध्ये सक्रोशद्वयद्विषष्टियोजनोत्सेधः सक्रोशैकत्रिंशद्योजनविष्कंभः स्वातिदेवविहारः । अथ कथं हरिवर्षसंज्ञा ?

**हरिवर्णमनुष्ययोगाद्धरिवर्षः ॥ ८ ॥** हरिः सिंहस्तस्य शुक्लरूपपरिणामित्वात्तद्वर्णमनुष्याद्युषितत्वाद्धरिवर्ष इत्याख्यायते। क्व पुनरसौ ?

**निषधमहाहिमवतोरंतराले ॥ ९ ॥** निषधस्य दक्षिणतो महाहिमवत उत्तरतः पूर्वापरसमुद्रयोरंतराले हरिवर्षः ।

**तन्मध्ये विकृतवान् वृत्तवेदाढ्यः ॥१०॥** तस्य हरिवर्षस्य मध्ये विकृतवान्नाम वृत्तवेदाढ्य शब्द वद्वृत्तवेदाढ्येन तुल्यवर्णन । तस्योपर्यरुणदेवविहार. । अथ कथ विदेहसज्ञा ?

**विदेहयोगाज्जनपदे विदेहव्यपदेशः ॥ ११ ॥** विगतदेहा विदेहा । के पुनस्ते ? येषा देहो नास्ति, कर्मबधसतानोच्छित्तये वा सत्यपि देहे विगतशरीरसस्कारास्ते विदेहास्तद्योगाज्जनपदे विदेहव्यपदेश । तत्र हि मुनयो देहो छेदार्थं यतमाना विदेहत्वमास्कदति । ननु च भरतैरावतयोरपि विदेहा ? सत्य सति कदाचिन्न तु सर्वकाल, तत्र तु सतत धर्माच्छेदाभावाद्विदेहा सतीति प्रकर्षापेक्षो विदेहव्यपदेश । क पुनरसौ ?

**विषधनीलवतोरंतराले तत्सन्निवेशः ॥ १२ ॥** निषधस्योत्तरात् नीलवतो दक्षिणात्पूर्वापरसमुद्रयोरतरे तस्य विदेहस्य सन्निवेशो दृष्टव्य ।

**स चतुर्विधः पूर्वविदेहादिभेदात् ॥ १३ ॥** स विदेहश्चतुर्विध, कुत ? पूर्वविदेहादिभेदात्। पूर्वविदेह, अपर विदेह, उत्तरकुरवो देवकुरवश्चेति । कुत पुन पूर्वविदेहादिव्यपदेश. ? मेरो प्राक् क्षेत्र पूर्वविदेह उत्तर क्षेत्रमुदक्कुरव, अपर क्षेत्रमपरविदेह दक्षिणक्षेत्र देवकुरव इति नैष युक्तो व्यपदेश । पूर्वविदेहे हि सविता नीलादुदेति, निषधेऽस्तमुपैति । तत्र प्राङ् नील प्रत्यङ् निषध अपाङ् समुद्र, मेरुरुदङ् । अपरविदेहे तु निषधे उदय नीलेऽस्तमय इति । अत्र प्राङ् निषध, प्रत्यङ् नील, अपाङ् समुद्र, उदङ् मेरु । उदक्कुरुषु गधमादनादुदयो माल्यवतोऽस्तमय । तत्र गधमादन प्राङ्, माल्यवान् प्रत्यङ्, नील अपाङ्, मेरु -उदङ् । देवकुरुषु सौमनसादुदय विद्युत्प्रभेऽस्तमय । तत्र सौमनस प्राङ्, विद्युत्प्रभ प्रत्यङ्, निषधोऽपाङ् मेरुरुदङिति ? सत्यमेवमेतद्यदि तत्रत्यो दिग्विभाग आश्रियेत । इह भरतक्षेत्रे दिग्विभागमाश्रित्य मेरो पूर्वादिव्यपदेशो युक्त । तत्र विदेहमध्यभागे मेरु । तस्मादपरोत्तरदिशि गधमालिनी । निषधसमीपदेवारण्यात्प्राक् गधमादनाख्यो वक्षारपर्वत उदकदक्षिणायाम प्राक्प्रत्यक्विस्तीर्ण दक्षिणोत्तरकोटिभ्या मेरुनीलाद्रिस्पर्शी द्वाभ्यामर्धयोजनविष्कभपर्वतसमायाभ्या वनखडाभ्यामलकृत, मूलमध्याग्रेषु सुवर्णमय नीलाद्रिपर्यंतचतुर्योजनशतोच्छ्रित, योजनशतावगाह प्रदेशवृद्धया वर्धमान मेरुपर्यंते पचयोजनशतोत्सेध पचविंशतियोजनशतावगाह, पचयोजनशतविष्कभ । तत प्रदेशहान्या हीयमान नीलातेऽर्धतृतीययोजनशतविष्कभ । त्रिंशत्सहस्राणि द्वे च नवोत्तरे शते योजनाना षट् चैकान्नविंशतिभागा सातिरेका आयाम । तस्योपरि मेरुपर्यंते पचविंशतियोजनशतोच्छ्रायमूलविष्कभसिद्धायतनकूट । तस्योत्तरत क्रमेण व्यवस्थितानि षट् कूटानि गधमादन-उदक्कुरु-गधमालि-स्फटिक-लोहिताक्ष-आनदकूटनामानि । तत्र सिद्धायतनकूटे जिनायतन । स्फटिककूटस्योपरि प्रासादे भोगवरी देवी पल्योपमस्थितिका । लोहिताक्षकूटस्योपरि प्रासादे पल्योपमस्थितिका दिक्कुमारी भोगावती वसति । शेषेषु चतुर्षु कूटेषु स्वकूटनामानो देवा वसति । मेरोरुदक् प्राच्या दिशि नीलादपाच्या कच्छविषयात्प्रतीच्या माल्यवान् वक्षारपर्वत मूलमध्याग्रेषु वैडूर्यमय विष्कभायामोच्छ्रायावगाहसस्थानैर्गधमादनेन सम । तस्योपरि मेरुपर्यंते सिद्धायतनकूट यथोक्तपरिमाण। तस्योपर्यर्हदायतन। तस्योत्तरतो यथाक्रम माल्यवत्-उदक्कुरु-कच्छ-विजय-सागर-रजत-पूर्णभद्र-सिता-हरिमहाकूटानि नव भवति । सागरकूटे सुभगा दिक्कुमारी, रजतकूटे भोगमालिनी दिक्कुमारी वसति । शेषेषु सप्तसु कूटेषु कूटसमनामानो देवा वसति । मेरोरुदक्, गधमादनात्प्राक्, नीलादपाङ्, माल्यवत प्रत्यङ्, उदक्कुरव प्राक्प्रत्यगायता, उदक्प्राग्विस्तीर्णा यमकाद्रिद्वयपचसरोवरकाचनगिरिशतोपशोभिता । एकादशसहस्राणि अष्टौ शतानि द्वाचत्वारिंशानि योजनाना द्वौ चैकान्नविंशतिभागौ उदक्कुरुविष्कभ । नीलसमीपे त्रिपचाशद्योजनसहस्राणि ज्यापष्ठिसहस्राणि चत्वारि शतानि अष्टादशानि योजनाना द्वादश चैकान्नविंशतिभागा. साधिका धनु । तत्र सीताया प्राग्दिग्भागे जबूवृक्षो वर्णित, तस्योत्तरस्या दिशि

१ ग पुस्तके गाधारीदेवीति पाठ ।

शाखायामर्हदायतनं क्रोशायामार्धक्रोशविष्कम्भदेशोनक्रोशोत्सेधं। प्राच्यां दिशि शाखायां तत्तुल्यप्रासादः, तत्र जम्बूद्वीपाधिपतिर्व्यन्तरेश्वरो नादृतनामा वसति। दक्षिणस्यां दिशि शाखायां प्रतीच्यां च प्रासादयोः शयनीयानि रमणीयानि। तत्र पूर्वोत्तरापरोत्तरासु दिक्षु नादृतदेवसामानिकानां चत्वारि जम्बूसहस्राणि। दक्षिणपूर्वस्यां दिशि अभ्यन्तरपरिषद्देवानां द्वात्रिंशत्सहस्राणि। दक्षिणस्यां मध्यमपरिषद्देवानां चत्वारिंशत्सहस्राणि। दक्षिणापरस्यां दिशि बाह्यपरिषद्देवानामष्टचत्वारिंशत्सहस्राणि। प्रतीच्यामनीकमहत्तराणां सप्तानां सप्त जम्ब्वः, चतसृणामग्रमहिषीणां सपरिवाराणां जम्ब्वः, चतस्रः। पूर्वदक्षिणापरोत्तरासु षोडशसहस्रात्मरक्षदेवानां च षोडशसहस्राणि। एते सुदर्शनजम्बूवृक्षस्य परिवारभूताः पूर्वोक्ताष्टशतेन समुदिता एकं शतसहस्रं चत्वारिंशत्सहस्राणि शतं चैकान्नविंशतिः। एते सर्व एव जम्बूवृक्षाः पद्मवरवेदिकापरिवृताः सर्वरत्नकाञ्चनपरिणामाः मुक्तामणिहेमघटाजालमाल्यदामध्वजपताकाछत्रादित्रयविभूषिताः। सुदर्शनाख्योऽसौ जम्बूवृक्षः पद्मवरवेदिकापरिक्षिप्तैस्त्रिभिर्वनखण्डैः परिक्षिप्तः। प्राथमिकवनखण्डे चतसृषु दिक्षु क्रोशायामक्रोशार्धविष्कम्भदेशोनक्रोशोत्सेधानि चत्वारि भवनानि। विदिक्षु चतस्रः पुष्करिण्यो दशदशयोजनावगाहाः पञ्चाशद्योजनायामाः तदर्धविष्कम्भाः चतुष्कोणा आयतचतुरस्राः शुचिसुरभिसलिलपूर्णाः। तेषां भवनानां पुष्करिणीनां चाष्टासु दिक्षु श्वेतार्जुनसुवर्णनिर्वृत्तानि प्रत्येकमष्टौ कूटानि। तेषामुपरि प्रत्येकं क्रोशायामक्रोशार्धविष्कम्भदेशोनक्रोशोच्छ्रायाः चत्वारः प्रासादाः। नीलाद्दक्षिणस्यां दिश्येकं योजनसहस्रं तिर्यगतीत्य सीतामहानद्या उभयोः पार्श्वयोः पञ्चयोजनशतान्तरौ सप्रणिधी द्वौ यमकाद्री योजनसहस्रोच्छ्रायौ अर्धतृतीययोजनशतावगाहौ मूलमध्याग्रेषु योजनैकसहस्रार्धाष्टमयोजनशतपञ्चयोजनशतविष्कम्भौ। तयोरुपरि योजनद्विषष्ट्यर्धयोजनोच्छ्रायौ सक्रोशैकत्रिंशद्योजनविष्कम्भौ तावत्प्रवेशौ प्रासादौ। तत्र यमकनामानौ देवौ वसतः। प्राच्यां दिशि द्वेऽर्हदायतने यमकाभ्यामवाक्पञ्चयोजनशतानि तिर्यगतीत्य सीतामहानद्यां योजनसहस्रोदगपागायतः पञ्चयोजनशतप्राक्प्रत्यग्विष्कम्भः दशयोजनावगाहः नीलो नाम महाह्रदो भवति। ह्रदमध्ये जलस्योपर्यर्धयोजनोच्छ्रायाणि दशयोजनावगाहनालानि मध्ये योजनविष्कम्भाणि क्रोशायतपत्राणि द्विक्रोशकीर्णकान्यग्रमूल्योर्द्विक्रोशविस्तराणि पद्मानि पद्मह्रदजपद्मवर्णनोपेतानि। तत्र नीलसंज्ञो नागेन्द्रकुमारो वसति। तस्य पद्मानि जम्बूवृक्षसमसंख्यानि। नीलह्रदात्प्रागदूरे दश काञ्चनाद्रयः सप्रणिधयो योजनशतोत्सेधाः पञ्चविंशतियोजनावगाहाः मूलमध्याग्रेषु शतपञ्चसप्ततिपञ्चाशद्योजनविष्कम्भाः काञ्चनपरिणामाः। तेषामुपरि सक्रोशैकत्रिंशद्योजनोत्सेधाः सक्रोशपञ्चदशयोजनविष्कम्भाः प्रासादाः काञ्चनसंज्ञदेवानामावासाः। तादृशा एव प्रत्यग्दशकाञ्चनाद्रयः। नीलह्रदादपाक् पञ्चयोजनशतानि तिर्यगतीत्योत्तरकुरुह्रदो भवति उत्तरसंज्ञनागेन्द्रकुमारावासः। नीलह्रदतुल्यवर्णनाः, प्राक्प्रत्यग्दशदशकाञ्चनाद्रयः। उदक्कुरुह्रदादपाक् पञ्चयोजनशतान्यतीत्य चन्द्रह्रदः, चन्द्रनागेन्द्रकुमारावासः। पूर्ववत्काञ्चनाद्रयश्च। चन्द्रह्रदादपाक् पञ्चयोजनशतानि तिर्यगतीत्यैरावतह्रदो भवति ऐरावतनागेन्द्रकुमारावासः। पूर्ववत्काञ्चनाद्रयश्च। ऐरावतह्रदादपाक् पञ्चयोजनशतानि तिर्यगतीत्य माल्यवन्नाम ह्रदो भवति माल्यवन्नागेन्द्रकुमारावासः। पूर्ववत्काञ्चनाद्रिशतं पूर्वादिङ्विनिवेशि जिनायतनशतं। मेरोरपाक् प्राच्यां दिशि मङ्गलावद्विषयात् प्रत्यङ्, निषधादुदङ्, सौमनसो नाम वक्षारगिरिः सर्वस्फटिकपरिणामः, गन्धमादनेन विष्कम्भायामोच्छ्रायावगाहसंस्थानैस्तुल्यः। तस्योपरि मेरुपर्यन्ते सिद्धायतनकूटमर्हदायतनालंकृतं पूर्वोक्तपरिमाणं। तस्य दक्षिणतो यथाक्रमं सौमनस-देवकुरु-मङ्गलावत्-पूर्वविदेह-कनक-काञ्चन विशिष्ट-उज्ज्वलकूटान्यष्टौ गन्धमादनकूटसमानानि। तत्र कनककूटस्योपरि प्रासादे सुवत्सा दिक्कुमारी, काञ्चनकूटस्योपरि प्रासादे वत्समित्रा दिक्कुमारी, शेषेषु स्वकूटनामानो देवाः। मेरोरपाक् प्रतीच्यां दिशि निषधादुदङ् पद्मवद्विषयात् प्राङ् विद्युत्प्रभो नाम वक्षारगिरिस्तपनीयपरिणामो गन्धमादनसमवर्णनः। तस्योपरि मेरुपर्यन्ते सिद्धायतनकूटमर्हदायतनालंकृतं। तस्य दक्षिणतो यथाक्रमं विद्युत्प्रभ-देवकुरु-पद्मवद्विषय-अपरविदेह-स्वस्तिक शतजाल-सीतोदा-हरिनामान्यष्टौ कूटानि गन्धमादनकूटसमानानि। तत्र पद्मवद्विषयकूटस्योपरि प्रासादे वारिषेणा नाम दिक्कुमारी, स्वस्तिककूटस्योपरि प्रासादे बला नाम

दिक्कुमारी, शेषेषु स्वकूटनामानो देवा । मेरोरपाक् सौमनसात्प्रत्यक् निषधादुदक् विद्युत्प्रभात्प्राक् देवकुरव ।'तेषा व्याधनुरिषुगणना उत्तरकुरुगणनया ख्याता'। मेरोर्दक्षिणापरस्या दिशि निषधादुदङ् सीतोदाया प्रत्यङ् विद्युत्प्रभात्प्राक् मध्ये सुप्रभा नाम शाल्मलि सुदर्शनया जम्वा ख्यातवर्णना । तस्या उत्तरशाखायामर्हदायतन । पूर्वदक्षिणापरासु शाखासु प्रासादेषु गुरुत्मान् वेणुदेवो वसति । तस्य परिवार सर्वोऽनावृत्तदेवपरिवारेण तुल्य । निषधादुदगेकयोजनसहस्र तिर्यगतीत्य सीतोदाया महानद्या उभयो पार्श्वयोश्चित्रकूट-विचित्रकूटौ गिरी। यमकपर्वताभ्या तुल्यवर्णनौ निषध-देवकुरु-सूर्य-सुलस-विद्युत्प्रभह्रदाख्या' पचह्रदा । उत्तर' कुरुषु ह्रदैर्व्याख्यातवर्णना । काचनगिरिशत च तद्वदेव ज्ञेय । सीतया महानद्या पूर्वविदेहो द्विधा विभक्त' उत्तरो दक्षिणश्चेति । तत्रोत्तरो भागश्चतुर्भिर्वक्षारपर्वतैस्तिसृभिर्विभगनदीभिश्च विभक्तोऽष्टधा भिन्न अष्टाभिश्च चक्रधरैरुपभोग्य । तत्र चित्रकूट पद्मकूटो नलिनकूट एकशैलश्चेति वक्षारास्तेषामतरेषु ग्राहवती-ह्रदावती-पकावती चेति विभगनद्य । तत्र चत्वारोपि वक्षारका दक्षिणोत्तरकोटिभ्या सीतानीलस्पृशो नीलाते चतुर्योजनशतोत्सेधा योजनशतावगाहा प्रदेशवृद्ध्या वर्धमाना शीतानद्यते पचयोजनशतोत्सेधा' पचयोजनशतावगाहा अश्वस्कधाकारा सर्वत्र पचयोजनशतविष्कभा । षोडशसहस्राणि पचशतानि द्वानवत्यधिकानि योजनाना द्वौ चैकान्नविंशतिभागौ तेषामायाम । तत्र चित्रकूटस्योपरि चत्वारि कूटानि-सिद्धायतन-चित्र-कच्छविजय-सुकच्छविजयकूटाख्यानि । पद्मकूटस्योपरि चत्वारि कूटानि सिद्धायतन-पद्म-महाकच्छ-कच्छवद्विजयकूटाभिधानानि । नलिनकूटस्योपरि चत्वारि कूटानि सिद्धायतन-नलिन-नलिनावर्त लागलावर्तकूटसज्ञानि । एकशिलस्योपरि चत्वारि कूटानि सिद्धायतन-एकशिल पुष्कल पुष्कलावर्तकूटनामानि । सर्वाण्येतानि हिमवदद्रिकूटतुल्यपरिमाणानि तद्गताहृदायतनप्रासादतुल्यवर्णनजिनायतनप्रासादानि सर्वत्र सीतावर्तसिद्धायतनकूटानि तेषु कूटसमनामानो देवा । तिस्रोपि विभगनद्य स्वतुल्यनामकुडेभ्यो विंशतियोजनशतविष्कभायामेभ्यो वरवज्रतलेभ्य सुवृत्तेभ्य स्वतुल्यनामदेवीनिवासालकृतदशयोजनद्विगव्यूतोच्छ्रायपोडशयोजनाविष्कभायामद्वीपोपेतेभ्य नीलाद्रिनितबनिवेशिभ्यो निर्गता, प्रभवे द्विक्रोशाधिकद्वादशयोजनविष्कभा गव्यूतावगाहा, मुखे पचविंशतियोजनशतविष्कभा दशगव्यूतावगाहा, प्रत्येकमष्टाविंशतिनदीसहस्रपरिवृत्ता सीता प्रविशति । एतैर्विभक्ता अष्टौ जनपदा कच्छ-सुकच्छ-महाकच्छ कच्छक-कच्छकावर्त-लागलावर्त-पुष्कल-पुष्कलावर्ताख्या । तेषा मध्ये राजधान्य -क्षेमा क्षेमपुरी अरिष्टा अरिष्टपुरी खड्गा मजूषा औषधि पौंडरीकिणी चेति नगर्यः । तत्र सीताया उदक् नीलादपाक् चित्रकूटात्प्रत्यक् माल्यवत्समीपदेवारण्यात्प्राक् कच्छविषय चित्रकूटसमायाम द्वे सहस्रे द्वे शते त्रयोदश योजनाना केन चिद्विशेषेणोन, प्राक्प्रत्यग्विस्तीर्ण । तस्य वहुदेशे मध्यभागे विजयार्धतुल्योच्छ्रायावगाहविष्कभ कच्छविषयविस्तारसमायाम । तत्रोभयोर्विद्याधरश्रेण्यो, प्रत्येक पचपचाशन्नगराणि । व्यतरश्रेण्यो ऐशानस्य देवराजस्य लोकपालाना सोमयमवरुणवैश्रवणानामाभियोग्यदेवनगराणि । प्राच्यसिद्धायतनादिकूटनवके च दक्षिणार्धकच्छोत्तरार्धकच्छकूटे याच्ये विजयार्धादुदक् नीलादपाक् सिद्धकूटादृषभाद्रेश्च प्राक् चित्रकूटात् प्रत्यक् त्रिषष्टियोजनविष्कभायाम तत्त्रिगुणसातिरेकपरिक्षेप दशयोजनावगाह वरवज्रतल गगाकुड । अस्य वहुमध्यदेशभवो द्वीपोऽष्टयोजनविष्कभायामो दशयोजनाद्विगव्यूतोच्छ्राय पद्मवरवेदिकाचतुस्तोरणालकृत सुवृत्तो गगादेवीनिवास । ततो दक्षिणतोरणाद्विनि सृता अपाङ्मुखी भरतक्षेत्रगगातुल्यविष्कभावगाहा विषयसमायामा विजयार्धखडप्रपातगुहातोरणनिर्गता चतुर्दशनदीसहस्रप[illegible] गगा महानदी सीता प्रविशति । विजयार्धादुदङ् नीलादपाक् वृषभाद्रे [illegible] कुड गगाकुडतुल्यवर्णन सिं-धूदेवीनिवासालकृत । ततो विनि सृ[illegible] ता चतुर्दशनदीसहस्रपरि-वारा सिंधूर्महानदी सीता प्रविशति । [illegible] सिंधोर्बहुमध्यदे [illegible]

क्षमा नाम राजधानी । एवमितरे सप्त [illegible]

प्रत्यक् पुष्कलावत्या प्राक् सीताया उदक् नीलादपाक् देवारण्य नाम वनं, तस्य द्वे सहस्रे नव च शतानि द्वाविंशतिर्योजनानां सीतामुखे विष्कम्भ । षोडशसहस्राणि पञ्चशतानि द्वानवत्यधिकानि योजनानां द्वौ चैकान्नविंशतिभागौ आयाम । सीताया अपाक् निषधादुदक् वत्सविषयात्प्राक् लवणसमुद्रवेदिकायाः प्रत्यक् पूर्ववद्देवारण्य । सीताया दक्षिणत पूर्वविदेहश्चतुर्भिर्वक्षारपर्वतैस्तिसृभिश्च विभगनदीभिर्विभक्तो-ऽष्टधा भिन्न अष्टभिश्चक्रधरैरुपभोग्य । तत्र त्रिकूटो वैश्रवणकूट अजन आत्माजनश्चेति वक्षारा । तेषामन्तरेषु तप्तजला मत्तजला उन्मत्तजला चेति तिस्रो विभगनद्य । एतैर्विभक्ता अष्टौ जनपदा – वत्सा-सुवत्सा-महावत्सा-वत्सवती-रम्य-रम्यक-रमणीय-मंगलावत्य । तेषां मध्ये राजधान्य – सुसीमा-कुण्डला-अपराजिता-प्रभाकरी-अकावती-पद्मावती-शुभा-रत्नसचयावती-नगर्य । तेषु जनपदेषु द्वे द्वे नद्यौ रक्तारक्तोदासंज्ञे । एको विजयार्ध । तेषां सर्वेषां विष्कम्भायामादिवर्णना पूर्ववद्वेदितव्या । वक्षारपर्वतेषु प्रत्येकं चत्वारि कूटानि सिद्धायतन–स्वनाम-पूर्वापरदेशनामानि । सीताया उत्तरतटे दक्षिणतटे च प्रतिजनपदं त्रीणि त्रीणि तीर्थानि मागध-वरदा-प्रभाससंज्ञानि, तानि समुदितानि अष्टचत्वारिंशत्तीर्थानि, पूर्वविदेहे । सीतोदया महानद्या अपरविदेहो द्विधा विभक्तो दक्षिण उत्तरश्चेति । तत्र दक्षिणो भागश्चतुर्भि-वक्षारपर्वतैस्तिसृभिश्च विभगनदीभिर्विभक्तोऽष्टधा भिन्न । अष्टाभिश्चक्रधरैरुपभोग्य । तत्र शब्दवत्-विकृतावत्-आशीविष-सुखावहसंज्ञाश्चत्वारो वक्षाराद्रय । तेषामन्तरेषु क्षीरोदा-सीतोदा स्रोतोऽन्तर्वाहिनी चेति तिस्रो विभ-गनद्य । एतैर्विभक्ता अष्टौ जनपदा पद्म-सपद्म-महापद्म-पद्मावर्त-शख नलिन-कुमुद सरिदाख्या । तेषां मध्ये रा-जधान्य अश्वपुरी सिंहपुरी महापुरी अरजा विरजा अशोका वीतशोका चेति नगर्य । तेषु जनपदेषु द्वे द्वे नद्यौ रक्तारक्तोदासंज्ञे । एकैको विजयार्धश्च । तेषां सर्वेषां विष्कम्भायामादिवर्णना पूर्ववद्वेदितव्या । वक्षारपर्व-तेषु प्रत्येकं चत्वारि कूटानि सिद्धायतन स्वनाम पूर्वापरदेशनामानि । देवारण्ये द्वेऽपि पूर्ववद्वेदितव्ये । उत्तरो विभागश्चतुर्भिर्वक्षारपर्वतैस्तिसृभिर्विभगनदीभिश्च विभक्तोऽष्टधा भिन्न । अष्टाभिश्चक्रधरैरुपभोग्य । तत्र चन्द्र-सूर्य-नाग-देवसंज्ञाश्चत्वारो वक्षारपर्वता । तेषामन्तरेषु गभीरमालिनी फेनमालिनी ऊर्मिमालिनी चेति तिस्रो विभगनद्य । एतैर्विभक्ता अष्टौ जनपदा वप्र-सुवप्र-महावप्र-वप्रावत्-वल्गु-सुवल्गु-गन्धिल-गन्धिमालिसंज्ञा । तेषां मध्ये राजधान्य विजया वैजयन्ती जयन्ती अपराजिता चक्रपुरी खड्गपुरी अयोध्या अवध्या चेति नगर्य । तेषु जनपदेषु गगासिंधूसंज्ञे द्वे नद्यौ । एकैको विजयार्धश्च । तेषां सर्वेषां विष्कम्भायामादिवर्णना पूर्व-वद्वेदितव्या । वक्षारपर्वतेषु प्रत्येकं चत्वारि कूटानि-सिद्धायतनस्वनामपूर्वापरदेशनामानि । सीतोदाया अपि तीर्थानि, सीताया इवाष्टचत्वारिंशत् । विदेहस्य मध्ये मेरुर्नवनवतियोजनसहस्रोत्सेध धरणीतले सहस्रावगाह दशसहस्राणि नवतिश्च योजनानां दश चैकादशभागा । अधस्तलेऽस्य विस्तार एकत्रिंशत्सहस्राणि नवति-शतान्येकादश च योजनानि किंचित्-न्यूनानि । अधस्तलेऽस्य परिधि, दशसहस्राणि योजनानां । भूतलेऽस्य विष्कम्भ एकत्रिंशत्सहस्राणि षट्शतानि त्रयोविंशानि योजनानि किंचित्-न्यूनानि । तत्रास्य परिधि सचतुर्वन त्रिखड त्रिश्रेणि । चत्वारि वनानि भद्रशालवन नदन सौमनस पाडुक चेति । भूमितले भद्रशालवन पूर्वा-परदिशोर्द्वाविंशतियोजनसहस्राण्यायत । दक्षिणोत्तरदिशोरर्धतृतीययोजनशतान्यायत । एकयार्धयोज-नोच्छ्रायपञ्चशतधनुर्विष्कम्भवनसमायामया बहुतोरणविभक्तया पद्मवरवेदिकया परिवृत । मेरोश्चतसृषु दिक्षु भद्रशालवने पद्मोत्तर-नील-स्वस्तिक-अजन-कुमुद-पलाश अवतंस रोचनसंज्ञान्यष्टौ कूटान्येकैकस्यां दिशि द्वे द्वे कूटे भवत । तत्र मेरो प्रागुदक्कूले सीताया पद्मोत्तरकूट । मेरो प्राक्, अपाक्कूले सीताया नीलकूट । मेरोरपाक् सीतोदाया प्राक्कूले स्वस्तिककूट । मेरोरपाक् सीतोदाया प्रत्यक्कूले अजनकूट । मेरो प्रत्यक् सीतोदाया दक्षिणकूले कुमुदकूट । मेरो प्रत्यक् सीतोदाया उत्तरकूले पलाशकूट । मेरोरुदक् सीताया प्रत्यक्कूलेऽवतसकूट । मेरोरुदक् सीताया प्राक्कूले रोचनकूट । तान्येतानि सर्वाणि कूटानि पञ्चविंशतियोजनावगाहनानि योजन-

१ ग पुस्तके त्रिकाड इति पाठ ।

शतमूलविस्ताराणि पंचसप्ततियोजनमध्यविष्कम्भाणि पंचाशद्योजनाग्रविस्ताराणि पद्मवरवेदिकापरिवृतानि। तेषामुपरि मध्यदेशभाजः सक्रोशैकत्रिंशद्योजनोत्सेधाः पंचदशयोजनद्विगव्यूतायामविष्कम्भा अष्टौ प्रासादाः। तेषु स्वकूटनामानः सोमयमवरुणवैश्रवणानां लोकपालानामाभियोग्यानेकरूपविकरणसमर्था दिग्गजेन्द्रा देवा वसंति। तत्र पद्मोत्तरनीलस्वस्तिकाञ्जनकूटेषु शक्रलोकपालानां भौमविहाराः। कुमुदपलाशावतंसरोचनकूटेषु ऐशानलोकपालानां भौमविहाराः। मेरोः प्राक् सीतायाः प्रत्यक् पंचाशद्योजनविष्कम्भाणि षोडशयोजनोच्छ्रायतदर्धविष्कम्भतावत्प्रवेशप्रागुदग्दक्षिणद्वाराणि नानामणिकाञ्चनरजतपरिणामानि सहस्रजिह्वेनापि वर्णयितुमशक्यानि, यानि सहस्राक्षः सहस्रमक्ष्णां निस्तीर्य त्रिलोकमानोपि सततं न तृप्तिमुपयाति। तेषां पुरस्ताद्योजनशतायामतदर्धविष्कम्भसातिरेकषोडशयोजनोच्छ्रायाः मुखमंडपाः। तेषां पुरस्ताद्योजनशतायामतदर्धविष्कम्भसातिरेकषोडशयोजनोच्छ्रायाः प्रेक्षागृहाः। तेषां पुरस्ताच्चतुःषष्टियोजनायामविष्कम्भास्त्रिगुणसातिरेकपरिधयः स्तूपाः। तेषां पुरस्ताच्चैत्यवृक्षपीठानि षोडशयोजनायामानि तदर्धविष्कम्भाणि तावदुत्सेधानि प्रत्येकं चतुस्तोरणविभक्तानां पद्मवरवेदिकानां चतुर्विंशत्या परिवृतानि। तेषां मध्ये सिद्धार्थनामकाश्चैत्यवृक्षाः सिद्धार्थतीर्थकरप्रतिकृतिपवित्रीकृताः षोडशयोजनोच्छ्रायाः चतुर्योजनोत्सेधयोजनविष्कम्भस्कंधा द्वादशयोजनोच्छ्रायतावद्बाहुल्यविटपाः। तेभ्यः प्राक् नानामणिरत्नमयपीठनिवेशिनः षोडशयोजनोच्छ्रायगव्यूतविष्कंभायाममहेंद्रध्वजाः। ततः प्राक् नंदाख्याः पुष्करिण्यः योजनशतायामतदर्धविष्कम्भदशयोजनावगाहाः अर्हदायतनमध्यदेशनिवेशिनः षोडशयोजनायामतदर्धविष्कम्भोच्छ्रायाः रत्नमया देवच्छंदाः। तत्र पंचधनुःशतोत्सेधाः कनकमयदेहास्तपनीयहस्तपादतलतालुजिह्वा लोहिताक्षमणिपरिक्षिप्ताकस्फाटिकमणिनयना अरिष्टमणिमयनयनतारका रजतमयदंतपंक्तयः विद्रुमच्छायाधरपुटाः अंजनमूलमयपक्ष्मभूतला नीलमणिविरचितासिनाचितकेशाः प्रगृहीतसितविमलवरचामराग्रहस्तोभयपार्श्वस्थनिधिमणिकनकविकृताभरणालंकृतयक्षनागमिथुनाः। सुश्लिष्टाष्टसहस्रलक्षणव्यंजनांकिता वैडूर्यदंडमणिहेममुक्ताजालालंकृतरत्नशलाकाशातकांचनतनुनिर्विरजतच्छदछत्रादिकच्छन्ना भव्यजनस्तवननंदनपूजनार्हा अर्हत्प्रतिमा अनाद्यनिधना अष्टशतसंख्याः विशिष्टगुणवर्णितगुणा अष्टशतकलशभृंगाराद्युपकरणपरिवाराः वर्णनातीतविभवा मूर्ता इव जिनधर्मा विराजते। ततो भूमिजलात्पंचयोजनशतान्युत्प्लुत्य 'उत्सृत्येति वा पाठः' पंचयोजनशतविष्कम्भं मेरुसमायाममंडलं पद्मवरवेदिकापरिक्षिप्तं वृत्तवलयपरिधि नंदनवनं। तत्र बाह्यगिरिविष्कम्भः नवसहस्राणि नव च शतानि चतुःपंचाशानि योजनानां षट् चैकादशभागाः। तत्परिधिरेकत्रिंशत्सहस्राणि चत्वारि शतानि एकान्नाशीत्यधिकानि सातिरेकाणि योजनानां। अभ्यंतरगिरिविष्कम्भोऽष्टौ सहस्राणि नवशतानि चतुःपंचाशानि योजनानां षट्चैकादशभागाः। तत्परिधिरष्टाविंशतिसहस्राणि त्रीणि शतानि षोडशानि योजनानामष्टौ चैकादशभागाः। चतसृषु दिक्षु चतस्रो गुहाः-प्राच्यां दिशि मणिगुहा, अपाच्यां गंधर्वगुहा, प्रतीच्यां चारणगुहा, उदीच्यां चंद्रगुहा। ता एतास्त्रिंशद्योजननिष्कम्भायामाः साधिकनवतियोजनपरिधयः पंचाशद्योजनावगाहाः। तासु यथासंख्यं सोमयमवरुणखचराणां विहाराः। मेरोः पूर्वोत्तरदिशि नंदनवने बलभद्रकूटं योजनसहस्रोच्छ्रायं मूलमध्याग्रेषु योजनसहस्राष्टयोजनशतपंचयोजनशतविस्तारं। तत्त्रिगुणसातिरेका परिधिस्तस्योपरि भद्रापिपतेरावासः। मेरोश्चतसृषु दिक्षु द्वे द्वे कूटे-प्राच्यां दिशि तावन्नंदनमंदिरे। अपाच्यां निषधहैमवते। प्रतीच्यां रजतरुचके। उदीच्यां सागरचित्रवज्रे। अष्टावप्येतानि कूटानि पंचयोजनशतोच्छ्रायानि मूलमध्याग्रेषु पंचशतपंचसप्तत्यधिकशतत्रयार्धतृतीयशतयोजनविष्कम्भाणि। तेषामुपरि द्विषष्टियोजनद्विगव्यूतोच्छ्रायाः सक्रोशैकत्रिंशद्योजनविष्कम्भास्तावत्प्रवेशा एवाष्टौ प्रासादाः। तेषु मेघंकरा-मेघवती-सुमेघमालिनी-तोयधरा-विचित्रा-पुष्करमाला-अनिंदिता-संज्ञा अष्टौ दिक्कुमार्यः यथाक्रमं परिवसंति। मेरोर्दक्षिणपूर्वस्यां दिशि उत्पलगुल्मा नलिन-उत्पल-उत्पलोज्ज्वलाख्याश्चतस्रो वाप्यः। दक्षिणापरस्यां भृंगा-भृंगनिभा-कज्जलप्रभाश्चतस्रः पुष्करिण्यः। अपरोत्तरस्यां दिशि श्रीकांता-श्रीचंद्रा श्रीनिलया श्रीमहिताश्चतस्रो

वाप्य । उत्तरपूर्वस्यां दिशि पद्मा पद्मगुल्मा कुमुदा कुमुदप्रभाश्चेनस्रो वाप्य । ता सर्वा पचाशद्योजनायामतदर्धविष्कम्भदशयोजनावगाहा चतुःकोणा आयतचतुरस्रा । तासा मध्ये प्रत्येकमेकैक प्रासाद द्विषष्टियोजनार्धयोजनोत्सेध सगव्यूतैकत्रिंशद्योजननिष्कम्भस्तावत्प्रवेश । तत्र दक्षिणस्यां दिशि विदिशो॰ प्रासादा शक्रस्य भौमविहारा । उत्तरस्यां दिशि विदिशोरैशानस्य भौमविहारा । मेरोश्चतसृषु दिक्षु नदनवने चत्वारि जिनायतनानि षट् त्रिंशद्योजनोत्सेधानि पचाशद्योजनायामतदर्धविष्कम्भाणि तावत्प्रवेशानि अष्टयोजनोच्छ्रायतदर्धविष्कम्भायामप्राग्द्वाराणि 'प्रागुदगपाग्द्वाराणीत्यपिपाठ ' अर्हदायतनवर्णनोपेतानि । नदनात्समभूमिभागाद्द्विषष्टियोजनसहस्राणि पचशतान्युत्प्लुत्य वृ वलयपरिधिपचयोजनशतविष्कम्भ पद्मवरवेदिकापरिक्षिप्त सौमनसवन । तत्र बाह्यगिरिविष्कम्भश्चत्वारि सहस्राणि द्वे शते द्वासप्ततिश्च योजनानामष्टौ चैकादशभागा॰ । तत्परिधिस्त्रयोदशसहस्राणि पचशतान्येकादशानि योजनाना षट्चैकादशभागा । अभ्यतरगिरिविष्कम्भस्त्रीणि सहस्राणि द्वे शते द्वासप्ततिर्योजनानामष्टौ चैकादशभागा । तत्परिधिर्दशसहस्राणि त्रीणि शतान्येकान्नपचाशानि योजनाना त्रयश्चैकादशभागा किंचिद्विशेषोना । बलभद्रकूटदिक्कुमारीकूटाष्टकहीन सौमनस । षोडशात्र वाप्य नदनवापीसदृशायामविष्कम्भावगाहास्तन्मध्यदेशे भवनानि । पचाशद्योजनायामतदर्धविस्तारषट्त्रिंशद्योजनोच्छ्रयाणि । चतुर्दिश चत्वार्यर्हदायतनानि अष्टयोजनोच्छ्रिततदर्धविस्तारतावत्प्रवेशप्रागुदगपाग्द्वाराणि जिनायतनवर्णनोपेतानि । सौमनसात्समाद् भूभागात्षट्त्रिंशत्सहस्राण्यारुह्य योजनानि वृत्तवलयपरिधिपाडुकवन चतुर्नवत्युत्तरचतुःशतविष्कम्भ प वरवेदिकापरिवृत्त चूलिका परीत्य स्थित । शेखर मेरोरेकयोजनसहस्रविष्कम्भ तत्परिधिस्त्रीणि सहस्राणि षष्ट्यधिक शत योजनाना साधिक । पाडुकवनबहुमध्येदेशभाविनी चत्वारिंशद्योजनोच्छ्राया मूलमध्याग्रेषु द्वादशाष्टचतुर्योजनविष्कम्भा सुवृत्ता चूलिका । तस्या प्राच्यां दिशि पाडुकशिला उदक्दक्षिणायामा प्राक्प्रत्यग्विस्तारा । अपाच्यां पाडुकबलशिला प्राक्प्रत्यगायामा उदग्दक्षिणविस्तारा। प्रतीच्यां रक्तकबलशिला उदगपाग्विस्तीर्णा । उदीच्यां अतिरिक्तकबलशिला प्राक्प्रत्यगायता उदगपाग्विस्तीर्णा । तत्रार्जुनसुवर्णमयी पाडुकशिला । रजतपरिणामा पाडुकबलशिला । विद्रुमवर्णा रक्तकबलशिला । जाबूनदसुवर्णमयी अतिरिक्तकबलशिला एताश्चतस्रोपि पचयोजनशतायामतदर्धविष्कम्भाश्चतुर्योजनबाहुल्या अर्धचद्रसस्थाना अर्धयोजनोत्सेधपचधनु शतविष्कम्भशिलासमायामैरूपपद्मवरवेदिकापरिवृत्ता श्वेतवरकनकस्तूपिकालकृतचतुस्तोरणद्वारविराजिता । तासामुपरि बहुमध्यदेशभावीनि पचधनुःशतोत्सेधायामतदर्धविष्कम्भाणि प्राङ्मुखानि सिंहासनानि। पौरस्त्ये सिंहासने पूर्वविदेहजान्, अपाच्ये भरतजान्, प्रातीच्ये अपरविदेहजान्, उदीच्ये ऐरावतजास्तीर्थकराश्चतुर्निकायदेवाधिपा सपरिवारा महत्या विभूत्या क्षीरोदवारिपरिपूर्णाष्टसहस्रकनककलशैरभिषिंचति । अत्रापि षोडशपुष्करिण्य पूर्ववद्वेदितव्या । चूलिकायाश्चतसृषु महादिक्षु सक्रोशत्रयस्त्रिंशद्योजनायामानि द्विगव्यूताधिकषोडशयोजनविष्कम्भाणि पचविंशतियोजनोच्छ्रायाणि योजनोत्सेधतदर्धविष्कम्भतावत्प्रवेशप्रागपागुदग्द्वाराणि चत्वार्यर्हदायतनानि अर्हदायतनवर्णनोपेतानि । भद्रशालवनभाविनि भूतले लोहिताक्षकल्पपरिक्षेप । तत ऊर्ध्वमर्धसप्तदशयोजनसहस्राण्यारुह्य द्वितीय पद्मवर्ण । ततोप्यर्धसप्तदशयोजनसहस्राण्यारुह्य तृतीयस्तपनीयवर्ण । ततोप्यर्धसप्तदशयोजनसहस्राण्यारुह्य चतुर्थो वैडूर्यवर्ण । ततोप्यर्धसप्तदशयोजनसहस्राण्यारुह्य पचमो नीलवर्ण । ततोप्यर्धसप्तदशयोजनसहस्राण्यारुह्य षष्ठो हरितालवर्ण । ततोप्यर्धसप्तदशयोजनसहस्राण्यारुह्य जबूनदसुवर्णवर्णो भवति । अधोभूम्यवगाही योजनसहस्रायाम प्रदेश पृथिव्युपलवालुकाशर्कराचतुर्विधपरिणाम उपरि वैडूर्यपरिणाम प्रथम काड । सर्वरत्नमय द्वितीय काड । जाबूनदमय तृतीय काड । चूलिका वैडूर्यमयी । मेरुस्त्रयाणा लोकाना मानदड । अस्याधस्तलादधोलोक । चूलिकामूलादूर्ध्वमूर्ध्वलोक मध्यमप्रमाणस्तिर्यग्विस्तीर्णस्तिर्यग्लोक । एव च कृत्वाऽन्वर्थनिर्वचन क्रियते । लोकत्रय मिनातीति मेरुरिति । तस्य भूमितलादारभ्याऽऽशिखरादैकादशिकी प्रदेशहानि । एकादशसु प्रदेशेषु एकप्रदेशो हीयते। एकादशसु गव्यूतेषु एकगव्यूत हीयते । एकादशसु योजनेषु

एकयोजन हीयते एवं सर्वत्र शिखराद् भूमितलस्याध एकादशसु प्रदेशेषु एक प्रदेशो वर्धते। एकादशसु योजनेषु एक योजन वर्धते। एव सर्वत्र अधस्तलात्। अथ कथं रम्यकसंज्ञा?

**रमणीयदेशयोगाद्रम्यकाभिधानं ॥ १४ ॥** यस्माद्रमणीयैर्देशैः सरित्पर्वतकाननादिभिर्युक्तस्तस्मादसौ रम्यक इत्यभिधीयते। अन्यत्रापि रम्यकदेशयोगः समान? इति चेन्न रूढिविशेषबललाभाद्गोशब्दवृत्तिवत्। अत एव संज्ञाया कौ निहित। क्व पुनरसौ?

**नीलरुक्मिणोरंतराले तत्संनिवेशः ॥ १५ ॥** नीलादुदक् रुक्मिणोऽपाक् पूर्वापरसमुद्रयोरतराले तस्य रम्यकस्य सन्निवेशो द्रष्टव्य।

**तन्मध्ये गंधवान्वृत्तवेदाढ्यः ॥ १६ ॥** तस्य रम्यकस्य मध्ये गंधवान्नाम वृत्तवेदाढ्य शब्दवद्वृत्तवेदाढ्येन तुल्यवर्णनस्तस्योपरि प्रासादे पद्मदेवो वसति। अथ कथ हैरण्यवतसंज्ञा?

**हिरण्यवतोऽदूरभवत्वाद्धैरण्यवतव्यपदेशः ॥१७॥** हिरण्यवान् रुक्मिनामा पर्वतस्तस्याऽदूरभवत्वाद्धैरण्यवतव्यपदेश। क्व पुनरसौ?

**रुक्मिशिखरिणोरंतराले तद्विस्तारः ॥ १८ ॥** रुक्मिण उदक् शिखरिणोऽपाक् पूर्वापरसमुद्रयोरतराले तस्य हैरण्यवतस्य विस्तारो वेदितव्य।

**तन्मध्ये माल्यवान् वृत्तवेदाढ्य. ॥ १९ ॥** तस्य हैरण्यवतस्य मध्ये माल्यवान्नाम वृत्तवेदाढ्य शब्दवद्वृत्तवेदाढ्येन तुल्यवर्णन। तस्योपरि प्रासादे प्रभासदेवो वसति। अथ कथमैरावतसंज्ञा?

**ऐरावतक्षत्रिययोगादैरावताभिधानं ॥ २० ॥** रक्तारक्तयो बहुमध्यदेशभागिनी अयोध्या नाम नगरी। तस्यामुत्पन्न ऐरावतो नाम राजा, तत्परिपालितत्वाज्जनपदस्यैरावताभिधान। क्व पुनरसौ?

**शिखरिसमुद्रत्रयांतरे तदुपन्यास. ॥ २१ ॥** शिखरिणो गिरेस्त्रयाणा पूर्वापरोत्तराणा समुद्राणा मध्ये तस्यैरावतस्य उपन्यासो वेदितव्य।

**तन्मध्ये पूर्ववद्विजयार्धः ॥ २२ ॥** तस्यैरावतस्य मध्ये विजयार्धो रजतगिरि पूर्ववद्वेदितव्य.। यैर्विभक्तानि सप्तक्षेत्राणि व्याख्यातानि। के पुनस्ते कथं व्यवस्थिता? इत्यत आह—

## तद्विभाजिनः पूर्वापरायता हिमवन्महाहिमवन्निषधनीलरुक्मिशिखरिणो वर्षधरपर्वताः ॥ ११ ॥

तानि विभजन्तीत्येवं शीला तद्विभाजिन पूर्वापराभ्यामायता पूर्वापरायता. पूर्वापरकोटिभ्या लवणजलधिस्पर्शिन इत्यर्थ तद्विभाजित्वादेव तेषां वर्षधरव्यपदेशोऽसकरेण भरतादिवर्षाणा धारणात्। कथं हिमवानिति संज्ञा?

**हिमाभसबंधाद्धिमवद्व्यपदेशः ॥ १ ॥** हिममस्यास्तीति हिमवानिति व्यपदेश। अन्यत्रापि तत्संबंध? इतिचेत् रूढिविशेषबललाभात्तत्रैव वृत्ति। क्वासौ हिमवानित्युच्यते—

**भरतहैमवतयोः सीमनि स्थितः ॥ २ ॥** भरतस्य हैमवतस्य च सीमनि व्यवस्थित क्षुद्रहिमवान् वेदितव्य। कथं पुनरस्य क्षुद्रत्व? महाहिमवदपेक्षया। सूत्रेऽनुक्त कथ गम्यते? इति चेन्महाहिमवत्प्रयोगादेव। सति हि क्षुद्रे महत्त्वमित्यर्थात्क्षुद्रत्व गम्यते। स पचविंशतियोजनावगाह योजनशतोच्छ्राय योजनसहस्र द्विपंचाशद्योजनाना द्वादशैकान्नविंशतिभागा तस्य विष्कम्भ। तस्योत्तरपार्श्वे ज्या चतुर्विंशतिसहस्राणि नवशतानि द्वात्रिंशानि योजनानामेकश्चैकान्नविंशतिभागो देशोन.। अस्या ज्याया धनु पंचविंशतिसहस्राणि द्वे शते त्रिंशच्चत्वारश्चैकान्नविंशतिभागा साधिकाः। तस्य पूर्वापरपार्श्वबाहू प्रत्येक पंचसहस्राणि त्रीणि शतानि पंचाशद्योजनानि पंचदश चैकान्नविंशतिभागा साधिकार्धभागश्च। तस्योपरि

प्राचीदिशि सिद्धायतनकूटं पञ्चयोजनशतोच्छ्रायमूलविष्कम्भं पञ्चसप्तत्यधिकशतत्रयमध्यविष्कम्भं अर्धतृतीयशतायामविष्कम्भं। तत्त्रिगुणमतिरेकपरिधि[1], तस्योपरि पट्त्रिंशद्योजनोच्छ्रायं पञ्चाशद्योजनोदग्दक्षिणायामं पञ्चविंशतियोजनप्राक्प्रत्यग्विस्तारं तावत्प्रवेशमष्टयोजनोत्सेधतदर्धविष्कम्भं तावत्प्रवेशोदग्दक्षिणपूर्वद्वारमर्हदायतनं । द्वारत्रये सातिरेकाष्टयोजनोच्छ्रायपञ्चाशद्योजनायामतदर्धविष्कम्भास्त्रयोमुखमण्डपाः । सातिरेकाष्टयोजनोच्छ्रायपञ्चाशद्योजनायामविष्कम्भाणि त्रीणि प्रेक्षागृहकाणि । पौरस्त्यप्रेक्षागृहात्प्राक् स्तूपादयः पूर्वोक्ताः । चैत्यालयाभ्यन्तरवर्णना पूर्ववद्वेदितव्या । तेषां समन्तात् परिक्षेप्त्री चतुस्तोरणद्वारविभक्ता पद्मवरवेदिका । तत प्रतीच्यां दिशि दश कूटानि । हिमवद्भरतेलागंगा-श्रीरोहितास्या-सिंधु-सुरा-हैमवत-वैश्रवणकूटाभिधानानि यथाक्रमं वेदितव्यानि सिद्धायतनकूटतुल्यानि । तेषामुपरि प्रासादाः द्वाषष्टिसक्रोशद्वयाद्विषष्टियोजनोत्सेधाः सक्रोशैकत्रिंशद्योजनविष्कम्भास्तावत्प्रवेशाः । तेषु स्वकूटनामानो देवा देव्यश्च वसति । हिमवद्भरतहैमवतवैश्रवणकूटेषु देवाः इतरेषु देव्यः । अथ कथं महाहिमवत्संज्ञा ?

**महाहिमवति चोक्तं ॥ ३ ॥** किमुक्तं ? हिमाभिसंबन्धाद्धिमवदभिधानं । महांश्चासौ हिमवांश्च महाहिमवानित्यन्यपि हिमे हिमवदाख्या । इन्द्रगोपवत् । क पुनरसौ ?

**हैमवतहरिवर्षयोर्विभागकरः ॥ ४ ॥** हैमवताद्दुदक् हरिवर्षाद्दपाक् तयोर्विभागकरो महाहिमवान् वेदितव्यः । स द्वियोजनशतोच्छ्रायः पञ्चाशद्योजनावगाहः चत्वारि योजनसहस्राणि द्वे च शते दशोत्तरे दश चैकान्नविंशतिभागाः तस्य विष्कम्भः । पूर्वापरपार्श्वबाहू प्रत्येकं नवयोजनसहस्राणि द्वे च शते षट्सप्तत्यधिके योजनानां नव चैकान्नविंशतिभागाः अर्धभागश्च साधिकः । तस्योत्तरपार्श्वे ज्या त्रिपञ्चाशद्योजनसहस्राणि नव च शतानि एकत्रिंशानि षट्चैकान्नविंशतिभागाः साधिकाः । तस्या ज्याया धनुः सप्तपञ्चाशद्योजनसहस्राणि द्वे शते त्रिनवत्युत्तरे दश चैकान्नविंशतिभागाः साधिकाः । तस्योपर्यष्टौ कूटानि सिद्धायतन-महाहिमवत्-हैमवत-रोहित्-हरि-हरिकान्ता-हरिवर्ष-वैडूर्यकूटाभिधानानि । क्षुद्रहिमवत्कूटतुल्यप्रमाणानि । तेषामुपरि जिनायतनप्रासादास्तु तुल्या एव । प्रासादेषु स्वकूटनामानो देवा देव्यश्च वसति । अथ कथं निषधसंज्ञा ?

**निषीधंति तस्मिन्निति निषधः ॥ ५ ॥** यस्मिन् देवा देव्यश्च क्रीडार्थं निषीधंति स निषधः पृषोदरादिपाठात् सिद्धः । अन्यत्रापि तत्तुल्यकारणात्प्रसंग ? इति चेत् रूढिविशेषबललाभात् । क पुनरसौ ?

**हरिविदेहयोर्मर्यादाहेतुः ॥ ६ ॥** हरिवर्षाद्दुदक् विदेहादपाक् तयोर्मर्यादाहेतुर्निषध इत्याख्यायते । स चतुर्योजनशतोत्सेधः, योजनशतावगाहः षोडशयोजनसहस्राण्यष्टौ च शतानि द्वाचत्वारिंशानि द्वौ चैकान्नविंशतिभागौ तस्य विष्कम्भः । पूर्वापरपार्श्वबाहू प्रत्येकं विंशतियोजनसहस्राणि पञ्चषष्ट्यधिकमेकं च शतं द्वौ चैकान्नविंशतिभागौ अर्धभागश्च साधिकः । उत्तरपार्श्वज्या चतुर्नवतिसहस्राणि षट्पञ्चाशमेकं च योजनशतं द्वौ चैकान्नविंशतिभागौ साधिकौ । तस्या धनुरेकं योजनशतसहस्रं चतुर्विंशतिसहस्राणि त्रीणि च शतानि षट्चत्वारिंशानि नव चैकान्नविंशतिभागाः साधिकाः । तस्योपरि नवकूटानि सिद्धायतन-निषध—हरिवर्ष-पूर्वविदेह-हरिधृति-सीतोदा-अपरविदेह—रुचकनामानि, क्षुद्रहिमवत्कूटतुल्यप्रमाणानि । तेषामुपरि जिनायतनप्रासादास्तुल्याः । प्रासादेषु स्वकूटनामानो देवा देव्यश्च वसति । अथ कथं नीलसंज्ञा ?

**नीलवर्णयोगान्नीलव्यपदेशः ॥ ७ ॥** नीलेन वर्णेन योगात्पर्वतो नील इति व्यपदिश्यते । संज्ञा वास्य, वासुदेवस्य कृष्णव्यपदेशवत् । क पुनरसौ ?

**विदेहरम्यकविनिवेशविभागी ॥ ८ ॥** स नीलाख्यः पर्वतः विदेहस्य रम्यकस्य च विनिवेशं विभजते । स निषधेन व्याख्यातप्रमाणः । तस्योपरि नवकूटानि सिद्धायतन-नील-पूर्वविदेह-सीता-कीर्ति-नारीकान्त-अपरविदेह-रम्यक-आदर्शककूटसंज्ञानि, क्षुद्रहिमवत्कूटतुल्यप्रमाणानि । तेषामुपरि जिनायतनप्रासादास्तत्तुल्याः । प्रासादेषु स्वकूटनामानो देवा देव्यश्च वसति । अथ कथं रुक्मिसंज्ञा ?

१ ग पुस्तके तत्त्रिगुणसातिरेकपरिधिं, इति पाठः । २ नायं पाठः ग पुस्तके ।

**रुक्मसद्भावाद्रुक्मीत्यभिधानं रुक्ममस्यास्तीति रुक्मीत्यभिधानं ॥ ९ ॥** अन्यत्रापि तत्सभवाद्रूढिवशाद्विशेषे वृत्ति । करिवत् । क पुनरसौ ?

**रम्यकहैरण्यवतविवेककरः ॥ १ ॥** रम्यकस्य हैरण्यवतस्य च निवेक करोत्यसौ । स महाहिमवता तुल्यप्रमाण । तस्योपरि अष्टौ कूटानि सिद्धायतन-रुक्मि-रम्यक-नरकाता-बुद्धि-रूप्यकूल-हैरण्यवत-मणिकाचन-कूटाख्यानि क्षुद्रहिमवत्कूटतुल्यप्रमाणानि । तेषामुपरि जिनायतनप्रासादास्ततुल्या । प्रासादेषु स्वकूटनामानो देवा देव्यश्च वसति । अथ कथ शिखरिसज्ञा ?

**शिखरसद्भावाच्छिखरीति संज्ञा ॥११॥** शिखराणि कूटान्यस्य सतीति शिखरीति सज्ञायते। अन्यत्रापि तत्सद्भावे रूढिवशाद्विशेषे वृत्ति' शिखडिवत् । क पुनरसौ ?

**हैरण्यवतैरावतसेतुबंधः स गिरिः ॥ १२ ॥** हैरण्यवतस्यैरावतस्य च सेतुबध इव स गिरिरवस्थितः क्षुद्रहिमवत्तुल्यप्रमाण । तस्योपर्येकादश कूटानि सिद्धायतन-शिखरि हैरण्यवत-रसदेवी-रक्तावली-[1] श्लक्ष्णकूला-लक्ष्मी-गधदेवी-ऐरावत-मणि-काचनकूटनामानि क्षुद्रहिमवत्तुल्यप्रमाणानि । तेषामुपरि जिनायतनप्रासादास्ततुल्या । प्रासादेषु स्वकूटनामानो देवा देव्यश्च वसति । तेषा वर्णविशेषप्रतिपत्त्यर्थमाह—

## हेमार्जुनतपनीयवैडूर्यरजतहेममयाः ॥ १२ ॥

त एते हिमवदादय पर्वता हेमादिमया वेदितव्या । मय॰ प्रत्येक परिसमाप्यते यथाक्रम हिमवदादयः सबध्यते। हेममयो हिमवान् चीनपट्टवर्ण॰, अर्जुनमयो महाहिमवान् शुक्ल , तपनीयमयो निषध तरुणादित्यवर्ण , वैडूर्यमयो नील मयूरग्रीवाभ , रजतमयो रुक्मी शुक्ल॰, हेममय' शिखरी चीनपट्टवर्ण इति षडपि चैतेऽद्रय प्रत्येक उभयपार्श्वगतार्धयोजनविष्कभाद्रिसमायामाभ्या बद्धतोरणनिर्भक्तैकपद्मवरवेदिकापरिवृत-वनखडाभ्यामुपेता । पुनरपि तद्विशेषणार्थमिदमाह—

## मणिविचित्रपार्श्वा उपरि मूले च तुल्यविस्ताराः ॥१३॥

नानावर्णप्रभादिगुणोपेतैर्मणिभिर्विविधचित्राणि विचित्राणि, मणिविचित्राणि पार्श्वानि येषा त इमे मणिविचित्रपार्श्वा ।

**अनिष्टसंस्थाननिवृत्त्यर्थमुपर्यादिवचनं ॥ १ ॥** अनिष्टसस्थाननिवृत्त्यर्थमुपर्यादिवचन क्रियते च शब्दो मध्यसमुच्चयार्थ । यो येषा मूलविस्तार॰ स उपरि मध्ये च तुल्य । तेषा मध्ये लब्धास्पदा ह्रदा उच्यते—

## पद्ममहापद्मतिगिंछकेसरिमहापुंडरीकपुंडरीकाः ह्रदास्तेषामुपरि ॥ १४ ॥

**पद्मादिभिः सहचरणाद्ध्रदेषु पद्मादिव्यपदेशः ॥ १ ॥** पद्म[2] महापद्म तिगछ केसरि महापुडरीक पुडरीकमिति पद्मनामानि ते' सहचरणात् ह्रदेषु पद्मादिसज्ञावृत्तिर्भवति । तेषा हिमवदादीनामुपरि यथाक्रम ते ह्रदा वेदितव्या॰ । तत्राद्यस्य सस्थानविशेषप्रतिपत्त्यर्थमाह—

## प्रथमो योजनसहस्रायामस्तदर्धविष्कंभो ह्रदः ॥ १५ ॥

प्राक् प्रत्यक् योजनसहस्रायाम उदगपाक् पचयोजनशतविस्तार वज्रमयतल , विविधमणिकनकरजतविचित्रतट श्वेतवरकनकस्तूपिकालकृतचतुस्तोरणविभक्तार्धयोजनोत्सेधपचधनु शतविष्कभहृदसमायामैकपद्मवरवेदिकापरिवृत चतुर्दिग्गतचतुर्वनखडमडित विमलस्फटिकमणिस्वच्छगभीराक्षयवारि विविधजैलजकुसुमपरिभ्राजित[3] शरदि प्रसन्नचद्रताराराजिविराजितपर्यंतपरीतविचित्रपयोधरपटल , विपर्यस्तो नभोभाग इव विभाति पद्मनामा ह्रद । तस्यैवावगाहप्रतिपत्त्यर्थमिदमुच्यते—

---

१ रसवतीत्यपि पाठ । २ ग पुस्तके कृतद्वन्द्वा इमे ह्रदा । ३ ग पुस्तके जलकुभपरिभ्राजित इति पाठ ।

## दशयोजनावगाहः ॥ १६ ॥

अवगाहोऽध प्रवेशो निम्नता । दशयोजनान्यवगाहोऽस्य दशयोजनावगाह ।

## तन्मध्ये योजन पुष्करं ॥ १७ ॥

योजनप्रमाण योजन क्रोशायामपत्रत्वात्, क्रोशद्वयविष्कम्भकर्णिकत्वाच । योजनायामविष्कभजलतलात् क्रोशद्वयोच्छ्रायनाल तावद्बहुलपत्रप्रचय वज्रमयमूलमरिष्टमणिकद रजतमणिमृणाल वैडूर्यसुप्रतिष्ठनाल, तस्य बाह्यपत्र तपनीयपरिशिष्ट जांबूनदाभ्यतरदल तपनीयकेसर नानामणिविचित्रसुवर्णकर्णिक पुष्करमवगन्तव्य तदर्धोत्सेधैरष्टशतसख्यै पद्मै परिवृत । तस्मात्पूर्वोत्तरापरोत्तरासु तिसृषु दिक्षु श्रिय सामानिकदेवाना चत्वारि पद्मसहस्राणि । दक्षिणपूर्वस्यां दिश्यभ्यन्तरपरिषदेवानां द्वात्रिंशत्पद्मसहस्राणि । दक्षिणस्या मध्यमपरिषदेवानां चत्वारिंशत्पद्मसहस्राणि । दक्षिणापरस्यां बाह्यपरिषदेवानामष्टचत्वारिंशत्पद्मसहस्राणि । अपरस्या सप्तानामनीकमहत्तराणा सप्तपद्मानि । चतसृषु महादिक्षु आत्मरक्षदेवाना षोडशपद्मसहस्राणि । तान्येतानि सर्वाणि परिवारपद्मानि तदर्धोत्सेधानि एक शतसहस्र चत्वारिंशत्सहस्राणि शत च पचाशत् । इतरेषां ह्रदानां पुष्कराणा चायामादिज्ञापनार्थमाह—

## तद्द्विगुणद्विगुणाः ह्रदाः पुष्कराणि च ॥ १८ ॥

स च तच ते तयोर्द्विगुणद्विगुणास्तद्द्विगुणद्विगुणा ।

**द्विगुणद्विगुणा इति द्वित्वं व्याप्त्यर्थं ॥ १ ॥** द्विगुणद्विगुणा इति द्वित्व उच्यते । किमर्थ ? व्याप्त्यर्थं । द्विगुणेनोत्तरेषा व्याप्तिर्यथास्यादिति । केन द्विगुणा ? आयामादिना, पद्मह्रदस्य द्विगुणायामविष्कभावगाहो महापद्मह्रद । महापद्मह्रदस्य द्विगुणायामविष्कंभावगाहस्तिगिंछह्रद । पुष्कराणि च किं ? द्विगुणानि इत्यभिसबध्यते ।

**द्वित्वात्तयोर्बहुवचनाभाव इति चेन्न विवक्षितापरिज्ञानात् ॥ २ ॥** स्यादेत्तयोर्ह्रदयो पुष्करयोश्च द्वित्वाद्बहुवचन नोपपद्यते इति ? तन्न किं कारण ? विवक्षितापरिज्ञानात् । आयताभ्या पद्मपुडरीकह्रदाभ्यां तुल्यप्रमाणाभ्यामन्ये ह्रदा दक्षिणत उत्तरतश्च द्वैगुण्येन निर्दिष्टा इति विवक्षितोऽत्रायमर्थ । अतो बहुवचनमुपपद्यते । कथ पुनस्तच्छब्दे पूर्वनिर्दिष्टापेक्षे सत्यनिर्दिष्टार्थो गृह्यते ?

**बहुवचननिर्देशात्तद्ग्रहण ॥ ३ ॥** बहुवचननिर्देशात्तस्य ग्रहण विज्ञायते । बहुवचननिर्देशात् केसर्यादय कथ न गृह्यते ?

**व्याख्यानतो वक्ष्यमाणसंबंधाच्चानिष्टनिवृत्तिः ॥४॥** "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सदेहादलक्षण" मित्यनिष्टस्य निवृत्तिर्भवति । अथवा वक्ष्यत एतत् उत्तरा दक्षिणतुल्या इति तदभिसबधाचेष्ट सप्रत्यय कर्तव्य । तद्यथा— महाहिमवत उपरि बहुमध्यदेशभावी महापद्मह्रद यो द्वियोजनसहस्रायामस्तदर्धविष्कभो विंशतियोजनावगाह । तन्मध्ये जलतलाद् द्विक्रोशोच्छ्राय योजनबहुलपत्रप्रचय द्विक्रोशायामपत्रत्वाद् योजनायामकर्णिकत्वाच द्वियोजनविष्कभ पुष्कर । तत्परिवारपद्मसख्या पूर्वोक्तैव । निषधस्योपरि बहुमध्यदेशभाक् तिगिंछह्रद चतुर्योजनसहस्रायामस्तदर्धविष्कभ, चत्वारिंशद्योजनावगाह । तन्मध्ये जलतलाद् द्विक्रोशोद्गम द्वियोजनबहुलपत्रप्रचय योजनायामपत्रत्वाद् द्वियोजनायतकर्णिकत्वाच्चतुर्योजनायामविष्कभ पुष्कर । तत्परिवारपद्मसख्या पूर्वोक्तैव । नीलस्योपरि बहुमध्यदेशभावी केसरिह्रद तिगिंछह्रदतुल्य पद्मानि च तत्तुल्य प्रमाणानि । रुक्मिण उपरि बहुमध्यदेशभाक् महापुडरीको ह्रद महापद्मह्रदतुल्य, पद्मानि च तुल्यप्रमाणानि । शिखरिण उपरि बहुमध्यदेशभावी पुडरीको ह्रद पद्मह्रदतुल्य । पुष्कराणि च तद्गतपद्मप्रमाणानि । अत्र चोद्यते तच्छब्दस्य यदि द्विगुणशब्देन वृत्ति क्रियते द्वित्व सघातस्य प्राप्नोति । अथ कृतद्वित्वेन तच्छ-

प्दस्य वृत्ति' क्रियते समुदायस्याऽसुमतत्वाद् वृत्तिर्न प्राप्नोति । वीप्साया द्वित्वे सति वाक्यमेवावतिष्ठत इति ? नैष दोष तदित्यय निपात अपादानार्थे वर्तते । तद्द्विगुणास्ततो द्विगुणा द्विगुणा इत्यर्थ । तन्निवासिनीना देवीना सज्ञाजीवितपरिवारप्रतिपादनार्थमाह—

## तन्निवासिन्यो देव्यः श्रीह्रीधृतिकीर्तिबुद्धिलक्ष्म्यः पल्योपमस्थितयः ससामानिकपरिषत्का ॥ १९ ॥

तेषु पुष्करेषु कर्णिकामध्यमैकदेशाभिनिवेशिन शरद्विमलपूर्णचद्रद्युतिहरा क्रोशायामक्रोशार्धविष्कम्भदेशोत्सेधा प्रासादास्तेषु निवसतीत्येव शीला देव्यस्तन्निवासिन्य' ।

**श्र्यादीनामितरेतरयोगे द्वंद्वः ॥ १ ॥** *श्रीश्च ह्रीश्च धृतिश्च कीर्तिश्च बुद्धिश्च लक्ष्मीश्च श्रीह्रीधृतिकीर्तिबुद्धिलक्ष्म्य इतीतरेतरयोगलक्षणो द्वद्व* । तेषु पद्मादिषु ह्रदेषु यथाक्रम देव्य श्र्यादयो वसति ।'

**स्थितिविशेषनिर्ज्ञानार्थं पल्योपमवचनं ॥ २ ॥** देवीसामान्यस्थितौ विशेषनिर्ज्ञानार्थं पल्योपमा स्थितिरासा ता पल्योपमस्थितय इति ।

**परिवारनिर्ज्ञानार्थं सामानिकपरिषत्कवचनं ॥ ३ ॥** परिवारप्रतिपत्त्यर्थं सामानिकपरिषद्ग्रहण क्रियते । समाने स्थाने भवा सामानिका' । 'समानस्य तदादेश्च'इति ठञ् । सामानिकाश्च परिषदश्च सामानिकपरिषद , अभ्यर्हितत्वात्सामानिकपदस्य पूर्वनिपात' सह सामानिकपरिषद्भिर्वर्तंते इति ससामानिकपरिषत्का । तेषा पद्मानि निर्दिष्टानि तन्मध्यवर्तिषु प्रासादेषु वसति । *यकाभि' सरद्भिस्तानि क्षेत्राणि विभक्तानि उच्यते*-

## गंगासिंधूरोहिद्रोहितास्याहरिद्धरिकांतासीतासीतोदानारीनरकांतासुवर्णरूप्यकूलारक्तारक्तोदा. सरितस्तन्मध्यगाः ॥ २० ॥

*गगादीनामितरेतरयोगे द्वद्व उदकस्य उदभाव उक्त' सरितो न वाच्य । ता किमतरा उत समीपा ?* इत्यत आह—तन्मध्यगा इति । तेषां क्षेत्राणा मध्ये मध्येन वा गच्छतीति तन्मध्यगा । एकत्र सर्वासा प्रसगनिवृत्त्यर्थं दिग्विशेषप्रतिपत्त्यर्थं चाह—

## द्वयोर्द्वयोः पूर्वाः पूर्वगाः ॥ २१ ॥

**द्वयोर्द्वयोरेकक्षेत्रं विषय इत्यभिसंबंधादेकत्र सर्वासां प्रसंगनिवृत्तिः ॥ १ ॥** विकल्प्यो हि वाक्यशेष , वाक्य वक्त्रधीन हीतीच्छातो वाक्यशेषप्रक्लृप्ते , द्वयोर्द्वयोरेकक्षेत्र विषय इत्यभिसबधात्सर्वासा सरिता एकस्मिन् क्षेत्रे प्रसगो निवर्तितो भवति ।

**पूर्वा' पूर्वगा इतिवचनं दिग्विशेषप्रतिपत्त्यर्थं ॥ २ ॥** तत्र पूर्वगा सरितस्ता पूर्वगा पूर्वसमुद्र गच्छतीति पूर्वगा । *किमपेक्ष पूर्वत्व सूत्रनिर्देशापेक्ष । यद्येव गगासिंध्वादयः सप्त पूर्वगा इति प्राप्त ?* नैष दोष द्वयोर्द्वयोरित्यभिसबधाद्द्वयोर्द्वयो पूर्वा पूर्वगा वेदितव्या । ननु च यद्द्वयोर्द्वयोरिति ग्रहण, अन्यार्थमुक्त, अन्यार्थमपि भक्तमन्यार्थं भवति । इतरासा दिग्विभागप्रतिपत्त्यर्थमाह—

## शेषास्त्वपरगाः ॥ २२ ॥

**द्वयोर्द्वयोरवशिष्टा यास्ता अपरगा वेदितव्या अपरं समुद्रं गच्छंतीत्यपरगाः तत्र पद्मह्रदप्रभवा पूर्वतोरणद्वारनिर्गता गंगा ॥ १ ॥** *क्षुल्लकहिमवत उपरि पद्मह्रदो वर्णितश्चतुस्तोरणद्वार*मडित । तत्र पूर्वतोरणद्वारेण निर्गता पचयोजनशतानि प्राङ्मुखी गत्वा गगाकूट स्रोतसा स्पृष्ट्वा । पचयोजन-

जैनेन्द्रीयसूत्र ।

शतानि त्रयोविंशतिषट्चैकान्नविंशतिभागान् अपाङ्मुखी गत्वा स्थूलमुक्तावलीव साधिकयोजनशतप्रमाण धाराप्रपाता सक्रोशषड्योजनविस्तारा योजनार्धबाहुल्या। षष्टियोजनायामविष्कम्भे दशयोजनावगाहे वज्रमय तले श्रीदेवीगृहप्रमाणप्रासादमंडितमध्ये सद्विक्रोशदशयोजनोच्छ्रायाष्टयोजनायामविष्कम्भद्वीपालंकृततटे कुंडे पतिता दक्षिणतोरणद्वारेण विनिःसृता अर्धगव्यूतावगाहा सक्रोशषड्योजनविस्तारा क्रमेण वर्धमाना भुजग कुटिलगामिनी खंडकप्रपातगुहामुखेन विजयार्धं व्यतीत्य दक्षिणमुखा दक्षिणार्धभरतमध्यं प्राप्य प्राङ्मुखी सती मुखे सक्रोशयोजनावगाहा सार्धद्विषष्टियोजनविस्तारा लवणोदधिं मागधतीर्थेन प्राविशत्।

**अपरतोरणद्वाराद्विनिर्गता सिंधुः ॥ २ ॥** पाश्चात्यतोरणद्वाराद्विनिर्गता पंचयोजनशतं गत्वा सिंधूकूटं वीचीबाहूपगुहेनाऽऽस्फाल्य। गंगावत्सिंधूकुंडे पतिता तमिस्रगुहामुखेन विजयार्धं व्यतीत्य प्रभास-तीर्थेनापरसमुद्रं प्राविक्षत्। तत्र गंगाकुंडद्वीपप्रासादे गंगादेवी वसति। सिंधूकुंडद्वीपप्रासादे सिंधूदेवी वसति। हिमवत उपरि किंचित्प्राक् प्रत्यक् चातीत्य गंगासिंध्वोर्मध्ये द्वे पद्माकारे कूटे वैडूर्यपरिणामनाले जलस्योपरि क्रोशमुच्छ्रिते क्रोशद्वयायामविष्कम्भे लोहिताक्षमणिमयार्धगव्यूतायतपत्रे तपनीयकेसरेऽर्कमणिनि-र्वृत्तगव्यूतायतकर्णिके। तयोः कर्णिकयोर्मध्ये रत्नमयमेकैकं कूटं। तत्र चैकैकः प्रासादः। प्राच्यकूटप्रासादे पल्योपमस्थितिका बला नाम देवी वसति। प्रतीच्यप्रासादकूटे पल्योपमस्थितिका लवणा नाम देवी वसति।

**उदीच्यतोरणद्वारनिर्गता रोहितास्या ॥ ३ ॥** पद्महृदस्यैव उदीच्यतोरणद्वारनिर्गता द्वे योज-नशते षट्सप्तत्युत्तरे षट्चैकान्नविंशतिभागान् हिमवत उपरि उदङ्मुखी गत्वा गंगातुल्यायामधाराप्रपातार्ध-त्रयोदशयोजनविस्तारा योजनबाहुल्या। विंशतियोजनशतायामविष्कम्भे विंशतियोजनावगाहे वज्रतले श्रीदेवी-गृहप्रमाणप्रासादमंडितमध्ये सद्विक्रोशदशयोजनोच्छ्रायषोडशयोजनायामविष्कम्भद्वीपालंकृततटे कुंडे पतिता। ततः कुंडादुदीच्यतोरणद्वारेण निर्गता उदङ्मुखी शब्दवद्वृत्तवेदाढ्यं प्रदक्षिणीकृत्यार्धयोजनेनाऽप्राप्ता-प्रत्यङ्मुखी सती प्रभवे क्रोशावगाहाऽर्धत्रयोदशयोजनविष्कम्भा मुखेऽर्धतृतीययोजनावगाहा पंचविंशतियो-जनशतविष्कम्भा रोहितास्या अपरलवणोदधिं प्राविशत्। रोहितास्याकुटप्रासादे रोहितास्या देवी वसति।

**महापद्महृदप्रभवाऽपाच्यतोरणद्वारेण निर्गता रोहित् ॥ ४ ॥** महाहिमवत उपरि महापद्महृदा-दपाच्यतोरणद्वारेण निर्गता षोडशयोजनशतानि पंचोत्तराणि पंचैकान्नविंशतिभागान् अपागागम्य पतिते-त्यादि रोहितास्यया तुल्य। अयं तु विशेषः साधिकद्वियोजनशतायामधारा। रोहित्कुंडप्रासादनिवासिना रोहि-देवी। सा रोहिन्महानदी पूर्वार्णवं प्राविशत्।

**उदीच्यतोरणद्वारनिर्गता हरिकांता ॥ ५ ॥** तत एव महापद्महृदादुदीच्यतोरणद्वारेण निर्गता हरिकांता नाम महानदी रोहिदिवाद्रितले गत्वा उदङ्मुखी साधिकद्वियोजनशतधाराप्रपातद्वियोजनबाहुल्या पंचविंशतियोजनविस्तारा श्रीदेवीगृहतुल्यप्रासादमंडितमध्ये सद्विक्रोशयोजनोच्छ्रायद्वात्रिंशद्योजनायामविष्कम्भद्वी-पालंकृततटे चत्वारिंशद्योजनावगाहे चत्वारिंशद्द्विशतयोजनायामविष्कम्भे वज्रतले कुंडे पतिता। ततः कुंडादु-दीच्यतोरणद्वारेण निर्गता प्रवाहेऽर्धयोजनावगाहा पंचविंशतियोजनविष्कम्भा विकृतवद्वृत्तवेदाढ्यमर्धयोजनेना-ऽप्राप्य प्रदक्षिणीकृत्य प्रत्यङ्मुखी सती मुखे पंचयोजनावगाहाऽर्धतृतीययोजनशतविष्कम्भा पाश्चात्यार्णवं प्राविक्षत्। हरिकांताकुंडप्रासादे हरिकांतादेवी वसति।

**तिगिंछहृदप्रभवा दक्षिणद्वारनिर्गता हरित् ॥ ६ ॥** निषधस्योपरि तिगिंछहृदाद् दक्षिण तोरणद्वारेण विनिःसृता हरिन्महानदी सप्तसहस्राणि चत्वारि शतान्येकविंशानि योजनानामेकं चैकान्नविं-शतिभागमद्रितले प्राङ्मुखी गत्वा पतितेत्यादि सर्वं हरिकांतातुल्यं। अयं तु विशेषः साधिकचतुर्योजन-शतायामधारा। हरित्कुंडप्रासादनिवासिनी हरिद्देवी। सा प्राच्यमुदधिं प्राविक्षत्।

**उदीच्यतोरणद्वारविनिर्गता सीतोदा ॥ ७ ॥** तत एव तिगिंछहृदादुदीच्यतोरणद्वारेण

**अधिकरणनिर्देशो वा ॥ २ ॥** *अथवा भरतैरावतयोरित्यधिकरणनिर्देशोय स चाधेयमाकाक्षतीति* भरते ऐरावते च मनुष्याणा वृद्धिह्रासौ वेदितव्यौ। किं कृतौ पुनस्तौ ?

**अनुभवायुःप्रमाणादिकृतौ वृद्धिह्रासौ ॥ ३ ॥** अनुभव उपभोगपरिभोगसपत्, आयुर्जीवितपरिमाण, *प्रमाण शरीरोत्सेध इत्येवमादिकृतौ मनुष्याणा वृद्धिह्रासौ प्रत्येतव्यौ। किं हेतुकौ पुनस्तौ ?*

**कालहेतुकौ सच कालो द्विविध उत्सर्पिणी अवसर्पिणी चेति तद्भेदाः पट् ॥ ४ ॥** प्रत्येकमन्वर्थसज्ञोच्यते—

**अनुभवादिभिरवसर्पणशीलाऽवसर्पिणी ॥ ५ ॥** *अनुभवादिभि पूर्वोक्तैरवसर्पणशीला हानिस्वाभाविकाऽवसर्पिणीसमा।*

**तद्विपरीतोत्सर्पिणी ॥ ६ ॥** तद्विपरीतैरेनोत्सर्पणशीला वृद्धिस्वाभाविकोत्सर्पिणीत्युच्यते। तत्रावसर्पिणी *षड्विधा सुषमसुषमा सुषमा सुषमदु षमा दु खमसुषमा दु षमा अतिदु षमा चेति। उत्सर्पिण्यपि* अतिदु खमाद्या सुषमसुषमाता षड्विधैव भवति। अवसर्पिण्या परिमाण दशसागरोपमकोटीकोट्य, उत्सर्पिण्यपि तावत्येव। सोभयी कल्प इत्याख्यायते। तत्र सुषमसुषमा चतस्र सागरोपमकोटीकोट्य। तदादौ मनुष्या उत्तरकुरुमनुष्यतुल्या। तत क्रमेण हानौ सत्या सुषमा भवति तिस्र सागरकोटीकोट्य। तदादौ मनुष्या हरिवर्षमनुष्यसमा। तत क्रमेण हानौ सत्या सुषमदु षमा भवति द्वे सागरोपमकोटीकोट्यौ तदादौ मनुष्या हैमवतमनुष्यसमाना भवति। तत क्रमेण हानौ सत्या दु षमसुषमा भवति एकसागरोपमकोटीकोटीद्विचत्वारिंशद्वर्षसहस्रोना, तदादौ मनुष्या विदेहजनतुल्या भवति। तत क्रमेण हानौ सत्या दुषमा भवति एकविंशतिवर्षसहस्राणि। तत क्रमेण हानौ सत्या अतिदु षमा भवति एकविंशतिवर्षसहस्राणि। एवमुत्सर्पिण्यपि विपरीतक्रमा वेदितव्या। अथेतरासु भूमिषु कावस्थितिरत आह—

## ताभ्यामपरा भूमयोवस्थिताः ॥ २८ ॥

ताभ्या भरतैरावताभ्यामपरा भूमय अवस्थिता भवति न हि तत्रोत्सर्पिण्यवसर्पिण्यौ स्त। किं तासु भूमिषु मनुष्यास्तुल्यायुष आहोस्वित् कश्चिदस्ति प्रतिविशेष ? इत्यस्तीत्याह—

## एकद्वित्रिपल्योपमस्थितयो हैमवतकहारिवर्षकदैवकुरवकाः ॥ २९ ॥

**हैमवतादिभ्यो भवार्थे वुञ् मनुष्यप्रतिपत्त्यर्थः ॥१॥** हैमवतभवा इत्येवमादिना विग्रहेण वुञि कृते हैमवतकादिसिद्धिर्भवति स किमर्थ ? मनुष्यप्रतिपत्त्यर्थ। तत्र भवा मनुष्या प्रतिपद्येरन्निति।

**एकादीना हैमवतकादिभिर्यथासंख्यं संबंधः ॥ २ ॥** हैमवतकादयस्त्रय एकादयस्त्रय तत्र यथासख्य सबधो भवति। एकपल्योपमस्थितयो हैमवतका। द्विपल्योपमस्थितयो हारिवर्षा। त्रिपल्योपमस्थितयो दैवकुरवका इति। तत्र पचसु हैमवतेषु सुषमदु षमा सदावस्थिता। तत्र मनुष्या एकपल्योपमायुषो द्विधनुसहस्रोच्छ्रिताश्चतुर्थभक्ताहारा नीलोत्पलवर्णा। पचसु हरिवर्षेषु सुषमा सदावस्थिता तत्र मनुष्या द्विपल्योपमस्थितय चतुश्चापसहस्रोत्सेधा षष्ठभक्ताहारा शखवर्णा। पचसु देवकुरुषु सुषमसुषमा सदावस्थिता तत्र मनुष्यास्त्रिपल्योपमायुष षड्धनु सहस्रोत्सेधा अष्टमभक्ताहारा कनकवर्णा। अथोत्तरेषु कावस्थितिरित्यत आह—

## अथोत्तराः ॥ ३० ॥

यथा दक्षिणा, तथोत्तरा वेदितव्या। हैरण्यवतका हैमवतकैस्तुल्या। रम्यका हरिवर्षकैस्तुल्या। दैवकुरवकैरुत्तरकुरवका व्याख्याता। अथ विदेहष्ववस्थितेषु का स्थितिक्रिया अत उच्यते—

## विदेहेषु संख्येयकालाः ॥ ३१ ॥

सर्वेषु विदेहेषु सख्येयकाला मनुष्या । तत्र काल सुषमदु षमादिपम सदावस्थित । मनुष्याश्च पच-धनु शतोत्सेधा नित्याहारा उत्कर्षण पूर्वकोटिस्थितिका जघन्येनांतर्मुहूर्तायुप ।

## भरतस्य विष्कंभो जंबूद्वीपस्य नवतिशतभागः ॥ ३२ ॥

किमर्थमिदमुच्यते ननु पुरस्ताद्भरतस्य विष्कंभो व्याख्यात [१] ।

**पुनर्भरतविष्कंभवचनं प्रकारांतरप्रतिपत्त्यर्थं ॥ १ ॥** पुनर्भरतविष्कंभ उच्यते प्रकारांतरेण प्रतिपत्ति कथ स्यादिति । भरतविष्कंभप्रमाणे खडै छिद्यमानो जबूद्वीप । नवत्युत्तरेण खडशतेन परिच्छि-द्यत इत्यर्थ ।

**उत्तराभिसंबंधार्थं वा ॥ २ ॥** अथवा-उत्तरत्र वक्ष्यते 'द्विर्धातकीखडे' 'पुष्करार्धे च' इति तद-भिसंबंधार्थं पुनर्वचन क्रियते ।

**तलमूलयोर्दशयोजनसहस्रविस्तारो लवणोदः ॥ ३ ॥** समे भूमितले द्वियोजनशतसहस्रवि-ष्कभ इत्युक्त पुरस्तात्, तस्य गोतार्थवदुभयतोऽर्धे क्रमेण हान्या मूले दशयोजनसहस्रविस्तार तावद्विष्कभ-जलतल योजनसहस्रावगाह समाद् भूमितलादूर्ध्वं षोडशयोजनसहस्रजलोत्सेध यवराशिरिवोच्छ्रितजल मृदगसस्थान , लवणोदो वेदितव्य ।

**तन्मध्ये दिक्षु महापातालानि योजनशतसहस्रावगाहानि ॥ ४ ॥** तस्य लवणोदस्य मध्ये चतसृषु दिक्षु रत्नवेदिकाया पचनवतियोजनसहस्राणि तिर्यगतीत्य क्षितिविवरणानि वज्रमयतल्पार्श्वानि, अंजनसस्थानानि प्रत्येकमेकयोजनशतसहस्रावगाहानि तावन्मध्येविष्कभाणि तल्मूलयोर्दशयोजनसहस्रवि-स्ताराणि महापातालानि वदितव्यानि चत्वारि पाता--वडवामुख-यूपकेसर-कलबुकसज्ञानि । तत्र प्राच्या दिशि पाताल, प्रतीच्या वडवामुख, उदीच्या यूपकेसर,अपाच्या कलबुक । तेषामेकैकस्त्रिभागस्त्रयस्त्रिंशत्सहस्राणि योज-नाना त्रीणि शतानि त्रयस्त्रिंशानि योजनत्रिभागश्च साधिक । तेषामधस्त्रिभागे वातस्तिष्ठति । मध्यत्रिभागे वायुतोये । उपरित्रिभागे तोय । रत्नप्रभाखरपृथ्वीभागसन्निवेशिभवनालयवातकुमारतद्वनिताक्रीडाजनिता-ऽनिलसक्षोभकृतपातालोन्मीलननिमीलनहेतुकौ वायुतोयनिष्क्रमप्रवेशौ भवत । तत्कृता दशयोजनसहस्र-विस्तारमुखजलस्योपरि पचाशद्योजनावधृता जलवृद्धि । तत उभयत आ रत्नवेदिकाया सर्वत्र द्विगव्यूतप्रमा-णा जलवृद्धि । पातालोन्मीलनवेगोपशमेन हानि । पातालाना चतुर्णामप्यतराणि प्रत्येक द्वे शतसहस्रे सप्तविं-शतिसहस्राणि सप्ततिशत च योजनाना त्रीणि च गव्यूतानि साधिकानि ।

**विदिक्षु क्षुद्रपातालानि दशयोजनसहस्रावगाहानि ॥ ५ ॥** तन्मध्ये चतसृषु विदिक्षु चत्वारि क्षुद्रपातालानि दशयोजनसहस्रावगाहानि तावन्मध्येविष्कभाणि मुखमूलयोर्योजनसहस्रविस्ताराणि वेदित-व्यानि । तेषामेकैकस्त्रिभागस्त्रीणि सहस्राणि त्रीणि शतानि त्रयस्त्रिंशानि योजनाना योजनत्रिभागश्च साधि-क । अधस्त्रिभागे वात , मध्यत्रिभागे वायुतोये, उपरि त्रिभागे तोय ।

**तदंतरेषु क्षुद्रपातालानां योजनसहस्रावगाहानां सहस्रं ॥ ६ ॥** तेषा दिग्विदिग्विभागाना पातालाना अतरेष्वष्टास्वपि योजनसहस्रावगाहाना तावन्मध्यविष्कभाणा मुखमूलयोस्तदर्धविस्ताराणा क्षुद्रपा-तालाना सहस्र प्रत्येतव्य । तेषा त्रिभागा पूर्ववद्वेदितव्या । तत्रैकैकस्मिन्नतरे क्षुद्रपातालाना मुक्तावलीवदव-स्थिताना शतपचविंशत्यान्यपि पातालानि सति । अतरालेषु सप्तसहस्राण्यष्टौ शतान्यशीतिश्च पातालसमुदाय ।

**दिक्षु वेलंधरनागाधिपतिनगराणि चत्वारि ॥ ७ ॥** रत्नवेदिकायास्तिर्यग्द्वाचत्वारिंशद्योजन सहस्राणि गत्वा चतसृषु दिक्षु द्वाचत्वारिंशद्योजनसहस्रायामविष्कभाणि चत्वारि वेलधरनागाधिपतिनगराणि भवति । तेषु वेलधरनागाधिपतय पल्योपमायुप दशकार्मुकोत्सेधा प्रत्येक चतसृभिरग्रमहिषीभि परिवृ-

---

"अद क्रमेणेत्यपिपाठ (क) पुस्तके" । २ मृदग सस्थानानि इत्यपि ग पुस्तके पाठ ।

ता वेलधरनागाश्च निवसति। तत्र द्वाचत्वारिंशन्नागसहस्राणि लवणोदाभ्यतरवेला धारयति। द्वासप्ततिनाग सहस्राणि बाह्या वेला धारयंति। अष्टाविंशतिनागसहस्राणि अग्रोदक धारयति। तान्येतानि समुदितान्येक शतसहस्र द्वाचत्वारिंशच्च सहस्राणि।

**द्वादशयोजनसहस्रायामविष्कंभो गौतमद्वीपश्च ॥ ८ ॥** रत्नवेदिकायास्तिर्यग्द्वादशयोजनसहस्राणि गत्वा द्वादशयोजनसहस्रायामविष्कभो गौतमस्य समुद्राधिपतेर्द्वीपश्च तत्र भवति। रत्नवेदिकायास्तिर्यक्पचनवतिप्रदेशेषु गतेषु एकप्रदेशावगाह, पचनवतिहस्तेषु गतेष्वेकहस्तावगाह, पचनवतियोजनेषु गतेष्वेकयोजनावगाह, पचनवतियोजनशतेषु गतेष्वेकयोजनशतावगाह, पंचनवतियोजनसहस्रेषु गतेष्वेकयोजनसहस्रावगाह। लवणोदस्याते यथा वेला तथा बहिरपि, विजयादीनि द्वाराणि च। अत्र लवणोदस्यैव वेला नान्योदधीना, तत्रैव च पातालानि नान्यत्र। सर्वे च लवणोदादय स्वयभूरमणपर्यंता एकयोजनसहस्रावगाहा। द्वीपोदधिपर्यंते चोभे वेदिके। या द्वीपाते ता द्वीपाना या समुद्राते ता समुद्राणा। लवणोद उच्छ्रितसलिल, शेषा प्रसारजला। भिन्नरसाश्चत्वार, त्रय उदकरसा, शेषा इक्षुरसा सागरा। लवणोदो लवणरसजल। वारुण्यदो वारुणीरसजल। क्षीरोद क्षीररसजल। घृतोदो घृतरसजल। कालोदपुष्करोदस्वयभूरमणोदा उदकरसा। लवणोदकालोदस्वयंभूरमणोदा मत्स्यकूर्मादिजलचरावासा, नेतरे। लवणोदे नदीमुखे नवयोजनशरीरा मत्स्या, सागराभ्यतरेऽष्टादशयोजनशरीरा। कालोदे नदीमुखेऽष्टादशयोजनशरीरा मत्स्या, सागराभ्यतरे षड्विंशयोजनशरीरा। स्वयभूरमणोदे नदीमुखे पचशतयोजनशरीरा मत्स्या, सागराभ्यतरे एकयोजनसहस्रशरीरा मत्स्या। योऽय वर्षवर्षधरह्रदपुष्करादीना सख्याविष्कभादिविधिरुक्तो जबूद्वीपे, तद्द्विगुणो धातकीखडे इति प्रतिपादयितुमिच्छन्नाह—

## द्विर्धातकीखंडे ॥ ३३ ॥

**द्रव्याभ्यावृत्तौ सुजभाव इति चेन्न क्रियाध्याहाराद् द्विस्तावानिति यथा ॥ १ ॥** स्यान्मत भरतादीनि द्रव्याणि अत्राभ्यावर्तंते न तु क्रिया ततो न सुजिति? तन्न, किं कारण? क्रियाध्याहारात्। यथा द्विस्तावानय प्रासाद इति मीयते इत्येवमाद्यध्याह्रियमाणक्रियापेक्षया सुजुत्पत्ति, एवमिहापि धातकीखडे भरतादयो द्वि सख्यायते इत्येव सामर्थ्यप्रापितक्रियापेक्षया सुज्वेदितव्य। तच्च सख्यान द्विधा स्वरूपभेदेन विष्कभादिभेदेन च। तत्र स्वरूपसख्यान द्वौ भरतौ द्वौ हिमवतावित्येवमादि। विष्कभादिसख्यान जबूद्वीपे हिमवदादीना वर्षधराणा यो विष्कभ तद्द्विगुणो धातकीखडे हिमवदादीनामिति।

अथ धातकीखडे भरतस्य को विष्कभ? उच्यते—

**षट्षष्टिशतानि चतुर्दशानि योजनानां धातकीखंडभरताभ्यंतरविष्कंभः एकान्नत्रिंशच्च भागशत ॥ २ ॥** षट्सहस्राणि षट्शतानि चतुर्दशोत्तराणि योजनाना योजनस्य द्वादशद्विशतभागा एकान्नत्रिंशच्च भागशत धातकीखडभरताभ्यतरविष्कभ।

**सैकाशीति पंचशताधिकद्वादशसहस्राणि मध्यविष्कंभः षट्त्रिंशच्च भागाः ॥ ३ ॥** द्वादशसहस्राणि योजनाना पचशतान्येकाशीत्युत्तराणि षट्त्रिंशच्च भागा धातकीखडभरतमध्यविष्कभ।

**सप्तचत्वारिंशत्पंचशताष्टादशसहस्राणि बाह्यविष्कंभः पंचपंचाशच्च भागशतं ॥ ४ ॥** अष्टादशसहस्राणि योजनाना पचशतानि सप्तचत्वारिंशानि पचपचाशच्च भागशत बाह्यभरतविष्कभ।

**वर्षाद्वर्षश्चतुर्गुणविस्तार आ विदेहात् ॥ ५ ॥** वर्षाद्वर्षश्चतुर्गुणविस्तार आ विदेहाद्द्रष्टव्य। भरताच्चतुर्गुणविष्कभो हैमवत। हैमवताच्चतुर्गुणविष्कभो हरिवर्ष। हरिवर्षाच्चतुर्गुणविष्कभो विदेह इति। तथा च भरततुल्यविस्तार ऐरावत। ऐरावताच्चतुर्गुणविस्तारो हैरण्यवत, हैरण्यवताच्चतुर्गुणविस्तारो रम्यक। धातकी-

खडवलयविष्कम्भश्चत्वारि योजनशतसहस्राणि । तत्परिधिरेकचत्वारिंशद्योजनशतसहस्राणि दशसहस्राणि नव योजनशतानि विशेषोनैकषष्ठ्युत्तराणि एकशतसहस्रं अष्टसप्ततिसहस्राणि अष्टौ शतानि चत्वारिंशानि योजनानि। धातकीखंडे वर्षधररुद्धक्षेत्रं । तत्परिधिमपनीयावशिष्टं द्वादशाद्विशतभागहृतं लब्धं । भरतविष्कम्भ उक्तः ।

**वर्षाणां वर्षधराणां सरितां वृत्तवेदाढ्यानां ह्रदानामन्येषां च तान्येवावगाहादीनि ॥६॥** वर्षधरा हिमवदादयः उक्तोत्सेधावगाहा द्विगुणविस्ताराश्चत्वारोपि वृत्तवेदाढ्या उक्तोच्छ्रायावगाहसमा द्वियोजनसहस्रविस्तारा. । यमकाद्री च व्याख्यातोत्सेधावगाहौ द्वियोजनसहस्रमूलविस्तारौ पंचदशयोजनशतमध्येविष्कम्भौ उपर्येकयोजनसहस्रविस्तारौ । काञ्चनाद्रयश्च व्याख्यातोच्छ्रायावगाहा द्विगुणविस्ताराः । ह्रदाश्च पद्मादयः षडपि द्विगुणायामविष्कम्भावगाहाः । द्वीपाः पद्मानि च द्विगुणायामविष्कम्भावगाहानि ।

**भरतैरावतविभाजिनाविष्वाकारगिरी ॥७॥** भरतैरावतयोर्विभागहेतू कालोदलवणोदस्पर्शिनौ योजनशतावगाहौ चतुर्योजनशतोत्सेधौ अध उपरि चैकयोजनसहस्रविस्तारौ काञ्चनपरिणामौ इष्वाकारगिरी भवतः । तत्र धातकीखंडे द्वौ मेरू पूर्वापरौ योजनसहस्रावगाहौ पंचनवतियोजनशतमूलविष्कम्भौ धरणीतले चतुर्नवतियोजनशतविस्तारौ चतुरशीतियोजनसहस्रोत्सेधौ योजनसहस्रविस्तारतलौ पूर्वोक्तप्रमाणभूतलिकौ। समाद् भूमितलात्पंचयोजनशतान्युत्प्लुत्य नंदनवनं भवति, पंचयोजनशतविस्तारं पंचपंचाशद्योजनसहस्राणि पंचशतानि च योजनानि । तत उत्प्लुत्य सौमनसं नाम वनं पंचशतयोजनविष्कम्भं भवति । ततोऽष्टाविंशयोजनसहस्राण्युत्प्लुत्य पांडुकवनं भवति । तयोर्दशसु प्रदेशेष्वेकप्रदेशवृद्धिः । जंबूद्वीपे यत्र जंबूवृक्षः तत्र धातकीखंडे धातकीवृक्षः । परिवाराश्च पूर्वोक्तवर्णना । तन्निवासी द्वीपाधिपतिस्तत एव द्वीपस्य धातकीखंड इति नाम वेदितव्यं । तत्र चक्रारांतरसंस्थाना वर्षा वर्षधराश्च चक्राराकारा उभयजलधिस्पर्शिनः । तत्परिक्षेपिकालोदसमुद्रः टंकच्छिन्नतीर्थः अष्टयोजनशतसहस्रवलयविष्कम्भः एकनवतिशतसहस्राणि सप्ततिश्च सहस्राणि साधिकपंचोत्तराणि षट्शतानि योजनानां तत्परिधिः । कालोदपरिक्षेपिपुष्करद्वीपः षोडशयोजनशतसहस्रवलयविष्कम्भः । तत्र द्वीपाम्भोनिधिद्विगुणपरिक्लृप्तिवत् धातकीखंडवर्षादिद्विगुणविधिप्रमाणविशेषावधारणार्थमाह—

## पुष्करार्धे च ॥ ३४ ॥

च शब्दः किमर्थः ?

**संख्याभ्यावृत्त्यनुवर्तनार्थश्चशब्दः ॥ १ ॥** द्विरित्येतस्याः संख्याभ्यावृत्तेरनुवर्तनार्थश्चशब्दः क्रियते, पुष्करार्धे च द्विर्भरतादयः संख्यायत इति । किं जंबूद्वीपभरतादिसंख्या द्विरावर्त्यत इत्यभिसंबध्यते आहोस्वित् धातकीखंडभरतादिकसंख्येति जंबूद्वीपभरतादिसंख्यैव संबध्यते । अनंतरा कस्मान्नाभिसंबध्यत इति इच्छातो विशेषणसंबंध इत्यतश्चैतदेव धातकीखंडे हिमवदादीनामपि विष्कम्भः । पुष्करार्धे च हिमवदादीनां द्विगुण इष्यत इति । नामानि च तान्येव वेदितव्यानि । अथ भरतस्य को विष्कम्भः ?

**एकान्नाशीत्युत्तरपंचशताधिकैकचत्वारिंशद्योजनसहस्राणि भरताभ्यंतरविष्कम्भः स त्रिसप्ततिभागशतं च ॥ २ ॥** एकचत्वारिंशत्सहस्राणि पंचशतान्येकान्नाशीत्युत्तराणि योजनानां त्रिसप्तत्युत्तरभागशतं च भरताभ्यंतरविष्कम्भो वेदितव्यः ।

**द्वादशपंचशतोत्तरत्रिपंचाशद्योजनसहस्राणि मध्यविष्कंभो नवनवत्यधिकं च भागशतं ।३।** त्रिपंचाशत्सहस्राणि योजनानां पंचशतानि द्वादशानि नवनवत्यधिकं च भागशतं मध्यभरतविष्कम्भः ।

**द्विचत्वारिंशच्चतुःशतोत्तरपंचषष्टिसहस्राणि बाह्यविष्कम्भस्त्रयोदश च भागाः ॥ ४ ॥** पंचषष्टिसहस्राणि योजनानां चत्वारि शतानि त्रयोदशभागाः बाह्यभरतविष्कम्भः ।

**वर्षाद्वर्षश्चतुर्गुणविस्तार आ विदेहाद्दृष्टव्यः ॥५॥** भरताच्चतुर्गुणविष्कम्भो हैमवतः, हैमवता-

चतुर्गुणविष्कम्भो हरिवर्ष , हरिवर्षाच्चतुर्गुणविष्कम्भो विदेह इति । तथा भरततुल्यविस्तार ऐरावत , ऐरावताच्चतुर्गुणविस्तारो हैरण्यवत , हैरण्यवताच्चतुर्गुणविस्तारो रम्यक इति । एककोटिद्वाचत्वारिंशच्छतसहस्राणि त्रिंशत्सहस्राणि द्वे शते योजनाना सविशेष चैकान्नपचाशत् । पुष्करार्धात परिधि त्रीणि शतसहस्राणि पचपचाशत्सहस्राणि पद्शतानि चतुरशीतिश्च योजनानि पुष्करार्धे पर्वतरुद्धक्षेत्रमपनीयाऽवशिष्ट द्वादशद्विशतभागादुधृत लब्ध । भरतविष्कम उक्त', वर्षवरविजयार्धवृत्तवेदाढ्यादय जबूद्वीपवर्णनाया विहितोत्सेधावगाहा विहितद्विगुणविस्तारा पुष्करार्धे च वेदितव्या । इष्वाकारौ मदरौ च तावत्परिमाणावेव । यत्र जबूवृक्षस्तत्र पुष्कर सपरिवार वेदितव्य तन्निवासिद्वीपाधिपतिस्तत एवाऽस्य द्वीपस्य नाम रूढ पुष्करद्वीप इति । अथ कथ पुष्करार्धसज्ञा ?

**मानुषोत्तरशैलेन विभक्तार्धत्वात्पुष्करार्धसंज्ञा ॥ ६ ॥** पुष्करद्वीपस्य बहुमध्यदेशभागी वलयवृत्तो मानुषोत्तरनामशैलस्तेन विभक्तार्धत्वात् पुष्करार्धसज्ञा वेदितव्या । सप्तदशयोजनशतान्येकविंशान्यस्योच्छ्राय । चत्वारि योजनशतानि त्रिंशानि सक्रोशान्यवगाह । द्वाविंशयोजनसहस्र मूलविस्तार । सप्तयोजनशतानि त्रयोविंशानि मध्यविस्तार' । चतुर्विंशानि चत्वारि योजनशतान्युपरि विस्तार । सोयमभ्यतरमुखनिषण्णसिंहाकृतिरर्धयवराशुपमानमानुषोत्तराद्रि । तस्योपरि चतसृषु दिक्षु पचाशद्योजनायामतदर्धविस्तारसार्धयोजन सप्तत्रिंशद्योजनोत्सेधानि अष्टयोजनोत्सेधतदर्धविष्कभतावत्प्रवेशद्वाराण्यर्हदायतनवर्णनोपेतानि चुल्लार्यद्देहयतनानि आग्नेय्यादिषु दिक्षु प्रदक्षिणावृतानि । वैडूर्य-अश्मगर्भ सौगधिक-रुचक-लोहिताक्ष-अजनक-अजनमूल-कनक-रजत-स्फटिक-अक-प्रवाल-वज्र-तपनीय-कूटसज्ञानि चतुर्दशकूटानि पचयोजनशतोच्छ्रायाणि पचयोजनशतमूलविष्कभाणि पचसप्तत्युत्तरत्रियोजनशतमध्यविष्कभाणि अर्धतृतीययोजनशतोपरिविष्कभाणि । तत्र चतसृषु दिक्षु त्रीणि त्रीणि कूटानि-पूर्वोत्तरस्या दिश्येक पूर्वदक्षिणस्या दिश्येक । तेषु यशस्वदादय पल्योपमस्थितय सुपर्णकुमाराणा राजानो निवसति । प्राच्या दिशि वैडूर्ये यशस्वान्, अश्मगर्भे यशष्कात , सौगधिके यशोधर । अपाच्या रुचके नदन , लोहिताक्षे नदोत्तर , अजनकेऽशनिघोष । प्रतीच्यामजनमूले सिद्धार्थ कनके क्रमण , रजते मानुष । उदीच्या स्फटिके सुदर्शन , अकेऽमोघ , प्रवाले सुप्रबुद्ध । पूर्वोत्तरस्या वज्रे हनूमान् । पूर्वदक्षिणस्या तपनीये स्वाति । चतसृषु विदिक्षु पुनरिमानि चत्वारि कूटानि रत्न-सर्वरत्न-वलव प्रभजननामानि पूर्वकूटपरिमाणानि । निषधाद्रिस्पृष्टभागे पूर्वदक्षिणस्या रत्ने पन्नगेंद्रो वेणुदेव । नीलाद्रिस्पृष्टभागे पूर्वोत्तरस्या सर्वरत्ने सुपर्णेंद्रो वेणुनीत । निषधाद्रिस्पृष्टभागेऽपरदक्षिणस्या वैलवकूटे वातेंद्रो वैलब । नीलाद्रिस्पृष्टभागेऽपरोत्तरस्या प्रभजनकूटे वातेंद्र प्रभजनो निवसति । अत्राह किमर्थं जबूद्वीपधराधरादिसख्या द्विरावृत्ता पुष्करार्धे कथ्यते न पुन कृत्स्न एव पुष्करद्वीपे इत्यत्रोच्यते—

## प्राङ् मानुषोत्तरान्मनुष्याः ॥ ३५ ॥

यस्मात् प्राङ् मानुषोत्तरान्मनुष्या न बहि , ततो न बहि पूर्वोक्तक्षेत्रविभागोस्ति । अथवा उक्तमिंद्रियविकल्पाधिकारे 'कृमिपिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानीति' तत्र न ज्ञायते क्व मनुष्या ? इत्यतस्तदधिकरणविशेषप्रतिपत्त्यर्थमुच्यते—जबूद्वीपादारभ्य प्राङ् मानुषोत्तरान् मनुष्या न बहिरिति । व्याख्यातो मानुषोत्तराद्रि , नास्मादुत्तर कदाचिदपि विद्याधरा ऋद्धिप्राप्ता अपि मानुषा गच्छति अन्यत्रोपपादसमुद्घाताभ्या, ततोऽस्याऽन्वर्थसज्ञा । एव द्विगुणद्विगुणवलयविष्कभेषु द्वीपसमुद्रेषु गतेष्वष्टमो नदीश्वरो द्वीपस्तस्य वलयविष्कभ कोटिशत त्रिषष्टिकोट्य चतुरशीतिश्च योजनशतसहस्राणि । तत्परिधिर्द्व कोटिसहस्रे द्विसप्ततिकोटय त्रयस्त्रिंशच्छतसहस्राणि चतु पचाशत्सहस्राण्येक शत नवतियोजनानि गव्यूत च साधिक । तद्बहुमध्यदेशभाविनश्चतसृषु दिक्षु चत्वारोऽजनगिरय योजनसहस्रावगाहाश्चतुरशीतियोजनसहस्रोत्सेधा मूलमध्याग्रेषूत्सेधसमानविष्कभा पटहाकारा । तेषा चतसृषु दिक्षु तिर्यगेक योजनशतसहस्रमतीत्य प्रत्येक चतस्रो वाप्यो भवति । तत्र पौरस्त्याजनगिरेर्नदा-नदवती-नदोत्तरा-नदिघोषासज्ञा योजनसहस्रावगाहा योजनशतसहस्रायामविष्कभा-

श्चतु कोणा मत्स्यकच्छपादिजलचरविरहिता पद्मोत्पलादिजलरुहकुसुमसञ्छादितस्फटिकमणिस्वच्छगंभीरनीरा । प्राच्या दिशि नंदा शक्रस्य, अपाच्या नंदवती ऐशानस्य, प्रतीच्या नंदोत्तरा चमरस्य, उदीच्या नंदिघोषा वैरोचनस्य । दक्षिणस्याञ्जनगिरेर्विजया वैजयंती जयंती अपराजिता चेति चतस्रो वाप्य पूर्वोक्तप्रमाणवर्णना शक्रलोकपालाना। प्राच्या दिशि विजया वरुणस्य, अपाच्या वैजयंती यमस्य, प्रतीच्या जयंती सोमस्य, उदीच्यामपराजिता वैश्रवणस्य । पाश्चात्याञ्जनगिरेरशोका सुप्रबुद्धा कुमुदा पुंडरीकिणी चेति चतस्रो वाप्य पूर्वोक्तप्रमाणवर्णना । पूर्वस्या दिशि अशोका वेणुदेवस्य, दक्षिणस्या सुप्रबुद्धा ( सुप्रसिद्धा ) वेणुतालस्य, अपरस्या कुमुदा वरुणस्य, उत्तरस्या पुंडरीकिणी भूतानंदस्य । उदीच्याञ्जनगिरे प्रभंकरा सुमना आनंदा सुदर्शना चेति चतस्रो वाप्य पूर्वोक्तप्रमाणवर्णना , ऐशानलोकपालाना। प्राच्या दिशि प्रभंकरा वरुणस्य, अपाच्या सुमना यमस्य, प्रतीच्या नंदा सोमस्य, उदीच्या सुदर्शना वैश्रवणस्य । षोडशानामप्यासामभ्यंतरान्तराणि पंचषष्टिसहस्राणि योजनानां पंचशतानि पंचचत्वारिंशानि । मध्यान्तराणि एकं शतसहस्रं योजनानां चत्वारिंशत्सहस्राणि षट्शतानि द्वियोजनोत्तराणि। बाह्यान्तराणि द्वे शतसहस्रे योजनानां त्रयोविंशतिसहस्राणि षट्शतान्येकषष्ट्युत्तराणि । षोडशानामपि तासां मध्येषु सहस्रावगाहा मूलमध्याग्रेषु दशयोजनसहस्रायामविष्कंभा तावदुत्सेधा पटहाकारा जांबूनदमया , अर्जुनसुवर्णशिखरत्वाद्दधिमुखा इति कृतान्वर्थसंज्ञा षोडशनगवरा । परितस्ता वाप्य । चत्वारि वनानि प्रत्येकमशोक-सप्तपर्ण-चंपक चूतनामानि वापीसमायामानि तदर्धविष्कंभाणि ।

पूर्वेणाऽशोकवनं दक्षिणत सप्तपर्णवनमाहु अपरेण चंपकवनमुत्तरतश्चूतवृक्षवनं । १ ।

एतद्वापीकोणसमीपस्था प्रत्येकं चत्वारो नगा रतिकराख्या अर्धतृतीययोजनशतावगाहा एकयोजनसहस्रोत्सेधा मूलमध्याग्रेषु तावदायामविष्कंभा पटहाकारा कांचनमणिपरिणामा । सर्वे ते समुदिताश्चतु - षष्टि । तत्र योऽभ्यंतरकोणस्था द्वात्रिंशन्नगा देवानामाक्रीडनस्थानैरलंकृता । ये बाह्यकोणस्था द्वात्रिंशद्रतिकरा अंजनाद्रयो दधिमुखाश्च तेषां द्विपंचाशदुपरि बहुमध्यदेशभावीनि प्राङ्मुखानि योजनशतायामतदर्धविष्कंभाणि पंचसप्ततियोजनोत्सेधानि अष्टयोजनोत्सेधतदर्धविस्तारतावत्प्रवेशपूर्वोत्तरदक्षिणद्वाराणि द्विपंचाशदर्हदायतनान्यर्हदायतनवर्णनोपेतानि चातुर्मासिकमहामहिमाऽर्हाणि । पूर्वोक्तचतु षष्टिवनखंडबहुमध्यदेशभाविन द्विषष्टियोजनोत्सेधा एकत्रिंशद्योजनायामविष्कंभा अष्टयोजनोत्सेधतदर्धविस्तारद्वाराश्चतु षष्टिरेव प्रासादा । एतेष्वशोकवनांतसकादय पल्योपमायुष दशकार्मुकोत्सेधा स्वस्ववननामानो देवा निवसंति । एवं द्विगुणवलयविष्कंभेषु द्वीपसमुद्रेषु गतेष्वेकादशम कुंडलवरद्वीप । तद्बहुमध्यदेशभाविवलयाकार सपूर्णयवराश्युपमान कुंडलनग योजनसहस्रावगाह द्विचत्वारिंशद्योजनसहस्रोत्सेध द्वाविंशदशसहस्रयोजनमूलविस्तार त्रयोविंशसप्तसहस्रयोजनमध्यविस्तार चतुर्विंशचतुर्योजनसहस्राग्रविस्तार । तस्योपरि पूर्वादिदिग्विभावीनि वज्र-वज्रप्रभ-कनक-कनकप्रभ-रजत-रजतप्रभ-सुप्रभ-महाप्रभ-अंक-अंकप्रभ-मणि-मणिप्रभ-स्फटिक-स्फटिकप्रभ- हिमवत् महेंद्रकूटसंज्ञानि षोडशकूटानि मानुषोत्तरकूटतुल्यप्रमाणानि।एकैकस्या दिशि चत्वारि चत्वार्येवतेषानि, पूर्वस्या दिशि वज्रे त्रिशिरा,वज्रप्रभे पंचशिरा ,कनके महाशिरा , कनकप्रभे महाभुज । अपाच्या रजते पद्म , रजतप्रभे पद्मोत्तर , सुप्रभे महापद्म महाप्रभे वासुकि । अपरस्यामंके स्थिरहृदय , अंकप्रभे महाहृदय मणिकूटे श्रीवृक्ष , मणिप्रभे स्वस्तिक । उदीच्या स्फटिके सुंदर , स्फटिकप्रभे विशालाक्ष , हिमवति पांडुर , महेंद्रे पांडुक । एते त्रिशिरप्रभृतय पांडुकांता षोडशापि नागेंद्रा पल्योपमायुष पूर्वापरयोर्दिशो कुंडलनगे एकयोजनसहस्रोत्सेधे-तावन्मूलविष्कंभे अर्धाष्टमशतमध्यविष्कंभे पंचशताग्रविष्कंभे कुंडलवरद्वीपाधिपतेरावासौ द्वे कूटे। तस्यैवोपरि पूर्वादिदिक्षु चत्वार्यर्हदायतनानि अंजनाद्रिजिनायतनतुल्यप्रमाणानि । कुंडलवरद्वीपद्विगुणवलयविष्कंभ कुंडलवरोद , तद्द्विगुणवलयविष्कंभ शंखवरद्वीप , तद्द्विगुणवलयविष्कंभ शंखवरोद तद्द्विगुणवलयविष्कंभ रुचकवरद्वीप । तद्बहुमध्यदेशभावी वलयाकार रुचकवरनग एकयोजनसहस्रावगाह श्चतुरशीतियोजनसहस्रोत्सेध , मूलमध्याग्रेषु द्विचत्वारिंशद्योजनसहस्रविस्तार । तस्योपरि पूर्वादिषु दिक्षु चत्वा

रि कूटानि नद्यावर्तक-स्वस्तिक श्रीवृक्ष-वर्धमानसञ्ज्ञानि पचयोजनशतोत्सेधानि मूलमध्याग्रेषु योजनसहस्रायामविष्कभाणि। प्राच्या दिशि नद्यावर्ते पद्मोत्तर, अपाच्या स्वस्तिके सुहस्ती, प्रतीच्या श्रीवृक्षे नील, उदीच्या वर्धमानेऽजनगिरि। त एते पद्मोत्तरादय चत्वारो दिग्गजेंद्रा पल्योपमायुष। तस्यैवोपरि पूर्वस्यां दिशि वैडूर्य-काचन-कनक-अरिष्ट-दिक्स्वस्तिक-नदन-अंजन-अजनमूलकनामान्यष्टौ कूटानि पूर्वोक्तकूटतुल्यप्रमाणानि। वैडूर्ये विजया, काचने वैजयती, कनके जयती, अरिष्टेऽपराजिता, दिक्स्वस्तिके नदा, नदने नदोत्तरा, अजने आनदा अजनमूलके नादी वर्धमाना[1]। एता दिक्कुमार्य तीर्थकरजन्मकाले इहाऽऽगत्याऽर्हन्मातृसमीपे भृगारान् गृहीत्वाऽवतिष्ठते। दक्षिणस्याममोघ-सुप्रबुद्ध-मदिर-निमल-रुचक-रुचकोत्तर-चद्र-सुप्रतिष्ठसञ्ज्ञान्यष्टौ कूटानि पूर्वोक्तकूटतुल्यप्रमाणानि। अमोघे सुस्थिता, सुप्रबुद्धे सुप्रणिधि, मंदिरे सुप्रबुद्धा, विमले यशोधरा, रुचके लक्ष्मीमती, रुचकोत्तरे कीर्तिमती, चद्रे वसुधरा, सुप्रतिष्ठे चित्रा। एता दिक्कुमार्य इहाऽऽगत्याऽर्हन्मातृसमीपे आदर्शधारिण्योऽवतिष्ठते। अपरस्या लोहिताक्ष-जगत्कुसुम-पद्म-नलिन-कुमुद-सौमनस यश - भद्राख्यान्यष्टौ कूटानि पूर्वोक्तकूटतुल्यप्रमाणानि। लोहिताक्षे इलादेवी, जगत्कुसुमे सुरादेवी, पद्मे पृथिवी, नलिने पद्मावती, कुमुदे कानना, सौमनसे नवमिका, यशसि यशस्विनी, भद्रकूटे भद्रा। एता दिक्कुमार्य इहाऽऽगत्याऽर्हन्मातृसमीपे छत्राणि धारयत्य गायत्य आसते। उदीच्या स्फटिक-अक-अजन-काचन-रजत-कुडल-रुचिर-सुदर्शनसञ्ज्ञान्यष्टौ कूटानि पूर्वोक्तकूटतुल्यप्रमाणानि। स्फटिकेऽलभूषा, अके मिश्रकेशा, अजने पुडरीकिणी, काचने वारुणी, रजत आशा, कुडले ह्री, रुचिरे श्री, सुदर्शने धृतिरिति। एता दिक्कुमार्य प्रगृहीतचामरा अर्हन्मातृ सेवते। पूर्वादिषु दिक्षु पुनरपराणि चत्वारि कूटानि विमल-नित्यालोक स्वयप्रभ-नित्योद्योतसञ्ज्ञानि। पूर्वस्या दिशि विमले चित्रा, दक्षिणस्या नित्यालोके कनकचित्रा, अपरस्यां स्वयप्रभे त्रिशिरा, उत्तरस्या नित्योद्योते सूत्रमणि। एता विद्युत्कुमार्य इहाऽऽगत्य जिनमातृसमीपे भास्करवदुद्योत कुर्वत्य आसते। विदिक्षु चत्वारि कूटानि वैडूर्य-रुचक मणिप्रभ-रुचकोत्तमनामानि। पूर्वोत्तरस्या वैडूर्ये रुचका, पूर्वदक्षिणस्या रुचके रुचकाभा, अपरदक्षिणस्या मणिप्रभे रुचकाता, अपरोत्तरस्यां रुचकोत्तमे रुचकप्रभा एता दिक्कुमारीमहत्तरिका। विदिक्षु पुनरपराणि चत्वारि कूटानि रत्न-रत्नप्रभ-सर्वरत्न-रत्नोच्चयाख्यानि। पूर्वोत्तरस्या रत्ने विजया, पूर्वदक्षिणस्या रत्नप्रभे वैजयती, अपरदक्षिणस्या सर्वरत्ने जयती, अपरोत्तरस्या रत्नोच्चये अपराजिता। एता विद्युत्कुमारीमहत्तरिका। एता अष्टावपि महत्तरिका आगत्य तीर्थकराणा जातिकर्माणि कुर्वंति। तान्येतानि विद्युत्कुमारीणा च कूटानि द्वादशाप्येकयोजनसहस्रोत्सेधानि मूलमध्याग्रेषु एकसहस्राऽर्धाऽष्टमशतपचशतविस्ताराणि। रुचकनगस्योपरि चतसृषु दिक्षु चत्वार्यर्हदायतनानि प्राङ्मुखान्यजनाद्रिजिनालयतुल्यप्रमाणानि। एव द्विगुणद्विगुणवलयविष्कभा असख्येया द्वीपसमुद्रा वेदितव्या। यो मानुषोत्तराद्बहिरुक्त तस्मात्प्राग्भवत गतिनामापेक्षाभिधाना पूर्वोदिता द्विविधा। कथ? इति चेदुच्यते—

## आर्या म्लेच्छाश्च ॥ ३६ ॥

**आर्या द्विविधा ऋद्धिप्राप्तेतरविकल्पात् ॥ १ ॥** गुणैर्गुणवद्भिर्वा अर्यते सेव्यते इत्यार्या ते द्विविधा ऋद्धिप्राप्तार्या, अनृद्धिप्राप्तार्याश्चेति।

**अनृद्धिप्राप्तार्याः पंचविधाः क्षेत्रजातिकर्मचारित्रदर्शनभेदात् ॥ २ ॥** येऽनृद्धिप्राप्तार्यास्ते पचविधा भवति क्षेत्रार्या जात्यार्या कर्मार्या चारित्रार्या दर्शनार्याश्चेति। तत्र क्षेत्रार्या काशीकोशलादिषु जाता। इक्ष्वाकुज्ञातिभोजादिषु[2] कुलेषु जाता जात्यार्या। कर्मार्यास्त्रेधा सावद्यकर्मार्या अल्पसावद्यकर्मार्या असावद्यकर्मार्याश्चेति। सावद्यकर्मार्या षोढा असि–मसि कृषि-विद्या-शिल्प-वणिक्कर्मभेदात्। असिधनुरादिप्रहरणप्रयोगकुशला असिकर्मार्या। द्रव्यायव्ययादिलेखननिपुणा मषिकर्मार्या। हलकुलिशदंतालकादिकृष्युपकरणविधानविद् कृषिवला कृषिकर्मार्या। आलेख्यगणितादिद्विसप्ततिकलावादता विद्या-

१ वर्धनेत्यपि पाठ। २ ग पुस्तके भोजनादिष्वपि पाठ।

कर्मार्याः। चतुर्वर्णाश्च रजकनापिताऽयस्कारकुलालसुवर्णकारादयः शिल्पकर्मार्याः। चंदनादिगंधघृतादिरसशाल्यादिधान्यकार्पासाद्याच्छादनमुक्तादिनानाद्रव्यसंग्रहकारिणो बहुविधा वणिक्कर्मार्याः। षडप्येतेऽविरतिप्रवणत्वात्सावद्यकर्मार्याः। अल्पसावद्यकर्मार्याश्च श्रावकाः। रतिविरतिपरिणतत्वादसावद्यकर्मार्याः संयताः। कर्मक्षयार्योऽयतविरतिपरिणतत्वाच्चारित्रार्या द्वेधा–अभिगतचारित्रार्या अनभिगतचारित्रार्याश्चेति। तद्भेद, अनुपदेशोपदेशापेक्षभेदकृतः। चारित्रमोहस्योपशमात् क्षयाच्च बाह्योपदेशानपेक्षा आत्मप्रसादादेव चारित्रपरिणामास्कंदिन उपशांतकषायाः क्षीणकषायाश्चाऽभिगतचारित्रार्याः। अतश्चारित्रमोहक्षयोपशमसद्भावे सति बाह्योपदेशनिमित्तविरतिपरिणामा अनभिगतचारित्रार्याः। दर्शनार्या दशधा आज्ञामार्गोपदेशसूत्रबीजसंक्षेपविस्तारार्थावगाढपरमावगाढरुचिभेदात्। तत्र भगवदर्हत्सर्वज्ञप्रणीताज्ञामात्रनिमित्तश्रद्धाना आज्ञारुचयः। निःसंगमोक्षमार्गश्रवणमात्रजनितरुचयः मार्गरुचयः। तीर्थकरबलदेवादिशुभचरितोपदेशहेतुकश्रद्धाना उपदेशरुचयः। प्रव्रज्यामर्यादाप्ररूपणाचारसूत्रश्रवणमात्रसमुद्भूतसम्यग्दर्शनाः सूत्ररुचयः। बीजपदग्रहणपूर्वकसूक्ष्मार्थतत्त्वार्थश्रद्धाना बीजरुचयः। जीवादिपदार्थसामान्यसंबोधनसमुद्भूतश्रद्धानाः संक्षेपरुचयः। अंगपूर्वविषयजीवाद्यर्थविस्तारप्रमाणनयादिनिरूपणोपलब्धश्रद्धाना विस्ताररुचयः। वचनविस्तारविरहितार्थग्रहणजनितप्रसादा अर्थरुचयः। आचारादिद्वादशांगाऽभिनिविष्टश्रद्धाना अवगाढरुचयः। परमावधिकेवलज्ञानदर्शनप्रकाशितजीवाद्यर्थविषयप्रसादाः परमावगाढरुचयः। **ऋद्धिप्राप्तार्या अष्टविधाः बुद्धि-क्रिया-विक्रिया-तपः-बल-औषध-रस-क्षेत्र भेदात्।** ऋद्धिप्राप्तार्या अष्टविधा भवति बुद्ध्यादिविकल्पात्। तत्र बुद्धिरवगमो ज्ञानं तद्विषया अष्टादशविधा ऋद्धयः–केवलज्ञानमवधिज्ञानं मनःपर्ययज्ञानं बीजबुद्धिः कोष्ठबुद्धिः पदानुसारित्वं संभिन्नश्रोतृत्वं दूरादास्वादनदर्शनस्पर्शनघ्राणश्रवणसमर्थता दशपूर्वित्वं चतुर्दशपूर्वित्वं अष्टांगमहानिमित्तज्ञता प्रज्ञाश्रवणत्वं प्रत्येकबुद्धता वादित्वं चेति। तत्र केवलाऽवधिमनःपर्यया व्याख्याताः। सुकृष्टसुमथान्विते (सुमथिते) क्षेत्रे सारवति कालादिसहायापेक्षं बीजमेकमुप्तं[1] यथानेकबीजकोटिप्रदं भवति तथा नोइंद्रियावरणश्रुतावरणवीर्यांतरायक्षयोपशमप्रकर्षे सति एकबीजपदग्रहणादनेकपदार्थप्रतिपत्तिर्बीजबुद्धिः। कोष्ठागारिकस्थापितानामसंकीर्णानामविनष्टानां भूयसां धान्यबीजानां यथा कोष्ठेऽवस्थानं तथा परोपदेशादवधारितानां अर्थग्रंथबीजानां[2] भूयसामव्यतिकीर्णानां बुद्धाववस्थानं कोष्ठबुद्धिः। पदानुसारित्वं त्रेधा अनुश्रोतं प्रतिश्रोतं उभयथा चेति। एकं पदस्यार्थं परतः उपश्रुत्यादौ अंते च मध्ये वा शेषग्रंथार्थावधारणं पदानुसारित्वं। द्वादशयोजनायामे नवयोजनविस्तारे चक्रधरस्कंधावारे गजवाजिखरोष्ट्रमनुष्यादीनां अक्षरानक्षररूपाणां नानाविधशब्दानां युगपदुत्पन्नानां तपोविशेषबललाभापादितसर्वजीवप्रदेशश्रोत्रेंद्रियपरिणामात् सर्वेषामेककालग्रहणं संभिन्नश्रोतृत्वं। तपःशक्तिविशेषाविर्भावितासाधारणरसनेंद्रियश्रुतावरणवीर्यांतरायक्षयोपशमांगोपांगनामलाभापेक्षस्याऽवधृतनवयोजनक्षेत्राद्बहिर्बहुयोजनविप्रकृष्टक्षेत्रादायातस्य रसस्याऽऽस्वादनसामर्थ्यं, एवं शेषेष्वपि इंद्रियविषयेषु, अवधृतक्षेत्राद्बहिर्बहुयोजनप्रकृष्टदेशायातेषु ग्रहणसामर्थ्यं योज्यं। महारोहिण्यादिभिस्त्रिभिरागताभिः प्रत्येकमात्मीयरूपसामर्थ्याविष्करणकथनकुशलाभिर्वेगवतीभिर्विद्यादेवताभिरविचालितचारित्रस्य दशपूर्वदुस्तरसमुद्रोत्तरणं दशपूर्वित्वं। संपूर्णश्रुतकेवलिता चतुर्दशपूर्वित्वं। अष्टौ महानिमित्तानि अंतरिक्ष-भौम-अंग-स्वर-व्यंजन-लक्षण-छिन्न-स्वप्ननामानि। तत्र रविशशिग्रहनक्षत्रभगणोदयास्तमयादिभिरतीतानागतफलप्रविभागदर्शनमंतरिक्षं। भुवो घनशुषिरस्निग्धरूक्षादिविभावनेन पूर्वादिदिक्सूत्रनिवासेन वा वृद्धिहानिजयपराजयादिविज्ञानं भूमेरंतर्निहितसुवर्णरजतादिसंसूचनं च भौमं। अंगप्रत्यंगदर्शनादिभिस्त्रिकालभाविसुखदुःखादिविभावनमंगं। अक्षरानक्षरशुभाशुभशब्दश्रवणेनेष्टानिष्टफलाविर्भावनं महानिमित्तं स्वरः। शिरोमुखग्रीवादिषु तिलकमशकलक्ष्मव्रणादिवीक्षणेन त्रिकालहिताहितवेदनं व्यंजनं। श्रीवृक्षस्वस्तिकभृंगारकलशादिलक्षणवीक्षणात्त्रैकालिकस्थानमानैश्वर्यादिविशेषज्ञानं लक्षणं। वस्त्रशस्त्रछत्रोपानदासनशयनादिषु देवमा-

1 क पुस्तके बीजमेकमुक्तमित्यपिपाठः। 2 ग पुस्तके अर्थग्रहबीजानामिति पाठः।

नुषराक्षसादिविभागैः शस्त्रकंटकमूषिकादिकृतछेदनदर्शनात् कालत्रयविषयलाभालाभसुखदुःखादिसूचनं छिन्नं । वातपित्तश्लेष्मदोषोदयरहितस्य पश्चिमरात्रिभागे चन्द्रसूर्यधरादिसमुद्रमुखप्रवेशनमकलमहीमंडलोपगूहनादिशुभघृततैलाक्तात्मीयदेहखरकरभारूढापादिग्गमनाद्यशुभस्वप्नदर्शनादागामिजीवितमरणसुखदुःखाद्याविर्भावकः स्वप्नः । एतेषु महानिमित्तेषु कौशलमष्टांगमहानिमित्तज्ञता । अतिसूक्ष्मार्थतत्त्वविचारगहने (गाहेन) चतुर्दशपूर्विण एव विषयेऽनुयुक्तेऽनधीतद्वादशांगचतुर्दशपूर्वस्य प्रकृष्टश्रुतावरणवीर्यांतरायक्षयोपशमाविर्भूताऽसाधारणप्रज्ञाशक्तिलाभान्निःसंशयं निरूपणं प्रज्ञाश्रमणत्वं । परोपदेशमंतरेण स्वशक्तिविशेषादेव ज्ञानसंयमविधाननिपुणत्वं प्रत्येकबुद्धता । शक्रादिष्वपि प्रतिवादिषु सत्स्वप्रतिहततया निरुत्तराभिधानं परस्रधापेक्षणं च वादित्वं । क्रियाविषया ऋद्धिर्द्विविधा चारणत्वमाकाशगामित्वं चेति । तत्र चारणा अनेकविधा जलजंघातंतुपुष्पपत्रश्रेण्यग्निशिखाद्यालंबनगमनाः । जलमुपादाय वाप्यादिष्वप्कायान् जीवानविराधयंतः भूमाविव पादोद्धारनिक्षेपकुशला जलचारणाः । भुव उपर्याकाशे चतुरंगुलप्रमाणे जंघोत्क्षेपनिक्षेपशीघ्रकरणपटवो बहुयोजनशताशु गमनप्रवणा जंघचारणाः । एवमितरे च वेदितव्याः । पर्यंकावस्थानिषण्णा वा कायोत्सर्गशरीरा वा पादोद्धारनिक्षेपणविधिमंतरेणाऽऽकाशगमनकुशला आकाशगामिनः । विक्रियगोचरा ऋद्धिरनेकविधा—अणिमा महिमा लघिमा गरिमा प्राप्तिः प्राकाम्यमीशित्वं वशित्वमप्रतिघातोऽतर्धानं कामरूपित्वमित्येवमादि । तत्राणुशरीरविकरणमणिमा बिसच्छिद्रमपि प्रविश्याऽऽसित्वा तत्र च चक्रवर्तिपरिवारविभूतिं सृजेत् । मेरोरपि महत्तरशरीरविकरणं महिमा । वायोरपि लघुतरशरीरता लघिमा । वज्रादपि गुरुतरशरीरता गरिमा । भूमौ स्थित्वाऽंगुल्यग्रेण मेरुशिखरदिवाकरादिस्पर्शनसामर्थ्यं प्राप्तिः । अप्सु भूमाविव गमनं भूमौ जल इवोन्मज्जनकरणं प्राकाम्यं । त्रैलोक्यस्य प्रभुता ईशित्वं । सर्वजीववशीकरणलब्धिर्वशित्वं । अद्रिमध्ये नियतीव गमनागमनमप्रतीघातः । अदृश्यरूपशक्तिताऽंतर्धानं । युगपदनेकाकाररूपविकरणशक्तिः कामरूपित्वमिति । तपोतिशयर्द्धिः सप्तविधा उग्र-दीप्त-तप्त-महाघोर-तपोघोर-पराक्रमघोर-ब्रह्मचर्यभेदात् । चतुर्थषष्ठाष्टमदशमद्वादशपक्षमासाद्यनशनयोगेष्वन्यतमयोगमारभ्याऽऽमरणादनिवर्तका उग्रतपसः । महोपवासकरणेपि प्रवर्धमानकायवाङ्मानसबला विगंधरहितवदना पद्मोत्पलादिसुरभिनिश्वासा अप्रच्युतमहादीप्तिशरीरा दीप्ततपसः । तप्तायसकटाहपतितजलकणवदाशुशुष्काल्पाहारतया मलरुधिरादिभावपरिणामविरहिताभ्यवहारा तप्ततपसः । सिंहनिःक्रीडितादिमहोपवासानुष्ठानपरायणयतयो महातपसः । वातपित्तश्लेष्मसन्निपातसमुद्भूतज्वरकासश्वासाक्षिशूलकुष्ठप्रमेहादिविविधरोगसंतापितदेहा अप्यप्रच्युताऽनशनकायक्लेशादितपसो भीमश्मसानाद्रिमस्तकगुहादरीकंदरशून्यग्रामादिषु प्रदुष्टयक्षराक्षसपिशाचप्रवृत्तवेतालरूपविकारेषु परुषशिवारुतानुपरतसिंहव्याघ्रादिव्यालमृगभीषणस्वनचौरादिप्रचरितेष्वभिरुचितावासाश्च घोरतपसः । त एव गृहीततपोयोगवर्धनपरा घोरपराक्रमाः । चिरोषिताऽस्खलितब्रह्मचर्यवासा प्रकृष्टचारित्रमोहनीयक्षयोपशमात् प्रणष्टदुःस्वप्ना घोरब्रह्मचारिणः । बलालब्धा ऋद्धिस्त्रिधा मनोवाक्कायभेदात् । तत्र मनःश्रुतावरणवीर्यांतरायक्षयोपशमप्रकर्षे सत्यंतर्मुहूर्ते सकलश्रुतार्थचिंतनेऽवदाता मनोबलिनः । मनोजिह्वाश्रुतावरणवीर्यांतरायक्षयोपशमातिशये सत्यंतर्मुहूर्ते सकलश्रुतोच्चारणसमर्थाः सततमुच्चैरुच्चारणे सत्यपि श्रमविरहिता अहीनकंठाश्च वाग्बलिनः । वीर्यांतरायक्षयोपशमाविर्भूताऽसाधारणकायबलत्वान्मासिकचातुर्मासिकसांवत्सरिकादिप्रतिमायोगधारणेपि श्रमक्लमविरहिताः कायबलिनः । औषधर्द्धिरष्टविधा असाध्यानामप्यामयानां सर्वेषां निवृत्तिहेतुरामर्शक्ष्वेलजल्लमलविट्सर्वौषधिप्राप्तास्याविषदृष्टिविषविकल्पात् । आमर्शनं संस्पर्शः यदीयहस्तपादाद्यामर्श औषधिप्राप्तो येस्ते आमर्शौषधिप्राप्ताः । क्ष्वेलो निष्ठीवनमौषधिर्येषां ते क्ष्वेलौषधिप्राप्ताः स्वेदालंबनो रजोनिचयो जल्लः स औषधिः प्राप्तो येषां ते जल्लौषधिप्राप्ताः । कर्णदंतनासाक्षिसमुद्भवं मलः औषधिः प्राप्तः येषां ते मलौषधिप्राप्ताः । विडुच्चार औषधिर्येषां ते विडौषधिप्राप्ताः । अंगप्रत्यंगनखदंतकेशादिरवयवः तत्संस्पर्शी वाय्वादिस्सर्वः औषधिः प्राप्तो येषां ते सर्वौषधिप्राप्ताः । उग्रविषसंपृक्तोप्याहारो येषामास्यगतो निर्विषो भवति यदीयास्यनिर्गतवचःश्रवणाद्वा महाविषपरीता अपि निर्विषी भवंति ते आस्याविषाः

येषामालोकनमात्रादेवातितीव्रविषदूषिता अपि सत निगतविषा भवति ते दृष्टिविषा । रसर्द्धिप्राप्तार्या षड्विधा आस्यविषा दृष्टिविषा क्षीरास्रविण मध्वास्रविण सर्पिरास्रविण अमृतास्रविणश्चेति । प्रकृष्टतपोबला यतयो य ब्रुवते म्रियस्वेति स तत्क्षण एव महाविषपरीतो म्रियते, ते आस्यविषा । उत्कृष्टतपसो यतय क्रुद्धा यमीक्षते स तद्वैवोग्रविषपरीतो म्रियते ते दृष्टिविषा । विरसमप्यशन येषा पाणिपुटनिक्षिप्त क्षीररस गुणपरिणामि जायते, येषा वा वचनानि क्षीरवत्क्षीणाना सतर्पकाणि भवति ते क्षीरास्रविण । येषा पाणिपुटपतित आहारो नीरसोपि मधुररसवीर्यपरिणामो भवति, येषा वचासि श्रोतॄणा दु खार्दितानामपि मधुगुण पुष्णाति ते मध्वास्रविण । येषा पाणिपात्रगतमन्न रूक्षमपि सर्पीरसवीर्यविपाकानाप्नोति, सर्पिरिव वा येषा भाषितानि प्राणिना सतर्पकाणि भवति ते सर्पिरास्रविण । येषा पाणिपुटप्राप्त भोजन यत्किंचिदमृततामास्कदति, येषा वा व्याहृतानि प्राणिना अमृतवदनुग्राहकाणि भवति तेऽमृतास्रविण । क्षेत्रर्द्धिप्राप्तार्या द्वेधा अक्षीणमहानसा अक्षीणमहालयाश्चेति । लाभातरायक्षयोपशमप्रकर्षप्राप्तेभ्यो यतिभ्यो यतो भिक्षा दीयते ततो भाजनाच्चक्रधरस्कधावारोपि यदि भुजीत तद्दिवसे नान्न क्षीयते ते अक्षीणमहानसा । अक्षीणमहालयलब्धिप्राप्ता यतयो यत्र वसति देवमनुष्यतैर्यग्योना यदि सर्वेपि तत्र निवसेयु परस्परमबाधमाना सुखमासते त एते सर्वे ऋद्धिप्राप्तार्या ।

**म्लेच्छाः द्विविधाः अंतरद्वीपजाः कर्मभूमिजाश्चेति ॥ ४ ॥** म्लेच्छा द्विविधा वेदितव्या अतरद्वीपजा कर्मभूमिजाश्चेति । तत्रातरद्वीपा लवणोदधेरष्टासु दिक्ष्वष्टौ, तदतरे चाष्टौ । हिमवच्छिखरिणोरुभयोश्च विजयार्धयोरतेष्वष्टौ । तत्र दिक्षु द्वीपा वेदिकायास्तिर्यक्पचयोजनशतानि प्रविश्य भवति । विदिक्ष्वतरेषु च द्वीपा पचाशेषु पचयोजनशतेषु गतेषु भवति । शैलातेषु द्वीपा षट्सु योजनशतेषु गतेषु भवति । दिक्षु द्वीपा शतयोजनविस्तीर्णा , विदिक्ष्वतरेषु च द्वीपा तदर्धविष्कभा । शैलातेषु पचविंशतियोजनविस्तारा । तत्र पूर्वस्या दिशि एकोरुका । अपरस्या लांगूलिन । उत्तरस्यामभाषका । दक्षिणस्या विषाणिन । शशकर्णशष्कुलीकर्णकर्णप्रावरणलबकर्णा । विदिक्षु अश्व-सिंह-श्व-महिष-वराह-व्याघ्र-उलूक-कपिमुखा । अतरेषु मेघविद्युन्मुखा । शिखरिणि उभयोरतयोर्मत्स्यमुखा कालमुखा । हिमवत उभयोरतयोर्हस्तिमुखादर्शमुखा । उत्तर विजयार्धस्योभयोरतयोर्गोमुखमेषमुखा । दक्षिणविजयार्धस्योभयोरतयोरेकोरुका मृदाहारा गुहावासिन , शेषा पुष्पफलाहारा वृक्षवासिन , सर्वे ते पल्योपमायुष । ते चतुर्विंशतिरपि द्वीपा जलतलादेकयोजनोत्सेधा , तथा कालोदेऽपि वेदितव्या । एते अतरद्वीपजा म्लेच्छा । कर्मभूमिजाश्च शक-यवन शबर-पुलिंदादय । का पुन कर्मभूमय इत्यत आह—

## भरतैरावतविदेहाः कर्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्य' ॥ ३७ ॥

अथवा मोक्षमार्गस्त्रितय प्रकृत स किं सर्वेषु क्षेत्रेषु भवति ? न इत्याह कर्मभूमिष्वेव । कुत एतत् ? भोगभूमिषु हि यद्यपि मनुष्याणा ज्ञानदर्शने स्त चारित्र तु नास्ति अविरतभोगपरिणामित्वात् । यद्येन कास्ता कर्मभूमय ? इत्यतस्तत्प्रतिपादनार्थमिदमुच्यते—

**कर्मभूमय इति विशेषणानुपपत्तिः सर्वत्र कर्मणोव्यापारात् ॥ १ ॥** अष्टविधस्य कर्मणो बधस्तत्फलानुभवन च सर्वेष्वेव मनुष्यक्षेत्रेषु साधारण अत कर्मभूमय इति विशेषण नोपपद्यते ?

**न वा प्रकृष्टशुभाशुभकर्मोपार्जननिर्जराधिष्ठानोपपत्तेः ॥ २ ॥** न वा एष दोष किं का। यत प्रकृष्ट शुभकर्म सर्वार्थसिद्धिसौख्यप्रापक तीर्थकरत्वमहर्द्धिनिर्वर्तक चासाधारण । अ... पृथिवीमहादु खप्रापक अप्रतिष्ठाननरकगमन च कर्मभूमिष्वेवोपार्ज्यते द्रव्य-भव-... कर्मबधस्य । सफल च ससारकारणनिर्जराकर्म वात्रैव प्रवर्तते अतो भरतादिष्वेव ...

१ कल्कलसकलपृथिवीमहादु खप्रापकमिति ख पुस्तके पाठ ।

**षट्कर्मदर्शनाच्च ॥ ३ ॥** षण्णा कर्मणा असि-कृषि-मषि-विद्या-वणिक्-शिल्पानामत्रैव दर्शनाच्च कर्मभूमिव्यपदेशो युक्तिमान् ।

**अन्यत्रशब्दः परिवर्जनार्थः ॥ ४ ॥** यथा न कश्चित्सर्वदा सर्वविस्रंभगमन नय अन्यत्र धर्मार्थस्य, अन्योमार्ग एव न विद्यते इति धर्म वर्जयित्वार्थकामयोरविस्रंभगमन नय धर्मेषु विस्रंभ एव कार्य इति, एवमिहापि विदेहा कर्मभूमय इत्युक्ते विदेहाभ्यतरत्वाद्देवकुरूत्तरकुरूणामपि कर्मभूमित्वप्रसंगेऽन्यत्रवचनाद्देवकुरूत्तरकुरुभ्योऽन्ये विदेहा कर्मभूमय । देवकुरूत्तरकुरवो हैमवतादयश्च भोगभूमय इति वेदितव्या । सर्वास्वेव भूमिषु मनुष्याणा स्थितिपरिच्छेदार्थमाह—

## नृस्थिती परावरे त्रिपल्योपमांतर्मुहूर्ते ॥ ३८ ॥

**यथासंख्यमभिसंबंधः ॥ १ ॥** त्रिपल्योपमांतर्मुहूर्तयोर्यथासंख्यमभिसंबधो वेदितव्य । परा नृस्थिति त्रिपल्योपमा, अपराऽतर्मुहूर्ता इति । त्रीणि पल्यानि उपमा यस्या स्थिते सा त्रिपल्योपमा । अतर्गर्भोमुहूर्तो यस्या सा अतर्मुहूर्ता । अत्राह किमिद पैल्य नाम[1] इत्युच्यते– तत्परिच्छेद प्रमाणविधिनिर्णयपुरस्सर इति प्रमाणविधिरेव तावदुच्यते—

**प्रमाणं द्विविधं लौकिकलोकोत्तरभेदात् ॥२॥** लौकिक लोकोत्तरमिति प्रमाण द्वेधा विभज्यते–

**लौकिकं षोढा मानोन्मानावमानगणनाप्रतिमानतत्प्रमाणभेदात् ॥ ३ ॥** लौकिक मान षोढा विभज्यते-मानमुन्मानमवमान गणना प्रतिमान तत्प्रमाण चेति । तत्र मान द्वेधा-रसमान बीजमान चेति । घृतादिद्रव्यपरिच्छेदक षोडशिकादि रसमान । कुडवादि बीजमान । कुष्ठतगरादिभाड येनेत्क्षिप्य मीयते तदुन्मान निवर्तनादि । विभागेन क्षेत्र येनावगाह्य मीयते तदवमान दडादि । एकद्वित्रिचतुरादिगणितमान गणनामान । पूर्वमानापेक्ष मान प्रतिमान प्रतिमल्लवत् । चत्वारि महाधिकतृणफलानि श्वेतसर्षप एक', षोडशसर्षपफलानि धान्यमाषफलमेक, द्वे धान्यमाषफले गुजाफलमेक, द्वे गुजाफले रूप्यमाष एक , षोडशरूप्यमाषका धरणमेक, अर्धतृतीयधरणानि सुवर्णानि सुवर्ण , स च कस , चत्वार कसा पल, पलशत तुला, अर्धकस त्रीणि च पलानि कुडव , चतु कुडव प्रस्थ , चतु प्रस्थमाढक, चतुराढक द्रोण षोडशद्रोणा खारी, विंशखार्यो वाह इत्यादि नागरिकप्रमाण । मणिजात्यश्वादेर्द्रव्यस्य दीप्त्युच्छ्रायगुणविशेषादिमूल्यपरिमाणकरणे प्रमाणमस्येति तत्प्रमाण । तद्यथा– मणिरत्नस्य दीप्तिर्यावत्क्षेत्रमुपरि व्याप्नोति तावत्प्रमाण सुवर्णकूट मूल्यमिति । अश्वस्य च यावानुच्छ्रायस्तावत्प्रमाण सुवर्णकूट मूल्य । यावता रत्नस्वामिन परितोष तावद्रत्नमूल्यमेवमन्येषामपि द्रव्याणा ।

**लोकोत्तरं चतुर्धा द्रव्यक्षेत्रकालभावभेदात् ॥ ४ ॥** लोकोत्तर प्रमाण चतुर्धा भिद्यते, कुत ? द्रव्यक्षेत्रकालभावभेदात् । तत्र द्रव्यप्रमाण जघन्यमध्यमोत्कृष्ट एकपरमाणु द्वित्रिचतुरादिप्रदेशात्मकमामहास्कधात् । क्षेत्रप्रमाण जघन्यमध्यमोत्कृष्टमेकाकाशद्वित्रिचतुरादिप्रदेशनिष्पन्नमासर्वलोकात् । कालप्रमाण जघन्यमध्यमोत्कृष्टमेकद्वित्रिचतुरादिसमयनिष्पन्नमा अनतकालात् । भावप्रमाणमुपयोग साकारानाकारभेद , जघन्य सूक्ष्मनिगोतस्य, मध्यमोऽन्यजीवाना, उत्कृष्ट केवलिन ।

**तत्र द्रव्यप्रमाणं द्वेधा संख्योपमाभेदात् ॥ ५ ॥** संख्याप्रमाणमुपमाप्रमाण चेति द्वेधा द्रव्यप्रमाण विभज्यते ।

**तत्र संख्याप्रमाणं त्रिधा संख्येयासंख्येयानंतभेदात् ॥ ६ ॥** तत्र संख्येयप्रमाण त्रेधा इतरे द्वे नवधा ज्ञेये । जघन्यमजघन्योत्कृष्टमुत्कृष्ट चेति संख्येय त्रिविध । संख्येयप्रमाणावगमार्थं जबूद्वीपतुल्यायाम-

---

१ ग. पुस्तके पल्योपमेति पाठांतर ।

विष्कभा योजनसहस्रावगाहा बुद्धया कुशूलाश्चात्वार कर्तव्या, शलाकाप्रतिशलाकामहाशलाकाख्यास्त्रयोवस्थितता चतुर्थोनवस्थित । अत्र द्वौ सर्षपौ निक्षिप्तौ जघन्यमेतत्सख्येयप्रमाण तमनवस्थित सर्षपै पूर्ण गृहीत्वा कश्चिदेव एकैक सर्षपमेकैकस्मिन् द्वीपे समुद्रे च प्राक्षिपेत् तेन विधिना स रिक्त । रिक्त इति शलाकाकुशूले एक सर्षप प्रक्षिपेत् । यत्र अत्यसर्षपो निक्षिप्तस्तमेवर्धि कृत्वा अनवस्थित कुशूल परिकल्प्य सर्षपै पूर्ण कृत्वा तत परेषु द्वीपसमुद्रेष्वेकैकसर्षपप्रदानेन स रिक्त कर्तव्य । रिक्त इति शलाकाकुशूले पुनरेक प्रक्षिपेत् । अनेन विधिनाऽनवस्थितकुशूलपरिवर्धनेन प्रतिशलाकाकुशूले परिपूर्णे, पूर्णइति एक सर्षपो निक्षेप्तव्य' । एव तावत्कर्तव्यो यावत्प्रतिशलाकाकुशूल परिपूर्णोभवति । परिपूर्णे इति शलाकाकुशूले एक सर्षप प्रक्षेप्तव्य सोऽपि तथैव परिपूर्ण । एवमेतेषु चतुर्ष्वपि पूर्णेषु उत्कृष्टसख्येयमतीत्य जघन्यपरीतासख्येय गत्वैक रूप पतित, तत एकस्मिन् रूपेऽऽपनीते उत्कृष्टसख्येय भवति । मध्यमजघन्योत्कृष्टसख्येय यत्र सख्येयेन प्रयोजन तत्राजघन्योत्कृष्टसख्येय ग्राह्य । यदसख्येय तत्रिविध परीतासख्येय युक्तासख्येय असख्यासख्येय चेति । तत्र परीतासख्येय त्रिविध जघन्योत्कृष्टमध्यमभेदात् । एवमितरे चाऽसख्येये भिद्येते । तथाऽनतमपि त्रिविध परीतानत युक्तानत अनतानत चेति । तदपि प्रत्येक पूर्ववत्त्रिधा भेद्य । यज्जघन्यपरीतासख्येय तद्विरलीकृत्य मुक्तावलीकृता अत्रैकैकस्या मुक्ताया जघन्यपरीतासख्येय देय । एवमेतद्वर्गित प्राथमिकी मुक्तावलीमपनीय यान्येकैकस्या मुक्ताया जघन्यपरीतासख्येयानि दत्तानि तानि सपीड्य मुक्तावली कार्या । ततो यो जघन्यपरीतासख्येयसपीडनान्निष्पन्नो राशि स देय । एकैकस्या मुक्ताया एवमेतत्सवर्गित उत्कृष्टपरीतासख्येयमतीत्य जघन्ययुक्तासख्येय गत्वा पतितमेकरूप । तत एकरूपेऽपनीते उत्कृष्टपरीतासख्येय भवति । मध्यमजघन्योत्कृष्टपरीतासख्येय यत्रावलिकया कार्य तत्र जघन्ययुक्तासख्येय ग्राह्य यज्जघन्ययुक्तासख्येय तद्विरलीकृत्य मुक्तावली रचिता । तत्रैकैकमुक्ताया युक्तासख्येयानि देयानि एवमेतत्सकृद्वर्गितमुत्कृष्टयुक्तासख्येयमतीत्य जघन्याऽसख्येयाऽसख्येय गत्वा पतित, तत एकरूपेऽपनीते उत्कृष्ट युक्तासख्येय भवति । मध्यमजघन्योत्कृष्टयुक्तासख्येय भवति । यज्जघन्याऽसख्येयासख्येय तद्विरलीकृत्य पूर्वविधिना त्रीन्वारान् वर्गितसवर्गित उत्कृष्टासख्येय न प्राप्नोति ततो धर्माधर्मैकजीवलोकाकाशप्रत्येकशरीरजीवबादरनिगोतशरीराणि षडप्येतान्यसख्येयानि स्थितिबधाध्यवसायस्थानान्यनुभागबधाध्यवसायस्थानानि योगविभागपरिच्छेदरूपाणि चाऽसख्येयलोकप्रदेशपरिमाणान्युत्सर्पिण्यवसर्पिणीसमयाश्च प्रक्षिप्य पूर्वोक्तराशौ त्रीन्वारान् वर्गितसवर्गित कृत्वा उत्कृष्टाऽसख्येयाऽसख्येयमतीत्य जघन्यपरीतानत गत्वा पतित । तत एकरूपेऽपनीते उत्कृष्टाऽसख्येयाऽसख्येय भवति, मध्यमजघन्योत्कृष्टाऽसख्येयाऽसख्येय भवति । यत्रासख्येयाऽसख्येयेन प्रयोजन तत्राऽजघन्योत्कृष्टाऽसख्येयाऽसख्येय ग्राह्य । यज्जघन्यपरीतानत तत्पूर्ववद्वर्गितमुत्कृष्टपरीतानतमतीत्य जघन्ययुक्तानत गत्वा पतित । तत एकरूपेऽपनीते उत्कृष्टपरीतानत तद्भवति । मध्यमजघन्योत्कृष्टपरीतानत अभव्यराशिप्रमाणमार्गणे जघन्ययुक्तानत ग्राह्य । यज्जघन्ययुक्तानत तद्विरलीकृत्यात्रैकैकरूपे जघन्ययुक्तानत दत्वा सकृद्वर्गितमुत्कृष्टयुक्तानतमतीत्य जघन्यमनतानत गत्वा पतित । तत एकरूपेऽपनीते उत्कृष्टयुक्तानत भवति । मध्यमजघन्योत्कृष्टयुक्तानत यज्जघन्याऽनताऽनत तद्विरलीकृत्य पूर्ववत्त्रीन्वारान् वर्गितसवर्गितमुत्कृष्टाऽनताऽनत न प्राप्नोति तत' सिद्धनिगोतजीववनस्पतिकायातीताऽनागतकालसमयसर्वपुद्गलसर्वाऽऽकाशप्रदेशधर्माधर्मास्तिकायाऽगुरुलघुगुणानन्तान् प्रक्षिप्य प्रक्षिप्य त्रीन् वारान् वर्गितसवर्गिते कृते उत्कृष्टाऽनताऽनत न प्राप्नोति ततोऽनते केवलज्ञाने दर्शने च प्रक्षिप्ते उत्कृष्टाऽनताऽनत भवति । तत एकरूपेऽपनीतेऽजघन्योत्कृष्टाऽनताऽनत भवति । यत्राऽनताऽनत मार्गण तत्राजघन्योत्कृष्टाऽनताऽनत ग्राह्य ।

**उपमाप्रमाणमष्टविध पल्यसागरसूचीप्रतरघनाङ्गुलजगच्छ्रेणीलोकप्रतरलोकभेदात् ॥७॥**

अतादिमध्यहीन' अविभागोऽतींद्रिय एकरसगधवर्ण द्विस्पर्श परमाणु' । अनतानतपरमाणुसघातपरिमाणादा-

१ अधिकृत्वेतिच पाठ

**षट्कर्मदर्शनाच्च ॥ ३ ॥** षण्णां कर्मणां असि-कृषि-मषि-विद्या-वणिक्-शिल्पानामत्रैव दर्शनात् कर्मभूमिव्यपदेशो युक्तिमान् ।

**अन्यत्रशब्दः परिवर्जनार्थः ॥ ४ ॥** यथा न क्वचित्सर्वदा सर्वविस्रंभगमनं नय अन्यत्र धर्मार्थस्य, अन्योमार्गो एव न विद्यते इति धर्मं वर्जयित्वार्थकामयोरविस्रंभगमनं नय धर्मेषु विस्रंभ एव कार्य इति, एवमिहापि विदेहाः कर्मभूमय इत्युक्ते विदेहाभ्यंतरत्वाद्देवकुरूत्तरकुरूणामपि कर्मभूमित्वप्रसंगेऽन्यत्रवचनाद्देवकुरूत्तरकुरुभ्योऽन्ये विदेहाः कर्मभूमयः । देवकुरूत्तरकुरवो हैमवतादयश्च भोगभूमय इति वेदितव्याः । सर्वास्वेव भूमिषु मनुष्याणां स्थितिपरिच्छेदार्थमाह—

## नृस्थिती परावरे त्रिपल्योपमांतर्मुहूर्ते ॥ ३८ ॥

**यथासंख्यमभिसंबंधः ॥ १ ॥** त्रिपल्योपमांतर्मुहूर्तयोर्यथासंख्यमभिसंबंधो वेदितव्यः । परा नृस्थितिः त्रिपल्योपमा, अपराऽन्तर्मुहूर्ता इति । त्रीणि पल्यानि उपमा यस्याः स्थितेः सा त्रिपल्योपमा । अंतर्गर्भोमुहूर्तो यस्याः सा अंतर्मुहूर्ता । अत्राह किमिदं पल्यं नाम[1] इत्युच्यते— तत्परिच्छेदः प्रमाणविधिनिर्णयपुरस्सर इति प्रमाणविधिरेव तावदुच्यते—

**प्रमाणं द्विविधं लौकिकलोकोत्तरभेदात् ॥२॥** लौकिकं लोकोत्तरमिति प्रमाणं द्वेधा विभज्यते—

**लौकिकं षोढा मानोन्मानावमानगणनाप्रतिमानतत्प्रमाणभेदात् ॥ ३ ॥** लौकिकं मानं षोढा विभज्यते-मानमुन्मानमवमानं गणना प्रतिमानं तत्प्रमाणं चेति । तत्र मानं द्वेधा-रसमानं बीजमानं चेति । घृतादिद्रव्यपरिच्छेदकं षोडशिकादि रसमानं । कुडवादि बीजमानं । कुष्टतगरादिभांडं येनोत्क्षिप्य मीयते तदुन्मानं निवर्तनादि । विभागेन क्षेत्रं येनावगाह्य मीयते तदवमानं दंडादि । एकद्वित्रिचतुरादिगणितमानं गणनामानं । पूर्वमानापेक्षं मानं प्रतिमानं प्रतिमल्लवत् । चत्वारि महाधिकतृणफलानि श्वेतसर्षप एकः, षोडशसर्षपफलानि धान्यमाषफलमेकं, द्वे धान्यमाषफले गुंजाफलमेकं, द्वे गुंजाफले रूप्यमाष एकः, षोडशरूप्यमाषकाः धरणमेकं, अर्धतृतीयधरणानि सुवर्णानि सुवर्णः, स च कंसः, चत्वारः कंसाः पलं, पलशतं तुला, अर्धकंसः त्रीणि च पलानि कुडवः, चतुःकुडवः प्रस्थः, चतुःप्रस्थमाढकं, चतुराढकः द्रोणः षोडशद्रोणा खारी, विंशखार्यो वाहः इत्यादि नागरिकप्रमाणं । मणिजात्यश्वादेर्द्रव्यस्य दीप्त्युच्छ्रायगुणविशेषादिमूल्यपरिमाणकरणे प्रमाणमस्येति तत्प्रमाणं । तद्यथा— मणिरत्नस्य दीप्तिर्यावत्क्षेत्रमुपरि व्याप्नोति तावत्प्रमाणं सुवर्णकूटं मूल्यमिति । अश्वस्य च यावानुच्छ्रायस्तावत्प्रमाणं सुवर्णकूटं मूल्यं । यावता रत्नस्वामिनः परितोषः तावद्रत्नमूल्यमेवमन्येषामपि द्रव्याणां ।

**लोकोत्तरं चतुर्धा द्रव्यक्षेत्रकालभावभेदात् ॥ ४ ॥** लोकोत्तरं प्रमाणं चतुर्धा भिद्यते, कुतः ? द्रव्यक्षेत्रकालभावभेदात् । तत्र द्रव्यप्रमाणं जघन्यमध्यमोत्कृष्टं एकपरमाणु द्वित्रिचतुरादिप्रदेशात्मकमामहास्कंधात् । क्षेत्रप्रमाणं जघन्यमध्यमोत्कृष्टमेकाकाशद्वित्रिचतुरादिप्रदेशनिष्पन्नमासर्वलोकात् । कालप्रमाणं जघन्यमध्यमोत्कृष्टमेकद्वित्रिचतुरादिसमयानिष्पन्नमा अनंतकालात् । भावप्रमाणमुपयोगः साकारानाकारभेदः, जघन्यः सूक्ष्मनिगोतस्य, मध्यमोऽन्यजीवानां, उत्कृष्टः केवलिनः ।

**तत्र द्रव्यप्रमाणं द्वेधा संख्योपमाभेदात् ॥ ५ ॥** संख्याप्रमाणमुपमाप्रमाणं चेति द्वेधा द्रव्यप्रमाणं विभज्यते ।

**तत्र संख्याप्रमाणं त्रिधा संख्येयासंख्येयानंतभेदात् ॥ ६ ॥** तत्र संख्येयप्रमाणं त्रेधा इतरे द्वे नवधा ज्ञेये । जघन्यमजघन्योत्कृष्टमुत्कृष्टं चेति संख्येयं त्रिविधं । संख्येयप्रमाणावगमार्थं जंबूद्वीपतुल्यायाम-

---

१ ग पुस्तके पल्योपमेति पाठांतरं ।

घन्यगतिपरिणतस्य परमाणोः स्वावगाढप्रदेशव्यतिक्रमकालः परमनिरुद्धो निर्विभागः समयः असंख्येयाः समयाः आवलिकाऽसंख्येयावलिका एक उच्छ्वासस्तावानेव निश्वसः तावुभावनुपहतस्य पुंसः प्राण एकः। सप्तप्राणाः स्तोकः, सप्तस्तोकाः लवः, सप्त सप्ततिलवा मुहूर्तः, त्रिंशन्मुहूर्ता अहोरात्रः, पंचदशाऽहोरात्राः पक्षः, द्वौपक्षौ मासः, द्वौ मासौ ऋतुः, ऋतवस्त्रयोऽयनं, द्वेऽयने संवत्सरः, चतुरशीतिवर्षशतसहस्राणि पूर्वांगं, चतुरशीतिपूर्वांगशतसहस्राणि पूर्वं। एवमनयैव वृद्ध्या पूर्वांगपूर्वनयुतांगनयुतकुमुदांगकुमुदपद्मांगपद्मनलिनांगनलिनकमलांगकमलतुट्यांगतुट्यअटटांगअटटअममांगअममहूहूअंगहूहूलतांगलतामहालताप्रभृतिसंज्ञा। काले वर्षगणनागम्य संख्येयो वेदितव्यः, ततः परोऽसंख्येयः पल्योपमसागरोपमप्रमितः, ततः परोऽनंतः कालोऽतीतो ऽनागतश्च सर्वज्ञप्रत्यक्षः।

**भावप्रमाणं पंचविधं ज्ञानं ॥९॥** पुरस्ताद्व्याख्यातं। यथैवेते उत्कृष्टजघन्ये स्थिती नृणां तथैव-

## तिर्यग्योनिजानां च ॥ ३९ ॥

तिरश्चां योनिस्तिर्यग्योनिः का पुनरसौ ?

**तिर्यङ्नामकर्मोदयापादितजन्म तिर्यग्योनिः ॥ १ ॥** तिर्यग्गतिनाम्नः कर्मण उदयेनाऽऽपादितं जन्म तिर्यग्योनिरिति व्यपदिश्यते तिर्यग्योनौ जातास्तिर्यग्योनिजाः। तेषां तिर्यग्योनिजानां उत्कृष्टा भवस्थितिः त्रिपल्योपमा, जघन्याऽन्तर्मुहूर्ता। मध्ये विकल्पः तत्प्रतिपादनार्थमिदमुच्यते—

**तिर्यंचः त्रिविधाः एकेंद्रियविकलेंद्रियपंचेंद्रियभेदात् ॥ २ ॥** एकेंद्रिया विकलेंद्रिया पंचेंद्रियाश्चेति त्रिविधाः तिर्यंचो वेदितव्याः।

**द्वादशद्वाविंशतिदशसप्तत्रिवर्षसहस्राणि एकेंद्रियाणामुत्कृष्टा स्थितिर्यथासंभवं त्रीणि रात्रिंदिवानि च ॥ ३ ॥** एकेंद्रियाः पंचविधाः पृथिवीकायिकाः अप्कायिकाः तेजस्कायिकाः वायुकायिकाः वनस्पतिकायिकाश्चेति-तत्र पृथिवीकायिकाः द्विविधाः शुद्धपृथिवीकायिकाः खरपृथिवीकायिकाश्चेति। तत्र शुद्धपृथिवीकायिकानां उत्कृष्टा स्थितिर्द्वादशवर्षसहस्राणि। खरपृथिवीकायिकानां द्वाविंशतिर्वर्षसहस्राणि। वनस्पतिकायिकानां दशवर्षसहस्राणि अप्कायिकानां सप्तसहस्राणि वायुकायिकानां त्रीणि वर्षसहस्राणि तेजःकायिकानां त्रीणि रात्रिंदिवानि।

**विकलेंद्रियाणां द्वादशवर्षा एकान्नपंचाशद्रात्रिंदिवानि षण्मासाश्च ॥ ४ ॥** द्वींद्रियाणामुत्कृष्टा स्थितिर्द्वादशवर्षा। त्रींद्रियाणां एकान्नपंचाशद्रात्रिंदिवानि। चतुरिंद्रियाणां षण्मासाः।

**पंचेंद्रियाणां पूर्वकोटिनवपूर्वांगानि द्विचत्वारिंशद्वासप्ततिवर्षसहस्राणि त्रिपल्योपमा च ॥ ५ ॥** पंचेंद्रियाः तिर्यग्योनाः पंचविधाः जलचराः, परिसर्पाः, उरगाः, पक्षिणः, चतुःपादश्चेति। तत्र जलचराणामुत्कृष्टा स्थितिः मत्स्यादीनां पूर्वकोटी। परिसर्पाणां गोधानकुलादीनां नवपूर्वांगानि। उरगाणां द्विचत्वारिंशद्वर्षसहस्राणि। पक्षिणां द्वासप्ततिवर्षसहस्राणि। चतुःपदां त्रीणि पल्योपमानि। सर्वेषां तेषां जघन्या स्थितिरंतर्मुहूर्ता। किमर्थो योगविभागः ?

**पृथग्योगकरणं यथासंख्यनिवृत्त्यर्थं ॥ ६ ॥** प्रत्येकमुभयथा स्यातामिति यथासंख्यनिवृत्त्यर्थो योगविभागः क्रियते। अथैषां भवस्थितिः कायस्थितिः का? कः पुनरनयोर्विशेषः ? एकभवविषया भवस्थितिः कायस्थितिरेककायापरित्यागेन नानाभवग्रहणविषया। यद्येवमुच्यतां कस्य का कायस्थितिः ? उच्यते-पृथिव्यप्तेजोवायुकायिकानां कायस्थितिरुत्कृष्टा असंख्येया लोकाः। वनस्पतिकायिकस्याऽनंतः कालः असंख्येयाः पुद्गलपरिवर्ताः आवलिकायाः असंख्येयभागमात्राः। विकलेंद्रियाणां असंख्येयानि वर्षसहस्राणि। पंचेंद्रियाणां तिर्यङ्मनुष्याणां तिस्रः पल्योपमाः पूर्वकोटीपृथक्त्वेनाऽभ्यधिकाः। तेषां सर्वेषां जघन्या कायस्थितिरंतर्मुहूर्ता। देवनारकाणां भवस्थितिरेव कायस्थितिरिति।

इति तत्त्वार्थराजवार्तिके व्याख्यानालंकारे तृतीयोऽध्यायः समाप्तः।

विभूता उत्सज्ञासज्ञैका । अष्टावुत्सज्ञासज्ञास्सहता सज्ञासज्ञैका । अष्टौ सज्ञासज्ञा एकस्त्रुटिरेणु । अष्टौ त्रुटिरेणत्र सहता एकस्त्रसरेणु । अष्टौ त्रसरेणव सहता ऐको रथरेणु । अष्टौ रथरेणव सहता एका देवकुरूत्तरकुरुमनुजकेशाग्रकोटी भवति । ता अष्टौ समुदिता एका रम्यकहरिवर्षमनुजकेशाग्रकोटी भवति । अष्टौ ता सहता. हैरण्यवतहैमवतमनुजकेशाग्रकोटी भवति । ता अष्टौ सपिंडिता भरतैरावतविदेहमनुजकेशाग्रकोटी भवति । ता अष्टौ सहता एका लिक्षा भवति । अष्टौ लिक्षा सहता एका यूका भवति । अष्टौ यूका एक यवमध्य । अष्टौ यवमध्यानि एकमगुलमुत्सेधाख्य । एतेन नारकतिर्यग्योनाना देवमनुष्याणामकृत्रिमजिनालयप्रतिमाना च देहोत्सेधो मातव्य । तदेव पचशतगणित प्रमाणागुल भवति । एतदेव चाऽवसर्पिण्या प्रथमचक्रधरस्याऽऽत्मागुल भवति । तदानीं तेन ग्रामनगरादिप्रमाणपरिच्छेदो ज्ञेय । इतरेषु योगेषु[1] मनुष्याणा यदाऽऽत्मागुल तेन तेन तदा ग्रामनगरादिप्रमाणपरिच्छेदो ज्ञेय. । यत्तत्प्रमाणागुल तेन द्वीपसमुद्रजगतीवेदिकापर्यंतविमाननरकप्रस्ताराद्यकृत्रिमद्रव्यायामविष्कभादिपरिच्छेदोवसेय । तत्र षडगुल पाद । द्वादशागुलो वितस्ति । द्विवितस्ति हस्त । द्विहस्त किष्कु । द्विकिष्कुर्दंड । द्वे दडसहस्रे गव्यूत । चतुर्गव्यूत योजन ।

**पल्यं त्रिविधं व्यवहारोद्धाराद्धाविकल्पादन्वर्थात् ॥८॥** व्यवहारपल्य उद्धारपल्य अद्धापल्यमिति त्रिधा पल्य विभज्यते । अन्वर्थश्चाय विकल्प , आद्य व्यवहारपल्यमुत्तरपल्यव्यवहारबीजत्वान्नानेन किंचित्परिच्छेद्यमस्ति । द्वितीयमुद्धारपल्य तत उद्धृतैर्लोमच्छेदैर्द्वीपसमुद्रसख्यानिर्णय इति । तृतीयमद्धापल्य अद्धाकाल इत्यर्थ , अतो हि स्थिते परिच्छेद इति । तद्यथा—प्रमाणागुलपरिमितयोजनायामविष्कभावगाहानि त्रीणि पल्यानि कुशूला इत्यर्थ । एकादिसप्ताहोरात्रिजाताविकलोमाग्राणि तावच्छिन्नानि यावद्द्वितीय कर्तरिच्छेद नावाप्नुवति । तादृशैर्लोमच्छेदै परिपूर्ण घनीकृत व्यवहारपल्यमित्युच्यते ततो वर्षशते वर्षशतेऽपनीते एकैकलोमापकर्षणविधिना यावता कालेन तद्रिक्त भवेत तावत्काल व्यवहारपल्योपमाख्य । तैरेव रोमच्छेदै प्रत्येकमसख्येयवर्षकोटिसमयमात्रच्छिन्नै पूर्णमुद्धारपल्य । तत समये समये एकैकस्मिन् रोमच्छेदे प्रकृष्यमाणे यावता कालेन तद्रिक्त भवेत् तावत्काल उद्धारपल्योपमाख्य । एषामुद्धारपल्याना दशकोटीकोट्य एकमुद्धारसागरोपम । अर्धतृतीयसागरोपमाणा यावतो रोमच्छेदास्तावतो द्वीपसमुद्रा । पुनरुद्धारपल्यरोमच्छेदैर्वर्षशतसमयमात्रच्छिन्नै पूर्णमुद्धारपल्य । तत समये समये एकैकस्मिन् रोमच्छेदे प्रकृष्यमाणे यावता कालेन तद्रिक्त भवति तावत्काल अद्धापल्योपमाख्य । एषामद्धापल्याना दशकोटीकोट्य एकमद्धासागरोपम । दशाद्धासागरोपमकोटीकोट्य एकावसर्पिणी, तावत्येवोत्सर्पिणी । अनेन अद्धापल्येन नारकतैर्यग्योनाना देवमनुष्याणा च कर्मस्थितिर्भवस्थितिरायु स्थिति कायस्थितिश्च परिच्छेत्तव्या । अद्धापल्यस्याऽर्धच्छेदेन शलाकाविरलीकृत्य प्रत्येकमद्धापल्यप्रदान कृत्वा अन्योन्यगुणिते कृते यावतश्छेदास्तावद्भिराकाशप्रदेशैर्मुक्तावली कृता सूच्यगुलमित्युच्यते । तदेवाऽपरेण सूच्यगुलेन गुणित प्रतरागुल । तत्प्रतरागुलमपरेण सूच्यगुलेनाऽभ्यस्त घनागुल । असंख्येयाना वर्षाणा यावत समयास्तावत्खडमद्धापल्य कृत ततोऽसख्येयान् खडानपनीयाऽसख्येयमेक भाग बुद्ध्या विरलीकृत्य एकैकस्मिन् घनागुल दत्वा परस्परेण गुणिता जगच्छ्रेणी, सा अपरया जगच्छ्रेण्याऽभ्यस्ता प्रतरलोक , स एवाऽपरया जगच्छ्रेण्या सवर्गितो घनलोक ।

**क्षेत्रप्रमाण द्विविध अवगाहक्षेत्र विभागनिष्पन्नक्षेत्रं चेति ॥ ८ ॥** तत्रावगाहक्षेत्रमनेकविध एकद्वित्रिचतु सख्येयाऽसख्येयाऽनतप्रदेशपुद्गलद्रव्यावगाह्येकाद्यसख्येयाऽऽकाशप्रदेशभेदात् । विभागनिष्पन्नक्षेत्र चाऽनेकविध असख्येयाकाशश्रेणय , क्षेत्रप्रमाणागुलस्यैकोऽसख्येयभाग , असख्येया क्षेत्रप्रमाणागुलाऽसख्येयभागा[4], क्षेत्रप्रमाणागुलमेकं भवति । पादवितस्त्यादि पूर्ववद्वेदितव्य । कालप्रमाणमुच्यते—सर्वज-

१ योगेषु । २ मेषलोमानीत्यर्थ । ३ अतीति इति पाठातर । ४ प्रमाणामिति ग पुस्तके पाठ ।

प्रोक्तत्वात् कल्पेषूपपन्ना कल्पोपपन्ना कल्पोपपन्ना पर्यंता येषां ते इमे कल्पोपपन्नपर्यंता । कल्पोपपन्ना इति कथं वृत्ते [1] साधन [1] कृतेति वा मयूरव्यंसकादित्वाद्वा या । पुनरपि तद्विशेषप्रतिपत्त्यर्थमिदमाह—

## इंद्रसामानिकत्रायस्त्रिंशपारिषदात्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्विषिकाश्चैकशः ॥ ४ ॥

**परमैश्वर्यादिंद्रव्यपदेशः ॥ १ ॥** अन्यदेवाऽसाधारणाणिमादिगुणयोगादिंद्राः ।

**तत्स्थानार्हत्वात्सामानिकाः ॥ २ ॥** तेषामिंद्राणामाज्ञैश्वर्यवर्जितं यत् स्थानं आयुर्वीर्यपरिवारभोगोपभोगादितत्तेषां समानं, समाने भवाः सामानिकाः "समानस्य तदादेश्च" इति ठञ् । महत्तरपितृगुरूपाध्यायतुल्याः ।

**मंत्रिपुरोहितस्थानीयास्त्रायस्त्रिंशाः ॥ ३ ॥** यथेह राज्ञां मंत्रिपुरोहिता हितानुशासिनस्तथा तत्रेंद्राणां त्रायस्त्रिंशा वेदितव्याः । कथं त्रायस्त्रिंशाः [1] त्रयस्त्रिंशति जाताः त्रायस्त्रिंशाः "दृष्टे नाम्नि च जाते च अण्डिद्वा विधीयते" इत्यभिधानमस्तीति अण्डिद्भवति । ननु च भेदाभावाद्वृत्तिर्न प्राप्नोति [1] तत्स्थानसत्येव भेदविवक्षायां आधाराधेयत्वोपपत्तेर्वृत्तिर्भवति । स्वार्थकेऽण्, त्रयस्त्रिंशदेव त्रायस्त्रिंशा इति [2] हृत इति बहुत्वनिर्देशादतसादिवत् ।

**वयस्यपीठमर्दसदृशाः पारिषदाः ॥ ४ ॥** परिषदि जाता भवा वा पारिषदाः ते वयस्यपीठमर्दसदृशा वेदितव्याः ।

**आत्मरक्षाः शिरोरक्षोपमाः ॥ ५ ॥** आत्मानं रक्षतीति आत्मरक्षास्ते शिरोरक्षोपमाः । आवृतावरणाः प्रहरणोद्यता रौद्राः पृष्ठतोऽवस्थायिनः । अपायाभावात्तत्कल्पनावैयर्थ्यमिति चेन्न ऋद्धिविशेषप्रस्थापनार्थत्वात् प्रीतिप्रकर्षहेतुत्वात् च ।

**आरक्षकार्थचर ( वर ) समा लोकपालाः ॥ ६ ॥** लोकं पालयंतीति लोकपालाः अर्थचरा ( वरा ) रक्षकसमाः ते वेदितव्याः ।

**दंडस्थानीयान्यनीकानि ॥ ७ ॥** पदात्यादीनि सप्तानीकानि दंडस्थानीयानि वेदितव्यानि ।

**प्रकीर्णकाः पौरजनपदकल्पाः ॥ ८ ॥** यथेह राज्ञां पौरा जानपदाश्च प्रीतिहेतवः तथा तत्रेंद्राणां प्रकीर्णकाः प्रत्येतव्याः ।

**आभियोग्याः दाससमानाः ॥ ९ ॥** यथेह दासा वाहनादिव्यापारं कुर्वंति तथा तत्राऽऽभियोग्या वाहनादिभावेनोपकुर्वंति । आभिमुख्येन योगोऽभियोगः अभियोगे भवा आभियोग्याः ततः स्वार्थे चातुर्वर्ण्यादिवत्ष्यञ् । अथवा अभियोगे साधनं आभियोग्याः अभियोगमर्हंतीति वा ।

**अंत्यवासिस्थानीयाः किल्विषिकाः ॥ १० ॥** किल्विषं पापं तदेषामस्तीति किल्विषिकाः तेऽत्यवासिस्थानीया मताः ।

**एकश इति वीप्सार्थे शस् ॥ ११ ॥** एकैकस्य निकायस्य एकश इति वीप्सार्थे चोत्ये शस् प्रयुज्यते । एत इंद्रादयो दश विकल्पाश्चतुर्षु निकायेषु, उत्सर्गेण प्रसक्तास्ततोऽपवादार्थमाह—

## त्रायस्त्रिंशलोकपालवर्ज्या व्यंतरज्योतिष्काः ॥ ५ ॥

व्यंतरेषु ज्योतिष्केषु त्रायस्त्रिंशान् लोकपालांश्च वर्जयित्वा इतरेऽष्टौ विकल्पाः द्रष्टव्याः । अथ तेषु निकायेषु किमेकैकस्येंद्र उताऽन्यः प्रतिनियमः कश्चिदस्तीत्याह—

---

१ जैनेंद्रीयसूत्रमिदं । २ हृत इति जैनेंद्रीयसूत्रं 'तद्धिता इति पाणिनीयसूत्रस्थाने ।

# ※ अथ चतुर्थोऽध्यायः प्रारभ्यते । ※

असकृद्देवशब्द उक्त भवप्रत्ययोऽवधिर्देवनारकाणामित्येवमादिषु तत्र न ज्ञायते के देवा ? कियतो वा ? इति तन्निश्चयार्थमित उत्तर प्रक्रम्यते । अथवा सम्यग्दर्शनविषयजीवभेदत्रसस्थावरनिर्णयाय तदधिकरणभूता-धस्तिर्यग्लोकविनिवेशक्रमो व्याख्यात इतस्तद्विशेषप्रतिपत्तये ऊर्ध्वलोकविभागो वक्तव्य तत्र बहुवक्तव्यसद्भा-वेप्यधिपतिप्रतिपादनपुरस्सरस्तदधिकरणविभागनिर्णय इतीदमुच्यते—

## देवाश्चतुर्णिकायाः ॥ १ ॥

**देवगतिनामकर्मोदये सति द्युत्याद्यर्थावरोधाद्देवाः ॥ १ ॥** अतरगहेतौ देवगतिनामकर्मो-दये सति बाह्यद्युत्यादिक्रियासबधमतर्नीय दीव्यतीति देवा इति व्यपदिश्यते । एकत्वेन निर्देश कर्तव्य देव-श्चतुर्णिकाय इति सजात्यभिधानाद्बहूनामर्थाना प्रतिपादको भवति ? इत्यत उत्तर पठति—

**बहुत्वनिर्देशोऽतर्गतभेदप्रतिपत्त्यर्थः ॥ २ ॥** इद्रादिकृता स्थित्यादिजनिताश्चाऽतर्गता बहवो देवभेदा सति तेषा तेषा प्रतिपत्त्यर्थं बहुत्वनिर्देश क्रियते ।

**स्वधर्मविशेषापादितसामर्थ्यात् निचीयंत इति निकायाः ॥ ३ ॥** तस्य देवगतिनामक-र्मोदयस्वधर्मविशेषापादितभेदस्य सामर्थ्यान्निचीयत इति निकाया सघाता इत्यर्थ । चत्वारो निकाया येषा ते चतुर्णिकाया । के पुनस्ते ? भवनवासिनो व्यतरा ज्योतिष्का वैमानिकाश्चेति । तेषा लेश्यावधारणार्थमुच्यते

## आदितस्त्रिषु पीतांतलेश्याः ॥ २ ॥

**आदित इति वचन विपर्यासनिवृत्त्यर्थं ॥ १ ॥** अते अन्यथा वा ग्रहण मा विज्ञायीति आदित इत्युच्यते । आदौ आदित

**द्व्येकनिवृत्त्यर्थं त्रिग्रहणं ॥ २ ॥** द्वयोरेकस्य च निवृत्त्यर्थं त्रिग्रहण क्रियते । अथ चतुर्णां निवृ-त्त्यर्थं कस्मान्न भवति ? आदित इति वचनात् ।

**लेश्यावधारणार्थं पीतांतवचनं ॥ ३ ॥** षट्लेश्या उक्ता तत्र चतसृणा लेश्यानामवधारणार्थं क्रियते पीतातग्रहण । पीत तेज इत्यर्थ । पीता अते यासा ता पीताता, पीताता लेश्या येषा ते पीतांतलेश्य । तेनैतदुक्त भवति-आदितस्त्रिषु निकायेषु भवनवासिव्यतरज्योतिष्कनामसु देवाना कृष्णा नीला कापोता पीतेति चतस्रो लेश्या भवतीति । तेषा निकायानामतर्विकल्पप्रतिपादनार्थमाह—

## दशाष्टपंचद्वादशविकल्पाः कल्पोपपन्नपर्यंताः ॥ ३ ॥

**चतुर्णां दशादिभिर्यथासंख्यमभिसंबंधः ॥ १ ॥** चतुर्णां देवनिकायाना दशादिभि सख्या-शब्दै यथासख्यमभिसबधो वेदितव्य । दशविकल्पा भवनवासिन, अष्टविकल्पा व्यतरा, पचविकल्पा-ज्योतिष्का, द्वादशविकल्पा वैमानिका इति । सर्वेषा वैमानिकाना द्वादशविकल्पात पातित्वे प्रसक्ते तदप-पोहार्थमाह—

**कल्पोपपन्नपर्यंतवचनं ग्रैवेयकादिष्वुदासार्थं ॥ २ ॥** ग्रैवेयकादयो वक्ष्यते तेषा द्वादशविक-ल्पेष्वतर्भावो मा विज्ञायीति विशेषणमुपादीयते । अथ कथ कल्पा ?

**इंद्रादिविकल्पाधीनकरणत्वात्कल्पा रूढिवशात् ॥ ३ ॥** इद्रादय प्रकारा वक्ष्यमाणा दश एषु कल्प्यते इति कल्पा । भवनवासिषु च दशविकल्पसद्भावात् कल्पप्रसग इति चेन्न रूढिवशादिति विशे-

प्रोक्तत्वात् कल्पेषूपपन्नाः कल्पोपपन्नाः कल्पोपपन्नाः पर्यंता येषां ते इमे कल्पोपपन्नपर्यंताः । कल्पोपपन्ना इति कथं वृत्तेः ? साधन[1] कृतेति वा मयूरव्यंसकादित्वाद्वा वा । पुनरपि तद्विशेषप्रतिपत्त्यर्थमिदमाह—

## इंद्रसामानिकत्रायस्त्रिंशपारिषदात्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्विषिकाश्चैकशः ॥ ४ ॥

**परमैश्वर्यादिंद्रव्यपदेशः ॥ १ ॥** अन्यदेवाऽसाधारणाणिम दिग्रहणयोगादिंद्राः ।

**तत्स्थानार्हत्वात्सामानिकाः ॥ २ ॥** तेषामिंद्राणामाज्ञैश्वर्यवर्जितं यत् स्थानं आयुर्वीर्यपरिवारभोगोपभोगादि तत्तेषां समानं, समाने भवाः सामानिकाः "समानस्य तदादेश्च" इति ठञ् । महत्तरपितृगुरूपाध्यायतुल्याः ।

**मंत्रिपुरोहितस्थानीयास्त्रायस्त्रिंशाः ॥ ३ ॥** यथेह राज्ञः मन्त्रिपुरोहिता हितानुशासिनस्तथा तत्रेंद्राणां त्रायस्त्रिंशा वेदितव्याः । कथं त्रायस्त्रिंशाः ? त्रयस्त्रिंशति जाताः त्रायस्त्रिंशाः "दृष्टे नाम्नि च जाते च अण्डिद्वा निधीयते" इत्यभिधानमस्तीति अण्डिद्भवति । ननु च भेदाभावाद्वृत्तिर्न प्राप्नोति ? सङ्ख्यानसङ्ख्येयभेदविवक्षायां आधाराधेयत्वोपपत्तेर्वृत्तिर्भवति । स्वार्थकेऽण्, त्रयस्त्रिंशदेव त्रायस्त्रिंशा इति [2]हृत इति बहुत्वनिर्देशादतसादिवत् ।

**वयस्यपीठमर्दसदृशाः पारिषदाः ॥ ४ ॥** परिषदि जाताः भवा वा पारिषदाः ते वयस्यपीठमर्दसदृशा वेदितव्याः ।

**आत्मरक्षाः शिरोरक्षोपमाः ॥ ५ ॥** आत्मानं रक्षतीति आत्मरक्षास्ते शिरोरक्षोपमाः । आवृतावरणा प्रहरणोद्यता रौद्रा पृष्ठतोऽवस्थायिनः । अपायाभावात्तत्कल्पनावैयर्थ्यमिति चेन्न ऋद्धिविशेषस्थापनार्थत्वात् प्रीतिप्रकर्षहेतुत्वात् च ।

**आरक्षकार्थचर ( वर ) समा लोकपालाः ॥ ६ ॥** लोकं पालयतीति लोकपालाः अर्थचरा ( वरा ) रक्षकसमा ते वेदितव्याः ।

**दंडस्थानीयान्यनीकानि ॥ ७ ॥** पदात्यादीनि सप्तानीकानि दंडस्थानीयानि वेदितव्यानि ।

**प्रकीर्णकाः पौरजनपदकल्पाः ॥ ८ ॥** यथेह राज्ञः पौरा जानपदाश्च प्रीतिहेतवः तथा तत्रेंद्राणां प्रकीर्णकाः प्रत्येतव्याः ।

**आभियोग्याः दाससमानाः ॥ ९ ॥** यथेह दासा वाहनादिव्यापारं कुर्वंति तथा तत्राऽऽभियोग्या वाहनादिभावेनोपकुर्वंति । आभिमुख्येन योगोऽभियोगः अभियोगे भवा आभियोग्याः ततः स्वार्थे चातुर्वर्ण्यादिवत्ष्यण् । अथवा अभियोगे साधवः आभियोग्याः अभियोगमर्हंतीति वा ।

**अन्त्यवासिस्थानीयाः किल्विषिकाः ॥ १० ॥** किल्विषं पापं तदेषामस्तीति किल्विषिकाः तेऽन्त्यवासिस्थानीया मताः ।

**एकश इति वीप्सार्थे शस् ॥ ११ ॥** एकैकस्य निकायस्य एकश इति वीप्सार्थे द्योत्ये शस् प्रयुज्यते । एत इंद्रादयो दश विकल्पाश्चतुर्षु निकायेषु, उत्सर्गेण प्रसक्तास्ततोऽपवादार्थमाह—

## त्रायस्त्रिंशलोकपालवर्ज्या व्यंतरज्योतिष्काः ॥ ५ ॥

व्यंतरेषु ज्योतिष्केषु त्रायस्त्रिंशान् लोकपालांश्च वर्जयित्वा इतरेऽष्टौ विकल्पाः द्रष्टव्याः । अथ तेषु निकायेषु किमेकैकस्येंद्रः उताऽन्यः प्रतिनियमः कश्चिदस्तीत्याह—

---

१ जैनेंद्रीयसूत्रमिदं । २ हृत इति जैनेंद्रीयसूत्रं 'तद्धिता इति पाणिनीयसूत्रस्थाने ।

# * अथ चतुर्थोऽध्यायः प्रारभ्यते । *

असकृद्देवशब्द उक्तः भवप्रत्ययोऽवधिर्देवनारकाणामित्येवमादिषु तत्र न ज्ञायते के देवाः ? कियतो वा ? इति तन्निश्चयार्थमित उत्तरं प्रक्रम्यते । अथवा सम्यग्दर्शनविषयजीवभेदत्रसस्थावरनिर्णयाय तदधिकरणभूताधस्तिर्यग्लोकनिवेशक्रमो व्याख्यात इतस्तद्विशेषप्रतिपत्तये ऊर्ध्वलोकविभागो वक्तव्य तत्र बहुवक्तव्यसद्भावेऽप्यधिपतिप्रतिपादनपुरस्सरस्तदाधिकरणविभागनिर्णय इतीदमुच्यते—

## देवाश्चतुर्णिकायाः ॥ १ ॥

**देवगतिनामकर्मोदये सति द्युत्याद्यर्थाविरोधाद्देवाः ॥ १ ॥** अंतरंगहेतौ देवगतिनामकर्मोदये सति बाह्यद्युत्यादिक्रियासंबंधमंतर्नीय दीव्यंतीति देवा इति व्यपदिश्यते । एकत्वेन निर्देशः कर्तव्यः देवश्चतुर्णिकाय इति सजात्यभिधानाद्बहूनामर्थाना प्रतिपादको भवति ? इत्यत उत्तरं पठति—

**बहुत्वनिर्देशोऽतर्गतभेदप्रतिपत्त्यर्थः ॥ २ ॥** इंद्रादिकृता स्थित्यादिजनिताश्चाऽतर्गता बहवो देवभेदाः संति तेषां तेषां प्रतिपत्त्यर्थं बहुत्वनिर्देशः क्रियते ।

**स्वधर्मविशेषापादितसामर्थ्यात् निचीयंत इति निकायाः ॥ ३ ॥** तस्य देवगतिनामकर्मोदयस्वधर्मविशेषापादितभेदस्य सामर्थ्यान्निचीयत इति निकायाः संघाता इत्यर्थः । चत्वारो निकाया येषां ते चतुर्णिकायाः । के पुनस्ते ? भवनवासिनो व्यंतरा ज्योतिष्का वैमानिकाश्चेति । तेषां लेश्यावधारणार्थमुच्यते

## आदितस्त्रिषु पीतांतलेश्याः ॥ २ ॥

**आदित इति वचनं विपर्यासनिवृत्त्यर्थं ॥ १ ॥** अंते अन्यथा वा ग्रहणं मा विज्ञायीति आदित इत्युच्यते । आदौ आदितः

**द्व्येकनिवृत्त्यर्थं त्रिग्रहणं ॥ २ ॥** द्वयोरेकस्य च निवृत्त्यर्थं त्रिग्रहणं क्रियते । अथ चतुर्णां निवृत्त्यर्थं कस्मान्न भवति ? आदित इति वचनात् ।

**लेश्यावधारणार्थं पीतांतवचनं ॥ ३ ॥** षट्लेश्या उक्ताः तत्र चतसृणां लेश्यानामवधारणार्थं क्रियते पीतांतग्रहणं । पीतं तेजः इत्यर्थः । पीता अंते यासां ताः पीतांताः, पीतांता लेश्या येषां ते पीतांतलेश्याः । तेनैतदुक्तं भवति-आदितस्त्रिषु निकायेषु भवनवासिव्यंतरज्योतिष्कनामसु देवानां कृष्णा नीला कापोता पीतेति चतस्रो लेश्या भवंतीति । तेषां निकायानामंतर्विकल्पप्रतिपादनार्थमाह—

## दशाष्टपंचद्वादशविकल्पाः कल्पोपपन्नपर्यंताः ॥ ३ ॥

**चतुर्णां दशादिभिर्यथासंख्यमभिसंबंधः ॥ १ ॥** चतुर्णां देवनिकायानां दशादिभिः संख्याशब्दैः यथासंख्यमभिसंबंधो वेदितव्यः । दशविकल्पा भवनवासिनः, अष्टविकल्पा व्यंतराः, पंचविकल्पा ज्योतिष्काः, द्वादशविकल्पा वैमानिका इति । सर्वेषां वैमानिकानां द्वादशविकल्पांतःपातित्वे प्रसक्ते तद्व्यपोहार्थमाह—

**कल्पोपपन्नपर्यंतवचनं ग्रैवेयकादिव्युदासार्थं ॥ २ ॥** ग्रैवेयकादयो वक्ष्यते तेषां द्वादशविकल्पेष्वंतर्भावो मा विज्ञायीति विशेषणमुपादीयते । अथ कथं कल्पाः ?

**इंद्रादिविकल्पाधीनकरणत्वात्कल्पा रूढिवशात् ॥ ३ ॥** इंद्रादयः प्रकारा वक्ष्यमाणा दश एषु कल्प्यंते इति कल्पाः । भवनवासिषु च दशविकल्पसद्भावात् कल्पप्रसंग इति चेन्न रूढिवशादिति विशे-

प्रोक्तत्वात् कल्पेषूपपन्नाः कल्पोपपन्नाः कल्पोपपन्नाः पर्यंता येषां ते इमे कल्पोपपन्नपर्यंताः। कल्पोपपन्ना इति कथं वृत्ते 'साधन' कृतेति वा मयूरव्यंसकादित्वाद्वा वा। पुनरपि तद्विशेषप्रतिपत्त्यर्थमिदमाह—

**इंद्रसामानिकत्रायस्त्रिंशपारिषदात्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्विषिकाश्चैकशः ॥ ४ ॥**

**परमैश्वर्यादिंद्रव्यपदेशः ॥ १ ॥** अन्यदेवाऽसाधारणाणिमादिगुणयोगादिंद्राः।

**तत्स्थानार्हत्वात्सामानिकाः ॥ २ ॥** तेषामिंद्राणामाज्ञैश्वर्यवर्जितं यत् स्थानं आयुर्वीर्यपरिवारभोगोपभोगादितत्तेषां समानं, समाने भवाः सामानिकाः "समानस्य तदादेश्च" इति ठञ्। महत्तरपितृगुरूपाध्यायतुल्याः।

**मंत्रिपुरोहितस्थानीयास्त्रायस्त्रिंशाः ॥ ३ ॥** यथेह राज्ञः मंत्रिपुरोहिताः हितानुशासिनस्तथा तत्रेंद्राणां त्रायस्त्रिंशा वेदितव्याः। कथं त्रायस्त्रिंशाः 'त्रयस्त्रिंशति जाताः त्रायस्त्रिंशाः "दृष्टे नाम्नि च जाते च अण्डिद्वा विधीयते" इत्यभिधानमस्तीति अण्डिद्भवति। ननु च भेदाभावादवृत्तिर्न प्राप्नोति' सत्यानसत्येव भेदविवक्षायां आधाराधेयत्वोपपत्तेर्वृत्तिर्भवति। स्वार्थकेऽण्, त्रयस्त्रिंशदेव त्रायस्त्रिंशा इति 'हृत इति बहुत्वनिर्देशादतसादिवत्।

**वयस्यपीठमर्दसदृशाः पारिषदाः ॥ ४ ॥** परिषदि जाताः भवा वाऽपारिषदाः ते वयस्यपीठमर्दसदृशा वेदितव्याः।

**आत्मरक्षाः शिरोरक्षोपमाः ॥ ५ ॥** आत्मानं रक्षतीति आत्मरक्षास्ते शिरोरक्षोपमाः। आवृत्तावरणाः प्रहरणोद्यताः रौद्राः पृष्ठतोवस्थायिनः। अपायाभावात्तत्कल्पनावैयर्थ्यमिति चेन्न ऋद्धिविशेषस्थापनार्थत्वात् प्रीतिप्रकर्षहेतुत्वात् च।

**आरक्षकार्थचर ( वर ) समा लोकपालाः ॥ ६ ॥** लोकं पालयतीति लोकपालाः अर्थचरा (वरा) रक्षकसमाः ते वेदितव्याः।

**दंडस्थानीयान्यनीकानि ॥ ७ ॥** पदात्यादीनि सप्तानीकानि दंडस्थानीयानि वेदितव्यानि।

**प्रकीर्णकाः पौरजनपदकल्पाः ॥ ८ ॥** यथेह राज्ञः पौराः जानपदाश्च प्रीतिहेतवः तथा तत्रेंद्राणां प्रकीर्णकाः प्रत्येतव्याः।

**आभियोग्याः दाससमानाः ॥ ९ ॥** यथेह दासाः वाहनादिव्यापारं कुर्वंति तथा तत्राऽऽभियोग्याः वाहनादिभावेनोपकुर्वंति। आभिमुख्येन योगोऽभियोगः अभियोगे भवा आभियोग्याः ततः स्वार्थे चातुर्वर्ण्यादिवत्ष्यण्। अथवा अभियोगे साधवः आभियोग्याः अभियोगमर्हंतीति वा।

**अंत्यवासिस्थानीयाः किल्विषिकाः ॥ १० ॥** किल्विषं पापं तदेषामस्तीति किल्विषिकाः तेंऽत्यवासिस्थानीया मताः।

**एकश इति वीप्सार्थे शस् ॥ ११ ॥** एकैकस्य निकायस्य एकश इति वीप्सार्थे द्योत्ये शस् प्रयुज्यते। एते इंद्रादयो दश विकल्पाश्चतुर्षु निकायेषु, उत्सर्गेण प्रसक्तास्ततोऽपवादार्थमाह—

**त्रायस्त्रिंशलोकपालवर्ज्या व्यंतरज्योतिष्काः ॥ ५ ॥**

व्यंतरेषु ज्योतिष्केषु त्रायस्त्रिंशान् लोकपालांश्च वर्जयित्वा इतरेऽष्टौ विकल्पाः द्रष्टव्याः। अथ तेषु निकायेषु किमेकैकस्येंद्र उतान्य प्रतिनियमः कश्चिदस्तीत्याह—

---

१ जैनेंद्रीयसूत्रमिदं। २ हृत इति जैनेंद्रीयसूत्रं 'तद्धिता इति पाणिनीयसूत्रस्थाने।

## पूर्वयोर्द्वींद्राः ॥ ६ ॥

**पूर्वयोरिति वचनं प्रथमद्वितीयनिकायप्रतिपत्त्यर्थं ॥ १ ॥** प्रथमस्य द्वितीयस्य च निकायस्य प्रतिपत्त्यर्थं पूर्वयोरिति द्विवचनं क्रियते। कथं पूर्वशब्दो द्वितीयं गमयति ? तृतीयापेक्षया पूर्वोपपत्तेः। चतुर्थापेक्षया तृतीयस्यापि पूर्वत्वप्रसंग इति चेन्न प्रत्यासत्तेर्द्वितीयस्यैवोपादानात्। अथ कथमत्र भेद ? ननु व्यतिरेकाभावादभेदेन निर्देशो न्याय्य, उच्यते—

**समूहसमूहिनोः कथंचिदर्थांतरत्वोपपत्तेर्भेदविवक्षा ॥ २ ॥** संज्ञालक्षणप्रयोजनादिभिः कथंचिदर्थांतरत्वं समूहसमूहिनोर्लोके दृष्टं। यथा व्रीहीणां राशिः, आम्राणां वनमिति। तथा देवानां निकायैश्च भेदविवक्षायां अधिकरणत्वेन सम्बंधित्वेन वा निर्देशः।

**द्वींद्रा इत्यंतर्नीतवीप्सार्थो निर्देशः ॥ ३ ॥** द्वौ द्वाविंद्रौ येषां ते द्वींद्रा इति वीप्सार्थमंतर्नीय निर्देशः क्रियते यथा द्विपदिका त्रिपदिका इति युज्यते। तत्र वीप्सागतिर्वीप्सायां वुनो विधानात्, इह तु न विधानमस्ति यथा तर्हि सप्तपर्णोऽष्टापदमिति चोच्यते वीप्सायामिति गम्यते, तथेहापि वीप्सार्थसंप्रत्ययः। के पुनस्तद्द्वित्ववीप्साविषयत्वेन विवक्षिताः ? इत्यत्रोच्यते— भवनवासिषु तावत् द्वावसुरकुमाराणामिंद्रौ चमरो वैरोचनश्च। नागकुमाराणां धरणो भूतानंदश्च। विद्युत्कुमाराणां हरिसिंहो हरिकांतश्च। सुपर्णकुमाराणां वेणुदेवो वेणुधारी च। अग्निकुमाराणां अग्निशिखोऽग्निमाणवश्च। वातकुमाराणां वैलंबः प्रभंजनश्च। स्तनितकुमाराणां सुघोषो महाघोषश्च। उदधिकुमाराणां जलकांतो जलप्रभश्च। द्वीपकुमाराणां पूर्णो वशिष्ठश्च। दिक्कुमाराणां अमितगतिरमितवाहनश्चेति। व्यंतरेष्वपि द्वौ किन्नराणामिंद्रौ किंनरः किंपुरुषश्च। किंपुरुषाणां सत्पुरुषो महापुरुषश्च। महोरगाणां अतिकायो महाकायश्च। गंधर्वाणां गीतरतिर्गीतयशाश्च। यक्षाणां पूर्णभद्रो माणिभद्रश्च। राक्षसानां भीमो महाभीमश्च। पिशाचानां कालो महाकालश्च। भूतानां प्रतिरूपोऽप्रतिरूपश्च। अथ एषां देवानां सुखं कीदृशमित्युक्ते सुखावबोधार्थमुच्यते—

## कायप्रवीचारा आ ऐशानात् ॥ ७ ॥

प्रवीचार इति कोयं शब्द ?

**मैथुनोपसेवनं प्रवीचारः ॥ १ ॥** प्रविपूर्वाच्चरेः संज्ञायां घञ्। प्रविचरणं प्रवीचारः मैथुनव्यवहार इत्यर्थः। काये प्रवीचारो येषां ते इमे कायप्रवीचाराः।

**आङ्ग्रहणमभिविध्यर्थं ॥ २ ॥** आङयमभिविध्यर्थो वेदितव्य ईशानोऽभिपतिः "[1]तस्येदम्" इत्यणि, ऐशानः कल्पः। आ एतस्मादधो ये देवास्ते कायप्रवीचाराः संक्लिष्टकर्मत्वान्मनुष्यवत्स्त्रीविषयसुखमनुभवंतीत्यर्थः। प्राग्ग्रहणे हि क्रियमाणे ऐशाने कल्पे देवान्वर्जयित्वेत्ययमर्थः संप्रतीयेत।

**असंहितानिर्देशोऽसंदेहार्थः ॥ ३ ॥** आ ऐशानादित्यसंहितया निर्देशः क्रियतेऽसंदेहार्थं। ऐशानादित्युच्यमाने संदेहः स्यात् किमाङंतर्भूत दिवशब्दोऽध्याहार्य इति, अथवा विमुच्य ? संशयमनिष्टं कल्प्यते पूर्वयोरित्यधिकारात् ऐशानात्पूर्वयोरित्यवधिग्रहणात्। इतरेषां सुखविभागेऽनिर्ज्ञाते तत्प्रतिपादनार्थमाह—

## शेषाः स्पर्शरूपशब्दमनःप्रवीचाराः ॥ ८ ॥

शेषग्रहणं किमर्थं ?

**उक्तावशिष्टसंग्रहार्थं शेषग्रहणं ॥ १ ॥** उक्तानामवशिष्टानां संग्रहार्थं शेषग्रहणं क्रियते। के पुनस्ते ? सनत्कुमारादिकल्पनिवासिनः, इतरथा हि ग्रैवेयकादिष्वपि संप्रत्ययः स्यात् परेऽप्रवीचारा इति वक्ष्यमाणमनवधारितविषयं स्यात्। स्पर्शश्च रूपं च शब्दश्च मनश्च स्पर्शरूपशब्दमनांसि स्पर्शरूपशब्दमनःसु प्रवीचारो येषां त इमे स्पर्शरूपशब्दमनःप्रवीचाराः। अत्र चोद्यते—

---

१ जैनेंद्रीय सूत्र।

**विषयविवेकापरिज्ञानादनिर्देशः ॥ २ ॥** इमे स्पर्शप्रवीचारा इत्यादिविषयविवेकापरिज्ञानादयमनिर्देश , अगमको निर्देश ।

**द्वयोर्द्वयोरिति वचनात्सिद्धिरिति चेन्नाऽऽर्षविरोधात् ॥ ३ ॥** स्यान्मत द्वयोर्द्वयोरिति वक्तव्य तेन विषयविवेकसिद्धिर्भवति इति ? तन्न। किं कारण ? आर्षविरोधात्। आर्षे ह्युक्त सानत्कुमारमाहेंद्रयोर्देवा स्पर्शप्रवीचारा । ब्रह्मब्रह्मोत्तरलांतवकापिष्ठेषु रूपप्रवीचारा । शुक्रमहाशुक्रसतारसहस्रारेषु शब्दप्रवीचारा । आनतप्राणताऽऽरणाऽच्युतेषु मन प्रवीचारा ।

**इंद्रापेक्षयेति चेन्नाऽऽनतादिषु दोषात् ॥ ४ ॥** स्यादेतदिंद्रापेक्षया द्वयोरिति वचन नार्षविरोधि ? तद्यथा- सानत्कुमारमाहेंद्रयोर्द्वाविंद्रौ तयोर्देवा स्पर्शप्रवीचारा । ब्रह्मब्रह्मोत्तरयोरेक इंद्र , लांतवकापिष्ठयोरप्येक , तयोर्देवा रूपप्रवीचारा । शुक्रमहाशुक्रयोरेक इंद्र , सतारसहस्रारयोरप्येकस्तयोर्देवा शब्दप्रवीचारा इति ? तन्न। किं कारण ? आनतादिषु दोषात्। आनतादिषु चत्वार इंद्रा । कथ तर्हि निर्देश कर्तव्य ? यथागममिति स तर्हि तथा निर्देश कर्तव्य ?

**न वा पुनःप्रवीचारग्रहणादिष्टार्थगतेः ॥ ५॥** कथ प्रवीचारग्रहणमनुवर्तते। क्व प्रकृत ? "कायप्रवीचार इति" । ननु च तद्वृत्तावुपसर्जनीभूतमशक्यमनुवर्तयितु ? अर्थवशात् अनुवर्तत इति व्याख्यायते। एव वक्तव्य शेषा स्पर्शरूपशब्दमन स्विति। एवमप्यनुवर्तमान प्रवीचारशब्द भावसाधनो वृत्तिमतरेण शेषा इत्यनेन सामानाधिकरण्य न प्रतिपद्यते ?, शेषाणामिति तर्हि निर्देश कर्तव्य , एव सिद्धे यत्पुन प्रवीचारग्रहण तस्यैतत्प्रयोजन, इष्टप्रवीचारसिद्धि कथ स्यात् इति। क्व पुनरिष्ट ? आर्षाविरोधी सानत्कुमारमाहेंद्रयोर्हि देवान् मैथुनसुखप्रेप्सयोत्पन्नेच्छान् विदित्वा देव्य उपतिष्ठते, तदगस्पर्शनमात्रादेव प्रीतिमुपलभते विनिवृत्तेच्छाश्च भवति तथा देव्योपि । ब्रह्मब्रह्मोत्तरलांतवकापिष्ठेषु देवा दिव्यागनास्वभावमुभगशृंगाराकारविलासचतुरमनोज्ञवेषरूपालोकनमात्रादेव पर सुखमवाप्नुवति । शुक्रमहाशुक्रसतारसहस्रारेषु देवा सुरवनिताना मधुरसगीतमृदुहसितकथनभूषणरवोपदर्शनश्रवणरसायन पीत्वेव परा प्रीतिमास्कदति । आनतप्राणताऽऽरणाऽच्युतकल्पेषु देवा स्वागनामन सकल्पमात्रादेव पर सुखमनुभवति । अथोत्तरेषा किं प्रकार सुख ? इत्युक्ते तन्निश्चयार्थमाह—

## परेऽप्रवीचाराः ॥ ९ ॥

पर इति किमर्थमप्रवीचारा इत्येव सिद्ध उत्तरेषा ग्रहण ?—

**परवचन कल्पातीतसर्वदेवसंग्रहार्थ ॥१ ॥** कल्पातीताना सर्वेषा देवाना सग्रहार्थं परवचन क्रियते इतरथाऽनिष्टमपि कल्पयितु शक्येत ।

**अप्रवीचारग्रहण प्रकृष्टसुखप्रतिपत्त्यर्थ ॥ २ ॥** प्रवीचारो हि वेदनाप्रतीकारस्तदभावे तेषा परमसुखमनवरतमित्येतस्य प्रतिपत्त्यर्थमप्रवीचारा इत्युच्यते । उक्तमादिनिकायदेवा दश विकल्पा इति तेषा सामान्यविशेषसज्ञानिर्ज्ञानार्थमाह—

## भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराः ॥ १० ॥

**भवनेषु वसनशीला भवनवासिनः ॥ १ ॥** भवनेषु वसत्येवशीला भवनवासिन इति प्रथमनिकायस्येय सामान्यसज्ञा ।

**असुरादयस्तद्विकल्पा ॥ २ ॥** भवनवासिनामसुरादयो दश विकल्पा द्रष्टव्या ।

**सर्वे नामकर्महेतुकाः ॥ ३ ॥** सर्वे ते नामकर्मोदयापादिता वेदितव्या ।

**अस्यति देवैः सहासुरा इति चेन्नाऽवर्णवादात् ॥ ४ ॥** स्यान्मत युद्धे देवे सहास्यति प्रह-

रणादीनित्यसुरा इति ? तन्न, किं कारण? अवर्णवादात्। अवर्णवाद एप देवानामुपरि मिथ्याज्ञाननिमित्त। कुत

**महाप्रभावत्वात् ॥ ५ ॥** ते हि सौधर्मादयो देवा महाप्रभावा, न तेपामुपरि इतरेषा निकृष्ट लाना मनसापि प्रातिलोम्येन वृत्तिरस्ति। अपि च–

**वैरकारणाभावात् ॥ ६ ॥** तेपा प्रतिविशिष्टशुभकर्मोदयापादितविभावानामर्हत्पूजाभोगानुभ वनमात्रतन्त्राणा परदारहरणादिनिमित्त न वैरमस्ति ततो नासुरा सुरैर्युध्यते। अथ ते कथ कुमारा ?

**कौमारवयोविशेषविक्रियादियोगात्कुमाराः ॥ ७ ॥** सर्वेषा देवानामवस्थितवय स्वभावत्वे कौमारवयोविशेषस्वभावस्वरूप विक्रियावत्कुमारवदुद्धतवेषभाषाऽऽभरणप्रहरणावरणयानवाहनत्व च उत्पन्न रागक्रीडने प्रियत्व चेत्येतैर्योगात् कुमारा इति व्यपदिश्यते।

**प्रत्येकमभिसम्बंधः ॥ ८ ॥** तस्य कुमारशब्दस्य प्रत्येकमभिसम्बध क्रियते–असुरकुमारा नाग कुमारा इति एवमादि। अत्राह क्व तेषा भवनानि ? इत्यत्रोच्यते—

**अस्या रत्नप्रभायाः पंकवहुलभागेऽसुरकुमाराणां भवनानि चतुःषष्ठिशतसहस्राणि ॥९॥** अस्माज्जम्बूद्वीपात् तिर्यगपागसख्येयान् द्वीपसमुद्रान् अतीत्य पकवहुलभागे चमरस्याऽसुरेंद्रस्य चतु स्त्रिंशद्भवनशतसहस्राणि,चतु षष्ठि सामानिकसहस्राणि, त्रयस्त्रिंशत्त्रायस्त्रिंशा, तिस्र परिषद, सप्तानीकानि, चत्वारो लोकपाला, पचाग्रमहिष्य, चत्वारि चतु षष्ठ्युत्तराणि आत्मरक्षसहस्राणि, एव विभवपरिवार दक्षिणाधिपति दिव्यान् भोगान् अनुभवति। तयोत्तरस्या दिशि वैरोचनस्य त्रिंशद्भवनशतसहस्राणि, चतु षष्ठि सामानिकसहस्राणि, त्रयस्त्रिंशत्त्रायस्त्रिंशा, तिस्र परिषद, सप्तानीकानि, चत्वारो लोकपाला, पचाग्रमहिष्य, चत्वारि चतु षष्ठ्युत्तराणि आत्मरक्षसहस्राणि, एव विभवपरिवार उत्तराधिपति दिव्यान् भोगान् अनुभुक्ते।

**खरपृथ्वीभागे उपर्यधश्चैकैकयोजनसहस्रं वर्जयित्वा शेषे नवानां कुमाराणां भवनानि भवंति ॥ १० ॥** तद्यथा— अस्माज्जम्बूद्वीपात्तिर्यगपागसख्येयान् द्वीपसमुद्रानतीत्य धरणस्य नागराजस्य चतुश्चत्वारिंशत् भवनशतसहस्राणि,षष्ठि सामानिकसहस्राणि, त्रयस्त्रिंशत्त्रायस्त्रिंशा, तिस्र परिषद,सप्तानीकानि,चत्वारो लोकपाला,षडग्रमहिष्य, षडात्मरक्षसहस्राण्याख्यायते। तथाऽस्माज्जम्बूद्वीपात्तिर्यगुदगसख्येयान् द्वीपसमुद्रान् अतीत्य भूतानदस्य नागेंद्रस्य चत्वारिंशद्भवनशतसहस्राणि, अवशिष्ट धरणेंद्रवज्ज्ञेय। तान्येतानि नागकुमाराणा चतुरशीति भवनशतसहस्राणि। तथा सुपर्णकुमाराणा द्विसप्तति भवनशतसहस्राणि। तत्र वेणुदेवस्य दक्षिणाधिपते अष्टत्रिंशद्भवनशतसहस्राणि। इतरद्धरणेंद्रवज्ज्ञेय। उत्तराधिपतेर्वेणुधारिण चतुस्त्रिंशद्भवनशतसहस्राणि। अवशिष्ट धरणेंद्रवज्ज्ञेय। विद्युदग्निस्तनितोदधिद्वीपदिक्कुमाराणा षण्णामपि प्रत्येक षट्सप्ततिर्भवनशतसहस्राणि। तत्र दक्षिणेंद्राणा हरिसिंहाग्निशिखसुघोषजलकात पूर्णामितगतीना प्रत्येक चत्वारिंशद्भवनशतसहस्राणि हरिकालाग्निमाणवमहाघोषजलप्रभवशिष्टामितवाहनाना उत्तराधिपतीना प्रत्येक षट्त्रिंशद्भवनशतसहस्राणि। वातकुमाराणा षण्णवतिर्भवनशतसहस्राणि। तत्र वेलवस्य दक्षिणेंद्रस्य पचाशद्भवनशतसहस्राणि। उत्तराधिपते प्रभजनस्य षट्चत्वारिंशद्भवनशतसहस्राणि। सर्वेषा एषा धरणेंद्रवज्ज्ञेय। तान्येतानि भवनानि समुदितानि सप्तकोट्यो द्विसप्ततिश्च शतसहस्राणि। द्वितीयनिकायसामान्यविशेषसज्ञावधारणार्थमाह—

**व्यंतराः किन्नरकिंपुरुषमहोरगगंधर्वयक्षराक्षसभूतपिशाचाः ॥ ११ ॥**

**विविधदेशांतरनिवासित्वाद् व्यंतराः ॥ १ ॥** विविधदेशातराणि येषा निवासास्ते व्यतरा इत्यन्वर्था। सामान्यसज्ञेयमष्टानामपि विकल्पाना।

---

१ कुमार इति पाठातर।

**किंनरादयस्तद्विकल्पाः ॥ २ ॥** तेषां व्यंतराणामष्टौ विकल्पा किंनरादयो दृष्टव्या ।

**नामकर्मोदयविशेषतस्तद्विशेषसंज्ञाः ॥ ३ ॥** देवगतिनाम्नो मूलस्य उत्तरोत्तरप्रकृतिभेदस्योदयाद्विशेषसंज्ञा भवति । किंनरनामकर्मोदयात् किंनरा , किंपुरुषनामकर्मोदयात् किंपुरुषा इत्यादि ।

**क्रियानिमित्ता एवेति चेन्नोक्तत्वात् ॥ ४ ॥** स्यादेतत् क्रियानिमित्ता एवैता संज्ञा , किंनरान् कामयत इति किंनरा । किंपुरुषान् कामयत इति किंपुरुषा । पिशिताशनात् पिशाचा इत्यादि ? तन्न, किं कारण ? उक्तत्वात् । उक्तमेतत् अवर्णवाद एष देवानामुपरीति । कथ ? न हि ते शुचिवैक्रियिकदेहा अशुच्यौदारिकशरीरान् नरान् कामयाति नापि पिशितमश्नति । मांसमदिरादिषु दृष्टा लोके प्रवृत्तिरिति चेन्न क्रीडासुखनिमित्तत्वात, मानसाहाराणि च । क्व पुनस्तेषामावासा ? इत्यत्रोच्यते— अस्माज्जम्बूद्वीपात्तिर्यगपागसंख्येयान् द्वीपसमुद्रान् अतीत्य उपरिष्टखरपृथिवीभागे किंनरस्य किंनरेंद्रस्य असंख्येयानि नगरशतसहस्राणि वर्ण्यंते, तस्य चत्वारि सामानिकसहस्राणि, तिस्र. परिषद , सप्तानीकानि, चतस्रोग्रमहिष्य षोडशात्मरक्षसहस्राणि । उदीच्या दिशि पूर्ववदेव किंनरेंद्र. । किंपुरुषस्तादृग्विभवपरिवार । एव शेषाणा षण्णा दक्षिणेंद्राणा सत्पुरुषातिशयगीतिरतिपूर्णभद्रस्वरूपकालाख्याना दक्षिणे भागे आवासा । तथा महापुरुषमहाकायगीतयशोमाणिभद्राऽप्रतिरूपमहाकालानां तु उत्तराधिपतीना तु उत्तरभागे आवासास्तावत एव वेदितव्या । राक्षसेंद्रस्य भीमस्य दक्षिणस्या दिशि पंकबहुलभागेऽसंख्येयानि नगरशतसहस्राणि, आख्यायते। उत्तरस्या दिशि महाभीमस्य राक्षसेंद्रस्य पंकबहुलभागेऽसंख्येयानि नगरशतसहस्राणि वर्ण्यंते । षोडशानामपि एषा व्यंतराणा सामानिकादिपरिवारास्तुल्या । भूमितलेपि द्वीपादिसमुद्रदेशग्रामनगरत्रिकचतुष्कचत्वरगृहांगणरथ्याजलाशयोद्यानदेवकुलादीनि असंख्येयानि, आवासशतसहस्राणि तेषामाख्यायते । तृतीयनिकायस्य सामान्यविशेषसंज्ञासंकीर्तनार्थमाह—

## ज्योतिष्काः सूर्याचंद्रमसौ ग्रहनक्षत्रप्रकीर्णकतारकाश्च ॥ १२ ॥

**द्योतनस्वभावत्वाज्ज्योतिष्काः ॥ १ ॥** द्योतन प्रकाशन तत्स्वभावत्वादेषा पचानामपि विकल्पाना ज्योतिष्का इतीयमन्वर्था सामान्यसंज्ञा । तस्या सिद्धि —

**ज्योतिःशब्दात्स्वार्थे के[1] निष्पत्तिः ॥ २ ॥** ज्योति शब्दात्स्वार्थे के सति ज्योतिष्का इति निष्पद्यते । कथ स्वार्थे क ? यवादिषु पाठात् ।

**प्रकृतिलिंगानुवृत्तिप्रसंग इति चेन्नातिवृत्तिदर्शनात् ॥ ३ ॥** स्यान्मत यदि स्वार्थिकोय क ज्योति शब्दस्य नपुसकलिंगत्वात् कातस्यापि नपुसकलिंगता प्राप्नातीति ? तन्न। किं कारण, अतिवृत्तिदर्शनात् । प्रकृतिलिंगातिवृत्तिरपि दृश्यते यथा कुटीर समीरशुडार इति ।

**तद्विशेषा' सूर्यादयः ॥ ४ ॥** तेषा ज्योतिष्काणा सूर्यादय पच विकल्पा दृष्टव्या ।

**पूर्ववत्तन्निर्वृत्तिः॥५॥** तेषा संज्ञाविशेषाणा पूर्ववन्निर्वृत्तिर्वेदितव्या देवगतिनामकर्मविशेषोदयादिति ।

**सूर्याचंद्रमसावित्यानङ् देवताद्वंद्वे ॥ ६ ॥** सूर्यश्च चंद्रमाश्च द्वंद्वे कृते पूर्वपदस्य [2]देवताद्वंद्वे इत्यानङ् भवति ।

**सर्वत्र प्रसंग इति चेन्न पुनर्द्वंद्वग्रहणादिष्टे वृत्तिः ॥ ७ ॥** स्यादेतत् यदि "देवताद्वंद्वे" इत्यानङ् भवति इहापि प्राप्नोति ग्रहनक्षत्रप्रकीर्णकतारा किंनरकिंपुरुषादय असुरनागादय इति तन्न किं कारण ? आनङ् द्वंद्व इत्यत द्वंद्व इति वर्तमाने पुनर्द्वंद्वग्रहणात्[3] जायते इति ।

**पृथग्ग्रहण प्राधान्यख्यापनार्थं ॥ ८ ॥** सूर्याचंद्रमसोर्ग्रहादिभ्य पृथक् ग्रहण क्रियते प्राधान्यख्यापनार्थं । ज्योतिष्केषु हि सर्वेषु सूर्याणा चंद्रमसा च प्राधान्य । किं कृत पुनस्तत् ? प्रभावादिकृत ।

---

१ के प्रत्यये इत्यर्थ । २ जैनेंद्राय सूत्र । ३ पुनर्द्वंद्वग्रहणे इष्टे वृत्तिर्जायते पाठोऽय ख- पुस्तके ।

**सूर्यस्यादौ ग्रहणं अल्पाच्तरत्वात् अभ्यर्हितत्वाच्च ॥ ९ ॥** सूर्यशब्द आदौ प्रयुज्यते कुत अल्पाच्तरत्वात् अभ्यर्हितत्वाच्च सर्वाभिभवसमर्थाद्धि अभ्यर्हित सूर्य ।

**ग्रहादिषु च ॥ १० ॥** किमल्पाच्तरत्वात् अभ्यर्हितत्वाच्च पूर्वनिपात ? इति वाक्यविशेष । ग्रहशब्दस्तावत् अल्पाच्तरोऽभ्यर्हितश्च तारकाशब्दान्नक्षत्रशब्दोऽभ्यर्हित । क्व पुनस्तेषा निवास ? इत्यत्रोच्यते—अस्मात् समात् भूमिभागादूर्ध्वं सप्तयोजनशतानि नवत्युत्तराणि उत्प्लुत्य सर्वज्योतिषा अधोभाविन्यस्तारकाश्चरति । ततो दशयोजनान्युत्प्लुत्य सूर्याश्चरति । ततोऽशीतिर्योजनान्युत्प्लुत्य चद्रमसो भ्रमति । ततस्त्रीणि योजनान्युत्प्लुत्य नक्षत्राणि । ततस्त्रीणि योजनानि उत्प्लुत्य बुधा । ततस्त्रीणि योजनानि उत्प्लुत्य शुक्रा । तत त्रीणि योजनान्युत्प्लुत्य बृहस्पतय । तत चत्वारि योजनान्युत्प्लुत्य अगारका । तत चत्वारि योजनान्युत्क्रम्य शनैश्चराश्चरति । स एष ज्योतिर्गणगोचर नभोऽवकाश दशाधिकयोजनशतबहुल तिर्यगसख्यातद्वीपसमुद्रप्रमाणो घनोदधिपर्यत । उक्त च—

**णवदुत्तरसत्तसया दससीदिच्चदुतिगं च दुगचदुक्कं ।**
**तारारविससिरिक्खा बुहभग्गवगुरुअंगिरारसणी ॥ १ ॥**

तत्राभिजित् सर्वाभ्यतरचारी, मूल सर्वबहिश्चारी, भरण्य सर्वाधश्चारिण्य , स्वाति सर्वोपरिचारी। तप्ततपनीयसमप्रभाणि लोहिताक्षमणिमयानि अष्टचत्वारिंशद्योजनैकपष्टिभागविष्कभायामानि तत्त्रिगुणाधिकपरिधीनि चतुर्विंशतियोजनैकपष्टिभागबाहुल्यानि अर्धगोलकाकृतीनि षोडशभिर्देवसहस्रैरूढानि सूर्यविमानानि, प्रत्येक पूर्वदक्षिणोत्तरान् भागान् क्रमेण सिंहकुजरवृषभतुरगरूपाणि विकृत्य चत्वारि चत्वारि देवसहस्राणि वहति । एषामुपरि सूर्याख्या देवास्तेषा प्रत्येक चतस्रोऽग्रमहिष्य । सूर्यप्रभा सुसीमा अर्चिमालिनी प्रभकरा चेति । प्रत्येक देवीचतु सहस्रविकरणसमर्था । ताभि सह दिव्यसुखमनुभवतोऽसख्येयशतसहस्राधिपतय सूर्या परिभ्रमति । विमलमृणालवर्णान्यकमयानि चद्रविमानानि षट्पचाशद्योजनैकपष्टिभागविष्कभायामानि अष्टाविंशतियोजनैकपष्ठिभागबाहुल्यानि, प्रत्येक षोडशभि देवसहस्रै पूर्वादिषु दिक्षु क्रमेण सिंहकुजराश्ववृषभरूपविकारिभिरूढानि । तेषामुपरि चद्राख्या देवा । तेषा प्रत्येक चतस्रोऽग्रमहिष्य चद्रप्रभा सुसीमा अर्चिमालिनी प्रभकरा चेति, प्रत्येक चतुर्देवीरूपविकरणपटवस्ताभि सह सुखमुपभुजतश्चद्रमसोऽसख्येयविमानशतसहस्राधिपतयो विहरति । अजनसमप्रभाणि अरिष्टमणिमयानि राहुविमानान्येकयोजनायामविष्कभाण्यर्धतृतीयधनु शतबाहुल्यानि । नवमल्लिकाप्रभाणि रजतपरिणामानि शुक्रविमानानि गव्यूतायामविष्कभाणि, जात्यमुक्ताद्युतीनि अकमणिमयानि बृहस्पतिविमानानि देशोनगव्यूतायामविष्कभाणि, कनकमयान्यर्जुनवर्णानि बुधविमानानि, तपनीयमयानि तप्ततपनीयाभानि शनैश्चरविमानानि, लोहिताक्षमयानि तप्तकनकप्रभाण्यगारकविमानानि, बुधादिविमानान्यर्धगव्यूतायामविष्कभाणि । शुक्रादिविमानानि राहुविमानतुल्यबाहुल्यानि । राह्वादिविमानानि प्रत्येक चतुर्भि देवसहस्रैरूह्यते । नक्षत्रविमानाना प्रत्येक चत्वारि देवसहस्राणि वाहकानि । तारकाविमानाना प्रत्येक द्वे देवसहस्रे वाहके । राह्वाद्याभियोग्याना रूपविकाराश्चद्रवन्नेया । नक्षत्रविमानाना उत्कृष्टो विष्कभ क्रोश । तारकाविमानाना वैपुल्य जघन्य क्रोशचतुर्भाग । मध्यम साधिक क्रोशचतुर्भाग । उत्कृष्ट अर्धगव्यूत । ज्योतिष्कविमानाना सर्वजघन्यवैपुल्य पचधनु शतानि । ज्योतिषामिंद्रा सूर्या चद्रमसस्ते चाऽसख्याता । ज्योतिष्काणा गतिविशेषप्रतिपत्त्यर्थमाह—

## मेरुप्रदक्षिणा नित्यगतयो नृलोके ॥ १३ ॥

**मेरुप्रदक्षिणवचन गत्यंतरनिवृत्त्यर्थं ॥ १ ॥** मेरो प्रदक्षिणा मेरुप्रदक्षिणा इत्युच्यते । किमर्थ ? गत्यतरनिवृत्त्यर्थं विपरीता गतिर्माभूत् ॥

**गतेः क्षणे क्षणेऽन्यत्वात् नित्यत्वाभाव इतिचेन्नाऽऽभीक्ष्ण्यस्य विवक्षितत्वात् ॥ २ ॥** अथ नित्यशब्दः कूटस्थेष्वविचलेषु भावेषु वर्तते, गतिश्च क्षणे क्षणेऽन्या, ततोऽस्या नित्येति विशेषेण नोपपद्यत इति चेन्न। किं कारणं? आभीक्ष्ण्यस्य विवक्षितत्वात्। यथा नित्यप्रहसितो नित्यप्रजल्पित इति आभीक्ष्ण्यं गम्यत इति। एवमिहापि नित्यगतय अनुपरतगतय, इत्यर्थः।

**अनेकान्ताच्च ॥ ३ ॥** यथा सर्वभावेषु द्रव्यार्थादेशात् स्यान्नित्यत्वं, पर्यायादेशात् स्यादनित्यत्वं तथा गतावपीति नित्यत्वमविरुद्धमविच्छेदात्।

**नृलोकग्रहणं विषयार्थं ॥ ४ ॥** ये अर्धतृतीयेषु द्वीपेषु द्वयोश्च समुद्रयोर्ज्योतिष्कास्ते मेरुप्रदक्षिणा नित्यगतयः नान्ये इति विषयावधारणार्थं नृलोकग्रहणं क्रियते।

**गतिकारणाभावादयुक्तिरिति चेन्न गतिरताभियोग्यदेववहनात् ॥ ५ ॥** स्यान्मतं इहलोके यानानां गतिः कारणवती दृष्टा न च ज्योतिष्कविमानानां गतेः कारणमस्ति ततस्तदयुक्तिरिति तन्न। किं कारणं? [1]गतिरताभियोग्यदेववहनात्। गतिरता हि अभियोग्यदेवा वहन्तीत्युक्तं पुरस्तात्।

**कर्मफलवैचित्र्यभावाच्च ॥ ६ ॥** कर्मणा हि फलं वैचित्र्येण पच्यते ततस्तेषां गतिपरिणतिमुखेनैव कर्मफलमवबोद्धव्यं। एकादशभिः योजनशतैरेकविंशैर्मेरुमप्राप्य ज्योतिष्काः प्रदक्षिणाश्चरन्ति। तत्र जंबूद्वीपे द्वौ सूर्यौ, द्वौ चन्द्रमसौ, षट्पंचाशन्नक्षत्राणि, षट्सप्तत्यधिकं ग्रहशतं, एकं कोटीकोटिशतसहस्रं त्रयस्त्रिंशत्कोटीकोटिसहस्राणि नवकोटीकोटिशतानि पंचाशच्च कोटीकोट्यस्तारकाणां। लवणोदे चत्वारः सूर्याः, चत्वारश्चन्द्राः, नक्षत्राणां शतं, द्वादश ग्रहाणां, त्रीणि शतानि द्विपंचाशानि द्वे कोटीकोटिशतसहस्रे सप्तषष्टि कोटीकोटिसहस्राणि नव च कोटीकोटिशतानि तारकाणां। धातकीखंडे द्वादश सूर्याः, द्वादश चन्द्राः, नक्षत्राणां त्रीणि शतानि, षट्त्रिंशानि ग्रहाणां, सहस्रं षट्पंचाशं अष्टौ कोटीकोटिशतसहस्राणि सप्तत्रिंशच्च कोटीकोटिशतानि तारकाणां। कालोदे द्वाचत्वारिंशदादित्याः, द्वाचत्वारिंशच्चन्द्राः, एकादश नक्षत्रशतानि, षट्सप्तत्यधिकानि षट्त्रिंशत् ग्रहशतानि षण्णवत्यधिकानि अष्टाविंशतिः कोटीकोटिशतसहस्राणि द्वादशकोटीकोटिसहस्राणि नवकोटीकोटिशतानि पंचाशत्कोटीकोट्यस्तारकाणां। पुष्कराधे द्वासप्ततिः सूर्याः, द्वासप्ततिश्चन्द्राः, द्वे नक्षत्रसहस्रे, षोडशाविंशति ग्रहशतानि, षट्त्रिंशानि अष्टचत्वारिंशत्कोटीकोटिशतसहस्राणि द्वाविंशतिः कोटीकोटिसहस्राणि द्वे कोटीकोटिशते तारकाणां। बाह्ये पुष्करार्धे च ज्योतिषामियमेव संख्या ततश्चतुर्गुणा पुष्करवरोदे, ततः परा द्विगुणाद्विगुणा ज्योतिषां संख्या असंख्येया। जघन्यं तारकान्तरं गव्यूतसप्तभागः। मध्यं पंचाशत् गव्यूतानि। उत्कृष्टं योजनसहस्रं। जघन्यं सूर्यान्तरं चन्द्रान्तरं च नवनवतिः सहस्राणि योजनानां षट्शतानि चत्वारिंशदधिकानि। उत्कृष्टमेकं योजनशतसहस्रं षट्शतानि षष्ठ्युत्तराणि। जंबूद्वीपादिषु एकैकस्य चन्द्रमसः षट्षष्ठिकोटीकोटिसहस्राणि नवकोटीकोटिशतानि पंचसप्ततिश्च कोटीकोट्यः तारकाणां। अष्टाशीतिर्महाग्रहाः, अष्टाविंशतिर्नक्षत्राणि। परिवारः सूर्यस्य चतुरशीतिमंडलशतं। अशीतिः योजनशतं जंबूद्वीपस्य अन्तरमवगाह्य प्रकाशयति। तत्र पंचषष्टिरभ्यन्तरमंडलानि। लवणोदस्यान्तस्त्रीणि त्रिंशानि योजनशतान्यवगाह्य प्रकाशयति। तत्र मंडलानि बाह्यान्येकान्नविंशतिशतं, द्वियोजनमेकैकमंडलान्तरं, द्वे योजने अष्टचत्वारिंशद्योजनैकषष्टिभागाश्च एकैकमुदयान्तरं, चतुश्चत्वारिंशद्योजनसहस्रैः अष्टाभिश्च शतैर्विंशैरप्राप्य मेरुं सर्वाभ्यन्तरमंडलं सूर्यः प्रकाशयति। तस्य विष्कम्भो नवनवतिः सहस्राणि षट्शतानि चत्वारिंशानि योजनानां। तदाहनि मुहूर्ता अष्टादश भवन्ति। पंचसहस्राणि द्वे शते एकपंचाशद्योजनानां एकान्नत्रिंशद्योजनषष्ठिभागाश्च मुहूर्तगतिक्षेत्रं। सर्वबाह्यमंडले चरन् सूर्यः पंचचत्वारिंशत्सहस्रैः त्रिभिश्च शतैः त्रिंशैर्योजनानां मेरुमप्राप्य भासयति। तस्य विष्कम्भः एकं शतसहस्रं षट्शतानि च षष्ठ्यधिकानि योजनानां। तदा दिवसस्य

१ पाठोयं न ग पुस्तके।

द्वादश मुहूर्ता । पचमहस्राणि त्रीणि शतानि पचोत्तराणि योजनाना पचदशयोजनषष्ठिभागाश्च मुहूर्तगतिक्षेत्र । तदा एकत्रिंशद्योजनसहस्रेषु अष्टसु च योजनशतेषु अर्धे द्वात्रिंशेषु स्थितो दृश्यते । सर्वाभ्यतरमडल दर्शनविषयपरिमाण प्रागुक्त। मध्ये हानिवृद्धिक्रमो यथागम वेदितव्य । चद्रमडलानि, पचदशद्वीपावगाह, समुद्रावगाहश्च सूर्यवद्वेदितव्य । द्वीपाभ्यतरे पच मडलानि। समुद्रमध्ये दश। सर्वबाह्याभ्यतरमडलविष्कभविधि, मेरुचद्रातरप्रमाण च सूर्यवत् प्रत्येतव्य। पचदशाना मडलानामतराणि चतुर्दश। तत्रैकैकस्य मडलातरस्य प्रमाण पचत्रिंशद्योजनानि योजनैकषष्टिभागास्त्रिंशत् तद्भागस्य चत्वार सप्तभागा ३५-३०-४। सर्वाभ्यतरमडले पचसहस्राणि त्रिसप्तत्यधिकानि योजनाना ६१-७ सप्तसप्ततिर्भागशतानि चतुश्चत्वारिंशानि मडल त्रयोदशभिर्भागसहस्रै सप्तभिश्च भागशतै पचविंशै स्थित्वा अवशिष्टानि। चद्र एकैकेन मुहूर्तेन गच्छति सर्वबाह्यमडले पचसहस्राणि शत च पचविंश योजनाना एकान्नसप्ततिर्भागशतानि नवत्यधिकानि मडल त्रयोदशभि भागसहस्रै सप्तभिश्च भागशतै पचविंशै स्थित्वाऽवशिष्टानि। चद्र एकैकेन मुहूर्तेन गच्छति दर्शनविषयपरिमाण सूर्यवद्वेदितव्य। हानिवृद्धिविधान च यथागम अवसेय। पचयोजनशतानि दशोत्तराणि सूर्याचद्रमसोश्चारक्षेत्रविष्कम । गतिमज्ज्योतिःसबधेन व्यवहारकालप्रतिपत्त्यर्थमाह—

## तत्कृतः कालविभागः ॥ १४ ॥

तदिति किमर्थ ?

**गतिमज्ज्योतिःप्रतिनिर्देशार्थं तद्वचनं ॥ १ ॥** गतिमता ज्योतिषा प्रतिनिर्देशार्थ तदित्युच्यते। न हि केवलगत्या नापि केवलैर्ज्योतिर्भि काल परिच्छिद्यते, अनुपलब्धेरपरिवर्तनाच्च। ज्योति परिवर्तनलभ्यो हि कालपरिच्छेद । कालो द्विविधो व्यावहारिको मुख्यश्च। तत्र व्यावहारिक कालविभाग तत्कृत समयावलिकादिर्व्याख्यात क्रियाविशेषपरिच्छिन्न अन्यस्यापरिच्छिन्नस्य परिच्छेदहेतु। मुख्योऽन्यो वक्ष्यमाणलक्षण । आह– न मुख्य कालोस्ति सूर्यादिगतिव्यतिरिक्तो लिंगाभावात् अपि च कलाना समूह काल कलाश्च क्रियावयवा, किं च पचास्तिकायोपदेशात् पचैवास्तिकाया आगमे उपदिष्टा न षष्ठ ततो न मुख्य कालोस्ति इत्यपरीक्षिताभिधानमेतत्–यत्तावदुक्त लिंगाभावान्नास्ति मुख्य काल इत्यत्रोच्यते क्रियाया काल इति गौणव्यवहारदर्शनात् मुख्यसिद्धि। योयमादित्यगमनादौ क्रियेति रूढे काल इति व्यवहार कालनिर्वर्तनापूर्वक मुख्यस्य कालस्यास्तित्व गमयति। नहि मुख्ये गव्यसति वाहीके गौणे गोशब्दस्य व्यवहारो युज्यते ॥

**अत एव न कलासमूह एव कालः ॥ २ ॥** अत एव,कुत एव ? मुख्यस्य कालस्यास्तित्वादेव, कलानां समूह एव काल इति व्यपदेशो नोपपद्यते। कल्यते क्षिप्यते प्रेर्यते येन क्रियावद्द्रव्य स कालस्तस्य विस्तरेण निर्णय उत्तरत्र वक्ष्यते।

**प्रदेशप्रचयाभावादस्तिकायेष्वनुपदेशः ॥ ३ ॥** प्रदेशप्रचयो हि काय स एषामस्ति ते अस्तिकाया इति जीवादय पचैव उपदिष्टा। कालस्य त्वेकप्रदेशत्वादस्तिकायत्वाभाव। यदि हि अस्तित्वमेव अस्य न स्यात् षट्द्रव्योपदेशो न युक्त स्यात्। कालस्य हि द्रव्यत्वमस्त्यागमेऽपरलक्षणाभाव स्वलक्षणोपदेशसद्भावात्। इतरत्र ज्योतिषामवस्थाप्रतिपादनार्थमाह—

## बहिरवस्थिताः ॥ १५ ॥

बहिरित्युच्यते कुतो बहि ? नृलोकात्। कथमवगम्यते ? अर्थवशाद्विभक्तिपरिणाम इति ॥

---

१ द्वित्वा इति पाठांतर।

**नृलोके नित्यगतिवचनादन्यत्रावस्थानसिद्धिरितिचेन्नोभयासिद्धेः ॥ १ ॥** स्यान्मत नृलोके नित्यगतय इति वचनात् अन्यत्र अवस्थान ज्योतिषा सिद्ध अतो बहिरवस्थिता इति वचनमनर्थक, इति तन्न। किं कारण ? उभयासिद्धे । नृलोकादन्यत्र बहिर्ज्योतिषामस्तित्वमवस्थान चाऽप्रसिद्ध अतस्तदुभय-सिद्धयर्थ "बहिरवस्थिता" इत्युच्यते। असति हि वचने नृलोके एव सति नित्यगतयश्च इत्यवगम्येत । तुरीयस्य निकायस्य सामान्यसज्ञाकीर्तनार्थमाह—

## वैमानिकाः ॥ १६ ॥

**वैमानिकग्रहणमधिकारार्थं ॥ १ ॥** इत ऊर्ध्वं ये वक्ष्यते तेषु वैमानिकसप्रत्यय कथ स्यात् इत्यधिकार क्रियते । विशेषेण आत्मस्थान् सुकृतिनो मानयतीति विमानानि विमानेषु भवा वैमानिका । तानि विमानानि त्रिविधानि-इद्रक-श्रेणि-पुष्पप्रकीर्णकभेदेन । तत्रेंद्रकविमानानि इद्रवन्मध्येऽवस्थितानि । तेषा चतसृषु दिक्षु आकाशप्रदेशश्रेणिवदवस्थानात् श्रेणिविमानानि । विदिक्षु प्रकीर्णपुष्पवत् अवस्थानात् पुष्पप्रकीर्णकानि । तेषां वैमानिकाना भेदावबोधनार्थमाह—

## कल्पोपपन्नाः कल्पातीताश्च ॥ १७ ॥

कल्पेषूपपन्नाः कल्पोपपन्नाः कल्पानतीताः कल्पातीताः। **ग्रैवेयकादिषु नवादिकल्पनासंभवात् कल्पत्वप्रसंगः इति चेन्न उक्तत्वात् ॥ १ ॥** स्यान्मत नवग्रैवेयका नवानुदिशा पचानुत्तरा इति च कल्पनासभवात् तेषामपि कल्पत्वप्रसग इति तन्न । किं कारण ? उक्तत्वात्। उक्तमेतदिंद्रादिदशतया कल्पनसद्भावात् कल्पा इति । नवग्रैवेयकादिषु इद्रादिकल्पना नास्ति तेषामहमिंद्रत्वात् । तेषामवस्थानविशेषनिर्ज्ञानार्थमाह—

## उपर्युपरि ॥ १८ ॥

**उपर्युपरिवचनमतिर्यगेकसमवस्थिति प्रतिपत्त्यर्थं ॥ १ ॥** न ज्योतिष्कवत्तिर्यगवस्थिता नापि व्यतरवदसमवस्थितय इति प्रतिपत्त्यर्थमुपर्युपरीत्युच्यते । कथमत्र द्वित्व ? सामीप्येऽधोऽध्युपरीति । ननु च नात्र सामीप्यमस्ति असख्येययोजनोत्तरत्वात् तेषा, नैष दोष , तुल्यजातीयेनाऽव्यवधान सामीप्य नच तेषा तुल्यजातीय व्यवधायक विवक्षित । इद विचार्यते— किमत्राधे यत्वेन कल्प्यमाना देवा उत विमानानि आहोस्वित् कल्पा इति किं वा कामचार ।

**देवा इति चेन्नाऽनिष्टत्वात् ॥ २ ॥** यदि देवा उपर्युपरीत्यनेनाभिसबध्यते, तन्न, किं कारण, अनिष्टत्वात् देवाना हि उपर्युपरि अवस्थानमनिष्ट ।

**विमानानि इति चेन्न श्रेणिप्रकीर्णकाना तिर्यगवस्थानात् ॥ ३ ॥** अथ विमानान्युपर्युपरीति कल्प्यते तदपि नोपपद्यते । श्रेणिप्रकीर्णकाना तिर्यगवस्थानात् । श्रेणिविमानानि पुष्पप्रकीर्णकविमानानि च प्रतींद्रक तिर्यगवस्थितानि इति इहेष्यते ।

**कल्पा इति चेददोषः ॥ ४ ॥** यदि कल्पा न दोषो भवति 'यथा न दोष तथास्तु' कल्पा हि उपर्युपरि स्थिता इति ।

**उपसर्जनत्वादनभिसबध इति चेन्न दृष्टत्वात् ॥ ५ ॥** स्यादेतत्कल्पोपपन्ना इत्यत्र कल्पग्रहणमुपसर्जन तेनात्र सबधो नोपपद्यते इति तन्न । किं कारण ? दृष्टत्वात् दृष्टो हि उपसर्जनभूतस्यापि अर्थस्य बुद्धयापेक्षितस्य विशेषणेनाभिसबध । राजपुरुषोय, कस्य ? राज्ञ इत्येवमिहापि प्रत्यासत्ते बुद्धया उपसर्जनमपि कल्पग्रहणमभिसबध्यते उपर्युपरि कल्पा इत्यर्थ । कल्पातीतेषु किमभिसबध्यते ? विमानानि । यद्येव कियत्सु कल्पविमानेषु ते देवा भवति इत्यत आह—

---

१ युगसमस्थिति इत्यपि पाठातर । २ जैनेन्द्रीय सूत्र । ३ योजनातरत्वात् ।

**सौधर्मैशानसानत्कुमारमाहेंद्रब्रह्मब्रह्मोत्तरलांतवकापिष्ठशुक्रमहाशुक्रशतारसहस्रारेष्वानतप्राणतयोरारणाऽच्युतयोर्नवसु ग्रैवेयकेषु विजयवैजयंतजयताऽपराजितेषु सर्वार्थसिद्धौ च ॥ १९ ॥**

कथमेषां सौधर्मादीनां कल्पाभिधानं ?

**चातुरर्थिकेनाऽणा स्वभावतो वा कल्पाभिधानं ॥ १ ॥** चातुरर्थिकेनाऽणा स्वभावतो वा कल्पस्याभिधानं भवति । अथ कथमिंद्राभिधानं ?[1]

**स्वभावतः साहचर्यादिंद्राभिधानं ॥ २ ॥** स्वभावतो वा साहचर्याद्वा इंद्राभिधानं दृष्टव्यं । तत्कथमिति चेदुच्यते—सुधर्मा नाम सभा अस्मिन्नस्तीत्यण् सौधर्मः कल्पः, तदस्मिन्नस्तीत्यण् । तत्कल्पसाहचर्यादिंद्रोपि सौधर्मः । ईशानो नाम इंद्रः स्वभावतः, ईशानस्य निवासः कल्पः ऐशानः, "तस्य निवासः" इत्यण्, तत्साहचर्यादिंद्रोपि-ऐशानः । सनत्कुमारो नाम इंद्रः स्वभावतः तस्य निवासः कल्पः सानत्कुमारः, तत्साहचर्यादिंद्रोपि सानत्कुमारः । महेंद्रो नाम इंद्रः स्वभावतः तस्य निवासः कल्पः माहेंद्रः, तत्साहचर्यात् इंद्रोपि माहेंद्रः । ब्रह्मा इंद्रः तस्य लोको ब्रह्मलोकः कल्पः, एवं ब्रह्मोत्तरश्च । ब्रह्मणः इंद्रस्य निवासः ब्रह्म इति कल्पाभिधानं भवति, तत्साहचर्याद्ब्रह्म इतींद्रस्याऽभिधानं । लांतवस्य इंद्रस्य निवासः लांतवः कल्पः तत्साहचर्याद्वा इंद्रोपि लांतवः । शुक्रस्य इंद्रस्य निवासः शौक्रः कल्पः तत्साहचर्यात् इंद्रोपि शौक्रः, अथवा शुक्रः कल्पः तत्साहचर्यात् इंद्रोपि शुक्रः । शतारस्येंद्रस्य निवासः शतार इति कल्पः तत्साहचर्यादिंद्रोपि शतारः, अथवा शतारः कल्पः तत्साहचर्यात् इंद्रोपि शतारः । सहस्रारस्याप्येवं । आनतस्येंद्रस्य निवासः—आनतः कल्पः तत्साहचर्यात् इंद्रोपि आनतः, अथवा आनतः कल्पः तत्साहचर्यात् इंद्रोप्यानतः । प्राणतस्य इंद्रस्य निवासः प्राणतः कल्पः तत्साहचर्यात् इंद्रोपि प्राणतः, अथवा प्राणतः कल्पः तत्सहचरित इंद्रोपि प्राणतः । आरणस्य इंद्रस्य निवासः आरणः कल्पः तत्साहचर्यात् इंद्रोप्यारणः । अथवा आरणः कल्पः तत्सहचरित इंद्रोप्यारणः । अच्युतस्येंद्रस्य निवासः अच्युतः कल्पः तत्साहचर्यात् इंद्रोप्यच्युतः, अथवा अच्युतः कल्पः तत्सहचरित इंद्रोप्यच्युतः । लोकपुरुषस्य ग्रीवास्थानीयत्वात् ग्रीवाः ग्रीवासु भवानि ग्रैवेयकाणि विमानानि तत्साहचर्यात् इंद्रा अपि ग्रैवेयकाः । विजयादयोऽन्वर्थसंज्ञाः अभ्युदयविघ्नहेतुविजयात् । सर्वार्थानां सिद्धेश्च विजयादीनि विमानानि तत्साहचर्यात् इंद्रा अपि विजयादिनामानः । अथ किमर्थं सर्वार्थसिद्धस्य पृथग्ग्रहणं न तैः सह द्वंद्वः कर्तव्यः ?[2]

**सर्वार्थसिद्धस्य पृथग्ग्रहणं स्थित्यादिविशेषप्रतिपत्त्यर्थं ॥ ३ ॥** विजयादिषु चतुर्षु जघन्या स्थितिर्द्वात्रिंशत्सागरोपमा साधिका । उत्कृष्टा त्रयस्त्रिंशत्सागरोपमा । सर्वार्थसिद्धे जघन्योत्कृष्टा च त्रयस्त्रिंशत्सागरोपमा । यः प्रभावः सर्वार्थसिद्धैकदेवस्य नासौ सर्वविजयादिदेवानां इत्येवमादिविशेषप्रतिपत्त्यर्थं विजयादिभ्यः सर्वार्थसिद्धस्य पृथग्ग्रहणं क्रियते ॥

**ग्रैवेयकादीनां पृथग्ग्रहणं कल्पातीतत्वविज्ञापनार्थं ॥ ४ ॥** सौधर्मादयः अच्युतांता द्वादश कल्पाः ततोन्ये कल्पातीता इत्येतस्य विज्ञापनार्थं ग्रैवेयकादीनां पृथक् ग्रहणं क्रियते ।

**नवशब्दस्य वृत्त्यकरणं अनुदिशसूचनार्थं ॥ ५ ॥** नवशब्दस्य ग्रैवेयकशब्देन वृत्तिः कर्तव्या नवग्रैवेयकेष्विति । तदकरणं अन्यान्यपि नव संति इत्येतस्य सूचनार्थं । तेन अनुदिशसंग्रहः कृतो भवति । इतरथा हि लघ्वर्थां वृत्तिं क्रियेत । किमिदमनुदिशमिति प्रतिदिशमित्यर्थः । दिक्शब्दस्य शरत्प्रभृतिषु उपादानात् अनुदिशं विमानानि । आकारांतो वा दिशाशब्दो दिक् पर्यायवाची इति तेनानोऽर्त्ति ।

**उपर्युपरीत्यनेन द्वयोर्द्वयोरभिसंबंधः ॥ ६ ॥** आगमाऽपेक्षया व्यवस्था भवति इति उपर्यु-

---

१ जैनेंद्रीय सूत्र । २ जैनेंद्रीय सूत्र ।

रीत्यनेन द्वयोर्द्वयोरभिसम्बन्धो वेदितव्य । प्रथमो सौधर्मैशानकल्पौ तयोरुपरि सानत्कुमारमाहेंद्रौ । तयोरुपरि ब्रह्मलोकब्रह्मोत्तरौ । तयोरुपरि लांतवकापिष्ठौ । तयोरुपरि शुक्रमहाशुक्रौ । तयोरुपरि सतारसहस्रारौ । तयोरुपरि आनतप्राणतौ । तयोरुपरि आरणाऽच्युतौ ।

**प्रत्येकमिंद्रसंबंधो मध्ये प्रतिद्वय ॥ ७ ॥** प्रत्येकमिंद्रसंबंधो वेदितव्य मध्ये प्रतिद्वय । सौधर्मैशानकल्पयोर्द्वाविंद्रौ । सानत्कुमारमाहेंद्रयोर्द्वौ । ब्रह्मलोकब्रह्मोत्तरयोरेक ब्रह्मनामा । लांतवकापिष्ठयोरेको लांतवाऽऽख्य । शुक्रमहाशुक्रयोरेक शुक्रसंज्ञ । सतारसहस्रारयोरेक शतारनामा । आनतप्राणतयोर्द्वौ । आरणाऽच्युतयोर्द्वौ ।

**तथा चोत्तरयोः पृथग्वचनमर्थवत् ॥८॥** एव कृत्वा उत्तरयो पृथग्वचनमर्थवत् भवति । आनतप्राणतयोरारणाऽच्युतयोरिति । इतरथा हि लघ्वर्थं एक एव द्वद्व क्रियते तद्यथा—अस्माद्भूमितलान्नव-नवतिर्योजनसहस्राणि चत्वारिंशच्च योजनान्युत्प्लुत्य सौधर्मैशानकल्पौ भवत , तयोरेकत्रिंशद्विमानप्रस्तारा — ऋतु - चद्र - विमल - वल्गु - वीर - अरुण - नदन - नलिन - लोहित-कांचन-चंचन् मारुतऋद्धीश-वैडूर्य रुचक-रुचिर-अक स्फटिक - तपनीय - मेघ- हारिद्र पद्म लोहिताक्ष-वज्र-नद्यावर्त प्रभकर पिष्टाक गज-मस्तक-चित्र-प्रभासंज्ञा । मदरचूलिकाया उपरि ऋतुविमान, तयोरतर वालाग्रमात्र । ऋतुविमानाच्चतसृषु दिक्षु चतस्रो विमानश्रेण्यो निर्गता , प्रत्येक द्विषाष्ठविमानसख्या । विदिक्षु पुष्पप्रकीर्णकविमानानि एव एकैकश्रेणीनिमान हानिरा प्रभाविमानाद्वेदितव्या । एकैकप्रस्तारांतरमसख्येयानि योजनशतसहस्राणि, तत्र प्रभासंज्ञादिद्रकवि-मानाद्दक्षिणस्या दिशि श्रेण्या द्वात्रिंशद्विमानसख्यायामष्टादशश्रेणीविमान तत्कल्पनिमान । तस्य स्वस्तिक-वर्धमान विश्रुताख्यास्त्रय प्राकारा । तत्र बाह्यप्राकारांतरनिवासीनि अनीकानि पारिषदाश्च, मध्यप्रकारांतरवा-सिनस्त्रायस्त्रिंशा , निमानाभ्यंतरप्राकारनिवासी देवराज शक्र सौधर्म इति चोच्यते । तस्य निमानस्य चतसृषु दिक्षु चत्वारि नगराणि कांचन—अशोकमंदिर मस्तार-गल्लसंज्ञानि । तस्य द्वात्रिंशद्विमानशतसहस्राणि, त्रयस्त्रिंशत् त्रायस्त्रिंशा , चतुरशीतिरात्मरक्षसहस्राणि, तिस्र परिषद , सप्तानीकानि, चतुरशीति सामानिकसहस्राणि, चत्वारो लोकपाला , पद्मा शिवा सुजाता सुलसा अंजुका कालिंदी श्यामा भानुरित्येता अष्टावग्रमहिष्य । अन्यानि चत्वारिंशद्वल्लभिकाना देवीना सहस्राणि । सर्वाश्चैता अग्रमहिष्यो वल्लभिकाश्च प्रत्येक पचपल्योपमस्थितिका षोडशदेवीसहस्रपरिवृता । एकैका चाऽग्रमहिषी वल्लभिकाश्च षोडशदेवीरूप-सहस्रविकरणसमर्था । तत्र शक्रस्याभ्यंतरपरिषत् समिता नाम, द्वादशसहस्राणि देवाना पचपल्योपमायुषा। चद्रा नाम मध्यपरिषत चतुर्दशसहस्राणि देवाना चतु पल्योपमायुषा । जातुर्नाम बाह्यपरिषत् षोडश सहस्राणि देवाना त्रिपल्योपमायुषा । आभ्यतरपरिषदि देवानामेकैकस्य देव्य सप्तशतसख्या अर्धतृतीय पल्योपमस्थितय । मध्यमपरिषदि देवानामेकैकस्य देवस्य देव्य षट्शतसख्या द्विपल्योपमस्थितय । बाह्य-परिषदि देवानामेकैकस्य देवस्य देव्य पचशतसख्या अध्यर्धपल्योपमस्थितय , तास्तदेवीरूपविकरणसमर्था । अष्टानामपि-अग्रमहिषीणामभ्यंतरपरिषत् सप्तदेवीशतानि । मध्यमपरिषत्षड्देवीशतानि । बाह्यपरिषत्पच-देवीशतानि। एतासु तिसृषु अपि परिषत्सु देव्य , अर्धतृतीयपल्योपमस्थितय । पदातयश्च गजवृषभरथन र्तकीगधर्वाख्यानि सप्तानीकानि पल्योपमस्थितीनि । अनीकमहत्तराश्च पल्योपमायुष । तत्र वायुर्नाम पदा-त्यनीकमहत्तर सप्तभि कक्षाभि परिवृत । प्रथमा कक्षा चतुरशीति पदातिशतसहस्राणि। द्वितीया तद्द्विगुणा । एव द्विगुणा द्विगुणा पदातिसख्या आ सप्तम्या । हरिरश्वानीकमहत्तर । ऐरावतो गजानीकम-हत्तर । दामयस्तिर्वृषभानीकमहत्तर । मातुली रथानीकमहत्तर । नीलांजना नर्तकी गणमहत्तरिका। अरिष्ट-यशस्को नाम गधर्वानीकमहत्तर । एषा षण्णामप्यनीकाना सख्या पदातिसख्यया तुल्या, सैषा विक्रियाकृता। प्राकृती तु एकैकस्यानीकस्य षट्छतसख्या । तेषा प्राकृताना देवाना प्रत्येक षट्शतसख्यानामेकैकस्य देवस्य षड्देवीशतानि। एकैका चात्र देवी षड्देवीरूपविकरणसमर्था अर्धपल्योपमस्थितिका । सप्तानामप्यनीकमहत्त-राणामेकैकस्य षड्देवीशतानि एकैका चात्र देवी देवीषड्रूपविकरणसमर्था अर्धपल्योपमस्थितिका । आभ-

१ चंचन् इत्यपि पाठांतर ।

रक्षाणां चतुरशीतिसहस्रसंख्यानां पल्योपमायुषामेकैकस्य द्वे द्वे देवीशते, एकैका चात्र देवी षड्देवीरूपविकिरणसमर्था अर्धपल्योपमस्थितिका । शक्रस्य वालको नामाऽऽभियोग्य पल्योपमायु , जम्बूद्वीपप्रमाणयानविमानविक्रियासमर्थ , तस्य षड्देवीशतानि एकैका चात्र षड्देवीरूपविकरणसमर्था अर्धपल्योसमस्थितिका । प्राच्यां दिशि स्वयप्रभे विमाने सोमो लोकपाल अर्धतृतीयपल्योपमायु , तस्य चत्वारि सामानिकसहस्राणि अर्धतृतीयपल्योपमायूंषि, चत्वारि देवीसहस्राणि अर्धतृतीयपल्योपमायूंषि। चतुर्णामपि लोकपालाना चतस्रोऽग्रमहिष्य अर्धतृतीयपल्योपमायुष । सोमस्याभ्यतरपरिषत् ईषा नाम पचाशद्देवा सपादपल्योपमायुष । दृढा नाम मध्यमपरिषत् चत्वारि देवशतानि सपादपल्योपमायूंषि । चतुरता नाम बाह्यपरिषत् पचदेवशतानि सपादपल्योपमायूंषि । अपान्या दिशि वरज्येष्टे विमाने यमो नाम लोकपाल शेष सोमवत। प्रतीच्यां दिशि अजने विमाने वरुणो नाम लोकपाल पदोनत्रिपल्योपमायु । ईषा नाम तस्याऽभ्यतरपरिषत् षष्टिर्देवा अध्यर्धपल्योपमायुष । मध्या दृढा पचदेवशतानि देशोनाध्यर्धपल्योपमायूंषि । बाह्या चतुरता षड्देवशतानि देशाधिकाध्यर्धपल्योपमायूंषि । तिसृष्वपि परिषत्सु स्वभर्तृस्थितयो देव्य , शेष सोमवत् । उदीच्यां दिशि वल्गुविमाने वैश्रवणो नाम लोकपाल त्रिपल्योपमायु , तस्याऽभ्यतरपरिषत् ईषा सप्ततिर्देवा अध्यर्धपल्योपमायुष । मध्या दृढा षड्देवशतानि देशोनाध्यर्धपल्योपमायूंषि। बाह्या चतुरता सप्तदेवशतानि सपादपल्योपमायूंषि । तिसृष्वपि परिषत्सु स्वभर्तृस्थित्यर्धस्थितयो देव्य , शेष सोमवत्। चतुर्णां लोकपालानामेकैकस्याऽर्धचतुर्थकोटीसंख्या अप्सरस । सौधर्मेंद्रकविमानाना एकत्रिंशच्छ्रेणीविमानानां चत्वारि सहस्राणि त्रीणि शतानि एकसप्तत्यधिकानि । पुष्पप्रकीर्णकविमानाना एकत्रिंशच्छतसहस्राणि पचनवति सहस्राणि पचशतान्यष्टनवत्यधिकानि । तान्येतानि समुदितानि द्वात्रिंशद्विमानशतसहस्राणि भवतीत्युक्त सौधर्मकल्प । तथा तस्मात् प्रभाविमानात् उदक्छ्रेण्या द्वात्रिंशद्विमानविरचितायां यदष्टादश तत्कल्पविमान, तस्य परिवारवर्णना पूर्ववद्वेदितव्या । तस्य पति –ऐशानो देवराज:, यस्याऽष्टाविंशतिर्विमानशतसहस्राणि, त्रयस्त्रिंशत्त्रायस्त्रिंशा देवा , अशीति सामनिकसहस्राणि, तिस्र परिषद , सप्तानीकानि, अशीतिरात्मरक्षसहस्राणि, चत्वारो लोकपाला । श्रीमती सुसीमा सुमित्रा वसुधरा जया जयसेना अमला प्रभा चेत्यष्टावग्रमहिष्य सप्तपल्योपमास्थितय । द्वात्रिंशद्वल्लभिकासहस्राणि सप्तपल्योपमायूंषि। अभ्यतरपरिषत्समिता दशदेवसहस्राणि सप्तपल्योपमायूंषि । चद्रा मध्यमा परिषत् द्वादशदेवसहस्राणि षट्पल्योपमायूंषि । जातुर्बाह्यपरिषत् चतुर्दशदेवसहस्राणि पचपल्योपमायूंषि—लघुपराक्रम पदात्यनीकमहत्तर , अमितगति अश्वानीकमहत्तर , द्रुमक्रातो वृषभानीकमहत्तर , किन्नरो रथानीकमहत्तर , पुष्पदतो गजानीकमहत्तर , गीतयशा गधर्वानीकमहत्तर श्वेता नर्तकी गणमहत्तरिका । तत्र पदात्यनीकमहत्तरस्य प्रथमा कक्षा अशीतिर्देवसहस्राणि, द्वितीया द्विगुणा, एव द्विगुणा द्विगुणा आ सप्तम्या । एव शेषाणामप्यनीकाना विक्रिया सख्याता। एते सर्वे अनीकदेवा तन्महत्तराश्च साधिकपल्योपमायुष । ऐशानस्य दक्षिणस्या दिशि समे विमाने सोमो नाम लोकपाल , अर्धपचपल्योपमायु. । तस्याभ्यतरपरिषद् षष्टिर्देवा । मध्यपरिषत् पचदेवशतानि । बाह्यपरिषत् षड्देवशतानि सप्त च देवा । अपरस्यां दिशि सर्वतोभद्रे यमो लोकपाल अर्धपचपल्योपमायु , शेष सोमवत्। उत्तरस्यां दिशि सुभद्रे वरुणो लोकपाल पचपल्योपमायु । तस्याभ्यतरपरिषदशीतिर्देवा । मध्यमपरिषत् सप्त देवशतानि बाह्यपरिषदष्टौ देवशतानि। पूर्वस्या दिशि अमिते विमाने वैश्रवणो लोकपाल पादोनपचपल्योपमायु । तस्याभ्यतरपरिषत् सप्ततिर्देवा । मध्यमपरिषत् षड्देवशतानि। बाह्यपरिषत्सप्तदेवशतानि । ईशानस्य पुष्पको नाम आभियोग्यो देव वालकतुल्य जबूद्वीपप्रमाणपुष्पकयानविमानविकरणसमर्थ , शेष शक्रवज्ज्ञेय । एवमुत्तरश्रेणिविमानपुष्पकप्रकीर्णकाधिपतीशानो वर्णित । प्रभाविमानादूर्ध्वं बहूनि योजनसहस्राणि,उत्प्लुत्य सानत्कुमारमाहेंद्रकल्पौ भवत । तयो सप्तविमानप्रस्तारा -अजन वनमाल-नाग-गरुड-लागल-बलभद्र-चक्राभिधाना । तत्रांजनविमानाच्चतसृष्वपि दिक्षु चतस्रो विमानश्रेण्यो निर्गता । विदिक्षु पुष्पप्रकीर्णकविमानानि । तत्रैकैकस्या विमानश्रेण्यां एकत्रिंशद्विमानानि एव श्रेणीविमानानि एकैकहीनान्याचक्रात्। तेषामतराण्यपि बहूनि योजनशतसहस्राणि । चक्राख्यादतविमानाद्दक्षिणश्रेण्या पचविंशतिविमानविराजिताया पचदशकल्पविमान सौधर्म-

कल्पविमानसदृश। तस्याधिपतिः सानत्कुमारो देवराजः–यस्य द्वादशविमानशतसहस्राणि, त्रयस्त्रिंशत्त्रायस्त्रिंशा देवाः, द्विसप्ततिः सामानिकसहस्राणि, तिस्रः परिषदः, सप्तानीकानि, द्विसप्ततिः आत्मरक्षसहस्राणि, चत्वारो लोकपालाः। अष्टावग्रमहिष्यः शक्राग्रमहिषीसमाना नवपल्योपमायुषः। एकैका चात्राऽष्टादशभिः देवीसहस्रैः परिवृता द्वात्रिंशद्देवीसहस्रविकरणसमर्था। अष्टावन्यानि वल्लभिकानां सहस्राणि तावदायुर्विकरणसमर्थानि। समिताभ्यन्तरपरिषदष्टौ देवसहस्राणि साधिकार्धचतुर्थसागरोपमायूंषि। चन्द्रा मध्यपरिषद्दशदेवसहस्राणि साधिकार्धचतुर्थसागरोपमायूंषि जातुर्बाह्यपरिषत् द्वादशदेवसहस्राणि साधिकार्धचतुर्थसागरोपमायूंषि। अभ्यन्तरपरिषद्देवानां–एकैकस्य सप्तदेवीशतानि पंचपल्योपमायूंषि। मध्यमपरिषद्देवानां एकैकस्य षड्देवीशतानि पंचपल्योपमायूंषि। बाह्यपरिषद्देवानां एकैकस्य पंचदेवीशतानि पंचपल्योपमायूंषि। सर्वाणि च तानि तावद्विक्रियासमर्थानि। सप्तानीकमहत्तराः शक्रानीकमहत्तरसमाना अर्धचतुर्थसागरोपमायुषः। पदातीनां प्रथमकक्षा द्विसप्ततिसहस्राणि। द्वितीया तद्द्विगुणा। एवं द्विगुणा द्विगुणा आ सप्तम्याः। तथा शेषेष्वपि षट्सु अनीकेषु अनीकमहत्तराणामेकैकस्य त्रीणि देवीशतानि पंचपल्योपमायूंषि। आत्मरक्षदेवानां एकैकस्य देवीशतं पंचपल्योपमायुः। बालकविमानाभियोग्यदेवस्याऽऽयुः, अर्धचतुर्थानि सागरोपमाणि। त्रीणि देवीशतानि पंचपल्योपमायूंषि। पूर्वादिषु दिक्षु स्वयंप्रभ-वरज्येष्ठ स्वयंजन-वल्गुविमानवासिनः सोमयमवरुणवैश्रवणाः, चत्वारो लोकपालाः। एषामेकैकस्य दश दश सामानिकशतानि, दशदशदेवीशतानि, चतस्रोऽग्रमहिष्यः, तिस्रः परिषदः। सागरोपमस्थिती सोमयमौ। पादाधिकतावदायुर्वरुणः। अर्धाधिकतावदायुर्वैश्रवणः। सोमयमयोरभ्यन्तरपरिषच्चत्वारिंशद्देवाः। मध्यमपरिषत् त्रीणि देवशतानि। बाह्या परिषच्चत्वारि देवशतानि। वरुणस्याऽभ्यन्तरपरिषत्पंचाशद्देवाः। मध्या चत्वारि देवशतानि। बाह्या पंचदेवशतानि। वैश्रवणस्य अभ्यन्तरपरिषत् षष्टिर्देवाः। मध्या पंचदेवशतानि। बाह्या परिषत् षड्देवशतानि। चतसृष्वपि अभ्यन्तरपरिषत्सु देवानामायुः, त्रीणि सागरोपमाणि। एकैकस्य देवीशतं। चतसृष्वपि मध्यमपरिषत्सु देवानामायुः देशोनानि त्रीणि सागरोपमाणि। एकैकस्य सप्ततिर्देव्यः। चतसृष्वपि बाह्यपरिषत्सु देवा अर्धतृतीयसागरोपमायुषः। एकैकस्य पंचाशद्देव्यः। तस्माच्चक्रविमानादुत्तरस्यां दिशि, श्रेण्यां पंचविंशतिविमानमंडितायां पंचदशकल्पविमानं पूर्वोक्तवर्णनं। तस्येश्वरो महेंद्रो देवराजः। यस्याऽष्टौ विमानशतसहस्राणि। त्रयस्त्रिंशत्त्रायस्त्रिंशा देवाः, सप्ततिः सामानिकसहस्राणि, तिस्रः परिषदः। सप्ततिरात्मरक्षसहस्राणि। चत्वारो लोकपालाः। ऐशानाग्रमहिषीतुल्यसंज्ञा अष्टावग्रमहिष्यः एकादशपल्योपमायुषः। अष्टौ चास्य वल्लभिकानां सहस्राणि तावदायूंषि। शेषः सानत्कुमाराग्रमहिषीवल्लभिकावत्। समिताभ्यन्तरपरिषत् षड्देवसहस्राणि। चन्द्रा मध्यमपरिषत् अष्टौ देवसहस्राणि। जातुर्बाह्यपरिषत् दशदेवसहस्राणि। तिसृष्वपि परिषत्सु देवानां सानत्कुमारपरिषद्देवस्थितेरधिका स्थितिः। शेषो देवीगणपरिमाणायुः, विक्रियासामर्थ्यादिविधिः सानत्कुमारपरिषद्वत्। अनीकमहत्तराणामाख्या ऐशानवद्वेदितव्या। पदात्यनीकस्य प्रथमकक्षा सप्ततिर्देवसहस्राणि, द्वितीया तद्द्विगुणा, एवं द्विगुणा द्विगुणा आ सप्तम्याः। तथा शेषेष्वपि षट्सु अनीकेषु। अनीकमहत्तराणां एकैकस्य त्रीणि देवीशतानि, एकैका चाऽत्र सप्तपल्योपमस्थितिका। आत्मरक्षाणामायुः साधिकार्धचतुर्थानि सागरोपमाणि। एकैकस्य सप्तपल्योपमायुषां देवीनां शतं। दक्षिणादिषु दिक्षु सम-सर्वतोभद्र सुभद्र-समितविमानवासिनः सोमयमवरुणवैश्रवणलोकपालाः। एकैकस्य दश दश सामानिकशतानि, तावत्संख्या देव्यः, चतस्रोऽग्रमहिष्यः, तिस्रः परिषदः। तत्रार्धचतुर्थसागरोपमस्थितिर्वरुणः, तदूनस्थितिर्धनदः, ततोऽप्यूनस्थिती सोमयमौ, सोमयमयोरभ्यन्तरपरिषत् पंचाशद्देवाः। मध्या चत्वारि देवशतानि। बाह्या पंचदेवशतानि। वैश्रवणस्याऽभ्यन्तरपरिषत् षष्टिर्देवाः। मध्या पंचदेवशतानि। बाह्या षड्देवशतानि। वरुणस्याभ्यन्तरपरिषत्सप्ततिर्देवाः। मध्या षड्देवशतानि। बाह्या सप्तदेवशतानि। लोकपालचतुष्टयाभ्यन्तरपरिषद्देवानामेकैकस्य देवीशतं। मध्यमपरिषद्देवानां एकैकस्य सप्ततिर्देव्यः। बाह्यपरिषद्देवानां एकैकस्य पंचाशद्देव्यः। आयुश्च तेषां यथासंख्यं। साधिकानि समानि देशोनानि च त्रीणि सागरोपमाणि। पुष्पकयानविमानाभियोग्यदेवः साधिकार्धचतुर्थसागरोपमायुः, तस्य देवानां साधिकद्विसागरायुषां शतं। शक्रविमानादूर्ध्वं बहूनि योजनशतसहस्राणि उत्प्लुत्य ब्रह्मलोकब्रह्मोत्तरकल्पौ स्तः। तयोश्चतुरि विमानप्रस्ताराः अरिष्टो

देवसमितो ब्रह्म ब्रह्मोत्तर इति। अरिष्टविमानाच्च चतसृष्वपि दिक्षु चतस्रो विमानश्रेण्यो निर्गता। चतुर्विंशति-विमानगणना विदिक्षु पुष्पप्रकीर्णकान्येव, एकैकश्रेणिविमानहान्यो नेतव्या' आ ब्रह्मोत्तरात्। तेषा प्रस्ताराणा मतराण्यपि बहूनि योजनशतसहस्राणि। ब्रह्मोत्तरविमानाद्दक्षिणश्रेण्या एकविंशतिविराजितायां द्वादश-कल्पविमान पूर्वोक्तवर्णन। तस्याधिपति ब्रह्मो देवराज, यस्य साधिके द्वे विमानशतसहस्रे। त्रयस्त्रिंशत्त्रा-यस्त्रिंशा देवा। षट्त्रिंशत्सामानिकसहस्राणि। तिस्र परिषद। सप्तानीकानि। षट्त्रिंशदात्मरक्षसहस्राणि चत्वारो लोकपाला। पद्मादय शक्राग्रमहिषीतुल्यसंज्ञा अष्टावग्रमहिष्य त्रयोदशपल्योपमस्थितय चतुर्देवी सहस्रपरिवृता। द्वे च वल्लभिकासहस्रे त्रयोदशपल्योपमस्थितिके। एकैकाग्रमहिषी वल्लभिका चतुष्षष्टिदेवी रूपसहस्रविकरणसमर्था। समिताभ्यन्तरपरिषत् चत्वारि देवसहस्राणि अष्टसागरोपमायूंषि। अभ्यन्तरपरिषद्दे-वानामेकैकस्य पचाशद्देव्य। मध्यमपरिषद्देवाना चत्वारिंशद्देव्य। बाह्यपरिषद्देवाना त्रिंशद्देव्य। वायव्यादय सप्तानीकमहत्तरा अर्धाष्टमसागरोपमायुष। तत्र वायो पदात्यनीकमहत्तरस्य प्रथमकक्षा षट्त्रिंशत्सहस्राणि, द्वितीया तद्द्विगुणा, एव द्विगुणा द्विगुणा आ सप्तम्या। सर्वेषामनीकमहत्तराणामेकैकस्य अर्धतृतीयानि देवी शतानि चतस्रोऽग्रमहिष्य। आत्मरक्षदेवानामायु अर्धाऽष्टमानि सागरोपमाणि। एकैकस्य पचाशद्देव्य। बालकाभियोग्यदेवोपि तावदायुर्देवीक। पूर्वादिषु दिक्षु स्वयप्रभवरज्येष्टस्वयजनवल्गुविमानवासिन सोम-यमवरुणवैश्रवणा लोकपाला तेषामेकैकस्य पचसामानिकशतानि पचदेवीशतानि चतस्रोऽग्रमहिष्य। अर्धा-ष्टमसागरोपमायुर्धनद, तदूनायुर्वरुण, ततोप्यूनस्थिती सोमयमौ। सोमयमयोरभ्यतरपरिषत्त्रिंशद्देवा। मध्या द्वे देवशते। बाह्या त्रीणि देवशतानि वरुणस्याभ्यतरपरिषच्चत्वारिंशद्देवा। मध्या त्रीणि देवशतानि। बाह्या चत्वारि देवशतानि। वैश्रवणस्याभ्यतरपरिषत्पचाशद्देवा। मध्या चत्वारि देवशतानि। बाह्या पचशतानि। चतसृषु अभ्यतरपरिषत्सु देवानामायुरष्टौ सागरोपमाणि। मध्यपरिषद्देवाना देशोनान्यष्टौ सागरोपमाणि। बाह्य परिषद्देवानां तान्येवार्धाष्टमानि। तेषा देव्यो यथासंख्य पचाशच्चत्वारिंशत्त्रिंशच्च वेदितव्या। ब्रह्मोत्तरादुत्तर-श्रेण्यामेकविंशतिविमानाया द्वादश कल्पविमान पूर्ववत्। तस्याधिपति ब्रह्मोत्तर। यस्य न्यूने द्वे विमानशतस-हस्रे, त्रयस्त्रिंशत्त्रायस्त्रिंशा देवा, द्वात्रिंशत्सामानिकसहस्राणि, तिस्र परिषद, सप्तानीकानि, द्वात्रिंशदात्म-रक्षसहस्राणि, चत्वारो लोकपाला। ऐशानेंद्राग्रमहिषीतुल्यसंज्ञा अष्टावग्रमहिष्य पचदशपल्योपमायुष। द्वे च वल्लभिकासहस्रे तावदायुषी, अवशिष्ट ब्रह्मेंद्रवत्। ब्रह्मोत्तरस्याभ्यतरपरिषत् समिता द्वे देवसहस्रे। चद्रा मध्या चत्वारि देवसहस्राणि। जातुर्बाह्या षड्देवसहस्राणि। अवशिष्ट ब्रह्मेंद्रपरिषद्वत्। पुष्पकाभियोग्योपि तद्वदेव। पदात्यनीकस्य प्रथमकक्षा द्वात्रिंशद्देवसहस्राणि इतरद् ब्रह्मेंद्रवत्। आत्मरक्षाश्च तद्वदेव। दक्षिणादिदिक्षु सोमादयो लोकपाला ब्रह्मेंद्रवन्नेया। ब्रह्मोत्तरविमानादूर्ध्वं बहुयोजनशतसहस्राणि उत्प्लुत्य लांतवकापिष्ठौ कल्पौ भवत। ययोर्द्वौ विमानप्रस्तारौ ब्रह्महृदयलांतवाख्यौ। तत्र लांतवविमानाद्दक्षिणश्रेण्या एकान्नविंशति विमानविरचितायां नवम कल्पविमान पूर्वोक्तपरिवार। तस्याधिपतिर्लांतवो नाम देवराज। यस्याधिकानि पचविंशतिविमानसहस्राणि। त्रयस्त्रिंशत्त्रायस्त्रिंशा देवा। चतुर्विंशति सामानिकसहस्राणि। तिस्र परिषद। सप्तानीकानि चतुर्विंशतिरात्मरक्षसहस्राणि। चत्वारो लोकपाला। शक्राग्रमहिषीसमानसंज्ञा अष्टावग्रमहिष्य सप्तदशपल्योपमायुष। प्रत्येक द्वाभ्या देवीसहस्राभ्या परिवृता। अन्यानि च वल्लभिकानां तावदायुषा पचशतानि, एकैका चाग्रमहिषी वल्लभिका च एक देवीशतसहस्र अष्टाविंशतिं च देवीसहस्राणि विकरोति। समिताभ्यतरपरिषत् एक देवसहस्र। तत्रैकैकस्य साधिकानि दशसागरोपमाणि आयु, सप्ताशीतिश्च देव्य। मध्या चद्रा द्वे देवसहस्रे। अत्रैकैकस्य देशोनानि दशसागरोपमाण्यायुष, पचसप्ततिश्च देव्य। जातुर्बाह्या चत्वारि देवसहस्राणि तत्रैकैकस्य मध्यपरिषद्देवायुष किंचिन्न्यूनमायु, त्रिषष्टिश्च देव्य। बालकाभियोग्यो बाह्यपरिषत्स-मायु, षष्टिश्चास्य देव्य। अनीकाना तन्महत्तराणा चायु मध्यमपरिषदायुष किंचिन्न्यूनमायु। सर्वेषा प्रथमकक्षा चतुर्विंशति सहस्राणि, ततो द्विगुणा द्विगुणा आ सप्तम्या, तत्रैकैकस्य देवस्य महत्तरस्य च षष्टिर्देव्य। पूर्वादिषु दिक्षु स्वयप्रभ-वरज्येष्ठ-स्वयजन-वल्गुविमानवासिन सोमादयश्चत्वारो लोकपाला। तत्रैकैकस्य च चत्वारि सामानि-

१ चातुरित्यपि पाठांतरं।

कशतानि, अर्धतृतीयानि देवीशतानि चतस्रोऽग्रमहिष्य, तिस्र परिषद, जातुपरिषत्सदृशायुर्वैश्रवण, ततो न्यूनायुर्वरुण, ततो न्यूनायुषौ सोमयमौ। सोमयमयोरभ्यन्तरपरिषद्विंशतिर्देवा, मध्या देवशत, बाह्या द्वे देवशते। वरुणस्याभ्यन्तरपरिषत्त्रिंशद्देवा। मध्या द्वे देवशते। बाह्या त्रीणि देवशतानि। वैश्रवणस्याभ्यन्तरपरिषच्चत्वारिंशद्देवा। मध्या त्रीणि देवशतानि। बाह्या चत्वारि देवशतानि। सर्वाभ्यन्तरपरिषद्देवानामायुरेकादशसागरोपमाणि। मध्यमपरिषद्देवानां तान्येव किंचिन्न्यूनानि। बाह्यपरिषद्देवानां ततोपि किंचिन्न्यूनानि। तेषां यथाक्रम पंचविंशति विंशति पंचदश देव्य। लान्तवविमानादुत्तरश्रेण्या, एकान्नविंशतिविमानविराजितायां नवम कल्पविमान पूर्वोक्तवर्णन। तस्याधिपति कापिष्ठ। यस्योनानि पंचविंशति विमानसहस्राणि। त्रयस्त्रिंशत्त्रायस्त्रिंशा देवा। द्वाविंशति सामानिकसहस्राणि। तिस्र परिषद। सप्तानीकानि। द्वाविंशतिरात्मरक्षसहस्राणि। चत्वारो लोकपाला। श्रीमत्यादयोऽष्टावग्रमहिष्य पंचशतसंख्याश्च वल्लभिका एकान्नविंशतिपल्योपमायुष। अवशिष्ट लान्तवेंद्रवत्। परिषदश्च सर्वेषामनीकाना प्रथमकक्षा द्वाविंशति सहस्राणि, इतर-लान्तवेंद्रवत्। आत्मरक्षादिविधिश्च तथैव ज्ञेय। अय तु विशेष लान्तवेंद्रजातुपरिषत्सदृशायुर्वरुण। तत ऊनायु वैश्रवण। ततोप्यूनायुषौ सोमयमौ। लान्तवविमानाद्बहूनि योजनशतसहस्राणि उत्प्लुत्य महाशुक्रो नाम विमानप्रस्तारो भवति। शुक्रमहाशुक्रौ स्त। ततो महाशुक्रविमानात् दक्षिणश्रेण्या अष्टादशविमान परिमंडितायां द्वादश कल्पविमान पूर्वोक्तपरिवार। तस्याधिपति शुक्रो नाम देवराज। यस्याधिकानि विंशति विमानसहस्राणि। त्रयस्त्रिंशत्त्रायस्त्रिंशा देवा। चतुर्दशसामानिकसहस्राणि। तिस्र परिषद। सप्तानीकानि। चतुर्दशाऽऽत्मरक्षसहस्राणि। चत्वारो लोकपाला। पद्मादयोऽष्टावग्रमहिष्य, एकैक चात्र दशभिर्देवीसहस्रै परिवृता वल्लभिकाश्च अर्धतृतीयशतसंख्या। एकैका पद्माग्रमहिषी वल्लभिका चैकविंशतिपल्योपमायुषी द्वे देवीरूपशतसहस्रे पट्पंचाशत च देवीरूपसहस्राणि विकरोति। समिताभ्यन्तरपरिषत् पंचदेवशतानि चतुर्दशसागरोपमायूंषि। तत्रैकैकस्य त्रिचत्वारिंशद्देव्य। चन्द्रा मध्या एक देवसहस्र देशोनचतुर्दशसागरोपमायु, तत्रैकैकस्याऽष्टात्रिंशद्देव्य। जातुबाह्या द्वे देवसहस्रे मध्यमपरिषदूनायुषी, अत्रैकैकस्य पंचत्रिंशद्देव्य। अनीकानां महत्तराणां च जातुवदायु। सर्वेषां प्रथमकक्षा चतुर्दशदेवसहस्राणि एकैकस्य पंचाशद्देव्य। वाहकाभियोग्योपि तावदायुर्देवीक। आत्मरक्षाश्च पूर्वादिदिक्षु स्वयप्रभ-वरज्येष्ठ-स्वयजन-वल्गुविमानवासिन सोमादयश्चत्वारो लोकपाला। धनदस्य जातुवदायु, ततोप्यूनायुर्वरुण, ततोप्यूनायुषौ सोमयमौ। तयोरभ्यन्तरपरिषदष्टदेवा। मध्या पंचाशत्। बाह्या देवशत। वरुणस्याभ्यन्तरपरिषत् त्रिंशतिर्देवा,। मध्या देवशत। बाह्या द्वे देवशते। वैश्रवणस्याभ्यन्तरपरिषद्विंशतिर्देवा। मध्या द्वे देवशते। बाह्या त्रीणि देवशतानि। सर्वाभ्यन्तरपरिषद्देवानामायु पंचदशसागरोपमाणि। मध्यपरिषद्देवानामायुस्तान्येव देशोनानि। बाह्यपरिषद्देवानामायु सार्धचतुर्दशसागरोपमाणि। तेषां यथाक्रम विंशति पंचदश दश च देव्यो भवति। महाशुक्रविमानादुत्तरश्रेण्यां अष्टादशविमानशोभितायां द्वादश कल्पविमान। तस्याधिपति महाशुक्र यस्योनानि विंशति विमानसहस्राणि। त्रयस्त्रिंशत्त्रायस्त्रिंशा देवा। द्वादशसामानिकसहस्राणि। तिस्र परिषद। सप्तानीकानि। द्वादशात्मरक्षसहस्राणि। चत्वारो लोकपाला। श्रीमत्यादयोऽष्टावग्रमहिष्य अर्धतृतीयशतसंख्याश्च वल्लभिका त्रयोविंशतिपल्योपमायुष। शेष शुक्रवत्। तिस्रोपि परिषद शुक्रवदेव वेदितव्या। अनीकाना प्रथमकक्षा द्वादशदेवसहस्राणि। शेष शुक्रवत्। आत्मरक्षाणा पुष्पकाभियोग्यस्य च तथैव विधि। दक्षिणादिषु दिक्षु सम-सर्वतोभद्र सुभद्र,-समितविमाननिवासिन सोमादयश्चत्वारो लोकपाला। शुक्रजातुपरिषत्समस्थितिर्वरुण। तत ऊनायुर्वैश्रवण ततोप्यूनायुषौ सोमयमौ शेष शुक्रवत्। महाशुक्रविमानादूर्ध्वं बहूनि योजनशतसहस्राणि उत्प्लुत्य सहस्रार एकविमानप्रस्तारो भवति। यत्र दक्षिणोत्तरौ शतारसहस्रारकल्पौ तत्र सहस्रारविमाना दक्षिणश्रेण्या सप्तदश विमानगणनाया नवक कल्पविमान। तस्याधिपति शतार नाम देवराज। यस्याधिकानि त्रीणि विमानसहस्राणि। त्रयस्त्रिंशत्त्रायस्त्रिंशा देवा। चत्वारि सामानिकसहस्राणि। तिस्र परिषद। सप्तानीकानि। चत्वारि आत्मरक्षसहस्राणि। चत्वारो लोकपाला। पद्मादयोऽष्टावग्रमहिष्य पंचविंशतिपल्योपमायुष। एकैका चात्र पंचभि देवीशते परिवृता पंचदेवीरूपशतसहस्राणि द्वादशदेवीरूपसहस्राणि विकरोति, द्विषष्टिर्वल्लभिकास्ता-

वदायुर्विक्रिया. । समितानाभ्यन्तरपरिषदर्धतृतीयानि देवशतानि साधिकषोडशसागरोपमायूंषि । तेषामेकैकस्यैक विंशतिर्देव्य । चन्द्रा मध्या पचदेवशतानि देशोनषोडशसागरोपमायूंषि तेषा, एकैकस्याऽष्टादशदेव्य. । जातुर्बाह्या एक देवसहस्र चन्द्रायुरूनायु तेषामेकैकस्य पचदशदेव्य । सर्वेषामप्यनीकानां महत्तराणां च जातुवदायु । प्रथमकक्षा चत्वारि देवसहस्राणि एकैकस्य चत्वारिंशद्देव्य । पूर्वादिदिक्षु स्वयप्रभादिविमाननिवासिन सोमादयश्चत्वारो लोकपाला । जातुपरिषत्समायुर्वैश्रवण , तत ऊनायुर्वरुण , ततोऽप्यूनायुषौ सोमयमौ । तयोरभ्यन्तरपरिषत्पचदेवा मध्या पचविंशतिर्देवा । बाह्या पचाशद्देवा । वरुणस्याभ्यन्तरपरिषद्देवा मध्या पचाशद्देवा'।बाह्या देवशत । वैश्रवणस्याभ्यन्तरपरिषत् पचदशदेवा । मध्या देवशत बाह्या द्वे देवशते । सर्वाभ्यन्तरपरिषद्देवानामायु सप्तदशसागरोपमाणि । मध्यपरिषद्देवानामायु तान्येव देशोनानि । बाह्यपरिषद्देवानामायु सार्धानि षोडशसागरोपमाणि । तेषा यथाक्रम पचदशदशपचदेव्यो भवति । सहस्रारविमानादुत्तरश्रेण्या सप्तदशविमानभूषिताया नवम कल्पविमान । तस्याधिपति सहस्रारः यस्योनानि त्रीणि विमानसहस्राणि त्रयस्त्रिंशत्त्रायस्त्रिंशा देवा , द्वे सामानिकसहस्रे, तिस्र परिषद', सप्तानीकानि, द्वे आत्मरक्ष सहस्रे, चत्वारो लोकपाला. । श्रीमत्यादयोऽष्टावग्रमहिष्य सप्तविंशतिपल्योपमायुष । शेष शतारेन्द्रवत् । परिषदात्मरक्षाऽनीकाभियोग्यवर्णना च शतारेन्द्रवत् । अय तु विशेष —अनीकाना प्रथमकक्षे द्वे देवसहस्रे । दक्षिणादिदिक्षु सम-सर्वतोभद्र-सुभद्र-समितविमाननिवासिन सोमादयश्चत्वारो लोकपाला । तेषामेकैकस्य द्वे सामानिकशते, षष्टिर्देव्य , चतस्रोऽग्रमहिष्य , तिस्र परिषद । शेष शतारेन्द्रवत् । शतारेन्द्रजातुपरिषत् सदृशायुर्वरुण । ततो न्यूनायुर्धनद । ततोऽप्यूनायुषौ सोमयमौ । शेष शतारेन्द्रवत् । सहस्रारविमानादूर्ध्वं बहूनि योजनशतसहस्राणि उत्प्लुत्य आनतप्राणताऽऽरणाच्युतकल्पा सति । तत्र षड्विमानप्रस्तारा आनत–प्राणत-पुष्पक-सातक-आरण अच्युतसज्ञाका । तत्रानतविमानाच्चतसृष्वपि दिक्षु चतस्रो विमानश्रेण्यो निर्गता । विदिक्षु पुष्पप्रकीर्णकानि । तत्रैकैकस्या विमानश्रेण्या षोडशश्रेणिविमानानि । एवमेषपरिशिष्टेषु पचसु विमानप्रस्तारेषु एकश्रेणिविमानहानिर्वेदितव्या । तत्रारणाच्युतविमानाद्दक्षिणश्रेण्या एकादशविमानविरचिताया षष्ठ कल्पविमान । तस्याधिपतिरारणो नाम देवराज यस्याधिकान्यर्धचतुर्थानि विमानशतानि, त्रयस्त्रिंशत्त्रायस्त्रिंशा देवा , दशसामानिकशतानि, तिस्र परिषद , सप्तानीकानि, दशात्मरक्षशतानि, चत्वारो लोकपाला' । पद्मादयोऽष्टावग्रमहिष्य अष्टचत्वारिंशत्पल्योपमायुष । एकैका चात्राऽर्धतृतीये देवीशते परिवृता दशदेवीरूपशतसहस्राणि विकरोति । वल्लभिकाश्च पचदश तावदायुर्विक्रिया । समिताभ्यन्तरपरिषत् पचविंशतिर्देवशत, तत्रैकैकः साधिकविंशतिसागरोपमायुर्दशदेवीक' । चन्द्रा मध्या अर्धतृतीयानि देवशतानि, तत्रैकैक देशोनविंशतिसागरोपमस्थितिरष्टदेवीक. । जातुर्बाह्या पचदेवशतानि तत्रैकैक अर्धविंशतिसागरोपमस्थिति षड्देवीक । अनीकानां प्रथमकक्षा एकदेवसहस्र । सर्वेषां देवानां तन्महत्तराणा च एकैकस्य त्रिंशद्देव्य । आत्मरक्षाणा च त्रिंशत्वाहकाभियोग्यस्य चन्द्रायुष ऊनमायु., त्रिंशद्देव्य । पूर्वादिषु दिक्षु स्वयप्रभादिविमाननिवासिन. सोमादयश्चत्वारो लोकपाला । तेषामेकैकस्य सामानिकशत । द्वात्रिंशद्देव्य । चतस्रोऽग्रमहिष्य । तिस्र परिषद । जातुसमानायुर्वैश्रवण । ततो न्यूनायुर्वरुण । ततो न्यूनायुषो सोमयमौ । तयोरभ्यन्तरपरिषत्त्रयो देवा । मध्या द्वादश । बाह्या पचविंशति । वरुणस्याभ्यन्तरपरिषत्पचदेवा । मध्या पचविंशति । बाह्या पचाशत् । वैश्रवणस्याभ्यन्तरपरिषत्षड्देवा । मध्या पचाशत् । बाह्या शत तेषा यथाक्रम एकविंशतिसागरोपमाणि तान्येव देशोनानि तान्येव चार्धोनान्यायुरवगतव्य । सप्त पच तिसृश्च देव्यो ज्ञेया । आरणाच्युतविमानादुत्तरश्रेण्या एकादशविमानभूषिताया षष्ठ कल्पविमान । तस्याधिपतिरच्युतो नाम देवराज । यस्योनान्यर्धचतुर्थानि विमानशतानि । त्रयस्त्रिंशत्त्रायस्त्रिंशा देवा । दश सामानिकशतानि । तिस्र परिषद । सप्तानीकानि । दश आत्मरक्षशतानि । चत्वारो लोकपाला । श्रीमत्यादयोऽष्टावग्रमहिष्य पचपचाशत्पल्योपमायुष , वल्लभिकाश्च पचदश तावदायुष , अवशिष्ट-आरणेन्द्रवत् । परिषदादिविधिश्च तथैव नेय । अय तु विशेष वरुणोऽधिकायु । ततो न्यूनायुर्धनद । ततोऽप्यूनायुषौ सोमयमौ । त एते लोकानुयोगापदेशेन चतुर्दशेन्द्रा उक्ता' ।

पूर्वोक्तेन क्रमेण ब्रह्मोत्तरकापिष्ठमहाशुक्रसहस्रारेन्द्राणा दक्षिणेन्द्रानुवर्तित्वात् आन.

त्वात्। सौधर्मविमानसंख्या प्रागुक्ता । ऐशानेऽष्टाविंशतिर्विमानशतसहस्राणि। श्रेणिविमानानि चतुर्दशशतानि सप्तपंचाशानि । पुष्पप्रकीर्णकानां सप्तविंशतिः शतसहस्राणि अष्टनवतिः सहस्राणि पंचशतानि त्रिचत्वारिंशानि । सानत्कुमारे द्वादशविमानशतसहस्राणि श्रेणिविमानानां पंचशतानि पंचनवत्यधिकानि प्रकीर्णकानां एकादशशतसहस्राणि नवनवतिः सहस्राणि चत्वारि शतानि पंचोत्तराणि । माहेंद्रेऽष्टौ विमानशतसहस्राणि श्रेणिविमानानां, एकं शतं पण्णवत्यधिकं, प्रकीर्णकानां सप्तशतसहस्राणि नवनवतिसहस्राणि अष्टौ शतानि चतुरुत्तराणि । ब्रह्मलोकब्रह्मोत्तरकल्पयोः चत्वारि विमानशतसहस्राणि श्रेणिविमानानां त्रीणि शतानि चतुःषष्ठ्यधिकानि । प्रकीर्णकानां त्रीणि शतसहस्राणि नवनवतिः सहस्राणि । षट्छतानि षट्त्रिंशानि । लांतवकापिष्ठयोः पंचाशत्सहस्राणि श्रेणिविमानानां शतं अष्टपंचाशं प्रकीर्णकानामेकान्नपंचाशत्सहस्राणि अष्टौ शतानि द्विचत्वारिंशानि । शुक्रमहाशुक्रयोः चत्वारिंशत्सहस्राणि श्रेणिविमानानां त्रिसप्ततिः । प्रकीर्णकानां एकान्नचत्वारिंशत्सहस्राणि नवशतानि सप्तविंशानि । शतारसहस्रारकल्पयोः षड्विमानसहस्राणि श्रेणिविमानानां एकान्नसप्ततिः ।प्रकीर्णकानां एकान्नषष्टिशतानि एकत्रिंशानि। आरणाच्युतकल्पयोः सप्तविमानशतानि श्रेणिविमानानां त्रीणि शतानि त्रिंशानि। प्रकीर्णकानां त्रीणि शतानि सप्तत्यधिकानि । चतुर्दशस्वपि कल्पविमानेषु विमानसंख्या चतुरशीतिः शतसहस्राणि पण्णवतिः सहस्राणि सप्त च विमानशतानि, आरणाच्युतविमानादूर्ध्वं बहूनि योजनशतसहस्राण्युत्प्लुत्य संति । तत्राधोग्रैवेयकविमानानि, येषु त्रयो विमानप्रस्ताराः सुदर्शनामोघसुप्रबुद्धाः । तत्र सुदर्शनेंद्रकाच्चतसृष्वपि दिक्षु चतस्रो विमानश्रेण्यः । तत्रैकैकस्या विमानश्रेण्या दश विमानानि । सुदर्शनादूर्ध्वं बहूनि योजनशतसहस्राणि-उत्प्लुत्याऽस्ति अमोघो नाम विमानप्रस्तारः । अत्रापि चतसृष्वपि दिक्षु चतस्रो विमानश्रेण्यो निर्गताः अत्रैकस्यां विमानश्रेण्यां नवविमानानि। अमोघादूर्ध्वं बहूनि योजनशतसहस्राणि उत्प्लुत्य अस्ति सुप्रबुद्धो नामा विमानप्रस्तारः । अत्रापि चतसृष्वपि दिक्षु चतस्रो विमानश्रेण्यो विनिर्गताः । एकैकस्या विमानश्रेण्या अष्टौ विमानानि, त्रिष्वप्येतेषु पुष्पप्रकीर्णकविमानानि न संति । तान्येकादशोत्तरविमानं शतं सुप्रबुद्धविमानादूर्ध्वं बहूनि योजनशतसहस्राणि उत्प्लुत्य संति । तत्र मध्यमग्रैवेयकविमानानि येषु त्रयः प्रस्ताराः यशोधरसुभद्रविशालाः, पूर्ववदत्रापि एकैकश्रेणिविमानहान्या पंचसप्ततिः श्रेणिविमानानि, पुष्पप्रकीर्णकानि द्वात्रिंशत्, तान्येतानि सप्तोत्तरं शतं सुविशालविमानादूर्ध्वं बहूनि योजनशतसहस्राणि उत्प्लुत्य संति । तत्रोपरिमग्रैवेयकविमानानि येषु त्रयः प्रस्ताराः सुमनाः सौमनाः प्रीतिंकर इति पूर्ववदत्राप्येकैकविमानहान्या एकान्नचत्वारिंशत् श्रेणिविमानानि द्वापंचाशत्पुष्पप्रकीर्णकानि, तान्येतानि समुदितानि एकनवतिर्विमानानां प्रीतिंकरविमानादूर्ध्वं बहूनि योजनशतसहस्राणि उत्प्लुत्य संति । तत्राऽनुदिशविमानानि येष्वेक एवाऽऽदित्यो नाम विमानप्रस्तारः तत्र दिक्षु विदिक्षु चत्वारि चत्वारि श्रेणिविमानानि। प्राच्यां दिशि अर्चिर्विमानं, अपाच्यामर्चिमाली, प्रतीच्यां वैरोचनं, उदीच्यां प्रभासं, मध्ये आदित्याख्यं । विदिक्षु पुष्पप्रकीर्णकानि चत्वारि । पूर्वदक्षिणस्यां मर्चिप्रभं। दक्षिणापरस्यां अर्चिर्मध्यं । अपरोत्तरस्यां अर्चिरावर्तं।उत्तरपूर्वस्यामर्चिर्विशिष्टं। तान्येतानि नवादित्यविमानादूर्ध्वं बहूनि योजनशतसहस्राणि-उत्प्लुत्य संति । तत्रानुत्तरविमानानि यत्रैकः एव सर्वार्थसिद्धिसंज्ञो विमानप्रस्तारः । दिक्षु प्रदक्षिणानि विजयवैजयंतजयंतापराजितविमानानि चत्वारि मध्ये सर्वार्थसिद्धिसंज्ञं, पुष्पप्रकीर्णकानि न संति ।सौधर्मैशानयोर्विमानानि सप्तविंशैकयोजनशतबाहुल्यानि पंचयोजनशतोच्छ्रायाणि । सानत्कुमारमाहेंद्रयोर्ब्रह्मलोकब्रह्मोत्तरलांतवकापिष्ठेषु शुक्रमहाशुक्रशतारसहस्रारेषु आनतप्राणताऽऽरणाऽच्युतेषु नवसु ग्रैवेयकेषु अनुदिशाऽनुत्तरेषु च विमानानां बाहुल्यमेकैकयोजनविहीनं । उच्छ्रायश्च एकैकयोजनशताधिको यथाक्रमं वेदितव्यः । तान्येतानि श्रेणींद्रप्रकीर्णकविमानानि कानिचित् संख्येययोजनविस्ताराणि कानिचिदसंख्येययोजनविस्ताराणि । यानि संख्येयविस्ताराणि तानि संख्येययोजनशतविस्ताराणि यान्यसंख्येयविस्ताराणि तानि, असंख्येययोजनशतसहस्रविस्ताराणि । सौधर्मैशानयोर्विमानानि पंचवर्णानि कृष्णनीलरक्तहारिद्रशुक्लवर्णानि । सनत्कुमारमाहेंद्रयोश्चतुर्वर्णानि कृष्णहीनानि । ब्रह्मलोकब्रह्मोत्तरलांतवकापिष्ठेषु त्रिवर्णानि विमानानि कृष्णनीलवर्जितानि । शुक्रमहाशुक्रशतारसहस्राराऽऽनतप्राण–

ताराणाच्युतेषु द्विवर्णानि विमानानि हारिद्रशुक्लवर्णानि । ग्रैवेयकानुदिशानुत्तरविमानानि शुक्लवर्णान्येव, परमशुक्लं सर्वार्थसिद्धिविमानं । एषामधिकृतानां वैमानिकानां देवानां परस्परतो विशेषप्रतिपत्त्यर्थमाह—

## स्थितिप्रभावसुखद्युतिलेश्याविशुद्धीन्द्रियावधिविषयतोऽधिकाः ॥२०॥

**स्वोपात्तायुष उदयात् स्थानं स्थितिः ॥ १ ॥** स्वेनोपात्तस्य देवायुष उदयात्तस्मिन्भवे तेन शरीरेण स्थानं स्थितिरुच्यते ।

**शापानुग्रहलक्षणः प्रभावः ॥ २ ॥** शापोऽनिष्टापादनं, अनुग्रह इष्टप्रतिपादनं तल्लक्षणः, प्रवृद्धो भावः प्रभाव इत्याख्यायते ।

**सद्वेद्योदये सति इष्टविषयानुभवनं सुखं ॥ ३ ॥** सद्वेद्योदयमूलहेतौ सति बाह्यस्येष्टविषयस्य उपनिपाते तद्विषयमनुभवनं सुखमिति कथ्यते ।

**शरीरवसनाभरणादिदीप्तिर्द्युतिः ॥ ४ ॥** शरीरस्य वसनस्याऽऽभरणादीनां च दीप्तिः द्युतिरिति उपाख्यायते ।

**लेश्याशब्द उक्तार्थः ॥५॥** लेश्याशब्द उक्तार्थ एव वेदितव्यः लेश्याया विशुद्धिः लेश्याविशुद्धिः ।

**इंद्रियावधिभ्यां विषयाभिसंबंधः ॥ ६ ॥** विषयशब्दस्य इन्द्रियावधिभ्यामभिसंबन्धो भवति । इन्द्रियं चाऽवधिश्च इन्द्रियावधी तयोर्विषय इन्द्रियावधिविषय इति ।

**इतरथा हि तदाधिक्यप्रसंगः ॥ ७ ॥** अक्रियमाणे ह्येनमभिसंबन्धे उपर्युपरि देवेषु इन्द्रियाणामाधिक्यं प्रसज्येत ।

**स्थितिग्रहणमादौ तत्पूर्वकत्वादितरेषां ॥ ८ ॥** स्थितिग्रहणमादौ क्रियते तत्पूर्वकत्वादितरेषां प्रभावादीनां । स्थितिमतां हि प्रभावादयो नाऽस्थितस्येति ।

**तेभ्यस्तैर्वाऽधिका इति तसिः ॥ ९ ॥** तेभ्यः स्थित्यादिभ्यः अधिका इति 'अपादानेऽहीयरुहोरिति'[1] तसिः । तैर्वाधिका इति तसिप्रकरणे 'आद्यादिभ्य उपसंख्यानमिति तसिः' उपर्युपरि वैमानिका इत्यनुवर्तते तेनैवमभिसंबध्यते उपर्युपरि वैमानिकाः प्रतिकल्पं प्रति प्रस्तारं च स्थित्यादिभिरधिका इति । तत्र स्थितिः उत्कृष्टा जघन्या च । सा उपरिष्टाद्वक्ष्यते । इह तु वचनं येषां समा भवति तेषामपि गुणतोऽधिकत्वज्ञापनार्थं । यः प्रभावः सौधर्मकल्पदेवानां निग्रहानुग्रहविक्रियापराभियोगादिषु, उपर्युपरि ततोऽनन्तगुणः । मदाभिमानतया अल्पसंक्लिष्टत्वाच्च न प्रवर्तते । एवं सुखादयोपि प्रत्येतव्याः । लेश्यानियमः उपरि वक्ष्यते इह तु वचनं यत्र विधानं समानं तत्रापि कर्मविशुद्धितोधिका भवति इति प्रतिपादनार्थं । यथा स्थित्यादिभिरुपर्यधिका एवं गत्यादिभिरपि इत्यतिप्रसंगे तन्निवृत्त्यर्थमाह—

## गतिशरीरपरिग्रहाभिमानतो हीनाः ॥२१॥

**देशांतरप्राप्तिहेतुर्गतिः ॥ १ ॥** उभयनिमित्तवशात् उत्पद्यमानः कायपरिस्पंदो गतिरित्युच्यते ।

**शरीरमुक्तलक्षणं ॥ २ ॥** औदारिकवैक्रियिकाऽऽहारकतैजसकार्मणानि शरीराणि, इत्यत्र शरीरमुक्तलक्षणं ।

**लोभकषायोदयान्मूर्छा परिग्रहः ॥ ३ ॥** लोभकषायवेदनीयस्य उदयान्मूर्छासंकल्पः परिग्रह इत्याख्यायते ।

**मानकषायोदयापादितोभिमानः ॥ ४ ॥** मानकषायवेदनीयस्य उदयापादितोऽहंकारः अभिमान इति कथ्यते । गतिश्च शरीरंच परिग्रहश्च अभिमानश्च गतिशरीरपरिग्रहाभिमाना ते गतिशरीरपरि-

---

१ जैनेन्द्रीयसूत्र । २ विग्रहादिरिति भाव ।

महाभिमानत । तसिप्रकरणे 'आद्यादिभ्य उपसख्यान, इति तसि । यदि हि अपादानविवक्षा स्यात् अहीयरुहोरिति प्रतिषेध स्यात् ।

**गतिग्रहणमादौ लक्षणद्वययोगात् ॥ ५ ॥** गतिग्रहणमादौ क्रियते कुत ? लक्षणद्वययोगात् द्वंद्वे सुधिस अल्पाच्तर, इति ॥

**ततः शरीरग्रहणं तस्मिन् सति परिग्रहोपपत्ते ॥ ६ ॥** तत पर शरीरग्रहण क्रियते कुत ? तस्मिन् सति परिग्रहोपपत्ते । सति शरीरे परिग्रहो ममेद बुद्धिरुपजायते ।

**तद्वत्त्वेपि केवलिन परिग्रहेच्छाभाव इति चेन्न देवाधिकारात् ॥७॥** स्यादेतत्-शरीरवत्त्वेपि केवलिन ममेदमिति सकल्पो न विद्यते ततोऽय हेतुर्व्यभिचार इति तन्न, किं कारण ? देवाधिकारात् । देवा हि रागादिमत -अधिकृता , तेषामवश्य सति शरीरे परिग्रहाभिलाषेण भवितव्यमिति नास्ति व्यभिचार ।

**तन्मूलत्वात्तदनतरमभिमानगृहण ॥ ८ ॥** परिग्रहमूलो हि लोकेऽभिमानो दृष्ट ततोस्य तदनतर ग्रहण क्रियते । उपर्युपरात्यनुवर्तते तेनोपर्युपरि देवाना उक्ता गत्यादयो हीना वेदितव्या । तद्यथा-सौधर्मैशानयोर्देवा क्रीडादिनिमित्ता गतिं महाविषयत्वेन मुहुर्मुहुर्वृत्त्या वाऽधिकामास्कदति न तथोपरि देवा विषयाभिष्वगोद्रेकाभावात । ततस्तन्निमित्ता गतिरपि क्रमेण हीयते । शरीरमपि सौधर्मैशानयोर्देवानां सप्तारत्निप्रमाण । सनत्कुमारमाहेंद्रयो षडरत्निप्रमाण । ब्रह्मलोकब्रह्मोत्तरलातवकापिष्ठेषु पचारत्नि । शुक्रमहाशुक्रशतारसहस्रारेषु च चतुररत्नि । आनतप्राणतयोरर्धचतुर्थारत्नि । आरणाच्युतयोररत्नित्रितयप्रमाण । अधोग्रैवेयकेषु अर्धतृतीयारत्नि, मध्यमग्रैवेयकेषु अरत्निद्वयमात्र, उपरिमग्रैवेयकेषु अनुदिशविमानेषु च अध्यर्धारत्नि , अनुत्तरेष्वरत्निप्रमाणमात्र । परिग्रहोपि विमानपरिवारादिलक्षण उपर्युपरि हीन इत्युक्त पुरस्तात् । कुत पुनरुपर्युपरि परिग्रहाभिमानहानिरित्युच्यते—

**प्रतनुकषायत्वाल्पसक्लेशावधिविशुद्धितत्त्वावलोकनसवेगपरिणामानामुत्तरोत्तराधिक्याद भिमानहानिः ॥ ९ ॥** प्रतनुकषायत्वादल्पसक्लेशो भवति, ततोऽवधिविशुद्धिर्जायते, सक्लेशवशादवधिर्हीयत इत्युक्त पुरस्तात् । ततोऽवधिविशुद्धे उपर्युपरि देवा शारीरमानसदु खपरीतान् नारकतैर्यग्योनमानुषान् प्रकर्षेणाऽवलोकयति । ततस्तन्निमित्तसवेगपरिणाम ससाराद्भीरुता, उपजायते । ततो दु खहेतुषु दुरतेषु परिग्रहेषु अभिमानो हीयते । किं च—

**विशुद्धपरिणामप्रकर्षनिमित्तत्वाच्च उपर्युपर्युपपत्तेः ॥ १० ॥** इह विशुद्धपरिणामभेदनिमित्त पुण्यकर्मबधविकल्प , तत्पूर्वको देवेषु उपपाद इति उपर्युपरि अभिमानहानि । कारणसदृश हि कार्यं दृष्टमिति । तद्यथा—तैर्यग्योनेषु असज्ञिन पर्याप्ता पचेंद्रिया सख्येयवर्षायुष , अल्पशुभपरिणामवशेन पुण्यबधमनुभूय भवनवासिषु व्यतरेषु च उत्पद्यते । त एव सज्ञिनो मिथ्यादृष्टय , सासादनसम्यग्दृष्टयश्चाऽऽसहस्रारादुत्पद्यते त एव सम्यग्दृष्टय सौधर्मादिषु अच्युतातेषु जायते । असख्येयवर्षायुष , तिर्यङ्मनुष्या मिथ्यादृष्टय सासादनसम्यग्दृष्टयश्च आ ज्योतिष्केभ्य उपजायते । तापसाश्चोत्कृष्टा त एव सम्यग्दृष्टय सौधर्मैशानयोर्जन्मानुभवति । मनुष्या सख्येयवर्षायुष मिथ्यादर्शना सासादनसम्यग्दर्शनाश्च भवनवासिप्रभृतिषूपरिमग्रैवेयकातेषु उपपादमास्कदति । परिव्राजकाना देवेषूपपाद आ ब्रह्मलोकात् । आजीवकाना आ सहस्रारात् । तत ऊर्ध्वमन्यलिंगानां नास्त्युपपाद । निर्ग्रंथलिंगधराणामेव-उत्कृष्टतपोनुष्ठानोपचितपुण्यबधाना । असम्यग्दर्शनानामुपरिमग्रैवेयकातेषु उपपाद तत ऊर्ध्वं सम्यग्दर्शनज्ञानचरणप्रकर्षोपेतानामेव जन्म नेतरेषा । श्रावकाणा सौधर्मादिष्वच्युतातेषु जन्म नाधो नोपरीति परिणामविशुद्धिप्रकर्षयोगादेव कल्पस्थानातिशये योगोवसेय । पुरस्तात्त्रिषु निकायेषु देवानां लेश्याविधिरुक्त इदानीं वैमानिकेषु लेश्याविधिप्रतिपत्त्यर्थमाह—

१ जैनेंद्रीय सूत्र ।

## पीतपद्मशुक्ललेश्या द्वित्रिशेषेषु ॥ २२ ॥

किमर्थं पृथग्लेश्याविधान क्रियते ननु यत्रैवान्यो लेश्याविधि तत्रैवेद वक्तव्य ? अत उत्तर पठति—

**पृथग्लेश्याभिधानं लघ्वर्थं ॥ १ ॥** पृथग्लेश्याभिधान क्रियते लध्वर्थं तत्र हि पाठे क्रियमाणे वैमानिकाना स्वामिना भेदेन निर्देश कर्तव्य स्यात्। अथ कोऽय निर्देश ? पीतपद्मशुक्ललेश्या इति। पीता च पद्मा च शुक्ला च पीतपद्मशुक्ला ता लेश्या येषा त इमे पीतपद्मशुक्ललेश्या इति। यद्येव द्वंद्वे पुंवद्भावात् निर्देशो नोपपद्यते ? नैष दोष औत्तरपदिक ह्रस्वत्व, यथाकार्यनिपरिणामाद्वा सिद्ध। "द्रुताया तपरकरणे मध्यमविलंबितयोरुपसख्यानमि" त्यत्रौत्तरपदिक ह्रस्वत्वमेवमिहापि वेदितव्य।

तत्र कस्य का लेश्या इत्यत्रोच्यते—

**सौधर्मैशानीयाः पीतलेश्याः ॥ २ ॥** सौधर्मैशानीया देवा पीतलेश्या द्रष्टव्या।

**सानत्कुमारमाहेंद्रीयाः देवाः पीतपद्मलेश्याः ॥ ३ ॥** सनत्कुमारे माहेंद्रे च देवा पीतपद्मलेश्या' प्रत्येतव्या।

**ब्रह्मलोकब्रह्मोत्तरलांतवकापिष्ठेषु पद्मलेश्याः ॥ ४ ॥** चतुर्ष्वेषु देवा पद्मलेश्या द्रष्टव्या.।

**शुक्रमहाशुक्रशतारसहस्रारेषु पद्मशुक्ललेश्याः ॥ ५ ॥** चतुर्ष्वेषु देवा पद्मशुक्ललेश्या विज्ञेया।

**आनतादिषु शेषेषु देवाः शुक्ललेश्याः ॥६॥** आनतादिषु शेषेषु देवा शुक्ललेश्या. प्रत्येतव्या। तत्राप्यनुदिशानुत्तरेषु परमशुक्ललेश्याः।

**शुद्धमिश्रलेश्याविकल्पानुपपत्तिः सूत्रेऽनभिधानादिति चेन्न मिश्रयोरन्यतरग्रहणात् यथा लोके ॥७॥** स्यान्मत-उक्तो लेश्याविकल्प. शुद्धो मिश्रश्च नोपपद्यते, कुत ? सूत्रेऽनभिधानात् इति तन्न, किंकारण ? मिश्रयोरन्यतरग्रहणात्, यथालोके। तद्यथा—छत्रिणो गच्छन्तीत्यछत्रिष्वपि छत्रिव्यपदेश एवमिहापि मिश्रयोरप्यन्यतरग्रहणेन ग्रहण भवति इति पीतपद्मलेश्या पूर्वग्रहणेन परग्रहणेन वा गृह्यते, एव पद्मशुक्ललेश्या अपीति नास्ति दोष।

**द्वित्रिशेषग्रहणादग्रहणमिति चेन्नेच्छातः संबंधोपपत्तेः ॥ ८ ॥** स्यान्मतमेवमपि ग्रहण नोपपद्यते कुत ? द्वित्रिशेषग्रहणात् सूत्रे ह्येव पठ्यते द्वयो पीतलेश्या, त्रिषु पद्मलेश्या, शेषेषु शुक्ललेश्या इति तच्चानिष्टमिति, तन्न किं कारण ? इच्छात सबधोपपत्ते। एव हि सबध क्रियते द्वयो कल्पयुगलयो पीतलेश्या, सानत्कुमारमाहेंद्रयो पद्मलेश्याया अविवक्षात। ब्रह्मलोकादिषु त्रिषु कल्पयुगलेषु पद्मलेश्या शुक्रमहाशुक्रयो शुक्ललेश्याया अविवक्षात। शेषषु शतारादिषु शुक्ललेश्या पद्मलेश्याया अविवक्षात, इति नास्त्यार्षविरोध।

**पाठांतराश्रयाद्वा ॥ ९ ॥** अथवा पाठांतरमाश्रियते किं पुन तत् पीतमिश्रपद्ममिश्रशुक्ललेश्या ? द्विद्विचतुश्चतु शेषेष्विति, ततो न कश्चिदार्षविरोध.।

**निर्देशवर्णपरिणामसंक्रमकर्मलक्षणगतिस्वामित्वसाधनसंख्याक्षेत्रस्पर्शनकालांतरभावाल्पबहुत्वैश्च साध्या लेश्याः ॥ १० ॥** एतैर्निर्देशादिभि षोडशभिरनुयोगद्वारै लेश्या साधयितव्या। तत्र निर्देशस्तावत्—कृष्णलेश्या नीललेश्या कपोतलेश्या तेजोलेश्या पद्मलेश्या शुक्ललेश्या चेति। वर्णो भ्रमरमयूरकंठकपोततपनीयपद्मशंखवर्णा यथाक्रम लेश्या। वर्णांतरमासां अनतविकल्प, एकद्वित्रिचतु सख्येयाऽसख्येयाऽनतकृष्णगुणयोगात् कृष्णलेश्याऽनतविकल्पा। एवमितरा अपि। परिणाम —सख्येयलोकप्रदेशप्रमाणेषु असख्येयगुणेषु कषायोदयस्थानेषु उत्कृष्टमध्यमजघन्यांशकेषु सक्लेशहान्या परिणामात्मन अशुभास्तिस्र कृष्णनीलकपोतलेश्या' परिणमते तथा जघन्यमध्यमोत्कृष्टांशकेषु विशुद्धिवृद्ध्या तिस्र शुभा तेज' पद्मशुक्ललेश्या परिणमते। तथोत्कृष्टमध्यमजघन्यांशकेषु विशुद्धिहान्या तिस्र शुभा परिणमते। तथा जघन्यमध्य मोत्कृष्टांशेषु सक्लेशविवृद्ध्या तिस्र, अशुभा परिणमते। एकैका चात्र लेश्या असख्येयलोकप्रदेशप्रमाण

यते । मध्यमकृष्णनीलकपोततेजोलेश्यांशकपरिणामात् भवनवासिव्यंतरज्योतिष्कपृथिव्यबुवनस्पतीन् व्रजति । मध्यमकृष्णनीलकपोतलेश्यांशकपरिणामात् तेजोवायुकायिकेषु जायते । देवनारका स्वलेश्याभि तिर्यङ्मनुष्यानुयोग्याना याति । स्वामित्वमुच्यते —रत्नप्रभाशर्कराप्रभयो नारका कपोतलेश्या । वालुकाप्रभाया नीलकपोतलेश्या । पंकप्रभाया नीललेश्या । धूमप्रभायां नीलकृष्णलेश्या । तम प्रभाया कृष्णलेश्या । महातम प्रभाया परमकृष्णलेश्या । भवनवासिव्यंतरज्योतिष्का कृष्णनीलकपोततेजोलेश्या । एकद्वित्रिचतुरिंद्रिया सक्लिष्टत्रिलेश्या । असज्ञिपचेंद्रियतिर्यंच सक्लिष्टचतुर्लेश्या । सज्ञिपचेंद्रियतिरश्चां मनुष्याणा च मिथ्यादृष्टिसासादनसम्यग्दृष्टिसम्यङ्मिथ्यादृष्ट्यसयतसम्यग्दृष्टीना षडपि लेश्या । सयतासयतप्रमत्तसयताऽप्रमत्तसयताना तिस्र शुभा* । अपूर्वकरणादीना सयोगकेवल्यताना शुक्ललेश्यैव । अयोगकेवलिनोऽलेश्या । सौधर्मैशानीया तेजोलेश्या । सानत्कुमारमाहेंद्रीया तेज पद्मलेश्या । ब्रह्मब्रह्मोत्तरलातवकापिष्ठेषु देवा पद्मलेश्या । शुक्रमहाशुक्रशतारसहस्रारेषु पद्मशुक्ललेश्या । आनतादिष्वासर्वार्थसिद्धात् शुक्ललेश्या । सर्वार्थसिद्धा परमशुक्ललेश्या । साधनमुच्यते–द्रव्यलेश्या नामकर्मोदयनिमित्ता । भावलेश्या कषायोदयक्षयोपशमप्रशमप्रक्षयकृता । सख्या कथ्यते—कृष्णनीलकापोतलेश्या एकशो द्रव्यप्रमाणेनाऽनताऽनता । अनतानताभिरुत्सर्पिण्यवसर्पिणीभिर्नापह्रियते कालेन । क्षेत्रेणाऽनतानतलोकास्तेजोलेश्या । द्रव्यप्रमाणेन ज्योतिर्देवा, साधिका पद्मलेश्या । द्रव्यप्रमाणेन सज्ञिपचेंद्रियतिर्यग्योनीना सख्येयभागा शुक्ललेश्या पल्योपमस्याऽसख्येयभागा । क्षेत्रमुच्यते—कृष्णनीलकापोतलेश्या एकश स्वस्थानसमुद्घातोपपादे सर्वलोके वर्तते । तेज पद्मलेश्या एकश स्वस्थानसमुद्घातोपपादैकलोकस्याऽसख्येयभागे शुक्ललेश्या स्वस्थानोपपादाभ्या लोकस्यासख्येयभागे समुद्घातेन लोकस्यासख्येयभागे 'असख्येयेषु भागेषु' सर्वलोके वा । स्पर्शनमुच्यते—कृष्णनीलकापोतलेश्यै स्वस्थानसमुद्घातोपपादे सर्वलोक स्पृष्ट । तेजोलेश्यै स्वस्थानेन लोकस्यासख्येयभाग, अष्टौ चतुर्दशभागा वा देशोना । समुद्घातेन लोकस्याऽसख्येयभाग —अष्टौ नव चतुर्दशभागा वा देशोना । उपपादेन लोकस्यासख्येयभागा अध्यर्धचतुर्दशभागा वा देशोना । पद्मलेश्यै स्वस्थानसमुद्घाताभ्या लोकस्याऽसख्येयभाग अष्टौ चतुर्दशभागा वा देशोना । उपपादेन लोकस्यासख्येयभाग पचचतुर्दशभागा वा देशोना । शुक्ललेश्यै- स्वस्थानोपपादाभ्या लोकस्यासख्येयभाग, स्पृष्ट षट्चतुर्दश भागा वा देशोना । समुद्घातेन लोकस्याऽसख्येयभाग षट्चतुर्दशभागा वा देशोना, असख्येया वा भागा सर्वलोको वा । काल उच्यते—कृष्णनीलकपोतलेश्याना एकश जघन्येनाऽमुहूर्त, उत्कर्षेण त्रयस्त्रिंशत्सागरोपमाणि साधिकानि सप्तदशसागरोपमाणि साधिकानि सप्तसागरोपमाणि साधिकानि । तेज पद्मशुक्ललेश्यानामेकश कालो जघन्येन, अतमुहूर्त, उत्कर्षेण द्वे सागरोपमे साधिके अष्टादश सागरोपमाणि साधिकानि त्रयस्त्रिंशत्सागरोपमाणि साधिकानि । अतरमभिधीयते—कृष्णनीलकपोतलेश्याना–एकश अतर जघन्येनातर्मुहूर्त, उत्कर्षेण त्रयस्त्रिंशत्सागरोपमाणि साधिकानि । तेज पद्मशुक्ललेश्यानामेकश, अतर जघन्येनाऽतर्मुहूर्त, उत्कर्षेणानत कालोऽसख्येया पुद्गलपरिवर्ता । भावो व्याख्यायते षडपि लेश्या औदयिकभावा शरीरनाममोहनीयकर्मोदयापादितत्वात् । अल्पबहुत्व वक्ष्यते—सर्वत स्तोका शुक्ललेश्या पद्मलेश्या असख्येयगुणा अलेश्या अनतगुणा कपोतलेश्या अनतगुणा नीललेश्या विशेषाधिका कृष्णलेश्या विशेषाधिका । आह—कल्पोपपन्ना इत्युक्त तत्रेद न ज्ञायते के कल्पा ? इत्यत्रोच्यते—

## प्राग्ग्रैवेयकेभ्यः कल्पाः ॥२३॥

इद न ज्ञायते कुत आरभ्य कल्पा भवति इति सौधर्मादिग्रहणमनुवर्तते तेनायमर्थो लभ्यते सौधर्मादय कल्पा इति । यद्येव तदनतरमेवेद वक्तव्य ? अत उत्तर पठति—

**सौधर्मादनतर कल्पाभिधाने व्यवधानप्रसगः ॥ १ ॥** यदि सौधर्मादनतर कल्पाभिधान क्रियते व्यवधान प्रसज्येत । कस्य ? स्थितिप्रभावादिसूत्रत्रयस्य । सति च व्यवधाने तेन निर्धार्यमानोऽर्थ

१ नाय पाठो ग पुस्तके ।

फलेष्वेव स्यात् अनंतरत्वात् ग्रैवेयकादिषु न स्यात् व्यवहितत्वात्। इह पुन पाठे सति स्थित्यादिविशेष विधिरविशेषेण सिद्धो भवति। अथ के कल्पातीता ?

**कल्पातीतसिद्धिः परिशेषात् ॥ २ ॥** कल्पातीतानां सिद्धिर्भवति। कुत ? परिशेषात् परिशिष्टा अमी ग्रैवेयकादयोऽनुत्तराता ।

**भवनवास्याद्यतिप्रसंग इति चेत् उपर्युपरीत्याभिसंबंधात् ॥ ३ ॥** स्यादेतत् परिशिष्टा यदि कल्पातीता भवनवास्यादीनामपि वैमानिकत्वमपि प्रसज्येत इति, किंकारणं ? उपर्युपरीत्यभिसंबंधात्। उपर्युपरि वैमानिका नाधस्तात् इति, तेन कल्पातीता अहमिंद्रा एव। कथ पुनस्तेषामहमिंद्रत्व ? सामानिकादि विकल्पाभावात्।

**चतुर्णिकायोपदेशानुपपत्ति षट्सप्तप्रसंगादिति चेन्न तत्रैवांतर्भावात् लौकांतिकवत् ॥४॥** स्या मत चत्वारो देवनिकाया इत्युपदेशो नोपपद्यते इति। कुत ? षट्सप्तप्रसंगात्। षण्णिकाया सभवात भवन पातालव्यंतरज्योतिष्ककल्पविमानाधिष्ठानात्। भवनवासिनो दशविधा उक्ता । पातालवासिनो लवणोदादि समुद्रावासा सुस्थितप्रभासादय । व्यंतरा अनावृतप्रियदर्शनादय जंबूद्वीपाधिपतय । ज्योतिष्का पंचविधा व्याख्याता। कल्पोपपन्ना द्वादश वर्णिता । विमानानि ग्रैवेयकादीनि उपदिष्टानि। अथवा सप्तदेवनिकाया त एवाऽऽकाशोपपन्नै सह, आकाशोपपन्नाश्चत्वारद्दशविधा पांशुतापि-लवणतापि-तपनतापि-भवनतापि-सोम-कायिक-यमकायिक-वरुणकायिक-वैश्रवणकायिक-पितृकायिक-अनलकायिक रिष्टक-अरिष्ट-संभवा इति तन्न किं-कारण ? तत्रैवांतर्भावात्, लौकांतिकवत्। यथा लौकांतिकाना कल्पवासिष्वंतर्भावात् न निकायांतरत्व। तथा पातालवासिना आकाशोपपन्नाना व्यंतरेष्वंतर्भावात्, कल्पवासिनां च वैमानिकत्वात् न निकायांतरत्वं। इति नास्ति चातुर्विध्यहानि । आह य एते दृष्टांतत्वेनोपात्ता लौकांतिकास्ते कस्मिन् कल्पे भवतीत्यत्रोच्यते।

## ब्रह्मलोकालया लौकांतिकाः ॥ २४ ॥

**एत्य तस्मिल्लीयत इत्यालयः ॥ १ ॥** *यत्र प्राणिन एत्य लीयते स आलयो निवास इत्यर्थ* ब्रह्मलोक आलयो येषा ते ब्रह्मलोकालया ।

**सर्वब्रह्मलोकदेवानां लौकांतिकत्वप्रसंग इति चेन्न लोकांतोपश्लेषात् ॥ २ ॥** स्यादेतद्ब्रह्म-लोकालया इत्यविशेषाभिधानात्तेषा सर्वेषा लौकांतिकत्व प्रसज्येत इति ? तन्न किंकारण ? लोकांतोपश्लेषात् ब्रह्मलोकस्यांतो लोकांत तस्मिन् भवा लौकांतिका । अथवा जातिजरामरणाकीर्णो लोक तस्यांतो लोकांत तत्प्रयोजना लौकांतिका , ते हि परीतससारा ततश्च्युता एक गर्भवास-अवाप्य परिनिर्यांति। तेषा सामा-न्येनोपदिष्टाना भेदप्रदर्शनार्थमिदमुच्यते—

## सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधारिष्टाश्च ॥२५॥

**क इमे सारस्वतादय ?**

**पूर्वोत्तरादिषु दिक्षु यथाक्रम सारस्वतादयः ॥ १ ॥** पूर्वोत्तरादिषु अष्टासु अपि दिक्षु यथा क्रममेते सारस्वतादयो देवगणा वेदितव्या । तद्यथा अरुणसमुद्रभव मूले संख्येययोजनविस्तार तमस्कंध, समुद्रवद्वलयाकार अतितीव्रा त्कारपरिणाम स ऊर्ध्वं क्रमवृद्ध्या गच्छन् मध्येऽन्त्ये च संख्येययोजनबाहुल्य अरिष्टविमानस्याधोभागे समेत कुक्कुटकुटीवदवस्थित तस्योपरि तमोराजयोऽष्टावुत्पत्य अरिष्टेंद्रकविमानस-प्रणिधय । तत्र चतसृष्वपि दिक्षु द्वंद्व गता तिर्यगालोकांतात्, तदनतरेषु सारस्वतादयो देवा । तत्र पूर्वो-त्तरकोणे सारस्वतविमान, पूर्वस्यां दिशि आदित्यविमान, पूर्वदक्षिणस्यां वन्हिविमान, दक्षिणस्यामरुणविमान,

१ ज्ञेया इति ग, पुस्तक पाठ

दक्षिणापरकोणे गर्दतोयविमान, अपरस्या तुषितविमान, अपरोत्तरकोणेऽव्याबाधविमान, उत्तरस्यामरिष्टविमान।

**चशब्दसमुच्चिताः तदंतरालवर्तिनः ॥२॥** तेषामतरालेषु चशब्दसमुच्चिता. द्वद्ववृत्त्या देवगणा प्रत्येतव्या । तद्यथा—

**अग्न्याभसूर्याभचंद्राभसत्याभश्रेयस्करक्षेमकरवृषभेष्टकामचरनिर्माणरजोदिगंतरक्षितात्मरक्षितसर्वरक्षितमरुद्वसुअश्वविश्वाख्या ॥ ३ ॥**

एते अग्न्याभादय षोडश देवगणा लौकांतिकभेदा कथ्यते। सारस्वतादित्यांतर अग्न्याभसूर्याभा, आदित्यवह्न्यतरे चद्राभसत्याभा., वन्ह्यरुणांतराले श्रेयस्करक्षेमकरा, अरुणगर्दतोयातराले वृषभेष्टकामचरा, गर्दतोयतुषितमध्ये निर्माणरजोदिगतरक्षिता, तुषिताव्याबाधमध्ये आत्मरक्षितसर्वरक्षिता, अव्याबाधारिष्टातराले मरुद्वसव, अरिष्टसारस्वतातरे अश्वविश्वा, तान्येतानि विमानानि तन्निवासिना तद्योगात् तत्सारस्वता सप्तशतसख्या, आदित्याश्च सप्तशतगणना, वह्नय सप्तसहस्राणि नवोत्तराणि, तुषिताश्च तावत एव, अव्याबाधा एकादशसहस्राणि एकादशानि, अरिष्टा अपि तावत एव । चशब्दसमुच्चितानां सख्येत्युच्यते—अग्न्याभे देवा सप्तसहस्राणि सप्ताधिकानि । सूर्याभे सुरा नवसहस्राणि नवाधिकानि । चद्राभे सुरा एकादशसहस्राणि एकादशानि। सत्याभे विबुधा त्रयोदशसहस्राणि त्रयोदशानि। श्रेयस्करे देवा पचदशसहस्राणि पचदशाधिकानि । क्षेमकरे अमरा सप्तदशसहस्राणि सप्तदशानि । वृषभेष्टे सुरा एकान्नविंशति सहस्राणि एकान्नविंशतिश्च । कामचरेऽमरा. एकविंशति सहस्राणि एकविंशतिश्च । निर्माणरजसि देवा त्रयोविंशति सहस्राणि त्रयोविंशतिश्च । दिगतरक्षिते देवा पचविंशति सहस्राणि पचविंशतिश्च । आत्मरक्षिते सुरा सप्तविंशति.सहस्राणि सप्तविंशतिश्च । सर्वरक्षिते विबुधा. एकान्नत्रिंशत्सहस्राणि एकान्नत्रिंशच्च । मरुति देवा. एकत्रिंशत्सहस्राणि एकत्रिंशच्च। वसुनि सुरा. त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्च । अश्वे सुरा पचत्रिंशत्सहस्राणि पचत्रिंशच्च । विश्वे देवा सप्तत्रिंशत्सहस्राणि सप्तत्रिंशच्च त एते चतुर्विंशति लौकातिकगणा समुदिता चत्वारिंशत्सहस्राणि अष्टसप्ततिश्च शतानि षडुत्तराणि । सर्वे ते स्वतन्त्रा हीनाधिकत्वाभावात्, विषयरतिविरहाद्देवर्षय, तत इतरेषा देवानामर्चनीया चतुर्दशपूर्वधरा सतत ज्ञानभावनाहितमनस ससारान्नित्यमुद्विग्ना अनित्याशरणाद्यनुप्रेक्षासमाहितमानसाः अतिविशुद्धसम्यग्दर्शना तीर्थकरनिष्क्रमणप्रतिबोधनपरा । नामकर्मणाऽसख्येयोत्तरोत्तरप्रकृतित्वात् ससारिणा जीवाना सज्ञा शुभाशुभनामकर्मोदयापादिता वदितव्या । एवमय कार्मणशरीरप्रणालिकया आश्रवापेक्षयापादितसुखदु खाना भव्याभव्यभेदाहितद्वैविध्याना प्राणिना ससारोऽनादि., अपर्यवसान अन्येषा मोहोपशमप्रध्वसन प्रत्याहताना अप्रतिपतितसम्यग्दर्शनाना परीतविषय सप्ताष्टानि भवग्रहणानि उत्कर्षेण वर्तते । जघन्येन द्वित्राणि अनुबध्यानिच्छयते । प्रतिपतितसम्यक्त्वाना तु भाज्य । आह—प्रतिपतितसम्यक्त्वेषु किमविशेष एव आहोस्वित् कश्चिदस्ति प्रतिविशेष ? इत्यत्रोच्यते ॥

## विजयादिषु द्विचरमाः ॥२६॥

विजयादिषु इति ।

**आदिशब्दः प्रकारार्थः ॥ १ ॥** अय आदिशब्द प्रकारार्थोद्रष्टव्य तेन विजयवैजयंतजयतापराजिताऽनुदिशविमानानामिष्टाना ग्रहण सिद्ध भवति । क. पुनरत्र प्रकारार्थ ? अहमिंद्रत्वे सति सम्यग्दृष्ट्युपपाद । सर्वार्थसिद्धग्रहणप्रसग इति चेन्न तेषा परमोत्कृष्टत्वात् । सर्वार्थसिद्ध इत्यन्वर्थनिर्देशात् एकचरमत्वसिद्धेश्च ।

**द्विचरमत्व मनुष्यदेहद्वयापेक्षं ॥ २ ॥** चरमशब्द उत्तरार्थ द्वौ चरमौ देहौ येषा ते द्विचरमाः तेषा भावो द्विचरमत्व । *एतन्मनुष्यदेहद्वयापेक्षमवगतव्य । विजयादिभ्य च्युता अप्रतिपतितसम्यक्त्वा*

---

१ कामचरा इति ग पुस्तके पाठ ।

मनुष्येषूत्पद्य संयममाराध्य पुनर्विजयादिषूत्पद्य च्युता मनुष्यभवमवाप्य सिध्यति इति द्विचरमदेहत्वं । इतरथा हि द्वौ मनुष्यभवौ, एको देवभवश्चेति त्रिचरमत्वं स्यात् न द्विचरमत्वं । कुतः पुनः मनुष्यदेहस्य चरमत्वमिति चेदुच्यते—

**मनुष्यदेहस्य चरमत्वं तेनैव मुक्तिपरिणामोपपत्तेः ॥ ३ ॥** यतो मनुष्यभवमवाप्य देवनारकतैर्यग्योना सिध्यंति न तेभ्य एवेति मनुष्यदेहस्य चरमत्वं ।

**एकस्य चरमत्वमिति चेन्न औपचारिकत्वात् ॥ ४ ॥** स्यान्मतं एकस्य भवस्य चरमत्वं, अतः स्यात् न द्वयोस्ततो द्विचरमत्वमयुक्तं इति तन्न, किं कारणं ? औपचारिकत्वात् येन देहेन साक्षान्मोक्षोऽवाप्यते स मुख्यश्चरमः, तस्य प्रत्यासन्नो मनुष्यभवः तत्प्रत्यासत्तेश्चरम इत्युपचर्यते । देवभवेन व्यवहितत्वात् प्रत्यासत्त्यभाव इति चेन्न 'येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यादिति' ।

**आर्षविरोध इति चेन्न प्रश्नविशेषापेक्षत्वात् ॥ ५ ॥** स्यान्मतं विजयादिषु द्विचरमत्वमार्षे विरोधि। कुतः, त्रिचरमत्वात् एव ह्यार्षे उक्तमंतरविधाने—अनुदिशानुत्तरविजयवैजयंतजयंतापराजितविमानवासिनां, अंतरं जघन्येन वर्षपृथक्त्वं, उत्कर्षेण द्वे सागरोपमे सातिरेके इति । तस्यायमर्थः तेभ्यः च्युता मनुष्येषूत्पद्य अष्टवर्षाद् संयममाराध्य अंतर्मुहूर्तेन विजयादिषु भवमाप्नुवंति इति जघन्येन वर्षपृथक्त्वं । केचित्तेभ्यश्च्युता मनुष्येषूत्पद्य संयममवाप्य सौधर्मैशानकल्पयो जनित्वा पुनरपि मनुष्यभवमनुभूय विजयादिषु जायंते इति उत्कर्षेण द्वे सागरोपमे साधिके इति ततो मनुष्यभवत्रयोपपत्तेर्द्विचरममयुक्तमिति तन्न, किं कारणं ? प्रश्नविशेषापेक्षत्वात् । एवं हि व्याख्याप्रज्ञप्तिदंडकेषूक्तं विजयादिषु देवा मनुष्यभवमास्कंदंतः कियतीर्गत्यागतीः विजयादिषु कुर्वंति इति गौतमप्रश्ने भगवतोक्तं जघन्येनैको भवः आगत्या उत्कर्षेण गत्यागतिभ्यां द्वौ भवौ, सर्वार्थसिद्धौ च्युता मनुष्येषूत्पद्य तेनैव भवेन सिध्यतीति न लौकांतिकवदेकभविका एवेति विजयादिषु द्विचरमत्वं नार्षविरोधि कल्पांतरोत्पत्त्यनपेक्षत्वात् प्रश्नस्येति । आह उक्तं भवति जीवस्य औदयिकेषु भावेषु तैर्यग्योनिगतिरौदयिकी, स्थितौ चोक्तं तिर्यग्योनिजानां चेति । आस्रवविधाने च वक्ष्यते माया तैर्यग्योनस्येति । तदुक्तव्यं के तिर्यग्योनय इति अत्रोच्यते ।

## औपपादिकमनुष्येभ्यः शेषास्तिर्यग्योनयः ।२७।

अयुक्तोऽयं निर्देशः औपपादिकमनुष्येभ्य इति, कुतः ? मनुष्यशब्दस्य अल्पाच्तरत्वात् पूर्वनिपातः प्राप्नोति ? अभ्यर्हितत्वान्नैष दोषः औपपादिकस्य पूर्वनिपातः । कथमभ्यर्हितत्वं ? देवानामौपपादिकेष्वंतर्भावात्, देवाः स्थितिप्रभावादिभिरभ्यर्हिता इति व्याख्याताः ।

**उक्तेभ्य औपपादिकमनुष्येभ्योऽन्ये शेषाः ॥ १ ॥** औपपादिका उक्ताः । देवनारकमनुष्या व्याख्याताः प्राङ् मानुषोत्तरान्मनुष्या इति । तेभ्योऽन्ये ये ते शेषाः तिर्यग्योनयः ।

**सिद्धप्रसंग इति चेन्न सांसारिकप्रकरणात् ॥२॥** स्यान्मतं औपपादिकमनुष्येभ्योऽन्यत्वं सिद्धानामप्यस्ति इति तिर्यग्योनित्वप्रसंग इति तन्न, किं कारणं ? सांसारिकप्रकरणात् । संसारिणः प्रकृताः तेन तेभ्योन्ये संसारिण एव तिर्यग्योनयो न सिद्धाः । अथ केयं तिर्यग्योनिः ?

**तिरोभावात्तैर्यग्योनिः ॥ ३ ॥** तिरोभावोन्यग्भावः उपवाह्यत्वमित्यर्थः ततः कर्मोदयापादितभावा तिर्यग्योनिरित्याख्यायते । तिरश्चि योनिर्येषां ते तिर्यग्योनयः ते च त्रसस्थावरादिविकल्पा व्याख्याताः ।

**देवादिवत्तदाधारनिर्देश इति चेन्न सर्वलोकव्यापित्वात् ॥ ४ ॥** स्यान्मतं यथा देवानां मूर्ध्वलोकः, मनुष्याणां तिर्यग्लोकः, नारकाणामधोलोकः आधारविशेष उक्तः तथा तिरश्चामपि आधारो निर्देष्टव्य इति तन्न, किं कारणं सर्वलोकव्यापित्वात् । सर्वलोकव्यापित्वं कथमेषामिति चेदुच्यते—

**सूक्ष्मबादरभेदात् ॥ ५ ॥** तिर्यंचो द्विधा सूक्ष्मा बादराश्चेति। सूक्ष्मनामकर्मोदयापादितभावाः तत्र

सूक्ष्मा पृथिव्यप्तेजोवायुवनस्पतय सर्वलोकव्यापिन । बादरा पृथिव्यप्तेजोवायुवनस्पतय विकलेंद्रिया, पचेंद्रियाश्च क्वचिदेव वर्तंते न सर्वत्र ।

**द्वितीयेऽध्याये तन्निर्देश इति चेन्न कृत्स्नलोकभावात् ॥६॥** स्यादेतद्द्वितीयेऽध्याये एषा तिरश्चा निर्देश कर्तव्य नात्रेति ? तन्न किं कारणं ? कृत्स्नलोकभावात् अयमेव तन्निर्देशो युक्त सर्वाँल्लोकानुक्त्वातदाधारनिर्देश सुगम इति ।

**शेषसंप्रतिपत्तेश्च ॥ ७ ॥** नारकादीन् सर्वानुक्त्वा तेभ्योऽन्ये शेषास्तिर्यंच इति शेषसंप्रतिपत्तिश्च भवति इति इहैव तन्निर्देशो युक्त । स्थितिरिदानीं वक्तव्या सा नारकाणा मनुष्याणा तिरश्चा चोक्ता देवानामुच्यते । तत्र चादौ निर्दिष्टाना भवनवासिना स्थितिप्रतिपादनार्थमाह—

## स्थितिरसुरनागसुपर्णद्वीपशेषाणां सागरोपमत्रिपल्योपमार्धहीनमिता॥२८॥

**असुरादीनां सागरोपमादिभिरभिसंबंधो यथाक्रम ॥ १ ॥** असुरादीना सागरोपमादिभिर्यथाक्रममभिसबधो वेदितव्य । इय स्थितिरुत्कृष्टा जघन्या प्युत्तरत्र वक्ष्यते।तद्यथा-असुराणा सागरोपमा स्थिति, नागाना त्रीणि पल्योपमानि, सुपर्णाना अर्धतृतीयानि, द्वीपाना द्वे, शेषाणा षण्णा अध्यर्धपल्योपम । आदिदेवनिकायस्थित्यभिधानानतर व्यतरज्योतिष्कस्थितिवचने क्रमप्राप्ते सति तदुल्लघ्य वैमानिकाना स्थितिरुच्यते कुत. ? तयोरुत्तरत्र लघुनोपायेन स्थितिवचनात् । तेषु च आदावुद्दिष्टयो स्थितिविधानार्थमाह ।

## सौधर्मैशानयोः सागरोपमेऽधिके ॥२९॥

**द्विवचननिर्देशाद्द्वित्वमिति ॥१॥** सागरोपमे इति द्विवचननिर्देशाद् द्वे सागरोपमे इति गम्यते ।

**अधिके इत्यधिकार आ सहस्रारात् ॥ २ ॥** अधिके इत्यय अधिकारो द्रष्टव्य । आ कुत ? आ सहस्रारात् । तेन सौधर्मैशानयोर्देवानामुत्कृष्टा स्थिति द्वे सागरोपमे सातिरेके प्रत्येतव्ये । उत्तरयो स्थितिविशेषप्रतिपत्त्यर्थमाह ।

## सानत्कुमारमाहेंद्रयोः सप्त ॥३०॥

**अधिकारात्सागराधिकसंप्रत्ययः ॥ १ ॥** सागरग्रहण, अधिकग्रहण च अनुवर्तते तेनायमर्थो लभ्यते सानत्कुमारमाहेंद्रयोर्देवानामुत्कृष्टा स्थिति सप्तसागरोपमाणि साधिकानि इति । ब्रह्मलोकादिष्वच्युतातेषु स्थितिविशेषप्रतिपत्त्यर्थमाह ।

## त्रिसप्तनवैकादशत्रयोदशपंचदशभिरधिकानि तु ॥ ३१ ॥

**सप्तग्रहणस्य त्र्यादिभिरभिसबंध ॥ १ ॥** द्वयोर्द्वयो सप्तग्रहण प्रकृत तस्येह निर्दिष्ट त्र्यादिभिराभिसबन्धो द्रष्टव्य । सप्तत्रिभिरधिकानि सप्तसप्तभिरधिकानीत्यादि ।

**तुशब्दो विशेषणार्थ ॥ २ ॥** तुशब्दो विशेषणार्थो द्रष्टव्य । किं विशिनष्टि ? अधिकशब्दोनुवर्तमान चतुर्भिरिह सबध्यते नोत्तराभ्यामित्ययमर्थो विशेष्यते । तेनायमर्थो भवति ब्रह्मलोकब्रह्मोत्तरयो दशसागरोपमाणि साधिकानि । लांतवकापिष्टयोश्चतुर्दशसागरोपमाणि साधिकानि शुक्रमहाशुक्रयो षोडश सागरोपमाणि साधिकानि शतारसहस्रारयोरष्टादशसागरोपमाणि साधिकानि । आनतप्राणतयोर्विंशति सागरोपमाणि । आरणाच्युतयोर्द्वाविंशति सागरोपमाणि उत्कृष्टा स्थितिरिति । ननु च तुशब्दोऽनर्थक. अधिक इत्यधिकारे आसहस्रारादित्युक्तत्वात् ? न, अतस्तत्सिद्धे । तत ऊर्ध्वं स्थितिविशेषप्रतिपत्त्यर्थमाह ।

---

१ नाय ग पुस्तके पाठः

# आरणाच्युतादूर्ध्वमेकैकेन नवसु ग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धौ च ॥ ३२ ॥

**अधिकारादधिकसंबंध** ॥ १ ॥ अधिकग्रहणमनुवर्तते तेनेह संबंधो वेदितव्य एकैकेनाऽधिकानीति । किमर्थं नवसु ग्रैवेयकेषु विजयादिष्विति पृथग् ग्रहणं ?

**ग्रैवेयकेभ्यो विजयादीनां पृथग्ग्रहणमनुदिशसंग्रहार्थं** ॥ २ ॥ ग्रैवेयकविजयादिष्वित्युच्यमाने अनुदिशविमानानामसंग्रहः स्यात् ततस्तत्संग्रहार्थं पृथग्ग्रहणं क्रियते ।

**प्रत्येकमेकैकवृद्ध्यभिसंबंधार्थं नवग्रहणं** ॥ ३ ॥ ग्रैवेयकेष्वित्युच्यमाने यथा विजयादिषु सर्वेषु एकमेव सागरोपममधिकं तथा सर्वेषु ग्रैवेयकेषु एकमेव सागरोपममधिकमिति प्रतीयते तस्मान्नवग्रहणं क्रियते । नवसु प्रत्येकमेकैकस्य सागरोपमस्य आधिक्यं यथा स्यादिति । अथ सर्वार्थसिद्धस्य पृथग्ग्रहणं किमर्थं ?

**सर्वार्थसिद्धपृथग्ग्रहणं विकल्पनिवृत्त्यर्थं** ॥ ४ ॥ यथाऽधस्ताज्जघन्योत्कर्षस्थितिविकल्पः तथा सर्वार्थसिद्धेर्माभूत् इत्येवमर्थं पृथग्ग्रहणं क्रियते । तेनायमर्थो वेदितव्यः अधोग्रैवेयकेषु प्रथमे त्रयोविंशतिः सागरोपमाणि । द्वितीये चतुर्विंशतिः सागरोपमाणि । तृतीये पंचविंशतिः सागरोपमाणि । मध्यमग्रैवेयकेषु प्रथमे षड्विंशतिः सागरोपमाणि । द्वितीये सप्तविंशतिः सागरोपमाणि । तृतीये अष्टविंशतिः । उपरिमग्रैवेयकेषु प्रथमे एकान्नत्रिंशत् । द्वितीये त्रिंशत् । तृतीये एकत्रिंशत् । अनुदिशविमानेषु द्वात्रिंशत् । विजयादिषु त्रयस्त्रिंशत् । सागरोपमाणि उत्कृष्टा स्थितिः । सर्वार्थसिद्धे त्रयस्त्रिंशदेवेति । अत्राह मनुष्यतिर्यग्योनिजानां परापरस्थिती व्याख्याते । देवानां किं-उत्कृष्टैव न वेत्युच्यते—

# अपरा पल्योपममधिकं ॥ ३३ ॥

अपरा जघन्येत्यर्थः स्थितिरित्यनुवर्तते व्याख्यातपरिमाणपल्योपमं । केषां ? देवानामियं जघन्या स्थितिः । सौधर्मैशानयोर्देवानां कथं गम्यते ?

**पारिशेष्यात्सौधर्मैशानयोरपरा स्थितिः** ॥ १ ॥ भवनवास्यादीनां जघन्या स्थितिर्वक्ष्यते सानत्कुमारादीनां च परतः परतः पूर्वापूर्वानंतरेति ततः परिशेषात् सौधर्मैशानयोर्देवानां साधिकं पल्योपमं जघन्या स्थितिर्वेदितव्या । तत ऊर्ध्वं जघन्यास्थितिप्रतिपादनार्थमाह ।

# परतः परतः पूर्वापूर्वानंतराः ॥ ३४ ॥

परस्मिन् देशे परतः तस्य वीप्सायां द्वित्वं । पूर्वशब्दस्यापि । किमुक्तं भवति पूर्वा पूर्वा या स्थितिरुत्कृष्टा सा सा उपरि देवानां जघन्येत्येतदुक्तं भवति । किमविशेषेण ? नेत्याह ।

**अधिकग्रहणानुवृत्तेः सातिरेकसंप्रत्ययः** ॥ १ ॥ अधिकग्रहणमनुवर्तते ? क्व प्रकृतं । "अपरा पल्योपममधिकं" इत्यत्र सातिरेकसंप्रत्ययो भवति । सौधर्मैशानयोः परा स्थितिः द्वे सागरोपमे साधिके । सनत्कुमारमाहेंद्रयोः सातिरेके जघन्या स्थितिः । सानत्कुमारमाहेंद्रयोः परा स्थितिः सप्तसागरोपमाणि साधिकानि, तानि सातिरेकाणि ब्रह्मलोकब्रह्मोत्तरयोर्जघन्या स्थितिरित्यादि । आ कुतोऽयमधिकारः ?

**आ विजयादिभ्योऽधिकारः** ॥ २ ॥ आ विजयादिभ्योऽनुत्तरेभ्य, अयमधिकारो वेदितव्यः । कथं गम्यते, सर्वार्थसिद्धस्य पृथग् ग्रहणात् इत्युक्तं पुरस्तात् ।

**अनंतरेत्यवचनं पूर्वोक्तेरिति चेन्न व्यवहिते पूर्वशब्दप्रयोगात्** ॥ ३ ॥ स्यान्मतं पूर्वेति वचनात् आनंतर्यप्रतीतेः अनंतरेति वचनमनर्थकमिति तन्न, किं कारणं ? व्यवहितेपि पूर्वशब्दप्रयोगात् । अयं हि पूर्वशब्दः व्यवहितेपि प्रयुज्यते तद्यथा पूर्वं मथुरायाः पाटलिपुत्रमिति । अतः सौधर्मैशानयोः या परा स्थितिः सा ब्रह्मलोकब्रह्मोत्तरलोकयोर्जघन्या स्थितिरित्येवमाद्यनिष्टं प्रतीयेत ततोऽनंतरमुच्यते । नारकाणामुत्कृष्टा स्थितिरुक्ता जघन्या सूत्रेऽनुक्ता तामप्राकृतामपि लघुनोपायेन प्रतिपादयितुमिच्छन्नाह—

## नारकाणां च द्वितीयादिषु ॥३५॥

चशब्द किमर्थ ?

**चशब्दः प्रकृतसमुच्चयार्थः ॥१॥** शब्दाक्रियते प्रकृतसमुच्चयार्थे । किं प्रकृत ? परत परत पूर्वापूर्वाऽनतरा अपरा स्थितिरिति । तेनायमर्थोलभ्यते रत्नप्रभाया नारकाणा परा स्थितिरेक सागरोप सा शर्कराप्रभाया जघन्या । शर्कराप्रभायामुत्कृष्टा स्थिति त्रीणि सागरोपमाणि वालुकाप्रभाया जघन्येत्येवमादि तद्व्यासो व्याख्यात पुरस्तात् । अथ प्रथमाया पृथिव्या का जघन्या स्थिति ? इत्यत आह ॥

## दशवर्षसहस्राणि प्रथमायां ॥३६॥

अपरा स्थितिरित्यनुवर्तते । अथ भवनवासिना का जघन्या स्थितिरित्यत आह ।

## भवनेषु च ॥३७॥

चशब्द किमर्थ ? प्रकृतसमुच्चयार्थ इति, एतेन भवनवासिनामपरा स्थितिर्दशवर्षसहस्राणि इत्यभिसबध्यते । व्यतराणा तर्हि का जघन्या स्थितिरित्यत आह ॥

## व्यंतराणां च ॥ ३८ ॥

च शब्द प्रकृतसमुच्चयार्थ इत्येव तेन व्यतराणामपरा स्थिति दशवर्षसहस्राणि इत्यवगम्यते ।

**परा व्यतराणां प्रागभिधातव्येति चेन्न लाघवार्थत्वात्॥१॥** स्यादेतद्यथाऽन्येषां देवनिकायानां परा स्थितिः प्रागुक्ता तथा व्यतराणामपि परा प्रागभिधातव्या इति ? तन्न । किं कारण ? लाघवार्थत्वात् यदि परा स्थिति प्रागुच्यते पुन दशवर्षसहस्रग्रहण क्रियते तथा सति गौरव स्यात् । यद्येव—अमीषा का परा स्थिति ? इत्येतदाह ।

## परा पल्योपममधिकं ॥ ३९ ॥

**स्थित्यभिसंबंधात् स्त्रीलिंगनिर्देशः ॥ १ ॥** स्थितिरित्यनुवर्तते तेनाभिसबधात् परेति स्त्रीलिंगनिर्देशो द्रष्टव्य । इदानीं ज्योतिष्काणा परा स्थितिर्वक्तव्येत्यत आह ।

## ज्योतिष्काणां च ॥ ४० ॥

च शब्द प्रकृतसमुच्चयार्थ इत्येव तेनैवमभिसबध्यते ज्योतिष्काणां च परा स्थिति पल्योपममधिकमिति । आह—अपरा ज्योतिष्काणां कियती स्थितिरित्यत आह—

## तदष्टभागोऽपरा ॥ ४१ ॥

तस्य पल्योपमस्याष्टभागो ज्योतिष्काणामपरा स्थितिरित्यर्थ । अत्राह—ज्योतिष्काणां पल्योपममधिक परा स्थिति इत्यविशेषाभिधानेन ज्ञायते चद्रादाना किं स्थितिविशेष ? इत्यत्रोच्यते ।

**चद्राणां वर्षशतसहस्राधिकं ॥ १ ॥** चद्राणा वर्षशतसहस्राधिक पल्योपम परा स्थिति ।

**सूर्याणा वर्षसहस्राधिकं ॥ २ ॥** वर्षसहस्राधिक पल्योपम सूर्याणा परा स्थिति ।

**शुक्राणां शताधिकं ॥ ३ ॥** शुक्राणां वर्षशताधिक पल्योपम परा स्थिति ।

**बृहस्पतीनां पूर्णा ॥ ४ ॥** बृहस्पतीना पूर्णपल्योपम परा स्थिति साधिक।

**शेषाणामर्धं ॥ ५ ॥** शेषाणां ग्रहाणां बुधादीना पल्योपमस्यार्ध परा स्थिति ।

**नक्षत्राणां च ॥ ६ ॥** नक्षत्राणा—अर्धपल्योपम परा स्थिति ।

**तारकाणां चतुर्भागः ॥ ७ ॥** पल्योपमस्य चतुर्भागस्तारकाणा परा स्थिति ।

१ पूर्णामिति ग. पुस्तके पाठ ।

**तदष्टभागो जघन्योभयेषां** ॥ ८ ॥ तस्य पल्योपमस्याष्टभागः जघन्या स्थितिः उभयेषां तारकाणां नक्षत्राणां च भवति ॥

**शेषाणां चतुर्भागः** ॥ ९ ॥ शेषाणां सूर्यादीनां पल्योपमचतुर्भागो जघन्या स्थितिर्वेदितव्या । अथ लौकांतिकदेवानां का स्थितिः ? इत्यत्रोच्यते ।

## लौकांतिकानामष्टौ सागरोपमाणि सर्वेषां ॥ ४२ ॥

**अष्टसागरोपमस्थितयो लौकांतिकाः** ॥ १ ॥ एकैव लौकांतिकानां स्थितिः । का ? अष्टौ सागरोपमाणि । सर्वे ते शुक्ललेश्याः पंचहस्तोत्सेधशरीराः ।

**व्याख्यातो जीवः** ॥ २ ॥ सम्यग्दर्शनस्य विषयप्रदर्शनमुखेनोपन्यस्तेषु जीवादिषु आद्यो जीवपदार्थो व्याख्यातः ।

**स च एकोऽनेकात्मकः** ॥ ३ ॥ स जीव एकः अनेकात्मको भवति । कुत एकस्याऽनेकात्मकत्वमिति चेत् अत्रोच्यते ।

**अभावविलक्षणत्वात्** ॥ ४ ॥ अभूत नास्तीत्येकरूपोऽभावः न हि अभाव अभावात्मना भिद्यते तद्विसदृशस्तु नानारूपो भाव इतरथा हि तयोरविशेष एव स्यात् ।

**स तु षोढा भिद्यते जायतेऽस्ति विपरिणमते वर्धते अपक्षयते विनश्यतीति** ॥५॥ तत्र उभयनिमित्तवशादात्मलाभमापद्यमानो भावः, जायत इत्यस्य विषयः । यथा मनुष्यगतिनामकर्मोदयापेक्षया आत्मा मनुष्यादित्वेन जायत इत्युच्यते । तस्यायुरादिनिमित्तवशादवस्थानमस्तित्वं । सतोऽवस्थांतरावाप्तिर्विपरिणामः । अनिवृत्तपूर्वस्वभावस्य भावांतरेणाऽऽधिक्यं वृद्धिः । क्रमेण पूर्वभावैकदेशनिवृत्तिरपक्षयः । तत्पर्यायसामान्यनिवृत्तिर्विनाशः । एवं प्रतिक्षणवृत्तिभेदादनंतरूपा जायते इति नानात्मता भावस्य । अथवा सन् ज्ञेयद्रव्यामूर्तातिसूक्ष्मावगाहनासंख्येयप्रदेशाऽनादिनिधनचेतनत्वादिना । किं च–

**अनेकवाग्विज्ञानविषयत्वात्** ॥ ६ ॥ इह लोके एकोऽर्थोऽनेकशब्दवाच्यो भवति तथाभिधेयपरिणामे सति तेषां शब्दानां तत्र प्रयोगात् । प्रयोगो हि प्रतिपादनक्रिया तस्यां शब्दार्थावुभावपि साधकौ । शब्दस्तावद्व्यंजकत्वात्साधकः । अर्थोपि व्यंग्यत्वात् कर्मभावमापद्यमानः तत्समकालमेव स्वातंत्र्यमनुभवति, तस्मिन् सति क्रियाप्रवृत्तेः, यथा तंडुलाः कर्मरूपापन्ना एव कर्तृतामास्कंदति येनोच्यते कर्मकारकमिति, अतः तस्मिन् सति अनेकः शब्दः प्रयुज्यते यथा घटः पार्थिवः मार्तिकः सज्ञेयो नवो महान् इत्यादि । एवमात्मकानां च विज्ञानानामालंबनं भवति तैर्विना तस्याभावात् । सर्वे ते घटस्य आत्मानः तथाऽऽत्मन्यपि अनेकवाग्विज्ञानालंबनदर्शनादेकस्यानेकाऽऽत्मकत्वमवसेयं । अपि च—

**अनेकशक्तिप्रचितत्वात्** ॥ ७ ॥ यथा घृतं स्नेहयति तर्पयति उपबृंहयतीति अनेकशक्तिः । घटो वा जलधारणाहरणादिलक्षणयाऽनेकया शक्त्या प्रचितः । तथा आत्मनोऽपि द्रव्यक्षेत्रकालभावनिमित्तवशादनेकप्रकारप्रातियोग्यबहुशक्तियोगादनेकात्मकत्वं । इतश्च—

**वस्त्वंतरसंबंधाविर्भूतानेकसंबंधिरूपत्वात्** ॥ ८ ॥ यथैको घटः पूर्वपरांतरितदूरासन्ननवपुराणसमर्थासमर्थदेवदत्तकृतचैत्रस्वामिकत्वसंख्यापरिमाणपृथक्त्वसंयोगविभागादिभेदादनेकव्यपदेशभाग्भवति संबंधानामानंत्यात्त तं तत्संबंधिनमपेक्ष्य तस्य तस्य पर्यायस्य भावात् । अथवा–

**पुद्गलानामानंत्यात्तत्तत्पुद्गलद्रव्यमपेक्ष्य एकपुद्गलस्थस्य तस्यैकस्यैव पर्यायस्याऽन्यत्वभावात्** ॥ ९ ॥ यथा प्रदेशिन्या मध्यमाभेदात् यदन्यत्वं न तदेवानामिकाभेदात् । माभूत् मध्यमानामिकयारेकत्वं मध्यमाप्रदेशिन्यन्यत्वहेतुत्वेनाऽविशेषादिति । नचैतत्पराभिधिकमेवार्थसत्वं । यदि मध्यमासामर्थ्यात् प्रदेशिन्यां ह्रस्वत्वं जायेत शशविषाणेपि स्याच्छशमुष्टौ वा । नापि स्वत एव परापेक्षाभावं तद्व्यक्त्यभावात् ।

## नारकाणां च द्वितीयादिषु ॥३५॥

चशब्द किमर्थ ?

**चशब्दः प्रकृतसमुच्चयार्थः ॥१॥** शब्दाक्रियते प्रकृतसमुच्चयार्थे । किं प्रकृत ? परत. परत पूर्वापूर्वाऽनतरा अपरा स्थितिरिति । तेनायमर्थोलभ्यते रत्नप्रभाया नारकाणा परा स्थितिरेक सागरोप सा शर्कराप्रभाया जघन्या । शर्कराप्रभायामुत्कृष्टा स्थिति त्रीणि सागरोपमाणि वालुकाप्रभाया जघन्येत्येवमादि तद्व्यासो व्याख्यात पुरस्तात् । अथ प्रथमाया पृथिव्या का जघन्या स्थिति ? इत्यत आह ॥

## दशवर्षसहस्राणि प्रथमायां ॥३६॥

अपरा स्थितिरित्यनुवर्तते । अथ भवनासिना का जघन्या स्थितिरित्यत आह ।

## भवनेषु च ॥३७॥

चशब्द किमर्थ ? प्रकृतसमुच्चयार्थ इति, एतेन भवनवासिनामपरा स्थितिर्दशवर्षसहस्राणि इत्यभिसबध्यते । व्यतराणा तर्हि का जघन्या स्थितिरित्यत आह ॥

## व्यंतराणां च ॥ ३८ ॥

च शब्द प्रकृतसमुच्चयार्थ इत्येव तेन व्यतराणामपरा स्थिति दशवर्षसहस्राणि इत्यवगम्यते ।

**परा व्यतराणां प्रागभिधातव्येति चेन्न लाघवार्थत्वात्॥१॥** स्यादेतद्यथाऽन्येषा देवनिकायाना परा स्थिति, प्रागुक्ता तथा व्यतराणामपि परा प्रागभिधातव्या इति ? तन्न । किं कारण ? लाघवार्थत्वात् यदि परा स्थिति प्रागुच्यते पुन दशवर्षसहस्रग्रहण क्रियते तथा सति गौरव स्यात् । यद्येव–अमीषा का परा स्थिति ? इत्येतदाह ।

## परा पल्योपममधिकं ॥ ३९ ॥

**स्थित्यभिसंबंधात् स्त्रीलिंगनिर्देशः ॥ १ ॥** स्थितिरित्यनुवर्तते तेनाभिसबधात् परेति स्त्रीलिंगनिर्देशो द्रष्टव्य । इदानीं ज्योतिष्काणा परा स्थितिर्वक्तव्येत्यत आह ।

## ज्योतिष्काणां च ॥ ४० ॥

च शब्द. प्रकृतसमुच्चयार्थ. इत्येव तेनैवमभिसबध्यते ज्योतिष्काणां च परा स्थिति पल्योपममधिकमिति । आह–अपरा ज्योतिष्काणां कियती स्थितिरित्यत आह–

## तदष्टभागोऽपरा ॥ ४१ ॥

तस्य पल्योपमस्याष्टभागो ज्योतिष्काणामपरा स्थितिरित्यर्थ । अत्राह–ज्योतिष्काणां पल्योपममधिक परा स्थिति इत्यविशेषाभिधानेन ज्ञायते चद्रादाना किं स्थितिविशेष ? इत्यत्रोच्यते ।

**चद्राणां वर्षशतसहस्राधिकं ॥ १ ॥** चद्राणा वर्षशतसहस्राधिक पल्योपम परा स्थिति ।

**सूर्याणां वर्षसहस्राधिकं ॥ २ ॥** वर्षसहस्राधिक पल्योपम सूर्याणा परा स्थिति ।

**शुक्राणां शताधिकं ॥ ३ ॥** शुक्राणां वर्षशताधिक पल्योपम परा स्थिति ।

**बृहस्पतीनां पूर्णं ॥ ४ ॥** बृहस्पतीना पूर्णपल्योपम परा स्थिति साधिक ।

**शेषाणामर्धं ॥ ५ ॥** शेषाणां ग्रहाणां बुधादीना पल्योपमस्यार्धं परा स्थिति ।

**नक्षत्राणां च ॥ ६ ॥** नक्षत्राणा–अर्धपल्योपम परा स्थिति ।

**तारकाणां चतुर्भागः ॥ ७ ॥** पल्योपमस्य चतुर्भागस्तारकाणा परा स्थिति ।

१ पूर्णमिति ग. पुस्तके पाठ ।

**ते च कालादिभिर्भेदाभेदार्पणात् ॥१५॥** ते च क्रमयौगपद्ये कालादिभिः भेदाभेदार्पणाद्भवतः। यदा वक्ष्यमाणकालादिभिरस्तित्वादीनां धर्माणां भेदेन विवक्षा तदैकस्य शब्दस्यानेकार्थप्रत्यायनशक्त्यभावात् क्रमः। यदा तु तेषामेव धर्माणां कालादिभिरभेदेन वृत्तमात्मरूपमुच्यते तदैकत्वमापन्नस्य अनेकाशेषरूपस्य प्रतिपादनसंभवात् यौगपद्यं।

**तत्र यदा यौगपद्यं तदा सकलादेशः ॥ १६ ॥** स एव प्रमाणमित्युच्यते। सकलादेशः प्रमाणाधीन इति वचनात् ॥

**यदा तु क्रमः तदा विकलादेशः॥१७॥** स एव नय इति व्यपदिश्यते। विकलादेशो नयाधीन इति वचनात्। कथं सकलादेशः?

**एकगुणमुखेनाऽशेषवस्तुरूपसंग्रहात् सकलादेशः ॥ १८ ॥** यदा अभिन्नमेकं वस्तु एकगुणरूपेण उच्यते गुणिनां गुणरूपमंतरेण विशेषप्रतिपत्तेरसंभवात्। एको हि जीवोऽस्तित्वादिष्वेकस्य गुणरूपेणाऽभेदवृत्त्या अभेदोपचारेण वा निरंशः समस्तो वक्तुमिष्यते विभागनिमित्तस्य प्रतियोगिनो गुणांतरस्य तत्रानाश्रयणात्, तदा सकलादेशः। कथमभेदवृत्तिः कथं वा अभेदोपचारः? द्रव्यार्थत्वेनाश्रयणे तदव्यतिरेकादभेदवृत्तिः। पर्यायार्थत्वेनाश्रयणे परस्परव्यतिरेकेपि एकत्वाध्यारोपात्तत्त्वाऽभेदोपचारः।

**तत्राऽऽदेशवशात्सप्तभंगी प्रतिपदं ॥१९॥** तत्र तस्मिन् सकलादेश आदेशवशात् सप्तभंगी प्रतिपदं वेदितव्या। तद्यथा-स्यादस्त्येव जीवः १ स्यान्नास्त्येव जीवः २ स्यादवक्तव्य एव जीवः ३ स्यादस्ति च नास्ति च ४ स्यादस्ति चाऽवक्तव्यश्च ५ स्यान्नास्ति चावक्तव्यश्च ६ स्यादस्ति च नास्ति चावक्तव्यश्च ७ इत्यादि। उक्तं च-

पुच्छावसेण भंगा सत्तेव दु संभवंति जस्स जधा।
सत्तूदितं पउच्चदि सामण्णाणं सदा णियदा[1] ॥ १ ॥

इति। तत्र स्यादस्त्येव जीव इत्येतस्मिन् वाक्ये जीवशब्दो द्रव्यवचनः विशेष्यत्वात्। अस्तीति गुणवचनो विशेषणत्वात्। तयोस्सामान्यार्थाविच्छेदेन विशेषणविशेष्यसंबंधद्योतनार्थ एवकारः। तेनेतरानिवृत्तिप्रसंगे तत्संभवप्रदर्शनार्थं स्याच्छब्दप्रयोगः, स च लिङंतप्रतिरूपको निपातः। तस्यानेकांतविधिविचारादिषु बहुष्वर्थेषु संभवत्सु इह विवक्षावशात् अनेकांतार्थो गृह्यते। यद्ययमनेकांतार्थः तेनैव सर्वस्योपादानात् इतरेषां पदानां आनर्थक्यं प्रसज्यते? नैष दोषः सामान्येनोपादानेपि विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः। वृक्षशब्दस्य सामान्यशब्दत्वात् धवादिविशेषप्रतिपादने धवाद्युपादानवत्। अथवा स्याच्छब्दोयमनेकांतार्थस्य द्योतकः। द्योतकश्च वाचकप्रयोगसन्निधिमंतरेणाऽभिप्रेतार्थावद्योतनाय नालमिति तद्द्योत्यधर्माधारत्वाभिधानायेतरपदप्रयोगः क्रियते। अथ केनोपात्तोऽनेकांतार्थोऽनेन द्योत्यते? उक्तमेतदभेदवशात् अभेदोपचारेण वा प्रयुक्तशब्दवाच्यतामेवाऽऽस्कंदंति इतरे धर्मा इति। एवमितरेष्वपि वाक्येषु अर्थप्रकल्पनं प्रत्येतव्यं। यद्येवं स्यादस्त्येव जीव इत्यनेनैव सकलादेशेन जीवद्रव्यगतानां सर्वेषां धर्माणां संग्रहात् उत्तरेषां भंगानामानर्थक्यमासजति? नात्र दोषः गुणप्रधानव्यवस्थाविशेषप्रतिपादनार्थत्वात् सर्वेषां भंगानां प्रयोगोऽर्थवान्। तद्यथा—द्रव्यार्थिकस्य प्राधान्ये पर्यायगुणभावे च प्रथमः। पर्यायार्थिकस्य प्राधान्ये द्रव्यगुणभावे च द्वितीयः। तत्र प्राधान्यं शब्देन विवक्षितत्वाच्छब्दाधीनं शब्देनानुपात्तस्यार्थतो गम्यमानस्याऽप्राधान्यं। तृतीये तु युगपद्भावे उभयस्याप्राधान्यं शब्देनाभिधेयतयानुपात्तत्वात्। चतुर्थस्तूभयप्रधानः क्रमेण उभयस्यास्त्यादिशब्देन उपात्तत्वात्। तथोत्तरे च भंगा वक्ष्यंते। तत्रास्तित्वैकांतवादिनः जीव एव अस्ति इत्यवधारणे अजीवनास्तित्वप्रसंगभयादिष्टतोऽवधारणविधिरस्त्येव जीव इति नियच्छति तथाऽवधारणसामर्थ्यात् शब्दप्रापितादभिप्रायवशवर्तिनः सर्वथास्य जीवस्याऽस्तित्वं प्राप्नोति। सर्वेणाऽस्तित्वेन व्याप्त इति पुद्गलाद्यस्तित्वेनापि जीवस्यास्तित्वं प्राप्तं शब्देन तथा प्रापितत्वात्, शब्दप्रमाणकाश्च वयमर्थाधिगमे। स्यान्मतं-अस्तित्वसामान्येन व्याप्तिर्न चास्तित्वविशेषैः यथा-

[1] णियदमिति ब पुस्तके पाठः।

तस्मात्तस्यानतपरिणामस्य द्रव्यस्य तत्तत्सहकारिकारण प्रतीत्य तद्रूप वक्ष्यते। न तत् स्वत एव नापि परकृतमेव। एव जीवोपि कर्मनोकर्मविषयवस्तूपकरणसबधभेदाविर्भूतजीवस्थानगुणस्थानमार्गणास्थानविकल्पाऽनतपर्यायरूप. प्रत्येतव्य। इतश्च—

**अन्यापेक्षाभिव्यंग्याऽनेकरूपोत्कर्षापकर्षपरिणतगुणसंबंधित्वात्** ॥ १० ॥ यथा एको घट एकद्वित्रिचतु सख्येयाऽसख्येयानतावस्थोत्कर्षापकर्षात्मकरूपादिपरिणतिप्रतियोगिद्रव्यापेक्षासहकारिकारणाभिव्यजनया आत्मीयानतनीलनीलतरादिपरिणाम। तथा जीवोपि परद्रव्यसबधापेक्षाभिव्यक्तज्ञानाद्यवस्थाविशेषक्रोधाद्यविभागपरिच्छेदाऽनतरूपत्वादनेक। इतश्च—

**अतीतानागतवर्तमानकालसंबधित्वात्** ॥ ११ ॥ इह समुदायावयवप्रध्वसविपर्ययेणातीतेन कालेन, उत्पत्तिनिर्ज्ञानसभावनाविपर्ययेण च अनागतेन कालेन, साधनप्रवृत्त्यविरामगोचरेण च वर्तमानेन कालेन सबधात् मृदादिद्रव्य तस्मिन् तस्मिन् कालेऽनेकभेदमापद्यमान दृष्ट। वर्तमानमात्रत्वे पूर्वत्वात् अपरत्वाच्च। अवध्यभावे वर्तमानस्याप्यभावो वध्यापुत्रयुवत्ववत्। तथा जीवस्यापि अनाद्यतीतकालसबधपरिणतैअनागतानतकालवशवर्तिभि वर्तमानकालोद्भूतवृत्तिभिश्च पर्यायैरर्थव्यजनभेदाद्द्वैविध्यमास्कदद्भि अभिसबधादनतरूपता। इतश्च—

**उत्पादव्ययध्रौव्ययुक्तत्वात्** ॥ १२ ॥ उत्पादादीनामानत्य अनतकाले एकस्मिंश्च काले। यथा घट एकस्मिन्नेव काले द्रव्यत पार्थिवत्वेन उत्पद्यते न जलत्वेन। देशत इहत्यत्वेन न पाटलीपुत्रकत्वेन। कालतो वर्तमानकालतया नातीतानागताभ्यां। भावतो महत्त्वेन नाल्पत्वेन। एतेषां च एकैक उत्पाद सजातीयान्यपार्थिवानेकघटातरगतेभ्य सौवर्णादीपद्विजातीयघटातरगतेभ्यो वा अत्यतविजातीयपटाद्यनंतमूर्तामूर्तद्रव्यांतरापन्नेभ्यो वा उत्पादेभ्यो भिद्यमान तावद्भेदमुपयाति अन्यथा तैरविशिष्ट स्यात्। तथा तदैवानुत्पद्यमानद्रव्यसबधकृतोर्ध्वाधस्तिर्यगतरितानतरितैकातरादिदिग्भेदमहदल्पत्वादिगुणभेदरूपाद्युत्कर्षापकर्षानतभेदत्रिलोकत्रिकालविषयसबधिनशाभिद्यमानरूपो वा उत्पादोऽनेको भवति। तथाऽनेकावयवात्मकस्कधप्रदेशभेददृष्टविषमोत्पादनानारूपतया वा अनेक उत्पाद। उदकादिधारणाहरणप्रदानाधिकरणभयहर्षशोकपरितापभेदजननादिस्वकार्यप्रसाधनेन वा अनेक उत्पाद। तदैव तावत एव तत्प्रतिपक्षभूता विनाशा पूर्वेण विनष्टस्य उत्तरेणानुत्पादात् उभयविपक्षभूता स्थितयोपि तदैव तावत्य तदाधारभूता, अनवस्थितस्य वध्यापुत्रवदुत्पादविनाशसभवात्। अभावप्रसगाच्च। घट उत्पद्यत इति यदा वर्तमानकालता तदा अनभिनिर्वृत्तत्वात् पूर्वापरीभूतसाध्यमानभावाभिधानाच्चासत्व। उत्पत्त्यनतर तु विनाशेऽभ्युपगम्यमाने सत्त्वभूतावस्थाभिधायिफोत्पन्नशब्दवाच्यत्वाभावात्—उत्पादेप्यभावो विनाशेप्यभाव इति भावाभावात्तदाश्रयो व्यवहारो विरोधमुपगच्छेत्। बीजशक्त्यभावाच्च उत्पादविनाशशब्दवाच्यताप्रेपश्च तत उत्पद्यमानता उत्पन्नता विनाशश्चेति तिस्रोऽवस्था अभ्युपगतव्या। तथा जीवस्याप्येकस्य द्रव्यार्थिकपर्यायार्थिकगोचरसामान्यविशेषानतशक्त्यपेक्षार्पितस्थित्युत्पत्तिनिरोधानतरूपत्वात अनेकत्व प्रत्येतव्य। इतश्च—

**अन्वयव्यतिरेकात्मकत्वाच्च** ॥ १३ ॥ इह घट एकोप्यन्वयव्यतिरेकात्मतया अनेको दृष्ट. सदचेतननवपुराणत्वादिभि। तथा आत्मापि एकोऽन्वयव्यतिरकात्मकतया अनेक प्रत्येतव्य। के पुनरन्वया बुद्ध्यभिधानानुवृत्तिलिंगेन अनुमीयमानाविच्छेदा स्वात्मभूताऽस्तित्वाऽऽत्मत्वज्ञातृत्वदृष्टृत्वकर्तृत्वभोक्तृत्वाऽमूर्तत्वाऽसख्यातप्रदेशत्वावगाहनातिसूक्ष्मत्वागुरुलघुत्वाहेतुकत्वाऽनादिसबधित्वोर्ध्वगतिस्वभावादय। अथ के व्यतिरेका [1] वाग्विज्ञानव्यावृत्तिलिंगसमधिगम्यपरस्परविलक्षणा उत्पत्तिस्थितिविपरिणामवृद्धिह्रासविनाशधर्माण गतींद्रियकाययोगवेदकषायज्ञानसयमदर्शनलेश्यासम्यक्त्वादय॥

**तस्य शब्देनाभिधानं क्रमयौगपद्याभ्यां** ॥ १४ ॥ तस्यैकस्य जीवस्यानेकात्मकस्य प्रत्यायने शब्द प्रवर्तमानो द्वेधा व्यवतिष्ठते क्रमेण यौगपद्येन वा न तृतीयो वाक्यार्थोस्ति॥

---

१ भ्रशश्च पाठांतर।

त्मनाऽस्ति नास्ति च नास्तित्वस्यात्मनेति, स्यादस्ति स्यान्नास्ति इतरथा हि वस्त्वभावः स्यात्। कथं अभावो हि निरपेक्षोऽन्यतशुन्यं च वस्तु प्रतिपादयेत् अन्यत् अन्वयाप्रतिलम्भात्। भावोपि वा अभावनिरपेक्षः सर्वरूपवस्तु प्रतिपादयेत् व्यतिरेकाप्रतिलम्भात्। न सर्वथा सत्ता सर्वाभावरूपेण वा शक्य भवितुं किं हि वस्तु सर्वात्मकं सर्वाभावरूपं वा दृष्टमिति? तद्धि वस्त्वेव न स्यात्। सर्वाभावरूपत्वात् खपुष्पवच्च। वस्तुत्व सर्वात्मकत्वान्नाशक्य प्रतिपत्तु, असाधारणत्वात् वस्तुत्वे वा वस्तुत्वे वा दर्शनात् श्रावणत्ववत् अभावता हि भावरूपत्ववैलक्षण्यात् क्रियागुणव्यपदेशाभावात् अवतिष्ठते। भावतापि अभाववैलक्षण्यात् क्रियागुणव्यपदेशवत्त्वात् सिध्यतीति परस्परापेक्षे भावाभावरूपत्वेपि वाऽभावः स्वसद्भावं भावाभावं च अपेक्षमाणः सिध्यति। भावोपि स्वसद्भावं अभावाभावंच वाऽपेक्ष्य सिद्धिमुपयाति। यदि तु अभावः एकांतेनाऽस्ति इत्यभ्युपगम्येत ततः सर्वात्मनाऽस्तित्वात् स्वरूपसद्भावात्मनापि स्यात् तथाच भावाभावरूपसंकरादस्थितरूपत्वादुभयोरप्यभावः। अथ एकांतेन नास्ति इत्यभ्युपगम्येत ततोय यथा भावात्मना नास्ति तथाऽभावात्मनापि न स्यात्। ततश्चाऽभावस्याऽभावात् भावस्याऽप्रतिपक्षत्वात् भावमात्रमेव न स्यात् तथा खपुष्पादयोपि भावा एव अभावाभावरूपत्वात् घटवत् इति सर्वाभावप्रसंगः। एवं भावास्तित्वेकांतेपि योज्यं। तस्माद्भावः स्यादस्ति स्यान्नास्ति तथा अभावोप्येव। जीवोपि स्यादस्ति स्यान्नास्तीत्यवसेयं। एवं त्वात्मनि घटादिवस्तुसिद्धौ च भावाभावयोः परस्परापेक्षत्वात्। यदुच्यते अर्थात् प्रकरणाद्वा घटे अप्रसक्तायाः पटादिसत्तायाः किमिति निषेधः क्रियते? इति तदयुक्तं किं तु घटे अर्थत्वात् अर्थसामान्यात् पटादिसर्वार्थप्रसंगः संभवत्येव। तत्र विशिष्टघटार्थत्वं अभ्युपगम्यमानं पटादिसत्तारूपस्यार्थसामर्थ्यात् प्रापितस्य अर्थांतरस्य निरासेनैव आत्मानं शक्नोति लब्धुं। इतरथा हि असौ घटार्थ एव न स्यात् पटाद्यर्थरूपेणाऽनिवृत्तत्वात् पटाद्यर्थस्वरूपवद्विपरीतो वा। यश्चास्य पटादिरूपेणाभावः सोपि घटधर्म एव तदधीनत्वात् भाववत् अतोसौ स्वपर्याय एव, परेण तु विशेष्यमाणत्वात् परपर्याय इत्युपचर्यते। स्वपरविशेषणायत्तं हि वस्तुस्वरूपप्रकाशनमिति। अथाऽस्त्येव जीवः इत्यत्राऽस्तिशब्दवाच्यादर्थात् भिन्नस्वभावो जीवशब्दवाच्योऽर्थः स्यात् अभिन्नस्वभावो वा? यदि अभिन्नस्वभावः ततो यत् सदर्थस्य रूपं जीवशब्दार्थस्यापि तदेव रूपमिति। ततोऽन्यधर्मानवकाशत्वादनिशिष्टार्थता स्यात् ततश्च सामानाधिकरण्याऽभावात् विशेषणविशेष्यत्वाभावो घटकुटशब्दवत् अन्यतराप्रयोगश्च स्यात्। किं च सत्त्वस्य सर्वद्रव्यपर्यायविषयत्वात् तदभिन्नस्वभावस्य जीवस्यापि तादात्म्यमिति सर्वस्य सत्त्वस्याऽविशिष्टैकजीवत्वप्रसंगः। सत्स्वभावत्वाच्च जीवस्वरूपचैतन्यतद्विकल्पज्ञानादिक्रोधादिनारकत्वादि सर्वविशेषणत्वाभावत्वप्रसंगश्च स्यात्। जीवस्वभावत्वाद्वास्तित्वस्य आत्मनि पुद्गलादिषु च सत्प्रत्ययाभिधानहेतुत्वाभावो जीवत्ववत्। अथाऽयं दोषो माभूत इति अस्तिशब्दवाच्यात् अर्थात् भिन्नस्वभावो जीवशब्दार्थः प्रतिज्ञायेत। एवमपि स्वतो जीवस्याऽसद्रूपत्वप्रसंगः। ततश्च नास्ति जीवोऽस्तिशब्दवाच्यार्थविविक्तत्वात् खरविषाणवत् विपर्ययोवा ततश्च तदधीनत्वाच्च मोक्षादिव्यवहाराभावः। अस्तित्वस्य च जीवादर्थांतरत्ववत्, इतरेभ्योपि भिन्नत्वात् निराश्रयत्वादभाव एवेति तदाश्रयव्यवहाराभावः। किं च अस्तित्वाद्भिन्नस्वभावस्य जीवस्य कः स्वभावः इति वक्तव्यं यश्चास्य स्वभाव इत्युच्यते स सर्वो न स्यात् असत्स्वभावत्वात् खपुष्पवत्। तस्मात् स्याद्भिन्नार्थत्वं स्यादभिन्नार्थत्वं वाऽभ्युपगतव्यं। पर्यायार्थादेशात् भवनजीवनभेदादस्तिजीवशब्दौ तद्व्यतिरेकेण तद्ग्रहणेनाग्रहणात् स्याद्भिन्नार्थौ द्रव्यार्थादेशात् तदव्यतिरेकात् तद्ग्रहणेन ग्रहणात् स्यादभिन्नार्थौ। तस्मात् स्यादस्ति स्यान्नास्तीति सिद्धं। इतश्च स्यादस्ति स्यान्नास्ति अर्थाभिधानप्रत्ययानां तथाप्रसिद्धेः। कश्चिदाह—जीवार्थो जीवशब्दो जीवप्रत्ययः इत्येतत्त्रितयं लोके विचारसिद्धं। तथाहि वर्णाश्रमिणः अस्तित्वमेवाश्रित्य तासु क्रियासु प्रवृत्ताः तस्मादस्त्येवेति। तमितरः प्रत्याह नास्त्येवैतत्त्रितय-अर्थस्तावन्नास्त्यनुपलब्धेः विज्ञानमेव तथा परिणतं स्वभावत् कल्पयति। प्रत्ययजीवोपि नास्त्यव विज्ञानस्य ज्ञेयरूपेणाऽनाख्येयत्वात्। स्वतस्तु विज्ञानं न जीवो नाप्यजीवः प्रकाशमात्रं केनचिदपि निरूपेण, अनिरूप्यत्वात् यद्यपि निरूप्येत स्वप्नज्ञानवत् असदाकारेणैव निरूप्येत। नास्ति ज्ञानं असदाकारत्वात् खरविषाणवत्। अभिधानमपि नास्ति। तद्धि पदरूपं वा स्यात् वाक्यरूपं वा तन्नास्त्येव वा युगपत्कालावयवत्वात्। यत्पुनरेतज्जी-

ऽनित्यमेव कृतकमिति, अनित्यत्वस्याभावे कृतकत्वस्याप्यभाव एवेत्यवधारणात् । यत्कृतक तत्सर्वमनित्यमिति, न हि सर्वप्रकारेणनित्यत्वेन सर्वप्रकार कृतकः व्याप्यते किं तु अनित्यत्वसामान्येन, न त्वनित्यत्वव्यक्त्या घटपटरथादिगतयेति । एव तर्हि त्वयैवाभ्युगत अवधारणानिष्फलत्व सामान्याऽनित्यत्वेनाऽनित्यत्व न विशेषाऽनित्यत्वेनेति । स्वगतेनापि विशेषेणानित्य भवत्येवेति चेन्न स्वगतेनेति विशेषणात् परगतेन विशेषेणाऽनित्यत्व न भवतीति आपद्यते अनवधारण । किं वा वाक्य प्रयोक्तव्य-अनित्य कृतकमिति । तथा चाऽनित्यस्याऽनवधृतत्वात् नित्यत्वप्रसगोपि । एव यद्यस्तित्वसामान्येनास्ति जीव न तु पुद्गलादिगतयाऽस्तित्वव्यक्त्याऽतो न पुद्गलाद्यस्तित्वेन अस्तित्व जीवस्येति ब्रुवता त्वयैवाभ्युपगत सामान्यरूप विशेषरूप चेति प्रकारवदस्तित्वमिति । तथा सति सामान्यास्तित्वेनास्ति विशेषास्तित्वेन नास्तीति स्यान्नास्तीति प्राप्तमनवधारण निष्फलत्व सर्वेण हि प्रकारेणाऽस्तित्वाभ्युपगमेनाऽस्ति वनिरासेन अवधारणं फलवत् स्यात् । अनियमे तु अन्यावृत्तत्वात् पुद्गलाद्यस्तित्वेनापि प्राप्तिरित्यवश्य, एकातवादिनाऽवधारणमभ्युपगमनीय । तथा च सति पूर्वोक्तो दोष स्यात् । एतद्यदस्ति तत्स्वायत्तद्रव्यक्षेत्रकालभावेन भवति नेतरेण तस्याऽप्रस्तुतत्वात् । यथा घटो द्रव्यत पार्थिवत्वेन क्षेत्रत इहत्यतया कालतो वर्तमानकालसबधितया, भावतोरक्तत्वादिना, न परायत्तैर्द्रव्यादिभिस्तेषामप्रस्तुतत्वात्, इत्येव चेत् द्रव्यक्षेत्रकालभावांतरसबधितया नास्तीत्यत स्यादस्ति स्यान्नास्तीति सिद्ध। नियमानभ्युपगमे तु स घटो न स्यादेव असामान्यत्वेन तु नियतद्रव्यक्षेत्रकालभावसबधित्वेनाऽभूतत्वात् शशविषाणवत् । अनियतद्रव्यादिरूपत्वे वा सर्वथाभावात् सामान्यमेव स्यात् नासौ घट अनियतद्रव्यादिरूपत्वात् महासामान्यवत् । कथ यदि हि असौ द्रव्यत पार्थिवत्वेन, अथोदकादित्वेनापि भवेत् ततोसौ घट एव न स्यात् । पृथिव्युदकदहनपवनादिषु वृत्तत्वात् द्रव्यत्ववत् । तथा यथेहत्यतयास्ति तथाविरोधिदिग्गतानियतदेशस्थतयापि यदि स्यात्तथा चासौ घट एव न स्यात् विरोधिदिग्गताऽनियतसर्वदेशस्थत्वात् आकाशवत् । तथा यथा वर्तमानघटकालतयास्ति तथाऽतीतशिवकाद्यनागतकपालादिकालतयापि स्यात् तथा चाऽसौ घट एव न स्यात् सर्वकालसबधित्वात् मृद्द्रव्यवत् । यथा चेह देशकालविशेषसबधित्वेनापि-अस्मत्प्रत्यक्षत्व स्यात् उदकाद्यानयनादिसव्यवहारपातित्व वा । तथा यथा नवत्वेन तथा पुराणत्वेन सर्वरूपरसगधस्पर्शसख्यासस्थानादित्वेन वा स्यात् । तथा चासौ घट एव न स्यात् सर्वथाभावित्वात् भवनवत् । यथा हि भवन रूपरसौ गध स्पर्शश्च भवति पृथु महान् ह्रस्व पूर्ण रिक्तो वा भवतीति न कुतश्चित् वस्तुनो वस्तुधर्माद्वा व्यावर्तते तच्च न घट, एव घटोपि स्यात् । एव जीवस्यापि मनुष्यत्वेनाऽर्यमाणस्य स्वद्रव्यादिरूपतयैवाऽस्तित्व नेतरथा । यदीतरथापि स्यात् मनुष्य एव न स्यात् नियतद्रव्यक्षेत्रकालभावसबधित्वेनाऽभूतत्वात्खरविषाणवत् । अनियतद्रव्यादिरूपत्वे वा सर्वथाभावात् सामान्यमेव स्यात् नासौ मनुष्य अनियतद्रव्यादिरूपत्वात् महासामान्यवत् । कथ यदि हि असौ यथा जीवद्रव्यत्वेनास्ति एव पुद्गलादित्वेनापि स्यात् ततोऽसौ मनुष्य एव न स्यात् । पुद्गलादिष्वपि दृष्टत्वात् द्रव्यत्ववत् । तथा यथेहत्यतयास्ति तथाविरोधिदिग्गतानियतदेशस्थतयापि यदि स्यात्तथा चासौ मनुष्य एव न स्यात् विरोधिदिग्गतानियतसर्वदेशस्थत्वात् आकाशवत् । तथा यथा वर्तमानकालतयास्ति तथाऽतीतनारकाद्यनागतदेवादिकालतयापि स्यात् तथा च असौ मनुष्य एव न स्यात् सर्वकालसबधित्वात् जीवत्ववत् । यथा च इह देशकालविशेषसबधितया अस्मत्प्रत्यक्षत्व तथाऽतीतनागतकालान्यदेशसबधित्वेनापि अस्मत्प्रत्यक्षत्व स्यात् यथा यौवनेन तथा वृद्धत्वेन अन्यद्रव्यगतरूपरसादिभिर्वा यदि स्यात तथा च असौ मनुष्य एव न स्यात् सर्वथाभावित्वात् भवनवत् । तस्मात् स्यादस्ति स्यान्नास्ति च स्वपरसत्ताभावाभावोभयाधीनत्वात् जीवस्य । यदि परसत्ताया अभाव स जीव स्वात्मनि नापेक्षते अत स जीवो न स्यात् सन्मात्र स्यात् । नासौ जीव सत्वे सति विशेषरूपेण अनवस्थितत्वात् सामान्यवत् । तथा स्वपरसत्ताभावापेक्षायामपि जीवत्वे यदि स्वसत्तापरिणितिं नापेक्षते तथापि तस्य वस्तुत्वमेव न स्यात् जीवत्व वा । सद्भावापरिणतत्वे वा पराभावमात्रत्वात् खपुष्पवत् । अत पराभावोपि स्वसत्तापरिणत्यपेक्ष एव अस्तित्वस्वात्मवत् । यथास्तित्वस्यात्मा अस्तित्वस्या-

१ स्यादस्ति स्यान्नास्तीतद्वे व्याधिक पाठ, ग, पुस्तके

ष्यते—सर्वसामान्येन तदभावेन च १ विशिष्टसामान्येन तदभावेन च २ विशिष्टसामान्येन तदभावसामान्येन च ३ विशिष्टसामान्येन तद्विशेषेण च ४ सामान्येन च विशिष्टसामान्येन च ५ द्रव्यसामान्येन गुणसामान्येन च ६ धर्मसमुदायेन तद्व्यतिरेकेण च ७ धर्मसामान्यसबधेन तदभावेन च ८ धर्मविशेषसबधेन तदभावेन च ९ तद्यथा सर्वसामान्येन तदभावेन इह द्विविधोऽर्थ श्रुतिगम्योऽर्थाधिगम्यश्च । तत्रानपेक्षितवृत्तिनिमित्त श्रुतिमात्रप्रापित श्रुतिगम्य । अर्थप्रकरणसभवाभिप्रायादिशब्दन्यायात् कल्पितोऽर्थाधिगम्य । तत्र आत्मा अस्तीति सर्वप्रकारानाश्रयणादिच्छावशात् कल्पितेन सर्वसामान्येन वस्तुत्वेन अस्तीति प्रथम । तत्प्रतिपक्षेणाऽभावसामान्येनाऽवस्तुत्वेन नास्त्यात्मा इति द्वितीय । आभ्यामेव युगपदभेदविवक्षाया वाचकाभावान्नाभिधीयत इति तृतीय । आभ्यामेव क्रमेणार्पिताभ्यामुभयरूप वस्तु उच्यते इति चतुर्थ । विशिष्टसामान्येन तदभावेन च यथाश्रुतत्वात् श्रुत्युपात्तेन आत्मन्येवाभिसबध ततश्चात्मत्वेनैव अस्त्यात्मा इति प्रथम । यथाश्रुतप्रतियोगित्वात् अनात्मत्वेनैव नास्त्यात्मा इति द्वितीय । युगपदुभयाभ्या आत्मानात्मत्वसदसत्त्वाभ्यामवक्तव्य । आभ्यामेव क्रमेणार्पिताभ्यामुभयरूप वस्तूच्यते इति चतुर्थ । विशिष्टसामान्येन तदभावसामान्येन च यथाश्रुत्वात् आत्मत्वेनैवास्तीति प्रथम । अभ्युपगमविरोधभयात् वस्त्वतरात्मना क्षित्युदकज्वलनघटपटगुणकर्मादिना सर्वेण प्रकारेण सामान्यतो नास्तीति द्वितीय । आभ्यामेव युगपदात्मघटादिसदसत्त्वाभ्यामवक्तव्य । क्रमेण तु वाच्यत्वात् चतुर्थ । विशिष्टसामान्येन तद्विशेषेण चात्मसामान्येनास्त्यात्मा । आत्मविशेषेण मनुष्यत्वेन नास्त्यात्मा । आत्मत्वमनुष्यत्वापेक्षाभ्या सदसत्त्वाभ्या एकत्वे युगपदवक्तव्य । पर्यायेणाभिधेयत्वाच्चतुर्थ । सामान्येन विशिष्टसामान्येन चाविशेषरूपेण द्रव्यत्वेन अस्त्यात्मा । विशिष्टेन सामान्येन प्रतियोगिनाऽनात्मत्वेन नास्त्यात्मा । ताभ्या तु द्रव्यत्वानात्मत्वसदसत्त्वाभ्या युगपदवक्तव्य । क्रमेण ताभ्या वक्तव्यत्वात् चतुर्थ । द्रव्यसामान्येन गुणसामान्येन च वस्तुनस्तथा तथा सभवात् ता ता विवक्षामाश्रित्याविशेषरूपेण द्रव्यत्वेनास्त्यात्मा तत्प्रतियोगिना विशेषरूपेण गुणत्वेन नास्त्यात्मा । ताभ्या तु द्रव्यत्वगुणत्वसदसत्त्वाभ्या युगपदवक्तव्य । क्रमेण तदुभयवाग्गोचरत्वाच्चतुर्थ । धर्मसमुदायेन तद्व्यतिरेकेण च त्रिकालगोचरानेकशक्तिज्ञानादिधर्मसमुदायरूपेणाऽऽत्मास्ति । तद्व्यतिरेकेण नास्त्यनुपलब्धे । ताभ्या युगपदवक्तव्य । क्रमेण अभिधेयतामनुभवति इति चतुर्थ । धर्मसामान्यसबधेन तदभावेन च गुणरूपगतसामान्यसबधविवक्षाया यस्य कस्यचित् धर्मस्य आश्रयत्वेन अस्त्यात्मा । न तु कस्यचिदपि धर्मस्याश्रयो न भवतीति । धर्मसामान्यानाश्रयत्वेन नास्त्यात्मा । आभ्या युगपदवक्तव्य । पर्यायेण तु तदुभयविशेष्यत्वात् चतुर्थ । धर्मविशेषसबधेन तदभावेन च योऽनेकधर्मिणोऽन्यतमधर्मसबधेन तद्विपक्षेण चाविवक्षाया यथास्त्यात्मा । नित्यत्वेन निरवयवत्वेन चेतनत्वेन वा तेषामेवान्यतमधर्मप्रतिपक्षेण नास्त्यात्मा । युगपत्ताभ्यामवक्तव्य । क्रमेण तदभिधानविषयत्वाच्चतुर्थ । पचमो भग उच्यते—त्रिभि आत्मभिर्व्यश जीवस्यानेकद्रव्यात्मकस्याऽनेकपर्यायात्मकस्य च किंचिद्द्रव्यार्थविशेष पर्यायार्थविशेष वा आश्रित्यास्तीत्युच्यते । एक आत्मा तस्यैवाऽन्य आत्मा द्रव्यसामान्य पर्यायसामान्य तद्विशेषद्वय वाऽगीकृत्य युगपदविभागविवक्षाया वचनगोचरातीत । यथा स्यादस्त्यात्मा द्रव्यत्वेन द्रव्यविशेषेण वा जीवत्वेन मनुष्यत्वादिना वा द्रव्यपर्यायसामान्यमुररीकृत्य वस्तुत्वसत्त्वमवस्तुत्वासत्त्व च युगपदभेदविवक्षायामवाच्य विशेषद्वय वा मनुष्यत्वादि यत सर्वेऽपि तस्यैकस्यैव ते आत्मनो विद्यते तदैवेति । तत स्यादस्ति चाऽवक्तव्यश्च जीव । अयमपि सकलादेश, अशाभेदविवक्षाया एकांशमुखेन सकलसग्रहात् । तथा षष्ठ त्रिभि आत्मभिर्व्यश यतो वस्तुगत नास्तित्वमवक्तव्यरूपानुविद्ध नातरेणात्मभेद शक्य कल्पयितु वस्तुनस्तथापि भावात् । तत्र नास्तित्व पर्यायाश्रय । स च पर्यायो युगपद्वृत्त क्रमवृत्तो वा सहवृत्तो वा जातस्य पर्याय अविरोधात् । सहावस्थायी सहवृत्ते गतीन्द्रियकाययोगवेदकषायज्ञानसयमादि । क्रमवर्ती तु क्रोधादिदेवादिबाल्यादिलक्षण । तत्र गत्यादिव्यतिरिक्त क्रोधादिक्रमवृत्तधर्मरूपनैरतर्यमात्रादर्थातरभूत एक, अवस्थित । द्रव्यार्थो जीवो नाम नास्ति किं तु त एव धर्मास्तथा सन्निविष्टा जीवव्यपदेशभाज इति अस्या कल्पनाया नास्तित्व । यश्च वस्तुत्वेन सन्निति

१ अभिधातुरित्यपि पाठ ।

मशब्दग्रहण तत्परिकल्पितैर्वर्णभागैरनुक्रमेणाऽऽहितशक्तिकासु बुद्धिषु शक्तिपरिपाकप्राप्तौ प्रत्यस्तमितसकल वर्णभागविषयविज्ञान जीवशब्दत्वेनाऽध्यवसीयते नत्वभिधानजीव कश्चिदस्ति तदपि विज्ञान क्षणिकत्वात् प्रत्यर्थवशवर्तित्वाच्च। एकस्य पूर्वापरीभूतार्थप्रत्यवभासनासभवान्नास्त्येवेति। यद्येव वाच्यवाचकसबधो लोके रूढ प्रत्याख्यात स्यात् ततश्च लोकविरोध। तन्नास्तित्वे परीक्षाप्रयासश्च निष्फल स्यात् इत्यभ्युपगतव्य जीव स्यादस्ति स्यान्नास्तीति। अत द्रव्यार्थिक पर्यायार्थिकमात्ममात् कुर्वन् व्याप्रियते। पर्यायार्थिकापि द्रव्यार्थिकमिति उभावपि इमौ सकलादेशौ तृतीयो विकल्प उच्यते। द्वाभ्यां-गुणाभ्यामेकस्यैवाऽभिन्नस्याभेदरूपेण युगपद्वक्तुमिष्टत्वात्। तत्र यथा प्रथमद्वितीययोर्विकल्पयोरेकस्मिन् काले एकेन शब्देन एकस्यार्थस्य समस्तस्यैव एकेन गुणरूपेणाभिधान क्रमादेव यदा द्वाभ्यां प्रतियोगिभ्या गुणाभ्यामवधारणात्मकाभ्यां युगपदेकस्मिन् काले एकेन शब्देन एकस्यार्थस्य कृत्स्नस्यैवाभेदरूपेणाभिधित्सा तदा अवाच्य तद्विधार्थस्य शब्दस्य वा भावात् तत्र युगपद्भावो गुणानां कालादिभिरभेदेन विवक्षितानां वृत्ति नच तैरभेदोत्र सभवति। के पुनस्ते कालादय ?

**काल आत्मरूपमर्थसंबधः उपकारो गुणिदेश ससर्गः शब्दः ॥ २० ॥** इति तत्र येन कारणेन विरुद्धा भवति गुणास्तेषामेकस्मिन् काले क्वचिदेकवस्तुनिवृत्तिर्न दृष्टा अतस्तयोर्नास्ति वाचक शब्द तथावृत्त्यभावात्। अत एकस्मिन्नात्मनि सदसत्वे प्रविभक्ते अससर्गात्मरूपे अनेकातरूपे न स्त। एककाले येनात्मा तयोच्येत ताभ्या विविक्त च परस्परत आत्मरूप गुणाना नान्योन्यात्मनि वर्तते। यत उभाभ्यां युगपदभेदेनोच्यते। नच विरुद्धत्वात्। सदसत्वादीनां एकांतपक्षे गुणानामेकद्रव्याधारा वृत्तिरस्ति यत अभिन्नाधारत्वेनाऽभेदो युगपद्भाव स्यात्। येन केनचित् शब्देन वा सदसत्व उच्येयातां। नच सबधतोऽभिन्नता गुणाना समवति भिन्नत्वात् सबधस्य। यथा छत्रदेवदत्तसबधोऽन्य दडदेवदत्तसबधात् कारणयो सबधिनोर्भिन्नत्वात् न तावेकेन सबधेनाभिन्नौ। एव सदसत्त्वयोरात्मना सह सबधस्य भिन्नत्वात् न सबधेनापि युगपद्वृत्तिसभव यत शब्देनोच्यते। समवाय इति चेन्न तेनापि भिन्नेन भवितव्य भिन्नाभिधानप्रत्ययहेतुत्वात् सयोगवत्। न च गुणा उपकारेणाऽभिन्ना यतो द्रव्यस्य गुणाधीन उपकारो नीलरक्ताद्युपरजन ते च स्वरूपतो भिन्ना। यच्च तेषामात्मनि नीलरक्तत्वाद्यस्ति रूप यावच्च नीलनीलतरादि तावता द्रव्य रजयति अतस्तेषामुपकारोपि भिद्यत एव। एव सदसत्वयोर्भिन्नत्वात् सत्त्वेनोपरक्त सदसत्त्वेनोपरक्त असत्त्वोपकारसारूप्य यत तदभेदेन शब्दो वाचक स्यात्। नचैकदेशे गुणिन उपकार सभवति येनैकदेशोपकारेण सहभावो भवेत्। नीलादेर्गुणस्य कृत्स्नस्य हि गुणोपकारकत्व द्रव्यस्य च पटादे समस्तस्योपकार्यत्व। गुण उपकारको गुणी उपकार्य इति। नचैकदेशो गुणगुणिनो। अत कृत्स्नयो उपकार्योपकारकरूपसिद्धिर्न भेनेदन यतो देशत सहभावात् कश्चिच्छब्दो वाचक कल्पेत्। नचैकातपक्षे गुणानां ससृष्टमनेकात्मक रूपमस्ति अवधृतैकातरूपत्वात् सत्त्वासत्त्वादेर्गुणस्य। यथा शबलरूपव्यतिरिक्तौ परस्परनिर्विक्तौ शुक्लकृष्णौ गुणौ अससृष्टौ नैकस्मिन्नर्थे सहवर्तितु समर्थौ अवधृतरूपत्वात्। अत ताभ्यां ससर्गाभावात् एकातपक्षेन युगपदभिधानमस्ति अर्थस्य तथा वर्तितु शक्त्यभावात्। तद्विविधस्य च अर्थसबधस्याऽभावात्। नचैक शब्दो द्वयोर्गुणयो सहवाचकोस्ति। यदि स्यात् सच्छब्द स्वार्थवदसदपि सत्कुर्यात् नच तथा लोके सप्रत्ययोस्ति तयोर्विशेषशब्दत्वादेव मुक्तात् कालादियुगपद्भावासभवात्। शब्दस्य च एकस्य उभयार्थवाचिनोऽनुपलब्धे अवक्तव्य आत्मा। अथवा वस्तुनि मुख्यप्रवृत्त्या तुल्यबलयो परस्पराभिधानप्रतिबधे सति इष्टविपरीतनिर्गुणत्वापत्ते विवक्षितोभयगुणत्वेनाऽनभिधानात् अवक्तव्य अयमपि सकलादेश परस्परावधारितविविधरूपेकात्मकाभ्यां गुणाभ्यां गुणविशेषणत्वेन युगपदुपक्षिताभ्यां अविवक्षितांशभेदस्य वस्तुन समस्तस्य एकेन गुणरूपेणाभेदवृत्त्या अभेदोपचारेण वा विधातु प्रक्रातत्वात्। स च अवक्तव्यशब्देन अन्यश्च षड्भिर्वचनै पर्यायातरविवक्षया च वक्तव्यत्वात् स्यादवक्तव्य। यदि सर्वथा अवक्तव्य इत्यपि वा वक्तव्य स्यात् कुतो बधमोक्षादिप्रक्रियाप्ररूपणविधि ?। ताभ्यामेव क्रमेणाभिधित्सायां तथैव वस्तुसकलस्वरूपसमहात् चतुर्थोपि विकल्प सकलादेश अयमपि स्यादित्येवार्पयितव्य सर्वथोभयात्मकत्वे परस्परविरोधात् उभयदोषप्रसगाच्च, कथमेते निरू-

ष्यते–सर्वसामान्येन तदभावेन च १ विशिष्टसामान्येन तदभावेन च २ विशिष्टसामान्येन तदभावसामान्येन च ३ विशिष्टसामान्येन तद्विशेषेण च ४ सामान्येन च विशिष्टसामान्येन च ५ द्रव्यसामान्येन गुणसामान्येन च ६ धर्मसमुदायेन तद्व्यतिरेकेण च ७ धर्मसामान्यसबंधेन तदभावेन च ८ धर्मविशेषसबंधेन तदभावेन च ९ तद्यथा सर्वसामान्येन तदभावेन इह द्विविधोऽर्थ श्रुतिगम्याऽर्थाधिगम्यश्च । तत्रानपेक्षितवृत्तिनिमित्त श्रुतिमात्रप्रापित श्रुतिगम्य । अर्थप्रकरणसमवाभिप्रायादिशब्दन्यायात् कल्पितोऽर्थाधिगम्य । तत्र आत्मा अस्तीति सर्वप्रकारानाश्रयणादिच्छावशात् कल्पित सर्वसामान्येन वस्तुत्वेन अस्तीति प्रथम । तत्प्रतिपक्षेणाऽभावसामान्येनाऽवस्तुत्वेन नास्त्यात्मा इति द्वितीय । आभ्यामेव युगपदभेदविवक्षायां वाचकाभावान्नाभिधीयत इति तृतीय । आभ्यामेव क्रमेणार्पिताभ्यामुभयरूप वस्तु-उच्यते इति चतुर्थ । विशिष्टसामान्येन तदभावेन च यथाश्रुतत्वात् श्रुत्युपात्तेन आत्मन्येवाभिसबंध ततश्चात्मत्वेनैव अस्त्यात्मा इति प्रथम । यथाश्रुतप्रतियोगित्वात् अनात्मत्वेनैव नास्त्यात्मा इति द्वितीय । युगपदुभयाभ्या आत्मानात्मत्वसदसत्त्वाभ्यामवक्तव्य । आभ्यामेव क्रमेणार्पिताभ्यामुभयरूप वस्तूच्यते इति चतुर्थ । विशिष्टसामान्येन तदभावसामान्येन च यथाश्रुत्वात् आत्मत्वेनैवास्तीति प्रथम । अभ्युपगमविरोधभयात् वस्त्वतरात्मना क्षित्युदकज्वलनघटपटगुणकर्मादिना सर्वेण प्रकारेण सामान्यतो नास्तीति द्वितीय । आभ्यामेव युगपदात्मघटादिसदसत्त्वाभ्यामवक्तव्य । क्रमेण तु वाच्यत्वात् चतुर्थ । विशिष्टसामान्येन तद्विशेषेण चात्मसामान्येनास्त्यात्मा । आत्मविशेषेण मनुष्यत्वेन नास्त्यात्मा । आत्मत्वमनुष्यत्वापेक्षाभ्या सदसत्त्वाभ्या-एकत्वे युगपदवक्तव्य । पर्यायेणाभिधेयत्वाच्चतुर्थ । सामान्येन विशिष्टसामान्येन चाविशेषरूपेण द्रव्यत्वेन अस्त्यात्मा । विशिष्टेन सामान्येन प्रतियोगिनाऽनात्मत्वेन नास्त्यात्मा । ताभ्या तु द्रव्यत्वानात्मत्वसदसत्त्वाभ्या युगपदवक्तव्य । क्रमेण ताभ्या वक्तव्यत्वात् चतुर्थ । द्रव्यसामान्येन गुणसामान्येन च वस्तुनस्तथा तथा सभवात् ता ता विवक्षामाश्रित्याविशेषरूपेण द्रव्यत्वेनास्त्यात्मा तत्प्रतियोगिना विशेषरूपेण गुणत्वेन नास्त्यात्मा । ताभ्या तु द्रव्यत्वगुणत्वसदसत्त्वाभ्यां युगपदवक्तव्य । क्रमेण तदुभयवाग्गोचरत्वाच्चतुर्थ । धर्मसमुदायेन तद्व्यतिरेकेण च त्रिकालगोचरानेकशक्तिज्ञानादिधर्मसमुदायरूपेणाऽऽत्मास्ति । तद्व्यतिरेकेण नास्त्यनुपलब्धे । ताभ्या युगपदवक्तव्य । क्रमेण अभिधेयतामनुभवति इति चतुर्थ । धर्मसामान्यसबंधेन तदभावेन च गुणरूपगतसामान्यसबधविवक्षायां यस्य कस्यचित् धर्मस्य आश्रयत्वेन अस्त्यात्मा । न तु कस्यचिदपि धर्मस्याश्रयो न भवतीति । धर्मसामान्यानाश्रत्वेन नास्त्यात्मा । आभ्यां युगपदवक्तव्य । पर्यायेण तु तदुभयविशेष्यत्वात् चतुर्थ । धर्मविशेषसबंधेन तदभावेन च वाऽनेकधर्मिणोऽन्यतमधर्मसबंधेन तद्विपक्षेण चाविवक्षाया यथास्त्यात्मा । नित्यत्वेन निरवयवत्वेन चेतनत्वेन वा तेषामेवान्यतमधर्मप्रतिपक्षेण नास्त्यात्मा । युगपत्ताभ्यामवक्तव्य । क्रमेण तदभिधानविषयत्वाच्चतुर्थ । पचमो भग उच्यते—त्रिभि आत्माभिव्यंश जीवस्यानेकद्रव्यात्मकस्याऽनेकपर्यायात्मकस्य च किंचिद्द्रव्यार्थविशेष पर्यायार्थविशेष वा आश्रित्यास्तीत्युच्यते । एक आत्मा तस्यैवाऽन्य आत्मा द्रव्यसामान्य पर्यायसामान्य तद्विशेषद्वय वाऽगीकृत्य युगपदविभागविवक्षाया वचनगोचरातीत । यथा स्यादस्त्यात्मा द्रव्यत्वेन द्रव्यविशेषेण वा जीवत्वेन मनुष्यत्वादिना वा द्रव्यपर्यायसामान्यमुररीकृत्य वस्तुत्वावस्तुत्वा सत्त्व च युगपदभेदाविवक्षायामवाच्य विशेषद्वय वा मनुष्यत्वादि यत सर्वेपि तस्यैकस्यैव ते आत्मनो विद्यते तदैवेति । तत स्यादस्ति चाऽवक्तव्यश्च जीव । अयमपि सकलादेश, अशाभेदविवक्षाया एकांशमुखेन सकलसग्रहात् । तथा षष्ठ त्रिभि आत्मभिव्यंश यतो वस्तुगत नास्तित्वमवक्तव्यरूपानुविद्ध नातरेणात्मभेद शक्य कल्पयितु वस्तुनस्तथापि, भावात् । तत्र नास्तित्व पर्यायाश्रय । स च पर्यायो युगपद्वृत्त क्रमवृत्तो वा सहवृत्तो वा जीवस्य पर्याय अविरोधात् । सहानवस्थायी सहवृत्ते गतीन्द्रियकाययोगवेदकषायज्ञानसयमादि । क्रमवर्ती तु क्रोधादिदेवादिवाल्यादिलक्षण । तत्र गत्यादिव्यतिरिक्त क्रोधादिक्रमवृत्तधर्मरूपनैरतर्यमात्रादर्थांतरभूत एक, अवस्थित । द्रव्यार्थो जीवो नाम नास्ति किं तु त एव धर्मास्तथा सन्निविष्टा जीवव्यपदेशभाज इति अस्या कल्पनायां नास्तित्व । यश्च वस्तुत्वेन सन्निति

---

१ अभिधातुरित्यपि पाठ ।

वशब्दग्रहण तत्परिकल्पितैर्वर्णभागैरनुक्रमेणाऽऽहितशक्तिकासु बुद्धिषु शक्तिपरिपाकप्राप्तौ प्रत्यस्तमितसकल वर्णभागविषयविज्ञान जीवशब्दत्वेनाऽध्यवसीयते नत्वभिधानजीव कश्चिदस्ति तदपि विज्ञान क्षणिकत्वात् प्रत्यर्थवशवर्तित्वाच्च। एकस्य पूर्वापरीभूतार्थप्रत्यवभासनासभवान्नास्त्येवेति। यद्येव वाच्यवाचकसबधोलोके रूढ प्रत्याख्यात स्यात् ततश्च लोकविरोध। तन्नास्तित्वे परीक्षाप्रयासश्च निष्फल स्यात् इत्यभ्युपगतव्य जीव स्यादस्ति स्यान्नास्तीति। अत द्रव्यार्थिक पर्यायार्थिकमात्ममात् कुर्वन् व्याप्रियते। पर्यायार्थिकापि द्रव्यार्थिकमिति उभावपि इमौ सकलादेशौ तृतीयो विकल्प उच्यते। द्वाभ्या गुणाभ्यामेकस्यैवाऽभिन्नस्या-भेदरूपेण युगपद्वक्तुमिष्टत्वात्। तत्र यथा प्रथमद्वितीययोर्विकल्पयोरकस्मिन् काले एकेन शब्देन एकस्यार्थस्य समस्तस्यैव एकेन गुणरूपेणाभिधान क्रमादेव यदा द्वाभ्यां प्रतियोगिभ्या गुणाभ्यामवधारणात्मकाभ्यां युगपदेकस्मिन् काले एकेन शब्देन एकस्यार्थस्य कृत्स्नस्यैवाभेदरूपेणाभिधित्सा तदा अवाच्य तद्विधार्थस्य शब्दस्य वा भावात् तत्र युगपद्भावो गुणानां कालादिभिरभेदेन विवक्षितानां वृत्ति नच तैरभेदोत्र सभवति। के पुनस्ते कालादय?

**काल आत्मरूपमर्थसबंधः उपकारो गुणिदेश ससर्गः शब्दः ॥ २० ॥** इति तत्र येन कारणेन विरुद्धा भवति गुणास्तेषामेकस्मिन् काले क्वचिदेकवस्तुनिवृत्तिर्न दृष्टा अतस्तयोर्नास्ति वाचक शब्द तथावृत्त्यभावात्। अत एकस्मिन्नात्मनि सदसत्वे प्रविभक्ते अससर्गात्मरूपे अनेकांतरूपे न स्त। एककाले येनात्मा तयोच्येत ताभ्यां विविक्त च परस्परत आत्मरूप गुणाना नान्योन्यात्मनि वर्तते। यत उभाभ्यां युगपदभेदेनोच्यते। नच विरुद्धत्वात्। सदसत्वादीनां एकांतपक्षे गुणानामेकद्रव्याधारा वृत्तिरस्ति यत अभिन्नाधारत्वेनाऽभेदो युगपद्भाव स्यात्। येन केनचित् शब्देन वा सदसत्व उच्येयातां। नच सबधतो-ऽभिन्नता गुणाना सभवति भिन्नत्वात् सबधस्य। यथा छत्रदेवदत्तसबधोऽन्य दडदेवदत्तसबधात् कारणयो सबधिनोर्भिन्नत्वात् न तावेकेन सबधेनाभिन्नौ। एव सदसत्त्वयोरात्मना सह सबधस्य भिन्नत्वात् न सबधे-नापि युगपद्वृत्तिसभव यत शब्देनोच्यते। समवाय इति चेन्न तेनापि भिन्नेन भवितव्य भिन्नाभिधानप्रत्य-यहेतुत्वात् सयोगवत्। न च गुणा उपकारेणाऽभिन्ना यतो द्रव्यस्य गुणाधीन उपकारो नीलरक्ताद्युपरजन ते च स्वरूपतो भिन्ना। यच्च तेषामात्मनि नीलरक्तत्वाद्यस्ति रूप यावच्च नीलनीलतरादि तावता द्रव्य रजयति अतस्तेषामुपकारोपि भिद्यत एव। एव सदसत्वयोर्भिन्नत्वात् सत्त्वेनोपरक्त सदसत्त्वेनोपरक्त असत्त्वोपकारसा-रूप्य यत तदभेदेन शब्दो वाचक स्यात्। नचैकदेशे गुणिन उपकार सभवति येनैकदेशोपकारेण सहभावो भवेत्। नीलादेर्गुणस्य कृत्स्नस्य हि गुणोपकारकत्व द्रव्यस्य च पटादे समस्तस्योपकार्यत्व। गुण उपकारको गुणी उपकार्य इति। नचैकदेशो गुणगुणिनो। अत कृत्स्नयो उपकार्योपकारकरूपसिद्धिर्न भेदेन यतो देशत सहभावात् कश्चिच्छब्दो वाचक कल्पेत्। नचैकांतपक्षे गुणानां ससृष्टमनेकात्मक रूपमस्ति अवधृतैकातरूपत्वात् सत्त्वासत्त्वादेर्गुणस्य। यथा शबलरूपव्यतिरिक्तौ परस्परविविक्तौ शुक्लकृष्णौ गुणौ अससृष्टा नैकस्मिन्नर्थे सहवर्तितु समर्थौ अवधृतरूपत्वात्। अत ताभ्यां ससर्गाभावात् एकातपक्षेन युग-पदभिधानमस्ति अर्थस्य तथा वर्तितु शक्त्यभावात्। तद्विविषयस्य च अर्थसबन्धस्याऽभावात्। नचैक शब्दो द्वयोर्गुणयो सहवाचकोस्ति। यदि स्यात् सच्छब्द स्वार्थवदसदपि सत्कुर्यात् नच तथा लोके सप्रत्ययोस्ति तयोर्विशेषशब्दत्वादेव मुक्तात् कालादियुगपद्भावासभवात्। शब्दस्य च एकस्य उभयार्थवाचिनोऽनुपलब्धे अवक्तव्य आत्मा। अथवा वस्तुनि मुख्यप्रवृत्त्या तुल्यबलयो परस्पराभिधानप्रतिबधे सति इष्टविपरीतनिर्गुण-त्वापत्ते विवक्षितोभयगुणत्वेनाऽनभिधानात् अवक्तव्य अयमपि सकलादेश परस्परावधारितविविधरूपै-कात्मकाभ्यां गुणाभ्यां गुणविशेषणत्वेन युगपदुपक्षिप्ताभ्यां अविवक्षितांशभेदस्य वस्तुन समस्तस्य एकेन गुणरूपेणाभेदवृत्त्या अभेदोपचारेण वा विधातु प्रक्रांतत्वात्। स च अवक्तव्यशब्देन अन्यश्च षड्भिर्वचनै पर्या-यातरविवक्षया च वक्तव्यत्वात् स्यादवक्तव्य। यदि सर्वथा अवक्तव्य इत्यपि वा वक्तव्य स्यात् कुतो बधमोक्षा-दिप्रक्रियाप्ररूपणविधि?। ताभ्यामेव क्रमेणाभिधित्सायां तथैव वस्तुसकलस्वरूपसंग्रहात् चतुर्थोपि विकल्प सकलादेश अयमपि स्यादित्येवार्पयितव्य सर्वथोभयात्मकत्वे परस्परविरोधात् उभयदोषप्रसगाच्च; कथमेते निरू-

ध्यते—सर्वसामान्येन तदभावेन च १ विशिष्टसामान्येन तदभावेन च २ विशिष्टसामान्येन तदभावसामान्येन च ३ विशिष्टसामान्येन तद्विशेषेण च ४ सामान्येन च विशिष्टसामान्येन च ५ द्रव्यसामान्येन गुणसामान्येन च ६ धर्मसमुदायेन तद्व्यतिरेकेण च ७ धर्मसामान्यसंबंधेन तदभावेन च ८ धर्मविशेषसंबंधेन तदभावेन च ९ तद्यथा सर्वसामान्येन तदभावेन इह द्विविधोऽर्थ श्रुतिगम्योऽर्थाधिगम्यश्च । तत्रानपेक्षितवृत्तिनिमित्त श्रुतिमात्रप्रापित श्रुतिगम्य । अर्थप्रकरणसंभवाभिप्रायादिशब्दन्यायात् कल्पितोऽर्थाधिगम्य । तत्र आत्मा अस्तीति सर्वप्रकारानाश्रयणादिच्छावशात् कल्पितेन सर्वसामान्येन वस्तुत्वेन अस्तीति प्रथम । तत्प्रतिपक्षेणाऽभावसामान्येनाऽवस्तुत्वेन नास्त्यात्मा इति द्वितीय । आभ्यामेव युगपदभेदविवक्षाया वाचकाभावान्नाभिधीयत इति तृतीय । आभ्यामेव क्रमेणार्पिताभ्यामुभयरूप वस्तु-उच्यते इति चतुर्थ । विशिष्टसामान्येन तदभावेन च यथाश्रुतत्वात् श्रुत्युपात्तेन आत्मत्वेनाभिसंबंध ततश्चात्मत्वेनैव अस्त्यात्मा इति प्रथम । यथाश्रुतप्रतियोगित्वात् अनात्मत्वेनैव नास्त्यात्मा इति द्वितीय । युगपदुभयाभ्या आत्मानात्मत्वसदसत्त्वाभ्यामवक्तव्य । आभ्यामेव क्रमेणार्पिताभ्यामुभयरूप वस्तूच्यते इति चतुर्थ । विशिष्टसामान्येन तदभावसामान्येन च यथाश्रुत्वात् आत्मत्वेनैवास्तीति प्रथम । अभ्युपगमविरोधभयात् वस्त्वन्तरात्मना क्षित्युदकज्वलनघटपटगुणकर्मादिना सर्वेण प्रकारेण सामान्यतो नास्तीति द्वितीय । आभ्यामेव युगपदात्मघटादिसदसत्त्वाभ्यामवक्तव्य । क्रमेण तु वाच्यत्वात् चतुर्थ । विशिष्टसामान्येन तद्विशेषेण चात्मसामान्येनास्त्यात्मा । आत्मविशेषेण मनुष्यत्वेन नास्त्यात्मा । आत्मत्वमनुष्यत्वापेक्षाभ्यां सदसत्त्वाभ्या-एकत्वे युगपदवक्तव्य । पर्यायेणाभिधेयत्वाच्चतुर्थ । सामान्येन विशिष्टसामान्येन चाविशेषरूपेण द्रव्यत्वेन अस्त्यात्मा । विशिष्टेन सामान्येन प्रतियोगिनाऽनात्मत्वेन नास्त्यात्मा । ताभ्या तु द्रव्यत्वानात्मत्वसदसत्त्वाभ्या युगपदवक्तव्य । क्रमेण ताभ्या वक्तव्यत्वात् चतुर्थ । द्रव्यसामान्येन गुणसामान्येन च वस्तुनस्तथा तथा संभवात् ता ता विवक्षामाश्रित्याविशेषरूपेण द्रव्यत्वेनास्त्यात्मा तत्प्रतियोगिना विशेषरूपेण गुणत्वेन नास्त्यात्मा । ताभ्या तु द्रव्यत्वगुणत्वसदसत्त्वाभ्यां युगपदवक्तव्य । क्रमेण तदुभयवाग्गोचरत्वाच्चतुर्थ । धर्मसमुदायेन तद्व्यतिरेकेण च त्रिकालगोचरानेकशक्तिज्ञानादिधर्मसमुदायरूपेणाऽऽत्मास्ति । तद्व्यतिरेकेण नास्त्यनुपलब्धे । ताभ्या युगपदवक्तव्य । क्रमेण अभिधेयतामनुभवति इति चतुर्थ । धर्मसामान्यसंबंधेन तदभावेन च गुणरूपगतसामान्यसंबंधविवक्षायां यस्य कस्यचित् धर्मस्य आश्रयत्वेन अस्त्यात्मा । न तु कस्यचिदपि धर्मस्याश्रयो न भवतीति । धर्मसामान्यानाश्रत्वेन नास्त्यात्मा । आभ्या युगपदवक्तव्य । पर्यायेण तु तदुभयविशेष्यत्वात् चतुर्थ । धर्मविशेषसंबंधेन तदभावेन च वाऽनेकधर्मिणोऽन्यतमधर्मसंबंधेन तद्विपक्षेण चाविवक्षाया यथास्त्यात्मा । नित्यत्वेन निरवयवत्वेन चेतनत्वेन वा तेषामेवान्यतमधर्मप्रतिपक्षेण नास्त्यात्मा । युगपत्ताभ्यामवक्तव्य । क्रमेण तदभिधानविषयत्वाच्चतुर्थ । पचमो भग उच्यते—त्रिभि आत्मभिर्व्यंश जीवस्यानेकद्रव्यात्मकस्याऽनेकपर्यायात्मकस्य च किंचिद्द्रव्यार्थविशेष पर्यायार्थविशेष वा आश्रित्यास्तीत्युच्यते । एक आत्मा तस्यैवाऽन्य आत्मा द्रव्यसामान्य पर्यायसामान्य तद्विशेषद्वय वाऽगीकृत्य युगपदविभागविवक्षाया वचनगोचरातीत । यथा स्यादस्त्यात्मा द्रव्यत्वेन द्रव्यविशेषेण वा जीवत्वेन मनुष्यत्वादिना वा द्रव्यपर्यायसामान्यमुररीकृत्य वस्तुत्वसत्त्वमवस्तुत्वासत्त्व च युगपदभेदविवक्षायामवाच्य विशेषद्वय वा मनुष्यत्वादि यत सर्वेपि तस्यैकस्यैव ते आत्मनो विद्यते तदैवेति । तत स्यादस्ति चाऽवक्तव्यश्च जीव । अयमपि सकलादेश, अशाभेदविवक्षाया एकांशमुखेन सकलसग्रहात् । तथा षष्ठ त्रिभि आत्मभिर्व्यंश यतो वस्तुगत नास्तित्वमवक्तव्यरूपानुविद्ध नान्तरेणात्मभेद शक्य कल्पयितु वस्तुनस्तथापि, भावात् । तत्र नास्तित्व पर्यायाश्रय । स च पर्यायो युगपद्वृत्त क्रमवृत्तो वा सहवृत्तो वा जीवस्य पर्याय अविरोधात् । सहानस्थायी सहवृत्ते गत्यादिकाययोगवेदकषायज्ञानसयमादि । क्रमवर्ती तु क्रोधादिदेवादिबाल्यादिलक्षण । तत्र गत्यादिव्यतिरिक्त क्रोधादिक्रमवृत्तधर्मरूपैरेतर्यमात्रादर्थांतरभूत एक, अवस्थित । द्रव्यार्थो जीवो नाम नास्ति किं तु त एव धर्मास्तथा सन्निविष्टा जीवव्यपदेशभाज इति अस्या कल्पनाया नास्तित्व । यश्च वस्तुत्वेन सन्निति

१ अभिधातुरित्यपि पाठ ।

द्रव्यार्थांशः यश्च तत्प्रतियोगिना वस्तुत्वेनाऽसन्निति पर्यायांशः । ताभ्यां युगपदभेदविवक्षायां अवक्तव्य इति द्वितीयोंशः । तस्मान्नास्ति चावक्तव्यश्चाऽऽत्मा । अयमपि सकलादेशः शेषवाग्गोचरस्वरूपसमूहस्याऽविनाभावात्, तत्रैवांतर्भूतस्य स्याच्छब्देन द्योतितत्वात् । तथा सप्तमो विकल्पः चतुर्भिरात्मभिः, त्र्यंशः द्रव्यार्थविशेषं कंचिदाश्रित्याऽस्तित्वं पर्यायविशेषं च कंचिदाश्रित्य नास्तित्वमिति समुचितरूपं भवति । द्वयोरपि प्राधान्येन विवक्षितत्वात् । द्रव्यपर्यायाविशेषेण च केनचिद्द्रव्यपर्यायसामान्येन केन चित् युगपदवक्तव्य. इति तृतीयोंशः । तत. स्यादस्ति च नास्तिचाऽवक्तव्यश्च आत्मा । अयमपि सकलादेशः यतः सर्वान् द्रव्यार्थान् द्रव्यमित्यभेदादेकं द्रव्यार्थं मन्यते । सर्वान् पर्यायार्थांश्च पर्यायजात्यभेदादेकं पर्यायार्थं, अतो विवक्षितवस्तुजात्यभेदात्कृत्स्नं वस्तु एकद्रव्यार्थाभिन्नं एकपर्यायाभेदोपचरितं वा एकमिति सकलसंग्रहात् । अथ कथं विकलादेशः ?

**निरंशस्यापि गुणभेदादंशकल्पना विकलादेशः ॥ २९ ॥** स्वेन तत्त्वेनाप्रविष्टभागस्यापि वस्तुनो विविक्तं गुणरूपं स्वरूपोपरंजकमपेक्ष्य प्रकल्पितमंशं कृत्वा अनेकात्मकैकत्वव्यवस्थायां नरसिंहसिंहत्ववत् समुदायात्मकमात्मरूपमभ्युपगम्य कालादिभिरन्योन्यविषयानुप्रवेशरहितांशकल्पनं विकलादेशः । ननु केवलसिंहे सिंहत्ववत् एकात्मकैकत्वपरिग्रहात् यथा वा पानकमनेकखंडदाडिमकर्पूरादिरसानुविद्धमास्वाद्याऽनेकरसात्मकत्वं, अस्यानसाय पुनः स्वशक्तिविशेषादिदमप्यस्तीदमप्यस्तीति विशेषनिरूपणं क्रियते । तथा नैरात्म्यैकवस्त्वभ्युपगमपूर्वकं हेतुविशेषसामर्थ्यात् अर्पितसाध्यविशेषावधारणं विकलादेशः । कथं ? पुनरर्थस्याऽभिन्नस्य गुणो भेदकः ? दृष्टो हि अभिन्नस्याप्यर्थस्य गुणस्तत्त्वभेदं कल्पयन् । यथा पटुत् भवान् पटुरासीत् पटुतर एष म इति गुणविवक्तरूपस्य द्रव्यस्याऽसंभवात् । गुणभेदेन गुणिनोपि भेदः ।

**तत्रापि तथा सप्तभंगी ॥ ३० ॥** तत्रापि विकलादेशे तथाऽऽदेशवशेन सप्तभंगी वेदितव्या । कथं ? गुणिभेदकेष्वंशेषु क्रमेण यौगपद्येन क्रमयौगपद्याभ्यां वा विवक्षावशात् विकलादेशा भवति । तत्र प्रथमद्वितीययोरप्रचितः क्रमः, तृतीये यौगपद्यं, चतुर्थे प्रचितः क्रमः, पंचमे षष्ठे वा अप्रचितक्रमयौगपद्ये, सप्तमे प्रचितक्रमयौगपद्ये । तद्यथा सामान्यादिषु द्रव्यार्थादेशेषु केन चिदुपलभ्यमानत्वात् स्यादस्त्येवात्मेति प्रथमो विकलादेशः । अत्रेतरेषां वस्तुनि सतामपि कालादिभिर्भेदविवक्षातः शब्दवाच्यत्वेनातभावाभावान्विरासाभावाच्च न विधिर्न प्रतिषेधः । एवं शेषभंगेष्वपि विवक्षितांशमात्रप्ररूपणायां इतरेष्वौदासीन्येन विकलादेशकल्पना योज्या.। ननु च सामान्यार्थानिच्छेदेन विशेषणविशेष्यसंबंधावद्योतनार्थे एवकारे सति तदवधारणादितरेषां निवृत्तिः प्राप्नोति ? नैष दोषः अत्राप्यत एव स्याच्छब्दप्रयोग. कर्तव्यः स्यादस्त्येव जीव इत्यादि । कोर्थः ? एवकारेणेतरनिवृत्तिप्रसंगे स्वात्मलोपात् सकलो लोपो मा विज्ञायीति वस्तुनि यथावस्थितं धर्मस्वरूपं तथैव द्योतयति ।"स्याच्छब्दः विवक्षितार्थवागंगमिति" वचनात् । एवमादेशवशात् सप्तवचनप्रकारा भवंतीति त्रिविकल्पांतरप्रवृत्तिनिमित्ताभावात् । अयं च मार्ग. द्रव्यार्थिकपर्यायार्थिकनयद्वयाश्रयः । तौ च संग्रहाद्यात्मकौ । ते चार्थनयरूपेण शब्दनयरूपेण च प्रवृत्ता । तत्र संग्रहव्यवहारर्जुसूत्रा अर्थनयाः । शेषाः शब्दनयाः । तत्र संग्रहः सत्त्वविषयः, सकलं वस्तुतत्त्वं संति अंतर्भाव्यसंग्रहात् । व्यवहारोऽसत्त्वविषयः विविक्तसत्त्वाऽपरिग्रहादन्यापेक्षासत्त्वाप्रतिपत्तेः । ऋजुसूत्रो वर्तमानविषय. अतीतानागतयोः विनष्टानुत्पन्नत्वेन व्यवहाराभावात् । एते त्रयोऽर्थनयाः एकैकात्मकाः संयुक्ताश्च सप्तवाक्प्रकारान् जनयति । तत्राद्य. संग्रहः एकः, द्वितीयो व्यवहार एकः, तृतीयः संग्रहव्यवहारौ विभक्तौ, चतुर्थः संग्रहव्यवहारौ समुचितौ, पंचमः संग्रहः संग्रहव्यवहारौ चाविभक्तौ । षष्ठो व्यवहारः संग्रहव्यवहारौ चाविभक्तौ । सप्तमः संग्रहव्यवहारौ प्रचितौ चाविभक्तौ । एवं ऋजुसूत्रेपि योज्यं । व्यंजनपर्यायास्तु शब्दनयाः द्विविधं वचनं प्रकल्पयंति । अभेदेनाभिधानं भेदेन च यथा शब्दे पर्यायशब्दांतरप्रयोगेपि तस्यैवार्थस्याभिधानाभेदः । समभिरूढे वा प्रवृत्तिनिमित्तस्य च घटस्याभिन्नस्य सामान्येनाभिधानात् । एवंभूतेषु प्रवृत्तिनिमित्तस्य भिन्नस्यैकस्यैवार्थस्याभिधानात् । भेदेना

---

१ पर्याय जात्ये द्रव्य भेदात् पाठोऽयं ख० पुस्तके । २ सामान्यतत्त्वे इत्यर्थ ।

३ ग० पुस्तके विवक्षितायव्दमात्रप्ररूपणायामिति पाठः ।

भिधान अथवा, अन्यथा द्वैविध्यमेकस्मिन्नर्थेऽनेकशब्दप्रवृत्ति' प्रत्यर्थं वा शब्दविनिवेश इति । यथा शब्दे अनेकपर्यायशब्द एक । समभिरूढे वा नैमित्तिकत्वात् शब्दस्यैकशब्दवाच्य एक । एवभूते वर्तमाननिमित्तशब्द एकवाच्य एक । अत्र चोद्यते कथमेते अस्तित्वनास्तित्वादयो धर्मा विरुद्धरूपा एकस्मिन् वस्तुनि अविरोधमुपयातीत्युच्यते—

**विरोधाभावस्तल्लक्षणाभावात् ॥ ३२ ॥** नास्त्येषामादेशवशादर्यमाणाना विरोध' कुतस्तल्लक्षणाभावात् । इह विरोध कल्प्यमान त्रिधा व्यवतिष्ठते वध्यघातकभावेन वा सहानवस्थात्मना वा प्रतिबध्यप्रतिबधकरूपेण वा । तत्र वध्यघातकभाव अहिनकुलाग्न्युदकादिविषय , सत्येकस्मिन् काले विद्यमानयो सति सयोगे भवति सयोगस्यानेकाश्रयत्वात् द्वित्ववत् । नासयुक्तमुदकमग्निं विध्यापयति सर्वत्राग्न्यभावप्रसगात् तत सति सयोगे बलीयसोत्तरकालमितरद्बाध्यते नचैवमस्तित्वनास्तित्वयो क्षणमात्रमपि एकस्मिन् वृत्तिरस्ति इति भवताभ्युपगम्यते यतो वध्यघातकभावरूपो विरोध तयो कल्प्येत । अथैकस्मिन् वृत्तिरभ्युपगम्येत तत्तुल्यबलहेतुसाध्यत्वात् तयोरन्यतरस्य बलीयस्त्वाभावात् वध्यघातकत्वाभाव अतस्तल्लक्षणाभावात् नासौ विरोध सभवति । नापि सहानवस्थानलक्षणो विरोध तल्लक्षणाभावात् । स ह्ययुगपत्कालयोर्भवति यथा आम्रफले श्यामतापीतयो । पीतताेत्पद्यमाना पूर्वकालभाविनीं श्यामतां निरुणद्धि । न च तथा जीवस्यास्तित्वनास्तित्वे पूर्वोत्तरकालभाविनी । यदि स्याता । अस्तित्वकाले नास्तित्वाभावात् जीवसत्तामात्र सर्वं प्राप्नुवीत । नास्तित्वकाले चाऽस्तित्वाभावात्तदाश्रयो बधमोक्षादिव्यवहारो विरोधमुपगच्छेत् । सर्वथैवासत पुन आत्मलाभाभावात् । सर्वथा च सत पुनरभावप्राप्त्यनुपपत्ते नैतयो सहानवस्थान युज्यते । तथा जीवादिषु प्रतिबध्यप्रतिबधकभावोऽपि न विरोध सभवति । यथा सति फलवृत्तसयोगे प्रतिबधकगौरव पतनकर्म नारभते प्रतिबधात् तदभावे तु पतनकर्म दृश्यते "सयोगाभावे गुरुत्वात् पतनमिति" वचनात् । नच तथास्तित्व नास्तित्वस्य प्रयोजन प्रतिबध्नाति तस्मिन्नेव काले परद्रव्यादिरूपेणानुपलब्धिबुद्ध्युत्पत्तिदर्शनात् । नास्तित्व वा सदस्तित्वप्रयोजन प्रतिबध्नाति तदैव स्वरूपाद्यपेक्षयोपलब्धिबुद्धिदर्शनात् । तस्मात् वाङ्मात्रमेव विरोध । एवमर्पणाभेदादविरुद्धोऽनेकात्मको जीव इति स्थितमेतत्—

इतितत्त्वार्थवार्तिकव्याख्यानालकारे चतुर्थोध्यायः ॥ ४ ॥

---

## अथ पंचमोध्यायः

इदानीं सम्यग्दर्शनस्य विषयभावेनोपक्षिप्तेषु जीवादिषु अजीवपदार्थो विचारप्राप्त तस्य भेदसज्ञासंकीर्तनार्थमिदमुच्यते तत्पूर्वकत्वादितरस्येति—

### अजीवकाया धर्माधर्माकाशपुद्गलाः ॥ १ ॥

**अजीवकाया इति समानाधिकरणा वृत्ति ॥ १ ॥** अजीवाश्च ते कायाश्च ते अजीवकाया इति सामानाधिकरणलक्षणा वृत्तिरिय वेदितव्या । कथ वृत्ति विशेषण विशेष्येणेति सति व्यभिचारे नीलोत्पलादिषु वृत्ति'[१] इहाप्यस्ति व्यभिचार । कायशब्दस्य जीवेष्वपि वृत्ते , अजीवशब्दस्यापि काले । भिन्नाधिकरणवृत्तौ को दोष ?

**भिन्नाधिकरणत्वे हि अर्थांतरभावप्रसंगः ॥ २ ॥** यथा राज्ञ पुरुष राजपुरुष इति अर्थांतरभावे भिन्नाधिकरणत्व भवति । तथा अजीवाना काय अजीवकाय इति भिन्नाधिकरणत्वे गृह्यमाणेऽर्थांतरभाव प्रसज्येत ।

**दृष्टत्वात्सुवर्णांगुलीयकवदिति चेन्न तत्रान्यविशेषणनिवृत्त्यर्थत्वात् ॥ ३ ॥** स्यान्मत भिन्नाधिकरणत्वेपि नार्थांतरभाव , कुत ? दृष्टत्वात् । कथ ? सुवर्णांगुलीयकवत् । यथा सुवर्णस्याऽगुलीयक

---

१ जैनेंद्रीय सूत्र । २ अर्थांतरभावे पाठोऽय ब, पुस्तके ।

द्रव्यार्थांशः यश्च तत्प्रतियोगिना वस्तुत्वेनाऽसन्निति पर्यायांश । ताभ्यां युगपदभेदविवक्षायां अवक्तव्य इति द्वितीयोंश । तस्मान्नास्ति चावक्तव्यश्चाऽऽत्मा । अयमपि सकलादेश. शेषवाग्गोचरस्वरूपसमूहस्याऽविनाभावात्, तत्रैवांतर्भूतस्य स्याच्छब्देन द्योतितत्वात् । तथा सप्तमो विकल्प चतुर्भिरात्मभि, त्र्यश द्रव्यार्थविशेष कंचिदाश्रित्याऽस्तित्व पर्यायविशेष च कंचिदाश्रित्य नास्तित्वमिति समुच्चितरूप भवति । द्वयोरपि प्राधान्येन विवक्षितत्वात् । द्रव्यपर्यायाविशेषेण च केनचिद्द्रव्यपर्यायसामान्येन केन चित् युगपदवक्तव्य इति तृतीयोंश. । ततः स्यादस्ति च नास्तिचाऽवक्तव्यश्च आत्मा । अयमपि सकलादेश यत सर्वान् द्रव्यार्थान् द्रव्यमित्यभेदादेक द्रव्यार्थं मन्यते । सर्वान् पर्यायार्थांश्च पर्यायजात्यभेदादेक पर्यायार्थं, अतो विवक्षितवस्तुजात्यभेदात्कृत्स्न वस्तु एकद्रव्यार्थाभिन्न एकपर्यायाभेदोपचरित वा एकमिति सकलसग्रहात् । अथ कथ विकलादेश ?

**निरंशस्यापि गुणभेदादंशकल्पना विकलादेश ॥ २९ ॥** स्वेन तत्त्वेनाप्रविष्टभागस्यापि वस्तुनो विविक्त गुणरूप स्वरूपोपरजकमपेक्ष्य प्रकल्पितमश कृत्वा अनेकात्मकैकत्वव्यवस्थायां नरसिंहसिंहत्ववत् समुदायात्मकमात्मरूपमभ्युपगम्य कालादिभिरन्योन्यविषयानुप्रवेशरहिताशकल्पन विकलादेश । ननु केवलसिंहे सिंहत्ववत् एकात्मकैकत्वपरिग्रहात् यथा वा पानकमनेकखंडदाडिमकर्पूरादिरसानुविद्धमास्वाद्याऽनेकरसात्मकत्व, अस्यावसाय पुन स्वशक्तिविशेषादिदमप्यस्तीदमप्यस्तीति विशेषनिरूपण क्रियते । तथा नैरात्म्यैकवस्त्वभ्युपगमपूर्वक हेतुविशेषसामर्थ्यात् अर्पितसाध्यविशेषावधारण विकलादेश । कथं ? पुनरर्थस्याऽभिन्नस्य गुणो भेदक ? दृष्टो हि अभिन्नस्याप्यर्थस्य गुणस्तत्त्वभेद कल्पयन् । यथा पतत् भवान् पटुरासीत् पटुतर एष म इति गुणविवक्तरूपस्य द्रव्यस्याऽसभवात् । गुणभेदेन गुणिनोपि भेद ।

**तत्रापि तथा सप्तभंगी ॥ ३० ॥** तत्रापि विकलादेशे तथाऽऽदेशवशेन सप्तभगी वेदितव्या । कथ ? गुणिभेदकेष्वंशेषु क्रमेण यौगपद्येन क्रमयौगपद्याभ्यां वा विवक्षावशात् विकलादेशा भवति । तत्र प्रथमद्वितीययोरप्रचित क्रम, तृतीये यौगपद्य, चतुर्थे प्रचित क्रम, पचमे षष्ठे वा अप्रचितक्रमयौगपद्ये, सप्तमे प्रचितक्रमयौगपद्ये । तद्यथा सामान्यादिषु द्रव्यार्थादेशेषु केन चिदुपलभ्यमानत्वात् स्यादस्त्येवात्मेति प्रथमो विकलादेश । अत्रेतरेषां वस्तुनि सतामपि कालादिभिर्भेदविवक्षात शब्दवाच्यत्वेनातर्भावाभावान्विवक्षाभावाच्च न विधिर्न प्रतिषेध । एव शेषभगेष्वपि विवक्षिताशमात्रप्ररूपणायां इतरेष्वौदासीन्येन विकलादेशकल्पना योज्या । ननु च सामान्यार्थाविच्छेदेन विशेषणविशेष्यसबंधावद्योतनार्थे एवकारे सति तदवधारणादितरेषां निवृत्ति प्राप्नोति ? नैष दोष अत्राप्यत एव स्याच्छब्दप्रयोग. कर्तव्य स्यादस्त्येव जीव इत्यादि । कोर्थ ? एवकारेणेतरनिवृत्तिप्रसगे स्वात्मलोपात् सकलो लोपो मा विज्ञायीति वस्तुनि यथावस्थित धर्मस्वरूप तथैव द्योतयति । "स्याच्छब्द विवक्षितार्थवागगमिति" वचनात् । एवमादेशवशात् सप्तवचन प्रकारा भवतीति त्रिविकल्पांतरप्रवृत्तिनिमित्ताभावात् । अय च मार्ग द्रव्यार्थिकपर्यायार्थिकनयद्वयाश्रय । तौ च सग्रहाद्यात्मकौ । ते चार्थनयरूपेण शब्दनयरूपेण च प्रवृत्ता. । तत्र सग्रहव्यवहारर्जुसूत्रा अर्थनया । शेषा शब्दनया । तत्र सग्रह सत्त्वविषय, सकल वस्तुतत्त्व सँति अतर्भाव्यसग्रहात् । व्यवहारोऽसत्त्वविषय विविक्तसत्त्वाऽपरिग्रहादन्यापेक्षासत्त्वाप्रतिपत्ते । ऋजुसूत्रो वर्तमानविषय अतीतानागतयो विनष्टानुत्पन्नत्वेन व्यवहाराभावात् । एते त्रयोऽर्थनया एकैकात्मका सयुक्ताश्च सप्तवाक्प्रकारान् जनयति । तत्राद्य सग्रह एक., द्वितीयो व्यवहार एक., तृतीय सग्रहव्यवहारौ विभक्तौ, चतुर्थ सग्रहव्यवहारौ समुच्चितौ, पचम सग्रह सग्रहव्यवहारौ चाविभक्तौ । षष्ठो व्यवहारः सग्रहव्यवहारौ चाविभक्तौ । सप्तम सग्रहव्यवहारो प्रचितौ चाविभक्तो । एव ऋजुसूत्रेपि योज्य । व्यजनपर्यायास्तु शब्दनया. द्विविध वचन प्रकल्पयति । अभेदेनाभिधान भेदेन च यथा शब्दे पर्यायशब्दांतरप्रयोगेपि तस्यैवार्थस्याभिधानाभेद । समभिरूढे वा प्रवृत्तिनिमित्तस्य च घटस्याभिन्नस्य सामान्येनाभिधानात् । एवभूतेषु प्रवृत्तिनिमित्तस्य भिन्नस्यकस्यैवार्थस्याभिधानात् । भेदेना

१ पर्याय जात्यै इत्य भेदात् पाठोऽय ख० पुस्तके । ३ सन्मात्रतत्त्वे इत्यर्थ ।

२ ग० पुस्तके विवक्षिताशब्दमात्रप्ररूपणायामिति पाठ ।

**[illegible]-कायग्रहणेन प्रदेशसख्यावधारणार्थमिति चेन्नातोऽप्यनिश्चयात् ॥ १० ॥** स्यादेतत् 'असख्येया प्रदेशा धर्माधर्मैकजीवानां' इति अनेन प्रदेशसख्यावधारण क्रियते। कुत ? त्रयाणा सभूयप्रदेशासख्येयत्वप्रतिपत्ते । तत एकैकस्याऽसख्येयप्रदेशस्थापनार्थं कायग्रहणमिति तन्न । किं कारण? अतोऽप्यनिश्चयात् । कायग्रहणादपि नास्ति निश्चय प्रदेशप्रचयमात्रप्रतिपत्ते । कुतस्तर्हि तन्निश्चय ?

**लोकाकाशेऽवगाह इत्यादि वचनात् तन्निश्चयः ॥ ११ ॥** यदय लोकाकाशेऽवगाह इत्युक्त्वा धर्माधर्मयो कृत्स्न इत्यादि वक्ष्यते । तेन तस्य प्रदेशपरिमाणस्य निश्चयोभवति ।

**अप्रदेशैकद्रव्यत्वप्रसंग इति चेन्न उक्तत्वात् ॥ १२ ॥** स्यादेतत् कायग्रहणात् ऋतेऽप्रदेशैकद्रव्यता प्राप्नोति अतस्तन्निवृत्त्यर्थं कायग्रहणमिति ? तन्न किं कारण? उक्तत्वात् । उक्तमेतत् 'असख्येया प्रदेशा धर्माधर्मैकजीवाना' इति वक्ष्यते ॥

**आर्षानुवादार्थमिति चेन्न तदवस्थत्वात् ॥ १३ ॥** स्यादेतत् आर्षमेव प्रवृत्त पचास्तिकाया इत्यत तदनुवादार्थं कायग्रहणमिति तच्च न । कस्मात् ? तदवस्थत्वात् । असख्येया प्रदेशा इत्यनेनैवाऽर्षानुवादस्य कृतत्वात् ।

**स्वभावापरित्यागार्थमिति चेन्न नित्यावस्थितवचनात् सिद्धेः ॥ १४ ॥** स्यान्मत कायस्वभावापरित्यागार्थं कायग्रहणमिति तन्न। किं कारण? नित्यावस्थितवचनात् सिद्धे । वक्ष्यते हि "नित्यावस्थितान्यरूपाणीति" तत एव स्वभावापरित्याग सिद्ध । तर्हि कायग्रहण न कर्तव्य ? कर्तव्य। किं च प्रयोजन ?

**तत्सिद्धावसख्येयप्रदेशावधारणासिद्धेः ॥ १५ ॥** तस्य कायशब्दस्य पचस्वपि अस्तिकायेषु प्रदेशावयवबहुत्वार्थस्य सिद्धौ सत्या उत्तरवचनमवधारणार्थं युज्यते । असख्येया प्रदेशा न सख्येया नाप्यनन्ता इति विधिपूर्वकत्वादवधारणस्य ।

**अद्धाप्रदेशप्रतिषेधार्थं च ॥ ॥ १६ ॥** अद्धा शब्दो निपात कालवाची स वक्ष्यमाणलक्षण तस्य प्रदेशप्रतिषेधार्थमिह कायग्रहण क्रियते । यथाणो प्रदेशमात्रत्वात् द्वितीयादयोऽस्य प्रदेशा न सतीत्यप्रदेशोऽणु । तथा कालपरमाणुरपि एकप्रदेशत्वादप्रदेश इति ।

**धर्मादयः सज्ञा सामायिक्यः ॥ १७ ॥** धर्मादय सज्ञा सामायिक्यो द्रष्टव्या । आर्हते हि प्रवचनेऽनादिनिधनेऽर्हदादिभि यथाकाल, अभिव्यक्तज्ञानदर्शनातिशयप्रकाशैरवद्योतितार्थसारे रूढा एता सज्ञा ज्ञेया ॥

**क्रियानिमित्ता वा ॥ १८ ॥** अथवा क्रियानिमित्ता एता सज्ञा वेदितव्या । कथमिति चेदुच्यते-

**स्वयं क्रियापरिणामिना साचिव्यावधानाद्धर्मः ॥ १९ ॥** स्वय क्रियापरिणामिना जीवपुद्गलाना यस्मात्साचिव्य दधाति तस्माद्धर्म इत्याख्यायते ॥

**तद्विपरीतोऽधर्मः ॥ २० ॥** तस्य विपरीतलक्षण अधर्म इत्याम्नायते ॥

**आकाशन्तेऽस्मिन् द्रव्याणि स्वय (वा) काशत इत्याकाश ॥ २१ ॥** जीवादीनि द्रव्याणि स्वै स्वै पर्यायै -अव्यतिरेकेण यस्मिन्नाकाशते प्रकाशते तदाकाश। स्वय चाऽऽत्मीयपर्यायमर्यादया आकाशत इत्याकाश ॥

**अवकाशदानाद्वा ॥ २२ ॥** अथवा इतरेषा द्रव्याणा अवकाशदानादाकाशमिति पृषोदरादिषु निपातित शब्द ।

---

१ प्रदशसख्येयाऽवधारणार्थमिति ख पुस्तके पाठ ॥ २ प्रतिषेधार्थे च ख पुस्तके पाठ ।

सुवर्णांगुलीयकमिति । भिन्नाधिकरणत्वेपि नार्थभेद । तथा इहापि न दोष इति । तत्र किं कारण ? तत्रान्यविशेषनिवृत्त्यर्थत्वात् तत्र हि सुवर्णशब्दप्रयोग रूप्यादे प्रमाणांतरस्य च निवृत्त्यर्थं, सुवर्णस्येदमगुलीयक न रूप्यादेर्न माषादेर्वेति, न तथेह अजीवस्य काया अजीवकाया इति विशेषणेन कदाचिदर्थांतरनिवृत्तिरस्ति ॥

**अस्तु वाऽविरोधात् ॥४॥** अथवास्तु भिन्नाधिकरणा वृत्ति । कुत ? अविरोधात् । यस्माज्जीवोपि काय पचास्तिकायोपदेशात्, अतस्तन्निवृत्त्यर्थोऽत्राऽजीवशब्दप्रयोग । अजीवस्य कायो न जीवस्येति । किं च–

**कथंचिद्भेदोपपत्ते ॥ ५ ॥** केनचित्प्रकारेण सज्ञालक्षणप्रयोजनाद् भेद उपपद्यते यथा सुवर्णस्यांगुलीयकमित्यत्र सुवर्ण सामान्य तद्विशेषोऽगुलीयक तयो सामान्यविशेषयो संज्ञालक्षणादिभि कथचि न्नानात्वं । यदि सर्वथैकत्व स्यान्न सुवर्णसामान्यस्यागुलीयकवत् कुडलादिषु वृत्तिर्न स्यात् । सुवर्णसामान्यवद्वाऽगुलीय तस्य कुडलादिषु वृत्ति स्यात । तत एवान्यनिवृत्त्यर्थ प्रयोगो युक्त, सुवर्णस्येदमगुलीयक न रूप्यादेरिति । यदि सर्वथैकत्व स्यात् व्यपदेश एव न स्यात् । तथा अजीवाना काया इत्यत्रापि कायशब्द प्रदेशवाची । प्रदेशाश्च धर्मादीना वक्ष्यंते, ते च तेभ्य सज्ञालक्षणादिभि कथंचिद्भिन्ना । अन्यथा एकांतैकत्वे धर्मादीनामेकत्ववत् प्रदेशानामप्येकत्व स्यात् । प्रदेशाना बहुत्ववत् धर्मादीनां बहुत्व प्रसज्येत, तत एव अन्य निवृत्त्यर्थ प्रयोगो युक्त, अजीवानां कायो न जीवस्येति । यदि सर्वथैकत्वं स्यात् व्यपदेश एव न स्यात् ततो भेदोपपत्ते युक्ता भिन्नाधिकरणा वृत्ति । ननु चाभेदेपि लोके व्यपदेशो दृष्ट यथा शिलापुत्रकस्य शरीर, राहो शिर इति, न हि शिलापुत्रकादन्यच्छरीरमस्ति नापि राहोरन्यच्छिर शिरोमात्रत्वादिति । तत्राप्यस्ति भेद । कुत ? शक्तित । योऽनेकक्रियानिष्पादनशक्तिभेदेन भिन्नरूप शिलापुत्रक तस्येद शरीर एकक्रियाविषयमिति शब्दप्रकल्पिताद्बुद्धिभेदाद्वा कथंचि पृथक्त्वमध्यवसेय कुतश्चैतदेव तदन्यनिवृत्त्यर्थं विशेषणं उपादीयते । शिलापुत्रकस्येद शरीर न मनुष्यादे, राहोरिद शिर नान्यस्य इत्येकांतिकैकत्वे हि अन्यनिवृत्तिर्न स्यात् । यथा सुवर्णस्य सुवर्ण, घटस्य घट इति ॥

**अजीव इत्यभावमात्रप्रसग इति चेन्न भावांतरप्रतिपत्तेरनश्ववत् ॥ ६ ॥** स्यान्मत न जीवोऽजीव इत्युक्तेऽभावमात्र प्रसज्येत यथा न भाव अभाव इति, तन्न; किं कारणं ? भावांतरप्रतिपत्तेः । कथं ? अनश्ववत् । यथा नायमश्व अनश्व इत्युक्ते नाभावसप्रत्यय किंतु नञिव युक्तमन्यसदृशाधिकरणे तथाह्यर्थ इति अन्यस्मिन् भाव एव तुल्योदरैकशफादिलक्षणे गर्दभे सप्रत्ययो भवति । एवमिहापि नाय जीव इति प्रतिषेधात् नाभावे सप्रत्यय, किं तु अन्यस्मिन् भाव अनुपयोगलक्षणे धर्मादौ प्रतिपत्तिर्भवति । सादृश्याभावात् अप्रतिपत्तिरिति चेन्न सत्त्वद्रव्यत्वादिभि सादृश्योपपत्ते । अथोक्त यथा न भाव, अभावः इत्युक्ते अभावमात्रसप्रत्यय इति तदप्ययुक्त सत एव पररूपत्वादिभि अभावशब्दगोचरत्वोपपत्ते ॥

**अभ्यतरीकृतेवार्थः कायशब्दः ॥ ७ ॥** इवार्थमभ्यतरीकृत्य अत्र कायशब्द प्रयुक्त । काया इव काया इति । क उपमार्थ ? यथौदारिकादिशरीरनामकर्मोदयवशात् पुद्गलैश्चीयते काया । तथा धर्मादीना मनादिपारिणामिकप्रदेशचयनात्कायत्व ।

**तद्ग्रहण प्रदेशावयवबहुत्वज्ञापनार्थं ॥ ८ ॥** तस्य कायशब्दस्य ग्रहण क्रियते । किमर्थं ? प्रदेशावयवबहुत्वज्ञापनार्थं । मुख्यरूपेणाविद्यमानत्वेपि श्रोतॄणा सुखाववोधार्थं प्रज्ञया द्रव्यपरमाण्ववगाहमात्रत्वेन प्रदिश्यत इति प्रदेशा, प्रदेशा एवावयवा प्रदेशावयवा तेषा बहुत्वस्य ज्ञापनार्थं ॥

**नासख्येयाः प्रदेशा धर्माधर्मैकजीवानामिति शास्त्रप्रवृत्तेः ॥ ९ ॥** न तत्प्रयोजन उपपद्यते कुत ? अन्यत एव तत्सिद्धे । वक्ष्यते हि, असख्येया प्रदेशा धर्माधर्मैकजीवानां' इत्यत एवैषा प्रदेशबहुत्व सिद्ध । नार्थं कायग्रहणेन

१ ग, पुस्तके यथोक्तमितःपठ ।

**मर्म: कायग्रहणेन प्रदेशसख्यावधारणार्थमिति चेन्नातोप्यनिश्चयात् ॥ १० ॥** स्यादेतत् 'असंख्येया प्रदेशा धर्माधर्मैकजीवानां' इति अनेन प्रदेशसख्यानधारण क्रियते। कुत ? त्रयाणां सभूयप्रदेशासख्येयत्वप्रतिपत्ते । तत एकैकस्याऽसख्येयप्रदेशख्यापनार्थ कायग्रहणमिति तन्न। किं कारण? अतोप्यनिश्चयात् । कायग्रहणादपि नास्ति निश्चय प्रदेशप्रचयमात्रप्रतिपत्ते । कुतस्तर्हि तन्निश्चय ?

**लोकाकाशेऽवगाह इत्यादि वचनात् तन्निश्चयः ॥ ११ ॥** यदय लोकाकाशेऽवगाह इत्युक्त्वा धर्माधर्मयो कृत्स्न इत्यादि वक्ष्यते । तेन तस्य प्रदेशपरिमाणस्य निश्चयोभवति ।

**अप्रदेशैकद्रव्यत्वप्रसंग इति चेन्न उक्तत्वात् ॥ १२ ॥** स्यादेतत् कायग्रहणात् ऋतेऽप्रदेशैकद्रव्यता प्राप्नोति अतस्तन्निवृत्यर्थं कायग्रहणमिति ? तन्न किं कारण? उक्तत्वात् । उक्तमेतत् 'असख्येया. प्रदेशा धर्माधर्मैकजीवाना' इति वक्ष्यते ॥

**आर्षानुवादार्थमिति चेन्न तदवस्थत्वात् ॥ १३ ॥** स्यादेतत् आर्षमेव प्रवृत्त पचास्तिकाया इत्यत तदनुवादार्थं कायग्रहणमिति तच्च न । कस्मात् ? तदवस्थत्वात् । असख्येया प्रदेशा इत्यनेनैवाऽर्षानुवादस्य कृतत्वात् ।

**स्वभावापरित्यागार्थमिति चेन्न नित्यावस्थितवचनात् सिद्धेः ॥१४॥** स्यान्मत कायस्वभावापरित्यागार्थं कायग्रहणमिति तन्न। किं कारण? नित्यावस्थितवचनात् सिद्धे । वक्ष्यते हि "नित्यावस्थिता न्यरूपाणीति" तत एव स्वभावापरित्याग सिद्ध । तत्तर्हि कायग्रहण न कर्तव्य ? कर्तव्य। किं च प्रयोजन ?

**तत्सिद्धावसख्येयप्रदेशावधारणासिद्धेः ॥ १५ ॥** तस्य कायशब्दस्य पचस्वपि अस्तिकायेषु प्रदेशावयवबहुत्वार्थस्य सिद्धो सत्या उत्तरवचनमवधारणार्थ युज्यते । असख्येया प्रदेशा न सख्येया नाप्यनता इति विधिपूर्वकत्वादवधारणस्य ।

**अद्धाप्रदेशप्रतिषेधार्थं च ॥ ॥ १६ ॥** अद्धा शब्दो निपात कालवाची स वक्ष्यमाणलक्षण तस्य प्रदेशप्रतिषेधार्थमिह कायग्रहण क्रियते । यथाणो प्रदेशमात्रत्वात् द्वितीयादयोऽस्य प्रदेशा न सतीत्यप्रदेशोऽणु । तथा कालपरमाणुरपि एकप्रदेशत्वादप्रदेश इति ।

**धर्मादयः सज्ञा सामायिक्यः ॥ १७ ॥** धर्मादय सज्ञा सामायिक्यो द्रष्टव्या । आर्हते हि प्रवचनेऽनादिनिधनेऽर्हदादिभि यथाकाल, अभिव्यक्तज्ञानदर्शनातिशयप्रकाशैरवद्योतितार्थसारे रूढा एता सज्ञा ज्ञेया ॥

**क्रियानिमित्ता वा ॥ १८ ॥** अथवा क्रियानिमित्ता एता सज्ञा वेदितव्या । कथमिति चेदुच्यते-

**स्वय क्रियापरिणामिनां साचिव्यावधानाद्धर्म ॥ १९ ॥** स्वय क्रियापरिणामिना जीवपुद्गलाना यस्मात्साचिव्य दधाति तस्माद्धर्म इत्याख्यायते ॥

**तद्विपरीतोऽधर्मः ॥ २० ॥** तस्य विपरीतलक्षण अधर्म इत्याम्नायते ॥

**आकाशंतेऽस्मिन् द्रव्याणि स्वय (वा) काशत इत्याकाश ॥ २१ ॥** जीवादीनि द्रव्याणि स्वै स्वै पर्यायै -अव्यतिरेकेण यस्मिन्नाकाशते प्रकाशते तदाकाश। स्वय चाऽऽत्मीयपर्यायमर्यादया आकाशत इत्याकाश ॥

**अवकाशदानाद्वा ॥ २२ ॥** अथवा इतरेषा द्रव्याणा अवकाशदानादाकाशमिति पृषोदरादिषु निपातित शब्द ।

---

१ प्रदशसख्येयाऽवधारणार्थमिति ख पुस्तके पाठ. ॥　　२ प्रतिषेधार्थं च ख पुस्तके पाठ ।

सुवर्णांगुलीयकमिति। भिन्नाधिकरणत्वेपि नार्थभेदः। तथा इहापि न दोष इति। तन्न किं कारणं? तत्रान्यविशेषनिवृत्त्यर्थत्वात् तत्र हि सुवर्णशब्दप्रयोगः रूप्यादेः प्रमाणांतरस्य च निवृत्त्यर्थं, सुवर्णस्येदमंगुलीयकं न रूप्यादेर्न माषादेर्वेति, न तथेह अजीवस्य कायाः अजीवकाया इति विशेषणेन कदाचिदर्थांतरनिवृत्तिरस्ति॥

**अस्तु वाऽविरोधात्** ॥४॥ अथवाऽस्तु भिन्नाधिकरणा वृत्तिः। कुतः? अविरोधात्। यस्माज्जीवोपि कायः पंचास्तिकायोपदेशात्, अतस्तन्निवृत्त्यर्थोऽत्राऽजीवशब्दप्रयोगः। अजीवस्य कायो न जीवस्येति। किं च–

**कथंचिद्भेदोपपत्तेः** ॥ ५ ॥ केनचित्प्रकारेण संज्ञालक्षणप्रयोजनाद् भेद उपपद्यते यथा सुवर्णस्यांगुलीयकमित्यत्र सुवर्णं सामान्यं तद्विशेषोऽङ्गुलीयकं तयोः सामान्यविशेषयोः संज्ञालक्षणादिभिः कथंचिन्नानात्वं। यदि सर्वथैकत्वं स्यात् सुवर्णसामान्यस्यांगुलीयकवत् कुंडलादिषु वृत्तिर्न स्यात्। सुवर्णसामान्यवद्वाऽङ्गुलीयं तस्य कुंडलादिषु वृत्तिः स्यात्। तत एवान्यनिवृत्त्यर्थं प्रयोगो युक्तः, सुवर्णस्येदमंगुलीयकं न रूप्यादेरिति। यदि सर्वथैकत्वं स्यात् व्यपदेश एव न स्यात्। तथा अजीवानां कायाः इत्यत्रापि कायशब्दः प्रदेशवाची। प्रदेशाश्च धर्मादीनां वक्ष्यते, ते च तेभ्यः संज्ञालक्षणादिभिः कथंचिद्भिन्नाः। अन्यथा एकांतैकत्वे धर्मादीनामेकत्ववत् प्रदेशानामप्येकत्वं स्यात्। प्रदेशानां बहुत्ववत् धर्मादीनां बहुत्वं प्रसज्येत, तत एव अन्यनिवृत्त्यर्थं प्रयोगो युक्तः, अजीवानां कायो न जीवस्येति। यदि सर्वथैकत्वं स्यात् व्यपदेश एव न स्यात् ततो भेदोपपत्तेः युक्ता भिन्नाधिकरणा वृत्तिः। ननु चाभेदेपि लोके व्यपदेशो दृष्टः यथा शिलापुत्रकस्य शरीरं, राहोः शिर इति, न हि शिलापुत्रकादन्यच्छरीरमस्ति नापि राहोरन्यच्छिरः शिरोमात्रत्वादिति। तत्राप्यस्ति भेदः। कुतः? शक्तितः। योऽनेकक्रियानिष्पादनशक्तिभेदेन भिन्नरूपः शिलापुत्रकः तस्येदं शरीरं एकक्रियाविषयमिति शब्दप्रकल्पिताद्बुद्धिभेदाद्वा कथंचित्पृथक्त्वमध्यवसेयं कुतश्चैतदेवं तदन्यनिवृत्त्यर्थं विशेषणमुपादीयते। शिलापुत्रकस्येदं शरीरं न मनुष्यादेः, राहोरिदं शिरः नान्यस्य इत्येकांतैकत्वे हि अन्यनिवृत्तिर्न स्यात्। यथा सुवर्णस्य सुवर्णं, घटस्य घट इति॥

**अजीव इत्यभावमात्रप्रसंग इति चेन्न भावांतरप्रतिपत्तेरनश्ववत्** ॥ ६ ॥ स्यान्मतं न जीवोऽजीव इत्युक्तेऽभावमात्रं प्रसज्येत यथा न भावः अभाव इति, तन्न; किं कारणं? भावांतरप्रतिपत्तेः। कथं? अनश्ववत्। यथा नायमश्वः अनश्व इत्युक्ते नाभावसंप्रत्ययः किंतु नञिव युक्तमन्यसदृशाधिकरणे तथाह्यर्थ इति अन्यस्मिन् भाव एव तुल्योदरैकशफादिलक्षणे गर्दभे संप्रत्ययो भवति। एवमिहापि नायं जीव इति प्रतिषेधात् नाभावे संप्रत्ययः, किं तु अन्यस्मिन् भाव अनुपयोगलक्षणे धर्मादौ प्रतिपत्तिर्भवति। सादृश्याभावात् अप्रतिपत्तिरिति चेन्न सत्वद्रव्यत्वादिभिः सादृश्योपपत्तेः। [1]यथोक्तं यथा न भावः, अभावः इत्युक्ते अभावमात्रसंप्रत्यय इति तदप्ययुक्तं सत एव पररूपत्वादिभिः अभावशब्दगोचरत्वोपपत्तेः॥

**अभ्यंतरीकृतेवार्थः कायशब्दः** ॥ ७ ॥ इवार्थमभ्यंतरीकृत्य अत्र कायशब्दः प्रयुक्तः। काया इव काया इति। क उपमार्थः? यथौदारिकादिशरीरनामकर्मोदयवशात् पुद्गलैश्चीयते कायाः। तथा धर्मादीनामनादिपारिणामिकप्रदेशचयनात्कायत्वं।

**तद्ग्रहणं प्रदेशावयवबहुत्वज्ञापनार्थं** ॥ ८ ॥ तस्य कायशब्दस्य ग्रहणं क्रियते। किमर्थं? प्रदेशावयवबहुत्वज्ञापनार्थं। मुख्यरूपेणाविद्यमानत्वेपि श्रोतृणां सुखाववोधार्थं प्रज्ञया द्रव्यपरमाण्ववगाहमात्रत्वेन प्रदिश्यत इति प्रदेशाः, प्रदेशा एवावयवाः प्रदेशावयवाः तेषां बहुत्वस्य ज्ञापनार्थं॥

**नासंख्येयाः प्रदेशा धर्माधर्मैकजीवानामिति शास्त्रप्रवृत्तेः** ॥ ९ ॥ न तत्प्रयोजनमुपपद्यते कुतः? अन्यत एव ततसिद्धेः। वक्ष्यते हि, असंख्येयाः प्रदेशा धर्माधर्मैकजीवानां' इत्यत एवैषां प्रदेशबहुत्वं सिद्धं। नार्थं कायग्रहणेन

1 ग, पुस्तके यथोक्तमिति पाठः।

**अमूर्तत्वसाधर्म्याच्च ॥ ३२ ॥** यथा धर्माधर्मावमूर्तौ रूपादिविरहादेवमाकाशमप्यमुर्तं । अत श्चानंतरमुक्तं ।

**तदवगाहित्वात् तत्समीपे पुद्गलवचनं ॥ ३३ ॥** तदाकाशमवगाह्य पुद्गला वर्तंते इति तत्समीपे तेषां वचनं क्रियते ॥

**आकाशग्रहणमादौ धर्मादीनामाधारत्वात् इति चेन्न लोकविनिवेशस्यानादित्वात् ३४** स्यान्मत धर्मादीनां पंचानामपि द्रव्याणामाकाशं, आधारं साधारणं ततस्तस्य ग्रहणं सर्वेषामादौ न्याय्यमिति तन्न, किं कारणं ? लोकविनिवेशस्यानादित्वात् । नाय नियमोऽस्ति लोकविनिवेशे आकाशमाधार इतराणि द्रव्याणि आधेयानि इति । किं तु लोकविनिवेशक्रम एवमयमनादिसिद्ध इति नाकाशमाधारं, आदिमतां हि कुंडबदरादीनां दृष्ट आधाराधेयभाव ।

**आर्षविरोध इति चेन्न आदेशवचनात् ॥ ३५ ॥** स्यादेतत् यद्याधाराधेयभावो नेष्यते, युदुक्तं मार्षे स्वप्रतिष्ठमाकाशं आकाशप्रतिष्ठं तनुवातवलयं तनुवातवलयप्रतिष्ठं घनवातवलयं तत्प्रतिष्ठं घनोदधिवलयं इत्यादि तद्विरोध इति तन्न । किं कारणं ? आदेशवचनात् । यदि एकांतेनाधाराधेयभावो न स्यात् स्यादार्षविरोध यदा तु स्यादाधाराधेयभाव इति स्यान्नाधाराधेयभाव इति आदेशवचनादिष्यते ततोनास्त्यार्षविरोध । कथमिति च दुच्यते–आकाशादीनां द्रव्यार्थादेशात् स्यादाधाराधेयत्वाभावो यत पर्यायार्थिकगुणभावे द्रव्यार्थिकप्रधान्यात् प्रतिनियतानादिपारिणामिकद्रव्यार्थेनाऽधिष्ठानानामाकाशादीनां षण्णामाधाराधेयपर्यायाभाव । द्रव्यार्थिकगुणभावे च पर्यायार्थिकप्राधान्यात् षण्णामपि द्रव्याणां आदिमत्त्वोपपत्तेराधाराधेयभावो युज्यते । ततस्तदपेक्षया आधाराधेयभाव आर्षे प्रणीत इति नास्ति विरोध । अथवा व्यवहारनयादेशात् स्यादाधाराधेयता । यतोऽनादिपारिणामिकलोकविनिवेशेऽपि व्यवहार एव प्रवृत्त आकाशमाधार अन्यानि द्रव्याणि आधेयानि इति । एवंभूतनयादेशात् स्यादनाधाराधेयता यतोऽनादिपारिणामिकलोक विनिवेशस्यैवंभूतत्वात् स्वात्मप्रतिष्ठान्येव सर्वद्रव्याणि इति । न नुव्यवहारनयापेक्षया आधाराधेयभावाभ्युपगमे ऽनवस्थाप्रसंग घनोदधिवलयस्य घनवातवलयमाधार घनवातवलयस्य तनुवातवलय तनुवातवलस्य आकाश आकाशस्यान्यत् तस्यान्यत् तस्याप्यन्यत् इति ? नैष दोष आकाशस्य सर्वगतत्वात् अनंतत्वाच्च । यद्धि सर्वगत, अनंत च तस्य सर्वत्र सान्निध्यात् तस्याप्यन्यत् तस्याप्यन्यत् इति व्यवहाराभावात् अनवस्था नास्ति । परिशेषादसर्वगतस्यानंत मूर्तिमत सावयवस्यैवेंद्रियकस्य स्यादनवस्था । यदि सर्वगतत्वात् अस्यानवस्था दृष्टा सोष्यते नैषोष्यते ततो विमुच्यतामनवस्थादोषकल्पना । तस्मान्नि प्रतिद्वंद्व पूर्वोक्त एवास्तु क्रमहेतु

**कालोपसंख्यानमिति चेन्न वक्ष्यमाणलक्षणत्वात् ॥ ३६ ॥** स्यादेतत्कालोपि कश्चिदजीवपदार्थोस्ति अतश्चास्ति यद्भाष्ये वहुकृत्व षड्द्रव्याणि इत्युक्त अतोस्योपसंख्यानं कर्तव्यमिति ? तन्न किं कारणं वक्ष्यमाणलक्षणत्वात् । वक्ष्यते हि तस्य लक्षणमुपरिष्टात् अत्राह सर्वद्रव्यपर्यायेषु केवलस्य इत्येवमादिषु द्रव्याण्युक्तानि कानि तानीत्यत्रोच्यते–

## द्रव्याणि ॥ १२ ॥

**स्वपरप्रत्ययोत्पादविगमपर्यायैः द्रूयते द्रवति वा तानीति द्रव्याणि ॥ १ ॥** स्वश्च परश्च स्वपरौ प्रत्ययौ ययो तौ स्वपरप्रत्ययौ । उत्पादश्च विगमश्चोत्पादविगमौ येषां त स्वपरप्रत्ययोत्पादविगमा । के पुनस्ते ? पर्याया । द्रव्यक्षेत्रकालभावलक्षणो बाह्य प्रत्यय परप्रत्यय तस्मिन् सत्यपि स्वयमतत्परिणामोऽर्थो न पर्यायांतर आस्कंदति इति ? तत्समर्थ स्वश्च प्रत्यय । तावुभौ सभूयभावानां उत्पादविगमयो हेतू भवत नान्यतरापाये कुशूलस्थमाषपच्यमानोदकस्थघोटकमाषवत्, एवमुभयहेतुकोत्पादविगमै तैस्तैः स्वपर्यायै द्रूयते गम्यते द्रवति गच्छति तान् पर्यायानिति द्रव्याणीति व्यपदिश्यते । भेदनयवशात् कर्तृकर्मणोर्भेदं कृत्वा निर्देश क्रियते स्वजात्यपरित्यागेनावस्थितिरन्वयैरुपलब्धस्वरूपाणां तु मुहुर्मुहुरुत्पादा-

**अलोकाकाशस्यावकाशदानाभावात्तदभाव इतिचेन्न तत्सामर्थ्याविरहात्** ॥ २३ ॥ स्यान्मत ? यद्यवकाशदानादाकाशमित्युच्यते अलोकाकाशे जीवाद्यवकाशदानाभावात् आकाशव्यपदेशो नोपपद्यते इति तन्न । किं कारण ? तत्सामर्थ्याविरहात् । भविष्यत्कालस्यातिदूरस्यापि वर्तमानप्राप्त्यर्हत्वात् तत्प्राप्त्यभावेपि भविष्यद्व्यपदेशो भवति । एवमलोकाकाशस्यावगाहिद्रव्याभावेपि अवगाहनशक्तिरविरुद्धा इत्यवकाशदानात् आकाशत्वं युज्यते । अथवा क्रियानिमित्तत्वेपि रूढिविशेषबललाभात् गोशब्दवत् तदभावेपि प्रवर्तते ।

**पूरणगलनान्वर्थसंज्ञत्वात्पुद्गला** ॥ २४ ॥ यथा भासं करोति भास्कर इति भासनार्थमंतर्नीय भास्करसंज्ञान्वर्था प्रवर्तते तथा भेदात् संघातात् भेदसंघाताभ्यां च पूर्यंते गलंते चेति पूरणगलनात्मिका क्रियामंतर्भाव्य पुद्गलशब्दोन्वर्थः पृषोदरादिषु निपातितः । यथा शवशयनं श्मशानमिति-

**परमाणुषु तदभावात् पुद्गलत्वाभाव इति चेन्न गुणापेक्षया तत्सिद्धेः** ॥ २५ ॥ स्यान्मत-अणूनां निरवयवत्वात् पूरणगलनक्रियाभावात् पुद्गलव्यपदेशाभावप्रसंग इति ? तन्न किं कारणं ? गुणापेक्षया तत्सिद्धेः । रूपरसगंधस्पर्शयुक्ता हि परमाणवः एकगुणरूपादिपरिणता द्वित्रिचतुःसंख्येयासंख्येयानंतगुणत्वेन वर्धंते । तथैव हानिमपि उपयातीति गुणापेक्षया पूरणगलनक्रियोपपत्तेः परमाणुष्वपि पुद्गलत्वमविरुद्धं । अथवा गुण उपचारात् कल्पनं पूरणगलनयोः भावित्वात् भूतत्वाच्च शक्त्यपेक्षया परमाणुषु पुद्गलत्वोपचारः ।

**पुंगिलानाद्वा** ॥ २६ ॥ अथवा पुमांसो जीवाः ते शरीराहारविषयकरणोपकरणादिभावेन गिल्यंत इति पुद्गलाः । अण्वादिषु तदभावादपुद्गलत्वमिति चेत् उक्तोत्तरमेतत् ॥

**बहुवचनं स्वातंत्र्यप्रतिपत्त्यर्थं** ॥ २७ ॥ धर्माधर्माकाशपुद्गला इति बहुवचनं स्वातंत्र्यप्रतिपत्त्यर्थं द्रष्टव्यं । किं पुनः स्वातंत्र्यं धर्मादयो गत्याद्युपग्रहान् प्रति वर्तमानाः स्वयमेव तथा परिणमंते न परप्रत्ययाधीना तेषां प्रवृत्तिः इत्येतदविवक्षितं स्वातंत्र्यं । ननु च बाह्यद्रव्यादिनिमित्तवशात् परिणामिनां परिणामः उपलभ्यंते स च स्वातंत्र्ये सति विरुध्यत इति ? नैष दोषः बाह्यस्य निमित्तमात्रत्वात्, न हि गत्यादिपरिणामिनो जीवपुद्गलाः गत्याद्युपग्रहे धर्मादीनां प्रेरकाः । ननु इतरेतरयोगलक्षणे द्वंद्वे न्यायप्राप्तं बहुवचनं तेन कथं स्वातंत्र्यं प्रतीयते ? समाहारे समुदायप्रदाने एकवचनेन सिद्धं बहुवचनं ज्ञापकं स्वातंत्र्यस्य । यथा कृतं इत्यत्र एकवचनेन सिद्धे बहुवचनेन ज्ञापकं अनुक्तस्यापि कृत उत्पत्तिर्यथा स्यात् इति तेन सिद्धं । अते भव-श्रुतिम यमेन प्रोक्तं याम्यं धर्मशास्त्रमित्यादि ॥

**प्रशस्ताभिधानाद्धर्मग्रहणमादौ** ॥२८॥ धर्मशब्दोऽयं लोके प्रशस्तार्थे ततोऽस्य ग्रहणमादौ क्रियते ।

**तदनंतरमधर्मग्रहणं क्रियते कुतः लोकव्यवस्थाहेतुत्वात्** ॥ २९ ॥ तदनंतरं अधर्मग्रहणं क्रियते । कुतः ? लोकव्यवस्थाहेतुत्वात् । पंचास्तिकाया कालश्च लोकं अवतिष्ठते । पदार्था अनया आक्रम्येत्यवस्थाविनिधसन्निवेशा यत्रासनाद्याकारा इत्यर्थः । लोकस्य व्यवस्था तस्या हेतुत्वात् लोकव्यवस्थाहेतुत्वात् । असति हि अधर्मास्तिकाये गतिमतां द्रव्याणां गतिविषयानियमाभावात् । विष्कंभाभावे सति[1] लोकव्यवस्था विशिष्टा न स्यात् अतोऽस्य धर्मानंतरं ग्रहणं न्याय्यं ।

**तत्प्रतिपक्षत्वाच्च** ॥ ३० ॥ तस्य धर्मास्तिकायस्य प्रतिपक्षोऽधर्मास्तिकायः स्थितिकारणत्वात् । ततश्चानंतरं ग्रहणं क्रियते ।

**तत्परिच्छेदत्वात्तदनंतरं आकाशग्रहणं** ॥ ३१ ॥ ताभ्यां धर्माधर्माभ्यां आकाशं परिच्छिद्यते । यत्र धर्माधर्मौ तल्लोकाकाशं इतरदलोकाकाशमित्यतः तदनंतरं आकाशग्रहणं क्रियते ।

---

१ निमित्तत्वात् पाठाव ग, पुस्तक

**द्रव्याभिधानानुपपत्तिश्च ॥ ७ ॥** यस्य यादिना द्रव्यत्वयोगात् द्रव्यमित्यभिमतं तस्य द्रव्यमित्यभिधान नोपपद्येत कथ ? इति चेत् उच्यते-इहाऽभेदेन वा व्यपदेश स्यात् भेदेन वा ? यदि अभेदेन व्यपदेश, यथा यष्टिसहचरित पुरुषो यष्टिरित्युच्यते तथा द्रव्यत्वसहचरित द्रव्यत्वमिति व्यपदिश्यते न द्रव्यमिति। अथ मत द्रव्यत्वस्य द्रव्यत्वमित्यभिधानमस्ति द्रव्यमिति च, तेन द्रव्यत्वेन द्रव्यमित्यभिधीयमानेन योगाद्द्रव्य मिति, तदिदमसिद्धमसिद्धेन साध्यते। द्रव्यत्वस्य द्रव्यमित्यभिधान कुत ? स्वत एवेति चेत् द्रव्ये कोऽपरितोष । अर्थांतरादिति चेत् तत्रापि स एव दोष । द्रव्यत्वाभिधानप्रसंगश्च। कुतो ह्येतत् उभयशब्दवाच्यत्वे द्रव्यत्वस्य तद्योगात् द्रव्ये द्रव्यमित्यभिधान भवति न द्रव्यत्वमिति। अथ भेदेन व्यपदेश यथा यष्टिरस्यास्तीति यष्टिमानिति व्यदिश्यते, एव द्रव्यत्वमस्यास्तीति द्रव्यत्ववद्द्रव्यमित्यभिधान प्रसज्यते न द्रव्यमित्यभिधान प्रसज्येत। अथ मतमेतत् यथा शुक्लगुणयोगात् शुक्ल पट इति मत्वर्थीयस्य निवृत्ति, एवमिहापि मत्वर्थीयस्याभाव इति विषम उपन्यास । युज्यते तत्र मत्वर्थीयस्याभाव गुणवचनेभ्यो निवृत्तेरन्याख्यातत्वात् अनन्वाख्याने वा उभयवचना शुक्लादय इति। व्याकरणाभ्युपगम्यमाने अय तु द्रव्यत्वशब्दो न गुणवचन तेनाऽस्मान्मतो निवृत्तिर्दुरुपपादा। किं च मत्त्वर्थस्यापि निवृत्तिर्नान्वाख्याता ततो द्रव्यमित्यभिधान नोपपद्यते।

**त्वोत्पत्त्यभावश्चोभयथा दोषात् ॥ ८ ॥** द्रव्यस्य भावो द्रव्यत्वमिति त्वस्य चोत्पत्तिर्न प्राप्नोति कुत ? उभयथा दोषात्। इदमिह सप्रधार्य-असौ भाव द्रव्यस्याऽऽत्मभूतो वा स्यात् अनात्मभूतो वा? यद्यात्मभूत अनादिपारिणामिकद्रव्यस्य आत्मभवने त्वस्य विधानात्, नान्यद्द्रव्याद्द्रव्यत्वमिति ससर्गवादहानि । अथ अर्थांतरभूत ? द्रव्यस्य भावो द्रव्यत्वमिति विग्रहो नोपपद्यते द्रव्यानात्मभूतत्वात् द्रव्यत्वस्य। न हि घटस्य भाव इति पटे वृत्तिरुपपद्यते। किं च द्रव्यस्य भावो द्रव्यत्वमिति यथान्यो भाव, तथा द्रव्यत्वस्यान्यो भाव स्याद्वा न वा ? यदि नास्ति तस्य स्वभावाभावादभाव स्यात् । अथास्ति तस्मिन्नभिधेये त्वोत्पत्तेः द्रव्यत्वत्वमिति प्राप्नोति तथा सति अनवस्था । अथ मतमेतत् यथा अवेर्मांसमिति विगृह्य अविकशब्दादुत्पत्तिर्भवति आविकमिति। तथा द्रव्यत्वस्य भाव इति विगृह्य द्रव्यशब्दादेव त्वोत्पत्तिर्भवतीति ? नैतं युक्त अर्थांतरविषयत्वात्। युज्यते अवेर्मांसमविकस्य मासमिति केवलो विग्रहभेदो नार्थभेद इति एकेन विग्रह अपरस्मादुत्पत्तिरिति। इह तु द्रव्यद्रव्यत्वशब्दयो पदार्थांतरविषयत्वात् विग्रहभेदे अर्थभेद इति नासौ न्याय कल्पयितु शक्य ।

**एकस्यानेकत्र वृत्त्यभावो बहुत्वप्रसंगो वा ॥ ९ ॥** तद्द्रव्यत्वमेकमित्युभ्युपगम्यते तद्वादिभि । तत्कथमेक निरवयव अनेकत्र पृथिव्यादौ वर्तितुमुत्सहते ? । अथ वर्तेत ? बहुत्वमेवास्य स्यात् अनेकत्र वृत्ते । रूपादिवत्। आकाशवदेक सत् अनेकमवगाहत इति चेत् न वैषम्यात्। युज्यते महापरिमाण वियदवगाहते सकलमिति गुणाना तु द्रव्यपदार्थविषयत्वात् कथममहद्द्रव्यत्व कृत्स्न वेवेष्टि । एकत्वसख्यागुणवदुपचारतो महत्त्वमस्येति चेत् तदिदमसिद्धेन साध्यते । सिद्धसाध्यव्यवस्थाश्रयो हि कथामार्ग । उपचरितस्य मुख्यकार्यसाधनाशक्ते । अस्यापि च द्रव्यत्वेन एकमाकाश प्रदेशभेदेन त्वनतमितीष्टत्वात् दृष्टांताभाव ॥

**नीलद्रव्यवदिति चेन्न असिद्धत्वात् ॥ १० ॥** स्यान्मत यथा नीलद्रव्य एकमनेकशाटीपटकबलसबधि दृष्ट तथैक द्रव्यत्वमपि अनेकद्रव्यसबधीति ? तन्न। किं कारण ? असिद्धत्वात्। नैतत् सिद्ध शाटीपटकबलेषु एकमव नीलद्रव्यमिति । यथा शाट्यादिभेद तथा तद्व्यजकस्य नीलद्रव्यस्यापि भेदोपपत्ते । एकस्मिन्नपि पटे यन्मध्ये नीलद्रव्य न तत्प्रातयो । यच्च प्रांतयो न तन्मध्ये इति भेदोभ्युपगतव्य किमुत भिन्नेषु द्रव्येषु । नीलत्ववदिति चेन्न तदपि साध्यसम । अथ मतमेतत्—

**दृष्टांताभावेपि एकत्वमस्य सिद्ध अग्निवदिति चेन्न प्रतिज्ञाहानेः ॥११॥** यथाग्नेरन्यस्मिन्नुष्णे दृष्टांते असत्यपि उष्ण। एवमसत्यपि एकस्मिन् अनेकसबधिनि दृष्टाते द्रव्यत्वस्य द्रव्येषु वृत्ति सिध्यतीति तदपि नोपपद्यते प्रतिज्ञाहाने । ननु दृष्टातो नास्तीति प्रतिज्ञाय दृष्टांत ब्रुवत ते प्रतिज्ञा हीयते । किं च युक्त्यभावेपि यदि द्रव्यत्वमेकमनेकसबधीति मन्यते स्वत एव द्रव्य द्रव्यत्वमिति कस्मान्न प्रतिपद्यते। समवायादिति चेन्न तस्य प्रत्युक्तत्वात् ।

विगमवता च भेदोपपत्ते.। यदा द्रव्याणां कर्म विवक्षा तदा न्यायप्राप्त. कर्मणि य । यदा कर्तृविवक्षा तदा बहुलापेक्षया कर्तरि य । अथवा उत्पादकविनश्वरनानापर्यायोत्पादविनाशाविच्छेदेपि सातत्तिकद्रव्यार्थादेशवशेन द्रवणात् गमनात् सप्रत्ययात् द्रव्याणि कुत एतत् ? गत्यर्थानां ज्ञानार्थत्वात्।

**द्रव्यार्थे वा निपातितो द्रव्यशब्दः ॥ २ ॥** अथवा द्रव्यं भव्य इत्यनेन निपातितो द्रव्यशब्दो वेदितव्य । द्रु इव भवतीति द्रव्य । क उपमार्थ. ? द्रु इति दारु नाम यथा अग्रंथि अचिन्हं दारु तक्षणे कल्प्यमान तेन तेन अभिलापेनाकारेणाऽऽविर्भवति । तथा द्रव्यमपि आत्मपरिणामगमनसामर्थ्ये पाषाणखननोदकवदविभक्तकर्तृकरणमुभयनिमित्तवशोपनीतात्मना तेन तेन पर्यायेण द्रु इव भवतीति द्रव्यमित्युपमीयते ॥

**द्रव्यत्वादिति चेन्न तदभावात् ॥ ३ ॥** स्यान्मत यथा दंडसबधात् दंडीत्यभिधान प्रत्ययश्च देवदत्ते भवति तथा द्रव्यत्व नाम सामान्यविशेषास्ति पृथिव्यादिषु द्रव्यमिति प्रत्ययाभिधानाना प्रवृत्तिदर्शनात्। गुणकर्मभ्यो व्यावृत्त्युपलब्धेश्चानुमीयमानान्वयव्यतिरेक' तेन योगाद्द्रव्य न पर्यायद्रवणादिति। तन्न किं कारण ? तदभावात् यथा दडसबधात् प्राक् देवदत्तो जात्यादिभि सिद्ध । देवदत्तसबधाच्च प्रागदंडो वृत्तत्वग्राधिमादिभि प्रसिद्ध ततस्तयो सबधो युक्त । नच तथा द्रव्यत्वयोगात् प्राक् द्रव्यमुपलभ्यते यद्युपलभ्येत सबधकल्पनमर्थक स्यात्। द्रव्यत्वमपि द्रव्यसबधात् प्राङ् नोपलब्धस्वरूप, अत तयोरसतोर्न युक्त सबध । अस्तित्वे चाभ्युपगम्यमाने पृथगनुपलभ्यमानशक्तिकयो. सबधेपि न तच्छक्तिप्रादुर्भावोस्ति, यथा जात्यन्धयो. पृथग्दर्शनशक्तिविरहात्, न योगेपि रूपालोकनशक्तिसभव ।तथा द्रव्यद्रव्यत्वयो -अपि द्रव्यप्रत्ययाभिधानोत्पत्त्यसामर्थ्यात् तत्संबधेपि न सामर्थ्यं। तत्र द्रव्य तावत् प्राक् द्रव्यत्वसमवायात् द्रव्यात्मनैव नात्मनि द्रव्यप्रत्ययाभिधानयोरुत्पादक। यदि स्यात् ? द्रव्यत्वसबधस्य वैयर्थ्यं स्यात्। तथा द्रव्यत्वमपि प्राग्द्रव्यसमवायात् द्रव्यत्वात्मन्येन न द्रव्यत्वप्रत्ययाभिधाननिमित्तमास्ति। माभूद्द्रव्यत्वस्य द्रव्येण समवायस्य वैयर्थ्यमिति अतस्तयो पृथगनुपलभ्यमानसामर्थ्ययो सबधेपि न तत्सामर्थ्यमस्ति इत्यवेम न द्रव्यत्वयोगाद्द्रव्यमिति। ननु च द्रव्यत्वसबधात् प्राक् द्रव्यव्यपदेशोनास्ति अस्ति तु तत् तत सतो द्रव्यत्वस्य युक्त सबध नैप दोप ।अस्ति परिहार ।कुत ? सतोऽसत्वात् नहि तद्द्रव्य स्वतोस्ति सत्तायोगादेव सत्स्यात सच नास्तीत्युक्त। अथासतामपि सबध स्यात् खरविषाणादीनामपि स्यात्। किंच द्रव्यत्व नाम सर्वगत पदार्थ स यदि अतदात्मकेन सबध्यते गुणकर्मभि खरविषाणादिभिश्च सबध्येत नचेष्यते सबध ।अथ तदात्मकेनैव सबध्यते द्रव्यत्वसबधो व्यर्थ प्रागपि तदात्मकत्वात् तत स्वतो द्रव्यसिद्धि । आह समवायिकारणत्वाद्द्रव्यत्वेन द्रव्यमेव सबध्यते न गुणकर्माणि नापि खरविषाणादीनि द्रव्यत्वस्य हि द्रव्यमेव समवायिकारणमिष्ट नेतराणि इत्युच्यते-

**न स्वतोसिद्धत्वात् ॥ ४ ॥** यदि द्रव्यत्वादन्यद्द्रव्य स्वत सिद्ध स्यात् अतस्तत्समवायिकारणमिति व्यपदेशार्हं स्यात् नच तत्स्वत सिद्ध किंचिदस्ति अत स्वतोऽसिद्धत्वात् न तत्समवायिकारण अथ तत्स्वतोऽसिद्धमपि समवायि कारण खरविषाणादिषु को मत्सर । अथाऽसत्त्वान्न समवायिकारण तानि नन्वसत्त्वाद्द्रव्यमपि द्रव्यत्वस्य न समवायिकारण । किंच—

**अतस्तात्सिद्धेः ॥ ५ ॥** यत एव द्रव्यत्वस्यासमवायिकारण द्रव्य न गुणकर्माणि अतस्ताद्द्रव्यत्व द्रव्य एव समवेति न गुणकर्मादिषु इति विवक्षित ननु, अत एव द्रव्यात्मैव द्रव्यत्व आभ्यतरार्थोऽनादिपारिणामिकद्रव्यापरित्यागी न द्रव्याद्बहिरस्य सामान्यविशेषात्य इति एतत्सिध्यति । आह विशेषोपलब्धिर्द्रव्यमेव समवायिकारण द्रव्यत्वस्य। को विशेष ?आश्रयभाव यस्माद्द्रव्यमितरेषा पदार्थानामाधार उच्यते

**न द्रव्यमाश्रयः स्वतोसिद्धत्वात् ॥ ६ ॥** लोके स्वत सिद्धे आधेयानामाश्रयो भवति यथा घटो जलादीना न तथा द्रव्यत्वात् पृथक् द्रव्य स्वत सिद्धमस्ति यदाधारो द्रव्यत्वस्येति व्यपदिश्येत । किंच—

१ द्रव्यत्वप्रत्ययाभिधानसा द ग पुस्तके पाठ.

**द्रव्याभिधानानुपपत्तिश्च ॥ ७ ॥** यस्य मादिना द्रव्यत्वयोगात् द्रव्यमित्यभिमतं तस्य द्रव्यमित्यभिधानं नोपपद्येत कथं ? इति चेत् उच्यते- इहाऽभेदेन वा व्यपदेशः स्यात् भेदेन वा ? यदि अभेदेन व्यपदेश , यथा यष्टिसहचरितः पुरुषो यष्टिरित्युच्यते तथा द्रव्यत्वसहचरितं द्रव्यत्वमिति व्यपदिश्यते न द्रव्यमिति। अथ मतं द्रव्यत्वस्य द्रव्यत्वमित्यभिधानमस्ति द्रव्यमिति च, तेन द्रव्यत्वेन द्रव्यमित्यभिधीयमानेन योगाद्द्रव्यमिति, तदिदमसिद्धमसिद्धेन साध्यते। द्रव्यत्वस्य द्रव्यमित्यभिधानं कुतः ? स्वत एवेति चेत् द्रव्ये कोऽपरितोषः । अर्थांतरादिति चेत् तत्रापि स एव दोषः । द्रव्यत्वाभिधानप्रसंगश्च। कुतो ह्येतत् उभयशब्दवाच्यत्वे द्रव्यत्वस्य तद्योगात् द्रव्ये द्रव्यमित्यभिधानं भवति न द्रव्यत्वमिति । अथ भेदेन व्यपदेशः यथा यष्टिरस्यास्तीति यष्टिमानिति व्यदिश्यते, एवं द्रव्यत्वमस्यास्तीति द्रव्यत्ववद्द्रव्यमित्यभिधानं प्रसज्यते न द्रव्यमित्यभिधानं प्रसज्येत । अथ मतमेतत् यथा शुक्लगुणयोगात् शुक्लः पटः इति मत्वर्थीयस्य निवृत्तिः, एवमिहापि मत्वर्थीयस्याभाव इति विषम उपन्यासः । युज्यते तत्र मत्वर्थीयस्याभावः गुणवचनेभ्यो निवृत्तेरन्वाख्यातत्वात् अनन्वाख्याने वा उभयवचनाः शुक्लादय इति । व्याकरणाभ्युपगम्यमाने अयं तु द्रव्यत्वशब्दो न गुणवचनः तेनाऽस्मान्मतो निवृत्तिर्दुरुपपादा। किं च मत्वर्थस्यापि निवृत्तिर्नान्वाख्याता ततो द्रव्यमित्यभिधानं नोपपद्यते।

**त्वोत्पत्त्यभावश्चोभयथा दोषात् ॥ ८ ॥** द्रव्यस्य भावो द्रव्यत्वमिति त्वस्य चोत्पत्तिर्न प्राप्नोति कुतः ? उभयथा दोषात्। इदमिह संप्रधार्य-असौ भावः द्रव्यस्याऽऽत्मभूतो वा स्यात् अनात्मभूतो वा ? यद्यात्मभूतः अनादिपारिणामिकद्रव्यस्य आत्मभवने त्वस्य विधानात्, नान्यद्द्रव्याद्द्रव्यत्वमिति संसर्गवादहानिः । अथ अर्थांतरभूतः ? द्रव्यस्य भावो द्रव्यत्वमिति विग्रहो नोपपद्यते द्रव्यानात्मभूतत्वात् द्रव्यत्वस्य । न हि घटस्य भाव इति पटे वृत्तिरुपपद्यते। किं च द्रव्यस्य भावो द्रव्यत्वमिति यथान्यो भावः, तथा द्रव्यत्वस्यान्यो भावः स्याद्वा न वा ? यदि नास्ति तस्य स्वभावाभावादभावः स्यात् । अथास्ति तस्मिन्नाभिधेये त्वत्तोत्पत्तेः द्रव्यत्वत्वमिति प्राप्नोति तथा सति अनवस्था । अथ मतमेतत् यथा अवेर्मांसमिति विगृह्य अविकशब्दादुत्पत्तिर्भवति आविकमिति । तथा द्रव्यत्वस्य भाव इति विगृह्य द्रव्यशब्दादेव त्वोत्पत्तिर्भवतीति ? नैतद्युक्तं अर्थांतरविषयत्वात्। युज्यते अवेर्मांसमविकस्य मांसमिति केवलो विग्रहभेदो नार्थभेदः इति एकेन विग्रहः अपरस्मादुत्पत्तिरिति। इह तु द्रव्यद्रव्यत्वशब्दयोः पदार्थांतरविषयत्वात् विग्रहभेदे अर्थभेद इति नासौ न्यायः कल्पयितुं शक्यः ।

**एकस्यानेकत्र द्रव्यभावो बहुत्वप्रसंगो वा ॥ ९ ॥** तद्द्रव्यत्वमेकमित्युभ्युपगम्यते तद्वादिभिः । तत्कथमेकं निरवयवं अनेकत्र पृथिव्यादौ वर्तितुमुत्सहते ?। अथ वर्तेत ? बहुत्वमेवास्य स्यात् अनेकत्र वृत्तेः । रूपादिवत्। आकाशवदेकं सत् अनेकमवगाहत इति चेत् न वैधर्म्यात्। युज्यते महापरिमाणं वियदवगाहते सकलमिति गुणानां द्रव्यपदार्थविषयत्वात् कथममहद्द्रव्यत्वं कृत्स्नं वेवेष्टि । एकत्वसंख्यागुणवदुपचारतो महत्त्वमस्येति चेत् तदिदमसिद्धेन साध्यते । सिद्धसाध्यव्यवस्थाश्रयो हि कथामार्गः । उपचरितस्य मुख्यकार्यसाधनाशक्तेः । अस्यापि च द्रव्यत्वेन एकमाकाशं प्रदेशभेदेन त्वनेकमितीष्टत्वात् दृष्टांताभावः ॥

**नीलद्रव्यवदिति चेन्न असिद्धत्वात् ॥ १० ॥** स्यान्मतं यथा नीलद्रव्यं एकमनेकशाटीपटकंबलसंबंधि दृष्टं तथैकं द्रव्यत्वमपि अनेकद्रव्यसंबंधीति ? तन्न। किं कारणं ? असिद्धत्वात्। नैतत् सिद्धं शाटीपटकंबलेषु एकमेव नीलद्रव्यमिति । यथा शाट्यादिभेदः तथा तद्व्यंजकस्य नीलद्रव्यस्यापि भेदोपपत्तेः । एकस्मिन्नपि पटे यन्मध्ये नीलद्रव्यं न तत्प्रांतयोः । यच्च प्रांतयोः न तन्मध्ये इति भेदोभ्युपगंतव्यः किमुत भिन्नेषु द्रव्येषु । नीलत्ववदिति चेन्न तदपि साध्यसमं । अथ मतमेतत्—

**दृष्टांताभावेपि एकत्वमस्य सिद्धं अग्निवदिति चेन्न प्रतिज्ञाहानेः ॥ ११ ॥** यथाग्नेर्यस्मिन्नुष्णे दृष्टांते असत्यपि उष्णः। एवमसत्यपि एकस्मिन् अनेकसंबंधिनि दृष्टांते द्रव्यत्वस्य द्रव्येषु वृत्तिः सिध्यतीति तदपि नोपपद्यते प्रतिज्ञाहाने । ननु दृष्टांतो नास्तीति प्रतिज्ञाय दृष्टांतं ब्रुवतः ते प्रतिज्ञा हीयते । किं च युक्त्यभावेपि यदि द्रव्यत्वमेकमनेकसंबंधीति मन्यते स्वत एव द्रव्यं द्रव्यत्वमिति कस्मान्न प्रतिपद्यते। समवायादिति चेन्न तस्य प्रत्युक्तत्वात् ।

विगमवता च भेदोपपत्ते । यदा द्रव्याणां कर्म विवक्षा तदा न्यायप्राप्त. कर्मणि य । यदा कर्तृविवक्षा तदा बहुलापेक्षया कर्तरि य । अथवा उत्पादकविनश्वरनानापर्यायोत्पादविनाशाविच्छेदेपि सातत्यिकद्रव्यार्थदेशवशेन द्रवणात् गमनात् सम्प्रत्ययात् द्रव्याणि कुत एतत् ? गत्यर्थानां ज्ञानार्थत्वात् ।

**द्रव्यार्थे वा निपातितो द्रव्यशब्दः ॥ २ ॥** अथवा द्रव्यं भव्य इत्यनेन निपातितो द्रव्यशब्दो वेदितव्य । द्रु इव भवतीति द्रव्य । क उपमार्थ ? द्रु इति दारु नाम यथा अग्रंथि अजिन्ह दारु तक्ष्णे कल्प्यमान तेन तेन अभिलषितेनाकारेणाऽऽविर्भवति । तथा द्रव्यमपि आत्मपरिणामगमनसामर्थ्ये पाषाणखननोदकवदविभक्तकर्तृकरणमुभयनिमित्तवशोपनीतात्मना तेन तेन पर्यायेण द्रु इव भवतीति द्रव्यमित्युपमीयते ॥

**द्रव्यत्वादिति चेन्न तदभावात् ॥ ३ ॥** स्यान्मत यथा दडसबधात् दडीत्यभिधान प्रत्ययश्च देवदत्ते भवति तथा द्रव्यत्व नाम सामान्यविशेषास्ति पृथिव्यादिषु द्रव्यमिति प्रत्ययाभिधानाना प्रवृत्तिदर्शनात् । गुणकर्मभ्यो व्यावृत्त्युपलब्धेश्चानुमीयमानान्वयव्यतिरेक तेन योगाद्द्रव्य न पर्यायद्रवणादिति । तत्र किं कारण ? तदभावात् यथा दडसबधात् प्राक् देवदत्तो जात्यादिभि सिद्ध । देवदत्तसबधाच्च प्राग्दडो वृत्तत्वद्राघिमादिभि प्रसिद्ध ततस्तयो सबधो युक्त । नच तथा द्रव्यत्वयोगात् प्राक् द्रव्यमुपलभ्यते यद्युपलभ्येत सबधकल्पनमनर्थक स्यात् । द्रव्यत्वमपि द्रव्यसबधात् प्राक् नोपलब्धस्वरूप, अत तयोरसतोर्न युक्त सबध । अस्तित्वे चाभ्युपगम्यमाने पृथगनुपलभ्यमानशक्तिकयो सबधेपि न तच्छक्तिप्रादुर्भावोस्ति, यथा जात्यन्धयो पृथग्दर्शनशक्तिविरहात्, न योगेपि रूपालोकनशक्तिसभव । तथा द्रव्यद्रव्यत्वयो -अपि द्रव्यप्रत्ययाभिधानोत्पत्त्यसामर्थ्यात् तत्सबधेपि न सामर्थ्य । तत्र द्रव्य तावत् प्राक् द्रव्यत्वससवायात् द्रव्यात्मनैव नात्मनि द्रव्यप्रत्ययाभिधानयोरुत्पादक । यदि स्यात् ? द्रव्यत्वसबधस्य वैयर्थ्य स्यात् । तथा द्रव्यत्वमपि प्राग्द्रव्यसमवायात् द्रव्यत्वात्मन्येन न द्रव्यत्वप्रत्ययाभिधाननिमित्तमस्ति । माभूद्द्रव्यत्वस्य द्रव्येण समवायस्य वैयर्थ्यमिति अतस्तयो पृथगनुपलभ्यमानसामर्थ्ययो सबधेपि न तत्सामर्थ्यमस्ति इत्यवेम न द्रव्यत्वयोगाद्द्रव्यमिति । ननु च द्रव्यत्वसबधात प्राक् द्रव्यव्यपदेशोनास्ति अस्ति तु तत् तत सतो द्रव्यत्वस्य युक्त सबध नैष दोष । अस्ति परिहार । कुत ? सतोऽसत्वात् नहि तद्द्रव्य स्वतोस्ति सत्तायोगादेव सत्स्यात सच नास्तीत्युक्त । अथासतामपि सबध स्यात् खरविषाणादीनामपि स्यात् । किंच द्रव्यत्व नाम सर्वगत पदार्थ स यदि अतदात्मकेन सबध्यते गुणकर्मभि खरविषाणादिभिश्च सबध्येत नचेष्यते सबध । अथ तदात्मकेनैव सबध्यते द्रव्यत्वसबधो व्यर्थ प्रागपि तदात्मकत्वात् तत स्वतो द्रव्यसिद्धि । आह समवायिकारणत्वाद्द्रव्यत्वेन द्रव्यमेव सबध्यते न गुणकर्माणि नापि खरविषाणादीनि द्रव्यत्वस्य हि द्रव्यमेव समवायिकारणमिष्ट नेतराणि इत्युच्यते-

**न स्वतोऽसिद्धत्वात् ॥ ४ ॥** यदि द्रव्यत्वादन्यद्द्रव्य स्वत सिद्ध स्यात् अतस्तत्समवायिकारणमिति व्यपदेशार्हं स्यात् नच तत्स्वत सिद्ध किंचिदस्ति अत स्वतोऽसिद्धत्वात् न तत्समवायिकारण अथ तत्स्वतोऽसिद्धमपि समवायि कारण खरविषाणादिषु को मत्सर । अथाऽसत्त्वान्न समवायिकारण तानि नन्वसत्त्वाद्द्रव्यमपि द्रव्यत्वस्य न समवायिकारण । किंच—

**अतस्तत्सिद्धेः ॥ ५ ॥** यत एव द्रव्यत्वस्यासमवायिकारण द्रव्य न गुणकर्माणि अतस्तद्द्रव्यत्व द्रव्य एव समवेति न गुणकर्मादिषु इति विवक्षित ननु, अत एव द्रव्यात्मैव द्रव्यत्व आभ्यतरार्थोऽनादिपारिणामिकद्रव्यापरित्यागी न द्रव्याद्बहिरन्य सामान्यविशेषाख्य इति एतत्सिध्यति । आह विशेषोपलब्धिर्द्रव्यमेव समवायिकारण द्रव्यत्वस्य । को विशेष ? आश्रयभाव यस्माद्द्रव्यमितरेषां पदार्थानामाधार उच्यते

**न द्रव्यमाश्रय॰ स्वतोऽसिद्धत्वात् ॥ ६ ॥** लोके स्वत सिद्धे आधेयानामाश्रयो भवति यथा घटो जलादीना न तथा द्रव्यत्वात् पृथक् द्रव्य स्वत सिद्धमस्ति यदाधारो द्रव्यत्वस्येति व्यपदिश्येत । किंच—

---

१ द्रव्यत्वप्रत्ययाभिधानेत्यादि॰ ॥ पुस्तके पाठ.

ऽन्यावा स्यादन्यो वाऽवक्तव्यो वा। अन्यत्वानन्यत्वयोर्हि विहिता दोषा । यद्यवक्तव्य-स्ववचनविरोध प्रसज्यते यदि समुदायोऽस्ति नावक्तव्य अवक्तव्यो न समुदायोस्ति सत सज्ञोपपत्ते , अवक्तव्यस्य च सर्ववाग्गोचरात्यये निरात्मकत्वप्रसगात् इति शिष्टेतरवचनवत् अन्यत्वोपपत्तेश्च । यदि वक्तव्यलक्षणगुणा समुदायो न वक्तव्यलक्षण , ननु च लक्षणभेदादन्यत्व सिद्ध । किं च रूपादिपरमाणुसमुदायमात्रत्वे गुर्वादे धर्मांतरस्याऽप्रादुर्भावात्, अणूनामतींद्रियस्वभावव्यतिक्रमाभावात् द्रव्यमिद भ्रातिरूप स्यात् । न एवं-मिति चेत् प्रत्यक्षानुमानयो तदाभासयोश्च अविशेषप्रसग स्यात् । द्रव्य भव्य इति अयमपि द्रव्यशब्द एकातवादिना न सभवति स्वतोऽसिद्धस्य द्रव्यस्य भव्यार्थासभवात् । ससर्गवादिनस्तावत् गुणकर्मसत्ता-द्रव्यत्वादिसामान्यविशेषेभ्यो द्रव्यस्यात्यतमन्यत्वे खरविषाणकल्पस्य स्वतोऽसिद्धत्वात् न भवनक्रियाया कर्तृत्व युज्यते । परत सिद्धिरपि स्वतोऽसिद्धस्य न सभवति खरविषाणवत् । गुणसमुदायमात्रत्वेपि समु-दायस्य सवृत्या कल्पितस्याऽसत्त्वात् गुणाना प्रत्येक अनुपलब्धत्वात्तद्व्यतिरेकाभावाऽसत्त्वमिति भवनक्रि-याया कर्तृता दुरुपपादा । अनेकातवादिनस्तु गुणसद्भावो द्रव्य, द्रव्य भव्य इति चोपपद्यते । पर्यायिपर्या-ययो कथचिद्भेदोपपत्तेरित्युक्त पुरस्तात् ।

**धर्मादिसामनाधिकरण्याद्बहुवचन ॥ १८ ॥** प्रकृता धर्मादयो बहव तत्सामानाधिकरण्याद्बहु-वचनेन निर्देश क्रियते ॥

**धर्मादीन्येव द्रव्याणि नान्यानीति पुंल्लिंगप्रसग इति चेन्न आविष्टलिंगत्वात् ॥ १९ ॥** स्यादेतत् यदि तत्सामानाधिकरण्याद्बहुवचन क्रियते सत एव पुल्लिंगमपि प्राप्नोति इति। ते हि अजीवकाया उक्ता पुल्लिंगा इति ? तन्न किं कारण ? आविष्टलिंगत्वात् । आविष्टोऽय द्रव्यशब्द वचनादिवत् स्वलिंग न जहाति । अनतरत्वाच्चतुर्णामेव द्रव्यव्यपदेशप्रसगे अन्योपादानार्थमिदमुच्यते—

## जीवाश्च ॥ ३ ॥

जीवशब्दो व्याख्यातार्थ ॥

**जीवत्वादिति चेन्न प्रतिषिद्धत्वात् ॥ १ ॥** स्यादेतत् जीवत्व नाम सामान्यविशेषोस्ति तेन यो-गाज्जीवा इति ? तन्न किं कारण ? प्रतिषिद्धत्वात् । द्रव्यत्ववदस्य प्रतिषेधो वेदितव्य । किं च—

**अनवस्थाप्रतिज्ञाहानिदोषप्रसगात् ॥ २ ॥** यो जीवत्वसयोगाज्जीव इति प्रत्ययाभिधाने कल्प-यति स पृष्टव्य -जीवत्वे केन योगात् प्रत्ययाभिधानवृत्तिरिति ? । तत्रापि अन्यत एवेति चेत् अनवस्थाप्रसग । अथाऽनवस्थादोषो माऽक्लृपत् इति जीवत्वे स्वत एव वृत्तिरभ्युपगम्यते ननु प्रतिज्ञाहानिस्तेऽर्थांतरससर्गात् सर्वत्र वृत्तिरिति, तद्वज्जीवेऽपि स्यात् । अथ मतमेतत् जीवत्वे प्रदीपवत् स्वत एव वृत्तिरिति जीवे कोऽप रितोष [1]। आह पदार्थांतरत्वादेव जीवजीवत्वयो न जीवत्ववत् जीवे स्वत प्रत्ययाभिधानसिद्धि , यस्मात् न पदार्थांतरधर्म पदार्थांतरे भवितुमर्हति पदार्थांतरत्वादेव अन्यथा पदार्थसकरप्रसग , न च नास्त्यतो नानव स्थाप्रतिज्ञाहानिदोषौ स्त इति । उच्यते—

**न पदार्थांतरत्वासिद्धे ॥ ३ ॥** यदि जीवजीवत्वयो पदार्थांतरत्व अभविष्यत् अपि तर्हि धर्म-सकराभावोऽसेत्स्यत् नतु पदार्थांतरत्वमस्ति इत्युक्त पुरस्तात् स्वतोऽसिद्धत्वात् । किं च प्रतिज्ञाहानि-स्ते प्रसजति यदि पदार्थांतरधर्म पदार्थांतरे न भवेत्, सत्ताया सदिति प्रत्ययाभिधानहेतुत्वलक्षणो धर्म द्रव्यगुणकर्मसु न स्यात् । अथ योगेपि सत्प्रत्ययाभिधानहेतुत्व सत्ताया एवेति चेत् न सति द्रव्यगु-णकर्माणि सत्प्रत्ययाभिधानहेतुत्वविरहात् खरविषाणवत् इत्यासक्त । तत सिद्धमेतत् जीवनक्रियोपलक्षित-द्रव्यविशेषविषयाऽनादिपारिणामिकी जीवसज्ञेति ॥

---

१ जीवत्वेऽपि स्यादिति म पुस्तके पाठ.

**गुणसंद्रावो (संद्रावात्) द्रव्यमिति चेन्न एकांते दोषोपपत्तेः ॥१२॥** स्यादेतद् गुणसद्रावो द्रव्यमित्येतल्लक्षणमनवद्य । गुण सद्रूयते प्राप्यते गुणान्वा सद्रवति प्राप्नोति इति द्रव्यमिति ? तन्न किं कारण ? एकांते दोषोपपत्ते । कथमिति चेदुच्यते गुणेभ्यो द्रव्य अन्यद्वा स्यात् अनन्यद्वा ? यद्यनन्यत् कर्तृकर्मभेदाभावात् निर्देशो नोपपद्यते । अपि च एकांतानन्यत्वे हि गुणा एव वा स्यु द्रव्यमेव वा । यदि गुणा एव, द्रव्याभावे तदविनाभाविनां गुणानामपि निराधारत्वादभाव. स्यात् । अथ द्रव्यमेव एवमपि अलक्षणत्वात्खरविषाणत्वकल्पना द्रव्यस्य स्यात् । अथान्यत्व गृह्येत एवमप्येकातेन स्वरूपशून्यत्व स्यात् यस्मादभ्युपगम्योच्यते गुणै सद्रूयते द्रव्यमिति लक्षण नोपपद्यते गुणाना निष्क्रियत्वे द्रव्य प्रत्याभिमुख्येन द्रवणाभावात् । दिक्कालावाकाश च क्रियावद्भ्यो वैधर्म्यात् निष्क्रियाणि । एतेन कर्माणि गुणाश्च व्याख्याता । नि क्रिया इति वचनात् । गुणान् सद्रवति इति च लक्षण नोपपद्येत नि क्रियद्रव्याणा गुणान् प्रति द्रवणाभावात् । किं च—

**स्वतोऽसिद्धत्वात् ॥ १३ ॥** यथावाद्रिपरिक्षेपादिलक्षणान् ग्रामादीन् स्वत सिद्धान् देवदत्त सिद्ध प्राप्नोति न तथा गुणा स्वत सिद्धा सति यान् प्राप्नुयाद् द्रव्य । आह—

**पाकजदर्शनात् तत्सिद्धिः ॥ १४ ॥** पार्थिवेषु परमाणुषु अग्निसयोगात् औष्ण्यापेक्षात् श्यामाद्युच्छेदेन रक्ताद्यारभे च ननु प्राप्यते गुणैर्द्रव्य । उच्यते—

**ननु युतसिद्धत्वप्रसंगात् ॥ १५ ॥** यदि द्रव्यमवतिष्ठते रूपादयो विनश्यति प्रादुर्भवति ननु युतसिद्धा द्रव्यरूपादय इत्यासक्त । अथाऽयुतसिद्धा समवायसबधात् इति मत ? ननु द्रव्यवत्तन्नित्यत्वप्रसग । एव सति अयुतसिद्धिर्भवति यदा रूपादयस्तदा द्रव्य यदा द्रव्य तदा रूपादय इति ? नन्वेव सति यथा द्रव्य नित्य तथा रूपादयोपि नित्या, यथा रूपादीनामनित्यत्व तथा द्रव्यस्येति प्राप्त तुल्यवृत्तित्व । किं च—

**विरोधात् पंडितमूर्खवत् ॥ १६ ॥** यदि पडितो न मूर्ख अथ मूर्खो न पडित' तथा यदि समवायसबधात् द्रव्यादयुतसिद्धा रूपादय न विनक्ष्यति न चोत्पत्स्यते, अथ विनश्यत्युत्पद्यते च द्रव्य नावतिष्ठत इति कुतस्त्योऽय न्याय । न तु गुणैर्द्रूयते गम्यते उपलभ्यते तदिति द्रव्य ? कस्मात् अर्थांतरत्वात् । न हि घटेन पट उपलभ्यते अनन्ययत्वात् । अथोपलभ्यते द्रव्यगुणलक्षणभेदेन कल्पनाविरोध । आह भेदे एव उपलभ्योपलभकभावो दृष्ट अग्निधुमादिषु, नाऽभेदे स्वात्मनि वृत्तिविरोधात् । नह्यगुल्यग्रमात्मान स्पृशति इति ? उच्यते युज्यते अग्निधूमादिषु भिन्नेष्वेव लक्ष्यलक्षणभाव पृथक्सिद्धरूपत्वात् नच द्रव्यगुणाना पृथक् प्रसिद्धरूपता व्यतिरेकेण अनुपलब्धे । यच्चोक्त स्वात्मनि वृत्तिविरोध इति तदप्येकातग्रहणात् सूक्त न भवति । दृश्यते हि स्वात्मन्यपि वृत्ति यथा प्रदीप स्वात्मान प्रकाशयति न तस्य स्वरूपप्रकाशने प्रदीपांतरमपेक्षते । यद्यपेक्षेत पटादिवदप्रकाशकत्वमेवाऽस्य स्यात् । किं च तस्य तत्त्वस्योपदेष्टा स्वात्मान वेत्ति मा नवा ? यदि न वेत्ति स्ववचनविरोध आत्मन्यात्ममनसो सयोगविशेषात् आत्मप्रत्यक्षमिति वचनात् ।

**असर्वज्ञत्वप्रसंगश्च ॥ १७ ॥** यद्यात्मानमेवासौ न वेत्ति कथ इतराद्विजानीयात् तत स्वपरविशेषानभिज्ञत्वात् असर्वज्ञत्व प्रसज्यते । अथ वेत्ति ननु स्वात्मनि वृत्तिविरोधात् द्रव्यात्मका एव पर्याया द्रव्य लक्षयतीति साधूक्त । यो हि मन्यते गुणसमुदायमात्र द्रव्य नातोऽन्यत् किंचिदिति तस्यापि गुणसद्रावो द्रव्यमिति तल्लक्षण नोपपद्यते । कुत ? कर्तृकर्मभावादेव । गुणसमुदायमात्रद्रव्यवादिनो हियादिन, न गुणा पृथक् सति नापि समुदाय ततोऽन्योस्ति । येषा युतश्चित् भेदात् कर्तृकर्मभावो भवेत् । ननुचाऽभेदेऽपि कर्तृकर्मभावो दृष्ट यथाऽऽत्मान प्रदीप प्रकाशयति इति तत्रापि कथचित् भेदेन भवितव्य, भासुरस्य रूपस्य द्रव्यस्य च स्यात् भेददर्शनात् । यदि सर्वथैवाऽभेदः स्यात् सर्व द्रव्य भासुररूप स्यात् भासुरस्य च द्रव्यस्य सर्वदैव सादृश्य प्रसज्येत' दृश्यते च मापादिभाव । नच समुदायकल्पना युज्यते गुणाना पृथक्त्वरूपानुपलब्धे । दृश्यते मापादीना पृथगुपलभ्यमानरूपाणा समुदाय । नापि गुणकल्पनोपपद्यते गुण्यते विशष्यते यैरर्थास्ते गुणा विशेषणानीत्यर्थ. । न च गुणिन विशेष य कश्चिदतरेण गुणानां गुणत्व भवति । किंच समुदायो गुणेभ्यो-

---

१ लक्षणमित्यर्थ ।

**तद्भावाव्ययो नित्यत्वं ॥ २ ॥** येन भावेन उपलक्षित द्रव्य तस्य भावस्याऽव्ययो नित्यत्वमुच्यते । वक्ष्यते 'तद्भावाव्यय नित्यमिति' । धर्मादीनि द्रव्याणि गतिहेतुत्वादिविशेषलक्षणद्रव्यार्थादेशात् अस्तित्वादिसामान्यलक्षणद्रव्यार्थादेशाच्च कदाचिदपि न व्ययतीति नित्यानि ।

**इयत्तानतिवृत्तेरवस्थितानि ॥ ३ ॥** धर्मादीनि षडपि द्रव्याणि कदाचिदपि षडिति इयत्त्वान्नातिवर्तन्ते । ततोऽवस्थितानीत्युच्यते । अथवा धर्माधर्मलोकाकाशैकजीवानां तुल्यासंख्येयप्रदेशत्व । अलोकाकाशस्य पुद्गलानां चाऽनन्तप्रदेशत्व कालस्याप्येकप्रदेशत्वमित्येतादियत्त्व, तस्यानतिवृत्ते अवस्थितानीति व्यपदिश्यते ।

**गतार्थत्वात्तदवक्तव्यमिति चेन्न परिणामानेकत्वात् ॥ ४ ॥** स्यान्मत नित्यवचनेनैव गतार्थत्वात् अवस्थितानीति न वक्तव्य न हि नित्यत्वमतिक्रम्यावस्थित्वमस्तीति ? तन्न किं कारण ? परिणामानेकत्वात् । धर्मादीनामनेकगतिपरिणामोऽस्ति गतिस्थित्युपग्रहादिपर्यायोत्पादव्ययध्रौव्यस्थितिलक्षण ,अत किं ? अमुष्मिन् परिणामानेकत्वेपि न मूर्तिमत्त्वोपयोगपरिणामो भवति धर्माधर्मकालाकाशानां, नापि जीवानामचेतनत्व पुद्गलानां च अमूर्तत्व अवस्थितवचनात् ।

**विरोधादयुक्तमिति चेन्न उभयनयसद्भावात् ॥ ५ ॥** स्यादेतत् परिणामानेकत्व येषामिष्टमवस्थितत्वमिति एतद्विरुद्धमिति तन्न । किं कारण ? उभयनयसद्भावात् । धर्मादीनां सर्वेषां द्रव्याणां द्रव्यार्थिकपर्यायार्थिकाऽन्यतरगुणप्रधानभावार्पणाभेदात् स्थित्युत्पत्तिनिरोधात्मकमविरुद्धमवस्थितविशेषण, वा नित्यग्रहणमवस्थितविशेषण विज्ञायते । यथा गमनागमनाद्यनेकपर्यायसद्भावेप्यभीक्ष्णप्रजल्पनसद्भावात् नित्यप्रजल्पितो देवदत्त इत्युच्यते । तथोभयकारणवशोपनीतोत्पादनिरोधसम्भवेपि अमूर्तत्वादिस्वभाव कदाचिदपि धर्माधर्मादीनि न जहतीति नित्यावस्थितानीत्युच्यते ।

**क्रियावत्त्वनिवृत्त्यर्थमवस्थितवचनमिति चेन्न निःक्रियाणीत्याम्नातत्वात् ॥ ६ ॥** स्यादेतत् परिस्पदात्मिकाया क्रियाया निवृत्त्यर्थमवस्थितवचनमिति ? तन्न । किं कारण ? निष्क्रियाणीत्याम्नातत्वात् ।

**अरूपग्रहण द्रव्यस्वतत्त्वनिर्ज्ञानार्थं ॥ ७ ॥** अरूपग्रहण क्रियते द्रव्यस्वतत्त्वनिर्ज्ञानार्थं । न विद्यते रूप येषां तान्यरूपाणि । रूपव्युदासात्तदविनाभाविनां रसादीनामपि व्युदासो वेदितव्य । अरूपाणि अमूर्तानीति यावत् ।

**वृत्तौ पचत्ववचनात् षड्द्रव्योपदेशव्याघात इति चेन्न अभिप्रायाऽपरिज्ञानात् ॥ ८ ॥** स्यान्मत वृत्तावुक्तमवस्थितानि धर्मादीनि न हि कदाचित्पचत्व व्यभिचरन्तीति तत षड्द्रव्याणीत्युपदेशस्य व्याघात इति ? तन्न । किं कारण ? अभिप्रायापरिज्ञानात् । अयमभिप्रायो वृत्तिकरणस्य—कालश्चेति पृथग् द्रव्यलक्षण कालस्य वक्ष्यते तदनपेक्षादित्कृतानि पचैव द्रव्याणीति षड्द्रव्योपदेशाविरोध । यथा सर्वेषां द्रव्याणां नित्यावस्थितानि इत्येतत् साधारण लक्षण तथा अरूपत्वमपि प्राप्तमतस्तदपवादार्थमाह—

## रूपिण· पुद्गलाः ॥ ५ ॥

**रूपशब्दस्याऽनेकार्थत्वे मूर्तिपर्यायग्रहण शास्त्रसामर्थ्यात् ॥ १ ॥** रूपशब्दोऽनेकार्थ क्वचिद्द्रव्ये वर्तते गोरूपाणि गोद्रव्याणि इत्यर्थ । क्वचित् स्वभावे वर्तते चैतन्य पुरुषस्य स्वरूप स्वभाव इत्यर्थ । क्वचिदभ्यासे वर्तते दशरूपमध्ययन कार्यं दशवारानभ्यास· कार्यं इत्यर्थ । क्वचिच्छ्रुतौ वर्तते स्वरूप शब्दस्य स्वा श्रुतिरित्यर्थ । क्वचिन्महाभूतेषु वर्तते रूप-चत्वारि महाभूतानि उपादाय रूप चेति । क्वचित् गुणविशेषे वर्तते चक्षुर्ग्रहणयोग्यो योऽर्थस्तद्रूपमिति । क्वचिन्मूर्तिपर्यायवचन रूपिद्रव्य मूर्तिमद्द्रव्यमित्यर्थ तत्रेह मूर्तिपर्यायवचनो रूपशब्दो गृहीतव्य । कुत ? शास्त्रसामर्थ्यात् । अर्हत्प्रोक्ते हि गणधरावधारिते श्रुते शास्त्रेऽभिहित रूपिद्रव्य मूर्तिमद्द्रव्यमिति । तस्मात् रूपिण पुद्गला मूर्तिमत पुद्गला इत्यर्थ । का पुन· मूर्ति ? रूपादिसंस्थानपरिणामो मूर्ति । रूपमादिर्येषां त इमे रूपादय के पुनस्ते ? रूपरसगंधस्प-

**द्रव्यलक्षणयोगाद्रव्याणीति चेन्न नियमार्थत्वात् ॥४॥** स्यान्मत उत्पाद्व्ययध्रौव्ययुक्तं सदिति द्रव्यलक्षण वक्ष्यते तेन योगात् धर्मादीनां द्रव्यत्व सिद्ध नार्थोनेन द्रव्यसख्यानेन इति ? तन्न । किं कारण ? नियमार्थत्वात् । नियमार्थोऽयमारंभः धर्मोऽधर्मोऽऽकाशपुद्गला जीवाश्च वक्ष्यमाणलक्षणेन कालेन सह षडेव द्रव्याणीति । तेनान्यवादिपरिकल्पितानां दिगादीनां निवृत्तिः सिद्धा । कथमिति चेत् उच्यते-पृथिव्यप्तेजोवायुमनांसि पुद्गलद्रव्येऽतर्भवति रूपरसगधस्पर्शवत्त्वात् । वायोर्मनसश्च रूपादियोगाभाव इति चेन्न रूपादिमत्त्वात् । वायुस्तावत् रूपादिमान् स्पर्शवत्त्वात् घटादिवत् । चक्षुरादिकरणग्राह्यत्वाभावात् रूपाद्यभाव इति चेन्न परमाण्वादिषु अतिप्रसगात् । मनोपि द्विविध द्रव्यमनो भावमनश्चेति । तत्र भावमनो ज्ञान तस्य जीवगुणत्वादात्मन्यतर्भाव । द्रव्यमनश्च रूपादियोगात् पुद्गलद्रव्यविकार । तद्योगाभावोऽनुपलभ्यमानत्वात् इति चेत् परमाण्वादिषु विधर्मस्वपि वृत्ते सशयहेतुत्व । रूपादिमन्मनो ज्ञानोपयोगकरणत्वात् चक्षुरिंद्रियवत् । अमूर्तेपि शब्दे ज्ञानोपयोगकरणत्वदर्शनात् व्यभिचारी हेतुरिति चेन्न तस्य पौद्गलिकत्वात् मूर्तिमत्त्वोपपत्ते । परमाण्वादीनामतींद्रियत्वेपि रूपादिमत्कार्यदर्शनात् रूपादिमत्त्वमनुमीयते न तथा वायूना मनसां च रूपादिमत्कार्यं उपलभ्यते यतोऽवसीयते रूपादिमत्त्वमेषामिति चेन्न तेषामपि तदुपपत्ते । सर्वेषां परमाणूनां सर्वरूपादिमत्कार्यत्वप्रातियोग्यताभ्युपगमात् न च केचित् पार्थिवादिजातिविशेषयुक्ता परमाणव सति जातिसकरेण आरंभदर्शनात् । दिशोप्याकाशेऽतर्भाव आदित्योदयाद्यपेक्षया आकाशप्रदेशपंक्तिषु इत इदमिति व्यवहारोपपत्ते ॥

**जीवा इति बहुवचनं वैविध्यख्यापनार्थं ॥ ५ ॥** जीवा इति बहुवचन क्रियते वैविध्यख्यापनार्थं । विविधा हि जीवा ससारिणो मुक्ताश्चेति । ससारिणोपि गतींद्रियादिचतुर्दशमार्गणास्थानविकल्पात् मिथ्यादृष्ट्यादिकचतुर्दशगुणस्थानभेदात् सूक्ष्मबादरादिचतुर्दशजीवस्थानविकल्पाच्च विविधा । मुक्ताश्च एकद्वित्रि चतु सख्येयासख्येयानतसमयसिद्धपर्यायभेदाश्रयात् मुक्तिहेतुशरीराकारानुभेदादपि स्वक्षेत्रपरक्षेत्रावगाहनादिभेदाच्च विविधा ।

**एकयोग इति चेन्न जीवानामेव प्रसंगात् ॥ ६ ॥** स्यान्मत एक एव योग कर्तव्य द्रव्याणि जीवा इत्येव चशब्दाकरणात् लघिरिति तन्न किं कारण जीवानामेव प्रसगात् । तथा सति जीवा एव द्रव्याणि न धर्मादीनि इत्यनिष्टमासज्यते ॥

**बहुवचनादिति चेन्न उक्तत्वात् ॥ ७ ॥** स्यादेतत् द्रव्याणीति बहुवचनात् धर्मादीनां जीवानां च द्रव्यसंज्ञा सिध्यतीति ? तन्न । किं कारण ? उक्तत्वात् । उक्तमेतत् जीवा इति बहुवचन वैविध्यख्यापनार्थं इति । तत्सामानाधिकरण्यात् द्रव्याणि इति बहुवचन न्यायप्राप्त इति न ततो धर्मादिगति ॥

**अधिकारादिति चेन्न जीवावबद्धत्वात् ॥ ८ ॥** स्यादेतत् 'अजीवकाया धर्माधर्माकाशपुद्गला ' इत्यजीवाधिकारात् एकयोगेपि जीवाजीवयोर्द्रव्यसज्ञा सेत्स्यति इति ? तन्न किं कारण ? जीवावबद्धत्वात् । द्रव्यशब्दोऽय जीवावबद्ध इति जीवानामेव द्रव्यसज्ञा प्राप्नोति ॥

**सत्यप्यधिकारे यत्नाभावाच्च ॥ ९ ॥** अनुवर्तमाना अपि विधयो नचानुवर्तनादेव भवति किं तर्हि यत्नाद्भवतीति जीवानामेव द्रव्यसंज्ञा स्यात् अजीवाना न स्यात् यत्नाभावात् । तत पृथग्योगकरण न्याय्य । एव च कृत्वा च शब्दोप्यर्थवान् भवति । उक्तानां द्रव्याणा विशेषप्रतिपत्त्यर्थमाह—

## नित्यावस्थितान्यरूपाणि ॥ ४ ॥

**नित्यशब्दो ध्रौव्यवचनः ॥ १ ॥** अयं नित्यशब्द ध्रौव्यवचनो वेदितव्य । नेर्ध्रुवे त्योऽन्याख्यात. किं पुनरिह नित्यत्व ?

---

१ वात्र च इति ख पुस्तके पाठ । २ इत्येव च सति इत्यधिक पाठो ग. पुस्तके ।

स्य च संसारमोक्षक्रियाविस्तरस्य विरोध स्यात् । आह कालद्रव्य किं एकमनेकमिति उत्तरत्राऽस्य निर्णयो वक्ष्यते । अधिकृतानामेकद्रव्याणां विशेषप्रतिपत्त्यर्थमिदमुच्यते—

## निःक्रियाणि च ॥ ७ ॥

**उभयनिमित्तापेक्षः पर्यायविशेषो द्रव्यस्य देशांतरप्राप्तिहेतुः क्रिया ॥ १ ॥** अभ्यतर क्रियापरिणामशक्तियुक्त द्रव्य, बाह्य च नोदनाभिघाताद्यपेक्ष्योत्पद्यमान पर्यायविशेष , द्रव्यस्य देशांतरप्राप्तिहेतु क्रियेत्युपदिश्यते । उभयनिमित्त इति विशेषण द्रव्यस्वभावनिवृत्त्यर्थं । यदि हि द्रव्यस्वभाव स्यात् क्रियापरिणामिनो द्रव्यस्याऽनुपरतक्रियत्वप्रसंग । द्रव्यस्य पर्यायविशेष इति विशेषण अर्थांतरभावनिवृत्त्यर्थं । यदि हि क्रिया द्रव्यादर्थांतरभूता स्यात् द्रव्यनिश्चलत्वप्रसग । देशांतरप्राप्तिहेतुरिति विशेषण ज्ञानादिरूपादिनिवृत्त्यर्थं ।

**तस्याः प्रादिवृत्त्याऽन्यपदार्थगतिः ॥ २ ॥** तस्या क्रियाया प्रादिवृत्त्या अन्यपदार्थगतिर्भवति नि क्रान्तानि क्रियाया नि क्रियाणीति ।

**निःक्रियत्वादुत्पादाभाव इति चेन्न अन्यथोपपत्ते ॥३॥** स्यादेतद्धर्मादीनि द्रव्याणि यदि नि क्रियाणि ततस्तेषा उत्पादो न भवेत् क्रियापूर्वको हि घटादीनामुत्पादो दृष्ट । उत्पादाभावाच्च व्ययाभाव इति सर्वद्रव्याणां उत्पादादित्रितयरूपकल्पनाव्याघात इति ? तन्न । कि कारण ? अन्यथोपपत्ते । क्रियानिमित्तोत्पादाभावेपि एषां धर्मादीनामन्यथोत्पाद कल्प्यते । तद्यथा द्विविध उत्पाद स्वनिमित्त परप्रत्ययश्च । स्वनिमित्तस्तावत् अनंतानामगुरुलघुगुणानामागमप्रामाण्यादभ्युपगम्यमानाना षट्स्थानपतितया वृद्ध्या हान्या च वर्तमानानां स्वभावादेषामुत्पादो व्ययश्च । परप्रत्ययोपि अश्वादेर्गतिस्थित्यवगाहनहेतुत्वात् । क्षणे क्षणे तेषा भेदात् तद्धेतुत्वमपि भिन्नमिति परप्रत्ययापेक्ष उत्पादो विनाशश्च व्यवह्रियते ।

**निःक्रियत्वात् गतिस्थित्यवगाहनाक्रियाहेतुत्वाभाव इति चेन्न बलाधानमात्रत्वादिंद्रियवत् ॥ ४ ॥** स्यादेतद्यद्येतानि नि क्रियाणि गतिस्थित्यवगाहनक्रियाहेतुत्व एषा नोपपद्यते ? क्रियावति हि जलादीनि मत्स्यादीना गत्यादिनिमित्तानि दृष्टानि इति ? तन्न किं कारण ? बलाधानमात्रत्वात् । इंद्रियवत् । यथा दिदृक्षोश्चक्षुरिंद्रिय रूपोपलब्धौ बलाधानमात्रमिष्ट न तु चक्षुष तत्सामर्थ्यं इंद्रियांतरोपयुक्तस्य तदभावात् । यथा वाऽऽयु क्षयात् आत्मनि शरीरान्नि क्रान्ते सदपींद्रिय रूपाद्युपलब्धौ समर्थं न भवति ततो ज्ञायते आत्मन एवैतत्सामर्थ्यं इंद्रियाणां तु बलाधानमात्रत्वमिति । तथा स्वयमेव गतिस्थित्यवगाहनपर्यायपरिणामिना जीवपुद्गलाना धर्माधर्माकाशद्रव्याणि गत्यादिनिर्वृत्तौ बलाधानमात्रत्वेन विवक्षितानि न तु स्वय क्रियापरिणामीनि । कुत पुनरेतदेवमिति चेदुच्यते—द्रव्यसामर्थ्यात् । यथा—आकाशमगच्छत्सर्वद्रव्यै सबद्ध न चास्य सामर्थ्यमन्यस्यास्ति । तथा च नि क्रियत्वेप्येषा गत्यादिक्रियानिर्वृत्तिं प्रति बलाधानमात्रत्वमसाधारणमवसेय ।

**चशब्दोऽभिहितसंबंधार्थ ॥ ५ ॥** चशब्द क्रियते अभिहितानामेकद्रव्याणा सबंधाय । अतो धर्माऽधर्माकाशानां नि क्रियत्वनियमाज्जीवपुद्गलाना स्वत परतश्च क्रियापरिणामित्व सिद्ध । अत्र कश्चिदाह आत्मा सर्वगतत्वान्नि क्रिय क्रियाहेतुगुणसमवायात् परत्र क्रियाहेतुरिति तत्प्रतिविधानार्थमाह—

**द्रव्यस्य क्रियापरिणामिनोऽर्थांतरे तत्परिणामसामर्थ्यं वायुवत् ॥६॥** यथा वायु स्वय क्रियापरिणतत्वात् वनस्पतौ क्रियानिमित्त । तथात्मन क्रियापर्यायस्वभावस्य वीर्यांतरायज्ञानावरणक्षयक्षयोपशमागोपागनामलाभापेक्षे सति विहायोगतिनामोदयापादितशक्तिविशेषे च सति व्रज्यामनुतिष्ठत हस्तादिषु क्रियोत्पत्तिर्युक्ता न तु नि क्रियस्यात्मन परत्र क्रियाहेतुत्व युक्त । तत्र यदुक्त आत्मसयोगप्रयत्नाभ्यां हस्ते कर्मेत्येतदपाकीर्णं । कथमिति चेदुच्यते—

**अतत्परिणामस्य तदभावो व्योमवत् ॥ ७ ॥** यथा व्योम्नो नि क्रियस्य घटादिषु सत्यपि सयोगे न क्रियाहेतुत्व । तथाऽऽत्मनो नि क्रियस्य सत्यपि सयोगे हस्तादिषु न क्रियाहेतुत्व युक्त । किं च–

र्शा' । परिमंडलत्रिकोणचतुरस्रायतचतुरस्रादिराकृति संस्थान । तै रूपादिभि संस्थानैश्च परिणामो मूर्ति रित्याख्यायते ।

**गुणविशेषवचनग्रहणं वा ॥ २ ॥** अथवा रूपमित्यनेन गुणविशेषो गृह्यते । चक्षुर्ग्रहणयोग्य ।

**रसाद्यग्रहणमिति चेन्न तदविनाभावात् तदतर्भावसिद्धे ॥ ३ ॥** स्यादेतत्- गुणविशेषग्रहणे सति रसादीनामग्रहण प्रसक्तमिति ? तन्न ? किं कारण तदविनाभावात् तदतर्भावसिद्धे । रूपाविनाभाविनो हि रसादयो रूपग्रहणेन गृह्यते ।

**इनोनुत्पत्तिरभेदादिति चेन्न कथंचिद्व्यतिरेकसिद्धेः ॥ ४ ॥** स्यादाकूत सति भेदे इन उत्पत्ति र्दृष्टा यथा दडोस्यास्तीति दडीति न च तथा रूप द्रव्याद्भिन्नमस्ति तस्यैव रूपादिपर्यायपरिणामात् । तत इन उत्पत्ति नोपपद्यते रूपमेषामस्ति ते रूपिण इति ? तन्न किं कारण ? कथञ्चिद्व्यतिरेकसिद्धे । यद्यपि पुद्गल द्रव्यादनन्यद्रूप तत्परिणामात् द्रव्यार्थादेशाद् व्यतिरेकेणाऽनुपलब्धे । तथापि पर्यायार्थिकनयविवक्षानि-वृत्तिते रूपविनाशे पुद्गलावस्थानात् उत्पादानुत्पादत्वादादिमदनादिमत्वात् अन्वयव्यतिरेकरूपरागविज्ञान वृत्तिहेतुत्वादित्येवमादिभि हेतुभि कथंचिद्व्यतिरेक सिध्यतीति तदपेक्ष इन प्रादुर्भाव सिद्ध । तेनैव व्यपदेशाच्च अनन्यत्वेपि लोके व्यपदेशो दृष्ट । आत्मवान् आत्मा सारवान् वृक्ष इति । नहि आत्मनोऽन्य आत्मास्ति । नापि वृक्षादन्य सार तथापि व्यपदेशो दृश्यते । एवमिह अनन्यत्वेपि व्यपदेशो वेदितव्य ।

**पुद्गला इति बहुवचनं भेदप्रतिपादनार्थं ॥ ५ ॥** पुद्गला इति बहुवचन क्रियते । किं प्रयोजन? भेदप्रतिपादनार्थं । भिन्ना हि पुद्गला परमाणुभेदात् स्कधभेदाच्च । तद्विकल्पा उपरिष्टाद्वक्ष्यते । अत्राह किं पुद्गलवद्धर्मादीन्यपि द्रव्याणि प्रत्येक भिन्नानि ? इत्यत्रोच्यते ।

## आ आकाशादेकद्रव्याणि ॥ ६ ॥

**अभिविधावाङ् प्रयोग ॥ १ ॥** अभिविधिरभिव्याप्ति, तस्मिन्नर्थे अयमाङ् प्रयुज्यते तेनाऽऽकाशस्यापि एकद्रव्यत्वसकीर्तन भवति । यदि हि मर्यादाया गृह्यते आकाशातर्भावो न स्यात् । सौत्रीमानुपूर्वीमाश्रित्य इदमुक्त तेन धर्माधर्माकाशानि गृह्यते ।

**एकशब्दः संख्यावचन ॥ २ ॥** अन्याऽसहायाद्यनेकार्थसभवेप्ययमेकशब्द सख्यावचनो दृष्टव्य ।

**तत्संबंधाद्द्रव्यस्यैकवचनप्रसंग इति चेन्न धर्माद्यपेक्षया बहुत्वसिद्धे ॥ ३ ॥** स्यान्मतं यद्ययमेकशब्द सख्यावचन तेन समानाधिकरण्याद्द्रव्यशब्दस्याप्येकवचनमेव प्राप्नोतीति ? तन्न किं कारण धर्माद्यपेक्षया बहुत्वसिद्धे । धर्मादीनि बहूनि द्रव्याणि तदपेक्षया बहुवचन युज्यते । एकास्यानेकार्थप्रत्यायनशक्तियोगात् ।

**एकैकमित्यस्तु लघुत्वात् ॥ ४ ॥** अत्र कश्चिदाह आ आकाशादेकमित्येवतावदस्तु सूत्र कुतः लघुत्वात् । कथ द्रव्यगति ? प्रसिद्धत्वाद्द्रव्यगति । धर्मादीनि षड्द्रव्याणि इति प्रसिद्धमिति द्रव्यगतिर्भवति तस्मादनर्थक द्रव्यग्रहणमिति ।

**न वा द्रव्यापेक्षयैकत्वख्यापनार्थत्वात् ॥ ५ ॥** न वानर्थक । किं कारण ? द्रव्यापेक्षया एकत्वख्यापनार्थत्वात् । एकैकमित्युक्ते न ज्ञायते किं द्रव्यत क्षेत्रत कालत भावत इति ? अतोऽसदेहार्थ द्रव्यग्रहण क्रियते । तेनाऽयमर्थो गृह्यते—गतिस्थितिपरिणामिविविधजीवपुद्गलद्रव्यानेकपरिणामनिमित्तत्वेन सत्यपि भावतो बहुत्वे सति च प्रदेशभेदादसंख्येयक्षेत्रत्वे धर्मद्रव्यमधर्मद्रव्य च द्रव्यत एकैकमेव, आवगाह्यनेकद्रव्यविविधावगाहननिमित्तत्वेन अनतभावत्वेपि प्रदेशभेदात् सति चाऽनतक्षेत्रत्वे द्रव्यत एकमेवाकाशमिति न जीवपुद्गलवदेषा बहुत्व । नापि धर्मादिवत् जीवपुद्गलानामेकद्रव्यत्व । यदि हि स्यात् दृष्टस्य क्रियाकारकभेदस्य इष्ट-

विशेषभावात् । यथाग्नेर्नान्यदौष्ण्य स्वात्मविशेषभावात् । यद्यन्यत्स्यात् ? अग्नेरभावप्रसग स्यात् अलक्षण त्वात् । तथा क्रियापि क्रियावतो नान्या स्वात्मविशेषभावात् । यद्यन्या स्यात् ? द्रव्यस्यास्पदत्व स्यात् क्रियायाश्चाऽभाव , तस्मादनन्या क्रिया ।

**अर्थातरत्वेपि योगाद्व्यपदेशो दडदंडिवदिति चेन्न स्वतोऽसिद्धत्वात् ॥ १८ ॥** अर्थातरत्वेपि क्रियाया तद्योगाद्द्रव्यस्य क्रियावद्व्यपदेश दडदडिवदिति च यदि मत तदपि नोपपद्यते । कुत ? स्वतोऽसिद्धत्वात् । युज्यते स्वत सिद्धेन दडेन योगात् देवदत्तस्य दडिव्यपदेश । नच तथा क्रिया स्वत सिद्धा व्यतिरेकेणानुपलब्धे । तस्मात्तद्व्यपदेशो न युक्त ।

**समवायादिति चेन्नाऽविशेषप्रसगात् ॥ १९ ॥** स्यान्मत सत्यमेतत् न दडदडिवद्योग , स्वत सिद्ध्यभावात् । कथ तर्हि समवायो नामाऽयुतसिद्धिलक्षण सबधोस्ति तनैकत्वमित नीतस्य द्रव्यस्य क्रियावद्व्यपदेशो भवतीति ? तन्न । किं कारण ? अविशेषप्रसगात् । अयुतसिद्धिलक्षणश्चेत्सबध क्रियाक्रियावतोरिष्ट , यद्द्रव्य सैव क्रिया या च क्रिया तदेव द्रव्यमित्यविशेष प्राप्नोति तथा सति पदार्थातरकल्पनाव्याघात । पदार्थातरत्व चेदभ्युपगम्यते न नामाऽयुतसिद्धिलक्षण सबध ।

**अनन्यत्वे द्वयोरैकात्म्यमिति चेन्न कथचिद्व्यतिरेकसिद्धे ॥ २० ॥** स्यादेतद्यदि क्रियाक्रियावतोरनन्यत्वमभ्युपगम्यते तयोरैकात्म्य प्रसज्यते दृष्टा च नानात्मता-द्रव्यमवस्थित, क्रिया क्षणिकात्मिका, द्रव्यमकारण, क्रिया कारणवतीति । यद्यैकात्म्य स्यात् द्रव्यस्यावस्थानवत् अकारणत्ववत् क्रियाया अप्यवस्थानमकारणत्व च स्यात् विपर्ययो वेति ? तन्न । किं कारण ? कथचिद्व्यतिरेकसिद्धे । अत एवाऽस्माभि कथचिदन्यत्वमवसीयते ऐकात्म्य मा व्यज्ञायीति ।

**क्रियावत्त्वे सत्यनित्यत्वमिति चेन्न व्यभिचारात् ॥२१॥** स्यादेतत् यदि क्रियावत्त्वमभ्युपगम्यते जीवस्यानित्यत्व प्राप्नोति । दृष्टा हि क्रियावता प्रदीपादीनामनित्यतेति ? तन्न । किं कारण ? व्यभिचारात् । महदहकारादीना परमाण्वादीना च क्रियावतामपि नित्यत्वदर्शनात् व्यभिचारी हेतु । अथ सर्वानित्यत्ववादी आत्मानित्यत्वे हेतु ब्रूयात् असिद्धो हेतु "सर्वे प्रत्ययजाश्चैव सर्वे चैव निरीहका " इति क्रियावत्त्वानिन्हवात् । किं च—

**अभ्युपगमात् ॥ २२ ॥** अभ्युपगम्यतेऽस्माभि क्रियावतां जीवादीना पर्यायार्थिकनयादेशात् अनित्यत्व ततो न बाधाकरोऽय हेतु ॥

**असिद्धेश्च ॥ २३ ॥** नेद क्रियावत्त्वमस्मान् प्रति सिद्ध द्रव्यार्थिकनयादेशात् निष्क्रियत्वोपपत्ते । एतेन प्रदीपादिदृष्टातासिद्धिश्च योज्या । किं च—

**अनुत्पादव्ययोत्पादव्ययदर्शनात् ॥ २४ ॥** पर्यायार्थिकगुणभावे द्रव्यार्थिकप्राधान्यात् सर्वे भावा अनुत्पादव्ययदर्शनात् निष्क्रिया नित्याश्च । द्रव्यार्थिकगुणभावे पर्यायार्थिकप्राधान्यात् सर्वे भावा उत्पादव्ययदर्शनात् सक्रिया अनित्याश्चेति ।

**अनेकांतोपपत्तेः ॥२५॥** एकांतवादिविहिता दोषा नानेकातवादे अवकाश लभते । अजीवकाया इत्यत्र कायग्रहणे प्रदेशास्तित्वमात्रत्व निर्ज्ञात नत्वियत्तावधारिता प्रदेशाना, अतस्तन्निर्धारणार्थमिदमुच्यते—

## असंख्येयाः प्रदेशा धर्माऽधर्मैकजीवानां ॥ ८ ॥

**सख्याविशेषातीतत्वादसख्येयाः ॥ १ ॥** सख्यान सख्या गणनेत्यर्थ । स्वलक्षणेन परस्परतो विशेष्यत इति विशेष । सख्याया सख्यैव वा विशेष सख्याविशेष तामतिक्राता ये तेऽसख्येया न केनचित् सख्यातु शक्यत इति यावत् ।

**तदनुपलब्धेरसर्वज्ञत्वप्रसग इति चेन्न तेनात्मनाऽवसितत्वात् ॥ २ ॥** स्यान्मत यदि ते न

**उभयोः निःक्रियत्वात् ॥ ८ ॥** यथोभयोर्जात्यन्धयो' सबंधेन दर्शनशक्तिप्रादुर्भावोऽस्ति । तथाऽऽत्मसंयोगप्रयत्नयो नि क्रियत्वात् क्रियाहेतुत्वमयुक्त । कथ नि.क्रियत्वमिति चेदुच्यते—दिक्कालावाकाश च क्रियावद्द्रव्यो वैधर्म्यात् नि क्रियाणि । एतेन कर्माणि गुणाश्च व्याख्याता । नि क्रिया इति वचनात् ।

**संयोगप्रयत्नयोः गुणत्वात् निःक्रियत्व अग्निसंयोगवदिति चेन्नास्मदिष्टसिद्धेः ॥ ९ ॥** स्यान्मत यथा अग्निसंयोग उष्णापेक्ष परत्र घटादौ पाकजान् रूपादीनारभते नात्माधारेऽग्नौ । तथाऽऽत्मसंयोगप्रयत्नयोरदृष्टापेक्षयो हस्तादौ क्रियाहेतुत्व युक्त नात्मनीति ? तन्न किं कारण अस्मदिष्टसिद्धे । यथाग्निसंयोगो रूपादिमद्द्रव्यगुण परत्र घटादौ रूपादिमति रूपाद्यतरोत्पत्तिहेतुर्भवति । तथाऽऽत्मसंयोगप्रयत्नावपि परत्र हस्तादौ क्रियामारभमाणो क्रियावद्द्रव्यगुणाविति क्रियावत्त्वमात्मनोऽस्मदिष्ट सिद्ध ।

**तत्सामर्थ्याभावाच्च ॥१०॥** य उक्तोऽग्निसंयोगो दृष्टांत न तस्य तत्सामर्थ्यमस्ति । कुत ? अनुष्णाशीतस्याऽप्रेरकस्यानुपघातिनोऽप्रातस्य संयोगस्य रूपाद्युच्छेदोत्पत्त्योर्हेतुत्वासंभवात् । तस्मात् असौ—असिद्धो दृष्टांतो दार्ष्टांतिकार्थसिद्धये नाल ।

**गुरुत्ववदिति चेन्न तुल्यत्वात् ॥ ११ ॥** स्यादेतद्यथा नि क्रिय गुरुत्व लोष्टे वर्तमान तृणादौ क्रियाहेतु । तथाऽऽत्मसंयोगप्रयत्नौ नि क्रियावपि सतौ हस्तादौ क्रियाहेतू इति ? तन्न । किं कारण ? तुल्यत्वात् । अग्निसंयोगेन तुल्यमेतत् यथा क्रियापरिणामिनो लोष्टस्य गुणो गुरुत्व परत्र क्रियाहेतु । तथाऽऽत्मसंयोगप्रयत्नावपि क्रियापरिणामिद्रव्यगुणाविति क्रियावत्त्वमात्मन सिद्ध । किं च नि क्रियस्य गुरुत्वस्याऽस्पर्शकस्याऽप्रेरकस्यानुपघातिनोऽन्यत्र क्रियाहेतुत्व नोपपद्यते इति दृष्टांतोऽसिद्ध ।

**द्रव्यमेव तथापरिणत क्रियाहेतुरिति धर्मास्तिकायवदिति चेन्न वैधर्म्यात् ॥१२॥** स्यान्मत यथा धर्मास्तिकाय नि क्रिय जीवपुद्गलाना गतिहेतु तथाऽऽत्मसंयोगादि नि क्रियोपि परत्र क्रियाहेतुरिति ? तन्न । किं कारण ? वैधर्म्यात् । युज्यते धर्मास्तिकायस्य पुद्गलगतिं प्रत्यप्रेरकत्व, नि क्रियस्यापि बलाधानमात्रत्वदर्शनात् । आत्मगुणस्तु अपरत्र क्रियारंभे प्रेरको हेतुरिष्यते तद्वादिभिर्नच नि क्रियद्रव्यगुण प्रेरको भवितुमर्हति इति वैधर्म्य । किं च धर्मास्तिकायाख्ये द्रव्यमाश्रयकारण भवतु न तु नि क्रियात्मद्रव्यगुणस्य ततो व्यतिरेकेणाऽनुपलभ्यमानस्य क्रियाया आश्रयकारणत्व युक्त अर्थांतरभावे च सत्त्वमिति वैधर्म्य । किं च—

**शरीरे क्रियाभावो जीवस्य निःक्रियत्वात् आकाशप्रदेशवत् ॥ १३ ॥** यथाऽऽकाशप्रदेशो नि क्रिय शरीरे क्रियारंभहेतुर्न भवति तथात्मा तद्गुणश्च नि क्रियत्वात् क्रियाहेतुर्न भवेत् । किं च एकांतेनाऽमूर्तस्य नि क्रियस्य शरीरेण सह संबंधाभावात् परस्परोपकारो नोपपद्यते आकाशप्रदेश ।

**शरीरवियोगे नि ष्क्रियत्वप्रसंग इति चेन्न अभ्युपगमात् ॥१४॥** स्यान्मत यस्य कार्मणशरीरसंबंधे सति तत्प्रणालिकापादिता क्रिया आत्मनोभिप्रेता तस्याष्टविधकर्मसक्षये शरीरवियोगात् अशरीरस्यात्मनो नि क्रियत्व प्रसक्तमिति ? तन्न किं कारण ? अभ्युपगमात् कारणाभावात् कार्याभाव इति कर्मनोकर्मनिमित्ता या क्रिया सा तदभावे नास्तीति नि ष्क्रियत्व मुक्तस्याभ्युपगम्यतेऽस्माभि । अथवा परनिमित्तक्रियानिवृत्तावपि स्वाभाविकी मुक्तस्योर्ध्वगतिरभ्युपगम्यते प्रदीपवत् । अथवा स्याच्छरीरवियोगे मुक्तस्य नि क्रियत्व यदनंतवीर्यज्ञानदर्शनाचिंत्यसुखानुभवनादय क्रिया अभ्युपगम्येरन् । अभ्युपगम्यते तु तस्मादयमदोष शरीरवियोगादात्मनो नि क्रियत्वप्रसग इति ।

**वक्ष्यमाणत्वाच्च पूर्वप्रयोगादिभि ॥१५॥** वक्ष्यते चोत्तरत्र मुक्तानां क्रिया । कथ ? पूर्वप्रयोगादिभि ।

**पुद्गलानामपि द्विविधा क्रिया विस्रसा प्रयोगनिमित्ता च ॥१६॥** पुद्गलाना द्विविधा क्रिया वक्ष्यते सा द्वितया भवति विस्रसा प्रयोगनिमित्ता चेति ।

**साऽऽनन्या स्वात्मविशेषभावात् ॥ १७ ॥** सा क्रिया तद्धेतोरनन्या वेदितव्या । कुत. ? स्वात्म-

विशेषभावात् । यथाग्नेर्नान्यदौष्ण्यं स्वात्मविशेषभावात् । यद्यन्यत्स्यात् ? अग्नेरभावप्रसंगः स्यात् अलक्षणत्वात् । तथा क्रियापि क्रियावतो नान्या स्वात्मविशेषभावात् । यद्यन्या स्यात् ? द्रव्यस्यासद्रव्यं स्यात् क्रियायाश्चाऽभावः, तस्मादनन्या क्रिया ।

**अर्थांतरत्वेपि योगाद्व्यपदेशो दंडदंडिवदिति चेन्न स्वतोऽसिद्धत्वात् ॥ १८ ॥** अर्थांतरत्वेपि क्रियायाः तयोगाद्द्रव्यस्य क्रियावद्व्यपदेशः दंडदंडिवदिति च यदि मतं तदपि नोपपद्यते । कुतः ? स्वतोऽसिद्धत्वात् । युज्यते स्वतः सिद्धेन दंडेन योगात् देवदत्तस्य दंडिव्यपदेशः । नच तथा क्रिया स्वतः सिद्धा व्यतिरेकेणानुपलब्धेः । तस्मात्तद्व्यपदेशो न युक्तः ।

**समवायादिति चेन्नाऽविशेषप्रसंगात् ॥ १९ ॥** स्यान्मतं सत्यमेतत् न दंडदंडिवद्योगः, स्वतः सिद्धयभावात् । कथं तर्हि समवायो नामाऽयुतसिद्धिलक्षणः संबंधोस्ति तेनैकत्वमिव नीतस्य द्रव्यस्य क्रियावद्व्यपदेशो भवतीति ? तन्न । किं कारणं ? अविशेषप्रसंगात् । अयुतसिद्धिलक्षणश्चेत्संबंधः क्रियाक्रियावतोरिष्टः, यद्द्रव्यं सैव क्रिया या च क्रिया तदेव द्रव्यमित्यविशेषः प्राप्नोति तथा सति पदार्थांतरकल्पनाव्याघातः । पदार्थांतरत्वं चेदभ्युपगम्यते न नामाऽयुतसिद्धिलक्षणः संबंधः ।

**अनन्यत्वे द्वयोरैकात्म्यमिति चेन्न कथंचिद्व्यतिरेकसिद्धेः ॥ २० ॥** स्यादेतद्यदि क्रियाक्रियावतोरनन्यत्वमभ्युपगम्यते तयोरैकात्म्यं प्रसज्यते दृष्टा च नानात्मता-द्रव्यमवस्थितं, क्रिया क्षणिकात्मिका, द्रव्यमकारणं, क्रिया कारणवतीति । यद्यैकात्म्यं स्यात् द्रव्यस्यानवस्थानवत् अकारणत्ववत् क्रियाया अप्यवस्थानमकारणत्वं च स्यात् विपर्ययो वेति ? तन्न । किं कारणं ? कथंचिद्व्यतिरेकसिद्धेः । अत एवाऽस्माभिः कथंचिदन्यत्वमवसीयते ऐकात्म्यं मा व्यज्ञायीति ।

**क्रियावत्त्वे सत्यनित्यत्वमिति चेन्न व्यभिचारात् ॥२१॥** स्यादेतत् यदि क्रियावत्त्वमभ्युपगम्यते जीवस्यानित्यत्वं प्राप्नोति । दृष्टा हि क्रियावतां प्रदीपादीनामनित्यतेति ? तन्न । किं कारणं ? व्यभिचारात् । महदहंकारादीनां परमाण्वादीनां च क्रियावतामपि नित्यत्वदर्शनात् व्यभिचारी हेतुः । अथ सर्वानित्यत्ववादी आत्मानित्यत्वे हेतुं ब्रूयात् असिद्धो हेतुः "सर्वे प्रत्ययजाश्चैव सर्वे चैव निरीहकाः" इति क्रियावत्त्वनिन्हवात् । किं च—

**अभ्युपगमात् ॥ २२ ॥** अभ्युपगम्यतेऽस्माभिः क्रियावतां जीवादीनां पर्यायार्थिकनयादेशात् अनित्यत्वं ततो न बाधाकरोऽयं हेतुः ॥

**असिद्धेश्च ॥ २३ ॥** नेदं क्रियावत्त्वमस्मान् प्रति सिद्धं द्रव्यार्थिकनयादेशात् निष्क्रियत्वोपपत्तेः । एतेन प्रदीपादिदृष्टांतासिद्धिश्च योज्या । किं च—

**अनुत्पादव्ययोत्पादव्ययदर्शनात् ॥ २४ ॥** पर्यायार्थिकगुणभावे द्रव्यार्थिकप्राधान्यात् सर्वे भावा अनुत्पादव्ययदर्शनात् निष्क्रिया नित्याश्च । द्रव्यार्थिकगुणभावे पर्यायार्थिकप्राधान्यात् सर्वे भावा उत्पादव्ययदर्शनात् सक्रिया अनित्याश्चेति ।

**अनेकांतोपपत्तेः ॥२५॥** एकांतवादिविहिता दोषा नानेकांतवादे अवकाशं लभते । अजीवकाया इत्यत्र कायग्रहणे प्रदेशास्तित्वमात्रत्वं निर्ज्ञातं नत्वियत्तावधारिता प्रदेशानां, अतस्तन्निर्धारणार्थमिदमुच्यते—

## असंख्येयाः प्रदेशा धर्माऽधर्मैकजीवानां ॥ ८ ॥

**संख्याविशेषातीतत्वादसंख्येयाः ॥ १ ॥** संख्यानं संख्या गणनेत्यर्थः । स्वलक्षणेन परस्परतो विशेष्यत इति विशेषः । संख्याया संख्यैव वा विशेषः संख्याविशेषः तामतिक्रांता ये तेऽसंख्येयाः न केनचित् संख्यातुं शक्यंत इति यावत् ।

**तदनुपलब्धेरसर्वज्ञत्वप्रसंग इति चेन्न तेनात्मनाऽवसितत्वात् ॥ २ ॥** स्यान्मतं यदि ते न

केन चिदपि सख्यातु शक्यते, प्राप्त तर्हि तदनुपलब्धेरसर्वज्ञत्वमिति ? तन्न। किं कारण ? तेनात्मनावसितत्वात् यथानतमनतात्मनोपलभमानस्य न सर्वज्ञत्व हीयते तथाऽसख्येयमसख्येयात्मनाऽवबुध्यमानस्य नास्ति सर्वज्ञत्वहानि । न हि अन्यथावस्थितमर्थमन्यथा वेत्ति सर्वज्ञोयथार्थज्ञत्वात् । अर्थस्य चाधिगमे त्रिविध मान व्याख्यात सख्येयमसख्येयमनतमिति तत्रेहाऽजघन्योत्कृष्टासख्येय परिगृह्यते ।

**प्रदिश्यंते इति प्रदेशा ॥ ३ ॥** कथ प्रदिश्यत ? परमाण्ववस्थानपरिच्छेदात् । वक्ष्यमाणलक्षणो- द्रव्यपरमाणु स यावति क्षेत्रेऽवतिष्ठते स प्रदेश इति व्यवह्रियते। ते धर्माधर्मैकजीवा तुल्याऽसख्येयप्रदेशा । तत्र धर्माधर्मौ नि क्रिया व्याप्य स्थिता. । जीवस्तावत प्रदेशोपि सहरणविसर्पणस्वभावत्वात् कर्मनिर्वर्तित शरीर अणु वृहद्वाधितिष्ठस्तावदवगाह्य वर्तते । यदा तु लोकपूरण भवति तदा मदरस्याधश्चित्रवज्रपटलयोर्मध्ये जीवस्याष्टौ मध्यप्रदेशा व्यवतिष्ठते इतरे प्रदेशा ऊर्ध्वमधस्तिर्यक् च कृत्स्न लोकाकाशमश्नुते ।

**एकद्रव्यस्य प्रदेशकल्पनोपचारतः इति चेन्न मुख्यक्षेत्रविभागात् ॥ ४ ॥** स्यान्मतमेकद्रव्य- स्य प्रदेशकल्पना उपचारत' स्यात् । उपचारश्च मिथ्योक्तिर्न तत्त्वपरीक्षायामधिक्रियते प्रयोजनाभावात् । न हि मृगतृष्णिकया मृपार्थात्मिकया जलकृत्य क्रियते इति ? तन्न किं कारण ? मुख्यक्षेत्रविभागात् ? मुख्य एव क्षेत्रविभाग अन्यो हि घटावगाह्य आकाशप्रदेश इतरावगाह्यश्चान्य इति । यदि अन्यत्व न स्यात् व्याप्तित्व व्याहन्यते ॥

**निरवयवत्वानुपपत्तिरिति चेन्न द्रव्यविभागाभावात् ॥ ५ ॥** स्यादेतत् यदि मुख्य एव वि- भागोऽभ्युपगम्यते निरवयवत्व तर्हि नोपपद्यते इति ? तन्न किं कारणं ? द्रव्यनिभागाभावात् । यथा घटो द्रव्यतो विभागवान् सावयव नच तथैषा द्रव्यविभागोस्तीति निरवयवत्वं प्रयुज्यते ॥

**भेद्यत्वादात्मनामेकग्रहणं ॥ ६ ॥** भेद्या आत्मानो बहव इत्यर्थ तत एकग्रहण क्रियते नाना- जीनापेक्षया हि अनतप्रदेशत्व स्यात् ॥

**कथंचित्प्रदेशभेदोपपत्तेः सबधनिर्देशः ॥७॥** एकश्चासौ जीवश्च एकजीव धर्मश्चाऽधर्मश्चैकजी- वश्च धर्माधर्मैकजीवा तेषा धर्माधर्मैकजीवानां प्रदेशा इति सबधनिर्देश क्रियते। कुत ?कथचित्प्रदेशभेदोपपत्ते ।

**असख्येयप्रदेशा इत्यस्तु लघुत्वात् इति चेन्नोत्तरार्थत्वात् भेदकरणस्य ॥ ८ ॥** स्यान्मत- मसख्येयप्रदेशा धर्माधर्मैकजीवा इत्यस्तु सूत्र, कुत ? लघुत्वादिति ? तन्न किं कारण ? उत्तरार्थं । द्रव्य- प्रधाने हि निर्देशे सति प्रदेशानामुपसर्जनत्वात् उत्तरत्राभिसबधो न स्यात् । तत प्रतिसूत्र प्रदेशग्रहणे क्रियमाणे गौरव स्यात । कश्चिदाह—

**प्रदेशकल्पना निरवयवत्वादौपचारिकी सिंहवत् ॥ ९ ॥** धर्मादीनां या प्रदेशकल्पना सा औपचारिकी । कुत ? निरवयवत्वात । कथ ? सिंहवत् । यथा विशिष्टपचेंद्रियतिर्यङ्नामकर्मोदया- पादितविशेषे क्रौर्यशौर्यादिगुणप्रकर्षाधिष्ठाने खरनखोग्रदंष्ट्राभासुरकेसरकपिलनयनतारकाद्यवयवविशिष्टे केसरिणि सिंहशब्दोऽध्यवसित माणवके अतद्गुणे भक्त्याऽध्यारोप्यते । तथा पुद्गलेषु मुख्य प्रदेशशब्द. धर्मादिषु भक्त्योपचर्यते इति ।

**नवा प्रत्ययाभेदात् ॥ १० ॥** नवा औपचारिकी, कुत ? प्रत्ययाभेदात्। इह मुख्यप्रत्ययात् सिंह विशेषात् अध्यवसानरूपात् माणवके सिंह इति गौणप्रत्ययोऽध्यारोपरूपो भिन्न उपलभ्यते । नच तथा पुद्गलेषु धर्मादिषु च प्रदेशप्रत्ययो भिन्नोऽस्ति उभयत्रावगाहभेदतुल्यत्वात् इतश्च—

**उभयत्र सोपपदत्वात् ॥११॥** सिंहत्वात् सिंहशब्दो निरुपपदो मुख्य गमयति सोपपदो गौण, सिंहो माणवक इति, न तथा प्रदेशशब्दविशेषोऽस्ति पुद्गलेषु धर्मादिषु च, सोपपदत्वात् , घटस्य प्रदेशा धर्मादीनां प्रदेशा इति ततो नास्त्यत्र विशेष । इतश्च हेत्वपेक्षाभावात् सिंहे प्रसिद्ध क्रौर्यादिधर्म तदेकदेशसादृश्य माणवके गौणव्यवहारस्य हेतुरस्ति । न तथा पुद्गलेषु प्रसिद्ध हेतुमपेक्ष्य धर्मादिषु प्रदेशोपचार क्रियते, तेषामपि स्वाधीनप्रदेशत्वात् तस्मादुपचारकल्पना न युक्ता ।

**स्वतोवधारणाभावात् नांजसा इति चेन्नाऽत्यतपरोक्षत्वात् ॥ १२ ॥** स्यान्मत यदि घटादिवत् धर्मादीना, आजसा प्रदेशा भवेयुर्ननु घटादिवदेव स्वत प्रदिश्येरन् । घटादीना हि प्रदेशा भावादय आंजसा स्वत एव प्रदिश्यते न द्रव्यातरत, नत्वेव धर्मादीनां प्रदेशा स्वत प्रदिश्यते परमाण्ववगाहपरिच्छेद्यत्वात् अतो न मुख्या इति ? तन्न । किं कारण ? अत्यतपरोक्षत्वात् । युज्यते घटादीना प्रत्यक्षत्वात् स्वत एव प्रदेशावधारण। अत्यतपरोक्षास्तु धर्मादय तत एषा मुख्या अपि प्रदेशा न शक्या स्वात्मन्येवावधारयितु न गौणप्रदेशत्वात् ।

**अर्हदागमप्रामाण्यात् ॥ १३ ॥** युगपत् सकलपदार्थत्वावभासनज्ञानातिशयेनार्हता आविष्कृत आगम गणधरैरनुस्मृतवचनरचन श्रुताख्य, तच्छिष्यप्रशिष्यप्रज्ञागीधिपरपरासमुपनीतोस्ति । तस्य प्रामाण्याद्धर्मादीनां क्षेत्रप्रदेशा मुख्या इत्येतदभ्युपगतव्य । तद्यथा एकैकस्मिन्नात्मप्रदेशेऽनतानता ज्ञानावरणादिकर्मप्रदेशा अवतिष्ठते । एकैकस्मिन् कर्मप्रदेशे अनतानता औदारिकादिशरीरप्रदेशा । एकैकस्मिन् शरीरप्रदेशे अनतानता वैस्रसोपचयप्रदेशा स्निग्धगुडरेण्वाद्युपचयवदवातिष्ठते । तथा धर्मादिप्रदेशेष्वपि । किं च-

**स्थितास्थितवचनात् ॥ १४ ॥** भावातरपरिणामे सुखदु खानुभवने क्रोधादिपरिणामे वा जीवप्रदेशाना उद्भवनिधनपरिस्पदस्याप्रवृत्ति स्थिति । प्रवृत्तिरस्थितिरित्युच्यते । तत्र सर्वकाल जीवाष्टमध्यमप्रदेशा निरपवादा सर्वजीवाना स्थिता एव । केवलिनामपि अयोगिना सिद्धाना च सर्वे प्रदेशा स्थिता एव । व्यायामदु खपरितापोद्रेकपरिणताना जीवानां यथोक्ताष्टमध्यप्रदेशवर्जितानां इतरे प्रदेशा अवस्थिता एव । शेषाणा प्राणिनां स्थिताश्चाऽस्थिताश्चेति वचनान्मुख्या एव प्रदेशा । किं च—

**इद्रियपरिणामवचनात् ॥ १५ ॥** इह वीर्यांतरायमतिश्रुतज्ञानावरणक्षयोपशमांगोपागनामलाभोपष्टभात् उत्सेधागुलस्यासख्येयभागप्रमितानां विशुद्धाना आत्मप्रदेशाना चक्षुरादीद्रियपर्यायपरिणाम उक्त प्रतिविशिष्टप्रदेशत्वात् परस्परस्थानासक्रमेण साक्षाच्च दृश्यते तस्मा मुख्या एवाऽऽत्मप्रदेशा । किं च—

**द्रव्याणां प्रतिनियतप्रदेशावस्थानात् ॥ १६ ॥** इहान्येषु आकाशप्रदेशेषु पाटलिपुत्र स्थित अन्येषु च मथुरा अतो नानाऽऽकाशप्रदेशा । यद्येकांतेनाऽप्रदेशमाकाश तस्य यद्देशपाटलीपुत्र तद्देशभाविन्येव मथुरापि स्यात् । किं च—

**उभयदोषप्रसगात् ॥ १७ ॥** ससारस्य पिंडस्य कर्णशष्कुल्यतरे अदृष्टविशेषसंस्कृतमाकाश श्रोत्रमिति यदाख्यायते तत्कृत्स्न वाऽऽकाश स्यान्न वा ? यदि कृत्स्न ननूर्ध्वमधस्तिर्यगवस्थितस्पर्शवद्द्रव्याभिघातोत्पन्ना सर्वे शब्दा सदा सर्वै जीवैरुपलभ्या इत्यासक्त । अथैष दोषो मा प्रापत् इति प्रतिनियताकाशप्रदेशा श्रोत्रमितीष्यते । नन्वाकाशप्रदेशाना बहुत्वात् यत्प्रतिज्ञात न सत्याकाशप्रदेशा मुख्या इति तद्धीन । अथवा परमाणुराकाशेन कृत्स्नेन वा सयुज्यते न वा ? यदि कृत्स्नेन नन्वेवमणुमात्रमाकाशमाकाशमात्रोवाऽणु प्राप्नोति अथ एकप्रदेशेन सयुज्यते ननु निरपवादमेतत सिद्ध मुख्या एवाऽऽकाशप्रदेशा इति । किं च—

**कर्माभावप्रसगात् ॥ १८ ॥** इहोत्पन्नकर्मसु आश्रय आश्रयातराद्वियोज्य आश्रयातरेण सयोजयति इति एष कर्मण स्वभाव सत्येव प्रदेशवमाकाशस्य सिद्ध । इतरथा हि कर्माभावप्रसग प्रदेशावरसक्रमाभावात् । किं च—

**एकानेकप्रदेशत्व प्रत्यनेकांतात् पुरुषवत् ॥ १९ ॥** यथा सुसामान्यपौरुषेयशरीरद्रव्यार्थादेशात् स्यादेकत्व । तस्यैव शिर पृष्ठोरूदरपाणिपादागुलिपर्यायगोपागपर्यायार्थादेशात् स्यादनेकत्व । अथवा पुरुषद्रव्यार्थादेशात्स्यादेकत्व । स्वजात्यपरित्यागेन पावकलावकादिपर्यायार्थादेशात् स्यादनेकत्व । पितृभागिनेयभ्रातृव्यमातुलादिपर्यायार्थादेशात् वा स्यादनेकत्व । पचेंद्रियारोग्यमेधाविपटुदु कुशलशीलत्वादिपर्यायार्थादेशाद्वा स्यादनेकत्व । तथा धर्माधर्माकाशजीवानां आत्मीयद्रव्यार्थादेशात् स्यादेकप्रदेशत्व प्रतिनियतप्रदेशपर्यायार्थादेशात् स्यान्नानात्व इत्यनकात ।

**संसारिणश्च व्यवहारतः सावयवत्वात्** ॥२०॥ व्यवहारादृव्यवहारतः व्यवहारनयार्पणादित्यर्थः क पुनर्व्यवहारः, अनादिकर्मबंधनबद्धत्वं। अतस्तदादेशात् तदनुविधायित्वे सति सावयवत्वोपपत्तेः संसारिणो जीवस्य प्रदेशत्वं। शुद्धनयादेशात्तूपयोगस्वभावस्याऽऽत्मनोऽप्रदेशत्वं। अथाकाशस्य कति प्रदेशाः ? इत्यत आह–

## आकाशस्याऽनंताः ॥ ९ ॥

**अनंता इत्यन्यपदार्थनिर्देशः** ॥ १ ॥ अतोऽवसानमित्यर्थः अविद्यमानोऽन्तो येषां त इमेऽनंताः। अन्यपदार्थनिर्देशोऽयं। के पुनस्ते ? प्रदेशाः। कुतः ? प्रत्यासत्तेस्तदभिसंबंधोपपत्तेः।

**असंख्येयानंतयोरविशेष इतिचेन्नोक्तत्वात्** ॥ २ ॥ स्यान्मतं असंख्येयानंतयोर्नास्ति विशेषः। कुतः। द्रव्येयत्तापरिच्छेदाभावतुल्यत्वादिति तन्न। किं कारणं ? उक्तत्वात्। उक्तोनयोर्भेदः नृस्थिती परावरे इत्यत्र।

**अनंतत्वादपरिज्ञानमिति चेन्नातिशयज्ञानदृष्टत्वात्** ॥३॥ स्यादेतत् सर्वज्ञेनानंतं परिच्छिन्नं वा अपरिच्छिन्नं वा ? यदि परिच्छिन्नं उपलब्धावसानत्वात् अनंतत्वमस्य हीयते। अथापरिच्छिन्नं तत्स्वरूपानवबोधात् असर्वज्ञत्वं स्यादिति ? तन्न। किं कारणं ? अतिशयज्ञानदृष्टत्वात्। यत्तत्केवलिनां ज्ञानं क्षायिकं अतिशयवत् अनंतानंतपरिमाणं तेन तदनंतमवबुध्यते साक्षात्। तदुपदेशादितरैरनुमानेनेति न सर्वज्ञत्वहानिः। नच तेन परिच्छिन्नमित्यर्थः सांतं अनंतेनाऽनंतमिति ज्ञातत्वात्। किं च—

**सर्वेषामविप्रतिपत्तेः** ॥ ४ ॥ नात्र सर्वे प्रवादिनो विप्रतिपद्यते। केचित्तावदाहुः अनंता लोकधातव इति। अपरे मन्यते दिक्कालात्माकाशानां सर्वगतत्वात् अनंतत्वमिति। इतरे ब्रुवते प्रकृतिपुरुषयोरनंतत्वं सर्वगतत्वादिति नचैतेषामनंतत्वादपरिज्ञानं, नापि परिज्ञानत्वमात्रादेव तेषामनंतत्वं। तस्मात् नैतद्युक्तं अनंतत्वादपरिज्ञानमिति।

**सर्वज्ञाभावप्रसंगाच्च** ॥ ५ ॥ यस्यार्थानामानंत्यमपरिज्ञानकारणं तस्य सर्वज्ञाभावः प्रसजति। अनंतो हि ज्ञेयः तस्यानंत्यादेव नच कश्चित् परिच्छेत्तास्तीति, अथांतवत्त्वं स्यात् संसारो मोक्षश्च नोपपद्यते। कथमिति चेदुच्यते–जीवाश्चेत्सांताः सर्वेषां हि मोक्षप्राप्तौ संसारोच्छेदः प्राप्नोति। तद्भयान्मुक्तानां पुनरावृत्त्यभ्युपगमे स मोक्ष एव न स्यात् अनात्यंतिकत्वात् एकैकस्मिन्नपि जीवे कर्मादिभावेन व्यवस्थिताः पुद्गलाः अनंतास्तेषां अंतवत्त्वे सति कर्मनोकर्मविषयविकल्पाभावात् संसाराभावः तदभावान्मोक्षश्च न स्यात्। तथातीतानागतकालयोरंतवत्त्वे प्राक् पश्चाच्च कालव्यवहाराभावः स्यात्। नचासौ युक्तः ? असतः प्रादुर्भावाभावात् सतश्चात्यंतविनाशानुपपत्तेरिति। तथाकाशस्यांतवत्त्वाभ्युपगमे ततो बहिर्घनत्वप्रसंगः। नास्ति चेद्घनत्वमाकाशेनापि भवितव्यमित्यनंतवत्त्वाभावः। उक्तममूर्तानां प्रदेशपरिमाणमिदानीं मूर्तानां पुद्गलानां प्रदेशपरिमाणं निर्ज्ञातव्यमित्यत आह—

## संख्येयासंख्येयाश्च पुद्गलानां ॥ १० ॥

**चशब्दोऽनंतसमुच्चयार्थः** ॥ १ ॥ अनंताः पुद्गलास्तेषां समुच्चयार्थश्चशब्दः क्रियते। संख्येयासंख्येयाः अनंताश्चेति। के पुनस्ते ? प्रदेशाः इत्यनुवर्तते कस्यचित्पुद्गलद्रव्यस्य द्व्यणुकादेः संख्येयाः प्रदेशाः कस्य चिदसंख्येयाः अनंताश्च।

**अनंतानंतोपसंख्यानमिति चेन्नाऽनंतसामान्यात्** ॥ २ ॥ स्यादेतदनंतानंतप्रदेशाश्च पुद्गलाः संति तदुपसंग्रहार्थं उपसंख्यानं कर्तव्यमिति ? तन्न। किं कारणं ? अनंतसामान्यात्। अनंतप्रमाणं त्रिविधमुक्तं परीतानंतं युक्तानंतं अनंतानंतं चेति। तत्सर्वमनंतसामान्येंतर्भावात् अनंतग्रहणेन गृह्यत इति नोपसंख्यातव्यं।

**अधिकरणविरोधादानंत्याभाव इति चेन्न सूक्ष्मपरिणामावगाहनसामर्थ्यात्** ॥ ३ ॥ स्यान्मतं असंख्यातप्रदेशो लोकः, अनंतप्रदेशस्य च स्कंधस्याधिकरणमिति विरोधः ततो नानंत्यमिति ? तन्न। किं कारणं ? सूक्ष्मपरिणामावगाहनसामर्थ्यात्। परमाण्वादयो हि सूक्ष्मभावेन परिणताः एकैकस्मि

न्याकाशप्रदेशे अनतानता अवतिष्ठते । अवगाहनसामर्थ्यमप्येषामव्याहतमस्ति येन एकैकस्मिन्नपि प्रदेशेऽनताऽनतानां अवस्थान न विरुध्यते । किं च—

**अनेकांतात् ॥ ४ ॥** नायमेकात ? अल्पाऽधिकरणे महद्द्रव्य नावतिष्ठते इति । कुत ।

**प्रचयविशेषात् संघातविशेषः ॥५॥** सघातविशेष इत्यर्थ पुद्गलानां हि प्रचयविशेषात्। अल्पक्षेत्रे बहूनामवस्थान दृष्ट । कथ ? संहतविसर्पितचपकादिगधादिवत् । यथाल्पे कुड्मलावस्थे चंपक सूक्ष्मप्रचयपरिणामात् सहताश्चपकपुष्पगधावयवाः तव्यापिनो बहवोऽवतिष्ठमाना दृष्टा । तस्मिन्नेव विसर्पिते स्थूलप्रचयपरिणामाद्विनिर्गताश्चपकगधावयवा सर्वदिग्व्यापिनो दृष्टा । यथा विल्वे करीषपटले दारुपिंडे च प्रचयविशेषावगाढा सत पुद्गला अग्निना दह्यमाना प्रचयविशेषेण धूमभावेन दिङ्मडलव्यापिनो दृष्टा । तथाल्पेपि लोकाकाशेऽनतानतानां च जीवपुद्गलानामवस्थानमिति नास्ति विरोध । पुद्गलानामित्यविशेषवचनात् परिमाणोरपि प्रदेशवधप्रसगे तत्प्रतिषेधार्थमाह—

## नाणोः ॥ ११ ॥

अणो प्रदेशा न सतीति वाक्यशेष । कुतो न सतीति चेदुच्यते—

**प्रदेशमात्रत्वात् ॥ १ ॥** यथाकाशप्रदेशस्यैकप्रदेशभेदाभावात् अप्रदेशत्व । एवमणोरपि प्रदेशमात्रत्वात् प्रदेशभेदाभाव । किं च—

**ततोऽल्पपरिमाणाभावात् ॥ २ ॥** न हि अणोरल्पीयान् अस्ति यतोऽस्य प्रदेशा भिद्येरन्। अत स्वयमेवाद्यतपरिमाणत्वादप्रदेशोणु । किं च—

**अन्वर्थसंज्ञत्वात् ॥ ३ ॥** यथा प्रदीपनात् प्रदीप इत्यन्वर्थसज्ञा तथाऽणुरितीयमप्यन्वर्थसज्ञा अणुत्वात्सूक्ष्मत्वात् अणुरिति। यदि ह्यणोरपि प्रदेशा, स्युः ? अणुत्वमस्य न स्यात् प्रदेशप्रचयरूपत्वात् तत्प्रदेशानामेवाणुत्व प्रसज्येत ।

**अप्रदेशत्वादभावः खरविषाणवदिति चेन्नोक्तत्वात् ॥ ४ ॥** स्यादेतत् यथा खरविषाणमप्रदेशत्वान्नास्ति तथाणुरपि भवेत् इति ? तन्न। किं कारण ? उक्तत्वात् । उक्तमेतत् प्रदेशमात्रोणु , न खरविषाणवदप्रदेश इति ॥

**आदिमध्यांतव्यपदेशाभावादिति चेन्न विज्ञानवत् ॥ ५ ॥** स्यान्मत आदिमध्यातव्यपदेश परमाणो' स्याद्वा न वा ? यद्यस्ति प्रदेशवत्त्व प्राप्नोति । अथ नास्ति खरविषाणवदस्याभाव स्यादिति ? तन्न किं कारण ? विज्ञानवत् । यथा विज्ञानमादिमध्यातव्यपदेशाभावेप्यस्ति तथाणुरपि इति । उत्तरत्र च तस्यास्तित्व वक्ष्यते । एषामनवधृतप्रदेशानां धर्मादीनामाधारप्रतिपत्त्यर्थमाह—

## लोकाकाशेऽवगाहः ॥ १२ ॥

**अनतरत्वात्पुद्गलानामवगाहप्रसग इति चेन्न समुदायापेक्षत्वात् ॥ १ ॥** स्यादेतदनतरा पुद्गला ततस्तेषामेव लोकाकाशेऽवगाह' इत्ययमर्थ आसक्त इति ? तन्न किं कारणं ? समुदायापेक्षत्वात् । धर्मादीनि द्रव्याणि समुदितान्यत्रापेक्ष्यते तत्रानंतरमिदमव्यवहितामिति विवेको नास्ति तत सर्वद्रव्याणामाधारगति, सिद्धा भवति ॥

**आकाशस्यापि अन्याधारकल्पनेति चेन्न स्वप्रतिष्ठत्वात् ॥ २ ॥** स्यान्मत यथा धर्मादीनां लोकाकाशमाधार तथाऽऽकाशस्याप्यन्येनाधारेण भवितव्यमिति तन्न। किं कारण ? स्वप्रतिष्ठत्वात् । स्वस्मिन् प्रतिष्ठाऽस्येति स्वप्रतिष्ठमाकाश । स्वात्मैवास्याधेय आधारश्चेत्यर्थ । कुत ?

**ततोऽधिकप्रमाणद्रव्यांतराधाराभावात् ॥ ३ ॥** न हि आकाशादधिकप्रमाण द्रव्यांतरमस्ति यत्राकाशमाधेय स्यात् तत सर्वतो विरहितांतस्याधिकरणांतरस्याऽभावात् स्वप्रतिष्ठमवसेय ।

**तथाचानवस्थानिवृत्तिः ॥४॥** एवं च कृत्वाऽनवस्थादोषनिवृत्तिर्भवति । यतः स्वप्रतिष्ठमाकाशं न तस्यान्यदधिकरणं द्रव्यांतरमस्ति । अन्याधिकरणत्वे हि तस्याप्यन्यत् तस्याप्यन्यत् तस्याप्यन्यदित्यनवस्था प्रसज्यते। किं च—

**परमार्थतयात्मवृत्तित्वात् ॥ ५ ॥** एवंभूतनयादेशात् सर्वद्रव्याणि परमार्थतयाऽऽत्मप्रतिष्ठानी त्याधाराधेयाभावः ? कुतोऽनवस्था ।

**अन्योन्याधारताव्याघात इति चेन्न व्यवहारतस्तत्सिद्धेः ॥६॥** स्यान्मतं यदि सर्वाणि द्रव्याणि परमार्थतया स्वात्मप्रतिष्ठानि ननु यदुक्तं वायोराकाशमधिकरणं, उदकस्य वायुः पृथिव्या उदकं, सर्वजीवानां पृथिवी, अजीवा जीवाधाराः, जीवाश्चाऽजीवाधाराः, कर्मणामधिकरणं जीवाः, जीवानां कर्माणि, धर्माधर्मकाला आकाशाधिकरणा इत्येतस्याऽन्योन्याधारतया व्याघात इति ? तन्न किं कारणं व्यवहारतः तत्सिद्धेः । सर्वमिदमुक्तं अन्योन्याधारत्वं व्यवहारनयवक्तव्यवशाभादेशात्सिध्यति । व्यावहारिकमेतत् आकाशे वातादीनामवगाह इत्याधारांतरकल्पनायामनवस्थाप्रसंग इति । परमार्थतस्तु आकाशवत् वातादीन्यपि स्वात्माधिष्ठानानि तत्कथमिति चेदुच्यते ।

**क्रियाविष्टकर्तृकर्माधारवत् ॥ ७ ॥** क्रिया द्विविधा कर्तृसमवायिनी कर्मसमवायिनी चेति । तत्र कर्तृसमवायिनी आस्ते गच्छतीति । कर्मसमवायिनी ओदनं पचति कुशूलं भिनत्तीति । तदाविष्टस्य कर्तुः कर्मणश्चाधारः आसनादि स्थाल्यादिश्च । तत्र व्यवहारनयवशात् क्रियायाः द्रव्यमधिकरणं तदाविष्टस्य द्रव्यस्य द्रव्यांतरं । परमार्थस्तु एवंभूतनयवशात् क्रिया क्रियात्मन्येव । द्रव्यमपि स्वात्मन्येव । तथा लोकाकाशेऽवगाहो धर्मादीनामिति व्यवहारनयादेशादुक्तं । परमार्थतस्तु सर्वद्रव्याणि स्वात्माधिकरणानि ।

**आकाशधर्मादीनामाधाराधेयत्वात् कुंडबदरवत् प्रसंग इति चेन्नाऽयुतसिद्धेपि तद्दर्शनात् शरीरे हस्तवत् ॥ ८ ॥** स्यादेतत् यथा कुंडे बदराणि इत्याधारः कुंडं, आधेयानि बदराणीति पूर्वापरकालत्वं । युतसिद्धिश्च तेषां तथाधारत्वात् पूर्वमाकाशं पश्चाद्धर्मादीन्याधेयत्वादिति युतसिद्धिरतोऽनादित्वव्याघात इति ? तन्न । किं कारणं ? अयुतसिद्धेपि तद्दर्शनात् । कथं ? शरीरे हस्तवत् । यथा हस्तशरीरयोर्युगपत् उत्पत्तौ पूर्वापरत्वेऽसति अयुतसिद्धस्य हस्तस्य शरीरमाधारः । तथाकाशधर्मादीनामनादिपारिणामिकयौगपद्यसिद्धावसति पूर्वापरीभावे भवत्याधाराधेयत्वं । किं च—

**अनेकांतात् ॥ ९ ॥** नैतदैकांतिकं युतसिद्धस्यैवाधाराधेयत्वं नायुतसिद्धस्येति । स्तंभसारादिषु कुंडबदरादिषु च दर्शनात् । तस्मादनेकांतान्नायमुपालंभः । अथ लोकाकाश इत्युच्यते को लोको नाम ?

**यत्र पुण्यपापफललोकनं स लोकः ॥१०॥** पुण्यपापयोः कर्मणोः फलं सुखदुःखलक्षणं यत्रालोक्यते स लोकः कः पुनरसौ ? आत्मा ।

**लोकतीति वा लोकः ॥ ११ ॥** लोकति पश्यत्युपलभते अर्थानिति लोकः ।

**इतरद्रव्यालोकप्रसंग इति चेन्न रूढौ क्रियाया व्युत्पत्तिमात्रनिमित्तत्वात् ॥ १२ ॥** स्यादेतत् द्विधाप्युक्तेन क्रमेण जीवस्यैव लोकत्वं प्राप्तं इतरेषां द्रव्याणां अलोकत्वं ततश्च षड्द्रव्यसमूहो लोक इत्यार्षविरोध इति ? तन्न किं कारणं ? रूढौ क्रियाया व्युत्पत्तिमात्रनिमित्तत्वात् । यथा गच्छतीति गौरिति व्युत्पत्तौ स्थितादीनां न गोत्वनिवृत्तिः । तथा लोकनाल्लोक इति व्युत्पत्तावपि धर्मादीनामपि न लोकत्वं हीयते ॥

**लोक्यत इति वा लोकः ॥** सर्वज्ञेना... ...नेन लोक्यते यः स लोकः । तेन धर्मादीनामपि लोकत्वं सिद्धं ॥

**आत्मनो लोकत्वप्रसंग** ... यो लोकते आत्मा तस्य लोकत्व

प्राप्नोति लोक्यत्वाभावादिति तन्न किं स्वात्मलोकनात्। योसौ सर्वज्ञ बाह्य लोकमान स आत्मानमपि लोकते इति लोकत्वमस्य सिद्ध । इतरथा हि तस्य सर्वदर्शित्वाभाव आत्मानवलोकनात्। आत्मानमनवलोकमानस्य वाह्यलोकनासभवश्च घटादिवत्। यथा घटादिरात्मानमपश्यन्नपरान्न पश्यति ।

**अलोकस्यापि लोकत्वमसग इति चेन्नोक्तत्वात्** ॥ १५ ॥ स्यान्मत यदि लोक्यत इति लोक, अलोकस्यापि लोकत्व प्राप्नोति सर्वदर्शिना लोक्यत्वात् । अथालोक न लोकते सर्वदर्शित्वमस्य हीयते नचैतद्दृष्ट तस्माल्लोकप्रसग इति ? तन्न किं कारण उक्तत्वात् रूढिविशेषबललाभात् विशेषे वृत्तिरिति।

**उभयविशेषणभावाद्वा** ॥ १६ ॥ अथवा उभयविशेषणमिहोपादीयते । यत्रस्थेन सर्वज्ञेन लोक्यते य स लोक इति नचाऽलोकस्थेनाऽलोको लोक्यते ततो नालोकस्य लोकत्वप्रसग ॥

**तस्याऽऽकाश लोकाकाश जलाशयवत्** ॥ १७ ॥ यथा जलस्य आशयस्थान जलाशय इत्युच्यते । तथा लोकस्याकाश लोकाकाशमिति स्थानापेक्ष सबधोवसेय । धर्माधर्मपुद्गलकालजीवा यत्र लोक्यते स लोक इत्यधिकरणसाधनो घञ् । किं पुनरधिकरण ? आकाश। लोक एवाकाश लोकाकाशमिति समानाधिकरणलक्षणा वृत्ति तस्मिन्नवस्थान धर्मादीना द्रव्याणामत आकाश परप्रत्ययवशात् द्वेधा विभज्यते लोकाकाशमलोकाकाश चेति । लोकाकाश धर्माधर्मतुल्याऽसख्येयप्रदेश। बहि समतादनतमलोकाकाश। तत्राधध्रियमाणानामवस्थानभेदसभवात् विशेषप्रतिपत्त्यर्थमाह—

## धर्माधर्मयोः कृत्स्ने ॥ १३ ॥

**निरवशेषव्याप्तिप्रदेशनार्थ कृत्स्नवचन** ॥ १ ॥ यथाऽगारैकदेशे घटस्यावस्थान न तथा धर्माधर्मयो लोकाकाशेऽवगाह । किं तर्हि ? तिलेषु तैलवदिति निरवशेषव्याप्तिप्रदर्शनार्थ कृत्स्नवचन क्रियते । धर्माधर्मौ हि लोकाकाशमशेष नैरतर्येण व्याप्य स्थितौ । कथमेषा परस्परप्रदेशाविरोध ?

**अमूर्तित्वात्त्रयाणां परस्परप्रदेशाविरोधः** ॥२॥ मूर्तिमतोपि केचित जलभस्मसिकतादय एकत्र अविरोधेनाऽवतिष्ठते किमुताऽमूर्तानि धर्माधर्माकाशानि । तस्मादमूर्तित्वादेषा परस्पराविरोधो वेदितव्य ।

**अनादिसबधपरिणामाच्च** ॥ ३ ॥ भेदसघातपरिणामपूर्वकादिमत्सबधाना स्थनिष्ठानां स्कधानां केषां चित् प्रदेशविरोध स्यात् न तु धर्मादीना तद्वत् आदिमान् सबध । परिणामिकाऽनादिसबधश्चैषा, ततश्च अन्यान्यप्रदेशाविरोध सिद्ध । ततो विपरीताना मूर्तिमतां अप्रदेशसख्येयाऽनतप्रदेशाना पुद्गलानामवगाहनविशेषप्रतिपत्त्यर्थमाह—

## एकप्रदेशादिषु भाज्यः पुद्गलानां ॥ १४ ॥

**एकप्रदेशादिष्वित्यवयवेन विग्रह समुदायो वृत्त्यर्थः** ॥१॥ एकश्चासौ प्रदेशश्चैकप्रदेश एकप्रदेश आदिर्येषां त इमे एकप्रदेशादय । के पुनस्ते ? प्रदेशा । कुत ? एततुल्यजातीयत्वात् उपलक्ष्योपलक्षणयो सोमशर्मादिवत्। प्रदेशग्रहणानुवृत्तेर्वा तेष्वेकप्रदेशादिषु इति विग्रह समुदायो वृत्त्यर्थ सर्वादिवत्। तैनेकप्रदेश उपलक्षणभूतोप्यतर्भवति । भाज्यो विकल्पो भजनीयो भाज्य पृथक् कर्तव्य विकल्पे भाज्य, इत्यनर्थातर । क पुनरसौ ? अवगाह इत्यनुवर्तते । तद्यथा—एकस्य परमाणोरेकत्रैव आकाशप्रदेशेऽवगाह द्वयोरेकत्रोभयत्र च बद्धयोरबद्धयोश्च, त्रयाणामेकत्र द्वयोस्त्रिषु च बद्धानामबद्धानां च । एव सख्येयासख्येयाऽनतप्रदेशानां स्कधानामेकसख्येयासख्येयप्रदेशेषु लोकाकाशे अवस्थान प्रत्येतव्य ।

**एकप्रदेशेनैकस्यावस्थानमयुक्तमिति चेन्नोक्तत्वात्** ॥ २ ॥ स्यान्मत भवतु तावद्धर्मादीनां एकप्रदेशेऽवस्थान अमूर्तिस्वभावत्वात्। मूर्तिमतां पुद्गलानां एकप्रदेशेऽवस्थानमयुक्त भवति । युक्त चेत् प्रदेशस्य विभागवत्त्व प्रसक्त अवगाहिना चैकत्वमिति ? तन्न। किं कारण ? उक्तत्वात्। उक्तमेतत् प्रचयविशेषादिति चैकत्रावस्थानमिति । किं च—

**तथाचानवस्थानिवृत्तिः ॥४॥** एवं च कृत्वाऽनवस्थादोषनिवृत्तिर्भवति । यतः स्वप्रतिष्ठमाकाशं न तस्यान्यदधिकरणं द्रव्यांतरमस्ति । अन्याधिकरणत्वे हि तस्याप्यन्यत् तस्याप्यन्यत् तस्याप्यन्यदित्यनवस्था प्रसज्यते। किं च—

**परमार्थतयात्मवृत्तित्वात् ॥ ५ ॥** एवंभूतनयादेशात् सर्वद्रव्याणि परमार्थतयाऽऽत्मप्रतिष्ठानी स्याधाराधेयाभावः ? कुतोऽनवस्था ।

**अन्योन्याधारताव्याघात इति चेन्न व्यवहारतस्तत्सिद्धेः ॥६॥** स्यान्मतं यदि सर्वाणि द्रव्याणि परमार्थतया स्वात्मप्रतिष्ठानि ननु यदुक्तं वायोराकाशमधिकरणं, उदकस्य वायुः पृथिव्या उदकं, सर्वजीवानां पृथिवी, अजीवा जीवाधाराः, जीवाश्चाऽजीवाधाराः, कर्मणामधिकरणं जीवाः, जीवानां कर्माणि, धर्माधर्मकाला आकाशाधिकरणा इत्येतस्याऽन्योन्याधारतया व्याघात इति ? तन्न किं कारणं व्यवहारतः तत्सिद्धेः । सर्वमिदमुक्तं अन्योन्याधारत्वं व्यवहारनयवक्तव्यत्वलाभादेशात्सिध्यति । व्यावहारिकमेतत् आकाशे वातादीनामवगाह इत्याधारांतरकल्पनायामनवस्थाप्रसंग इति । परमार्थतस्तु आकाशवत् वातादीन्यपि स्वात्माधिष्ठानानि तत्कथमिति चेदुच्यते ।

**क्रियाविष्टकर्तृकर्माधारवत् ॥ ७ ॥** क्रिया द्विविधा कर्तृसमवायिनी कर्मसमवायिनी चेति । तत्र कर्तृसमवायिनी आस्ते गच्छतीति । कर्मसमवायिनी ओदनं पचति कुशूलं भिनत्तीति । तदाविष्टस्य कर्तुः कर्मणश्चाधार आसनादि स्थाल्यादिश्च । तत्र व्यवहारनयवशात् क्रियायाः द्रव्यमधिकरणं तदाविष्टस्य द्रव्यस्य द्रव्यांतरं । परमार्थस्तु एवंभूतनयवशात् क्रिया क्रियात्मन्येव। द्रव्यमपि स्वात्मन्येव। तथा लोकाकाशेऽवगाहो धर्मादीनामिति व्यवहारनयादेशादुक्तं । परमार्थतस्तु सर्वद्रव्याणि स्वात्माधिकरणानि ।

**आकाशधर्मादीनामाधाराधेयत्वात् कुंडवदरवत् प्रसंग इति चेन्नाऽयुतसिद्धेपि तद्दर्शनात् शरीरे हस्तवत् ॥ ८ ॥** स्यादेतत् यथा कुंडे बदराणि इत्याधारः कुंडं, आधेयानि बदराणीति पूर्वापरकालत्वं । युतसिद्धिश्च तेषां तथाधारत्वात् पूर्वमाकाशं पश्चाद्धर्मादीन्याधेयत्वादिति युतसिद्धिरतोनादित्वव्याघात इति ? तन्न । किं कारणं ? अयुतसिद्धेपि तद्दर्शनात् । कथं ? शरीरे हस्तवत् । यथा हस्तशरीरयोर्युगपत् उत्पत्तौ पूर्वापरत्वेऽसति अयुतसिद्धस्य हस्तस्य शरीरमाधारः । तथाकाशधर्मादीनामनादिपारिणामिकयौगपद्यसिद्धावसति पूर्वापरीभावे भवत्याधाराधेयत्वं । किं च—

**अनेकांतात् ॥ ९ ॥** नैतदैकांतिकं युतसिद्धस्यैवाधाराधेयत्वं नायुतसिद्धस्येति । स्तंभसारादिषु कुंडबदरादिषु च दर्शनात् । तस्मादनेकांतान्नायमुपालंभः । अथ लोकाकाश इत्युच्यते को लोको नाम ?

**यत्र पुण्यपापफललोकनं स लोकः ॥१०॥** पुण्यपापयोः कर्मणोः फलं सुखदुःखलक्षणं यत्रालोक्यते स लोकः कः पुनरसौ ? आत्मा ।

**लोकतीति वा लोकः ॥ ११ ॥** लोकति पश्यत्युपलभते अर्थानिति लोकः ।

**इतरद्रव्यालोकप्रसंग इति चेन्न रूढौ क्रियाया व्युत्पत्तिमात्रनिमित्तत्वात् ॥ १२ ॥** स्यादेतत् द्विधाप्युक्तेन क्रमेण जीवस्यैव लोकत्वं प्राप्तं इतरेषां द्रव्याणां अलोकत्वं ततश्च षड्द्रव्यसमूहो लोक इत्यार्षविरोध इति ? तन्न किं कारणं ? रूढौ क्रियायाः व्युत्पत्तिमात्रनिमित्तत्वात् । यथा गच्छतीति गौरिति व्युत्पत्तौ स्थित्यादीनां न गोत्वनिवृत्तिः । तथा लोकनाल्लोक इति व्युत्पत्तावपि धर्मादीनामपि न लोकत्वं हीयते ॥

**लोक्यत इति वा लोकः ॥ १३ ॥** सर्वज्ञेनाऽनंताऽप्रतिहतकेवलदर्शनेन लोक्यते यः स लोकः । तेन धर्मादीनामपि लोकत्वं सिद्धं ॥

**आत्मनो लोकत्वप्रसंग इति चेन्न स्वात्मलोकनात् ॥ १४ ॥** यो लोकते आत्मा तस्य लोकत्वं

प्राप्नोति लोक्यत्वाभावादिति तन्न किं स्वात्मलोकनात् । योसौ सर्वज्ञ बाह्यं लोकमान स आत्मानमपि लोकते इति लोकत्वमस्य सिद्ध । इतरथा हि तस्य सर्वदर्शित्वाभाव आत्मानवलोकनात् । आत्मानमनवलोकमानस्य बाह्यलोकनाभावश्च घटादिवत् । यथा घटादिरात्मानमपश्यन्नपरान्न पश्यति ।

**अलोकस्यापि लोकत्वप्रसग इति चेन्नोक्तत्वात् ॥ १५ ॥** स्यान्मत यदि लोक्यत इति लोक, अलोकस्यापि लोकत्व प्राप्नोति सर्वदर्शिना लोक्यत्वात् । अथालोक न लोकते सर्वदर्शित्वमस्य हीयते नचैतदृष्ट तस्माल्लोकप्रसग इति ? तन्न किं कारण उक्तत्वात् रूढिविशेषबललाभात् विशेषे वृत्तिरिति।

**उभयविशेषणभावाद्वा ॥ १६ ॥** अथवा उभयविशेषणमिहोपादीयते । यत्रस्थेन सर्वज्ञेन लोक्यते य स लोक इति नचाऽलोकस्थेनाऽलोको लोक्यते ततो नालोकस्य लोकत्वप्रसग ॥

**तस्याऽऽकाश लोकाकाश जलाशयवत् ॥ १७ ॥** यथा जलस्य आशयस्थान जलाशय इत्युच्यते । तथा लोकस्याकाश लोकाकाशमिति स्थानापेक्ष सबधोवसेय । धर्माधर्मपुद्गलकालजीवा यत्र लोक्यते स लोक इत्यधिकरणसाधनो घञ् । किं पुनरधिकरण ? आकाश । लोक एवाकाश लोकाकाशमिति समानाधिकरणलक्षणा वृत्ति तस्मिन्नवस्थान धर्मादीना द्रव्याणामत आकाश परप्रत्ययवशात् द्वेधा विभज्यते लोकाकाशमलोकाकाश चेति । लोकाकाश धर्माधर्मतुल्याऽसख्येयप्रदेश । बहि समतादनतमलोकाकाश । तत्राधिध्रियमाणानामवस्थानभेदसभवात् विशेषप्रतिपत्त्यर्थमाह—

## धर्माधर्मयोः कृत्स्ने ॥ १३ ॥

**निरवशेषव्याप्तिप्रदेशनार्थं कृत्स्नवचन ॥ १ ॥** यथाऽगारैकदेशे घटस्यावस्थान न तथा धर्माधर्मयो लोकाकाशेऽवगाह । किं तर्हि ? तिलेषु तैलवदिति निरवशेषव्याप्तिप्रदर्शनार्थं कृत्स्नवचन क्रियते । धर्माधर्मौ हि लोकाकाशमशेष नैरतर्येण व्याप्य स्थितौ । कथमेषा परस्परप्रदेशाविरोध ?

**अमूर्तित्वात्त्रयाणां परस्परप्रदेशाविरोध ॥२॥** मूर्तिमतोपि केचित् जलभस्मसिकतादय एकत्र अविरोधेनाऽवतिष्ठते किमुताऽमूर्तानि धर्माधर्माकाशानि । तस्मादमूर्तित्वादेषां परस्पराविरोधो वेदितव्य ।

**अनादिसबधपरिणामाच्च ॥ ३ ॥** भेदसघातपरिणामपूर्वकादिमत्सबधाना स्थविष्ठानां स्कधानां केषां चित् प्रदेशविरोध स्यात् न तु धर्मादीना तद्वत् आदिमान् सबध । परिणामिकोऽनादिसबधात्तेषा, ततश्च अन्यान्यप्रदेशाविरोध सिद्ध । ततो विपरीताना मूर्तिमतां अप्रदेशसख्येयाऽनतप्रदेशाना पुद्गलानामवगाहनविशेषप्रतिपत्त्यर्थमाह—

## एकप्रदेशादिषु भाज्यः पुद्गलानां ॥ १४ ॥

**एकप्रदेशादिष्वित्यवयवेन विग्रह समुदायो वृत्त्यर्थ ॥१॥** एकश्चासौ प्रदेशश्चैकप्रदेश एकप्रदेश आदिर्येषा त इमे एकप्रदेशादय । के पुनस्ते ? प्रदेशा । कुत ? एतत्तुल्यजातीयत्वात् उपलक्ष्योपलक्षणयो सोमशर्मादिवत् । प्रदेशग्रहणानुवृत्तेर्वा तेष्वेकप्रदेशादिषु इति विग्रह समुदायो वृत्त्यर्थ सर्वादिवत् । तेनैकप्रदेश उपलक्षणभूतोप्यतर्भवति । भाज्यो विकल्पो भजनीयो भाज्य पृथक् कर्तव्य विकल्पे भाज्य, इत्यनर्थांतर । क पुनरसौ ? अवगाह इत्यनुवर्तते । तद्यथा—एकस्य परमाणोरेकत्रैव आकाशप्रदेशेऽवगाह द्वयोरेकत्रोभयत्र च बद्धयोरबद्धयोश्च, त्रयाणामेकत्र द्वयोस्त्रिषु च बद्धानामबद्धाना च । एव सख्येयासख्येयाऽनतप्रदेशानां स्कधानामेकसख्येयासख्येयप्रदेशेषु लोकाकाशे अवस्थान प्रत्येतव्य ।

**एकप्रदेशेनैकस्यावस्थानमयुक्तमिति चेन्नोक्तत्वात् ॥ २ ॥** स्यान्मत भवतु तावद्धर्मादीनां एकप्रदेशेऽवस्थान अमूर्तिस्वभावत्वात् । मूर्तिमतां पुद्गलानां एकप्रदेशेऽवस्थानमयुक्त भवति । युक्त चेत् प्रदेशस्य विभागवत्त्व प्रसक्त अवगाहिना चैकत्वमिति ? तन्न । किं कारण ? उक्तत्वात् । उक्तमेतत् प्रचयविशेषादिति चैकत्रावस्थानमिति । किं च—

एकापवरकेऽनेकप्रकाशावस्थानदर्शनादविरोधः ॥ ३ ॥ यथैकस्मिन्नपवरके बहवः प्रकाशा वर्तंते न च क्षेत्रविभागः । नापि एकक्षेत्रावगाहित्वात् तेषां प्रकाशानामेकत्वं तथैकस्मिन् प्रदेशे अनंता अपि सबद्धाः सूक्ष्मपरिणामात् असंकरेण व्यवतिष्ठंत इति नास्ति विरोधः । किंच—

द्रव्यस्वभावस्याऽचोदनार्हत्वात् ॥ ४ ॥ द्रव्याणां हि स्वभावाः प्रतिनियताः संति न ते चोदनार्हाः । एवं भवतु मैवं भूदिति । यथाऽग्न्यादीनां दहनादयः तृणादीनां च दाह्यत्वादयस्तथा मूर्तिमत्त्वेपि अवगाहनस्वभावत्वादेकस्मिन्नपि प्रदेशे बहूनां स्कंधानामवरोधो न विरोधाय कल्प्यते । किं च—

आर्षोक्तत्वात् सूक्ष्मनिगोतावस्थानवत् ॥ ५ ॥ सर्वज्ञज्ञानप्रोदितार्थसारं गणधरानुस्मृतवचनरचनं शिष्यप्रतिशिष्यप्रबंधानुपरमादव्युच्छिन्नसंतानं आर्षमवितथमस्ति—

ओगाढगाढणिचिदो पोग्गलकाएहि सव्वदो लोगो सुहुमे हि वादरेहिं अणंताणंतेहि विविहे हि ॥ १ ॥

इत्येवमादि । अतस्तत्प्रामाण्यादपि उक्तोवगाहोऽवसेयः । यथैकनिगोतजीवशरीरेऽनंता निगोतजीवा तिष्ठंति । साधारणाऽऽहारप्राणापानजीवितमरणत्वात् साधारणा इत्यन्वर्थसंज्ञा इत्येतदागमप्रामाण्यादवसीयते तथैव भेदमपीति । अथ जीवानामवगाहः कथमित्यत इदमुच्यते—

## असंख्येयभागादिषु जीवानां ॥ १५ ॥

असंख्येयभागादिष्विति चोक्तं । किमुक्तं !

अवयवेन विग्रहः समुदायो वृत्त्यर्थ इति ॥ १ ॥ असंख्येयानां भागानामेको भागोसंख्येयभागः असंख्येयभाग आदिर्येषां ते असंख्येयभागादयः । असंख्येयभागादिषु संख्येयभागादिषु किं भाज्य ? अवगाह इत्यनुवर्तते । अत्राह कस्याऽसंख्येयभागादिष्विति ?

लोकाकाशप्रकरणात्तदभिसंबंध ॥ २ ॥ लोकाकाश इत्यनुवर्तते अतस्तदभिसंबंधोत्र वेदितव्यः । ननु च असावधिकरणनिर्देशः संबंधनिर्देशे नचेहार्थः ।

अर्थवशाद्विभक्तिपरिणामः ॥ ३ ॥ यथोच्चानि देवदत्तस्य गृहाणि आमंत्रयस्वैनं देवदत्तमिति । गम्यते । एवमसंख्येयभागादिषु इत्यनेनाभिसंबंधात् लोकाकाश इत्येष निर्देशः । लोकाकाशस्येत्यर्थवशात् विभक्ति परिणम्यते । तद्यथा—लोकस्य प्रदेशाः असंख्येया भागाः कृताः तत्रैकस्मिन्नसंख्येयभागे एको जीवोऽवतिष्ठते । तथा द्वित्रिचतुरादिष्वपि असंख्येयभागेषु आ सर्वलोकादवगाहः प्रत्येतव्यः । नानाजीवानां तु सर्वलोक एव ।

असंख्येयत्वाविशेषादवगाहाविशेष इति चेन्नाऽसंख्येयस्याऽसंख्येयविकल्पत्वात् ॥ ४ ॥ स्यान्मतं एकस्मिन्नप्यसंख्येयभागे प्रदेशा असंख्येया द्वित्रिचतुरादिष्वपि असंख्येया एव ततो नास्ति जीवानामवगाहविशेष इति ? तन्न । किं कारणं ? असंख्येयस्यासंख्येयविकल्पत्वात् । अजघन्योत्कृष्टासंख्येयस्य हि असंख्येया विकल्पाः । अतोऽवगाहविकल्पो जीवानां सिद्धः ।

प्रमाणविरोधादवगाहायुक्तिरिति चेन्न जीवद्वैविध्यात् ॥ ५ ॥ स्यादेतत् यदैकस्मिन् लोकस्यासंख्येयभागे एको जीवोऽवतिष्ठते द्रव्यप्रमाणेनाऽनंतानंतो जीवराशिः लोकाकाशे प्रमाणविरोधात् न स्थातुमर्हतीति इति ? तन्न । किं कारणं ? जीवद्वैविध्यात् । जीवा बादराः सूक्ष्माश्च इति तत्र बादराः सप्रतिघातशरीराः सूक्ष्मा जीवाः सूक्ष्मपरिणामादेव सशरीरत्वेपि परस्परेण बादरैश्च न प्रतिहन्यंत इत्यप्रतिघातशरीराः । ततो यत्रैकसूक्ष्मनिगोतजीवस्तिष्ठति तत्रानंतानंताः साधारणशरीराः वसंति । बादराणां च मनुष्यादीनां शरीरेषु संस्वेदजसंमूर्छनजादीनां जीवानां प्रतिशरीरं बहूनामवस्थानमिति नास्त्यवगाहाविरोधः । यदि बादरा एव जीवा अभविष्यन्नपि तर्हि अवगाहाविरोधोऽजनिष्यत् ।

कथं सशरीरस्यात्मनोऽप्रतिघातत्वमिति च दृष्टत्वात् ॥ ६ ॥ दृश्यते हि वालाग्रकोटिमात्रछिद्ररहिते घनवहलायसभित्तितले वज्रमयकपाटे बहिः समंतात् वज्रलेपलिप्ते अपवरके देवदत्तस्य मृतस्य मूर्ति-

मग्ज्ञानावरणादिकर्मतैजसकार्माणशरीरसन्नधितेपि गृहमभित्त्वैव निर्गमन । तथा सूक्ष्मनिगोतानां अप्यप्रतिघातित्वं वेदितव्य । अत्राह—लोकाकाशतुल्यप्रदेश एको जीव इत्युक्त तस्य कथ लोकस्यासख्येयभागादिषु वृत्ति ? ननु सर्वलोकव्याप्त्यैव भवितव्यमित्यत्रोच्यते—

## प्रदेशसंहारविसर्पाभ्यां प्रदीपवत् ॥ १६ ॥

**कार्मणशरीरवशात् उपात्तसूक्ष्मबादरशरीरानुवर्तन प्रदेशसहारविसर्पः ॥ १ ॥** अमूर्तस्वभावस्याप्यात्मन अनादिसबध प्रत्येकत्वात् कथंचि मूर्तता बिभ्रत , लोकाकाशतुल्यप्रदेशस्यापि कार्माणशरीरवशात् उपात्तसूक्ष्मशरीरमधितिष्ठत , शुष्कचर्मवत् सकोचन प्रदेशसहार । बादरशरीरमधितिष्ठतो जले तैलवत् विसर्पण विसर्प ।

**ताभ्यामसंख्येयभागादिषु वृत्तिः प्रदीपवत् ॥ २ ॥** यथा निरावरणव्योमप्रदेशावधृतप्रकाशपरिमाण प्रदीप शरावमाणिकापवरकाद्यावरणवशात् तत्परिमाणप्रकाश उपलभ्यते । तथा ताभ्यां प्रदेशसहारविसर्पाभ्यां असख्येयभागादिषु परिच्छिन्ना वृत्तिरात्मनोऽवगतव्या ।

**तद्वदनित्यत्वमसंग इतिचेन्नेष्टत्वात् ॥ ३ ॥** स्यादेतत् परिसंहारविसर्पणस्वभाव आत्मा प्रदीपादिवदेवास्यानित्यत्व प्रसजतीति ? तन्न । किं कारण ? इष्टत्वात् । इष्टमेव तदात्मन कार्माणशरीरापादितप्रदेशसहारविसर्पपर्यायादेशादनित्यत्व । अथवा इष्टत्वादिष्टमेवैतत्, प्रदीपादे सकोचविकाशस्वभावत्वेपि रूपिद्रव्यसामान्यादेशान्नित्यत्व तथात्मनोपीति न बाधाकरो दृष्टात ।

**सावयवत्वाद्विशरणप्रसग इति चेन्न अमूर्तस्वभावापरित्यागात् ॥ ४ ॥** स्यान्मत प्रदीपादिवत् यदि प्रदेशसहारविसर्पवानात्मा अत ससारिण घटादिवत् छेदभेदादिभि प्रदेशविशरणप्रसग ततश्च शून्यता प्राप्नोति इति ? तन्न । किं कारण ? अमूर्तस्वभावापरित्यागात् । बध प्रत्येकत्वे सत्यपि लक्षणभेदादन्यत्वमापद्यमान नामूर्तस्वभाव जहातीति घटादिवत् न प्रदेशविशरणमस्ति किंच—

**अनेकांतात् ॥ ५ ॥** यो ह्येकातेन संहारविसर्पवानेवात्मा सावयवश्चेति ब्रूयात् तं प्रत्ययमुपालभो घटामुपेयात् । यस्य त्वनादिपारिणामिकचैतन्यजीवद्रव्योपयोगादिद्रव्यार्थादेशात् स्यान्न प्रदेशसहारविसर्पवान् । द्रव्यार्थादेशाच्च स्यान्निरवयव । प्रतिनियतसूक्ष्मबादरशरीरापेक्षनिर्माणनामोदयपर्यायार्थादेशात् स्यात् प्रदेशसहारविसर्पवान् । अनादिकर्मबधपर्यायार्थादेशाच्च स्यात् सावयव त प्रत्यनुपालभ । किं च—

**तत्प्रदेशानामकारणपूर्वकत्वादणुवत् ॥ ६ ॥** यस्यावयवा कारणपूर्वका भवति तस्यावयवविशरण भवति । अवयूयते निश्लिष्यते इत्यवयवा । यथा पटादेरनेकतत्वादिसघातकारणत्वात् तत्वादिविश्लेषे विशरण भवति न तथात्मन अन्यद्रव्यसघातपूर्वका प्रदेशा । कुत ? तत्प्रदेशाना अकारणपूर्वकत्वात् । यथाणो प्रदेश नान्यद्द्रव्यसघातपूर्वक ततो नासावयवविश्लेषपूर्वकमनित्यत्वमास्कदति किंतु सघातेनाऽनित्य । तथात्मप्रदेशानामपि नान्यद्रव्यपूर्वकत्वमत प्रदेशवत्त्वात् आत्मा सावयवोपि नावयवविश्लेषादनित्य । किं तु गत्यादिपर्यायादेशादनित्य ।

**तत एव प्रतिप्रदेश गुणविशेषाभावो घटवत् ॥७॥** कुत एव ? प्रदेशानामकारणपूर्वकत्वादेव । यथा घटस्य प्रदेशा अन्यद्रव्यसघातपूर्वका इति तेषु प्रतिप्रदेश रूपादिगुणविशेषो दृष्ट , न तथात्मप्रदेशा अन्यद्रव्यसघातपूर्वका इति न तेषु प्रतिप्रदेश सुखादिगुणविशेषो भवति । यदि हि अन्यद्रव्यसघातपूर्वका स्यु आत्मन प्रदेशा तेषु घटवत् सुखादिविशेषवृत्ति स्यात् ततश्चात्मनो बहुत्व प्रसज्येत । तथाणौ निरवयव एकजातीयो गुण शुक्लादिरेककाले भवति एक एव न भिन्नजातीयस्तथात्मनि निरवयवे एकजातीयगुण सुखादिरेककाले भवति एक एव । अत्र कश्चिदाह—वर्षातपाभ्या किं व्योम्नश्चर्मण्यस्ति तयो फल, चर्मोप-

---

१ तथाणा पाठाय ख पुस्तके । २ चमणश्च ख पुस्तके पाठ ।

मश्वेत् सोऽनित्यः खल्वस्यथेदसत्फलमित्यत्रोच्यते—पिष्टपेषणमेतदमूर्तत्व प्रति नित्यानित्यत्व च प्रत्यनैकातिकत्वात् उपलभाभाव इति ।

**पुद्गलवदेकप्रदेशादिषु वृत्तिप्रसंग इति चेन्न शरीरप्रमाणानुविधानात् ॥ ८ ॥** स्यान्मत प्रदेशसहारविसर्पणाभ्यामेव पुद्गलवदेकप्रदशादिषु जीवस्य वृत्ति प्राप्नोतीति ? तन्न। किं कारण ? शरीरप्रमाणानुविधानात्। कार्मणशरीरवशादुपात्त महदल्प वा शरीरमधितिष्ठति संसारी जीव इत्युक्त, नचैकप्रदेशादिक शरीरमस्ति जघन्येनाऽगुलस्याऽसख्येयभागप्रमाणत्वात् । अतो नास्यैकप्रदेशादिषु वृत्तिरस्ति ।

**मुक्तानामेतत्प्रसंग इति चेन्न देशोनान्त्यविग्रहप्रमाणावस्थानात् ॥ ९ ॥** स्यादेतत् यदि शरीरप्रमाणानुविधानात् आत्मनो नैकप्रदेशादिषु वृत्ति मुक्तानां तर्हि तदभावात्तत्प्रसग इति ? तन्न। किं कारण? देशोनान्त्यविग्रहप्रमाणावस्थानात् । येन शरीरेण मुक्तिमवाप्नवान् जीवस्तत्प्रमाणमेव देशोनमवलम्ब्यावतिष्ठति, न ततो वृद्धिर्नापि हानि' पुन प्रदेशसहारविसर्पकारणाभावात् । अत्राह—

**न धर्मादीनां नानात्व कुत देशसंस्थानकालदर्शनस्पर्शनावगाहनाद्यभेदात् ॥ १० ॥** देशस्तावदेषामभिन्न, यस्मिन् देशे धर्मोऽवस्थित तस्मिन्नेनेतरेपामवस्थानात् । सस्थानमप्यभिन्न यदेव धर्मस्य सस्थानमाकार तदेवेतरेपां । कालश्चाभिन्नास्त्रिषु कालेषु धर्मादीनां तुल्यवृत्तित्वात् । दर्शनमप्यविशिष्ट येषु यत्रैको धर्म प्रत्यक्षज्ञानिभिर्दृष्ट तत्रैवेतरेपामपि दर्शनमप्यविशिष्ट । धर्मादीनि द्रव्याणि सर्वात्मनाऽन्योन्य स्पृशतीत्यवगाहन चाऽभिन्नमेपां सर्वगतत्वात् तथा अरूपत्वद्रव्यत्वज्ञेयत्वादिभिरप्यविशेषोऽवसेय । अत्रोच्यते—

**नातस्तत्सिद्धेः ॥ ११ ॥** यत एव धर्मादिना देशादिभि अविशेपस्त्वया चोद्यते अत एव नानात्वसिद्धि, यतो नासति नानात्वेऽविशेपसिद्धि । नह्येकस्याविशेषोऽस्ति । किं च यथा रूपरसादीनां तुल्यदेशाधिष्ठानत्वे नैकत्व तथा धर्मादीनामपि नानात्वमिति । आह रूपादीनां तुल्यदेशत्वेपि चाक्षुपत्वादि विशिष्टलक्षणोपेतत्वात् नानात्व युक्त न तथा धर्मादीना विशेषकर किंचिल्लक्षणमुक्त । स्यादेतत् यदि न लक्षभेद आस्ति तु भिन्नलक्षण । किं पुनस्तत् ? इत्यत उत्तर पठति ।

## गतिस्थित्युपग्रहो धर्माधर्मयोरुपकारः ॥ १२ ॥

अथवा अणुस्कधभेदात् पुद्गलानां, असख्येयप्रदेशत्वाच्च आत्मना अवगाहिनां एक प्रदेशादिषु पुद्गलाना असख्येयभागादिषु च जीवाना अवस्थान युक्तमुक्त । तुल्ये पुन असख्येयप्रदेशत्वे कृत्स्नलोकव्यापित्वमेव धर्माधर्मयो न पुनरसख्येयभागादिवृत्तिरिति, एव तत्कथमनुपादिष्टहेतुकमवसातु शक्यमित्यत्र ब्रूम —अवसेयमसशय । यथा मत्स्यगमनस्य जलमुपग्रहकारणमिति नासति जले मत्स्यगमन भवति । तथा जीवपुद्गलाना प्रयोगविस्रसा परिणामनिमित्ताहितप्रकारां गतिस्थितिलक्षणा क्रिया स्वत एवाऽऽरभमाणानां सर्वत्र भावात् तदुपग्रहकारणाभ्यामपि धर्माधर्माभ्यां सर्वगताभ्यां भवितव्य नासतोस्तयोर्गतिस्थितिवृत्तिरिति व्यापित्वदर्शनार्थं इदमुच्यते—

**द्रव्यस्य देशांतरप्राप्तिहेतु परिणामो गति ॥ १ ॥** द्रव्यस्य बाह्याभ्यतरहेतुसन्निधाने सति परिणममानस्य देशातरप्राप्तिहेतु परिणामो गतिरित्युच्यते ।

**तद्विपरीता स्थिति ॥ २ ॥** द्रव्यस्य स्वदेशादप्रच्यवनहेतुर्गतिनिवृत्तिरूपा स्थितिरवगतव्या ।

**उपग्रहोनुग्रहः ॥ ३ ॥** द्रव्याणां शक्त्यतराविर्भावे च कारणभावोऽनुग्रह उपग्रह इत्याख्यायते ॥

**गतिस्थित्युपग्रहावित्यनेकविग्रहसभवादर्थानिश्चय ॥ ४ ॥** निग्रहपूर्वको हि लोके वृत्तिपदस्यार्थनिश्चयो भवति गतिस्थित्युपग्रहौ इत्यत्र तु अनेकविग्रहसभवात् नास्त्यर्थनिश्चय । तद्यथा—गतिश्च

१ अमूर्तमूर्तत्वामिति ख पुस्तके पाठ । २ तुल्यदेशाधिष्ठानत्वेन न नैकत्व, इति पाठातर । ३ करगति क पुस्तके पाठ ।

स्थितिश्च गतिस्थिती गतिस्थिती उपग्रहौ ययोस्तौगतिस्थित्युपग्रहौ । गतिस्थित्योरुपग्रहौ गतिस्थित्युपग्रहौ गतिस्थिती एव वा उपग्रहौ गतिस्थित्युपग्रहौ इति ? नैष दोष ।

**अन्यपदार्थवृत्त्यभावो गतिस्थित्युपग्रहौ धर्माधर्मावित्यवचनात्** ॥ ५ ॥ नात्राऽन्यपदार्थवृत्ति सभवति । कुत ? गतिस्थित्युपग्रहौ धर्माधर्मावित्यवचनात् ।

**न षष्ठीवृत्तिर्द्विवचनानिर्देशात्** ॥ ६ ॥ नेय षष्ठी वृत्ति गतिस्थित्योरुपग्रहो गतिस्थित्युपग्रहाविति । कुत ? द्विवचननिर्देशात् । यदि हि अत्र षष्ठीवृत्ति स्यात् उत्तरपदार्थस्य भावस्यैकस्य प्राधान्यात् उभ्यर्थ एकवचननिर्देश क्रियते । भेदेन च प्रयोजनाभावात् ।

**परिशेषात् समानाधिकरणा वृत्तिः** ॥ ८ ॥ परिशेषात् समानाधिकरणलक्षणा वृत्तिर्वेदितव्या गतिस्थिती एव उपग्रहौ गतिस्थित्युपग्रहाविति ।

**तथा च द्वित्वोपपत्ति** ॥ ८ ॥ एव च कृत्वा द्वित्वमुपपन्न भवति । गतिस्थित्योर्भेदात् तत्सामानाधिकरण्यात् भेदसिद्धे । कथ सामानाधिकरण्य ? कर्मसाधनत्वात् उपगृह्येते इत्युपग्रहौ गतिस्थिती इति ।

**धर्माधर्मयोरिति कर्तृनिर्देशः** ॥ ९ ॥ धर्माधर्मयोरित्यय कर्तृनिर्देशो द्रष्टव्य कथ ? कर्तरि षष्ठीविधानात् । का क्रियामपेक्ष्य कर्तृत्व विवक्षित ? उपकार इत्युच्यते–उपकरोतिक्रियाया कर्तृत्व उपकार इति । किं साधनोय शब्द ? भावसाधन ।

**उपकार इति भावसाधनश्चेत् पूर्वेण सामानाधिकरण्यानुपपत्तिरर्थांतरवृत्तेः** ॥ १० ॥ यद्युपकरणमुपकार इति भावसाधनशब्द , गतिस्थित्युपग्रहावित्यनेन सामानाधिकरण्य नोपपद्यते कुत ? अर्थांतरवृत्ते । धर्माधर्मयोरुपकारो गतिस्थित्युपग्रहाविति । कुत ? अर्थांतरवृत्ते । उपकारो हि धर्माधर्मयोर्वर्तते कर्तृस्थक्रियत्वात् । करोते उपगृह्यमाणे तु गतिस्थिती जीवपुद्गलेष्विति । एव तर्हि कर्मसाधन ।

**कर्मसाधनश्चेद्वचनभेदानुपपत्तिः** ॥ ११ ॥ यदि कर्मसाधन वचनभेदो नोपपद्यते सामानाधिकरण्यात् द्विवचन प्राप्नोति ॥

**नवा सामान्योपादानात्** ॥ १२ ॥ नैष दोष किं कारण ? सामान्योपादानात् । यथा साधो कार्यं तत श्रुते इति प्राक्सामान्यमपेक्ष्य लब्धैकवचन कार्यशब्द पश्चाद्विशेषसन्निधानेपि नोपात्त वचन जहाति । तदिहापि उपकारशब्द उपात्तातरगैकवचनो भिन्नवचनपदातरापेक्षायामपि न वचनातरसक्रम करोति ।

**षष्ठीवृत्तिर्वा भावसाधनत्वोपपत्तेः** ॥ १३ ॥ अथवा गतिस्थित्योरुपग्रहौ गतिस्थित्युपग्रहाविति षष्ठी वृत्तिरिय । कुत ? भावसाधनत्वोपपत्ते उपग्रहणमुपग्रह इति भावसाधनोय शब्द । तथा उपकारशब्दश्च भावसाधन उपकरणमुपकार इति । ननु चोक्त भावस्यैकत्वात् द्विवचननिर्देशो नोपपद्यते इति नैष दोष –

**यथासख्यप्रतिपत्त्यर्थो द्विवचनप्रयोगः** ॥ १४ ॥ धर्माधर्मौ द्वौ गतिस्थित्युपग्रहौ द्वौ तयो सामान्यात् यथासख्य स्यात् इति द्विवचनप्रयोग क्रियते । एकवचने हि सति यथा भूमिरेकैवाश्वादीनां गतिस्थित्योरुपग्रहे वर्तते । तथा धर्म एक एव जीवपुद्गलाना गतिस्थित्योरुपग्रह कुर्यात् । तथाऽधर्मोपि इत्ययमर्थो गम्येत । अन्यतरस्य वैयर्थ्यमिति चेन्नानेकसहायकारणदर्शनात् । तेनैतदुक्त भवति जीवपुद्गलाना स्वयमेव गतिपरिणामिना तदुपग्रहकारणत्वेनानुमीयमानो धर्मास्तिकाय । तथा जीवपुद्गलाना स्वयमेव 'स्थितिपरिणामिना तदुपग्रहकारणत्वेनानुमीयमानोऽधर्मास्तिकाय'' इति सर्वत्र च तत्प्रयोजनदर्शनात् सर्वगतौ चैताविति ।

**उपग्रहावचनमुपकारेण कृतत्वात्** ॥ १५ ॥ उपग्रहवचनमनर्थक । कुत ? उपकारेण कृतत्वात् । उपग्रह उपकार इत्यनर्थांतर । तेन गतिस्थिती धर्माधर्मयोरुपकार इत्यस्तु लघुत्वात् ।

**तयोः कर्तृत्वप्रसग इति चेन्नोपकारवचनात् यष्ट्यादिवत्** ॥ १६ ॥ स्यादेतत् गतिस्थित्यो

१ तथामेवेति ख पुस्तके पाठ.।

धर्माधर्मौ कर्तारौ इत्ययमर्थः प्रसक्त इति । तन्न किं कारण ? उपकारवचनात् । उपकारो बलाधान अवलंबन इत्यनर्थांतर तेन धर्माधर्मयो गतिस्थितिनिर्वर्तने प्रधानकर्तृत्वमपोदित भवति । यथाधस्येतरस्य वा स्वजघा बलाद्गच्छत यष्ट्याद्युपकारक भवति न तु प्रेरक तथा जीवपुद्गलाना स्वशक्त्यैव गच्छता तिष्ठता च धर्माधर्मौ उपकारकौ न प्रेरकौ इत्युक्त भवति ।

**गतिस्थिती धर्माधर्मकृते इत्यनुपदेशाच्च ॥ १७ ॥** यदि धर्माधर्मौ गतिस्थित्यो प्रधानकर्तारौ स्याता गतिस्थिती धर्माधर्मकृते इत्युच्यते नत्वेवमुक्त ततश्च मन्यामहे न प्रधानकर्तारौ इति ।

**नवा यथासंख्यनिवृत्त्यर्थत्वात् ॥ १८ ॥** नवैष दोष । किं कारण ? यथासख्यनिवृत्त्यर्थत्वात् । गतिस्थिती धर्माधर्मयोरुपकार इत्युच्यमाने आत्मना गतिपरिणामोपकारो धर्मस्य न पुद्गलाना, स्थितिपरिणामोपकार इतरस्य नात्मनामिति यथासख्य प्रतीयेत तन्निवृत्त्यर्थमुपग्रहवचन क्रियते ॥

**व्याख्यानादिष्टसंप्रत्यय इति चेन्न प्रतिपत्तेर्गौरवात् ॥ १९ ॥** स्यादेतत् सर्वसदेहेष्विदमुपतिष्ठते 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सदेहादलक्षणमिति' तत इष्टस्य सप्रत्ययो भवतीति ? तन्न । किं कारण प्रतिपत्तेर्गौरवात् । व्याख्यानादिष्टसप्रत्यये क्रियमाणे बुद्धिखेदो माभूत् इत्युपग्रहवचन कृत ।

**सौक्ष्म्यादाकाशस्योपग्रह इति चेन्न धर्माधर्मकालात्मपुद्गलाधिकरणत्वात् नगरांतर्गतवेश्मवत् ॥ २० ॥** स्यादेतत् आकाश सर्वगतमस्ति तच्च सौक्ष्म्यगुणोपेतमत तस्यैव गतिस्थित्युपग्रहो युक्त, किमन्याभ्या वृथा कल्पिताभ्या धर्माधर्माभ्यमिति ? तन्न । किं कारण ? धर्माधर्मकालात्मपुद्गलाधिकरणत्वात् नभस, कथ ? नगरातर्गतवेश्मवत् । यथा नगरातर्गताना वेश्मना नगरमधिकरण तथा धर्मादीना पचाना आकाशमधिकरण नचान्यस्य धर्मोऽन्यस्य भवितुमर्हति यदि स्यात्तेजोगुणा द्रवदहनादय पृथिव्या एव कल्प्यता । किं च—

**आकाशास्तित्वेऽनुगृहीतद्रव्यसंबंधेन सामर्थ्याविर्भावदर्शनात् अनुमिषव्रज्यावत् ॥ २१ ॥** यथा अनुमिषस्य व्रज्या जलोपग्रहाद्भवति, जलाभावे च भुवि न भवति, सत्यप्याकाशे यद्याकाशोपग्रहात् मीनस्य गतिर्भवेत् भुवि अपि भवेत् । तथा गतिस्थितिपरिणामिना आत्मपुद्गलाना धर्माधर्मोपग्रहात् गतिस्थिती भवतो नाकाशोपग्रहात् गतिस्थिती स्याता अलोकाकाशेपि भवेता । अतश्च लोकालोकविभागाभाव स्यात् । लोकव्यतिरिक्तेन चाऽलोकेन भवितव्य नञ्पदोपहितस्यार्थवत्त्वदर्शनात् अब्राह्मणाभिधानवत् ।

**स्वबाह्यकारणभावाभावयोस्तद्भावाभावदर्शनात् तदभाव इति चेन्न साधारणकारणत्वादाकाशवत् ॥ २२ ॥** स्यान्मत इह गतिमता स्थितिमतां च द्रव्याणा प्रतिनियतस्वबाह्यकारणसन्निधाने सति नियतगतिस्थित्योर्भावो दृष्ट यथा मत्स्यादीना जलादिसद्भावे । तदभावेचाभावो दृष्ट. । तेषामेव जलाद्यभावे धर्माधर्मयो सतोरपि गतिस्थित्यभाव तस्मात्तदाधाने गतिस्थिती इति धर्माधर्मयोरभाव इति ? तन्न । किं कारण ? साधारणकारणत्वात् आकाशवत् । यथा सत्यपि भूम्यादावधिकरण सर्वेषा साधारणमधिकरणमाकाशमिष्यते तथा मत्स्यादीना सत्स्वपि जलादिषु कारणेषु सर्वेषा गतिस्थित्यो. साधारणकारणकौ धर्माधर्मौ वभ्युपगतव्यौ ।

**आकाशमेव पर्याप्तमिति चेन्न सर्वतंत्रविरोधात् ॥ २३ ॥** स्यादेतदाकाशमेव विभुत्वात् सर्वद्रव्याणा गतिस्थित्यो साधारणकारणत्वेन पर्याप्तमिति ? तन्न । किं कारण ? सर्वतत्रविरोधात् । आकाशमेव पर्याप्त नान्यदिति नियच्छत सर्वतत्रविरोधो भवति । तद्यथा—केचित्तावदाहु—आकाशकालदिगात्मान सर्वगता प्रतिनियतस्वलक्षणा[2] इति । तत्र हि दिङ्निमित्तो यो व्यवहार इत इदमिति, कालनिमित्तश्च परोऽपरोयमिति[1] नासावाकाशाद्वेस्ति इत्याकाशस्यैवाद सामर्थ्य न दिक्कालयोरिति दिक्कालाभाव प्रसक्त ।

१ परोऽयमवरोय ग पुस्तके । २ नैयायिकाः ।

तथा च सर्वात्मनां चैकत्वप्रसंग, यदि व्यापित्वादाकाशस्यैव गतिस्थित्युपग्रह कल्प्यते ननु यत्प्रत्यर्थनियतबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारगुणोपपत्तेर्व्यवस्थात शास्त्रसामर्थ्याच नाना आत्मान इति व्यवस्थित तद्विरुध्यते । अपर आहु.—त्रयो गुणा सत्त्वरजस्तमोभिधाना प्रसादलाघवशोषतापावरणसादनादिभिन्नस्वभावा इति । यदि व्यापित्वादाकाशस्यैव गति स्थितिरित्युपग्रहाविष्टौ ननु सत्त्वस्य व्यापित्वात् शोषतापादयो रजोधर्मा सादनावरणादयश्च तमोधर्मा सत्त्वस्यैवेष्टितव्या । तथेतरयोरपि प्रतिपक्षधर्मा इति संकरप्रसंग । तथा सर्वक्षेत्रज्ञानां चैकत्वप्रसंग चैतन्यस्वरूपाविशेषात् आदानभोगाविशेषाच्च । अन्ये मन्यते-रूपणानुभवननिमित्तग्रहणसंस्कृताभिसंस्करणात्मनप्रज्ञप्तिस्वभावलक्षणा रूपवेदनासंज्ञासंस्कारविज्ञानाभिधाना पंचस्कधा इति । तत्र यद्येकस्यैव सर्वधर्मा कल्प्यते नासति विज्ञानेऽनुभवनादय सभवतीत्यनुभवादयो विज्ञानस्यैव कल्पेरन् । तथा सति शेषस्कंधनिवृत्तौ स्वनिवृत्तिरपि स्यात्, नचैतत् सर्वमिष्ट, तस्मादभ्युपगम्यतामाकाशस्य विभुत्वेपि न धर्माधर्मयो प्रयोजन नास्तीति सिद्धौ धर्माधर्मास्तिकायौ ।

**उभयानुग्रहात् परस्परप्रतिबंध इति चेन्न स्वतः परिणामसामर्थ्यस्यानुग्रहाकांक्षित्वात् कुटनयनयष्टिप्रदीपवत् ॥ २४ ॥** स्यान्मत यथा तुल्यबलाभ्या शकुनाभ्यामाकृष्यमाणो मांसपिंड यावत्क्षेत्रमेकेनाऽऽकृष्यते तावदितरेण अपकृष्यतेति नास्योत्कर्षापकर्षगतिविधि सभवति । तथा जगद्व्यापित्वात् धर्माधर्मयोर्यदा धर्मोपग्रहात् आत्मपुद्गलानां गतिस्तदैवाधर्मोपग्रहात् स्थितिरिति गते प्रतिबंध । यथा वाऽधर्मानुग्रहात्स्थितिस्तदैव धर्मानुग्रहाद्गतिरिति स्थिते प्रतिबंध एवं तेषां न गतिर्न स्थितिरित्युभयाभाव इति ? तन्न । किं कारण ? स्वत परिणामसामर्थ्यस्य अनुग्रहाकांक्षित्वात् । कथ ? कुटनयनयष्टिप्रदीपवत् । यथा कुटस्य गतिपरिणामसमर्थस्य यष्टिरुपग्राहिका नतु सा तस्य गते कर्त्री, यद्यसमर्थस्यापि कर्त्री भवेत् मूर्छितसुप्तादीनामपि यष्टिसंनिधानाद्गति स्यात् । यथा वा नयनस्य स्वतो दर्शनसमर्थस्य प्रदीप उपग्राहक न तु प्रदीपो नेत्रस्य दर्शनशक्ते कर्ता । यद्यसमर्थस्यापि कर्ता स्यात् मूर्छितसुप्तजात्यधानामपि दर्शन कुर्यात् । तथात्मपुद्गलानामपि स्वयमेव गतिस्थितिपरिणामिनां धर्माधर्मावुपग्राहकौ गतिस्थित्योर्न कर्तारौ । यदि कर्तारौ स्यातां स्याद्गतिस्थितिविरोध । अतोऽनुग्राहकत्वान्नास्ति दोष । किं च—

**क्वचिदुपग्राहकाभावेपि गतिस्थितिदर्शनात् पतत्रिवत् ॥ २५ ॥** यथा पतत्रिण प्रकृष्टगतिस्थितिक्रियापरिणामसामर्थ्यात् जलतुल्यबाह्योपग्राहकाभावेपि धर्माधर्मद्रव्यसद्भावात् गतिस्थिती दृष्टे तथेतरेषामपि द्रव्याणा धर्माधर्मोपष्टंभात् गतिस्थितिसिद्धिरिति तदुपपत्ति ।

**तत्राप्याकाशं निमित्तमिति चेदुक्तं ॥ २६ ॥** यदि तत्रापि पतत्र्यादिषु आकाशमुपग्राहकमस्तीति कल्प्यते । उक्तमेतदाकाश गतिस्थित्युपग्रहकारण अवगाहनलक्षणत्वात्तस्येति ॥

**अनेकांताच्च समग्रविकलेंद्रियवत् ॥ २७ ॥** यथा नायमेकात सर्वश्चक्षुष्मान् बाह्यप्रकाशोपग्रहात् रूप गृह्णातीति, यस्मात् द्वीपिमार्जारादय स्वजातिविशेषोपात्तनयनबलादेव विनापि बाह्यप्रदीपाद्युपग्रहात् रूपग्रहणसमर्था । मनुष्यादयस्तु तथादर्शनशक्त्यभावात् प्रदीपाद्युपग्रहमपेक्ष्यत इत्यनेकात । यथा वा नायमेकात सर्व एव गतिमतो यष्ट्याद्युपग्रहात् गतिमारभते नवति यस्मात् समग्रपंचेंद्रियो बाह्ययष्ट्याद्युपग्रहात् विनापि धर्मोपग्रहाद्गतिमारभते नैव चक्षुर्विकल स तु समविषमादिभूप्रदेशादर्शनात् तद्दिशापनिष्क्रमणसमर्थो यष्टिमवष्टभ्य गतिमारभते इत्यनेकात । तथा नायमेकात सर्वेषा आत्मपुद्गलाना सर्वे बाह्योपग्रहहेतवः सतीति । किंतु केषाचित् पतत्रिप्रभृतीना धर्माधर्मावेव अपरेषा जलादयोपीत्यनेकात ।

**अनुपलब्धेरभाव इति चेन्न स्वतीर्थकराद्यभावप्रसंगात् ॥ २८ ॥** स्यान्मत नच धर्माधर्मौ स्त अनुपलब्धे, खरविषाणवत् । सना हि यष्ट्यादीना उपलब्धिरस्ति तदुपकारश्च निम्नोन्नतादिभूप्रदेशे भेददर्शन दृष्ट नच तथा धर्माधर्मौ वा लभ्येते नापि तदुपकार इत्यसत्त्वमिति ? तन्न । किं कारण ? स्वतीर्थकराद्यभावप्रसंगात् खरविषाणवत् । यथा खरविषाण अनुपलब्धेरसत् तथा स्वतीर्थकरपुण्यापुण्यपरलोकादीनामप्यसत्त्वमाक्षिप्त, नचाऽसत्त्वमिष्ट ततो हेतोर्व्यभिचार । किं च—

१ सांख्या । २ बौद्धा ।

**अनुपलब्धयसिद्धेः ॥ २९ ॥** भगवदर्हत्सर्वज्ञप्रत्यक्षज्ञानगोचरत्वात् तत्प्रणीतिपरमागमप्रमाणगम्यत्वात् तदनुसारिस्वकार्यदर्शनाद्यनुमानविषयत्वाच्च धर्माधर्मयोरुपलब्धेरनुपलब्धिलक्षणो न हेतुरसत्प्रसिद्धः। नच हेतुः स्वयमसिद्धः साध्यमर्थं साधयितुं अलं।

**अत एव विवादात् ॥ ३० ॥** यत एव यष्ट्यादिवत् न प्रत्यक्षौ धर्माधर्माविति एव विवादः, किमनुपलब्धेः खरविषाणवदभावोऽनयोरुत एवाऽऽकाशमूलोदकादिवत् अभाव इति। न हि यत एव विवाद तत एव निर्णयो भवितुमर्हति। किं च—

**कार्यस्यानेकोपकरणसाध्यत्वात् तत्सिद्धेः ॥ ३१ ॥** इह लोके कार्यमनेकोपकरणसाध्य दृष्टं यथा मृत्पिंडो घटकार्यपरिणामप्राप्तिं प्रति गृहीताभ्यंतरसामर्थ्यं बाह्यकुलालदंडचक्रसूत्रोदककालाकाशाद्यनेकोपकरणापेक्ष घटपर्यायेणाऽऽविर्भवति। नैक एव मृत्पिंडः कुलालादिबाह्यसाधनसन्निधानेन विना घटात्मनाविर्भवितुं समर्थः। तथा पतत्रिप्रभृतिद्रव्यं गतिस्थितिपरिणामप्राप्तिं प्रत्यभिमुखं नांतरेण बाह्यानेककारणसन्निधिं गतिं स्थितिं वा प्राप्तुमलमिति तदुपग्रहकारणधर्माधर्मास्तिकायसिद्धिः। ततः किं ? अनुमानविरोधो वेदितव्यः।

**संसर्ग एव हेतुरिति चेन्न कारणनियमाभावप्रसंगात् ॥ ३२ ॥** स्यान्मतं नानेककारणसाध्यं कार्यं किं तर्हि ? संसर्ग एव हेतुः कार्यात्मलाभस्य, विभक्तानां तत्वादीनां कार्यारंभसामर्थ्याभावात् इति ? तन्न किं कारणं ? कारणनियमाभावप्रसंगात् यस्मात्तस्माच्चित्कारणसंसर्गात् पटनिष्पत्तिरस्तु नोचेदेव प्रतिविशिष्टतत्वादिकारणं (नियमाभावप्रसंगात्) विषयसंसर्गापेक्षत्वादनेककारणत्वसिद्धिः। किं च—

**एकस्य कारणस्य संसर्गाभावात् ॥ ३३ ॥** अनेककारणसाध्यत्वात् संसर्गस्य। संसर्गकारणत्वप्रतिज्ञाहानिरपि च संसर्गकारणानां संयोगविशेषः संयोगिनां बहुत्वादनेकः। तस्मात् साध्यत्वात् कार्यस्य अनेककारणत्वसिद्धिः। किं च—

**स्वसमयविरोधात् ॥ ३४ ॥** नच यथमेतत्पक्षः यन्नोपलभ्यते प्रत्यक्षेण तन्नास्तीति। यस्य तु वादिन एषोभिप्रायस्तस्य स्वसमयविरोधः। तद्यथा—सर्वे हि वादिनः प्रत्यक्षाप्रत्यक्षार्थवादिनः। केचित्तावदाहुः—प्रत्येकं रूपपरमाणवोऽतींद्रियास्तत्समुदायोऽनेकपरमाणुकः इंद्रियग्राह्यो नाम चित्चैतसिकविकल्पमतींद्रियमिति। अपर आहुः—व्यक्तस्य पृथिव्यादेः प्रधानपरिणामस्य प्रत्यक्षत्वं, सत्त्वादीनां गुणानां परमात्मनां चाऽप्रत्यक्षमिति। अन्ये तु मन्यंते—महदनेकद्रव्यत्वात् रूपाच्चोपलब्धिरित्येवमादिनाऽनेकपरमाणुसमुदयभावेन निष्पन्ना पृथिव्यादयस्तद्विषयाश्च रूपादयस्तत्समवायिनः संख्यापरिमाणपृथक्त्वसंयोगविभागादयश्च प्रत्यक्षाः, अण्वाकाशादयोऽप्रत्यक्षा इति। यष्ट्यादिवदनुपलब्धेः धर्माधर्मयोरभावः प्रतिज्ञायेत ? ननु विज्ञानादीनां सत्त्वादीनां अण्वादीनां चाऽप्रत्यक्षत्वादभावः स्यादिति स्वसमयविरोधः। अथैषां कार्यदर्शनात् अस्तित्वमनुमीयते धर्माधर्मयोः को मत्सरः। किं च—

**त्वदीयजीवितमरणादिवत्तत्सिद्धेः ॥ ३५ ॥** यथा त्वदीयजीवितमरणसुखदुःखादीनां मनुष्यमात्राप्रत्यक्षाणां अतिशयज्ञानिभिरुपलभ्यमानस्वरूपाणां आस्तित्वं। तथा तावत्कीनप्रमाणगोचरातीतयोरपि परमर्षिसर्वज्ञदृष्टयोः धर्माधर्मयोरस्तित्वमिति को विरोधः। किं च—

**ज्ञानादिवदिति चेन्न उक्तत्वात् ॥ ३६ ॥** स्यादेतत् ज्ञानादीनामात्मपरिणामानां च र्दैष्यादीनां[1] निर्वृत्तिः परस्पराश्रया न धर्माधर्मास्तिकायस्थानीयद्रव्यांतराश्रयात्। तथा जीवपुद्गलेषु गतिस्थितिपरिणामा अपि अन्योन्याश्रया इति धर्माधर्माभाव इति ? तन्न। किं कारणमुक्तत्वात्। उक्तमेतत् पतत्रिप्रभृतीनां गतिस्थितिकारणेन साधारणेन बाह्येन भवितव्यमिति। किंच—ज्ञानादिर्दैष्यादिविकाराणामपि निर्वृत्तौ कालो हेतुः बाह्योस्तीत्यभ्युपगमादसमस्समाधिः।

---

१ ईर्ष्यादीनां पाठोय ख पुस्तके।

**अदृष्टहेतुके गतिस्थिती इति चेन्न पुद्गलेष्वभावात् ॥ ३७ ॥** स्यान्मतमदृष्टो नामाऽऽत्मगुणोस्ति यद्धेतुक सुखदु खविपाक तत्साधनसन्निधान च । एव च कृत्वोक्त अग्नेरूर्ध्वज्वलन, वायोश्च तिर्यग्गमन अणुमनसोश्चाद्य कर्मेत्येतान्यदृष्टकारितानि उपसर्पणमपसर्पणमसितपीतसयोगा कार्यांतरसयोगाश्चेति अदृष्टकारितानि इत्यादि तद्धेतुके गतिस्थिती इति ? तन्न। किं कारण ? पुद्गलेष्वभावात् । अचतनत्वात् पुद्गलाना पुण्यापुण्यकारणाभावात् तत्कृतगतिस्थित्यभावदोष ।

**यस्योपकारस्तादर्थ्यात् क्रियाप्रवृत्तिरिति चेन्नाऽन्यधर्मस्यान्यत्र क्रियारभे सामर्थ्याभावात् ३८** स्यादेतत् यस्य घटादय उपकरिष्यति तस्य पुसोऽदृष्टाद् घटादिकगतिस्थिती भवत इति ? तन्न। किं कारण अन्यधर्मस्याऽन्यत्र क्रियारभे सामर्थ्याभावात् । न हि स्वाश्रये क्रियामनारभमाण अन्यत्र क्रियाहेतुरस्तीत्युक्त पुरस्तात् । किं च–

**पुण्यापुण्यात्ययेपि गतिस्थितिदर्शनात् ॥ ३९ ॥** विनिर्मुक्तपुण्यापुण्यबधानां सिद्धानां गतिस्थिती इष्येते ततो नादृष्टहेतुके गतिस्थिती ॥

**अमूर्तत्वाद्गतिस्थितिनिमित्तत्वानुपपत्तिरिति चेन्न दृष्टांताभावात् ॥ ४० ॥** स्यान्मत रूपादिगुणविरहितत्वात् अमूर्तौ धर्माधर्मावभ्युपगम्येते । ततस्तयोर्गतिस्थितिहेतुत्व नोपपद्यते इति ? तन्न । किं कारण ? दृष्टांताभावात् । न हि दृष्टांतोस्ति येनामूर्तत्वात् गतिस्थितिहेतुत्व निवर्तेत । किं च—

**आकाशप्रधानविज्ञानादिवत्तत्सिद्धेः ॥ ४१ ॥** यथाकाशममूर्तमपि सर्वपदार्थानामवगाहनप्रयोजनमुपपादयति । यथा वा प्रधानममूर्तमपि पुरुषार्थप्रवृत्त्या महदादिविकारमापद्यमान पुरुषस्योपकरोति । यथा वा विज्ञानममूर्तमपि,नामरूपोत्पत्तौ निमित्त 'विज्ञानप्रत्यय नामरूपमिति वचनात् । यथा वाऽपूर्वाख्यो धर्म क्रियया अभिव्यक्त सन्नमूर्तोपि पुरुषस्योपकारी वर्तते। तथा धर्माधर्मयोरपि गतिस्थित्युपग्रहोऽवसेय । अत्राह–यद्यतीन्द्रिययोर्धर्माधर्मयोरुपकारसबधेनास्तित्वमवध्रियते तदनतरमुद्दिष्टस्य नभसोऽतींद्रियस्याधिगमे क उपकारक इत्यत्रोच्यते—

## आकाशस्यावगाह ॥ १८ ॥

आकाशशब्दो व्याख्यातार्थ ॥

**अवगाहशब्दो भावसाधन ॥ १ ॥** अवगाहनमवगाह इति भावसाधनोऽवगाहशब्दो वेदितव्य अवगाहोऽनुप्रवेश इत्यर्थ ।

**धर्माधर्मयोरवगाह प्रति कर्तृत्वादनादिसंबधनिवृत्तिरिति चेन्नौपचारिकत्वात् व्याप्तिसद्भावात् ॥ २ ॥** स्यान्मत यथा जलमवगाहते हस इति न जलहसयोरनादिसबध । तथाकाश धर्माधर्मावगाहेते इत्युभ्युपगमात् अनादिसबधो निवर्तत इति ? तन्न । किं कारण ? औपचारिकत्वात् । औपचारिकोऽयमवगाह । कुत क्रियाभावात् । कुतस्तर्हि उपचार ? व्याप्तिसद्भावात् । यथा गमनाभावेपि सर्वगतमाकाशमित्युच्यते व्याप्तिसद्भावात् । तथा मुख्यावगाहक्रियाभावेपि लोकाकाशेपि सर्वत्र व्याप्तिदर्शनात् व्यवह्रियते धर्माधर्मयोर्लोकाकाशेऽवगाह इति ।

**अयुतसिद्धानामाधाराधेयत्वानुपपत्तिरिति चेन्न तत्रापि दर्शनात् पाणिलेखावत् ॥ ३ ॥** स्यादेतत् युतसिद्धाना लोके दृष्ट आधाराधेयभाव यथा कुडवदरादीनां । अयुतसिद्धाश्चेते आकाशधर्माधर्मा अप्राप्तिपूर्वका प्राप्त्यभावात् तत आधाराधेयभावो नोपपद्यत इति ? तन्न। किं कारण ? तत्रापि दर्शनात् यथा युतसिद्ध्यभावे पाणौ लेखेति आधाराधेयभावो दृष्ट तथा लोकाकाशे धर्माधर्मावित्याधेयाधारभाव सिद्ध ।

**दृष्टत्वादीश्वरैश्वर्यवत् ॥ ४ ॥** यथेश्वरस्यैश्वर्यस्य वाऽयुतसिद्धेपि ईश्वरे ऐश्वर्यमिति व्यवहारो दृष्टस्तथा लोकाकाश धर्माधर्माविति व्यपदेशो युक्तः ।

**अनेकांताच्च तत्सिद्धिः ॥ ५ ॥** नायमेकांत अनादिसंबंधौ धर्माधर्मौ अयुतसिद्धौ चेति। किं तर्हि ? स्यादनादिसंबंधौ स्यान्नाऽनादिसंबंधौ स्यादयुतसिद्धौ स्यान्नाऽयुतसिद्धावित्यादि । तद्यथा—पर्यायार्थिकगुणभावे द्रव्यार्थिकप्राधान्यात् व्ययोदयाभावात् स्यादनादिसंबंधौ अयुतसिद्धौ च । द्रव्यार्थिकगुणभावे पर्यायार्थिकप्राधान्यात् पर्यायाणां व्ययोत्पादसद्भावात् स्यान्नाऽनादिसंबंधौ नायुतसिद्धौ चेत्यादि योज्य । ततः किं ? कथंचित् अवगाह आधाराधेयभावश्च सिद्धो भवति ॥

**जीवपुद्गलानां मुख्योवगाह क्रियापरिणामात् ॥ ६ ॥** जीवानां पुद्गलानां च मुख्योवगाहो वेदितव्य । कुत ? क्रियापरिणामात्। यथा हंसो जलमवगाहते इति मुख्यो व्यपदेश तथा जीवपुद्गला आकाशमवगाहते क्रियापरिणामात् इति मुख्यो व्यपदेशोऽवसेय ।

**आकाशस्यावकाशदानसामर्थ्यात् परस्पर प्रतिघाताभाव इति चेन्न स्थूलानामन्योन्य प्रतिघातात् ॥ ७ ॥** स्यान्मत यद्यवकाशदानसमर्थमाकाशं तस्य च सर्वत्र सन्निधानात् मूर्तानां परस्परप्रतिघातो न स्यात् । दृश्यते च वज्रादिभिर्लोष्ठादीनां भित्त्यादिभिश्च गवादीनां ततोऽस्याऽवकाशदानसामर्थ्यं हीयत इति ? तन्न। किं कारण ? स्थूलानामन्योन्यप्रतिघातात् । स्थूला हि परस्परत प्रतिहन्यते न सूक्ष्मास्तेषामन्योन्यप्रदेशशक्तियोगात् न तस्य तावता अवकाशदानसामर्थ्यं हीयते ।

**असाधारणलक्षणत्वानुपपत्तेरिति चेन्न सर्वावगाहविशेषलक्षणोपपत्तेः ॥८॥** स्यादेतत् यदि सूक्ष्मभावात् इतरेपि पदार्था अन्योन्यावकाशदानं कुर्वंति नाकाशस्य इद असाधारणलक्षण । असाधारणे हि लक्षणेऽस्तित्वमनुमीयतेऽतस्तदभावादाकाशाभाव इति ? तन्न । किं कारण ? सर्वावगाहविशेषोपपत्तेः। यथा भूम्यादिषु अश्वादिगतिस्थित्युपग्रहरूपेणासाधारणलक्षणेनानुमीयते धर्माधर्मौ । तथा सर्वद्रव्यावगाहनविशेषलक्षणोपपत्तेराकाशस्यास्तित्वमनुमीयते ॥

**अलोकाकाशे तदभावादभाव इति चेन्न स्वभावापरित्यागात् ॥ ९ ॥** स्यान्मत यद्यवकाशदानलक्षणमाकाश अलोकाकाशेऽवगाहिनामभावात् तल्लक्षणाभावात् लक्ष्यानवधारणप्रसंग, इति ? तन्न किं कारण ? स्वभावापरित्यागात् । यथा हंसस्यावगाहकस्याभावेप्यवगाह्यत्व जलस्य न हीयते । तथा अवगाहित्वाभावेपि नाऽलोकाकाशस्य अवकाशदानसामर्थ्यहानि ॥

**अज्ञातत्वादभाव इति चेन्नासिद्धेः ॥ १० ॥** स्यादेतत् नास्त्याकाशमजातत्वात् खरविषाणवत् इति? तन्न । किं कारण ? असिद्धे ।द्रव्यार्थिकगुणभावे पर्यायार्थिकप्राधान्यात् स्वप्रत्ययागुरुलघुगुणवृद्धिहानिविकल्पापेक्षया अवगाहकजीवपुद्गलपरप्रत्ययावगाहभेदविवक्षया च आकाशस्य जातत्वोपपत्ते हेतोरसिद्धि । अथवा व्ययोत्पादौ आकाशस्य दृश्येते यथा चरमसमयस्याऽसर्वज्ञस्य सर्वज्ञत्वेनोत्पादस्तथोपलब्धे । असर्वज्ञत्वे न व्ययस्तथानुपलब्धे । एव चरमसमयस्यासर्वज्ञस्य साक्षादनुपलभ्यमकाश सर्वज्ञत्वोपपत्तौ उपलभ्यत इति उपलभ्यत्वेनोत्पन्नमनुपलभ्यत्वेन च विनिष्ट । यदि तेनाऽविनष्टमनुत्पन्न च स्यात् सर्वज्ञत्वमेवास्य न स्यात् । अतो व्ययोत्पाददर्शनात् असिद्धो हेतु । बुद्धिशब्दलक्षणस्य खरविषाणस्य स्वकारणसन्निधाने सति जन्यत्वात् अस्तित्वाच्च साध्यसाधनधर्मासिद्धता दृष्टांतस्य, खरो मृत गौर्जात स एव इत्येकजीवविवक्षायां खरव्यपदेशभाजो जीवस्य गोजातिसंक्रमे विषाणोपलब्धे । अथ खरविषाणस्यापि जात्यास्तित्वसद्भावात् उभयधर्मासिद्धता । निरन्वयविनश्वरत्वे तु स्मृत्यभावात् लोकसंव्यवहारलोप स्यात् ।

**अनावृत्तिराकाशमिति चेन्न नामवत् तत् सिद्धेः ॥ ११ ॥** स्यादेतत् नाकाश नाम किं-

चिद्वस्त्वस्ति आवरणाभावमात्रं हि तत् इति ? तन्न किं कारणं, नामवत्तत्सिद्धेः । यथा नामवचनादि अमूर्तत्वात् अनावृत्यपि सदस्तीत्यभ्युपगम्यते । तथा आकाशमपि वस्तुभूतमित्यवसेयं[१]।

शब्दलिंगत्वादिति चेन्न पौद्गलिकत्वात् ॥ १२ ॥ स्यान्मतं नावगाहेन आकाशमनुमीयते कुतस्तर्हि ? शब्दलिंगत्वात् । शब्दो ह्याकाशगुणः वाताभिघातबाह्यनिमित्तवशात् सर्वत्र उत्पद्यमानः इंद्रियप्रत्यक्षः अन्यद्रव्यासंभवी गुणिनमाकाशं सर्वगतं गमयति ।

गुणानामाधारपरतन्त्रत्वादिति तन्न किंकारणं पौद्गलिकत्वात् ॥ १३ ॥ पुद्गलद्रव्यविकारो हि शब्दः, नाकाशगुणः तस्योपरिष्टात् युक्तिर्वक्ष्यते ।

प्रधानविकार आकाशमिति चेन्न तत्परिणामाभावात् आत्मवत् ॥ १४ ॥ स्यान्मतं प्रधानं नाम सत्त्वरजस्तमसां साम्यरूपमस्ति प्रसवस्वभावकं । तद्विकारा महदादयस्तद्विकारविशेषः कश्चित् आकाशमिति तन्न । किंकारणं ? तत्परिणामाभावात् आत्मवत् । यथा परमात्मनां नित्यत्वात् निःक्रियत्वात् अनंतत्वाद्यविशेषात् आविर्भावतिरोभावात् परिणामाभावः । तथा प्रधानस्यापि नित्यत्वनिष्क्रियत्वानंतत्वाद्यविशेषात्तस्यात्तत्परिणामः तदभावात् प्रधानविकाराकाशकल्पनाव्याघातः । किं च-यथा घटस्य प्रधानविकारस्याऽनित्यत्वं मूर्तित्वमसर्वगतत्वं च । तथा आकाशस्य स्यात् । विपर्ययो वा । उपकारप्रकरणाभिसंबंधेनेदमुच्यते

## शरीरवाङ्मनःप्राणापानाः पुद्गलानां ॥ १९ ॥

शरीरे सत्युत्तरेषां प्रवृत्तिदर्शनात् आदौ तद्वचनं ॥ १ ॥ सति शरीरेऽधिष्ठानभूते उत्तरेषां वागादीनां आधेयानां प्रवृत्तिरिति कृत्वा शरीरं प्रधानमतस्तस्यादौ ग्रहणं क्रियते ।

तदनंतरं वागुपादानं पुरुषहितावाप्तिमूलत्वात् ॥ २ ॥ तदनंतरं वागुपादानं क्रियते । कुतः ? पुरुषहितावाप्तिमूलत्वात् । पुरुषस्य हि वाक् हिते प्रवर्तिका श्रोत्रेंद्रियद्वारेण ।

अन्येंद्रियोपसंख्यानमिति चेन्न शब्दस्येष्टसमुच्चयार्थत्वात् ॥ ३ ॥ स्यान्मतं चक्षुरादीन्यपींद्रियाणि पुरुषस्योपकारकाणि संति, तेषामुपसंख्यानं कर्तव्यमिति ? तन्न । किं कारणं ? चशब्दस्येष्टसमुच्चयार्थत्वात् । उत्तरसूत्रे वक्ष्यते चशब्दः, स इष्टसमुच्चयार्थो भवति ।

आत्मप्रदेशाश्चक्षुराद्यग्रहणमिति चेन्न द्रव्येंद्रियस्य पौद्गलिकत्वात् ॥ ४ ॥ स्यादेतत् उत्सेधांगुलासंख्येयभागप्रमिता आत्मप्रदेशाः ज्ञानावरणवीर्यांतरायक्षयोपशमनिमित्ताश्चक्षुरादिव्यपदेशभाजो न पौद्गलिका इत्यनुपसंख्यानमिति ? तन्न । किं कारणं ? द्रव्येंद्रियस्य पौद्गलिकत्वात् । अंगोपांगनामलाभनिमित्ता हि द्रव्येंद्रियपरिणामाः पौद्गलिकाः आत्मन उपकारे वर्तते ।

मनोगृहणप्रसंगाच्च ॥ ५ ॥ यदि ज्ञानावरणवीर्यांतरायक्षयोपशमनिमित्तत्वाच्चक्षुराद्यग्रहणं न्याय्यं मन्यते मनसोऽप्यग्रहणं प्राप्नोति मनोपि हि नो इन्द्रियावरणक्षयोपशमापेक्षं ?

अनवस्थितत्वात् मनोगृहणमिति चेन्नाऽनवस्थानेपि तन्निमित्तत्वात् ॥ ६ ॥ स्यान्मतं यथा चक्षुरादिव्यपदेशभाजः आत्मप्रदेशा अवस्थिताः नियतदेशत्वात् न तथा मनोऽवस्थितमस्ति । अत एव तदनिंद्रियमित्युच्यते ततोऽस्य न पृथग्ग्रहणमिति तन्न । किं कारणं ? अनवस्थानेपि तन्निमित्त्वात् । यत्र यत्र प्रणिधानं तत्र तत्र आत्मप्रदेशा अंगुलासंख्येयभागप्रमिता मनोव्यपदेशभाजः ।

वाग्गृहणप्रसंगाच्च ॥ ७ ॥ यदि आत्मपरिणामाच्चक्षुराद्यग्रहणं कल्प्यते वाचोऽप्यग्रहणं, वागपि ज्ञानावरणवीर्यांतरायक्षयोपमोपष्टंभजनितवृत्तिः ।

बहिर्विनिःसृतानामात्मपरिणामाभावाच्चद्ग्रहणमिति चेन्नोक्तत्वात् ॥ ८ ॥ स्यादेतद्बहिर्विनि

१ आत्मनामिति ग पुस्तके पाठः । २ नियतदेशत्वात् ग पुस्तके पाठोयं ।

सृता वाक्पुद्गला आत्मपरिणामा न भवति तदर्थे पृथग्ग्रहण इति ? तन्न। किं कारण। उक्तत्वात्। उक्तमेतदुत्पत-द्भिरेवाऽस्माभिश्चक्षुरादीनि द्रव्येंद्रियाणि पौद्गलिकानीति। तस्मात् सूक्त चशब्दस्येष्टसमुच्चयार्थत्वादिति।

**ततो मनोगृहण तद्वतस्तत्सिद्धे ॥९॥** तत पश्चात् मनोग्रहण क्रियते। कुत ? तद्वतस्तत्सिद्धे। यस्या मन शरीरमस्ति वाग्निर्वर्तनसामर्थ्य च, तस्य हि तद्भवतीति।

**अंते प्राणापानोपादनं सर्वससारिकार्यत्वात् ॥ १० ॥** अते तु प्राणापानोपादान क्रियते। कुत ? सर्वससारिकार्यत्वात्। सर्वेषां हि ससारिणा जीवानां प्राणापानलक्षण कार्यमस्ति।

**पुद्गलद्रव्यलक्षणार्थमिति चेन्न वक्ष्यमाणत्वात् ॥ ११ ॥** स्यान्मत शरीरवाङ्मन प्राणापानग्रह-णमिद पुद्गलद्रव्यस्य लक्षणार्थं नोपकारप्रतिपादनार्थमिति ? तन्न। किं कारण ? वक्ष्यमाणत्वात्। वक्ष्यते हि उत्तरत्र पुद्गललक्षण व्यापि, इद तु आत्मोपकारकत्वादुपग्रहप्रकरणे उच्यते।

**प्रत्यक्षत्वादनुपदेशः इति चेन्न केषांचिदप्रत्यक्षत्वात् ॥१२॥** स्यादेतत् धर्मादीना गत्युप-ग्रहादिप्रयोजनमुक्त युक्त तेषा अप्रत्यक्षाणामधिगमहेतुत्वात्। शरारीद्युपग्रहाभिधान तु पुद्गलानामयुक्त प्रत्य-क्षत्वात्। यो हि ब्रूयात् पुरस्तात् आदित्य उदेति पश्चादस्त गच्छति, मधुरो गुड, कटुक शृंगिबेरमिति किं तेन कृत स्यादिति ? तन्न। किं कारण ? केषाचित् प्रत्यक्षत्वात्, औदारिकवैक्रियिकाहारकतैजसकार्मणश-रीराणि सौक्ष्म्यादप्रत्यक्षाणि, तदुदयापादितवृत्तीन्युपचयशरीराणि कानि चित् प्रत्यक्षाणि च। मनोऽप्रत्यक्ष-मेव। वाक्प्राणापाना केचित् प्रत्यक्षा, केचिदप्रत्यक्षा, इंद्रियगोचरातीतत्वात्—अत पुद्गलोपकारस्फुटी-करणार्थ शरीराद्युपदेश क्रियते।

**शरीराण्युक्तानि ॥ १३ ॥** शरीराण्यौदारिकादीनि व्याख्यातानि पौद्गलिकानि।

**कार्मणमपौद्गलिकमिति चेन्न तद्विपाकस्य मूर्तिमत्संबंधनिमित्तत्वात् ॥ १४ ॥** स्यादेतत् कार्मण पौद्गलिक न भवति। कुत ? अनाकारत्वात्। आकारवता हि औदारिकादीनां पौद्गलिकत्व युक्त कार्मण तु अनाकारमिति ? तन्न। किं कारण ? तद्विपाकस्य मूर्तिमत्सबधनिमित्तत्वात्। यथा व्रीह्यादीनामु-दकादिद्रव्यसबधप्रापितपाकाना पौद्गलिकत्व दृष्ट तथा कार्मणमपि गुडकटकादिमूर्तिमद्द्रव्योपनिपाते सति विपच्यमानत्वात् पौद्गलिकमित्यवसेय। न हि अमूर्त किंचिन्मूर्तिमत्सबधे सति विपच्यमान दृष्टमिति।

**वाग् द्विधा अपि पौद्गलिकी तन्निमित्तत्वात् ॥ १५ ॥** द्विधा वाक् भाववाक् द्रव्यवागिति सोभयी पौद्गलिकी, कुतस्तन्निमित्तत्वात् पुद्गलकार्यत्वादित्यर्थ। भाववाक् तावद्वीर्यांतरायमतिश्रुतज्ञानावरण-क्षयोपशमांगोपागनामलाभनिमित्तत्वात् पौद्गलिकी, तदभावे तद्वृत्त्यभावात्। तत्सामर्थ्योपेतेन क्रियावतात्मना प्रेर्यमाणा पुद्गला वाक्त्वेन विपरिणमत इति द्रव्यवागपि पौद्गलिकी श्रोत्रेंद्रियविषयत्वात्। पुन. कुतो न गृह्यते ? इति चेदुच्यते—

**पुनरग्रहण तडिद्द्रव्यवदसंहरत्वात् ॥ १६ ॥** यथा तडिद्द्रव्य चक्षुषोपलब्ध विष्वग्विशीर्णत्वात् पुनर्न दृश्यते तथा श्रोत्रेण उपलब्धा वाक् विष्वग्विशीर्णा पुनर्न श्रूयते। अथ कथ चक्षुरादिभिरसौ न गृह्यते ?

**चक्षुरादिग्रहणाभावो घ्राणग्राह्यरसाद्यनुपलब्धिवत् ॥ १७ ॥** यथा घ्राणग्राह्ये गधद्रव्ये तद-विनाभाविन सतोपि रसादयो नोपलभ्यते। तथा श्रोत्रेंद्रियविषयोपि शेषेंद्रियैर्न गृह्यते सूक्ष्मत्वात्।

**अमूर्तिरिति चेन्न मूर्तिग्रहणप्रेरणावरोधदर्शनात् ॥१८॥** स्यादेतत् अमूर्त शब्द अमूर्तगुण-त्वादिति ? तन्न। किं कारण ? मूर्तिमद्ग्रहणप्रेरणावरोधदर्शनात्। मूर्तिमता इंद्रियेण शब्दो गृह्यते नचामूर्त कश्चिदिंद्रियग्राह्योऽस्ति। प्रेर्यते च मूर्तिमता पवनेन अर्कतूलराशिवत् दिगतरस्थेन ग्राह्यत्वात्, नचाऽमूर्तस्य मूर्तिमता प्रेरण प्रयुज्यते। अवरुध्यते च शब्द नलबिलादिभि कुल्याजलवत्, नचाऽमूर्त किंचिन्मूर्तिमता-

१ प्रत्यक्षेण पाठोय क पुस्तके।

ऽनुरुध्यमान द्रव्यमिति । अत्राह—नैते हेतव यस्तावदुच्यते इंद्रियग्राह्यत्वादिति श्रोत्रमाकाशमयममूर्तस्य ग्राहकमिति को विरोध । यच्चोच्यते प्रेरणादिनासौ प्रेर्यते गुणस्य गमनाभावात् । देशांतरस्थेन कथ गृह्यते इति चेत् सयोगाद्विभागात् शब्दाच्च शब्दनिष्पत्तिरिति शब्दांतरारंभात् ग्रहण । वेगवद्द्रव्याभिघातात् तदनारंभेऽग्रहण न प्रेरणमिति । योप्युच्यतेऽवरोधादिति स्पर्शवद्द्रव्यादिभिघातादेव दिगंतरे शब्दांतरानारंभात् एकदिक्कारंभे सति अवरोध इव लक्ष्यते न तु मुख्योस्तीत्यत्रोच्यते—नैते दोषा । श्रोत्र तावदाकाशमय इति नोपपद्यते आकाशस्यामूर्तस्य कार्यांतरारंभशक्तिविरहात् । अदृष्टवशादिति चेचिंत्यमेतत्-किमसावदृष्ट आकाश सस्करोति उतात्मानमाहोस्वित् शरीरैकदेशमिति ? न तावदाकाशे सस्कारो युज्यते अमूर्तित्वात् अन्यगुणत्वादसबंधाच्च । आत्मन्यपि शरीरादत्यतमन्यत्वेन कल्पिते नित्ये निरवयवे सस्काराधानन युज्यते तदुपार्जनफलादानाऽसभवात । नापि शरीरैकदेशे युज्यते अन्यगुणत्वात् अनभिसंबंधाच्च । किं च मूर्तिमत्सबंधजनितनिपत्सपात्तिदर्शनात् श्रोत्र मूर्तमेवेत्यवसेय यदप्युच्यते--स्पर्शवद्द्रव्याभिघातात् शब्दांतरानारंभ इति खात्पातिता नो रत्नवृष्टि । स्पर्शवद्द्रव्याभिघातादेव मूर्तित्वमस्य सिद्ध । न हि अमूर्त कश्चित् मूर्तिमता विहन्यते । तत एव च मुख्यावरोध सिद्ध स्पर्शवदनभिघाताभ्युपगमात् ।

**अभिभवादिदर्शनाच्च मूर्तः शब्दः इत्यवगंतव्य ॥१९॥** यथा तारकादयो भास्करप्रभाभिवान्मूर्तिमत । तथा सिंहगजभेर्यादिशब्दैर्बृहद्भि शकुनिरुतादयोऽभिभूयते । तथा कंसादिषु पतिता ध्वन्यतरारंभे हेतवो भवंति । गिरिगह्वरादिषु च प्रतिहता प्रतिश्रुद्भावमारकदति । अत्राह—अमूर्तेरप्यभिभवादृश्यते यथा विज्ञानस्य सुरादिभि मूर्तिमद्भिस्ततो नाय निश्चयहेतु ? इत्युच्यते । नाय व्यभिचार विज्ञानस्य क्षायोपशमिकस्य पौद्गलित्वाभ्युपगमात् । इतरथा हि आकाशवन्नाभिभूयते ।

**मनश्च द्वितयं पौद्गलिकं तन्मयत्वात् ॥ २० ॥** द्विप्रकार मनो भावमनो द्रव्यमनश्चेति तदुभयमपि पौद्गलिक । कुत ? तन्मयत्वात् । भावमनस्तावत् लब्ध्युपयोगलक्षण पुद्गलावलंबनत्वात् पौद्गलिक । द्रव्यमनश्च ज्ञानावरणवीर्यांतरायक्षयोपशमलाभप्रत्यया गुणदोषविचारस्मरणादिप्रणिधानाभिमुखस्याऽऽत्मनोऽनुग्राहका पुद्गला वीर्यविशेषावर्जनसमर्था मनस्त्वेन परिणता इति कृत्वा पौद्गलिक नाकाशमय ।

**अर्थांतरमिति चेन्न अनेकांतात् इंद्रियवत् ॥ २१ ॥** स्यादेतत् अर्थांतर आत्मनो मन इति ? तन्न । किं कारण ? अनेकांतात् इंद्रियवत् । यथा वीर्यांतरायज्ञानावरणक्षयोपशमापेक्षस्य आत्मन एवेंद्रियपरिणामादेशात्स्यादनन्यदिंद्रिय, इंद्रियनिवृत्तावपि आत्मनोऽवस्थानात् । स्यादन्यत् तथाऽऽत्मन एव तत्क्षयोपशमापेक्षस्य मन परिणामादेशात् स्यादनन्यत् मनोनिवृत्तावात्मनोऽवस्थानात् स्यादन्यत् ।

**अवस्थायीति चेन्न अनंतरसमयप्रच्युतेः ॥ २२ ॥** स्यादेतत अवस्थायि मन , न तस्य निवृत्तिरिति ? तन्न । किं कारण ? अनंतरसमयप्रच्युते । मनस्त्वेन हि परिणता पुद्गला गुणदोषविचारस्मरणादि कार्य कृत्वा तदनंतरसमय एव मनस्त्वात् प्रच्यवंते ।

**आदेशवचनाच्च ॥ २३ ॥** नायमेकांत अवस्थाय्येव मन इति । कुत ? आदेशवचनात् । द्रव्यार्थादेशात् मन स्यादवस्थायि, पर्यायादेशात् स्यादनवस्थायि ।

**एकद्रव्यमिति चेन्नाऽसामर्थ्यात् ॥ २४ ॥** स्यादेतत् एकद्रव्य मन प्रयात्म वर्तते इति, उक्त च "प्रयत्नायौगपद्यात् ज्ञानायौगपद्याच्चैक मन" इति ? तन्न । किं कारणमसामर्थ्यात् । कथमसामर्थ्यं ? परमाणुमात्रत्वात् । परमाणुमात्र हि मन तदात्मनेंद्रियेण च युक्त सत् स्वप्रयोजन प्रति व्याप्रियते इत्यभिमत । तत्रेद विचार्यते तदात्मेंद्रियाभ्या सर्वात्मना वा सबध्येत तदेकदेशेन वा ? यदि सर्वात्मना तयोरात्मेंद्रिययोरर्थांतरभावात् व्यतिरिक्तयोरन्यतरेण सर्वात्मना सबध स्यात्, अणो मनस नोभाभ्या युगपद्विरोधात् । अथान्येन देशेनाऽऽत्मना सबध्यते अन्यदेशेनेंद्रियेणैव सति प्रदेशवत्त्व मनस प्रसक्त तथानिष्टमणुमात्रत्वात् मनस । किंच यदात्मा मनसा सर्वात्मना सबध्यते मनसाणुत्वाद् आत्मनोप्यणुत्व, आत्मनो विभुत्वात् मनसो वा

विशुत्व प्रसज्यते। अथैकदेशेनाऽऽत्मा मनसा संयुज्यते ननु प्रदेशवत्त्वमात्मनः प्रसक्त। ततश्चतुष्टयत्रयद्वयसन्निकर्षजज्ञानसुखदुःखादीनां प्रदेशवृत्तित्वात् आत्मनः कश्चित् प्रदेशो ज्ञानादियुक्तः कश्चित् प्रदेशो ज्ञानादिविरहित इति। यत्र ज्ञानादिविरहितस्तत्रात्मलिंगाभावात् तदभाव इति सर्वगतत्वाभावः स्यात्। तथेंद्रियेण मनो यदि सर्वात्मना संयुज्यते इंद्रियस्याणुमात्रत्वान्नाणुत्वं। अथैकदेशेन मनः इंद्रियेण संयुज्यते न तर्हि अणुत्वं। किं च गुणगुणिनोरन्यात्वान्नित्यत्वाच्च मनसः संयोगविभागपरिणामाभावात् नास्यात्मना नचेंद्रियैः संयोगविभागौ स्तः। अथ संयोगविभागाभ्यां मनः परिणमते न तर्हि नित्यत्वं। न च गुणगुणिनोरन्यत्वं। अचेतनत्वाच्च मनसः अनेनैव इंद्रियेणाऽनेनैव चात्मना संयोक्तव्यं नेंद्रियांतररिति विशेषज्ञानाभावात्। प्रतिनियतात्मेंद्रियसंयोगाभावः कर्मवदिति चेन्न। पौरुषेयपरिणामानुरंजितत्वात् कर्मणः, स्याच्चैतन्यं, पुद्गलद्रव्यादेशाच्च स्यादचेतनत्वमिति विषमो दृष्टांतः। सौक्ष्म्याच्च मनसश्चक्षुरादीनां रूपादिग्रहणयोग्यत्वाभावः अणुना मनसा चक्षुरादेः कृत्स्नस्याऽनधिष्ठितत्वात्। यावान् देशश्चक्षुरादीनामणुना मनसाधिष्ठितस्तावता एव रूपादिग्रहणसामर्थ्यं भवेत्। न कृत्स्नस्य, दृष्टं च कृत्स्नग्रहणं तस्मान् नाणु।

**आशुसंचारीति चेन्न अचेतनत्वात्** ॥२५॥ स्यान्मतं अणुमात्रमपि सन्मनः आशु संचारित्वात् कृत्स्नग्रहणहेतुः इति? तन्न। किं कारणमचेतनत्वात्। न हि अचेतनस्य मनसः बुद्धिपूर्विका सर्वत्र व्यापृतिर्युक्ता।

**अदृष्टवशादिति चेन्न क्रियापरिणामाभावात्** ॥ २६ ॥ स्यादेतत् पुरुषेण प्रेर्यमाणमलातचक्रमाशु संचरणात् सर्वत्रोपलभ्यते, तथाऽदृष्टवशान्मनसो भ्रमणमिति? तन्न। किं कारणं? क्रियापरिणामाभावात्। क्रियावता हि पुरुषेण प्रेर्यमाणं मलातचक्रं सर्वत्रोपलभ्यते इत्येतद्युक्तं, अदृष्टं पुनरात्मगुणः स्वयमक्रियोऽन्यत्र क्रियाहेतुरित्येतदयुक्तमित्युक्तं पुरस्तात्।

**अनादिसंबंधमिति चेन्न संयोगित्वात्** ॥२७॥ स्यादेतत् अनादिसंबंधं मनः स्वभावत एवेति? तन्न। किं कारणं? संयोगित्वात्। अप्राप्तिपूर्विका हि प्राप्तिः संयोगः इत्यणुमनोनादिनाभ्युपगम्यते इति मनोद्रव्यस्याऽऽत्मनाऽनादिसंबंधः। क्षायोपशमिकत्वाच्च नार्हतस्य आत्मनाऽनादिसंबंधं मन इति सिद्धमस्ति।

**तत्परित्यागविरोधाच्च** ॥ २८ ॥ यदि अनादिसंबंधं मनो भवेत् अतोऽस्य परित्यागविरोधः स्यात्। अस्ति च परित्यागः, अतो नानादिसंबंधं मनः।

**कर्मवदिति चेन्न अनेकांतात्** ॥ २९ ॥ स्यादेतत् यथा जीवकर्मणोरनादिसंबंधेपि कर्मपरित्यागाविरोधः तथा मनसोपीति? तन्न। किं कारणं अनेकांतात्। नायमेकांतः जीवकर्मणोरनादिसंबंध इति, किं तर्हि? कर्मसंबंधसंतत्यपेक्षया स्यादनादिसंबंधः, मिथ्यादर्शनादिप्रत्ययापादितसंबंधभेदापेक्षया स्यादादिमान्, अतोऽस्य तत्प्रत्यनीकभावनाप्रकर्षसन्निधौ परित्याग इति नास्ति विरोधः।

**इंद्रियसहकारिवेदनावगमादिति चेन्न चेतनास्वभावत्वात्** ॥३०॥ स्यादेतदिंद्रियाणां सहकारिकारणं मनः। कुतः? चक्षुरादिभिरिष्टानिष्टरूपरसादिविषयोपलब्धौ तत्सान्निध्ये सुखदुःखवेदनावगमात् आत्मैव नान्योस्य व्यापारोस्ति इति? तन्न। किं कारणं? चेतनास्वभावत्वात्। निष्प्राय पिंडवत् इंद्रियपरिणामात् इंद्रियमनश्चेतनास्वाभाव्यात् इंद्रियाण्येव वेदनावगमं कुर्वंति। अतश्चैतदेवं यदि मनोऽन्तरेण इंद्रियाणां वेदनावगमो न स्यात् एकेंद्रियविकलेंद्रियाणामसंज्ञिपंचेंद्रियाणां च वेदनागमो न स्यात्।

**पृथगुपकारानुपलंभात् तदभाव इति चेन्न गुणदोषविचारादिदर्शनात्** ॥ ३१ ॥ स्यान्मतं नास्ति मनः पृथगुपकारानुपलंभात् इति? तन्न। किं कारणं? गुणदोषविचारादिदर्शनात् मनसः। मन उपलब्धिमता आत्मना मनस्त्वेन परिणमिता पुद्गलाः तिमिराधकारादिबाह्याभ्यंतरेंद्रियप्रतिघातहेतुसान्निध्येपि गुणदोषविचारस्मरणादिव्यापारे साचिव्यमनुभवंति अतोस्त्यंतःकरणं मनः।

**विज्ञानमिति चेन्न तत्सामर्थ्याभावात्** ॥ ३२ ॥ स्यान्मतं न मनो नामाऽन्यदस्ति किं तर्हि विज्ञानमेव किंचिन्मन इति व्यपदिश्यते। उक्तं च-

षण्णामनन्तरातीत विज्ञान यद्धि तन्मन' ।

इति तन्न किं कारण ? तत्सामर्थ्याभावात्। वर्तमानमपि विज्ञान बाह्यमर्थ नालबोद्धुमल किमग पुनरतीत। वर्तमान तावद्विज्ञान क्षणिक पूर्वोत्तरविज्ञानसबन्धनिरुत्सुक कथ गुणदोषविचारस्मरणादिव्यापारे साचिव्य कुर्यात् अनुस्मरण हीद स्वयमनुभूतस्यार्थस्य दृष्ट नानुभूतस्य। न च क्षणिकैकान्ते तत्सभवति। एकसतानपतितत्वात् तदुपपत्तिरिति चेन्न तदवस्तुत्वात् तदतीतमत्यतमसत् कथमिव गुणदोषविचारस्मरणादौ सहायी भवेत्। आलयविज्ञान बीजशक्तिरूप सदवस्थितमालम्बन भवतीतिचेत्, तस्य एकस्य कालान्तरावस्थायित्वाभ्युपगमे क्षणिकप्रतिज्ञाहानि । चेत्तदालम्बनाभाव ।

**प्रधानविकार इति चेन्न अचेतनत्वात्** ॥३३॥ स्यादेतत् न पौद्गलिक मन । किं तर्हि ? प्रधान-विकार, प्रधानस्य महदहकारादिभावेन परिणामिन कश्चिद्विकारविशेषो मन इत्याख्यायते इति ? तन्न। किं कारण ? अचेतनत्वात्। प्रधानमचेतन तद्विकाराश्च तदात्मका इति घटवदचेतनस्य तस्य गुणदोषविचारणादि-व्यापारे साचिव्याभाव । किं च मन कारण विचारादे कर्ता पुरुष प्रधान वा स्यात् ? न तावत् पुरुष निर्गुणत्वात्। सात्त्विका हि गुणदोषविचारादयो न च प्रधान तस्याऽचेतत्वात्। न हि लोके किंचिदचेतन-गुणदोषविचारादे कर्तृ दृष्ट। किं च —

**तद्व्यतिरेकासद्भाव** ॥ ३४ ॥ प्रधानत्वात् सत्त्वरजस्तमसां साम्यावस्थानरूपात् महदहकारा-दय परिणामा वैषम्यरूपा व्यतिरिक्ता वा स्युरव्यतिरिक्ता वा। यदि व्यतिरिक्ता कार्यकारणैकत्वैकान्तप्र-तिज्ञाहानि । अथाव्यतिरिक्ता प्रधानमेव न परिणामा नाम केचन सतीति मनसो निवृत्ति ।

**कोष्ठ्यो वायुरुच्छ्वासलक्षणः प्राणः** ॥ ३५ ॥ वीर्यान्तरायज्ञानावरणक्षयोपशमागोपागनामोद-यापेक्षिणाऽऽत्मना उदस्यमान कोष्ठ्यो वायुरुच्छ्वासलक्षण प्राण इत्युच्यते ।

**बाह्यो वायुरभ्यन्तरीक्रियमाणोऽपानः** ॥ ३६ ॥ तेनैवाऽऽत्मना बाह्यो वायुरभ्यन्तरीक्रियमाणो-'नि श्वासलक्षणोऽपान इत्याख्यायते। एतावप्यात्मानुग्राहिणौ जीवितहेतुत्वात्।

**तन्मूर्तिमत्त्व प्रतिघातादिदर्शनात्** ॥ ३७ ॥ तयो प्राणापानयो तेषां वाड्मन प्राणापानानां वा मूर्तिमत्त्वमवगतव्य। कुत ? प्रतिघातादिदर्शनात्। प्रतिभयहेतुभिरशनिशब्दादिभिर्मनस प्रतिघातो दृश्यते, सुरादिभिश्चाऽभिभव । हस्तपुटादिभिरास्यसवरणात् प्राणापानयो प्रतिघात उपलभ्यते, श्लेष्मणा चाभि-भव नचाऽमूर्तस्य मूर्तिमद्भिरभिघातादय स्यु ।

**अत आत्मास्तित्वसिद्धिः प्राणापानादिकर्मणः तत्कार्यत्वात्** ॥ ३८॥ अत आत्मनोऽस्तित्व प्रासिधत्। कुत प्राणापानादिकर्मण तत्कार्यत्वात्। यथा यन्त्रप्रतिमाचेष्टित प्रयोक्तुरस्तित्व गमयति। तथा प्राणापानादिकर्मापि क्रियावन्तमात्मान साधयति । असति तस्मिन्नप्रवृत्ते। नाकस्मात् नियमदर्शनात्। न विज्ञानादि कृत, तेषाममूर्तत्वे प्रेरणशक्तिविरहात्। न रूपस्कन्धकृत तस्याचेतनत्वात्। सर्वेषां निरीहकत्वात् कर्माभाव इति चेन्न देशान्तरप्राप्त्यभावप्रसगात्। वायुधातुविशेषात् देशान्तरे प्रादुर्भाव क्रियेत्युपचर्यते न मुख्या क्रियास्ति। 'भूतिर्येषा क्रिया सैवेति' वचनात् इति चेन्न वायुधातुविशेषासामर्थ्यात्। वायुधातुरपि नि क्रिय स कथमिव देशान्तरप्रादुर्भूतिहेतु स्यात्। क्षणिकत्वाभ्युपगमादनवस्थितानां कर्माभाव इति चेन्न असिद्धत्वात् अयुक्तेश्च ।

**प्राण्यगत्वाद्द्वद्वैकवद्भावप्रसग इति चेन्नाऽगागिद्वद्वे तदभावात्** ॥ ३९ ॥ स्यान्मत शरीर च वाक्च मनश्च प्राणश्चाऽपानश्च शरीरवाड्मन प्राणापाना इति द्वद्वे कृत एकवद्भाव प्राप्नोति। कुत ? प्राण्यगत्वात् इति ? तन्न। किं कारण ? अगागिद्वद्वे तदभावात्। प्राण्यगानामेव यो द्वद्व तस्यैकवद्भाव उक्त अगमवयव एकदेश इत्यनर्थान्तर, शरीरमगागि चास्तीत्येकवद्भावो न भवति। अथवा वागादानि नागानि दन्तादिवदनवस्थितत्वात्। अथवा द्वद्वैकवद्भाव' सर्व समाहारविषय समाहारश्चैकप्राणिविषयाणां युक्त, नानाप्राणिस्थाश्चैते विवक्षिता ततो नास्त्येकवद्भाव ।

**पुद्गलशब्दो निर्दिष्टार्थः ॥ ४० ॥** पुद्गलशब्दस्यार्थो निर्दिष्ट पुगिलनात् पूरणगलनाद्वा पुद्गला

**उपग्रहप्रकरणात्कर्तरि षष्ठी ॥ ४१ ॥** उपग्रहशब्द प्रकृत स च कर्मसाधन. तेन कर्तुरनु क्तत्वात् पुद्गलानामिति कर्तरि षष्ठी द्रष्टव्या । तेन शरीरादिपरिणामैरात्मना पुद्गला उपग्रहीतार इत्युक्त भवति । ते चात्मान सक्रिया कर्ममलीमसा सत शरीरादिकृतमुपकार तद्वधपूर्वक अनुभवतीत्यतदुक्त एकातनि।क्रियत्वे अत्यतशुद्धत्वे च शरीरादिभि बधाभावात् तत्कृतोपकाराभाव तत्क्रियाहेतुत्वाभावश्चेति ससाराभाव तदभावात् कुतो मोक्ष ? । यथा चैतच्चतुष्टय गमनव्याहरणचिंतनप्राणनादिभावेन परिणाम विशेषाहितमनुग्राहक पौद्गलिकत्वात् तथाऽयमपि तत्कृत एवोपकार । इति प्रदर्शयन्नाह—

## सुखदुःखजीवितमरणोपग्रहाश्च ॥ २० ॥

**बाह्यप्रत्ययवशात् सद्वेद्योदयादात्मनः प्रसादः सुख ॥ १ ॥** यदात्मस्य सद्वेद्य कर्म द्रव्यादि-बाह्यप्रत्ययवशात् परिपाकमुपयाति तदात्मन प्रसाद प्रीतिरूप सुखमित्याख्यायते ।

**तथाऽसद्वेद्योदयात् आत्मपरिणामो यः सक्लेशप्राय स दुःखमिति ॥२॥** तथा तेन प्रकारेण बाह्यप्रत्ययवशेनेत्यर्थ । असद्वेद्योदयादात्मपरिणामो य सक्लेशप्राय स दु खमिति कथ्यते ।

**भवस्थितिनिमित्तायुर्द्रव्यसंबधिनो जीवस्य प्राणापानलक्षणक्रियाविशेषाव्युपरमो जीवितं ॥ ३ ॥** भवधारणकारणमायुराख्य कर्म तदुदयापादित भवस्थिति आदधानस्य जीवस्य पूर्वोक्तस्य प्राणा-पानलक्षणस्य क्रियाविशेषाविच्छेदो जीवितमिति प्रत्येतव्य ।

**तदुच्छेदो मरणं ॥ ४ ॥** तस्य जीवितोच्छेदो जीवस्य मरण इत्यवसेय ।

**सुखग्रहणमादौ तदर्थत्वात्परिस्पंदस्य ॥ ५ ॥** सर्वेषा प्राणिना परिस्पद सुखप्राप्त्यर्थ ततोऽस्य ग्रहणमादौ क्रियते ।

**तदनतर दु खवचनं तत्प्रतिपक्षत्वात् ॥ ६ ॥** सुखस्य हि प्रतिपक्षभूत दु ख अप्रीतिहेतुत्वात् ततोस्य वचन तदनतर क्रियते ।

**जीविनस्तदुभयदर्शनात् तदनतर जीवितग्रहण ॥ ७ ॥** यत तदुभय सुखदु ख जीविनो भवति तत तदनतर जीवितग्रहण क्रियते ।

**अते प्राप्यत्वान्मरणस्याते वचन ॥ ८ ॥** आयु क्षयनिमित्त मरणमते प्राणिभिराप्यत इति तदुपादान अते क्रियते । सुख च दुख च जीवित च मरण च सुखदु खजीवितमरणानि तान्येवोपग्रहः सुखदु खजीवितमरणोपग्रह । केषा ? पुद्गलानामिति प्रकृत अभिसबध्यते ।

**प्रकृतत्वादुपगृहवचनमिति चेन्न स्वोपगृहदर्शनार्थत्वात् ॥ ९ ॥** स्यान्मत प्रकृतमुपग्रहवचन-मस्ति तेन शरीरवाङ्मन प्राणापाने सुखदु खजीवितमरणेश्च पुद्गला जीवान् उपगृह्णति इत्यस्मिन्नर्थे प्रतिपादिते पुनरुपग्रहवचनमनर्थकमिति ? तन्न ? किं कारण, स्वोपगृहप्रदर्शनार्थत्वात् । यथा धर्माधर्माकाशानि परेषामेवोपग्रह कुर्वंति न तथा पुद्गला, स्वोपग्रहश्चेषामस्तीति प्रदर्शनार्थं पुनरुपग्रहवचन क्रियते । तद्यथा-कसादीना भस्मादीनि जलादीना कतकादीनि अय प्रभृतीनामुदकादीनि उपकार कुर्वंति ।

**मरणमात्मोपग्रहो नेति चेन्न निर्विण्णस्य तत्प्रियत्वात् ॥ १० ॥** स्यादेतत् मरणमात्मोपग्रहो नोपपद्यते । कुत ? अनिष्टत्वात् । न हि कस्यचित् मरणमीप्सितमिति ? तन्न । किं कारण ? निर्विण्णस्य तत्प्रिय-त्वात् । व्याधिपीडाशोकादिभिर्जीवितान्निवृत्तादरस्य निर्विण्णस्य हि जनस्य मरण प्रिय लोके दृश्यत ।

**प्रयोजनप्रतिपादनार्थत्वात् च दु खवत् ॥ ११ ॥** यथा दु खमनिष्टमपि जीवाना पुद्गलै प्रति-पाद्य प्रयोजनमिति गृह्यते तथा मरणमपीति नास्ति दोष ।

**लघ्वर्थमेकसूत्रीकरणमिति चेन्नाऽऽशंकानिवृत्त्यर्थत्वात् ॥ १२ ॥** स्यान्मत शरीरवाङ्मन प्राणापाना सुखदु खजीवितमरणोपग्रहाश्च पुद्गलानामित्येकमेव सूत्र कर्तव्य लघ्वर्थमिति ? तन्न । किं कारण ? आशंकानिवृत्त्यर्थत्वात् । शरीरवाङ्मन प्राणापाना इतत्रश्चत्वार सुखदु खजीवितमरणानि च फलानि चत्वारि तेषां यथासंख्यमनिष्टमाशंक्य तन्निवृत्त्यर्थं नानायोगकरण । उत्तरसूत्र सुखादिसंबंधनार्थं च ।

**तदनुपपत्तिर्नित्यानित्यपक्षयोर्विकारावस्थानाभावात् ॥ १३ ॥** तेषा सुखादीना अनुपपत्ति क ? नित्यपक्षेऽनित्यपक्षे च । कुत ? विकारावस्थानाभावात् । तद्यथा—नित्यपक्षे तावत् । आत्मना पूर्वपरकालतुल्यत्वात् परिणामांतरसंक्रांतिलक्षणस्य विकारस्याभावात् सुखादिकल्पनमयुक्त । अनित्यपक्षे चावस्थानाभावात् सुखादिसंबंधोनुपपन्न । अवस्थितस्य हि इष्टानिष्टशब्दस्पर्शादिसन्निपाते सति सुखादिप्रभव स्यात् स चाकस्मान्न भवति । किं तर्हि ? कुशलाकुशलभावनापूर्वक । कुशलाकुशलभावना च स्मृत्यभिसंबधिचेष्टाभिर्निर्वृत्तिलक्षणा । स्मृत्यादयश्चानवस्थितस्य न संभवतीत्यतो नित्यानित्यात्मकस्य आत्मन सुखादिनिरूपण निरवद्यं । आह अजीवद्रव्यचतुष्टयस्य यथा परानुग्रह सातातिक किमेवमात्मनामप्युतान्या विधिरस्तीत्यत्रोच्यते—

## परस्परोपग्रहो जीवानां ॥ २१ ॥

**कर्मव्यतिहारविषयः परस्परशब्दः ॥ १ ॥** कर्मव्यतिहार क्रियाव्यतिहार इत्यर्थ तद्विषयोय परस्परशब्द ।

**परस्परस्योपग्रह परस्परोपग्रह ॥ १ ॥** क पुनरसौ ? स्वामिभृत्यादिभावेन वृत्ति परस्परोपग्रह । स्वामी भृत्य आचार्य शिष्य इत्येवमादिभावेन वृत्ति परस्परोपग्रह इत्युच्यते । स्वामी तावत् वित्तत्यागादिना भृत्यादीनामुपग्रहे वर्तते । भृत्याश्च हितप्रतिपादनेन अहितप्रतिषेधेन च । आचार्य उभयलोकफलप्रदोपदेशदर्शनेन तदुपदेशविहिताक्रियानुष्ठापनेन च शिष्याणां अनुगृहे वर्तते । शिष्या अपि तदनुकूलवृत्त्या ।

**प्रकृतत्वादुपग्रहावचनमिति चेन्नानंतरचतुष्टयप्रतिनिर्देशार्थत्वात् ॥ २ ॥** स्यादेतत् प्रकृतमुपग्रहवचनमस्ति तदभिसंबधात् पुनरुपग्रहवचन अनर्थकमिति ? तन्न । किं कारण ? अनंतरचतुष्टयप्रतिनिर्देशार्थत्वात् । नापूर्व कश्चित् परस्परोपग्रहो जीवानामस्ति, अनंतरसूत्रे निर्दिष्ट सुखादिचतुष्टयोपग्रह एवेति प्रदर्शनार्थं पुनरुपग्रहवचन ।

**स्त्रीपुंसरतिवदनियमप्रदर्शनार्थं च ॥ ३ ॥** यथा स्त्रीपुंसौ यौगपद्येन रतिक्रिया परस्परस्योपकुरुत न तथा सुखाद्युपग्रहे नियम इति प्रदर्शनार्थं च पुनरुपग्रहवचन क्रियते । जीवा हि कश्चित् स्वस्य सुख कुर्वन् परस्यैकस्य सुख करोति कश्चिद्द्वयो कश्चिद्बहूना । कश्चिद्दु खमात्मन कुर्वन् परस्यैकस्य द्वयो बहूनां वा करोति । कदाचिद्द्वौ बहवो वाऽऽत्मन सुख दु ख वा कुर्वंत परस्यैकस्य द्वयोर्बहूना वा सुख दु ख मुत्पादयति । एवमितरत्रापि योज्य । आह—यदि अवश्य सतोपकारिणा भवितव्य सश्च कालोऽभिमत स किमुपकार ? इत्यत्रोच्यते तस्य खलु वक्ष्यमाणस्वतत्त्वस्याऽमूर्ते —

## वर्तनापरिणामक्रिया परत्वापरत्वे च कालस्य ॥२२॥

अथवा यथा धर्मादीनामस्तित्वस्याऽऽविर्भावक उपकार उक्तो गत्यादि तथा कालस्यापि प्रतिनियत उपकारोस्तित्वससूचकोस्ति उत नास्ति ? अस्त्युपकार । यद्येव स उच्यता इत्यत आह वर्तनादीनीति ।

**करणाधिकरणयोर्वर्त्तनेति चेयुटि सति ङीप्रसंग ॥ १ ॥** स्यादेतत वर्ततेऽनया अस्या चेति विगृह्य वर्तनाशब्दो नि पाद्यत इत्येव सति परत्वाद्युटि सति टित्त्वात् ङी प्राप्नोति कथ तर्हि सिद्धि ?

**णिजतायुचि वर्तना ॥ २ ॥** स्त्रीलिंगे कर्मणि भावे वा णिजताद्युचि सति वर्तनेति भवति । वर्त्यते वर्तनमात्र वा वर्तनेति ॥

**अनुदात्तेत्त्वात्ताच्छीलिको वा ॥ ३ ॥** अथवा वृत्तिरयमनुदात्तेत्ततस्ताच्छीलिको युच् वर्तनशीला वर्तनेति । का पुनर्वर्तना ।

**प्रतिद्रव्यपर्यायमन्तर्नीतैकसमया स्वसत्तानुभूतिर्वर्तना ॥ ४ ॥** द्रव्यस्य पर्यायो द्रव्यपर्याय द्रव्यपर्याय प्रति प्रतिद्रव्यपर्याय। अन्तर्नीत एक समयोऽनया साऽन्तर्नीतैकसमया, पुनरसौ स्वसत्तानुभूति, उत्पादव्ययध्रौव्यैक्यवृत्ति सत्ता न ततोन्या काचिदस्ति स्वसत्ताप्रतिनियता असाधारणीत्यर्थ बुद्ध्यभिधाना नुप्रवृत्तिलिंगानुमीयमाना सादृश्योपचारादेकापि सती जीवाजीवतद्भेदप्रभेदे सम्बधमापद्यमाना विशिष्टशक्ति-भिरवसीयते। तस्या अनुभूति स्वसत्तानुभूतिर्वर्तनेत्युच्यते एकस्मिन्नविभागिनि समये धर्मादीनि द्रव्याणि षडपि स्वपर्यायैरादिमदनादिमद्भिरुत्पादव्ययध्रौव्यविकल्पैर्वर्तंत इति कृत्वा तद्विषया वर्तना ।

**सानुमानिकी व्यावहारिकदर्शनात् पाकवत् ॥ ५ ॥** यथा व्यावहारिकस्य पाकस्य तदुलवि-क्लेदनलक्षणस्यौदनपरिणामस्य दर्शनादनुमीयते अस्ति प्रथमसमयादारभ्य सूक्ष्मपाकाभिनिर्वृत्ति प्रतिसमय-मिति । यदि हि प्रथमसमयेऽग्न्युदकसन्निधाने कश्चित् पाकविशेषो न स्यात् । एव द्वितीये तृतीये च न स्यात् इति पाकाभाव एव स्यात् । तथा सर्वेषामपि द्रव्याणा स्वपर्यायाभिनिर्वृत्तौ प्रतिसमय दुरधिगमा नि पत्तिरभ्युपगतव्या ।

**तल्लक्षणः काल ॥ ६ ॥** सा वर्तना लक्षण यस्य स काल इत्यवसेय । समयादीनां क्रियाविशे-षाणा समयादिनिर्वृत्यानां च पर्यायाणा पाकादीना स्वात्मसद्भावानुभवनेन स्वत एव वर्तमानानां निर्वृत्तेर्बहि-रगो हेतु समय पाक इत्येवमादिस्वसंज्ञारूढिसद्भावे काल इत्यय व्यवहारो कस्मान्न भवतीति तद्व्यवहारहे-तुनाऽन्येन भवितव्यमित्यनुमेय ।

**आदित्यगतेरिति चेन्न तद्गतावपि तत्सद्भावात् ॥ ७ ॥** स्यादेतत् आदित्यगतिनिमित्ता द्रव्याणां वर्तनेति ? तन्न। किं कारण ? तद्गतावपि तत्सद्भावात्। सवितुरपि क्रियाया भूतादिव्यवहारविषयभूतायां क्रिये स्येव रूढाया वर्तनादर्शनात् तद्धेतुनान्येन कालेन भवितव्य ।

**आकाशप्रदेशनिमित्तेति चेन्न तां प्रत्यधिकरणभावाद्भाजनवत् ॥ ८ ॥** स्यादेतत् आकाश-प्रदेशनिमित्ता वर्तना नान्यस्तद्धेतु कालोऽस्तीति ? तन्न किं कारण तां प्रत्यधिकरणभावात् भाजनवत् । यथा भाजन तदुलानामधिकरण नतु तदेव पचति तेजसो हि स व्यापारस्तथाकाशमप्यादित्यगत्यादिवर्त-नायामधिकरण न तु तदेव निर्वर्तयति कालस्य हि स व्यापार ।

**सत्तात इति चेन्न तस्या अप्यनुग्रहात् ॥ ९ ॥** स्यान्मत सत्तानाम सर्वपदार्थानां साधारण्यस्ति तद्धेतुका वर्तनेति तन्न। किं कारण ? तस्या अप्यनुग्रहात् कालानुगृहीतवर्तना हि सत्तेति ततोप्यन्येन कालेन भवितव्य ।

**द्रव्यस्य स्वजात्यपरित्यागेन प्रयोगविस्रसालक्षणो विकारः परिणाम ॥ १० ॥** द्रव्यस्य चेतनस्येतरस्य वा द्रव्यार्थिकनयस्य अविवक्षातो न्यग्भूताना स्वा द्रव्यजाति अजहत पर्यायार्थिकनयार्पणात् प्राधान्य बिभ्रता केन चित् पर्यायेण प्रादुर्भाव पूर्वपर्यायनिवृत्तिपूर्वको विकार प्रयोगविस्रसालक्षण परिणाम इति प्रतिपत्तव्य । तत्र प्रयोग पुद्गलविकारस्तदनपेक्षा विक्रिया विस्रसा । तत्र परिणामो द्विविध अना-दिरादिमांश्च । अनादिर्लोकसस्थानमदराकारादि । आदिमान् प्रयोगजो वैस्रसिकश्च । तत्र चेतनस्य द्रव्य-स्यौपशमिकादिर्भाव कर्मोपशमाद्यपेक्षोऽपौरुषेयत्वात् वैस्रसिक इत्युच्यते । ज्ञानशीलभावनादिलक्षण आचा-र्यादिपुरुषप्रयोगनिमित्तत्वात् प्रयोगज । अचेतनस्य च मृदादे घटसस्थानादिपरिणाम कुलालादिपुरुष-प्रयोगनिमित्तत्वात् प्रयोगज । इन्द्रधनुरादिनानापरिणामो वैस्रसिक । तथा धर्मादेरपि परिणामो योज्य ।

**परिणामाभावः सत्त्वासत्त्वयोर्दोषोपपत्तेरिति चेन्न पक्षांतरत्वात् ॥ ११ ॥** स्यान्मत नास्ति परिणाम कुत सत्त्वासत्त्वयो दोषोपपत्ते । बीजमकुरे स्याद्वा न वा ? यदि सदकुरे बीजमकुराभावो बीजवत्।

अथासत् न बीजमङ्कुरत्वेन परिणतं अङ्कुरे तत्स्वभावाभावात् अतः परिणामाभाव. इति ? तन्न। किं कारण ? पक्षांतरत्वात्। यथा सत्पक्षदोषो नाऽसत्पक्षं स्पृशति पक्षांतरत्वात्। असत्पक्षदोषोपि सत्पक्षं तत एव। तथा सदसदेकांतपक्षदोषावप्यनेकांतपक्षं न स्पृशतः पक्षांतरत्वादेव, इतरथा हि पक्षसंकरप्रसंग। उभयदोषप्रसंग इति चेन्न जात्यंतरत्वान्नरसिंहरूपवत्। शालिबीजादिद्रव्यादेशात् अङ्कुरे स्याद्बीजमस्ति यद्यन्वयोच्छेदः स्यात्फलविशेषाभाव प्रसज्येत। शालिबीजादिपर्यायार्थादेशात् स्यादङ्कुरे नास्ति बीजं यद्यविपरिणाम स्यात् अन्यथा वृत्तिदर्शनमयुक्तं स्यात्।

**प्रतिषेधाभावाच्च ॥ १२ ॥** इदमस्ति, त्वं पृष्टव्य ? परिणाम सन्वा प्रतिषिध्येताऽसन्वेति उभयथा च प्रतिषेधाभाव ? यदि सन् सत्त्वादेव न प्रतिषिध्येत। अथ सन्नपि प्रतिषिध्यते। ननु परिणामप्रतिषेधोपि सत्त्वात् प्रतिषिध्यत इति प्रतिषेधाभाव। तदभावादप्रतिषिद्ध परिणाम। अथ प्रतिषेध सत्त्वादप्रतिषिद्ध ननु परिणामोपि सत्त्वात् अप्रतिषिद्ध। अथाऽसन् परिणाम ? असत्त्वादेव खरविषाणवत् न प्रतिषिध्यते इति प्रतिषेधाभाव। अथवा यस्य परिणामो नास्ति स वक्तृत्वेनापरिणत वाच्यास्याप्यर्थस्याभिधेयत्वेनापरिणाम अभिधानस्य च वाचकत्वेनापरिणाम इति वक्तृवाच्यवचनानामभावात् प्रतिषेधाभाव, तदभावादप्रतिषिद्ध परिणाम स्थित।

**अन्यानन्यत्वदोषादिति चेन्नोक्तत्वात् ॥ १३ ॥** स्यान्मतं नास्ति परिणाम कुत ? अन्यानन्यत्वयोर्दोषात्। बीजादङ्कुरोऽन्यो वा स्यात् अनन्यो वा ? यदि अन्यो बीजादङ्कुर ? न तर्हि बीजपरिणामोऽङ्कुर। अथानन्यो बीजादङ्कुर न तर्हि अङ्कुरोस्ति बीजादनन्यत्वात्। उक्तं च–स्याच्चेद्बीजं परिणतं नान्यो बीजाच्च सोऽङ्कुर तच्च नैव यदि ह्यन्यो न तस्माच्चेन्न सोऽङ्कुर ? तन्न। किं कारण ? उक्तत्वात्। उक्तमेतत् पक्षांतरत्वात् दोषाभाव इति। स्याद्बीजादङ्कुरोन्य स्यादनन्य। यस्मात् प्रागङ्कुरोत्पादात् बीजेऽङ्कुरपर्यायो नासीत् पश्चाच्च जात तस्मात् बीजादङ्कुर पर्यायार्थादेशात् स्यादन्य.। यस्माच्च शालिबीजजातिविशिष्टोऽन्योऽङ्कुरोऽसत्तस्माच्छालिबीजजात्यात्मकद्रव्यार्थादेशात् बीजादङ्कुर स्यादनन्य।

**स न च व्यवस्थिताव्यवस्थितदोषादिति चेन्नानेकांतात् ॥ १४ ॥** स्यान्मतं बीजेऽङ्कुरत्वेन परिणतेऽङ्कुरे बीज व्यवस्थित वा स्यादव्यवस्थितं वा ? यदि व्यवस्थित ? बीजस्य व्यवस्थानात् विरोधात् अङ्कुराभाव। अथाव्यवस्थित न तर्हि बीजमङ्कुरत्वेन परिणत तस्मादुभयत्र दोषान्नास्ति परिणाम इति ? तन्न। किं कारण ? अनेकांतात्। यथा मनुष्यायुर्नामकर्मोदयादङ्गोपाङ्गपर्यायानास्कन्दन् निष्टलाय पिंडयन् अङ्गुल्युपाङ्गपरिणामात् अङ्गुलिरात्मा अतो वीर्यांतरायक्षयोपशमापेक्षोङ्गुल्यात्मा सङ्कोचनप्रसारणपर्यायावास्कन्दन् अनादिपारिणामिकचैतन्यद्रव्यार्थादेशात् स्यात् सन्, पौद्गलिकपरिवृत्तावस्थितांगुल्युपाङ्गपर्यायार्थादेशात् न स्यात् सन्, अत एव स्यादनन्य स्यादवस्थित। संकोचनप्रसारणपर्यायार्थादेशात्स्यादसन् अत एव स्यादन्य स्यादनवस्थित। तथैकेंद्रियवननामायुरुदयान्निष्कृत आत्मैव बीजपर्यायमास्कन्दन् निष्टलाय पिंडवत् बीजपरिणामात् बीजव्यपदेशभाक्। अत किं ? अनादिपारिणामिकचैतन्यद्रव्यार्थादेशात् स्यात् सत्, तत पौद्गलिकशालिजात्येकेंद्रियरूपरसस्पर्शशब्दपर्यायार्थादेशाच्च स्यात् सत्, तत एव स्यादनन्य स्यादनवस्थित। पौद्गलिकशालिबीजपर्यायार्थादेशात्, स्यादसन् अत एव स्यादन्य स्यादनवस्थित। इत्येवमनेकांताश्रयणादेकांतपक्षदोषानुपगमात्।

**वृद्ध्यभावप्रसंग इति चेन्नान्यहेतुत्वात् ॥ १५ ॥** स्यादेतत् नास्ति परिणाम। कुत ? वृद्ध्यभावप्रसंगात्। यदि बीजमङ्कुरत्वेन परिणमेत बीजमात्र स एवाङ्कुर स्यात्। पय परिणामदधिवत्। ततो वृद्ध्यभाव। उक्तं च—

किंचान्यद्यदि तद्बीजं गच्छेदङ्कुरतामिह।
निर्वृद्धिरङ्कुरस्य स्यात् कथं बीजादपुष्कलात् ॥ १ ॥

भौमोदकरससम्बन्धाद्वृद्धिरितिचेन्न परिणामाभावप्रसंगात्। उक्तं च—

**अनुदात्तेत्त्वात्ताच्छीलिको वा ॥ ३ ॥** अथवा वृत्तिरयमनुदात्तेत्ततस्ताच्छीलिको युच् वर्तनशीला वर्तनेति । का पुनर्वर्तना ।

**प्रतिद्रव्यपर्यायमतर्नीतैकसमया स्वसत्तानुभूतिर्वर्तना ॥ ४ ॥** द्रव्यस्य पर्यायो द्रव्यपर्याय. द्रव्यपर्याय प्रति प्रतिद्रव्यपर्याय। अतर्नीत एक समयोऽनया साऽन्तर्नीतैकसमया, पुनरसौ स्वसत्तानुभूति, उत्पादव्ययध्रौव्यैक्यवृत्ति सत्ता न ततोन्या काचिदस्ति स्वसत्ताप्रतिनियता असाधारणीत्यर्थ बुद्ध्यभिधाना नुप्रवृत्तिलिङ्गानुमीयमाना सादृश्योपचारादेकापि सती जीवाजीवतद्भेदप्रभेदे स्वधमापद्यमाना निर्दिष्टशक्तिभिरवसबध्यते। तस्या अनुभूति स्वसत्तानुभूतिर्वर्तनेत्युच्यते एकस्मिन्नविभागिनि समये धर्मादीनि द्रव्याणि षडपि स्वपर्यायैरादिमदनादिमद्भिरुत्पादव्ययध्रौव्यविकल्पैर्वर्तंत इति कृत्वा तद्विषया वर्तना ।

**सानुमानिकी व्यावहारिकदर्शनात् पाकवत् ॥ ५ ॥** यथा व्यावहारिकस्य पाकस्य तदुलविक्लेदनलक्षणस्योदनपरिणामस्य दर्शनादनुमीयते अस्ति प्रथमसमयादारभ्य सूक्ष्मपाकाभिनिर्वृत्ति प्रतिसमयमिति । यदि हि प्रथमसमयेऽग्न्युदकसन्निधाने कश्चित् पाकविशेषो न स्यात् । एव द्वितीये तृतीये च न स्यात् इति पाकाभाव एव स्यात् । तथा सर्वेषामपि द्रव्याणा स्वपर्यायाभिनिर्वृत्तौ प्रतिसमय दुरधिगमा नि परिरभ्युपगतव्या ।

**तल्लक्षणः काल. ॥ ६ ॥** सा वर्तना लक्षण यस्य स काल इत्यवसेय । समयादीनां क्रियाविशेषाणा समयादिनिर्वृत्त्याना च पर्यायाणा पाकादीना स्वात्मसद्भावानुभवनेन स्वत एव वर्तमानानां निर्वृत्तेर्बहिरगो हेतु समय पाक इत्येवमादिस्वसज्ञारूढिसद्भावे काल इत्यय व्यवहारो कस्मान्न भवतीति तद्व्यवहारहेतुनाऽन्येन भवितव्यमित्यनुमेय ।

**आदित्यगतेरिति चेन्न तद्गतावपि तत्सद्भावात् ॥ ७ ॥** स्यादेतत् आदित्यगतिनिमित्ता द्रव्याणां वर्तनेति ? तन्न। किं कारण ? तद्गतावपि तत्सद्भावात्। सवितुरपि क्रियायां भूतादिव्यवहारविषयभूतायां क्रियेत्येव रूढाया वर्तनादर्शनात् तद्धेतुनान्येन कालेन भवितव्य ।

**आकाशप्रदेशनिमित्तेति चेन्न तां प्रत्याधिकरणभावाद्भाजनवत् ॥ ८ ॥** स्यादेतत् आकाशप्रदेशनिमित्ता वर्तना नान्यस्तद्धेतु कालोऽस्तीति ? तन्न किं कारण तां प्रत्यधिकरणभावात् भाजनवत् । यथा भाजनं तदुलानामधिकरण नतु तदेव पचति तेजसो हि स व्यापारस्तथाकाशमप्यादित्यगत्यादिवर्तनायामधिकरण न तु तदेव निर्वर्तयति कालस्य हि स व्यापार ।

**सत्तात इति चेन्न तस्या अप्यनुग्रहात् ॥ ९ ॥** स्यान्मत सत्तानाम सर्वपदार्थानां साधारण्यस्ति तद्धेतुका वर्तनेति तन्न। किं कारण ? तस्या अप्यनुग्रहात् कालानुगृहीतवर्तना हि सत्तेति ततोप्यन्येन कालेन भवितव्य ।

**द्रव्यस्य स्वजात्यपरित्यागेन प्रयोगविस्रसालक्षणो विकारः परिणाम ॥ १० ॥** द्रव्यस्य चेतनस्येतरस्य वा द्रव्यार्थिकनयस्य अविवक्षातो न्यग्भूतानां स्वां द्रव्यजातिं अजहत पर्यायार्थिकनयार्पणात् प्राधान्य बिभ्रता केन चित् पर्यायेण प्रादुर्भाव पूर्वपर्यायनिवृत्तिपूर्वको विकार प्रयोगविस्रसालक्षण. परिणाम इति प्रतिपत्तव्य । तत्र प्रयोग पुद्गलविकारस्तदनपेक्षा विक्रिया विस्रसा । तत्र परिणामो द्विविध अनादिरादिमांश्च । अनादिर्लोकसस्थानमदराकारादि । आदिमान् प्रयोगजो वैस्रसिकश्च । तत्र चेतनस्य द्रव्यस्यौपशमिकादिर्भाव कर्मोपशमाद्यपेक्षोऽपौरुषेयत्वात् वैस्रसिक इत्युच्यते । ज्ञानशीलभावनादिलक्षण आचार्यादिपुरुषप्रयोगनिमित्तत्वात् प्रयोगज । अचेतनस्य च मृदादे घटसस्थानादिपरिणाम कुलालादिपुरुषप्रयोगनिमित्तत्वात् प्रयोगज । इन्द्रधनुरादिनानापरिणामो वैस्रसिक । तथा धर्मादेरपि परिणामो योज्य ।

**परिणामाभावः सत्त्वासत्त्वयोर्दोषोपपत्तेरिति चेन्न पक्षांतरत्वात् ॥ ११ ॥** स्यान्मत नास्ति परिणाम कुत सत्त्वासत्त्वयो दोषोपपत्ते । बीजमकुरे स्याद्वा न वा ? यदि सदकुरे बीजमकुराभावो बीजवत् ।

अथासत् न बीजमकुरत्वेन परिणत अकुरे तत्स्वभावाभावात् अत परिणामाभाव॰ इति ? तन्न । किं कारण ? पक्षांतरत्वात् । यथा सत्पक्षदोषो नाऽसत्पक्ष स्पृशति पक्षांतरत्वात् । असत्पक्षदोषोपि सत्पक्ष तत एव । तथा सदसदेकांतपक्षदोषावप्यनेकांतपक्ष न स्पृशत पक्षांतरत्वादेव, इतरथा हि पक्षसकरप्रसग । उभय-दोषप्रसग इति चेन्न जात्यतरत्वान्नरसिंहरूपवत् । शालिबीजादिद्रव्यादेशात् अकुरे स्याद्बीजमस्ति यद्यन्वयो च्छेद स्यात्फलविशेषाभाव प्रसज्येत । शालिबीजादिपर्यायार्थादेशात् स्यादकुरे नास्ति बीज यद्यविपरि-णाम स्यात् अन्यथा वृत्तिदर्शनमयुक्त स्यात् ।

**प्रतिषेधाभावाच्च ॥ १२ ॥** इदमस्ति, त्व पृष्टव्य ? परिणाम सन्वा प्रतिषिध्येताऽसन्वेति उभयथा च प्रतिषेधाभाव ? यदि सन् सत्त्वादेव न प्रतिषिध्येत । अथ सन्नपि प्रतिषिध्यते । ननु परिणामप्रतिषेधोपि सत्त्वात् प्रतिषिध्यत इति प्रतिषेधाभाव । तदभावादप्रतिषिद्ध परिणाम । अथ प्रतिषेध सत्त्वादप्रतिषिद्ध ननु परिणामोपि सत्त्वात् अप्रतिषिद्ध । अथाऽसन् परिणाम ? असत्त्वादेव खरविषाणवत् न प्रतिषिध्यते इति प्रतिषेधाभाव । अथवा यस्य परिणामो नास्ति स वक्तृत्वेनापरिणत वाच्यास्याप्यर्थस्याभिधेयत्वेनापरिणाम अभिधानस्य च वाचकत्वेनापरिणाम इति वक्तृवाच्यवचनानामभावात् प्रतिषेधाभाव, तदभावादप्रति-षिद्ध परिणाम स्थित ।

**अन्यानन्यत्वदोषादिति चेन्नोक्तत्वात् ॥ १३ ॥** स्यान्मत नास्ति परिणाम कुत ? अन्यानन्यत्वयोर्दोषात् । बीजादकुरोऽन्यो वा स्यात् अनन्यो वा ? यदि अन्यो बीजादकुर ? न तर्हि बीजप-रिणामोऽकुर । अथानन्यो बीजादकुर न तर्हि अकुरोस्ति बीजादनन्यत्वात् । उक्त च—स्याच्चेद्बीज परि-णत नान्यो बीजाच्च सोऽकुर तच्च नैव यदि ह्यन्यो न तस्माच्चेन्न सोऽकुर ? तन्न । किं कारण ? उक्त-त्वात् । उक्तमेतत् पक्षांतरत्वात् दोषाभाव इति । स्याद्बीजादकुरोन्य स्यादनन्य । यस्मात् प्रागकुरोत्पादात् बीजेऽकुरपर्यायो नासीत् पश्चाच्च जात तस्मात् बीजादकुर पर्यायार्थादेशात् स्यादन्य॰ । यस्माच्च शालिबी-जजातिविशिष्टोऽन्योऽकुरोऽस्तस्माच्छालिबीजजात्यात्मकद्रव्यार्थादेशात् बीजादकुर स्यादनन्य ।

**स न च व्यवस्थिताव्यवस्थितदोषादिति चेन्नानेकांतात् ॥ १४ ॥** स्यान्मत बीजेऽकुरत्वेन परिणतेऽकुरे बीज व्यवस्थित वा स्यादव्यवस्थित वा ? यदि व्यवस्थित ? बीजस्य व्यवस्थानात् विरो-धात् अकुराभाव । अथाव्यवस्थित न तर्हि बीजमकुरत्वेन परिणत तस्मादुभयत्र दोषान्नास्ति परि-णाम इति ? तन्न । किं कारण ? अनेकांतात् । यथा मनुष्यायुर्नामकर्मोदयादगोपागपर्यायानास्कदन् निष्ठताय पिंडवत् अगुल्युपागपरिणामात् अगुलिरात्मा अतो वीर्यांतरायक्षयोपशमापेक्षोंगुल्यात्मा सकोच-नप्रसारणपर्यायावास्कदन् अनादिपारिणामिकचैतन्यद्रव्यार्थादेशात् स्यात् सन्, पौद्गलिकपरिवृत्तावस्थि-तांगुल्युपागपर्यायार्थादेशात् न स्यात् सन्, अत एव स्यादनन्य स्यादवस्थित । सकोचनप्रसारणपर्यायार्था-देशात्स्यादसन् अत एव स्यादन्य स्यादनवस्थित । तथैकेंद्रियवननामायुरुदयान्निष्कृत आत्मैव बीज-पर्यायमास्कदन् निष्ठताय पिंडवत् बीजपरिणामात् बीजव्यपदेशभाक् । अत किं ? अनादिपारिणामिकचैत-न्यद्रव्यार्थादेशात् स्यात् सत्, तत पौद्गलिकशालिजात्येकेंद्रियरूपरसस्पर्शशब्दपर्यायार्थादेशाच्च स्यात् सत्, सत एव स्यादनन्य स्यादनवस्थित । पौद्गलिकशालिबीजपर्यायार्थादेशात्, स्यादसन् अत एव स्यादन्य, स्यादनवस्थित । इत्येवमनेकांताश्रयणादेकांतपक्षदोषानुपगमाभाव ।

**वृद्ध्यभावप्रसग इति चेन्नान्यहेतुत्वात् ॥ १५ ॥** स्यादेतत् नास्ति परिणाम । कुत ? वृद्ध्य-भावप्रसगात् । यदि बीजमकुरत्वेन परिणमेत बीजमात्र स एवांकुर स्यात् । पय परिणामदधिवत् । ततो वृद्ध्यभाव । उक्त च—

किंचान्यद्यदि तद्बीज गच्छेदकुरतामिह ।
विवृद्धिरकुरस्य स्यात् कथ बीजादपुष्कलात् ॥ १ ॥

भौमोदकरससबधाद्वृद्धिरितिचेन्, परिणामाभावप्रसगात् । उक्त च—

अथेष्टं तैं रसैर्भौमैरौदकैश्च निवर्धते ।
नन्वेवं सति बीजस्य परिणामो न युज्यते ॥ १ ॥

भौमोदकरसद्रव्यांतरसंचयात् वृद्धिरिति चेन्न द्रव्यांतरसंयोगेपि वृद्ध्यभावात् । यदि भौमोदकरसद्रव्यांतराणि संयोगवृद्ध्या वर्तंते ननु वृद्ध्यभावः जतुसंयोगे काष्ठवृद्ध्यभाववत् । उक्तं च—

आलिप्तं जतुना काष्ठं यथा स्थूलत्वमृच्छति ।
तत्तु काष्ठं तथैवास्ते जतु चात्र विवर्धते ॥ १ ॥
तथैव यदि तद्बीजमास्ते येनात्मना स्थितं ।
रसाश्च वृद्धिं कुर्वंति बीजं तत्र करोति किं ॥ २ ॥

इति ? तन्न । किं कारणं ? अन्यहेतुत्वात् । बीजमात्रं अंकुरोभवेत् इति ब्रुवता त्वयैवाभ्युगतः परिणामः । यस्तु भवता दोष उपन्यस्तः वृद्ध्यभावप्रसंग इति नासौ युक्तः । कुतः ? अन्यहेतुत्वात् । यथा मनुष्यायुर्नामोदयाभ्यां जातो बालः बाह्यसान्निध्यकिरणादिसंबंधापेक्षस्तन्यजननीताद्याहारमनुभवन् अभ्यंतरवीर्यांतरायक्षयोपशमाविर्भावितांहारजरणसामर्थ्यकायाग्निबलापेक्षः उपयुक्ताहाररसादिपरिणामान्निर्माणनामकर्मोदयापेक्षो वर्धते । तथा वनस्पतिविशेषायुर्नामोदयापेक्षो बीजाधिष्ठानो बीजोऽकुरो जातः भौमोदकरसाहारं तत्ताय पिंडवत् आत्मसात्कुर्वन् बाह्यसान्निध्यकिरणसंतापाभ्यंतरवीर्यांतरायक्षयोपशमाविर्भावितांकुरकायाग्निबलात् भौमोदकरसान् जरयन् स्वानुरूपनिर्माणकर्मोदयापेक्षो वर्धते । अयं तु वृद्ध्यभावदोषः एकांतवादिनामेव भवति । नित्यत्वैकांते तावद्विपरिणाभावात् वृद्ध्यभावः । क्षणिकैकांतवादेपि प्रतीत्य समुत्पादाभ्युपगमात् तावतोधिगमे तावत एवोपगमात् वृद्ध्यभावः । किं च सर्वेषां क्षणिकत्वात् अंकुरस्य तत्कारणाभिमतानां च भौमोदकरसादीनां युगपद्वाविनाशः स्यात् पौर्वापर्येण वा ? यदि युगपत् ? नास्ति तत्कृता वृद्धिः, न हि वृद्धिहेतवो विनश्यंतोऽन्यस्य विनश्यतोर्थस्य वृद्धिं कुर्वंतो दृष्टाः । अथ पौर्वापर्येण ? विनष्टस्यांकुरस्य भौमादयः किं कुर्वंति विनष्टा वा किं कुर्युः । अनेकांतवादिना तु अंकुरो भौमादयश्च द्रव्यार्थादेशात् स्यान्नित्याः पर्यायादेशाच्च स्यात्क्षणिका इति वृद्ध्युपपत्तिः ।

**क्षणिकत्वे प्रबंधभेदाभ्युपगमात् वृद्धिरिति चेन्न तदभावात् ॥ १६॥** स्यान्मतं भावानां क्षणिकत्वेपि वृद्धिर्युज्यते कुतः प्रबंधभेदाभ्युपगमात् । त्रिविधो हि प्रबंधः सभागरूपः क्रमापेक्षः अनियतश्चेति तत्र प्रदीपात् प्रदीपकश्च प्रबुध्यते स्रोतसः स्रोत एवेति सादृश्यात् सभागरूपः प्रबंधः । स संततिपरिणामक्रमोपलंभात् बालकुमारबीजांकुराद्यविच्छेदः क्रमापेक्षः । कृतलासानेकवर्णप्रबंधानियमो मेघेंद्रधनुरादिष्वनियतः ततोस्ति वृद्धिरिति ? तन्न । किं कारणं ? तदभावात् । इदमिह संप्रधार्यं सतोर्वा प्रबंधः स्यात् सदसतोरसतोर्वा ? न तावदसतो प्रबंधः वंध्यासुताकाशकुसुमयोः । नापि सदसतोः खरखरविषाणयोः । परिशेषात् सतोरेव । क्षणिकवादे तु पूर्वोत्तरस्कंधयोर्नैकस्मिन् क्षणेस्तित्वमिति प्रबंधाभावः । अस्तित्वे च क्षणिकप्रतिज्ञाहानिः । आह क्षणिकत्वेपि तुलांतनामोन्नामनवत् युगपदुत्पादविनाशभावात् कार्यप्रबंध इत्यस्ति वृद्धिरिति, उच्यते । यदि युगपदुत्पादविनाशयोः वृत्तिः ? कार्यकारणभावाभावः सव्येतरगोविषाणवत् ।

**ध्रौव्यैकांते परिणामाभावोऽनेकदोषप्रसंगात् ॥ १७ ॥** ध्रौव्यैकांते य उक्तः परिणामः "व्यवस्थितस्य द्रव्यस्य धर्मांतरनिवृत्तौ धर्मांतरोपजनने च परिणामः, अवस्थितस्य हि ध्रौव्यादिलक्षणस्य द्रव्यस्य क्षीरधर्ममात्रनिवृत्तौ दधिधर्ममात्रोत्पत्तौ परिणाम इति" स नोपपद्यते । कुतः ? अनेकदोषप्रसंगात् । न हि तस्य द्रव्यमवस्थितमस्ति यस्य परिणामो भवेत् । अथास्ति समुदायव्यतिरिक्तं द्रव्यं ननु गुणसमुदायमात्रद्रव्यप्रतिज्ञाहानिः । किं च ।

**उभयदोषप्रसंगात् ॥ १८ ॥** इदमिह मीमांस्यं—यन्निवर्तते यच्चोत्पद्यते यच्च व्यवतिष्ठते तदे-

१ पूर्वोभावसांस्यमायापत्तिरिति पाठांतरं । २ भावापत्तिरिति पाठः ।

तन्नितय गुणसमुदायमात्र वा स्यात् ततोऽन्यद्वेति ? यदि गुणसमुदायमात्रं ननु स एवासौ प्राक् पश्चाच्च गुणसमुदय कोऽत्र कस्य वा परिणाम ? अन्येन नाम निवृत्तेन अन्येनावस्थितेनाऽन्येन चोत्पन्नेन भवितव्यामिति न्याय्य। अथान्यदिति गृह्यते एवमपि गुणसमुदायमात्रप्रतिज्ञाहानि किं च—ध्रौव्यैकान्तविरोध, एकधर्मे धर्मो निवर्तते एकश्चेदुत्पद्यतेऽनित्यताप्राप्तेरिति । किंच—समुदाय गुणेभ्यो वा अन्यो वा स्यादनन्यो वा ? यद्यनन्य ? गुणा एवेति समुदायकल्पनाव्याघात, तदभावाच्च तदविनाभाविना गुणानामप्यभाव । अथान्य समुदाय ? पुनरत्र प्रतिज्ञाविरोध परस्पराविनाभाविनो स्वरूपशून्यत्व च स्यात्। कुत परिणामकल्पना ? । यथोक्त पूर्वभावस्यान्यभावापत्ति परिणाम इति तदयुक्त। कस्मात् ? उभयदोषप्रसगात् शब्दादीना सुखादिसमन्वयभावानुपपत्ति शब्दादिभावनिवृत्तिर्वेति, यदि पूर्वभावस्य अन्यभावापत्ति परिणाम ? सुखदु खमोहानां शब्दादिभावापत्ते शब्दादिषु सुखादिसमन्वयभावानुपपत्ति । किं कारण ? पूर्वभावस्यान्यभावापत्ति परिणाम इति प्रतिज्ञानात्। अथ पूर्वभावस्य नान्यभावापत्ति सुखादिसमन्वयात् कथ तर्हि पूर्वभावस्यान्यभावापत्ति परिणाम ? । तथैव सुखाद्यवस्थानात् शब्दादिभावानुपपत्ति प्रसजति, सा चानिष्टा, तस्मात् न पूर्वभावस्यान्यभावापत्ति परिणाम । किं च ।

**अभावस्यापरिणामात् ॥ १९ ॥** यद्येनात्मना नास्ति न तस्य तद्भावापत्ति विद्यते। यथा अभावस्य अभावात्मनाऽभावान्न तस्याभावापत्ति । एव गुणाना स्थूलत्वेन अभावात् तद्भावापत्तिरयुक्ता। अथास्ति तद्भावस्तत परिणामानुपपत्ति सद्भावात् येनात्मना यद्विद्यते तस्य न पुनस्तद्भावापत्ति, नह्यभाव अभावात्मकत्वात्पुनरभावो भवति । एवमेकाते कारणस्योभयथा परिणामानुपपत्ते अनेकांत आश्रयणीय । पर्यायार्थादेशात् स्यादन्यभावापत्ति । द्रव्यादेशात् स्यान्नान्यभावापत्ति, परिणाम इति । तथा द्रव्यार्थादेशात् स्यादवस्थितस्य द्रव्यस्य परिणाम पर्यायार्थादेशात् स्यादनवस्थितस्येति। अथ का क्रियेत्यत्रोच्यते—

**क्रिया परिस्पदात्मिका द्विविधा ॥ २० ॥** द्रव्यस्य द्वितयनिमित्तवशात् उत्पद्यमाना परिस्पदात्मिका क्रियेत्यवसीयते। सा द्विविधा पूर्ववत् प्रयोगविस्रसानिमित्ता। प्रायोगिकी शकटादीना। विस्रसानिमित्ता मेघादीनां ।

**स्थित्यग्रहणमिति चेन्न परिणामावरोधात् ॥२१॥** स्यादेतत् यदि परिस्पदात्मिका क्रिया इत्युच्यते स्थितेरग्रहण प्राप्नोति गतिनिवृत्तिर्हि स्थितिरिति ? तन्न। किं कारण ? परिणामावरोधात्। स्थितिर्हि परिणामेऽतर्भवति ।

**परिणामग्रहणमेकमेवाऽस्ति इति चेन्न भावद्वैविध्यख्यापनार्थत्वात् ॥ २२ ॥** स्यान्मत यथा *स्थिति परिणामेंऽतर्भवति तथा क्रियापि तत्रैवान्तरुध्यते इति परिणामग्रहणमेवैकमस्तु इति* ? तन्न। किं कारण ? भावद्वैविध्यख्यापनार्थत्वात्। द्रव्यस्य हि भावो द्विविध परिस्पदात्मक अपरिस्पदात्मकश्च। तत्र परिस्पदात्मक क्रियेत्याख्यायते, इतर परिणाम, इत्येतत् ख्यापनार्थं पृथग् ग्रहण ।

**क्षेत्रप्रशंसाकालनिमित्तात् परत्वापरत्वानवधारणमिति चेन्न कालोपकारप्रकरणात् ॥२३॥** स्यान्मत क्षेत्रप्रशसाकालनिमित्ते परत्वापरत्वे। तत्र क्षेत्रनिमित्ते—परत्वापरत्वे तावदाकाशप्रदेशाल्पबहुत्वापेक्षे। एकस्यां दिशि बहूनाकाशप्रदेशानतीत्य स्थित पर । तत अल्पानतीत्य स्थितोऽपर । प्रशसाकृते अहिंसादिप्रशस्तगुणयोगात् परो धर्म तद्विपरीतोऽधर्मोऽपर इति। कालहेतुके शतवर्ष पर, षोडशवर्षोऽपर अतोऽर्थभेदात् परत्वापरत्वयोरनवधारणमिति ? तन्न । किं कारण ? कालोपकारप्रकरणात्। कालकृतेऽत्र परत्वापरत्वे गृह्येते दूरासन्नदेशावस्थायिनो कुमारस्थविरयो तपस्विचाडाल्यो सन्निकृष्टदेशे चाडाळे पर इति व्यवहारो दृश्यते। विप्रकृष्टे च तपस्विनि अपर इति ते एते परत्वापरत्वे कालकृते इह गृह्येते ।

**वर्तनाद्युपकारलिंगः काल ॥ २४ ॥** उक्ता वर्तनादय उपकारा यस्याऽस्य लिंग स काल इत्यनुमीयते । तथा चोक्त "येन मूर्तानामुपचयाश्चापचयाश्च लक्ष्यते स काल इति" ।

**वर्तनाग्रहणमेवास्त्विति चेन्न कालद्वैविध्यप्रदर्शनार्थत्वात् प्रपंचस्य ॥२५॥** स्यान्मतं वर्तनाग्रहणमेवास्तु कालास्तित्वज्ञापनं तद्विकल्पत्वात् परिणामादीनामिति ? तन्न। किं कारणं ? कालद्वैविध्यप्रदर्शनार्थत्वात् प्रपंचस्य। द्विविधः कालः परमार्थकालो व्यवहाररूपश्चेति। तत्र परमार्थकालः वर्तनालिंगः गत्यादीनां धर्मादिवत् वर्तनाया उपकारकः। स किंस्वरूप इति चेत् उच्यते—यावंतो लोकाकाशे प्रदेशास्तावंतः कालाणवः परस्परं प्रत्यबंधाः एकैकस्मिन्नाकाशप्रदेशे एकैकवृत्त्या लोकव्यापिनः मुख्योपचारकप्रदेशकल्पनाभावान्निरवयवाः। मुख्यप्रदेशकल्पना हि धर्माधर्मजीवाकाशेषु पुद्गलेषु च व्यणुकादिषु स्कंधेषु। परमाणुषूपचारप्रदेशकल्पना, प्रचयशक्तियोगात्। उभयथा च कालाणूनां प्रदेशकल्पनाभावात्, धर्मास्तिकायादिवत् कायत्वाभावः। अत एव विनाशहेतुत्वाभावात् नित्याः। परप्रत्ययोत्पादविनाशसद्भावादनित्याः। सूचीसूत्रमार्गाकाशच्छिद्रवत् परिच्छिन्नमूर्तत्वेऽपि रूपादियोगाभावान् अमूर्ताः। निष्क्रियाश्च प्रदेशांतरसंक्रमाभावात्। व्यवहारकालः परिणामादिलक्ष्यः, कालवर्तनया लब्धकालव्यपदेशः, कुतश्चित् परिच्छिन्नः, अपरिच्छिन्नस्य परिच्छेदहेतुः।

**कालत्रैविध्यसिद्धिः परस्परापेक्षत्वात् ॥ २६ ॥** भूतो वर्तमानो भविष्यन्निति त्रिविधः कालः सिद्धः। कुतः ? परस्परापेक्षत्वात्। यथा वृक्षपंक्तिमनुसरतो देवदत्तस्य एकैकतरुं प्रति प्राप्तः प्राप्नुवन् प्राप्स्यन् व्यपदेशस्तथा तान्कालाणूननुसरतां द्रव्याणां क्रमेण वर्तनापर्यायमनुभवतां भूतवर्तमानभविष्यद्व्यवहारसद्भावः। तत्र परमार्थकाले भूतादिव्यवहारो गौणः। व्यवहारकाले मुख्यः। परस्परापेक्षश्चासौ यद्द्रव्यक्रियापरिणतं कालपरमाणुं प्राप्नोति तद्द्रव्यं तेन कालेन वर्तमानसमयस्थितिसंबंधवर्तनया वर्तमानकालः, कालाणुरपि वर्तयंस्तद्द्रव्यमनतिक्रांतसंबंधः वर्तनाख्यो भवति, तदेव कालवशात् अनुभूतवर्तनासंबंधं भूतं, कालाणुरपि भूतः, तदेव वर्त्स्यत् स्थितिसंबंधवर्तनापेक्षं भविष्यदिति व्यपदिश्यते, कालाणुश्च भविष्यन्निति। एवं सवितुरनुसमयगतिप्रचयापेक्षया आवलिकोच्छ्वासप्राणस्तोकलवनालिकामुहूर्ताऽहोरात्रपक्षमासर्त्वयनादिसंविभुगतिपरिवर्तनकालवर्तनया व्यवहारकालो मनुष्यक्षेत्रे संभवति इत्युच्यते तत्र ज्योतिषां गतिपरिणामात्। न बहिः निवृत्तगतिव्यापारत्वात् ज्योतिषां। मनुष्यक्षेत्रसमुत्थेन ज्योतिर्गतिसमयावलिकादिना परिच्छिन्नेन क्रियाकलापेन कालवर्तनया कालाख्येन ऊर्ध्वमधस्तिर्यक् प्राणिनां संख्येयासंख्येयानंतानंतकालगणनाप्रभेदेन कर्मभवकायस्थितिपरिच्छेदः सर्वत्र जघन्यमध्यमोत्कृष्टानस्य क्रियते।

**क्रियामात्रमेव कालस्तद्व्यतिरेकेणानुपलब्धिरिति चेन्न तदभावे कालाभिधानलोपप्रसंगात् ॥ २७ ॥** स्यान्मतं क्रियामात्रमेव कालः कुतस्तद्व्यतिरेकेणानुपलब्धेः। सर्वोऽयं कालव्यवहारः क्रियाकृतः क्रिया हि क्रियांतरं परिच्छिन्ना अन्यक्रियापरिच्छेदे वर्तमाना कालाख्या भवति। योऽपि समयो नाम निर्दिश्यते स परमाणुपरिवर्तनक्रियासमय एव कालसामान्यसामानाधिकरण्यात्, न समयपरिमाणपरिच्छेदकोऽन्यः। ततः सूक्ष्मतरः कश्चिदस्ति कालः, तत्समयक्रियाकलापः आवलिका, तत्प्रचयः उच्छ्वासः इत्यादि समयक्रियाकलापपरिच्छिन्ना आवलिका उच्छ्वासपरिच्छेदे वर्तमाना कालाख्या। एवमुत्तरत्रापि योज्यं। लोकेऽपि तथैव गोदोहेंधनपाकादिरन्योन्यपरिच्छेदे वर्तमानः कालाख्यः इति क्रियैव काल इति ? तन्न। किं कारणं तदभावे कालाभिधानलोपप्रसंगात्। ? क्रियाकृत एवायं व्यवहारः सर्वं उच्छ्वासमात्रेण कृतं मुहूर्तेन कृतमिति। किं तु समयः उच्छ्वासो निश्वासो मुहूर्त इति स्वसंज्ञाभिर्निरूढानां काल इत्यभिधानमकस्मान्न भवति। यथा देवदत्तसंज्ञया निरूढे पिंडे दंडाभिधानमकस्मान्न भवतीति दंडसंबंधसिद्धिः। तथा कालसिद्धिरपि। इतरथा कालव्यवहाराभावप्रसंगः स्यात्।

**वर्तमानाभावप्रसंगाच्च ॥ २८ ॥** यस्य क्रियामात्रमेव कालो नान्यः कश्चिदस्ति वर्तनालक्षणः तस्य वर्तमानकालाभावः प्रसक्तः। कथं ? उच्यते-पट इति यः प्रक्षिप्तस्तत्तु सोऽतिक्रांतः यः प्रक्षेप्स्यते सोऽनागतः न च तयोरंतरे काचिदन्यानतिक्रांतानागतविलक्षणा क्रियास्ते वर्तमानत्वेन परिगृह्यते। वर्तमानापेक्षे च पुनरतीतानागताविष्येते तदभावे तयोरप्यभावः स्यात्। यदुक्तं आरभादिरपवर्गांतः क्रियाकलापो वर्तमान

इति आरभ्याय प्रभृता यस्मिन् काले भवति कर्तोर कार्यस्यानिष्ठात तं मध्यमकालमिच्छतीति तदप्ययुक्त । कुत ? अभ्युपगमविरोधात् । पूर्वं क्रियाकाल इत्युक्त पश्चात् क्रियासमूह इति । क्षणिकाना क्रियावयवानां समूहाभावाच्च । यस्य पुनरन्योन्यलक्षण काल तस्य प्रथमसमयाक्रियावर्तनया आरभमुपादाय द्वितीयादिसमयक्रियाविशेषाणां द्रव्यार्थतयावस्थानमनुभवतां समुदायमुपचर्य तत्समूहसाध्यघटादेरापरिसमाप्तेर्वर्तते घटादिक्रियेति वर्तमानकालसिद्धि कल्प्यते । यदि व्यतिरेकेणानुलब्धे कालो नास्तीत्युच्यते ? ननु क्रियाया क्रियासमूहस्य याभाव । कारकाणां हि प्रवृत्तिविशेष' क्रिया न तस्य प्रवृत्तिर्व्यतिरिक्ता उपलभ्यते । यथा सर्पात्मलाभ एव कौटिल्य न तु तत्तस्माद्व्यतिरिक्तमुपलभ्यते एव क्रियाणीति । तथा क्रियावयवेभ्यो व्यतिरिक्तो न तत्समूह उपलभ्यते तदात्मकत्वात् अतस्तयोरभावप्रसग- स्यात् । किं च क्रिया क्रियांतरस्य परिच्छेदिका कालव्यपदेशभागित्यनुपपन्नमनवस्थानात् । स्थितो हि लोके प्रस्थादिः परिमाणविशेषः व्रीह्यादेरवस्थितस्य परिच्छेदको दृष्ट । नच तथा क्रियावस्थिता, स्थितिलक्षणमात्राबलम्बनाभ्युपगमात् । न हि स्वयमनवस्थित कश्चिदनवस्थितस्य परिच्छेदको दृष्ट । प्रदीपपरिस्पदवत् इतिचेत् यथा प्रदीपोऽनवस्थितः परिस्पदस्यानवस्थितस्येव परिच्छेदे वर्तते तथा क्रियापीति एतच्चायुक्त असिद्धत्वात् प्रदीपपरिस्पदश्च क्षणिक इति नास्माभिरभ्युपगम्यते स्वकार्यस्य प्रकाशवादेरनेकक्षणसाध्यत्वात् । समूहस्य परिच्छेदकभावादिति चेन्न क्षणिकानां समूहाभावात् । शब्दवदिति चेन्न । यथा क्षणिकानां वर्णध्वनीनां समुदाय' पदवाक्यरूप तथा क्रियावयवानामित्येतदप्यसांप्रत असिद्धत्वादेव । न हि वर्णध्वन्य. क्षणिका , देशांतरस्थश्रोतृविषयभावापत्तिदर्शनात् । शब्दांतरारभात् तत्प्रतिसिद्धिरिति चेन्न क्षणिकस्यारंभशक्तिविरहात् । यस्मिन् क्षण स्वयमात्मलाभमापद्यते न तदान्यमुत्पादयति असत्त्वात् । उत्तरक्षण च नारभते उत्पत्त्यनतरप्रमर्षितत्वात् । आसन्नसदवस्थाको हि क्षण उत्पत्तिकाल इति व्यपदिश्यते । उत्तरकालमस्य सत्त्व ? इत्युत्पत्तिव्यवहार एव न स्यात् । पूर्वविज्ञानाहितसंस्कारबीजाधारभूतायां बुद्धौ समुदायकल्पनेति चेन्न तस्या अपि तादात्म्यात् । यस्य तु द्रव्यार्थादेशात् स्यान्नित्या बुद्धिरपि तस्य वस्तुनि बुद्धौ च क्रियावयवसमूहस्य शक्तिव्यक्तिस्वरूपेण व्यवस्थितस्य कालवर्तनया प्रतिलब्धकालव्यपदेशस्य परिच्छिन्नस्यान्यपरिच्छेदे वृत्तिरुपपद्यते इति व्यवहारकालसिद्धिः । तत्प्रसिद्धौ च मुख्यकालसिद्धि' इत्युक्त । अथ किमर्थं परत्वापरत्वयो पृथग्ग्रहण वर्तनापरिणामक्रियापरत्वापरत्वानीत्येव वक्तव्य ?

**परत्वापरत्वयोः पृथग्ग्रहणं परस्परापेक्षत्वात् ॥ २९ ॥** परत्वापरत्वे पृथग्गृह्येते । कुत ? परस्परापेक्षत्वात् । परत्व व्यपेक्ष्यापरत्व भवति । अपरत्व व्यपेक्ष्य परत्वमिति । अथ किमर्थं वर्तनाग्रहणमादौ क्रियते ?

**वर्तनाग्रहणमादौ अभ्यर्हितत्वात् ॥ ३० ॥** वर्तनाग्रहणमादौ क्रियते कुत ? अभ्यर्हितत्वात् । कथमभ्यर्हितत्वं ? वर्तनापूर्वकत्वात् परमार्थकालप्रतिपत्ते । तन्निमित्तत्वात् व्यवहारकालंलिंगस्याप्राधान्य । अत्राह उक्त भवता शरीरादीनि पुद्गलानामुपकार इति तत्रातदीयाजीव ' परिभाषते तत्कथमित्यत्रोच्यते—

## स्पर्शरसगंधवर्णवतः पुद्गला· ॥ २३ ॥

**स्पर्शग्रहणमादौ विषयबलदर्शनात् ॥ १ ॥** स्पर्शग्रहणमादौ क्रियते । कुत ? विषयबलदर्शनात् । सर्वेषु हि विषयेषु स्पर्शस्य बलं दृश्यत । स्पष्टग्राहिष्विन्द्रियेषु स्पर्शस्यादौ ग्रहणव्यक्ति', सर्वससारिजीवग्रहणयोग्यत्वाच्च ।

**रसप्रसग इति चेन्न स्पर्शे सति तद्भावात् ॥ २ ॥** स्यान्मत यदि विषयबलात् आदौ स्पर्शोऽधीत ननु विषयबलत्वात् आदौ रस एवाध्येय । स्पर्शमुखनिरुत्सुकेष्वपि रसव्यापारदर्शनात् इति ? तन्न । किं कारण ' स्पर्शे सति तद्भावात् तत्रापि सति स्पर्शे रसव्यापार इति स्पर्शग्रहणमेवादौ न्याय्य । तत एवानंतर रसवचन स्पर्शग्रहणानंतरभावितत्वात् रसग्रहणस्य । तदनंतर तद्ग्रहण क्रियते ।

**वायौ तदभावात् व्यभिचार इति चेन्न तत्राप्यभ्युपगमात् ॥ ३ ॥** स्यादेतत् वायुः स्पर्शवान् इति तदनंतरं रसग्रहणाभावात् व्यभिचार इति ? तन्न किं कारणं तत्राभ्युपगमात् । रूपादयो हि स्पर्शाविनाभाविनः घटादिष्विव वायावप्यभ्युपगम्यते । स्पर्शवत्त्व सतां रूपादीनामपि,ग्रहणं कस्मान्न ? इति चेत् स्थूलविषयग्राहित्वाच्चक्षुरादीनां घ्राणेंद्रियविषयवत् । वायौ सतामपि रूपादीनामग्रहणं ।

**रूपात् प्राग् गंधवचनं अचाक्षुषत्वात् ॥ ४ ॥** रूपात् प्राक् गंधवचनं क्रियते । किं कारणं ? अचाक्षुषत्वात् ॥

**अंते वर्णग्रहणं स्थौल्ये सति तदुपलब्धेः ॥ ५ ॥** सर्वेषां अंते वर्णग्रहणं क्रियते । कुतः ? स्थौल्ये सति तदुपलब्धेः ॥

**नित्ययोगे मतुविधानं ॥ ६ ॥** स्पर्शश्च रसश्च गंधश्च वर्णश्च स्पर्शरसगंधवर्णास्ते येषां संति ते स्पर्शरसगंधवर्णवंत इति नित्ययोगे मतुविधानं द्रष्टव्यं । यथा क्षीरिणो न्यग्रोधा इति क्षीरेण नित्ययोगात् मत्वर्थीयविधानं । तथा अनादिपारिणामिकस्पर्शादिगुणसामान्यनित्ययोगे मतुरिति स्पर्शादीनामनंतपर्यायत्वेपि मौलभेदप्रसिद्ध्यर्थमितः क्रियते ।

**मृदुकठिनगुरुलघुशीतोष्णस्निग्धरूक्षस्पर्शभेदाः ॥ ७ ॥** एते मृद्वादयोऽष्टौ स्पर्शस्य मूलभेदा द्रष्टव्याः ।

**तिक्तकटुकाम्लमधुरकषाया रसप्रकाराः ॥ ८ ॥** तिक्तादयः पंच रसप्रकाराः वेदितव्याः ।

**गंधः सुरभिरसुरभिश्च ॥ ९ ॥** गंधो द्विविधः सुरभिरसुरभिश्चेति ।

**वर्णाः पंचधा नीलपीतशुक्लकृष्णलोहितभेदात् ॥ १० ॥** नीलादिभिः पंचभिः प्रकारैः वर्णा भिद्यंते एवं च स्पर्शनादीनामेकैकस्य एकद्वित्रिचतुःसंख्येयासंख्येयानंतगुणपरिणामोऽवसेयः । सकलरूपादिद्रव्यधर्मनिर्देशात् अवशिष्टविशेषप्रतिपत्त्यर्थमाह—

## शब्दबंधसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपो- द्योतवंतश्च ॥२४॥

**शब्दादीनामभिहितनिर्वचनानां परिप्राप्तद्वंद्वानां मतुना अभिसंबंधः ॥ १ ॥** शब्दादीनां निर्वचनेन प्रतिलब्धार्थानां परस्परापेक्षायां सत्यां द्वंद्वं कृत्वा मतुना संबंधो योजयितव्यः । तद्यथा—शपत्यर्थमाह्वयति प्रत्याययति शप्यते येन शपनमात्रं वा शब्दः । बध्नाति बध्यतेऽसौ बध्यतेऽनेन बंधनमात्रं वा बंधः । लिंगेन आत्मानं सूचयति सूच्यतेऽसौ सूच्यतेऽनेन सूचनमात्रं वा सूक्ष्मः, सूक्ष्मस्य भावः कर्म वा सौक्ष्म्यं । स्थूलयते परिबृंहयति स्थूल्यतेऽसौ स्थूल्यतेऽनेन स्थूलनमात्रं वा स्थूलः । स्थूलस्य भावः कर्म वा स्थौल्यं । संतिष्ठते संस्थाप्यतेऽनेनेति संस्थितिर्वा संस्थानं । भिनत्ति भिद्यते भेदमात्रं वा भेदः । पूर्वोपात्ताशुभकर्मोदयात् ताम्यति आत्मा तम्यतेऽनेन तमनमात्रं वा तमः । पृथिव्यादिघनपरिणाम्युपश्लेषात् देहादिप्रकाशावरणतुल्याकारेण छिद्यते छिनत्त्यात्मानमिति वा छाया । असद्वेद्योदयात् आतपत्यात्मानं आतप्यतेऽनेन आतपनमात्रं वा आतपः । निरावरणमुद्योतयति उद्योत्यतेऽनेन उद्योतनमात्रं वा उद्योतः । शब्दश्च बंधश्च सौक्ष्म्यं च स्थौल्यं च संस्थानं च भेदश्च तमश्च छाया च आतपश्च उद्योतश्च शब्दबंधसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपोद्योताः ते येषां संति ते शब्दबंधसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपोद्योतवंतश्च ।

**शब्दो द्वेधा भाषालक्षणविपरीतत्वात् ॥ २ ॥** शब्दो द्वेधा अवतिष्ठते । कुतः ? भाषालक्षणविपरीतत्वात् भाषालक्षणो विपरीतश्चेति ।

**भाषात्मक उभयथा अक्षरीकृतेतरविकल्पात् ॥ ३ ॥** तत्र भाषात्मकः शब्दः उभयथा

कल्प्यते कुत अक्षरीकृतेतरविकल्पात् । अक्षरीकृत शास्त्राभिव्यञ्जक संस्कृतविपरीतभेदात् आर्यम्लेच्छव्यवहारहेतु । अनक्षरात्मको द्वींद्रियादीनामतिशयज्ञानस्वरूपप्रतिपादनहेतुश्च । स एव सर्व प्रायोगिक ।

**अभाषात्मको द्वेधा प्रयोगविस्रसानिमित्तत्वात् ॥ ४ ॥** अभाषात्मक शब्दो द्वेधा विभज्यते । कुत ? प्रयोगविस्रसानिमित्तत्वात् ।

**तत्र वैस्रसिको वलाहकादिप्रभव ॥ ५ ॥**

**प्रयोगश्चतुर्धा ततविततघनसौषिरभेदात् ॥ ६ ॥** प्रयोगज शब्द चतुर्धा भिद्यते। कुत ? ततविततघनसौषिरभेदात् । तत्र चर्मतननात्तत पुष्करभेरीदर्दुरादिप्रभव । वितत तन्त्रीकृतो वीणासुघोषादिसमुद्भव । घनस्तालघण्टालालनाद्यभिघातज । सौषिरो वंशशंखादिनिमित्त । स शब्द आकाशगुण इति केषाचित् दर्शन तदयुक्त इत्युक्त पुरस्तात् । अपरे मन्यते ध्वनय क्षणिका क्रमजन्मान स्वरूपप्रतिपादनादेवोपलक्षणशक्तिका नार्थांतरमवबोधयितुमल । यदि समर्था स्यु पदेभ्य इव पदार्थषु प्रतिवर्ण वर्णार्थेषु प्रत्यय स्यात् । एकेन चार्थे कृते वर्णांतरोपादानमनर्थक स्यात् । नापि क्रमजन्मना सहभाव सघातोऽस्ति योऽर्थेन युज्यते । अतस्तेभ्योऽर्थप्रतिपादने समर्थ शब्दात्मा अमूर्तो नित्योऽतीन्द्रियो निरवयवो निष्क्रियो ध्वनिभि अभिव्यग्य इति अभ्युपगतव्य ? इत्येतच्चानुपपन्न । कुत ? व्यग्यव्यजकभावानुपपत्ते । व्यग्यस्तावत् शब्दात्मा स्वेन स्वरूपेणावस्थितो वा व्यज्येत अनवस्थितो वा । यदि स्वरूपेणावस्थितो व्यज्येत तत्रापि द्वैत भवति । ध्वनिसनिधे प्राक् पश्चाच्चानुपलब्धे । सौक्ष्म्य वा हेतु स्यात् प्रतिबधक वा किंचित् । यदि सौक्ष्म्यान्नोपलभ्येत सर्वकालमस्याग्रहणमेव स्यात् आकाशादिवत् । अथ ध्वनिसन्निधाने स्थौल्यमस्य स्यात् । विकारप्राप्ते नित्यत्व हीयते । न हि किंचित् प्रतिबधकमस्ति घटोपलब्धौ तमोवत् । प्रभाभावस्तमो न वस्त्वतरमिति चेन्न अतिशयवत्त्वात् । (सपक्षत्वाच्च) सम्पन्नत्वाच्च नीलादिवर्णवत् । स्वरूपेणानवस्थितश्चेत् नासौ व्यग्य कार्य स्यात् ध्वनिसान्निधाने स्वरूपप्राप्तेस्तत एवैषा ध्वनीना व्यजकत्वमयुक्त । किंच—आद्यो वर्णध्वनि शब्दात्मा सकलस्य वा व्यजक स्यात् एकदेशस्य वा ? यदि सकलस्य इतरेषां ध्वनीना आनर्थक्य स्यात् । अथैकदेशस्य निरवयवत्वमस्य हीयते । किं च स ध्वनिर्व्यजक स्फोटस्य वा उपकार कुर्यात् श्रोत्रस्य उभयस्य वा ? न तावत् पृथिवीगधस्य जलसेचकवत् स्फोटस्य उपग्रहे वर्तते, तस्य नित्यत्वात् विकारप्राप्त्यनभ्युपगमात् । नचामूर्तस्याभिव्यग्यस्य निक्रियोपपद्यते । नापि चक्षुर्योजनवत् श्रोत्रस्योपकारे वर्तते बधिरस्य गुणांतरोत्पादनशक्त्यभावात् । युज्यते नेत्रस्याजनमुपकारकमिति तिमिरादिदोषहननदर्शनात् न तथोपहतश्रवणस्य ध्वनिकृतमुपकारक किंचिदप्युपलभामहे । अथ कर्णेंद्रियस्य उपग्रहे वर्तते न तत्रार्थाववोधनात् उपग्रहाऽन्योस्ति तदभ्युपगमेनैव कृतत्वात् स्फोटकल्पना अनर्थिका । नाप्युभयस्योपग्रहोपि युक्त प्रत्येकमयुक्तत्वादेव । किं च ते ध्वनय न स्फोटाभिव्यक्तिहेतवो भवति उत्पत्तिक्षणादूर्ध्वमनवस्थानात् उत्पत्तिक्षणे चासत्वात् । अथ क्षणिका अपि सत अभिव्यक्तिहेतव कथेदानीं भवतो मत्सर ? अर्थप्रत्यायने तदभ्युपगमे च स्फोटकल्पना व्यर्था ।

**प्रदीपवदिति चेन्न तस्यासिद्धत्वात् ॥ ७ ॥** नोत्पत्त्यनतरापवर्गी प्रदीप आत्मलाभे देशांतरसबधनिमित्तक्रियापरिणामाविप्रकृष्टदेशस्थघटादिप्रकाशनदर्शनात् ।

**कर्मवदिति चेत् असिद्धत्वादेव ॥ ८ ॥** कर्मव्यक्तय क्षणिका सत्य कर्मत्व जातिमभिव्यजयतीत्यसिद्धमस्मान् प्रति द्रव्यगुणकर्मविषयसामान्यविशेषस्यार्थांतरभूतस्यानभ्युपगमात् । कर्मणोपि द्रव्यात् अपृथग्भूतस्य द्रव्यार्थावस्थानाभ्युपगमात् । किं च अभिव्यजकाभिव्यग्यवैधर्म्यात् यथा मूर्त क्रियावान् प्रदीपोऽभिव्यजक तद्व्यग्याश्च घटादय क्रियावतो मूर्तिमतो दृष्ट । नच तथा ध्वनेर्मूर्ति क्रियावाश्च तद्व्यग्य स्फोटोपि न तद्धर्म ततोऽभिव्यक्त्यभाव । किं च स्फोट ध्वनेरन्यो वा स्यात् अनन्यो वा ? यद्यनन्य तादात्म्य प्राप्नोति व्यग्यत्वाभावश्च भेदाभावात् । अथान्य तस्य श्रोत्रोपलभ्यत्वाभाव । किंच व्यग्यत्वे सति अनित्यत्व स्यात् स्फोटस्य घटादिवत् विज्ञानेन व्यग्यत्वात् । आकाशादेर्व्यभिचार इति चेन्न मूर्तिमता व्यग्य-

स्यादिति विशेष्यवचनात्। किं च यस्य व्यंग्यत्वं तस्य कार्यत्वमपि दृष्टं यथा घटादेः न तथा स्
फार्यत्वमस्ति। नित्यत्वाभ्युपगमादिति व्यंग्यत्वाभावः।

**महदादिवदिति चेत् साध्यसमत्वात् ॥ ९ ॥** यथा महदादि व्यंग्यमेव न कार्यं तथ
टोपीति तन्न साध्यसमत्वात्। यथेदं स्फोटमव्यंग्यत्वं साध्यं तथा महदादेरपीति। किंच
ताभावात्। नचामूर्तं कश्चिन्नित्यो निरवयवो मूर्तिमताऽनित्यत्वेन सावयवेन व्यंग्यो दृष्टः. तदभावात
सिद्ध्यभावः. तस्मात् ध्वनिरूप एव शब्दो द्विशक्तिरभ्युपगतव्यः। स च पुद्गलद्रव्यार्थादेशात्ततोऽन
स्यान्नित्यः। श्रोत्रोपलभ्यपर्यायसामान्यास्थित्यपेक्षया कालांतरस्थायिप्रतिसमयस्थितिभेदापेक्षया क्षणिक
च जैनेश्वरदर्शनमनवद्यं॥

**बधोपि द्विधा विस्रसाप्रयोगभेदात् ॥१०॥** बधोऽपि द्वैविध्यमश्नुते। कुतः? विस्रसा
भेदात्। वैस्रसिकः प्रायोगिकश्चेति।

**आद्यो द्वेधा आदिमदनादिविकल्पात् ॥ ११ ॥** आद्यो वैस्रसिको बधो द्विधा भिद्यते। कु
आदिमदनादिविकल्पात्। तत्रादिमान् स्निग्धरूक्षगुणनिमित्तविद्युदुल्काजलधाराग्नीन्द्रधनुरादिविषयः।
दिरपि वैस्रसिकबधो धर्माधर्माकाशानामेकशः त्रैविध्यान्नवविधः। धर्मास्तिकायबधः धर्मास्तिकायदेश
धर्मास्तिकायप्रदेशबधः। अधर्मास्तिकायबधः अधर्मास्तिकायदेशबधः। अधर्मास्तिकायप्रदेशबधः। अ
शास्तिकायबधः आकाशास्तिकायदेशबधः आकाशास्तिकायप्रदेशबधश्चेति। कृत्स्नो धर्मास्तिकायः
देशः, अर्धार्धं प्रदेशः, एवमधर्माकाशयोरपि। कालाणूनामपि सततं परस्पराविश्लेषाभावात् अना
एकजीवप्रदेशानां च संहरणविसर्पणस्वभावत्वेपि परस्परावियोगाभावात् अनादिबधः। धर्माधर्मैक
काशानां परस्परावियोगाभावात् अनादिर्बंधः। नानाजीवानामपि सामान्यापेक्षया इतरद्रव्यैः सह ब
अनादिः। पुद्गलद्रव्येष्वपि महास्कंधादीनां सामान्यादनादिर्बंधः। एवं सर्वद्रव्यविषयबधे सति पुद्गलप्र
णात् तद्विषयो बधः परिगृह्यते।

**विस्रसा विधिविपर्यये निपातः ॥ १२ ॥** पौरुषेयपरिणामापेक्षाविधिः तद्विपर्यये विस्रसाश
निपातो दृष्टव्यः। विस्रसा प्रयोजना वैस्रसिको बधः।

**प्रयोगः पुरुषकायवाङ्मनःसंयोगलक्षणः ॥ १३ ॥** पुरुषस्य कायवाङ्मनःसंयोगः प्रयो
इत्युच्यते। प्रयोगप्रयोजनो बधः प्रायोगिकः स द्वेधा अजीवविषयो जीवाजीवविषयश्चेति। तत्राजीवविष
जतुकाष्ठादिलक्षणः। जीवाजीवविषयः कर्मनोकर्मबधः। कर्मबधो ज्ञानावरणादिरष्टधा वक्ष्यमाणः। न
कर्मबधः औदारिकादिविषयः। स पुनः पंचविधः आलपनाऽऽलेपनसंश्लेषशरीरशरीरिभेदात्। रथशकटादी
लोहरज्जुवरत्रादिभिरालपनादाकर्षणात् बधः आलपनबधः। अनेकार्थत्वात् धातूनां लपि आकर्षणक्रिय
ज्ञेयः। कुड्यप्रासादादीनां मृत्पिंडेष्टकादिभिः प्रलेपदानेन अन्योन्यालेपनात् अर्पणात् आलेपनबधः। धातू
मनेकार्थत्वात् आङ्पूर्वस्य लिङ अर्पणाक्रियस्य ग्रहणं। जतुकाष्ठादि संश्लेषबधः। शरीरबधः पंचधा औदा
कवैक्रियिकाहारकतैजसकार्मणशरीरनोकर्मबंधभेदात्। स प्रत्येकं चतुश्चतुर्द्विरेकभंगभेदात् पंचदशधा। तत्रौ
दारिकशरीरनोकर्मप्रदेशानामौदारिकशरीरनोकर्मप्रदेशैरन्योन्यानुप्रवेशात् औदारिकौदारिकशरीरनोकर्मबंध
प्रथमः। औदारिकतैजसशरीरनोकर्मप्रदेशानां अन्योन्यानुप्रवेशः औदारिकतैजसशरीरनोकर्मबधो द्वितीयः
औदारिककार्मणशरीरनोकर्मप्रदेशानामन्योन्यानुप्रवेशः औदारिककार्मणशरीरनोकर्मबधस्तृतीयः। औदारि
तैजसकार्मणशरीरनोकर्मप्रदेशानामन्योन्यानुप्रवेशः औदारिकतैजसकार्मणशरीरनोकर्मबधश्चतुर्थः। अने
विधिना वैक्रियिकवैक्रियिकशरीरनोकर्मबंधः वैक्रियिकतैजसशरीरनोकर्मबधः वैक्रियिककार्मणशरीरनोक
बंधः। वैक्रियिक तैजसकार्मणशरीर नोकर्मबधः। आहारकाहारकशरीरनोकर्मबंधः. आहारक तैजसशरी
रनोकर्मबंधः आहारककार्मणशरीरनोकर्मबधः आहारकतैजसकार्मणशरीरनोकर्मबंधः। तैजसतैजसशरीरन

१ आकर्षणक्रियापेक्ष पाठोऽय ग पुस्तके।

कर्मबध तैजसकार्मणशरीरनोकर्मबंध । कार्मण कार्मणशरीरनोकर्मबधश्चेति योज्य । शरीरबंधो द्वेधा अनादिरादिमांश्च । अष्टजीवमध्यप्रदेशानामुपर्यधश्चतुर्णां रुचकवदवस्थितानां सर्वकालमन्योन्यापरित्यागात् अनादिसबध । इतरेषां प्रदेशानां कर्मनिमित्तसहरणविसर्पणस्वभावत्वादादिमान् । अथवा यथा क्रोधप रिणत आत्मैव क्रोध तथा तप्ताय पिंडवत् शरीरेण सह बध प्रत्यात्मन एकत्वादात्मैव शरीरमिति व्यप- देशात् पूर्वोक्ता पचदश विकल्पा शरीरविषयत्वेन योज्या । औदारिकादिशरीरभेदार्पणात् प्रागुक्ता विक- ल्पा । अत्राह—कर्मनोकर्मणो क प्रतिविशेष इत्युच्यते—आत्मपरिणामेन योगाभावलक्षणेन क्रियत इति कर्म तदात्मनो स्वतत्रीकरणे मूलकारण। तदुदयापादित पुद्गलपरिणाम आत्मन सुखदु खबलाधान- हेतु , औदारिकशरीरादि ईषत्कर्म नोकर्मेत्युच्यते । किं च स्थितिभेदाद्भेद कर्मणां स्थितिरुत्तरत्र वक्ष्यते । नोकर्मणां स्थितिरुच्यते । औदारिकवैक्रियिकशरीरयो स्वायु प्रमाणस्थितिर्निषेक । तत्रौदारिकशरीरस्य त्रिपल्योपमा स्थिति । यस्मादेकसमयादारभ्य आ त्रिपल्योपमसमाप्तेरवस्थान । वैक्रियिकशरीरस्य त्रय- स्त्रिंशत्सागरोपमा स्थिति , यस्मादेकसमयनिषेकादारभ्य त्रयस्त्रिंशत्सागरोपमांत्यसमयादवस्थान । आहा- रकशरीरस्य अतर्मुहूर्तपरिणामा स्थिति । तैजसशरीरस्य षट्षष्टिसागरोपमा स्थिति । कार्मणशरीरस्य कर्मस्थिति , ज्ञानावरणाद्यनेककर्मस्थितिसभवेऽप्यात्मीयैव कर्मस्थितिर्ग्राह्या । औदारिकवैक्रियिकतैजसका- र्मणशरीरकर्मणामेकैकस्य विंशतिसागरोपमकोटीकोट्य स्थिति । आहारकशरीरकर्मणोऽते कोटीकोट्य स्थिति ॥

**सौक्ष्म्यं द्विविधं अंत्यमापेक्षिक च ॥ १४ ॥** सौक्ष्म्य द्विविध वेदितव्य। कुत ? अत्यमापेक्षिक चेति । तत्रांऽत्य परमाणूनां । आपेक्षिक बिल्वामलकबदरादीनां ।

**तथा स्थौल्य ॥ १५ ॥** तेनैव प्रकारेणांत्य आपेक्षिक चेति द्विविध स्थौल्यमवगतव्य । तत्रांत्य जगव्द्यापिनि महास्कधे । आपेक्षिक बदरामलकबिल्वतालादिषु ।

**सस्थान द्वेधेत्थलक्षण अनित्थलक्षण च ॥ १६ ॥** सस्थानमाकृतिर्द्वेधा भिद्यते इत्थल- क्षणमनित्थ लक्षण चेति ।

**वृत्तत्र्यस्रचतुरस्रायतपरिमडलादिरित्थमतोन्यदनित्थ ॥ १७ ॥** वृत्त त्र्यस्र चतुरस्रमायत परि- मडलमित्येवमादि सस्थानमित्थलक्षण । अतोऽन्यन्मेघादीनां सस्थान अनेकविध, इत्थमिदमिति निरूपणा- भावात् अनित्थलक्षण ।

**भेदः षोढोत्करचूर्णखडचूर्णिकाप्रतराणुचटनविकल्पात् ॥ १८॥** भेद षोढा भिद्यते। कुत ? उत्करादिविकल्पात् । तत्रोत्कर —काष्ठादीनां करपत्रादिभिरुत्करण । चूर्णो—यवगोधूमादीनां सक्तुकणि- कादि । खडो—घटादीनां कपालशर्करादि । चूर्णिका—माषमुद्गादीनां । प्रतरोऽभ्रपटलादीनां । अणु- चटन तप्ताय पिंडादिष्वयोघनादिभिरभिहन्यमानेषु स्फुलिंगनिर्गम ।

**तमो दृष्टिप्रतिबधकारण ॥ १९ ॥** दृष्टे प्रतिबधक वस्तु तम इति व्यपदिश्यते । यदपहरन् प्रदीप प्रकाशको भवति ॥

**छाया प्रकाशावरणनिमित्ता ॥ २० ॥** प्रकाशावरण शरीरादि यस्या निमित्त भवति सा छाया

**सा द्वेधा तद्वर्णादिविकारप्रतिबिंबमात्रग्रहणविकल्पात् ॥ २१ ॥** सा छाया द्वेधा व्यवतिष्ठते। कुत ? तद्वर्णादिविकारात् प्रतिबिंबमात्रग्रहणाच। आदर्शतलादिषु प्रसन्नद्रव्येषु मुखादिच्छाया तद्वर्णादिपरिणता उपलभ्यते। इतरत्र प्रतिबिंबमात्रमेव । अत्राह–विपरीतग्रहण कुत ? प्राङ्मुखस्य प्रत्यङ्मुखा छाया दृश्यते ? इति प्रसन्नद्रव्यपरिणामविशेषाद्भवति । अत्र चोद्यते नादर्शतलादिष्वछायासद्भाव , किं तर्हि ? नयननिर्गतेन रश्मिना घनद्रव्यात् प्रतिहतानिवृत्तेन स्वमुखस्यैव ग्रहण इति तदयुक्त विपर्यासग्रहणाभावप्रसगात् । कुड्यादिषु अतिप्रसगात् ग्रहणशक्त्यभावाच्च । विपर्यासग्रहणाभावप्रसगस्तावत् यदि प्रतिनिवृत्तेन नयन

रश्मिना स्वशरीरस्यैव ग्रहणं प्राङ्मुखस्य प्राङ्मुखमेव ग्रहणं स्यात् । विपर्यासहेत्वभावात् कुड्यादिषु चातिप्रसंगः स्यात् । नयनरश्मेः प्रतिघातस्य तत्रापि सद्भावात् । नाप्यसौ नयनरश्मिः शरीरान्निष्क्रान्तः मनसाऽनधिष्ठितो ग्रहीतुं शक्नोति ॥

**आतपः उष्णप्रकाशलक्षणः ॥ २२ ॥** आतपः आदित्यनिमित्त उष्णप्रकाशलक्षणः पुद्गलपरिणामः

**उद्योतश्चंद्रमणिखद्योतादिविषयः ॥ २३ ॥** चंद्रमणिखद्योतादीनां प्रकाशः उद्योत उच्यते ।

**क्रियोपसंख्यानं पुद्गलपरिणामादिति चेन्न धर्माधर्माकाशानां क्रियया प्रतिषेधसंबंधेनोक्तत्वात् ॥ २४ ॥** स्यादेतत् क्रिया उपसंख्यातव्या । कुतः ? पुद्गलपरिणामात् इति ? तन्न किं कारणं ? धर्माधर्माकाशानां क्रियाप्रतिषेधे संबंधेनोक्तत्वात् ।

**कालस्यापि क्रियावत्त्वप्रसंग इति चेन्न पूर्वत्रानभिधानात् ॥२५॥** स्यान्मतं यदि धर्माधर्माकाशानां क्रियापरिणामप्रतिषेधात् सामर्थ्यात् पुद्गलानां क्रियावत्त्वमनुमीयते । ननु कालस्यापि क्रियावत्त्वं प्रसज्यत इति ? तन्न । किं कारणं ? पूर्वत्र अनभिधानात् "अजीवकाया धर्माधर्माकाशपुद्गलाः" इत्यत्र । तत्र हि पाठे 'आ आकाशादेकद्रव्याणि निःक्रियाणि' इत्यतः कालस्य बहिर्भावात् न पुद्गलवत् क्रियावत्त्वं भवेत् । अथवा पूर्वत्रानभिधानात् । क ? द्रव्याणि जीवाः कालश्चेति । यदि कालस्य क्रियावत्त्वमिष्टं भवेत् तत्र पठ्येत तथा सति जीवाश्चेति चशब्दाकरणात् लघुसूत्रं स्यात् । पुनः कालश्च इत्यवचनाच्च । अनंतसमयार्थं पुनः कालश्च इति कर्तव्यमिति चेन्न आकाशस्यानंता: कालस्य चेति सिद्धत्वात् । एवं लघीयसा न्यायेन सिद्धे यदुत्तरत्र निर्देशे कालश्चेति वचनं तेन ज्ञायते नास्ति कालस्य क्रियावत्त्वमिति । तत्र निःक्रियत्वे परिस्पंदात्मिका क्रिया प्रत्यवसेया, नचास्त्यादिक्रिया प्रति । तस्मादनादिपारिणामिकास्त्यादिक्रियाद्रव्यार्थादेशात् स्यात् क्रियावान् कालः । देशांतरप्रापणसमर्थपरिस्पंदक्रियाविशेषपरिणामाभावादेशाच्च स्यान्निःक्रियः ।

**सा दशप्रकारा प्रयोगबंधाभावच्छेदाभिघातावगाहनगुरुलघुसंचारसंयोगस्वभावनिमित्तभेदात् ॥ २६ ॥** सैषा क्रिया दशप्रकारा वेदितव्या । कुतः प्रयोगादिनिमित्तभेदात् । तद्यथा—इष्वेरंडबीजमृदंगशब्दजतुगोलकनौद्रव्यपाषाणालाबुसुराजलदमारुतादीनां इषुचक्रकणयादीनां प्रयोगगतिः । एरंडतिंदुकबीजानां बंधाभावगतिः । मृदंगभेरीशंखादिशब्दपुद्गलानां छिन्नानां गतिः छेदगतिः । जतुगोलककंदुदारुपिंडादीनां अभिघातगतिः । नौद्रव्यपोतकादीनां अवगाहनगतिः । पाषाणायस्फालानां गुरुगतिः । अलाबुद्रुतार्कतूलादीनां लघुगतिः । सुरासौवीरकादीनां संचारगतिः । जलधरमुशलादीनां वायुवाजिहस्त्यादीनां संयोगगतिः । मारुतपावकपरमाणुसिद्धज्योतिष्कादीनां स्वभावगतिः । वायोः केवलस्य तिर्यग्गतिः । भस्त्रादियोगादनियता गतिः । अग्नेरूर्ध्वगतिः । कारणवशाद्दिगंतरगतिः । परमाणोरनियता । सिध्यतामूर्ध्वगतिरेव । ज्योतिषां नित्यभ्रमणं नृलोके ।

**मत्वर्थीयप्रयोगादन्यत्वं शब्दादीनां दंडवदिति चेन्न अनेकांतात् ॥ २७ ॥** स्यान्मतं यथाऽन्यत्वे सत्वे सति संबंधे मत्वर्थीयो दृश्यते । दंडी देवदत्त इति तथा अत्रापि मत्वर्थीयदर्शनात् शब्दादीनां अन्यत्वं तद्वद्योऽनुमीयत इति ? तन्न । किं कारणं ? अनेकांतात् । अनन्यत्वेपि लोके मत्वर्थीयो दृश्यते सारवान्स्तंभः आत्मवान् पुरुष इति । कथंचित् अन्यत्वोपपत्तेश्च । शब्दादीनां पुद्गलेभ्यः भेदापर्यादेशात् स्यादन्यत्वं । शब्दादिपरिणामे च तत्स्वाय पिंडवत् तादात्म्यादेशात् स्यादनन्यत्वं । अत्राह—यदि स्पर्शादयश्च शब्दादयश्च पुद्गलपरिणामाः किमर्थमेषां पृथग्ग्रहणं ननु एक एव योगः कर्तव्यः ? इत्यत्रोच्यते ।

**पृथग्ग्रहणं केषांचिदुभयपर्यायज्ञापनार्थं ॥ २८ ॥** स्पर्शादयः परमाणूनां स्कंधानां च भवंति शब्दादयस्तु स्कंधानामेव व्यक्तिरूपेण भवंति । सौक्ष्म्यवर्ज्या इत्येतस्य विशेषस्य प्रतिपत्त्यर्थं पृथग्योगकरणं । सौक्ष्म्यं तु अत्यमणुष्वेव आपेक्षिकं स्कंधेषु । यद्येवं सौक्ष्म्यग्रहणं पूर्वसूत्र एव कर्तव्यं ? इह कारणं स्थौल्यप्रतिपक्षप्रतिपत्त्यर्थं ।

**स्पर्शादीनामेकजातीयपरिणामख्यापनार्थं च ॥ २९ ॥** स्पर्शादीनां गुणानामेकजातीय इत्येतस्यार्थस्य ख्यापनार्थं च क्रियते पृथक् ग्रहण । तद्यथा—स्पर्श एको गुण काठिन्यलक्षण स्वजात्यपरित्यागेन पूर्वोत्तरस्वगतिभेदनिरोधोपजननसतत्या वर्तनात्, द्वित्रिचतु सख्येयासख्येयानतगुणकाठिनस्पर्शपर्यायैरेव परिणमते न मृदुगुरुलघ्वादिस्पर्शै । एव मृद्वादयोपि योज्या । रसश्च तिक्त एक एव गुण रसजातिमजहत् पूर्वनवनाशोत्पादावनुभवन् द्वित्रिचतु सख्येयासख्येयानतगुणतिक्तरसैरेव परिणमते न कटुकादिरसै । एव कटुकादयो वेदितव्या । गधश्च सुरभिरेको गुण स्वजातिमजहत्पूर्वनव्यादिगुणसुरभिगधपर्यायैरेव परिणमते नासुरभिगधै । एवमसुरभिगधो वाच्य । वर्णश्च शुक्ल एको गुण स्वजात्यपरित्यागेन पूर्वव्यादिशुक्लवर्णैरेव परिणमते न नीलादिभि । एव नीलादयोपि च नेतव्या । अत्र यदा काठिनस्पर्शो मृदुस्पर्शेन, गुरुर्लघुना, स्निग्धो रूक्षेण, शीत उष्णेन, परिणमते । तिक्तश्च कटुकादिभि सुरभिश्चेतरेण, शुक्लश्च कृष्णादिभि, इतर चेतरे, सयोगे च गुणातरैस्तदा कथ ? । तत्रापि काठिनस्पर्शजातिमजहत् मृदुस्पर्शेनैव विनाशोत्पादौ अनुभवन् परिणमते नेतरैरेवमितरत्रापि योज्य ।

**नोदनाभिघाताद्युपसख्यानमिति चेन्न चशब्दस्येष्टसमुच्चयार्थत्वात् ॥ ३० ॥** स्यान्मत नोदनाभिघातादय पुद्गलपरिणामा सति तेषामत्रोपसख्यान कर्तव्यमिति ? तन्न किं कारण ? चशब्दस्येष्टसमुच्चयार्थत्वात् । ये पुद्गलपरिणामा आगमे इष्टा तेषामिह चशब्देन समुच्चय क्रियते । अत्राह—यदेवमर्थं पृथग्योगकरणमुच्यता तस्य स्पर्शादिपरिणामा पुद्गला के वा तदुभयभाज ? इत्यत्रोच्यते—

## अणवः स्कधाश्च ॥ २५ ॥

**प्रदेशमात्रभाविस्पर्शादिपर्यायप्रसवसामर्थ्येनाण्यते शब्द्यते इत्यणवः ॥ १ ॥** प्रदेशमात्रभाविभि स्पर्शादिभि गुणैस्सतत परिणमत इत्येव अण्यते शब्द्यते ये ते अणव । सौक्ष्म्यादात्मादय आत्ममध्या आत्मांताश्च । उक्तच—

अतादि अतमज्झं अतते णेव इदिए गेज्झ ।
ज दव्व अविभागी त परमाणु विजाणीहि ॥ १ ॥

**स्थौल्याद्ग्रहणनिक्षेपणादिव्यापारास्कदनात् स्कधाः ॥ २ ॥** स्थौल्यभावेन ग्रहणनिक्षेपणादिव्यापारास्कदनात् स्कधा इति सज्ञायते रूढा क्रिया क्वचित् सति उपलक्षणत्वेनाश्रिता इति ग्रहणादिव्यापारायोग्येष्वपि द्व्यणुकादिषु स्कधाख्या वर्तते ।

**उभयत्र जात्यपेक्ष बहुवचन ॥ ३ ॥** अनंतभेदा अपि पुद्गला अणुजात्या स्कधजात्या वा द्वैविध्यमापद्यमाना सर्वे गृह्यत इति तज्जात्याधारानतभेदससूचनार्थं बहुवचन क्रियते ।

**अणुस्कधा इत्यस्तु लघुत्वादिति चेन्न उभयसूत्रसबधार्थत्वात् भेदकरणस्य ॥४॥** स्यान्मत अणव स्कधा इति करण युक्त लघुत्वादिति ? तन्न । किं कारण ? उभयसूत्रसबधार्थत्वात् भेदकरणस्य । स्पर्शरसगधवर्णवतोऽणव शब्दबधसौक्ष्म्यस्थौल्यसस्थानभेदतमश्छायातपोद्योतवतश्च स्कधा इति । वृत्तौ पुन सत्यां समुदायस्यार्थवत्त्वात् । अवयवार्थाभावात् भेदेनाभिसबध कर्तुं न शक्य ।

**कारणमेव तदन्त्यमित्यसमीक्षिताभिधान कथचित् कार्यत्वात् ॥ ५ ॥** कारणमेव तदन्त्यमिति केचित् कथयति परमाणु, तदसमीक्षिताभिधान । कुत ? कथंचित् कार्यत्वात् । परमाणुर्हि केनचित् प्रकारेण कार्य "भेदादणु" इति वक्ष्यमाणत्वात् ।

**अविरोध इति चेन्नैवशब्देनावधारणात् ॥ ६ ॥** स्यादेतत् कथचित् कार्यत्वेनोपपत्तौ कारणस्याप्रतिषेधात् अविरोध इति ? तन्न । किं कारण ? एवशब्देनावधारणात् । यत एवकारण ततोऽन्यथावधारणमिति कारणमेव परमाणुर्न कार्यमिति कार्यत्वनिषेधात् ।

**नित्य इति चायुक्तं स्नेहादिभावेनानित्यत्वात् ॥ ७ ॥** नित्य परमाणु इति एतच्च वचन अयुक्त । कुत ? स्नेहादिभावेन अनित्यत्वात् । स्नेहादयो हि गुणा परमाणौ प्रादुर्भवति च ततस्तत्पूर्वकमस्यानित्यत्वमिति ।

**अनादिपरमाण्वरस्थमिति चेन्न तत्कार्याभावात् ॥ ८ ॥** स्यान्मत अनाद्यणुत्वावस्थ परमाणुरस्ति स व्यणुकादिकार्यहेतुत्वात् कारणमेव न कार्यं, न हि असौ भेदादुत्पद्यत इति ? तन्न । किं कारण ? तत्कार्याभावात् । न हि तस्यानादिपारिणामिका एव वस्यस्य ? कार्यमस्ति तत्स्वभावाविनिवृत्ते सति च कार्ये तद्भेदादणुरिति कार्यत्वसिद्धि । तत. कार्यस्याभावात् कारणमिति व्यपदेशश्च नोपपद्यते । नहि असति पुत्रेऽस्ति पितृव्यव्यपदेश इति ।

**छायादि तत्कार्यमिति चेन्न स्कधनिमित्तत्वात् ॥९॥** यदि छायादिकार्यमनादिपरमाणोरिति कल्प्यते तदपि नोपपद्यते । कुत ? स्कधनिमित्तत्वात् । अनतनतप्रदेशस्कधारब्धच्छायादि नानादिपरमाणुकार्य ।

**प्रतिज्ञामात्रमिति चेन्न चाक्षुपत्वात् ॥ १० ॥** अथ मत प्रतिज्ञामात्रमेतत् स्कधकार्य छायादि नाणुकार्यमिति तच्चायुक्त । कुत ? चाक्षुषत्वात् । चाक्षुष हि छाया यदि, अचाक्षुषमणुकार्यं न भवतुमर्हति । न चानादिपरमाणुर्नाम कश्चिदस्ति भेदादणुरिति वचनात् ।

**नित्यवचन तदर्थमिति चेन्न तस्यापि स्नेहादिविपरिणामाभ्युपगमात् ॥ ११ ॥** स्यान्मत नित्यवचनमनादिपरमाण्वर्थमिति तन्न । किं कारण ? तस्यापि स्नेहादिविपरिणामाभ्युपगमात् । न हि निष्परिणाम कश्चिदर्थोऽस्ति । नयापेक्षमिति चेद्युक्त । अथ मत कारणमेव तदत्य नित्य इति वचन नयापेक्ष व्यणुकादिवत् सघातकार्याभावात् कारणमेव । द्रव्यार्थतया व्ययोदयाभावात् नित्य., इत्येव सति युक्तं हेतुविशेपसामर्थ्यार्पणे अवधारणाविरोधात् । द्रव्यार्थतयावस्थानाच्च ।

**एकरसवर्णगधोऽणु निरवयवत्वात् ॥ १२ ॥** एकरस एकगधश्च परमाणुर्वेदितव्य । कुत ? निरवयवत्वात् । सावयवाना हि मातुलिंगादीनां अनेकरसत्व दृश्यते । अनेकवर्णत्व च मयूरादीनां, अनेकगधत्व चानुलेपनादीना च । निरवयवश्चाणुरत एकरसवर्णगध ॥

**द्विस्पर्शो विरोधाभावात् ॥ १३ ॥** द्विस्पर्शोऽणुरवगतव्य । कुत ? विरोधाभावात् । कौ पुन द्वौ स्पर्शौ शीतोष्णस्पर्शयोरन्यतर स्निग्धरूक्षयोरन्यतरश्च । एकप्रदेशत्वात् विरोधिनो युगपदनवस्थान । गुरुलघुमृदुकठिनस्पर्शाना परमाणुष्वभाव स्कधविषयत्वात् । कथ पुन तेषा अणूनामत्यतपरोक्षाणा अस्तित्वमवसीयत इति चेदुच्यते–

**तदस्तित्व कार्यलिंगत्वात् ॥ १४ ॥** तेषामणूनामस्तित्व कार्यलिंगत्वादवगतव्य । कार्यलिंग हि कारण नाऽसत्सु परमाणुषु शरीरेंद्रियमहाभूतादिलक्षणस्य कार्यस्य प्रादुर्भाव इति ।

**अनेकांतः कारणत्वादिविकल्पः ॥ १५ ॥** अणो कारणत्वादिविकल्पोऽनेकातो योज्य । स्यात्कारण स्यात्कार्यमित्यादि । व्यणुकादिकार्यप्रादुर्भावनिमित्तत्वात् स्यात्कारणमणु । भेदादुपजायत इति स्यात्कार्यं । स्निग्धरूक्षत्वादिकार्यगुणाधिकरणाद्वा तत पुनर्भेदाभावात् स्यादत्य । प्रदेशभेदाभावेपि पुनरपि गुणभेदसद्भावात् स्यानांत्य । सूक्ष्मपरिणामसद्भाववलात् [illegible] स्यात्स्थूल । द्रव्यताऽपरित्यागात् स्यान्नित्य । बधभेदपर्यायादेश [illegible] नित्य [illegible] । निष्प्रदेशत्वपर्यायार्पणात् स्यादेकरसगधो द्विस्पर्शश्च । अन [illegible] नेकरसादि । कार्यलिंगेनानुमीयमानसद्भावादेशात् स्यात्कार्यलिंग. [illegible] कार्यलिंग. । उक्त च—

सूक्ष्मो नि [illegible]

के पुन स्कधा ?

**परिप्राप्तबधपरिणामाः स्कंधाः ॥ १६ ॥** बधो वक्ष्यते त परिप्राप्ता येऽणव ते स्कधा इति व्यपदेशमर्हंति । ते त्रिविधा' स्कध। स्कधदेशा स्कधप्रदेशाश्चेति । अनतानतपरमाणुबधविशेष स्कध । तदर्धं देश । अर्धार्धं प्रदेश । तद्भेदा पृथिव्यप्तेजोवायव स्पर्शादिशब्दादिपर्याया । पृथिवी तावत घटादि लक्षणा स्पर्शादिशब्दाद्यात्मिका सिद्धा । अभोपि तद्विकारत्वात् तदात्मक साक्षात् गधोपलब्धेश्च । तत्सयोगिना पार्थिवद्रव्याणा गध तद्गुण इवोपलभ्यत इतिचेन्न साध्यत्वात् तद्वियोगकालादर्शनात् तदविनाभावाच्च तद्गुणा एवेति निश्चय कर्तव्य । गधवदभ रसवत्वात् आम्रफलवत् । तथा तेजोपि स्पर्शादिस्वभावक तद्वत्कार्यत्वात् घटवत् । स्पर्शादिमतां हि काष्ठादीनां कार्यं तेज । किं च तत्परिणामात् । उपयुक्तस्य हि आहारस्य स्पर्शादिगुणस्य वातपित्तश्लेष्मत्रिपरिणाम । पित्त च जठराग्नि । तस्मात् स्पर्शादिमत्तेज । तथा स्पर्शादिशब्दादिपरिणामो वायु स्पर्शवत्वात् घटादिवत् । किं च—तत्परिणामात् । उपयुक्तस्य स्पर्शादिगुणस्य वातपित्तश्लेष्मत्रिपरिणाम । वातश्च प्राणादि । ततो वायुरपि स्पर्शादिमान् इत्यवसेय । एतेन अन्ये च चतु त्रिद्वि एकगुणा पृथिव्यादय पार्थिवादिजातिभिन्ना इति तद्दर्शन प्रत्युक्त । आह किमेषा अणुस्कधलक्षण परिणामोनादि ? उत आदिमान् ? इत्युच्यते—स खलूत्पत्तिमत्त्वादादिमान् प्रतिज्ञायते । यद्येवमभिधीयता कस्मान्निमित्तादुत्पद्यत इति । तत्र स्कधाना तावदुत्पत्तिहेतुप्रतिपादनार्थमिदमुच्यते—

## भेदसघातेभ्य उत्पद्यंते ॥ २६ ॥

**सहतानां द्वितयनिमित्तवशात् विदारण भेदः ॥ १ ॥** बाह्याभ्यतरविपरिणामकारणसनिधाने सति सहताना स्कधाना विदारणनानात्व भेद इत्युच्यते ॥

**विविक्तानां एकीभाव सघातः ॥ २ ॥** पृथग्भूताना एकत्वापत्ति सघात । इति कथ्यते । ।

**द्वित्वाद्विवचनप्रसग इति चेन्न बहुवचनस्यार्थविशेषज्ञापनार्थत्वात् ॥३॥** स्यादेतत् भेदसघातयोर्द्वित्वात् द्विवचनेन भवितव्यमिति ? किं कारण ? बहुवचनस्यार्थविशेषज्ञापनार्थत्वात् । अतो भेदेन सघात' भेदसघात इत्यस्याप्यविरोध कृतो भवति ।

**उत्पूर्व पदिर्जात्यर्थ' ॥ ४ ॥** उत्पूर्व पदिर्जात्यर्थो द्रष्टव्य उत्पद्यते जायत इति यावत् ।

**तदपेक्षो हेतुनिर्देशः ॥ ५ ॥** भेदसघातेभ्य इत्यय हेतुनिर्देश तदपेक्षो वेदितव्य । निमित्तकारणहेतुषु सर्वासा प्रदर्शनात् इति भेदसघातेभ्य करणेभ्य उत्पद्यते इति हेत्वर्थगते । तद्यथा—द्वयो परमाण्वो सघाताद्द्विप्रदेशस्कध उत्पद्यते। द्विप्रदेशस्य अणोश्च त्रयाणा वाऽणूना सघातात्त्रिप्रदेश । द्वयो द्विप्रदेशयो त्रिप्रदेशयो त्रिप्रदेशस्याणोश्चतुर्णां वाऽणूना सघाताच्चतु प्रदेश । एव सख्येयाना असख्येयानामनताना च सघातात्तावत्प्रदेश । एषामेव भेदात् द्विप्रदेशपर्यतात् स्कधा उत्पद्यते । एव भेदसघाताभ्या एकसमयिकाभ्यां द्विप्रदेशादय स्कधा उत्पद्यते । अन्यतो भेदेन अन्यस्य सघातेनेत्येवमुक्तानामणुस्कधानामविशेषेण भेदादिहेतुकोत्पत्तिप्रसगे विशेषप्रतिपत्त्यर्थमिदमुच्यते—

## भेदादणु ॥ २७ ॥

**सामर्थ्यादवधारणप्रतीतेरेवकारावचन अब्भक्षवत् ॥१॥** यथा च कश्चित् अपो न भक्षयति इत्यब्भक्षणसिद्धे अब्भक्षणवचनात् अप एव भक्षयतीत्यवधारण गम्यते । एव भेदसघातेभ्य उत्पद्यते इत्यनेनैवाणोर्भेदादुत्पत्तौ सिद्धाया पुनर्वचनमवधारणार्थं भवति—भेदादेवाणु न सघातात् नापि भेदसघाताभ्यामिति । अत्राह सघातादेव स्कधानामात्मलाभसिद्धेर्भेदसघातग्रहणमनर्थकमिति तद्ग्रहणप्रयोजनप्रतिपादनार्थमिदमुच्यते—

## भेदसंघाताभ्यां चाक्षुष ॥ २८ ॥

अनतानतपरमाणुसमुदयनिष्पाद्योपि कश्चिच्चाक्षुष कश्चिच्चाऽचाक्षुष । तत्र योऽचाक्षुष' स कथं

चाक्षुषो भवतीति चेदुच्यते —भेदसंघाताभ्यां चाक्षुष न भेदादिति। कात्रोपपत्तिरिति चेदुच्यते -सूक्ष्मपरिणामस्य स्कंधस्य भेदसौक्ष्म्यापरित्यागात् अचाक्षुषत्वमेव । सूक्ष्मपरिणतः पुनरपरः सत्यपि तद्भेदेऽन्यसघातांतरसयोगात् सौक्ष्म्यपरिणामोपरमे स्थौल्योत्पत्तौ चाक्षुषो भवति। अत्राह —गतिस्थित्यवगाहनवर्तनाशरीरादिपरस्परोपकाराद्यनुमितास्तित्व धर्मादि पुरस्ताद्द्रव्यमित्याख्यात तत्कथ ? सद्द्रव्यलक्षण, धर्मादिद्रव्यमित्यवध्रियते सत्वात् यत्सत्तद्द्रव्य। यद्येव प्राप्तमिद मत किं लक्षण। इत्युच्यते यदिंद्रियग्राह्यमतींद्रियमपि बाह्याध्यात्मिकनिमित्तापेक्ष, उत्पादव्ययध्रौव्ययुक्त सद्वेदितव्यमिति वाक्यशेष । अथवा धर्मादि सत्त्वात् द्रव्यमित्यवधृत । तस्मात् अभिधीयतां किं तत्सत इति ? तत इदमुपादिक्षत —

## उत्पादव्ययध्रौव्ययुक्तं सत् ॥ २९ ॥

अथवा यद्युपकारसद्भावात् धर्मादिद्रव्य सद्विवक्षित तदा नोपकरोति तदा तदसत्वप्रसग इत्युच्यते— असत्यपि उपकारविशेषे यस्मात् सामान्ये द्रव्यलक्षणत्रये सन्निहिते उत्पादव्ययध्रौव्ययुक्त सत्तद्द्रव्य भविष्यतीत्यर्थ ।

**स्वजात्यपरित्यागेन भावांतरावाप्तिरुत्पादः ॥१॥** चेतनस्य अचेतनस्य वा द्रव्यस्य स्वजातिमजहत॰ निमित्तवशात् भावांतरावाप्तिरुत्पादनमुत्पाद इत्युच्यते। मृत्पिंडस्य घटपर्यायवत्।

**तथा पूर्वभावविगमो व्ययः ॥ २ ॥** तेन प्रकारेण तथा स्वजात्यपरित्यागेन इत्यर्थ पूर्वभावविगमो व्ययन व्यय इति कथ्यते। यथा घटोत्पत्तौ पिंडाकृते ।

**ध्रुवे स्थैर्यकर्मणोर्ध्रुवतीति ध्रुव ॥ ३ ॥** अनादिपारिणामिकस्वभावत्वेन व्ययोदयभावात् ध्रुव स्थिरीभवति इति ध्रुव, ध्रुवस्य भाव कर्म वा ध्रौव्य। यथा पिंडघटाद्यवस्थासु मृदाद्यन्वयात्।

**अन्येनान्यसंयोगे दंडिवदिति चेन्न अंतर्नीतसत्ताक्रियस्य युजेराश्रितत्वात् ॥ ४ ॥** स्यान्मत उत्पादश्च व्ययश्च ध्रौव्य च उत्पादव्ययध्रौव्याणि । उत्पादव्ययध्रौव्यैर्युक्त उत्पादव्ययध्रौव्ययुक्तमिति निर्देशो नोपपद्यते। कुत ?अन्येनान्यस्य योगात् दडिवदिति ? तन्न। किंकारण ? अंतर्नीतसत्ताक्रियस्य युजेराश्रितत्वात्। कथ पुन युजे सत्ताक्रियत्व इति चेदुच्यते—सर्वे धातवो भाववचना भावश्च सत्ता क्रिया इत्यनर्थांतर। तामेव सर्वे शब्दा॰ स्वार्थोपनिधानेनावच्छिद्यावच्छिद्य विषयीकुर्वंति। उत्पादव्ययध्रौव्ययुक्त सदिति यावत् तावदुत्पादव्ययध्रौव्ययुक्तमिति। सर्वधातूना सत्तार्थत्वे एधादीना वृद्ध्यादिप्रतिनियतार्थत्वाभाव इति चेन्न सत्तार्थत्वे सत्येधादीना वृद्ध्याद्यर्थप्रवृत्तेर्नासता खरविषाणादीना वृद्ध्यादिरर्थोस्ति।

**उत्पादव्ययध्रौव्यवदिति न्याय्यमिति चेन्न उपालंभपरिहारतुल्यत्वात् ॥ ५ ॥** स्यादेतत॰ यद्यतर्नीतसत्ता क्रिया युजि परिगृह्यते उत्पादव्ययध्रौव्यवदित्येतदेव न्याय्यमिति ? तन्न। किं कारण ? उपालंभपरिहारतुल्यत्वात्। यथा गोभ्योऽन्यत्वे देवदत्तस्य गोमानिति व्यपदेशो भवति न तथा उत्पादव्ययध्रौव्येभ्योऽन्यद्द्रव्यमिति मत्वर्थीयो नोपपद्यते इति उपालभो न निवर्तते । अनन्यत्वेपि लोके मत्वर्थीयो दृश्यते—आत्मवान् आत्मा, सारवान् स्तम॰ इति परिहारश्च तुल्य ।

**समाधिवचनत्वाद्वा ॥ ६ ॥** अथवा समाधिवचनोय युजि परिगृह्यते। युक्त॰ समाहित इत्यर्थ । समाधान च तात्पर्य तादात्म्यमिति यावत्। उत्पादव्ययध्रौव्ययुक्तमुत्पादव्ययध्रौव्यात्मकमित्यर्थ ।

**कथंचिदन्यत्वोपपत्तेर्वा ॥ ७ ॥** यथा वा पर्यायेभ्य पर्यायिण कथचिदन्यथाऽन्यत्वोपपत्ते । योगवचन एव वा युक्तशब्दो न्याय्य । यदि हि सर्वथा अनन्यत्व स्यात् उभयाभावप्रसग॰ स्यात्।

**सच्छब्दस्य प्रशंसाद्यनेकार्थसंभवे विवक्षातोऽस्तित्वसंप्रत्ययः ॥ ८ ॥** सच्छब्द प्रशसादिषु दृष्टप्रयोग । प्रशसायां तावत्-सत्पुरुष॰ प्रशस्त॰ पुरुष इत्यर्थ । क्वचिदादरे—सत्करोति आदर करोतीत्यर्थ । क्वचिदस्तित्वे—सद्भूतमयमाह विद्यमानमाहेत्यर्थ । क्वचित् प्रज्ञायमाने—प्रव्राजित सन्

कथमन्तर भूयात् प्रव्रजित इति प्रज्ञायमान इत्यर्थ । तेनेह विवक्षात अस्तित्ववचनो वेदितव्य ।

**व्ययोत्पादाव्यतिरेकाद्द्रव्यस्य ध्रौव्यानुत्पत्तिरिति चेन्नाभिहितानवबोधात् ॥ ९ ॥** स्यादेतत् व्ययोत्पादाभ्यामव्यतिरेकात् द्रव्यस्य व्ययोत्पादात्मकत्वात् ध्रुवत्व नोपपद्यते इति ? तन्न । किं कारण अभिहितानवबोधात् । द्रव्यार्थादेशानात् ध्रौव्यमभिहित व्ययोत्पादाभ्या व्यतिरेकात् । यदि च व्ययोत्पादाभ्यामव्यतिरेकात् ध्रौव्यमभिहित स्यात् तदव्यतिरेकात् अध्रौव्य भवेत् । यदि वा व्ययोत्पादाभ्या व्यतिरेकात् द्रव्य ध्रुव द्रव्यादपि व्यतिरेकात् व्ययोत्पादयोर्ध्रौव्य प्रसज्येत । अथवाऽभिहितानवबोधात् नैकांतेन व्ययोदयाभ्यामव्यतिरेको द्रव्यस्याभिहित । यदि स्यात् तदन्यतरव्यतिरेकात् तद्भावापत्ते ध्रौव्याभाव स्यात् । यतस्तु केनचित् प्रकारेण व्ययोत्पादाभ्या व्यतिरेक केनचिदव्यतिरेक । व्ययोत्पादकाले द्रव्यार्थादेशात् स्याद्व्यतिरेक । द्रव्यजात्यपरित्यागात् स्यादव्यतिरेक । तत एकांतपक्षोपालम्भाभाव एकांतव्यतिरेके हि द्रव्य प्रत्याख्याय अन्यत्र व्ययोदयावुपालभ्येयाता । ऐकांतिकाव्यतिरेके च एकलक्षणत्वात् अन्यतराभावेऽवशिष्टस्याप्यभाव स्यात् ।

**स्ववचनविरोधाच्च ॥ १० ॥** यदि व्ययोत्पादाव्यतिरेकात्र द्रव्यस्य ध्रौव्य यस्तेन स्वपक्षसिद्धये हेतुर्व्यपदिश्यते स साधकत्वाद्व्यतिरिक्त इति पक्षस्यापि साधक स्यात् । परपक्षस्य वा यो दूषक इति ततोऽव्यतिरेकात् स्वपक्षस्यापि दूषक इति वचनविरोध ततश्च न युक्तमुक्त व्ययोत्पादाव्यतिरेकात् ध्रौव्यानुपपत्तिरिति ।

**उत्पादादीनां द्रव्यस्य चोभयथा लक्ष्यलक्षणभावानुपपत्तिरिति चेन्न अन्यत्वानन्यत्व प्रत्यनेकांतोपपत्तेः ॥ ११ ॥** स्यान्मत उत्पादव्ययध्रौव्याणि द्रव्यादर्थांतरभूतानि वा स्यु अनर्थांतरभूतानि वा ? यद्यर्थांतरभाव कल्प्येत तानिव सत्त्वानि सतोऽन्यत्वात् द्रव्यत्वाभाव स्यात् तदभावे च निराधारत्वात् उत्पादादीनामभाव इति लक्ष्यलक्षणभावो नोपपद्यते । नहि असता वंध्यापुत्राकाशकुसुमादीनां लक्ष्यलक्षणभावोऽस्ति । अथानर्थांतर चमिष्येत । लक्ष्यमेव लक्षणमिति दृष्टविरोध स्यात् इति ? तन्न । किं कारण ? अन्यत्वानन्यत्व प्रत्यनेकांतोपपत्ते । पर्यायिण पर्यायाणा च स्यादन्यत्व स्यादनन्यत्व । यथैकस्य मनुष्यस्य जातिकुलरूपादिभि अविशिष्टस्य अनेकसबधांतरविभक्तपितृपुत्रभ्रातृभागिनेयादयो धर्मा परस्परतोविशिष्टा उपलभ्यते न तेषा भेदात्तस्य भेद । नापि तस्याभेदात्तेषामभेद । तत पितृत्वादि शक्त्यपेक्षया नानात्वमनुष्यजात्यपेक्षया न पृथक् । तथा द्रव्यस्यापि बाह्याभ्यतरहेतुविशेषापादिता पर्याया कथचिद्भिन्ना द्रव्यार्पणात् कथचिदभिन्ना इति नासत्त्व न लक्ष्यलक्षणभावाभाव । तस्मादुत्पादादित्रयैक्यवृत्ति सत्ता तद्युक्त द्रव्यमिस्यनवद्य । अत्राह—द्रव्यस्यात्मभूतोऽन्वयी धर्म तथा पर्यायोऽप्यात्मभूतो द्रव्यस्येति तन्निवृत्तिद्रव्यनिवृत्तिकल्पनायामुच्छेदप्रसग इत्यत्र ब्रूमहे स्यादेतदेव यदि क्रमेण पिंडघटकपालादिवद्रूपिद्रव्याजीवानुपयोगत्वादिलक्षण परिणाम कादाचित्क स्यात् । यत सत्यपि व्ययोत्पादत्वे पर्यायाणा—

## तद्भावाव्ययं नित्य ॥ ३० ॥

किं अव्ययस्याम ? द्रव्यमिति वाक्यशेष तद्भाव इत्युच्यते । कस्तद्भाव ?

**प्रत्यभिज्ञानहेतुना तद्भाव ॥ १ ॥** तदेवेदमिति स्मरण प्रत्यभिज्ञान तदकस्मान्न भवति इति योऽस्य हेतु स तद्भाव भवन भाव तस्य भावस्तद्भाव । येनात्मना प्राग्दृष्ट वस्तु तेनैवात्मना पुनरपि भावात् तदेवेदमिति प्रत्यभिज्ञायते । यद्यत्यतनिरोधाभिनवप्रादुर्भावमात्रमेव, स्मरणानुपपत्ते तदधीनलोकसव्यवहारो विरुध्यते । तत तद्भावेनाव्यय नित्यमिति निश्चीयते ।

**विरोध इति चेद्धर्मांतराश्रयणात् ॥ २ ॥** स्यान्मत यदेव न व्येति उत्पद्यमान एव नोपपद्यते इति विरोध , ततो न युक्तमिति तन्न । किं कारण धर्मांतराश्रयणात् यदि येन रूपेण व्ययोदयकल्पना तेनैव रूपेण नित्यता प्रतिज्ञायेत स्याद्विरोध । जनकत्वापेक्षयैव पितापुत्रव्यपदेशवत् । ननु धर्मांतरसश्रयणात् पुनरपि मिथ्यादर्शनाकुलितचेता निरूपितमपि त्रितयात्मकत्वमप्रतिपद्यमान आह—

चाक्षुषो भवतीति चेदुच्यते —भेदसंघाताभ्यां चाक्षुष न भेदादिति । कात्रोपपत्तिरिति चेदुच्यते —सूक्ष्मपरिणामस्य स्कंधस्य भेदसौक्ष्म्यापरित्यागात् अचाक्षुषत्वमेव । सूक्ष्मपरिणतः पुनरपरः सत्यपि तद्भेदेऽन्यसंघातांतरसंयोगात् सौक्ष्म्यपरिणामोपरमे स्थौल्योत्पत्तौ चाक्षुषो भवति । अत्राह —गतिस्थित्यवगाहनवर्तनाशरीरादिपरस्परोपकाराद्यनुमितास्तित्व धर्मादि पुरस्ताद्द्रव्यमित्याख्यात तत्कथं ? सद्द्रव्यलक्षणं, धर्मादिद्रव्यमित्यवध्रियते सत्वात् यत्सत्तद्द्रव्य । यद्येव प्राप्तमिद मत । किं लक्षण । इत्युच्यते यदिंद्रियग्राह्यमतींद्रियमपि बाह्याध्यात्मिक निमित्तापेक्षं, उत्पादव्ययध्रौव्ययुक्त सद्वेदितव्यमिति वाक्यशेष । अथवा धर्मादि सत्त्वात् द्रव्यमित्यवधृत । तस्मात् अभिधीयता किं तत्सत इति ? तत इदमुपादिक्षत—

## उत्पादव्ययध्रौव्ययुक्तं सत् ॥ २९ ॥

अथवा यद्युपकारसद्भावात् धर्मादिद्रव्य सद्विवक्षित तदा नोपकरोति तदा तदसत्त्वप्रसंग इत्युच्यते—असत्यपि उपकारविशेषे यस्मात् सामान्ये द्रव्यलक्षणत्रये सन्निहिते उत्पादव्ययध्रौव्ययुक्तं सत्तद्द्रव्य भविष्यतीत्यर्थ ।

**स्वजात्यपरित्यागेन भावांतरावाप्तिरुत्पादः ॥ १ ॥** चेतनस्य अचेतनस्य वा द्रव्यस्य स्वजातिमजहत. निमित्तवशात् भावांतरावाप्तिरुत्पादनमुत्पाद इत्युच्यते । मृत्पिंडस्य घटपर्यायवत् ।

**तथा पूर्वभावविगमो व्ययः ॥ २ ॥** तेन प्रकारेण तथा स्वजात्यपरित्यागेन इत्यर्थ पूर्वभावविगमो व्ययन व्यय इति कथ्यते । यथा घटोत्पत्तौ पिंडाकृते ।

**ध्रुवे स्थैर्यकर्मणोर्ध्रुवतीति ध्रुव ॥ ३ ॥** अनादिपारिणामिकस्वभावत्वेन व्ययोदयभावात् ध्रुव स्थिरीभवति इति ध्रुव , ध्रुवस्य भाव कर्म वा ध्रौव्य । यथा पिंडघटाद्यवस्थासु मृदाद्यन्वयात् ।

**अन्येनान्यसंयोगे दंडिवदिति चेन्न अंतर्नीतसत्ताक्रियस्य युजेराश्रितत्वात् ॥ ४ ॥** स्यान्मत उत्पादश्च व्ययश्च ध्रौव्य च उत्पादव्ययध्रौव्याणि । उत्पादव्ययध्रौव्यैर्युक्त उत्पादव्ययध्रौव्ययुक्तमिति निर्देशो नोपपद्यते । कुत ?अन्येनान्यस्य योगात् दंडिवदिति ? तन्न । किं कारण ? अंतर्नीतसत्ताक्रियस्य युजेराश्रितत्वात् । कथ पुन युजे सत्ताक्रियत्व इति चेदुच्यते—सर्वे धातवो भाववचना भावश्च सत्ता क्रिया इत्यनर्थांतर । तामेव सर्वे शब्दा. स्वार्थोपनिधानेनावच्छिद्यावच्छिद्य विषयीकुर्वंति । उत्पादव्ययध्रौव्ययुक्त सादिति यावत् तावदुत्पादव्ययध्रौव्ययुक्तमिति । सर्वधातूनां सत्तार्थत्वे एधादीना वृद्ध्यादिप्रतिनियतार्थत्वाभाव इति चेन्न सत्तार्थत्वे सत्येधादीना वृद्ध्याद्यर्थप्रवृत्तेर्नासता खरविषाणादीना वृद्ध्यादिरर्थोऽस्ति ।

**उत्पादव्ययध्रौव्यवदिति न्याय्यमिति चेन्न उपालंभपरिहारतुल्यत्वात् ॥ ५ ॥** स्यादेतत् यद्यतर्नीतसत्ता क्रिया युजि परिगृह्यते उत्पादव्ययध्रौव्यवदित्येतदेव न्याय्यमिति ? तन्न । किं कारण ? उपालंभपरिहारतुल्यत्वात् । यथा गोभ्योऽन्यत्वे देवदत्तस्य गोमानिति व्यपदेशो भवति न तथा उत्पादव्ययध्रौव्येभ्योऽन्यद्द्रव्यमिति मत्वर्थीयो नोपपद्यते इति उपालंभो न निवर्तते । अनन्यत्वेऽपि लोके मत्वर्थीयो दृश्यते—आत्मवान् आत्मा, सारवान् स्तभ इति परिहारश्च तुल्य ।

**समाधिवचनत्वाद्वा ॥ ६ ॥** अथवा समाधिवचनोय युजि परिगृह्यते । युक्त. समाहित इत्यर्थ । समाधान च तात्पर्यं तादात्म्यमिति यावत् । उत्पादव्ययध्रौव्ययुक्तमुत्पादव्ययध्रौव्यात्मकमित्यर्थ ।

**कथंचिदन्यत्वोपपत्तेर्वा ॥ ७ ॥** यथा वा पर्यायेभ्य पर्यायिण कथंचिदन्यथाऽन्यत्वोपपत्ते । योगवचन एव वा युक्तशब्दो न्याय्य । यदि हि सर्वथा अनन्यत्व स्यात् उभयाभावप्रसंग. स्यात् ।

**सच्छब्दस्य प्रशंसाद्यनेकार्थसंभवे विवक्षातोऽस्तित्वसंप्रत्ययः ॥ ८ ॥** सच्छब्द प्रशंसादिषु दृष्टप्रयोग । प्रशंसायां तावत्–सत्पुरुष. प्रशस्त. पुरुष इत्यर्थ । क्वचिदादरे—सत्करोति आदर करोतीत्यर्थ । क्वचिदस्तित्वे—सद्भूतमयमाह विद्यमानमाहेत्यर्थ. । क्वचित् प्रव्रायमाने—प्रव्राजित सन्

## न जघन्यगुणानां ॥ ३३ ॥

**शाखादित्वाद्दिगादित्वाद्वा जघन्यशब्दसिद्धिः ॥ १ ॥** जघनमिव जघन्यमिति शाखादित्वात् सिध्यति । क उपमार्थः ? यथा शरीरावयवेषु जघनं निकृष्टं । तथाऽन्योऽपि निकृष्टो जघन्य इत्युच्यते । अथवा दिगादित्वाद्यत् सिद्धिः । जघने भवः, जघन्य इव जघन्यः । यथा जघने भवो निकृष्टस्तथान्योऽपि निकृष्टो जघन्य इति व्यपदिश्यते ।

**गुणशब्दस्यानेकार्थत्वे विवक्षावशाद्भागग्रहणं ॥ २ ॥** गुणशब्दोऽनेकस्मिन्नर्थे दृष्टप्रयोगः । क्वचिद्रूपादिषु वर्तते रूपादयो गुणा इति । क्वचिद्भागे वर्तते द्विगुणा यवा इति । क्वचिदुपकारे गुणज्ञः साधुः उपकारज्ञ इति यावत् । क्वचिद्द्रव्ये वर्तते—गुणवानयं प्रदेश इत्युच्यते यस्मिन् गावः शस्यानि च निष्पद्यन्ते । क्वचित्समेतावयवेषु द्विगुणा रज्जुरिति । क्वचिदुपसर्जने गुणभूता वयमस्मिन्ग्रामे उपसर्जनभूता इत्यर्थः । तत्रेह भागे वर्तमानः परिगृह्यते । जघन्यो गुणो येषां ते जघन्यगुणास्तेषां जघन्यगुणानां नास्ति बन्धः । एतदुक्तं भवति एकगुणस्निग्धस्य एकगुणस्निग्धेन द्वितीयादिसंख्येयासंख्येयानन्तगुणस्निग्धेन वा नास्ति बंधः । तस्यैवैकगुणस्निग्धस्य एकगुणरूक्षेण द्व्यादिसंख्येयासंख्येयानन्तगुणरूक्षेण वा नास्ति बन्धः । तथा एक-गुणरूक्षस्यापि योज्यमिति । एतौ जघन्यगुणस्निग्धरूक्षौ वर्जयित्वा अन्येषां स्निग्धरूक्षाणां परस्परेण संबन्धो भवतीति अविशेषेण प्रसंगे तत्रापि प्रतिषेधज्ञापनार्थमाह—

## गुणसाम्ये सदृशानां ॥ ३४ ॥

**सदृशग्रहणं तुल्यजातीयसंप्रत्ययार्थम् ॥१॥** स्निग्धजात्या रूक्षजात्या च तुल्यानां संप्रत्ययः यथा स्यादिति सदृशग्रहणं क्रियते ।

**गुणसाम्यग्रहणं तुल्यभागसंप्रत्ययार्थम् ॥ २ ॥** तुल्यभागा येषां तेषां ग्रहणार्थं गुणसाम्यग्रहणं क्रियते ।

**सदृशग्रहणमनर्थकं गुणसाम्यवचनादिति चेन्न समानगुणरूक्षयोः स्निग्धरूक्षयोः प्रति-षेधप्रसंगात् ॥ ३ ॥** स्यादेतत्सदृशग्रहणमनर्थकं । कुतः ? गुणसाम्यवचनात्सिद्धेरिति चेन्न, किं कारणं ? समानगुणरूक्षयोः स्निग्धरूक्षयोः प्रतिषेधप्रसंगात् । सदृशग्रहणे ह्यसति द्विगुणस्निग्धानां द्विगुणरूक्षैः त्रिगुण स्निग्धानां त्रिगुणरूक्षैर्गुणसाम्याद्बन्धः प्रतिषिध्येत । सदृशग्रहणे पुनः सति द्विगुणस्निग्धानां द्विगुण-स्निग्धैर्द्विगुणरूक्षाणां द्विगुणरूक्षैरित्येवमादिर्बन्धः कृतो भवति ।

**नवेष्टत्वात् ॥ ४ ॥** न वा एतत्प्रयोजनमस्ति किं कारणं ? इष्टत्वात् । इष्यते द्विगुणस्निग्धानामपि द्विगुणरूक्षैर्बन्धप्रतिषेधः । किमर्थं तर्हि सदृशग्रहणं ?

**गुणवैषम्ये बन्धप्रतिपत्त्यर्थं ॥ ५ ॥** गुणवैषम्ये सदृशानां बन्धो भवतीत्येतस्यार्थस्य प्रतिपत्त्यर्थं सदृशग्रहणं क्रियते । अतो विषमगुणानां तुल्यजातीयानां चाविशेषेण प्रसक्तानिष्टार्थसंप्रत्ययार्थमिदमुच्यते—

## द्व्यधिकादिगुणानां तु ॥ ३५ ॥

द्व्यधिकश्चतुर्गुणः द्वाभ्यां गुणाभ्यामधिको द्व्यधिकः । कः पुनरसौ ? चतुर्गुणः ।

**आदिशब्दस्य प्रकारार्थत्वात्पंचगुणादिसंप्रत्ययः ॥१॥** द्व्यधिकादीत्ययमादिशब्दः प्रकारार्थः । कः पुनरसौ प्रकारः ? द्वाभ्यामधिकता । तेन पंचगुणादिसंप्रत्ययो भवति । अवयवेन विग्रहः समुदायो वृत्त्यर्थः इति चतुर्गुणस्यापि ग्रहणं भवति । तेन द्व्यधिकादिगुणानां तुल्यजातीयानामतुल्यजातीयानां च बन्ध उक्तो भवति, नेतरेषां । तद्यथा—द्विगुणस्निग्धस्य परमाणोः एकगुणस्निग्धेन द्विगुणस्निग्धेन त्रिगुणस्निग्धेन वा नास्ति बंधः । चतुर्गुणस्निग्धेन पुनरस्ति बंधः । तस्यैव पुनर्द्विगुणस्निग्धस्य षट्सप्ताष्टनवदशसंख्येयास-

यन्व्येति उत्पद्यते च तत्सान्नित्य चेत्यतिसाहसमेतत् दुरुपपादत्वात् कथं श्रद्धीयत इत्यत्रोच्यते–श्रद्धे हि व्ययोत्पादवत्सु पर्यायेषु अव्यभिचारिणि सन्नित्यत्वे स्त इति । कुत. ? यस्माद्द्रव्यार्थिकपर्यायार्थिकनयसभवे अन्यतरविवक्षावशात् यथोक्ते उभे अपि—

## अर्पितानर्पितसिद्धेः ॥ ३१ ॥

**धर्मांतरविवक्षाप्रापितप्राधान्यमर्पितं ॥ १ ॥** अनेकात्मकस्य वस्तुन प्रयोजनवशात् यस्य कस्यचिद्धर्मस्य विवक्षाया प्रापितप्राधान्य अर्थरूपमर्पितमुपनीतमिति यावत् ।

**तद्विपरीतमनर्पितं ॥ २ ॥** प्रयोजनाभावात् सतोप्यविवक्षा भवति इत्युपसर्जनीभूतमनर्पितमित्युच्यते अर्पितं चानर्पितं च अर्पितानर्पिते ताभ्या सिद्धे सन्नित्यत्वे अर्पितानर्पिताभ्या सिद्धे सन्नित्यत्वे अर्पितानर्पितसिद्धि । तद्यथा—मृत्पिंड. रूपिद्रव्यमित्यर्पितं स्यान्नित्य तदर्थापरित्यागात् । अनेकधर्मपरिणामिनोऽर्थस्य धर्मांतरविवक्षाव्यापारात् रूपिद्रव्यात्मनानर्पणात् मृत्पिंड इत्येवमर्पितं पुद्गलद्रव्य स्यादनित्य तस्य पर्यायस्याध्रुवत्वात् । तत्र यदि द्रव्यार्थिकनयविषयमात्रपरिग्रह. स्यात् व्यवहारलोप. तदात्मकवस्त्वभावात् । यदि पर्यायार्थिकनयगोचरमात्राभ्युपगम. स्यात् लोकयात्रा न सिध्यति तथाविधस्य वस्तुनोऽसद्भावात् तावेकत्रोपसहृतौ लोकयात्रासमर्थौ भवेत । तदुभयात्मकस्य वस्तुन प्रसिद्धे. । इत्येवमर्पितानर्पितव्यवहारासिद्धे सान्नित्यत्वे । आह—

सतोऽनेकनयव्यवहारतत्रत्वात् उपपन्ना भेदसघातेभ्य सतां स्कधात्मनोत्पत्ति' । इद तु सदिग्ध किं सघात सयोगादेव व्यणुकादिलक्षणो भवति ? उत कश्चिद्विशेषोऽवध्रियते ? इत्युच्यते--सति सयोगे बधादेकत्वपरिणामकात् सघातो निष्पद्यते । यद्येवमिदमुच्यता कुतो न खलु पुद्गलजात्यपरित्यागे सयोगे च भवति केषाचित् बधोऽन्येषा नेति इत्युच्यते -यस्मात्तेषा पुद्गलात्माविशेषेपि अनतपर्यायाणा परस्परविलक्षणपरिणामाहितसामर्थ्याद्बध प्रतीत —

## स्निग्धरूक्षत्वाद्बधः ॥ ३२ ॥

**स्नेहपर्यायाविर्भावात् स्निह्यते स्मेति स्निग्धः ॥ १ ॥** बाह्याभ्यतरकारणवशात् स्नेहपर्यायाविर्भावात् स्निह्यते स्मेति स्निग्ध ।

**रूक्षणाद्रूक्ष ॥ २ ॥** द्वितयनिमित्तवशात् रूक्षणात् रूक्ष इति व्यपदिश्यते । स्निग्धश्च रूक्षश्च स्निग्धरूक्षौ तयोर्भाव स्निग्धरूक्षत्व । स्निग्धत्व चिक्कणत्वलक्षण पर्याय । तद्विपरीत परिणामो रूक्षत्व । स्निग्धरूक्षत्वादिति हेतुनिर्देश । तत्कृतो बधो द्व्यणुकादिपरिणाम । द्वयो स्निग्धरूक्षयोरण्वो. परस्पराश्लेषलक्षणे बधे सति द्व्यणुक स्कधो भवति । एव सख्येयासख्येयानतप्रदेशस्कधो योज्य ।

**एकगुणादिसंख्येयासख्येयानतविकल्पः स्नेहः ॥ ३ ॥** अविभागपरिच्छेदैकगुण स्नेह स्नेह प्रथम । एव द्वित्रिचतु सख्येयाऽसख्येयानतगुण स्नेहविकल्प । एवगुणा परमाणव सति ।

**तथा रूक्षः ॥ ४ ॥** यथा स्नेह उक्तस्तथा रूक्षोऽपि सख्येयासख्येयानतविकल्पो वेदितव्य. । एवगुणा परमाणव सति ।

**तोयाजागोमहिष्युष्ट्रीक्षीरघृतेषु पांशुकणिकाशर्करादिषु च प्रकर्षाप्रकर्षदर्शनात्तदनुमानं ॥ ५ ॥** यथा तोयादजाक्षीरघृते प्रकृष्टस्नेहे तत प्रकृष्टस्नेहे गोक्षीरघृते ततश्चाधिकस्नेहे महिषीक्षीरघृते ततोप्युत्कृष्टस्नेहे उष्ट्रीक्षीरघृते । पाशुभ्य प्रकृष्टरूक्षगुणा तुषकणिकादय ततो विप्रकृष्टरूक्षा शर्करा तथा परमाणुष्वपि प्रकर्षाप्रकर्षवृत्त्या स्निग्धरूक्षगुणा सतीत्यनुमान क्रियते । स्निग्धरूक्षगुणनिमित्ते बधे अविशेषेण प्रसक्ते अनिष्टगुणनिवृत्त्यर्थमाह—

ख्येयानंतगुणस्निग्धेन बंधो न विद्यते । एवं त्रिगुणस्निग्धस्य पञ्चगुणस्निग्धेन बंधोऽस्ति, शेषैः पूर्वोत्तरैर्न भवति । चतुर्गुणस्निग्धस्य षड्गुणस्निग्धेनास्ति बंधः, शेषैः पूर्वोत्तरैर्नास्ति । एवं शेषेष्वपि योज्यः । तथा द्विगुणरूक्षस्य एकद्वित्रिगुणरूक्षैर्नास्ति बंधः । चतुर्गुणरूक्षेण त्वस्ति बंधः, तत्रैव द्विगुणरूक्षस्य पञ्च-गुणरूक्षादिभिरुत्तरैर्नास्ति बंधः । एवं त्रिगुणरूक्षादीनामपि द्विगुणाधिकैर्बंधो योज्यः । एवं भिन्नजातीयेष्वपि द्विगुणस्निग्धस्य एकद्वित्रिगुणरूक्षैर्नास्ति बंधः । चतुर्गुणरूक्षेण त्वस्ति बंधः । उत्तरैः पञ्चगुण-रूक्षादिभिर्नास्ति एवं त्रिगुणस्निग्धादीनां पञ्चगुणरूक्षादिभिरस्ति । शेषैः पूर्वोत्तरैर्नास्ति बंध इति योज्यः ।

उक्तं च— णिद्धस्स णिद्धेण दुराहिएण लुक्खस्स लुक्खेण दुराहिएण ।
णिद्धस्स लुक्खेणउवेदि बंधो जहण्णवज्जो विसमे समे वा ॥ १ ॥

एवमुक्तेन विधिना बंधे सत्यणूनां द्व्यणुकाद्यनंतानंतप्रदेशान्तस्कन्धोत्पत्तिर्वेदितव्या ।

**तुशब्दो व्यावृत्तिविशेषप्रतिपत्त्यर्थः ॥ २ ॥** तुशब्दः क्रियमाणं प्रतिषेधं व्यावर्तयति-बंधं च विशेषयति । अत्राह किमर्थं सयोगजातीयपुद्गलानां बंधो नाम धर्मः कल्प्यते, न प्राप्त्याद्यात्मकत्वादनेनैव सर्वसामूहिकव्यवहारसिद्धिरित्युच्यते-संयोगेऽपि सति प्राप्तिमात्रेण कृतार्थत्वात् परस्परानुप्रवेशनिरूपकौ स्निग्धरूक्षगुणौ स्कन्धौ परमाणूनां संयोगमात्रत्वात् पारिणामिकौ न स्यातां, शुक्लकृष्णतन्तुसंयोगावस्था-नवत्ततोऽयमारंभः ।

## बंधेऽधिकौ पारिणामिकौ च ॥ ३६ ॥

**प्रकृतत्वाद्गुणसंप्रत्ययः ॥ १ ॥** प्रकृतं गुणग्रहणं तदभिसंबंधाद्गुणसंप्रत्ययो भवतीत्यधि-कगुणाविति ।

**भावांतरापादानं परिणामकत्वं क्लिन्नगुडवत् ॥ २ ॥** यथा क्लिन्नगुडो हि मधुररसः पतितानां रेण्वादीनां स्वगुणापादानात्परिणामकः । तथाऽन्योपि अधिकगुणः अल्पीयसः परिणामक इति कृत्वा द्विगुणा-दिस्निग्धरूक्षस्य चतुर्गुणादिस्निग्धरूक्षपरिणामको भवतीति, ततः पूर्वावस्थाप्रच्यवपूर्वकं तार्तीयिकमवस्थांतरं प्रादुर्भवतीत्येकस्कंधत्वमुपपद्यते, इतरथा हि शुक्लकृष्णतंतुवत्संयोगे सत्यप्यपरिणामकत्वात् सर्वविविक्तरूपेणै-वावतिष्ठेत, दृश्यते हि श्लेषे सति वर्णरसगंधस्पर्शानामवस्थांतरभावः शुक्लपीतादिसंयोगे शुकपत्रवर्णादि प्रादुर्भाववत् ।

**समाधिकावित्यपरेषां पाठः ॥ ३ ॥** बंधे समाधिकौ पारिणामिकावित्यपरे सूत्रं पठंति, द्विगुण स्निग्धस्य द्विगुणरूक्षोपि परिणामक इति ।

**तदनुपपत्तिरार्षविरोधात् ॥ ४ ॥** स पाठो नोपपद्यते, कुतः ? आर्षविरोधात् । एवं ह्युक्त मार्षे वर्गणायां बंधविधाने नोआगमद्रव्यबंधविकल्पे सादिवैस्रसिकबंधनिर्देशः प्रोक्तः । विषमरूक्षतायां च बंधः । समस्निग्धतायां समरूक्षतायां च भेदः इति तदनुसारेण च सूत्रमुक्तं । गुणसाम्ये सदृशानामित्यतः समगुणानां बंधप्रतिषेधाद्बन्धे समः परिणामक इत्यार्षविरोधिवचो न निबद्धव्यम् ।

**विषमे समे वास्ति बंध इति वचनाद्विरोध इति चेन्नार्षाज्ञानात् ॥ ५ ॥** स्यान्मतं जघ-न्यवर्ज्यो विषमे समे वास्ति इति वचनात्समगुणस्यापि बंध इत्यभ्युपगमान्नास्ति विरोध इति चेन्न किं कारणं ? आर्षाज्ञानात् । नायमस्यार्थः समगुणस्य बन्ध इति कस्तर्हि ? समस्तुल्यजातीयः । विषमोऽतुल्यजा-तीयः । समस्य चतुर्गुणस्निग्धस्य षड्गुणस्निग्धेनास्ति बंधः । विषमस्य चतुर्गुणरूक्षस्य षड्गुणस्निग्धेना-स्तिबंध इत्ययमर्थस्तत्रैतस्य किमर्थोऽयमारम्भ इत्युच्यते पौद्गलिकं कर्मात्मस्थानंतानंतप्रदेशं कायवाङ्मनो-योगनिमित्तविस्रसोपचितानंतप्रदेशस्निग्धरूक्षपरिणतं बन्धमायातमात्मनः ज्ञानावरणादिभावेन त्रिंशत्सागरो-पमकोटिकोट्यवस्थानभाक् तत्परिणामकापादितपरिणामाद्वनादिवन्न विश्वग्भवतीति । अत्राह-उक्तं भवता द्रव्याणि जीवाजीवाश्चेति तत्र किमुद्देशत एव द्रव्याणां प्रसिद्धिराहोस्विल्लक्षणतोऽपीत्यत्रोच्यते-लक्षणतोऽपि प्रसिद्धिः । तत्कथमिति चेदुच्यते-

# गुणपर्ययवद्द्रव्य ॥ ३७ ॥

गुणाश्च पर्यायाश्च गुणपर्यायास्ते यस्य सतीति तद्गुणपर्यायवदिति मतुर्नोपपद्यते अनर्थांतरभावात् । अर्थांतरभावेऽभावप्रसग इत उत्तर पठति—

**अनन्यत्वेऽपि लोके सुवर्णांगुलीयकव्यपदेशदर्शनान्मत्वर्थीयसिद्धे ॥ १ ॥** अनन्यत्वेऽपि लोके व्यपदेशो दृश्यते, यथा सुवर्णस्यागुलीयकमिति । तथा लक्षणत कथचिद्भेदोपपत्ते गुणपर्यायेभ्योऽनन्यत्वे कथचिद्भेदसिद्धे मत्वर्थीयमुपपद्यत ।

**गुणाभावादयुक्तिरिति चेन्नार्हत्प्रवचनहृदयादिषु गुणोपदेशात् ॥ २ ॥** गुणा इति सज्ञा तंत्रातराणा, आर्हताना तु द्रव्य पर्यायश्चेति द्वितीयमेव तत्त्व अतश्च द्वितीयमेव तद्द्वयापदेशात् । द्रव्यार्थिक पर्यायार्थिक इति द्वावेव मूलनयौ यदि गुणोऽपि कश्चिस्यात्, तद्विषयेण मूलनयेन तृतीयेन भवितव्य । न चास्त्यसाविन्यतो गुणाभावात्, गुणपर्यायवदिति निर्देशो न युज्यत ? तन्न किं कारण ? अर्ह प्रवचनहृदयादिषु गुणोपदेशात् । उक्त हि अर्हत् प्रवचने "द्रव्याश्रया निर्गुणा गुणा" इति । अन्यत्र चोक्त—

गुण इति दव्वविधाण दव्ववियारोयपज्जयो भणिदो ।
तेहि अणूण दव्व अजुदपसिद्ध हवदि णिच्च ॥ १ ॥ इति

यदि गुणोऽपि विद्यते ननु चोक्त–तद्विषयस्तृतीयो मूलनय प्राप्नोति ? नैष दोष द्रव्यस्य द्वयात्मानो सामान्य विशेषश्चेति । तत्र सामान्यमुत्सर्गोऽन्वय गुण इत्यनर्थांतर । विशेषो भेद पर्याय इति पर्यायशब्द । तत्र सामान्यविषयो नया द्रव्यार्थिक । विशेषविषय पर्यायार्थिक । तदुभय समुदितमयुतसिद्धरूप द्रव्यमित्युच्यते । न तद्विषयस्तृतीयो नयो भवितुमर्हति, विकलादेशत्वान्नयाना । तत्समुदायोऽपि प्रमाणगोचर सकलादेशत्वात्प्रमाणस्य । गुणा एव पर्याया इति वा निर्देश । अथवा उत्पादव्ययध्रौव्याणि न पर्याया । न तेभ्योऽन्ये गुणा सन्ति ततो गुणा एव पर्याया इति सति सामानाधिकरण्ये मतौ सति गुणपर्यायवदिति निर्देशो युज्यते ।

**विशेषणानुपपत्तिरर्थभेदादिति चेन्न मतान्तरनिवृत्त्यर्थत्वात् ॥ ३ ॥** स्यादेतद्यदि गुणा एव पर्याया विशेषणमपार्थक, कुत ? अर्थाभेदात्ततो गुणवदिति वा पर्यायवदिति वा वक्तव्यमिति तन्न किं कारण ? मतांतरनिवृत्त्यर्थत्वात् । मतान्तर हि द्रव्यादन्ये गुणा परिकल्पिता, न ते सति ? अर्थांतरभावे सत्यनुपलब्धिप्रसङ्गात् । अतो द्रव्यस्य परिणमन परिवर्तन पर्याय । तद्भेदा एव गुणा न भिन्नजातीया इति मतांतरनिवृत्त्यर्थं वाग विशेषणमर्थवत् । उक्ताना द्रव्याणा लक्षणनिर्देशात्तद्विषय एव द्रव्यव्यवसाय प्रसक्ते, अनुक्तद्रव्यससूचनार्थमिदमाह—

# कालश्च ॥ ३८ ॥

**यथोक्तद्रव्यलक्षणोपेतत्वाद्द्रव्य ॥ १ ॥** यथोक्त द्रव्यलक्षण उत्पादव्ययध्रौव्ययुक्त सत्, गुणपर्ययवद्द्रव्यमिति च तेन लक्षणेनोपेतत्वात् कालश्च द्रव्यमित्यवगम्यते । कथ लक्षणोपेतत्वमित्युच्यते ।

**आकाशादिवत्तत्सिद्धि ॥ २ ॥** यथाकाशादीना लक्षण तथा कालस्यापि सिध्यति । ध्रौव्य तावत्कालस्य स्वप्रत्यय स्वभावव्यवस्थानात् । व्ययादयौ परप्रत्ययौ अगुरुलघुगुणवृद्धिहान्यपेक्षया स्वप्रत्ययौ च । तथा गुणा अपि कालस्य साधारणासाधारणरूपा सति । तत्रासाधारण वर्तनाहेतुत्व साधारणाश्चाचेतनत्वामूर्तत्वसूक्ष्मत्वागुरुलघुत्वादय । पर्यायाश्च व्ययोत्पादलक्षणा योज्या । तस्यास्तित्वलिङ्ग सनिवेशक्रमश्च व्याख्यात ।

आह द्रव्यत्वे सति किमसौ काल आकाशवदेक उत सख्येयोऽसख्येयोऽनतो वेति ? अत्रोच्यते—

# सोऽनतसमय ॥ ३९ ॥

**व्यवहारकालप्रमाणावधारणार्थ वचनम् ॥ १ ॥** मुख्या परमार्थकालाणव । धर्मास्तिकाय-

**त्रैविध्यानुपपत्तिरात्मपरिणामाविशेषादिति चेन्न पर्यायविवक्षाव्यापाराद्रूपादिवत् ॥ ९ ॥** स्यान्मत योगस्य त्रैविध्य नोपपद्यते कुत ? आत्मपरिणामाविशेषात्। आत्मा हि निरवयवद्रव्य तत्परिणामो योग सोऽविशिष्ट इति तन्न, किं कारण पर्यायविवक्षाव्यापाराद्रूपादिवत्। यथा घटस्यैकत्वमजहतश्चक्षुरादि करणसबधवशाद्रूपादिपरिणामभेद । तथात्मन एकत्वेऽपि पर्यायभेदात् योगस्य भेदो ज्ञेय ।

**चक्षुरादिग्रहणनिमित्तत्वाद्रूपाध्यवसायस्येति चेन्नात्माभेदेऽपि कायादीनां पूर्वकृतकर्मोपादितसामर्थ्योपलभात् ॥ १० ॥** स्यादेतदुच्यते घटस्य रूपादिभेदाध्यवसाय । कुत ? चक्षुरादिग्रहणनिमित्तत्वात्। ग्रहणभेदाद्धि लोके ग्राह्यभेदो दृष्ट न तथात्मन इति, तन्न किं कारण ? आत्माभेदेऽपि कायादीना पूर्वकृतकर्मोपादितसामर्थ्योपलभात्। तद्यथा पुद्गलविपाकिन शरीरनामकर्मण उदयापादिते कायवाङ्मनोवर्गणान्यतमालबने सति वीर्यान्तरायमत्यक्षराद्यावरणक्षयोपशमापादिताभ्यतरवाग्लब्धिसान्निध्ये वाक्परिणामाभिमुख्यस्यात्मन प्रदेशपरिस्पदो वाग्योग । अभ्यतरवीर्यांतरायनोइन्द्रियावरणक्षयोपशमात्मकमन उपलब्धिसन्निधाने पूर्वोक्तबाह्यनिमित्तालबने च सति मनःपरिणामाभिमुखस्यात्मन प्रदेशपरिस्पदो मनोयोग । वीर्यांतरायक्षयोपशमसद्भावे च औदारिकादिसप्तविधकायवर्गणान्यतमालबनापेक्षात्मप्रदेशपरिस्पंद काययोग. यदि क्षयोपशमलब्धिरभ्यन्तरहेतु क्षये कथ ? क्षयेऽपि हि सयोगकेवलिन त्रिविधो योग इष्यते। अथ क्षयनिमित्तोऽपि योग कल्प्यते अयोगकेवलिना सिद्धाना च योग प्राप्नोति ? नैष दोष क्रियापरिणामिन आत्मनः स्त्रिविधवर्गणालबनापेक्ष प्रदेशपरिस्पन्द । सयोगकेवलिनो योगविधिर्विद्यते, तदालबनाभावात् उत्तरेषा योगविधिर्नास्ति ।

**अनेकांताच्च लावकादिवत् ॥ ११ ॥** यथा देवदत्तस्य जातिकुलरूपसज्ञालक्षणसम्बधाद्यविशेषादेकत्वमजहत बाह्योपकरणसबधोपनीतभेदलावकपावकादिपर्यायानास्कन्दत स्यादेकत्व स्यादनेकत्वमित्यनेकान्तस्तथा प्रतिनियतक्षायोपशमिक-शरीरादिपर्यायार्थादेशात्स्यात्त्रैविध्य योगस्य, अनादिपारिणामिकात्मद्रव्यार्थादेशात्स्यादैकविध्यमित्यनेकात. । ततो नायमुपालभ ।

**ध्यान योग इति चेन्न तस्य वक्ष्यमाणत्वात् ॥ १२ ॥** स्यादेतद्ध्यान योगशब्दार्थ न कायवाङ्मनस्कर्मेति तन्न किंकारण ? तस्य वक्ष्यमाणत्वात्। युजे समाधिवचनस्य योग. । समाधि. ध्यानमित्यनर्थान्तर स तु वक्ष्यते । इहास्रवप्रतिपादनार्थत्वात् त्रिविध क्रियायोग इत्युच्यते ।

**समुदाये योगव्यपदेशप्रसङ्ग इतिचेन्न प्रत्येकं वाक्यपरिसमाप्तेः ॥ १३ ॥** स्यान्मत यथा गर्गा शत दण्डयतामिति अर्थिनश्च राजानो हिरण्येन भवति न प्रत्येक दण्डयन्ति। कुत ? समुदाये वाक्यपरिसमाप्ते , तथा कायवाङ्मनस्कर्मसमुदाये योगव्यपदेश प्रसक्त इति चेन्न किंकारण ? प्रत्येक वाक्यपरिसमाप्ते । यथा देवदत्तजिनदत्तगुरुदत्ता भोज्यतामिति भुजि. प्रत्येक परिसमाप्यते । तथा योगव्यपदेशोपि प्रत्येक त्रिषु कर्मसु वेदितव्य ।

अत्राहाभ्युपेम आहितत्रैविध्या क्रिया योग इति प्रकृत इदानीं निर्दिश्यता किंलक्षण आस्रव इत्यतोच्यते योय योगशब्दाभिधेय ससारिण' पुरुषस्य प्रयोगस्त्रिविध —

## स आस्रवः ॥ २ ॥

**कायवाङ्मनस्कर्मास्रव इत्यस्तु लघुत्वादिति चेन्न योगाप्रत्याख्यानात् ॥ १ ॥** स्यान्मत कायवाङ्मनस्कर्मास्रव इत्यस्तु सूत्र, कुत लघुत्वादिति तन्न किं कारण ? योगाप्रत्याख्यानात्। योगशब्दो हि आगमे प्रसिद्ध , तस्यार्थो प्रत्याख्यात स्यात्।

**कायवाङ्मनस्कर्मयोग आस्रव इति चेन्न सर्वयोगास्रवप्रसंगात् ॥ २ ॥** अथ मतमेतत्कायवाङ्मनस्कर्म योग आस्रव इत्येकयोग कर्तव्यस्तथा सति तच्छब्दस्यावचनात्, योगविभागस्य चाकरणात् निर्देशश्च लघुर्भवति, योगशब्दार्थश्चाप्रत्याख्यातो भवति इति । तन्न किं कारण ? सर्वयोगास्रवप्र-

सङ्गात् । केवलिसमुद्घातकाले हि दण्डकपाटप्रतरलोकपूरणयोगस्याप्यास्रवत्व प्रसज्येत । अस्यास्रवत्व को दोष ? सूक्ष्मयोगत्व तत्रेष्यते तन्निमित्तश्च बन्धोऽल्प, तद्विपरीतता प्राप्नोति । अपि च वर्गणालम्बननिमित्तो योग आस्रव इष्यते, न च दण्डादियोगस्तदालम्बनहेतुक, तस्मादस्यास्रवत्व नेष्यते । यद्यत्र दण्डादिव्यापारकाले नास्रवत्वादबन्धकत्व प्राप्नोति इष्यते च बन्ध ? नैष दोष । न दण्डादियोगनिमित्तो बध किं तर्हि ? कायवर्गणानिमित्त आत्मप्रदेशपरिस्पन्दोऽस्ति तन्निमित्तस्तत्र बध ।

**एकयोगेऽपि तत्प्रयोजनकारणात्तदप्रसङ्ग इति चेन्न योगविभागकरणसामर्थ्यात्तत्प्रतीते. ॥ ३ ॥** यथा केवलिन सत्स्वपीन्द्रियेषु तद्व्यापारात्, इन्द्रियजकर्मत्वाभाव तथा दण्डादियोगे सत्यपि तत्पूर्वकत्वाभावात् आस्रवत्वमस्य । योगविभागस्यैकयोगेऽपि व्याप्तत्व इति तन्न किं कारण ? योगविभागकरणसामर्थ्यात्तत्प्रतीते । सति हि योगविभाग उद्दिष्टयोग स आस्रवो भवति नान्य इत्ययमर्थोऽवगन्तु शक्यते तेनान्योऽपि योगोऽस्तीति सूच्यते । एकयोग पुन सति तस्यावस्थाप्रतीते सर्वस्य योगस्यास्रवत्व प्रसज्यत एव । अथास्रवाभिधान कुतो भवति ?

**तत्प्रणालिकया कर्मास्रवणादास्रवाभिधानम् ॥ ४ ॥** सलिलस्यागमद्वार तदास्रवणकारणत्वात् आस्रव इत्याख्यायते । तथा योगप्रणालिकया आत्मन कर्म आस्रव इति व्यपदेशमर्हति ।

**कषायविलस्य तदुपश्लेष आर्द्रवस्त्ररेणुवत् ॥ ५ ॥** यथार्द्रवास समन्ताद्वातानीत रेणुमुपादत्ते, तथा कषायतार्द्र आत्मा योगानीत कर्म सर्वप्रदेशैर्गृह्णाति । यथा वाग्निष्टप्तायपिण्डोऽम्भसि प्रक्षिप्त अम्भ समन्तादात्मसात्करोति । तथा सकषायो जीवो योगानीत कर्म समन्तादादत्त ।

आह कर्म द्विविध पुण्य पापं चेति तस्य किमविशेषेण योग आस्रवणहेतुराहोस्विदस्ति कश्चित्प्रतिविशेष इत्यत्रोच्यते–

## शुभः पुण्यस्याऽशुभः पापस्य ॥ ३ ॥

**प्राणातिपातानृतभाषणवधचिंतनादिरशुभ ॥ १ ॥** प्राणातिपातादत्तादानमैथुनप्रयोगादिरशुभ काययोग । अनृतभाषणपरुषासत्यवचनादिरशुभो वाग्योग । वधचिंतनेर्ष्यासूयादिरशुभो मनोयोग ।

**ततोऽनन्तविकल्पादन्यः शुभः ॥ २ ॥** तस्मादनन्तविकल्पादशुभयोगादन्य शुभयोग इत्युच्यते । तद्यथा अहिंसाऽस्तेयब्रह्मचर्यादि शुभकाययोग । सत्यहितमितभाषणादि शुभो वाग्योग । अर्हदादिभक्तितपोरुचिश्रुतविनयादि शुभोमनोयोग । आहाऽसख्येयलोकत्वादध्यवसायस्थानाना कथमनन्तविकल्पत्व ? इत्युच्यते । अनन्तानन्तपुद्गलप्रदेशप्रचितज्ञानावरणवीर्यान्तरायदेशसर्वघातिद्विविधस्पर्धकक्षयोपशमादेशाद्योगत्रयस्यानन्त्य । अनन्तानन्तप्रदेशकर्मादानकारणत्वाद्वा, अनन्तानन्तनानाजीवविषयभेदाद्वानन्त । कथ योगस्य शुभाशुभत्वम् ? ।

**शुभाशुभपरिणामनिर्वृत्तत्वाच्छुभाशुभव्यपदेशः ॥ ३ ॥** शुभपरिणामनिर्वृत्तो योग शुभ । अशुभपरिणामनिर्वृत्तश्चाशुभ इति कथ्यते । न शुभाशुभकर्मकारणत्वेन । यद्येवमुच्यते शुभयोग एव न स्यात् शुभयोगस्यापि ज्ञानावरणादिबन्धहेतुत्वाभ्युपगमात् ।

**पुनात्यात्मान पूयतेऽनेनेति वा पुण्य ॥ ४ ॥** कर्मण स्वातन्त्र्यविवक्षाया पुनात्यात्मान प्रीणयतीति पुण्य । पारतन्त्र्यविवक्षाया करणत्वोपपत्ते पूयतेऽनेनेति वा पुण्य तत्सद्वेद्यादुत्तरत्र वक्ष्यते ।

**तत्प्रतिद्वन्द्विरूप पाप ॥ ५ ॥** तस्य पुण्यस्य प्रतिद्वन्द्विरूप पापमिति विज्ञायते । पाति रक्षत्यात्मान यस्माच्छुभपरिणामादिति पापाभिधान तदसद्वेद्याद्युत्तरत्र वक्ष्यते ।

**उभयमपि पारतन्त्र्यहेतुत्वादविशिष्टमिति चेन्नेष्टानिष्टनिमित्तभेदात्तत्सिद्धेः ॥ ६ ॥** स्यान्मत यथा निगलस्य कनकमयस्यायसस्य वा परतन्त्रीकरण फल तुल्यमित्यविशेष । तथा पुण्य पाप चात्मन

पारतन्त्र्यनिमित्तमविशिष्टमिति नात्र संकल्पभेदो युक्त इति तन्न, किं कारण ? इष्टानिष्टनिमित्तभेदात्तत्सिद्धेः । यदिष्टगतिजातिशरीरेंद्रियविषयादिनिर्वर्तकं तत्पुण्यं । अनिष्टगतिजातिशरीरेंद्रियविषयादिनिर्वर्तकं यत्तत्पापमित्यनयोरयं भेदः । तत्र शुभो योगः पुण्यस्यास्रवः । अशुभः पापस्य ।

**शुभपरिणामस्य घातिकर्मनिमित्तत्वात्तदनिर्देश इति चेन्नेतरपुण्यपापापेक्षत्वात् ॥ ७ ॥** स्यादेतच्छुभः पुण्यस्येत्यनिर्देशः अगमको निर्देशः अनिर्देशः कुतः ? घातिकर्मबंधस्य शुभपरिणामहेतुत्वादिति तन्न किं कारणं ? इतरपुण्यपापापेक्षत्वात्। अघातिकर्मसु पुण्यं पापं चापेक्ष्येदमुच्यते कुतः ? घातिकर्मबंधस्य स्वविषये निमित्तत्वात् । अथवा नैवमवधारणं क्रियते शुभः पुण्यस्यैवेति कथं तर्हि ? शुभ एव पुण्यस्येति तेनाशुभः पापस्यापि हेतुरित्यविरोधः । यद्येवं शुभः पापस्यापि भवति अशुभः पुण्यस्यापि भवतीत्यभ्युपगमः कर्तव्यः, सर्वोत्कृष्टस्थितीनां उत्कृष्टसंक्लेशहेतुकत्वात् । उक्तं च-

सव्वट्ठिदीण मुक्कस्स गोदुउक्कस्स संकिलेसेण ।
विपरीदे दु जघण्णो आयुगतिगवज्जसेसाण ॥ इति

ततः सूत्रद्वयमनर्थकमिति । नानर्थकं अनुभागबंधं प्रत्येतदुक्तं । अनुभागबंधो हि प्रधानभूतः तन्निमित्तत्वात्सुखदुःखविपाकस्य । तत्रोत्कृष्टविशुद्धपरिणामनिमित्तः सर्वशुभप्रकृतीनामुत्कृष्टानुभागबंधः । उत्कृष्टसंक्लेशपरिणामनिमित्तः सर्वाशुभप्रकृतीनामुत्कृष्टानुभागबंधः । उत्कृष्टः शुभपरिणामः । अशुभजघन्यानुभागबंधहेतुत्वेऽपि भूयसः शुभस्य हेतुरिति शुभः पुण्यस्येत्युच्यते । यथाल्पापकारहेतुरपि बहूपकारसद्भावादुपकार इत्युच्यते । एवमशुभः पापस्येत्यपि । उक्तंच-

शुभपगदीण विसोधिए तिव्वमसुहाणसंकिलेसेण ।
विपरीदे दु जघण्णो अणुभागो सव्वपगदीण ॥ इति

*आह किमयमास्रवः सर्वसंसारिसमानफलारम्भहेतुराहोस्वित्कश्चिदस्ति विशेष इत्यत्रोच्यते-*

## सकषायाकषाययोः सांपरायिकेर्यापथयोः ॥ ४ ॥

**आस्रवस्योभयस्वामिकत्वाद्द्वयीप्रसिद्धिः ॥ १ ॥** उभौ-आस्रवस्य स्वामिनौ सकषायोऽकषायश्चेति । तस्यास्रवस्यानन्त्येऽपि स्वामिनोर्द्वैविध्यकल्पनया द्वयीप्रसिद्धिरवसेया । कोऽत्र कषायः ?

**कषत्यात्मानमिति कषायः ॥ २ ॥** क्रोधादिपरिणामः कषति हिनस्त्यात्मानं कुगतिप्रापणादिति कषायः ।

**कषायवद्वाश्लेषहेतुत्वात् ॥ ३ ॥** अथवा यथा कषायो नैयग्रोधादिः श्लेषहेतुस्तथा क्रोधादिरप्यात्मनः कर्मश्लेषहेतुत्वात्कषाय इत्युच्यते । सह कषायेण वर्तते इति सकषायः । न विद्यते कषायोऽस्येत्यकषायः । सकषायश्चाकषायश्च सकषायाकषायौ तयोः सकषायाकषाययोः ।

**समन्तात्पराभवः आत्मनः संपरायः ॥ ४ ॥** कर्मभिः समन्तादात्मनः पराभवोऽभिभवः संपराय इत्युच्यते ॥

**तत्प्रयोजनं सांपरायिकं ॥५॥** तत्प्रयोजनं कर्म सांपरायिकमित्युच्यते यथा ऐंद्रमहिकमिति ।

**ईरणमीर्या योगगतिः ॥ ६ ॥** ईरेर्गत्यर्थाद्भावे ण्यः । ईरणमीर्या योगगतिरिति यावत् । तद्द्वारकमीर्यापथं । सा ईर्याद्वारं पन्था यस्य तदीर्यापथं कर्म। सांपरायिकं च ईर्यापथं च सांपरायिकेर्यापथे तयोः सांपरायिकेर्यापथयोः यथासंख्यमभिसंबंधो भवति। सकषायस्यात्मनः सांपरायिकस्य कर्मण आस्रवो भवति। अकषायस्य ईर्यापथस्येति। तद्यथा-सांपरायः कषाय इत्यर्थः। मिथ्यादृष्ट्यादीनां सूक्ष्मसांपरायांतानां कषायोदयेऽपि तच्छीलपरिणामानां योगवशादानीतं कर्म भावेनोपश्लिष्यमाणं आर्द्रचर्माश्रितरेणुवत् स्थितिमापद्यमानं सांपरायिकमित्युच्यते । उपशांतक्षीणकषाययोः योगिनश्च योगवशादुपात्तकर्मकषायाभावाद्बंधाभावे शुष्ककुड्यपतितलोष्ठवत् अनंतरसमयवर्तमानमीर्यापथमित्युच्यते ।

**अजाद्यदित्युभयत्र पूर्वनिपातप्रसंग इति चेन्नातिबहुवक्तव्यतया तयोरभ्यर्हितत्वात् ॥ ७ ॥** स्यादेतदकषायशब्दस्येर्यापथशब्दस्य चाजाद्यदिति पूर्वनिपात प्राप्नोति ? तन्न किं कारण ? अतिबहुवक्तव्यतया तयोरभ्यर्हितत्वात् सकषायशब्दस्य सांपरायिकशब्दस्य चाभ्यर्हितत्वमिति पूर्वनिपातो भवति । यदि सांपरायिकास्रवो बहुवक्तव्य तस्य के भेदा ? इत्यत्रोच्यते

## ॥ इंद्रियकषायाव्रतक्रियाः पंचचतुःपंचपंचविंशतिसंख्या पूर्वस्य भेदाः ॥५॥

**इंद्रियादय उक्तलक्षणा द्वंद्वविषयाः ॥ १ ॥** इंद्रियादीनामुक्तलक्षणानां द्वंद्वो वेदितव्य । इंद्रियाणि च कषायाश्च अव्रतानि च क्रियाश्च इंद्रियकषायाव्रतक्रिया इति स चाय द्वंद्व इतरेतरयोगलक्षण इति बहुवचन भवति ।

**पचादीना संख्याशब्दानां संख्यया वृत्ति ॥२॥** पचादीनां संख्याशब्दानां संख्याशब्देन सह वृत्तिर्द्रष्टव्या पचाधिका विंशति पचविंशति । पंच च चत्वारश्च पंच च पचविंशतिश्च पंचचतु पंचपंचविंशति सा संख्या येषां ते पंचचतु पंचपंचविंशतिसंख्या. ।

**पूर्वशब्दो व्यवस्थावचनः ॥३॥** अय पूर्वशब्दो व्यवस्थावचन अतीतसूत्रे य प्राङ् निर्दिष्टस्तस्येति ।

**भिद्यते इति भेदा ॥ ४ ॥** परस्परतो भिद्यते विशिष्यते इति भेदा प्रकारा इत्यर्थ ।

**यथासंख्यमभिसंबंधो व्याख्यानत ॥ ५ ॥** यथासंख्यमभिसबंधोऽत्र द्रष्टव्य । कुत ? व्याख्यानत । पंचेंद्रियाणि चत्वार कषाया, पंचाव्रतानि पंचविंशति क्रिया इति ।

**इंद्रियादीनामात्मनोऽनन्यत्वान्यत्व प्रत्यनेकांत ॥ ६ ॥** इंद्रियादीनामात्मन अनन्यत्वान्यत्व प्रत्यनेकांतो वेदितव्य । तद्यथा—अनादिपारिणामिकचैतन्यद्रव्यार्थादेशादिंद्रियादीना भेदाभावादनन्यत्व । कर्मोदयक्षयोपशमनिमित्तपर्यायार्थादेशाद्भेदोपपत्ते स्यादन्यत्वम् । इंद्रियादिनिवृत्तौ द्रव्यावस्थानाच्च स्यादन्यत्व तत एव पर्यायभेदात्पचादिसंख्यानिर्देश उपपन्नो भवति । तत्र पंचेंद्रियाणि स्पर्शादीन्युक्तानि । क्रोधादय कषाया अनंतानुबंध्यादिविकल्पा वक्ष्यते । हिंसादीन्यव्रतानि प्रमत्तयोगात्प्राणव्यपरोपण हिंसेत्येवमादिलक्षणानि वक्ष्यते । पंचविंशति क्रिया उच्यते—

**सम्यक्त्वमिथ्यात्वप्रयोगसमादानेर्यापथक्रियाः पंच ॥ ७ ॥** तत्र चैत्यगुरुप्रवचनपूजादिलक्षणा सम्यक्त्ववर्धिनी क्रिया सम्यक्त्वक्रिया । अन्यदेवतास्तवनादिरूपा मिथ्यात्वहेतुका प्रवृत्तिर्मिथ्यात्वक्रिया । गमनागमनप्रवर्तन कायादिभि प्रयोगक्रिया । वीर्यांतरायज्ञानावरणक्षयोपशमे सति अंगोपांगोपष्टंभादात्मन कायवाङ्मनोयोगनिर्वृत्तिसमर्थपुद्गलग्रहण वा संयतस्य सत अविरतिं प्रत्यभिमुख समादानक्रिया । ईर्यापथकर्मनिमित्ता ईर्यापथक्रिया । एता पंचक्रिया ॥

**प्रदोषकायाधिकरणपरितापप्राणातिपातक्रियाः पंच ॥ ८ ॥** क्रोधावेशात्प्रादोषिकी क्रिया सा क्रोधस्वभाविकेति क्रोधग्रहणेनैव गृहीते पौनरुक्त्यमिति चेन्न । क्रोधनिमित्तत्वात । क्रोधो हि प्रदोषहेतु, अत कार्यकारणभेदादपौनरुक्त्य । निमित्तनैमित्तिकभेदाच्च । इष्टदारवित्तहरणादेर्निमित्ताद्विनापि पिशुनस्वभावत एव कुप्यति । तथा दृष्टिविषादयश्च । उक्तंच—

> अणिमित्तमेव कोई कम्मस्सव सगुदो कसायाण ॥
> उदय उवेदि जीवो वदइव महग्गह पत्ते ॥

तथा मृगलोहिततीव्रलोलजिह्वेहरिशार्दूलवृकैर्निसर्गहिंस्रै भुजगैश्च सर्वैर्जातरोषै समरूपाण्यसता विचेष्टितानि इत्यनिमित्त क्रोध निमित्तवान्प्रदोष । प्रदुष्टस्य सतोऽभ्युद्यम कायिकी क्रिया । हिंसोपकरणदानादाधिकरणकी क्रिया । दुःखोत्पत्तितंत्रत्वात्पारितापिकी क्रिया । आयुरिंद्रियबलप्राणानां वियोगकरणात्प्राणातिपातिकी क्रिया एता पंचक्रिया ।

**दर्शनस्पर्शनप्रत्ययसमंतानुपातनाभोगक्रियाःपंच॥९॥** रागार्द्रीकृतत्वात्प्रमादिन. रमणीयरूपावलोकनाभिप्रायो दर्शनक्रिया। प्रमादवशात्स्पृष्टव्यसचेतनानुबंध. स्पर्शनक्रिया। ननु इंद्रियग्रहणादेव सिद्धिर्दर्शनग्रहणमनर्थकमिति नैष दोष । पूर्वत्रेंद्रियविज्ञानग्रहण। इह तत्पूर्वपरिस्पदग्रहण। अपूर्वाधिकरणोत्पादानात्प्रात्ययिकी क्रिया। स्त्रीपुरुषपशुसघातिदेशेऽतर्मलोत्सर्गकरण समान्तानुपातक्रिया। अप्रमृष्टादृष्टभूमौ कायादिनिक्षेपोऽनाभोगक्रिया। एता पंचक्रिया.।

**स्वहस्तनिसर्गविदारणाज्ञाव्यापादनानाकांक्षाक्रियाः पंच ॥ १० ॥** या परेण निर्वर्त्या क्रिया स्वय करोति सा स्वहस्तक्रिया। पापादानादिप्रवृत्तिविशेषाभ्यनुज्ञान निसर्गक्रिया। आलस्याद्वा प्रशस्तक्रियाणामकरण पराचरितसावद्यादिप्रकाशन विदारणक्रिया। यथोक्तामाज्ञामावश्यकादिषु चारित्रमोहोदयात्कर्तुमशक्नुवतोऽन्यथाप्ररूपणादाज्ञाव्यापादिका क्रिया। शाठ्यालस्याभ्या प्रवचनोपदिष्टविधिकर्तव्यतानादरोऽनाकांक्षा क्रिया। ता एता पंचक्रिया.।

**आरंभपरिग्रहमायामिथ्यादर्शनाप्रत्याख्यानाक्रिया पंच ॥ ११ ॥** छेदनभेदनविसनादिक्रियापरत्व, अन्येन वारभे क्रियमाणे प्रहर्ष आरंभक्रिया। परिग्रहाविनाशार्था पारिग्राहिकी क्रिया। ज्ञानदर्शनादिषु निकृतिर्वचन मायाक्रिया। अन्य मिथ्यादर्शनक्रियाकरणकारणाविष्ट प्रशसादिभिर्दृढयति यथा साधु करोषीति सा मिथ्यादर्शनक्रिया। सयमघातिकर्मोदयवशादनिवृत्तिरप्रत्याख्यानक्रिया।

**इंद्रियकषायाव्रतानां क्रियास्वभावानतिवृत्ते. क्रियावचनेनैव गतत्वात्प्रपंचमात्रप्रसंग इति चेन्नानेकांतात् ॥ १२ ॥** स्यान्मत इंद्रियकषायाव्रतान्यपि क्रियास्वभावानि ततस्तेषा क्रियाग्रहणेन ग्रहणादनर्थकमुपादान, सति चोपादाने प्रपचमात्रत्व प्राप्नोतीति तन्न किं कारण ?—अनेकातात्। नायमेकात इंद्रियकषायाव्रतानि क्रियास्वभावान्येवेति, कुत ? नामस्थापनाद्रव्येंद्रियकषायाव्रतेषु परिस्पदाभावात्। यतो नामेंद्रियादौ न क्रियास्ति नाममात्रत्वात्। स्थापनाया च न मुख्यक्रियास्ति तदेवेदमिति वाग्बुद्धिप्रवृत्तिमात्रनिमित्तत्वात्। द्रव्ये च प्रच्युतेंद्रियकषायाव्रतक्रियापरिणामे अनागतेंद्रियकषायाव्रताक्रियापरिणामाभिमुखे वा साप्रतिकेंद्रियकषायाव्रतानामभावान्न परिस्पदात्मिका क्रियास्ति। अथवा नायमेकात, इंद्रियकषायाव्रतानि क्रियास्वभावान्येवेति कुत ? आदेशवचनात्। द्रव्यार्थिकगुणभावे पर्यायार्थिकप्राधान्यत इंद्रियकषायाव्रतानां स्यात् क्रियास्वभावाऽनतिवृत्ति। पर्यायार्थिकगुणभावे द्रव्यार्थिकप्राधान्यात्स्यात्क्रियास्वभावातिवृत्तिरिति। किं च—

**शुभेतरास्रवपरिणामाभिमुखत्वात् इंद्रियकषायाव्रतानां द्रव्यास्रवत्वात् ॥१३॥** शुभेतरास्रवपरिणामाभिमुखत्वादिंद्रियकषायाव्रताना द्रव्यास्रवत्व, भावास्रव कर्मादान तच्च पचविंशतिक्रियाभिरास्रवतीति कर्मस्येतदर्थमिंद्रियकषायाव्रतवचनम्।

**नवा प्रतिज्ञातविरोधात् ॥१४॥** नवा एतत्प्रयोजनमस्ति। किं कारण ? प्रतिज्ञातविरोधात्। यत्प्रतिज्ञात कायवाङ्मनस्कर्मयोग आस्रव इति तद्विरुध्यते। द्रव्यास्रव इत्यभ्युपगमात्। कार्यकारणक्रियाकलाप विषये ज्ञापनार्थं वा.। निमित्तनैमित्तकविशेषज्ञापनार्थं (तर्हि) पृथगिंद्रियादिग्रहण क्रियते तत्स्पृशत्यादय शृण्वत्यादय. हिनस्त्यादयश्च क्रिया आस्रव इमा पुनस्तत्प्रभावा पचविंशतिक्रिया सत्स्वेतेषु त्रिषु प्राच्येषु परिणामेषु भवति—यथा मूर्छा कारण परिग्रह कार्य तास्मिन्सति पारिग्राहिकी क्रिया। न्यासरक्षणविनाश सस्कारादिलक्षणा। तथा क्रोध कारण प्रदोषश्च कार्यं तस्मिन् सति प्रादोषिकी क्रिया। मान कारण कार्यमप्रणाति तस्यां सत्यामपूर्वाधिकरणोत्पादनत्वात्प्रात्ययिकी क्रिया। माया कारण कार्य कुटिलक्रिया तस्यां सत्यां ज्ञानदर्शनचरित्रेषु मायाप्रवृत्तिक्रिया। प्राणातिपात कारण कार्य प्राणातिपातिकी क्रिया। मृषाऽऽदादत्तादानाब्रह्मचर्याणि कारण कार्यमसयमोदयादाज्ञाव्यापादिकी क्रिया एवमितरत्रापि योज्य।

**इंद्रियग्रहणमेवास्त्विति चेन्न तदभावेप्यास्रवसद्भावात् ॥ १५ ॥** स्यादेतदिंद्रियग्रहणमेवास्तु कुत लघुत्वात् इंद्रियैर्हि उपलभ्य विचार्य च कषायाव्रतक्रियासु प्रवर्तते प्रजा । अत इंद्रियवचनेनैव गतत्वात् कषायाव्रतक्रियासु कषायाव्रतक्रियाणामग्रहणमस्त्विति ? तन्न किं कारण तदभावेप्यास्रवसद्भावात् यदि इंद्रियग्रहणमेव स्यात् प्रमत्तस्यैव उक्त स्यात नाप्रमत्तस्य । प्रमत्तो हि चक्षुरादिभि , रूपादिविषया सेवन प्रत्यादत्त रूपादीन् सेवमानो वा अनंतानुबन्ध्यप्रत्याख्यानक्रोधमानमायालोभहिंसादिकरणकषायाद्यकपरिणत हिंसादीन् कुर्वन्नकुर्वन्न वा सातत्येनाविरत प्रमत्त कर्मादत्ते। अप्रमत्तस्तु पचदशप्रमादातीतोपि योगकषायनिमित्तमास्रवमश्नुते । एकद्वित्रिचतुरिंद्रियसज्ञिपचेंद्रियेषु च यथासभव चक्षुरादींद्रियमनोविचाराभावेपि क्रोधादिर्हिंसापूर्वककर्मादान दृश्यते तस्मात् सर्वग्रहण क्रियते ।

**कषायाणां सांपरायिकभावेपि पर्याप्तत्वात् अग्रहणमिति चेन्न सन्मात्रेपि तत्प्रसगात्॥१६॥** स्यान्मत नारक्तद्विष्टो रूपाधीनत्वात् चक्षुरादिभिरुपलभते याऽरक्तद्विष्टो जीवान् हिनस्ति मृषावादादिषु वा वर्तते अत कषायग्रहणेनैव सापरायिकास्रवस्य पर्याप्तत्वात् इंद्रियाव्रतक्रियाणां अग्रहणमस्तु इति ? तन्न किं कारण ? सन्मात्रेपि तत्प्रसगात् । उपशान्तकषायस्य कषायसन्मात्रावस्थानेचक्षुरादिभीरूपादिग्रहणात् रागद्वेषहिंसाद्यास्रवलाभप्रसग । किं च चक्षुरादिभि रूपादिग्रहण वीतरागस्यात् अन्यथा यस्य चक्षुरादिभी रूपादिग्रहणमात्रत्वात् रक्तद्विष्टत्व तस्य वीतरागत्वाभाव । तस्मात् कषायग्रहणमाग्रमयुक्त ।

**अव्रतवचनमेवेति चेन्न तत्प्रवृत्तिनिमित्तनिर्देशार्थत्वात् ॥१७॥** स्यादेतत् अव्रतवचनमेव युक्त तत्रैवेंद्रियकषायक्रियापरिणामातर्भावादिति ? तन्न किं कारण ? तत्प्रवृत्तिनिमित्तनिर्देशार्थत्वात् । तस्य हि अव्रतस्येंद्रियपरिणामा प्रवृत्तिनिमित्तानि भवति ततस्तद्ग्रहण न्याय्य । आह योगत्रयस्य एतानचत्वारिंशत्प्रभेदा सर्वात्मकार्यत्वात् ससारिणा मर्वेषा साधारणा तत फलानुभव प्रत्यविशेष इति ? उच्यते नतदेव यस्मात् सत्यपि प्रत्यात्मसभवे तेषा परिणामेभ्य , अनतविकल्पेभ्य , विशेषोभ्यनुज्ञायते। कथमिति चेदुच्यते–

## तीव्रमंदज्ञाताज्ञातभावाधिकरणवीर्यविशेषेभ्यस्तद्विशेषः ॥ ६ ॥

**आविर्भूतक्रोधादिवशात् तीवनात्तीव्र. ॥ १ ॥** बाह्याभ्यतरहेतूदीरणवशादुद्रिक्त परिणाम तीवनात् स्थूलभावात् तीव्र इत्युच्यते ।

**तद्विपरीतो मदः ॥ २ ॥** अनुदीरणप्रत्ययसंनिधानात् उत्पद्यमानोऽनुद्रिक्त परिणामो मदना न्मद इत्युच्यते ।

**ज्ञातमात्र ज्ञात्वा वा प्रवृत्तेर्ज्ञात ॥ ३ ॥** हिनस्मि इत्यसति परिणामे प्राणव्यपरोपणे ज्ञानमात्र मया व्यापादित इति ज्ञात । वा अय प्राणी हतव्य इति ज्ञात्वा प्रवृत्ते ज्ञातमित्युच्यते ।

**मदात्प्रमादाद्वाऽनवबुध्यप्रवृत्तिरज्ञात ॥ ४ ॥** सुरादिपरिणामकृतात् करणव्यामोहकरात् मदाद्वा प्रणिधानविरहलक्षणात् प्रमादाद्वा प्रव्यादिष्वनवबुध्य प्रवृत्तिरज्ञातमिति व्यवसीयत ।

**अधिक्रियतेस्मिन्नर्था इत्यधिकरण ॥ ५ ॥** अर्था प्रयोजनानि पुरुषाणा यत्राधिक्रियते प्रस्तूयते तदधिकरण द्रव्यमित्यर्थ ।

**द्रव्यस्यात्मसामर्थ्य वीर्य ॥ ६ ॥** द्रव्यस्य शक्तिविशेष सामर्थ्य वीर्यमिति निश्चीयते ।

**भावशब्दस्य प्रत्येक परिसमाप्तिर्भुजिवत् ॥ ७ ॥** यथा देवदत्तजिनदत्तगुरुदत्ता भोज्यतामिति भुजि प्रत्येक परिसमाप्यते तथाय भावशब्द प्रत्येक तीव्रादिभिरभिसबध्यते । तीव्रभाव मदभाव ज्ञातभाव. अज्ञातभाव इति ।

**युगपदसभवात् भावशब्दस्यायुक्त विशेषणमिति चेन्न बुद्धिविशेषव्यापारात् ॥ ८ ॥** स्यान्मत भावो नाम द्रव्यस्य अद्वेय. परिणाम तस्यैकत्वात् सदात्मव्यापन युगपत्तीव्रादिविशेषण चानुपपन्न

यथा गोत्वमेकं न खडमुडादीनां गोद्रव्याणां विशेषकं गोप्रत्ययाभिधानहेतुत्वात् तथा भावः सत्प्रत्ययाभिधानहेतुत्वात् न तीव्रादीनां विशेषक इति ? तन्न किं कारणं ? बुद्धिविशेषव्यापारात्, बौद्धीय व्यापारः तीव्रादिपरिणामानां विशेषकः । कथं ?–

**भावद्वैविध्यात् ॥ ९ ॥** द्विविधो हि नोद्रव्याणां भावः परिस्पदरूप इतरश्च । तत्रापरिस्पदो द्रव्याणां अस्ति वभामेनादि । परिस्पदरूपस्तु व्ययोत्पादात्मकः आदिमान् । तत्र योऽपरिस्पदः स सामान्यमात्रगतोभावः नासौ तीव्रादीनां विशेषकः । यस्तु कायादिक्रियालक्षणो भावः स कायादिमत्त्वस्य युगपत्तीव्रादीनां च विशेषकः कायवाङ्मनस्कर्मयोगाधिकारात् सोऽयं विशेषः बौद्धाद्व्यापारात् विभाव्यते । अथवा भावबचनात् आत्मनोऽव्यतिरेकात् तीव्रादीनामपि भावसिद्धिः । किं च—

**भावभूयस्त्वात् ॥१०॥** असंख्येयलोकपरिणामा हि भावाः एकैकस्मिन्नपि कषायादिपरिणामे ततो भावबहुत्वोपपत्तेः युगपदसंभवात् एकस्य भावस्य, अयुक्तः संबंध इत्ययबोध्यते, योपि त्वन्मत्याऽयं भावः एकः तथापि बौद्धाद् व्यापारात्संबंधः ।

**वीर्यस्यात्मपरिणामत्वात् पृथग्ग्रहणमिति चेन्न तद्विशेषवतो व्यपरोपणादिष्वास्रवफलभेदज्ञापनार्थत्वात् ॥११॥** स्यान्मतं पृथग् वीर्यग्रहणमनर्थकं । कुतः ? आत्मपरिणामत्वात्, जीवाधिकरणस्य हि परिणामो वीर्यमधिकरणग्रहणेनैव गृह्यत इति ? तन्न किं कारणं ? तद्विशेषवतो व्यपरोपणादिष्वास्रवादिज्ञापनार्थत्वात् । वीर्यवतो हि आत्मनः तीव्रतीव्रतरादिपरिणामविशेषो ज्ञायते ।

**तथा च तीव्रादिग्रहणसिद्धिः ॥१२॥** तेन प्रकारेण तथा आस्रवफलभेदज्ञापनेनेत्यर्थः । तीव्रादीनां पृथग्ग्रहणं सिद्धं भवति । इतरथा हि जीवाधिकरणस्वरूपत्वात् तीव्रादीनां पृथग्ग्रहणमनर्थकं स्यात् ।

**तन्निमित्तत्वाच्छरीराद्यानंत्यसिद्धिः ॥१३॥** कार्यभेदेनानंत्यं कारणभेदपूर्वेण भवितव्यं । उक्ताश्चानंता आस्रवभेदा अनुभागविकल्पात् ततः तत्कार्यमात्मनः शरीराद्यानंत्यं सिध्यति । कार्यानंत्यं च कारणानंत्यस्यानुमानं । अत्राह अधिकरणमुक्तं तत्स्वरूपमनिर्ज्ञातमतस्तदुच्यतामिति तत्र भेदप्रतिपादनद्वारेण अधिकरणस्वरूपनिर्ज्ञानार्थमिदमुच्यते–

## अधिकरणं जीवाजीवाः ॥ ७ ॥

**उक्तलक्षणा जीवाजीवाः ॥१॥** जीवानामजीवानां च लक्षणं व्याख्यातं पुनर्वचनमिदानीं किमर्थं ?

**पुनर्वचनमधिकरणविशेषज्ञापनार्थं ॥ २ ॥** पुनर्वचनं क्रियते अधिकरणविशेषज्ञापनार्थं । जीवानामधिकरणं इत्यर्थविशेषो ज्ञापयितव्य इति । कः पुनरसौ हिंसाद्युपकरणभावः ।

**द्विवचनप्रसंग इति चेन्न पर्यायाणामधिकरणत्वात् ॥ ३ ॥** स्यादेतत्तन्मूलपदार्थयोर्द्वित्वात् जीवश्चाजीवश्च जीवाजीवाविति द्विवचनं प्राप्नोतीति ? तन्न किं कारणं ? पर्यायाणामधिकारत्वात् । न जीवाजीवसामान्यमधिकरणत्वं बिभर्ति किं तर्हि पर्यायाः येन केनचित् पर्यायेण विशिष्टं द्रव्यं अधिकरणमित्याख्यायते ततो बहुवचनं न्यायप्राप्तं ।

**जीवाजीवाधिकरणमित्यस्तु लघुत्वादिति चेन्न वृत्तिद्वयेप्यभिप्रेतार्थगत्यभवात् ॥ ४ ॥** स्यादेतत् जीवाजीवाधिकरणमित्येतत्सूत्रमस्तु कुतः ? लघुत्वादिति तन्न किं कारणं ? वृत्तिद्वयेप्यभिप्रेतार्थगत्यभावात् । अत्र द्वितयी वृत्तिः स्यात् जीवाजीवावेवाधिकरणं जीवाजीवयोर्वाधिकरणं जीवाजीवाधिकरणमिति न तावत्सामानाधिकरण्यलक्षणा वृत्तिरुपपद्यते जीवाजीवत्वविशेषणाविशिष्टाधिकरणमात्रप्रतिपत्तेः आस्रवविशेषज्ञापनाभावात् अभिप्रेतार्थगत्यभावः । नापि भिन्नाधिकरणा वृत्तिः युज्यते तयोराधारमात्रप्रतिपत्तेः अभिप्रेतास्रवविशेषार्थगत्यभाव इति । न च तयोरधिकरणं व्यतिरिक्तमुपलभ्यते तस्मादस्तु तयाराद्य एव पाठः । अथ जीवाजीवाधिकरणं कस्य ? आस्रवः प्रकृतः तस्येत्यभिसंबध्यते । स तर्हि तथा निर्देशः कर्तव्यः ? न कर्तव्यः अर्थ-

वशाद्विभक्तिपरिणामोपपत्तेरास्रवस्येत्यभिसंबन्धः । यथोच्चानि देवदत्तस्य गृहाणि आमन्त्रयस्वैनं देवदत्तमिति अर्थवशाद्विभक्तिपरिणामो भवति । एवमिहाप्यधिकरणं जीवाजीवाः कस्य ? आस्रवस्येत्यभिसंबन्धोऽर्थवशाद्वेदितव्यः । तदुभयमधिकरणं दशप्रकारं विषलवणक्षारमधुकाम्लस्नेहाग्निदुःप्रयुक्तकायवाङ्मनोयोगभेदात् । किमेतावानेव भेदः आहोस्वित् कश्चिदन्योऽप्यस्ति । अस्तीत्याह–यद्येवं आद्यस्यैव तावद्भेदः कथ्यतामित्युच्यते–

## आद्यं संरंभसमारंभारंभयोगकृतकारितानुमतकषायविशेषैस्त्रि-स्त्रिस्त्रिश्चतुश्चैकशः ॥ ८ ॥

आद्यग्रहणं सामर्थ्यात् सिद्धेरिति चेन्न विस्पष्टार्थत्वात् ॥ १ ॥ स्यान्मतं आद्यग्रहणमनर्थकं कुतः सामर्थ्यात् सिद्धेः । किं पुनः सामर्थ्यं ? वक्ष्यमाणान्तरसूत्रे परवचनं तेनाद्यमिदं विज्ञायत इति तन्न किं कारणं ? विस्पष्टार्थत्वात् । आनुमानिके हि सति संप्रत्यये प्रतिपत्तेर्गौरवं स्यात् ।

प्रयत्नावेशः संरंभः ॥ २ ॥ प्राणव्यपरोपणादिषु प्रमादवतः प्रयत्नावेशः संरंभ इत्युच्यते ।

साधनसमभ्यासीकरणं समारंभः ॥ ३ ॥ साध्यायाः क्रियायाः साधनानां समभ्यासीकरणं समाहारः समारंभ इत्याख्यायते ।

प्रक्रम आरंभः ॥ ४ ॥ प्रशब्दस्यादिकर्मणि प्रवृत्तेः आदौ क्रमः प्रक्रमः आरंभ इति विज्ञायते । लोके आदिकर्मणो द्योतकत्वात्[1] ।

तत्त्वकथनात् सर्वे भावसाधनाः ॥ ५ ॥ संरंभणं संरंभः, समारंभणं समारंभः, आरंभणमारंभः, इति ।

व्याख्यातार्थो योगशब्दः ॥ ६ ॥ योगशब्दस्यार्थो व्याख्यातः कायवाङ्मनस्कर्मयोग इति ।

कृतवचनं स्वातन्त्र्यप्रतिपत्त्यर्थं ॥ ७ ॥ स्वातन्त्र्यविशिष्टेनात्मना यत्प्रादुर्भावितं तत्कृतमित्युच्यते ।

कारिताभिधानं परप्रयोगापेक्षं ॥ ८ ॥ परस्य प्रयोगमपेक्ष्य सिद्धिमापद्यमानं कारितमिति कथ्यते ।

अनुमतशब्दः प्रयोजकस्य मानसपरिणामप्रदर्शनार्थं ॥ ९ ॥ यथा मौनव्रतिकश्चक्षुष्मान् पश्यन् क्रियमाणस्य कार्यस्याप्रतिषेधात् अभ्युपगमात् अनुमन्ता । तथा कारयिता प्रयोक्तृत्वात् तत्समर्थाचरणायहितमनः परिणामः अनुमतेत्यवगम्यते ।

अभिहितलक्षणाः कषायाः ॥१०॥ कषायाणां लक्षणमभिहितं कषन्त्यात्मानं, अतः कषाया इति ।

विशिष्यते विशिष्टिर्वा विशेषः ॥ ११ ॥ विशिष्यतेऽर्थोऽर्थांतरादिति विशेषः । अथवा विशिष्टिर्वा विशेषः ।

तस्य प्रत्येकमभिसंबंधः ॥ १२ ॥ स विशेषशब्दः प्रत्येकमभिसंबध्यते–संरंभविशेषः समारंभविशेष इत्यादि ।

विशेषैरिति निर्देशानुपपत्तिः क्रियापदाभावात् ॥ १३ ॥ यथा देवदत्तेन भुक्तं पाणिना कृतमिति क्रियाप्रयोगे सति कर्तृकरणनिर्देश उपपद्यते न तथेह क्रियापदमस्तीति विशेषैरिति निर्देशो नोपपद्यते ।

न वा वाक्यशेषापेक्ष्यत्वात् ॥१४॥ नैष दोषः । किं कारणं ? वाक्यशेषापेक्ष्यत्वात्, क्रियापदमत्रोपस्क्रियते । संरंभसमारंभारंभयोगकृतकारितानुमतकषायविशेषैर्भिद्यते इति । अप्रयुक्तक्रियापेक्षा हि कारकविवक्षा दृश्यते शष्कुल्या खंडं प्रविशपिंडीमिति यथा ।

---

१ आरंभ इत्यत्राङ्शब्द आदिकर्मार्थद्योतकः ।

**अधिकृताभिसंबंधाद्वा ॥ १५ ॥** अथवाधिकृतो भेदशब्द पूर्वस्य भेदा इयत' स इहाभिसंबध्यत इति तदपेक्ष कारकनिर्देशो वेदितव्य ।

**त्रिस्त्रिस्त्रिचतुरिति सुजंतानां यथाक्रममभिसंबंधः ॥ १६ ॥** एते त्रयस्त्रिशब्दाश्चतुशब्दश्च सरंभादिभि यथाक्रममभिसंबध्यते सुजता सरंभसमारंभारंभास्त्रय योगास्त्रय कृतकारितानुमतास्त्रय कषायाश्चत्वार इत्येतेषा गणनाभ्यावृत्ति सुचा द्योत्यते ।

**एकश इति वीप्सार्थनिर्देश ॥ १७ ॥** एकशब्द वीप्सार्थद्योतन 'संख्यैकाद्वीप्सायां' इति शस् एकमेक त्र्यादीन् भेदान्नयेदित्यर्थ ।

**संरंभादित्रयस्यादौ वचन वस्तुत्वात् ॥ १८ ॥** सरंभादित्रयमिद वस्तु वस्तुतद्भेदहेतुत्वात् इतरेषां, अतोऽस्यादौ वचन क्रियते ।

**योगादीनामानुपूर्व्यवचन पूर्वापरविशेषणत्वात् ॥ १९ ॥** योगादीनामानुपूर्व्येनवचन क्रियते कुत' ? पूर्वापरविशेषणत्वात् । तस्मात् क्रोधादिचतुष्टयकृतकारितानुमतभेदात् कायादियोगाना सरंभसमारंभारंभा विशेष्या प्रत्येक षट्त्रिंशद्विकल्पा । तत्र सरंभस्तावत् क्रोधकृतकायसरंभ मानकृतकायसरंभ मायाकृतकायसरंभ लोभकृतकायसरंभ । क्रोधकारितकायसरंभ मानकारितकायसरंभ मायाकारितकायसरंभ लोभकारितकायसरंभ । क्रोधानुमतकायसरंभ मानानुमतकायसरंभ मायानुमतकायसरंभ लोभानुमतकायसरंभश्चेति द्वादशधा सरंभ । क्रोधकृतकायसमारंभ मानकृतकायसमारंभ मायाकृतकायसमारंभ' लोभकृतकायसमारंभ । क्रोधकारितकायसमारंभ मानकारितकायसमारंभ मायाकारितकायसमारंभ लोभकारितकायसमारंभ । क्रोधानुमतकायसमारंभ मानानुमतकायसमारंभ मायानुमतकायसमारंभ लोभानुमतकायसमारंभश्चेत्येव समारंभोपि द्वादशधा । क्रोधकृतकायारंभ मानकृतकायारंभ मायाकृतकायारंभ लोभकृतकायारंभ । क्रोधकारितकायारंभ मानकारितकायारंभ मायाकारितकायारंभ' लोभकारितकायारंभ । क्रोधानुमतकायारंभ मानानुमतकायारंभ मायानुमतकायारंभ लोभानुमतकायारंभश्चेत्येवमारंभोपि द्वादशधा एते सपिंडिता कायविकल्पा षट्त्रिंशत् । उक्त च—

सरंभो द्वादशधा क्रोधादिकृतादिकायसयोगात् ।
आरंभसमारंभो तथैव भेदास्तु षट्त्रिंशत् ॥ १ ॥ इति' ।

तथा वाङ्मानसयोरपि प्रत्येक षट्त्रिंशत् । त एते सपिंडिता जीवाधिकरणास्रवभेदा' अष्टोत्तरशतसख्या भवति ।

**चशब्द क्रोधादिविशेषोपसंग्रहार्थ ॥ २० ॥** चशब्द क्रियते क्रोधादीना विशेषाणा उपसंग्रहार्थं । तेनानतानुबन्ध्यप्रत्याख्यानप्रत्याख्यानसंज्वलनषोडशकषायभेदात् द्वात्रिंशदुत्तरचतु शतगणाना विकल्पा वेदितव्या । कथमेषा, आस्रवत्वमिति चेदुच्यते—

**संरंभादीनां क्रोधाद्याविष्टपुरुषकर्तृकाणां तदनुरंजनाधिकरणभावो नीलीपटवत् ॥२१॥** यथा नील्या प्रक्षिप्त पट नील्यनुरजनान्नीली भवति तथा सरंभादिक्रियाणामनतानुबन्ध्यादिकषायाविष्टानामनुरजनाज्जीवाधिकरणत्व सिद्ध । निरूपितविकल्पादाद्यादधिकरणाद्विलक्षणस्य सापरायिकनिमित्तविरुद्धदोषस्य भेदप्रतिपत्त्यर्थमिदमुच्यते—

## निर्वर्तनानिक्षेपसंयोगनिसर्गा द्विचतुर्द्वित्रिभेदाः परं ॥ ९ ॥

**निर्वर्तनादीनां कर्मसाधन भावो वा ॥ १ ॥** एते निर्वर्तनादय शब्दा कर्मसाधना वेदितव्या निर्वर्त्यते इति निर्वर्तना । निक्षिप्यत इति निक्षेप । सयुज्यतेऽसौ सयोग । निसृज्यतेसौ निसर्ग इति । अथवा भावसाधना. निर्वर्तन निर्वर्तना, निक्षिप्तिर्निक्षेप , सयुक्ति सयोग , निसृष्टिर्निसर्ग इति ।

**सामानाधिकरण्येन वैयधिकरण्येन वाधिकरणसंबंधः ॥ १ ॥** अधिकरणशब्दोऽनुवर्तते तस्येह सामानाधिकरण्येन वैयधिकरण्येन वाभिसंबंधो द्रष्टव्यः । यदा कर्मसाधना एते शब्दास्तदा सामानाधिकरण्येन संबंधः । निर्वर्तनैवाधिकरणमित्यादि । यदा तु भावसाधनास्तदा वैयधिकरण्येन निर्वर्तनानिक्षेपसंयोगनिसर्गलक्षणो भावः परमधिकरणं विशिष्यतीति अध्याह्रियमाणक्रियापदापेक्षया कर्मनिर्देशः । निर्वर्तना निष्पादना, निक्षेपः स्थापना, संयोगो मिश्रभावः, निसर्गः प्रवर्तनं ।

**द्विचतुर्द्वित्रिभेदा इति द्वंद्वपूर्वोऽन्यपदार्थनिर्देशः ॥ ३ ॥** द्वौ च चत्वारश्च द्वौ च त्रयश्च द्विचतुर्द्वित्रयः ते भेदा एषां ते द्विचतुर्द्वित्रिभेदा इति द्वंद्वगर्भोऽन्यपदार्थः प्रत्येतव्यः ।

**परवचनमनर्थकं पूर्वत्राद्यवचनात् ॥ ४ ॥** परवचनमनर्थकं कुतः ? पूर्वत्राद्यवचनात् ।

**अस्मिन् सति पूर्वत्राद्यवचनं अनर्थकं अर्थापत्तिसिद्धेः ॥ ५ ॥** अस्मिन् परवचने सति पूर्वसूत्रे आद्यवचनमनर्थकं । कुतः ? अर्थापत्तिसिद्धेः ।

**अर्थापत्तिरनैकांतिकीति चेन्न प्रयासमात्रत्वात् ॥ ६ ॥** स्यादेतत् अर्थापत्तिरनैकांतिकी दृष्टा यथा हि असति मेघे वृष्टिर्नास्तीत्युक्ते अर्थादापन्नं सति मेघे वृष्टिरस्तीति । सत्यपि मेघे कदाचिद्वृष्टिर्नास्तीत्यर्थापत्तिरनैकांतिकीति ? तन्न । किं कारणं ? प्रयासमात्रत्वात् । प्रयासमात्रमेतत् अर्थापत्तिरनैकांतिकीति । अहिंसाधर्म इत्युक्ते अर्थापत्त्या हिंसाधर्म इति न सिध्यति ? सिध्यत्येव । असति मेघे च वृष्टिरित्युक्ते सति मेघे च वृष्टिरित्युक्ते सति मेघे वृष्टिरित्यत्रापि सत्येव मेघ इति नास्ति दोषः ।

**असंबंधार्थत्वादिति चेन्न निवर्त्याभावात् ॥ ७ ॥** स्यादेतत् असति परशब्दे असंबंधार्थमिदं स्यात् ततः संबंधार्थं परशब्दोपादानमिति ? तन्न किं कारणं ? निवर्त्याभावात् । किमन्यन्निवर्त्यमस्ति येनेदमसंबंधं स्यात् ? ननु संरंभादिकं जीवाधिकरणं निवर्त्यमस्ति न तस्य संबंधत्वादाद्यजीवाधिकरणं संरंभादिविशिष्टमिति । ततः परिशेषात् अजीवाधिकरणमेवेदमिति व्यर्थं परवचनं एतेन प्रकृष्टवाचित्वं प्रत्युक्तं । केन ? निवर्त्याभावात् इत्यनेन न हि निकृष्टं जीवाधिकरणं यत्प्रकृष्टेन जीवाधिकरणेन निवर्त्येत ।

**इष्टवाचित्वमिति चेन्नात एव ॥८॥** स्यादेतत् इष्टवाचिपरशब्दः इति यथा परं धाम गत इति इष्टं धाम गत इति ? तन्न किं कारणं ? अत एव । कुत एव निवर्त्याभावात् इत्येव किमनिष्टं । यस्मिन् सति निवर्त्ये इष्टवाचिपरशब्दोऽर्थवान् स्यात् ।

**नवाऽन्यार्थत्वात् ॥ ९ ॥** नचानर्थकः कुतः अन्यार्थत्वात् परशब्दोयमन्यार्थः संरंभादिभ्योऽन्यत् निर्वर्तनादीत्यर्थः निर्वर्तनादीनामप्यात्मपरिणामसद्भावाज्जीवाधिकरणविकल्पानिति विज्ञायेत । अथवा उक्तमेतत् विस्पष्टार्थत्वादिति ॥

**इष्टार्थसंप्रत्ययाद्वा ॥ १० ॥** अथवा इष्टार्थः, तेन परशब्देन संप्रत्याय्यते । कः पुनरिष्टार्थ इति चेदुच्यते—

**निर्वर्तनाधिकरणं द्विविधं मूलोत्तरभेदात् ॥ ११ ॥** अजीवाधिकरणं निर्वर्तनालक्षणं द्वेधा व्यवतिष्ठते । कुतः ? मूलोत्तरभेदात् । मूलगुणनिर्वर्तनाधिकरणं उत्तरगुणनिर्वर्तनाधिकरणं चेति । तत्र मूलं पंचविधानि शरीराणि वाङ्मनः प्राणापानाश्च । उत्तरं काष्ठपुस्तचित्रकर्मादि ।

**निक्षेपश्चतुर्धाऽप्रत्यवेक्षितदुःप्रमार्जनसहसानाभोगभेदात् ॥ १२ ॥** निक्षेपश्चतुर्धा भिद्यते कुतः । अप्रत्यवेक्षितदुःप्रमार्जनसहसानाभोगभेदात् अप्रत्यवेक्षितनिक्षेपाधिकरणं दुःप्रमृष्टनिक्षेपाधिकरणं सहसा निक्षेपाधिकरणं अनाभोगनिक्षेपाधिकरणं चेति ।

**संयोगो द्विधा भक्तपानोपकरणभेदात् ॥ १३ ॥** संयोगो द्विधा विभज्यते । कुतः ? भक्तपानोपकरणभेदात् । भक्तपानसंयोगाधिकरणमुपकरणसंयोगाधिकरणं चेति ॥

**निसर्गस्त्रिधा कायादिभेदात् ॥ १४ ॥** निसर्गस्त्रिधा कल्प्यते कुत' ? कायादिभेदात्। कायनिसर्गाधिकरण वाङ्निसर्गाधिकरण मनोनिसर्गाधिकरण चेति । आह—आहितत्रैविध्यानतपर्याय, काय वाङ्मनसा परिणाम आस्रवशब्दाभिलाप्य किमसौ सकलसापरायिकार्जनहेतुरैकध्येन प्रणिधीयमान ? नेत्युच्यते कश्चित् कस्यचित् कुतश्चित् कायिकादिव्यापाराविशेषे सति यस्मान्नियमेनैव–

**तत्प्रदोपनिह्नवमात्सर्यांतरायासादनोपघाता ज्ञानदर्शनावरणयोः ॥ १० ॥**

**ज्ञानकीर्तनानतरमनभिव्याहरतोंतः पैशून्य प्रदोपः ॥ १ ॥** मत्यादिज्ञानपञ्चकस्य मोक्षप्रापण प्रति मूलसाधनस्य कीर्तने कृते कस्य चित् अनभिव्याहार अत पैशून्यपरिणामो यो भवति स प्रदोप इति कथ्यते ।

**पराभिसंधानतो ज्ञानव्यपलापो निह्नव ॥ २ ॥** यत्किंचित् परनिमित्तमभिसधाय नास्ति न वेद्मीत्यादिज्ञानस्य व्यपलपन वचन निन्हव इत्युच्यते ॥

**यावद्यथावद्देयज्ञानाप्रदानं मात्सर्यं ॥ ३ ॥** कुतश्चित् कारणात् आत्मना भावितज्ञान दानार्हमपि योग्याय यतो न दीयते त मात्सर्यं ॥

**ज्ञानव्यवच्छेदकरण अतराय ॥ ४ ॥** कलुषेणात्मना ज्ञानस्य व्यवच्छेदकरणमतराय इति भण्यते ।

**वाक्कायाभ्यां ज्ञानवर्जनमासादनं ॥ ५ ॥** कायेन वाचा च परप्रकाशज्ञानस्य वर्जनमासादन वेदितव्य ।

**प्रशस्तज्ञानदूषणमुपघातः ॥ ६ ॥** स्वमते कलुषभावाद्युक्तस्याप्ययुक्तमत्प्रतीते दोषोद्भावन दूषणमुपघात इति निज्ञायते ॥

**आसादनमेवति चेन्न सतोविनयाद्यनुष्ठानात् ॥ ७ ॥** स्यादेतत् एव सति उपघात आसादन मेव प्राप्नोति ? तन्न किं कारण ? सतो विनयाद्यनुष्ठानात् । सतो हि ज्ञानस्य विनयप्रकाशनादिगुणकीर्तनानुष्ठानमासादन । उपघातस्तु ज्ञानमज्ञानमेवेति ज्ञाननाशाभिप्राय इत्ययमनयोर्भेद । तदित्यनेन किं प्रतिनिर्दिश्यते ?

**तदिति ज्ञानदर्शनप्रतिनिर्देश ॥ ८ ॥** तदित्यनेन ज्ञानदर्शने प्रतिनिर्दिश्येते तयो प्रदोषनिह्नव मात्सर्यांतरायासादनोपघाता तत्प्रदोपनिह्नवमात्सर्यांतरायासादनोपघाता इति । कथ पुनरप्रकृतयोरसशब्दित योस्तदित्यनेन परामर्श स्यात् ?–

**सामर्थ्यात्तदभिसवध ॥ ९ ॥** सामर्थ्यात्तयोर्ज्ञानदर्शनयो अभिसबधो भवति । किंसामर्थ्यात् ज्ञानदर्शनावरणयोरास्रव इति वचनसामर्थ्यात्तत्प्रदोषादय इति सबध क्रियते । अथ ज्ञानदर्शनवत्सु तत्साधनेषु च का प्रतिपत्तिस्तदासादनप्रदोषादयश्च तत्प्रदोषादिग्रहणेनैव गृह्यते तन्निमित्तत्वात् ।

**तुल्यास्रवत्वादेकत्वमिति चेन्न वचनविरोधात् ॥ १० ॥** स्यान्मत तुल्यास्रवत्वादनयोरेकत्व प्राप्नोति । तुल्यकारणाना हि लोके एकत्व दृष्टमिति ? तन्न किं कारण ? वचनविरोधात् । यदि तुल्यास्रवत्वात् ज्ञानदर्शनावरणयोरेकत्व ननु कठादिसयोगविभागतुल्यहेतुत्वात् वचनसाधकदूपकत्वाविशेषे यत्रोपदिष्टस्तत्रासाधकत्वाद्वचनविरोध । अथ तुल्यत्वेपि वचन स्वपक्षस्य साधक, परपक्षस्य दूपकमेवेति न साधकदूपकधर्मयोरेकत्वमिति मत ननु युक्त तुल्यहेतुत्वादेकत्वमिति । तद्धि न

**दृष्टागमव्याघातात् ॥ ११ ॥** दृष्टागमव्याघाताच्च नैतदुक्त यस्य तुल्यहेतुकानां एकत्व तस्य मृत्पिंडादितुल्यहेतुकानां घटशरावादीना नानात्व व्याहन्यत इति दृष्टव्याघात । प्रधानतुल्यनिमित्तानां महदहकारादीनामविद्यातुल्यप्रत्ययानां पुण्यापुण्यानेज्यसस्कारादीना चतुष्टयसन्निकर्षविशिष्टकारणरूपादिज्ञानसुखदु खादीना चैकत्वमित्यागमव्याघात ।

**आवरणाभावे साहचर्यात् ॥ १२ ॥** आवरणात्यन्तसंक्षये केवलिनि युगपत् केवलज्ञानदर्शनयो साहचर्यं, भास्करे प्रतापप्रकाशसाहचर्यवत् । ततश्चानयोस्तुल्यास्रवत्वं युक्त ।

**इतरत्र क्रमवृत्तिर्जलसमवेताग्निप्रतापप्रदीपप्रकाशवत् ॥ १३ ॥** इतरस्मिन् सावरणे ज्ञानदर्शनयो क्रमेण वृत्ति, यथा जलसमवायिनोऽग्ने प्रताप एव न प्रकाश । प्रदीपस्य च प्रकाश एव न प्रताप । तथा छद्मस्थस्य च यदा ज्ञानोपयोग न तदा दर्शनोपयोग ।

**अतीतानागतयोर्दर्शनाभावस्तल्लक्षणाभावादिति चेन्न निरावरणत्वात् ॥ १४ ॥** स्यान्मत नास्त्यतीतेऽनागते च दर्शन, कुत ? तल्लक्षणाभावात् । अस्पृष्टे विषये च ज्ञानमुत्पद्यते स्पृष्टे विषये च दर्शन न ह्यतीतानागतयो विनष्टानुत्पन्नत्वे सत्यसत्त्वात् स्पृष्टविषयत्वे स्त इति । तत्र ज्ञानमेव दर्शनमिति केवलिनातीतानागतदर्शित्वमयुक्त ? तन्न किं कारण ? निरावरणत्वात् । यथा भास्करस्य निरस्तघनपटलावरणस्य यत्र प्रकाशस्तत्र प्रताप यत्र च प्रतापस्तत्र प्रकाश । तथा निरावरणस्य केवलिभास्करस्याऽचिन्त्यमाहात्म्यविभूतिविशेषस्य यत्र ज्ञान तत्रावश्य दर्शनं यत्र च दर्शन तत्र च ज्ञान । किं च—

**तद्वद्वृत्ते ॥ १५ ॥** यथा हि असद्भूतमनुपदिष्टं च जानाति तथा पश्यति किमत्र भवतो हीयते । किं च—

**विकल्पात् ॥ १६ ॥** यथा ह्यस्पृष्टे विषये च सावरणस्योपदेशाभावे न ज्ञानमस्ति केवलिनोऽपि किं तद्भवति । तथा सावरणस्य विषये स्पृष्टे च दर्शनप्रवृत्ते न केवलिनस्तद्भविष्यति इति सिद्ध केवलिनस्त्रिकालगोचर दर्शन । भवतु तावन्निरावरणत्वात् केवलिनोऽतीतानागतयोर्दर्शनप्रवृत्तिरवधिज्ञानिन सावरणस्य कथ दर्शनमित्यत्रोच्यते—

**करणनिरपेक्षक्षयोपशमशक्तिविशेषयोगादवधिज्ञानिन ॥ १७ ॥** यद्यप्यवधिज्ञानिन आवरणमस्ति तथाप्यवधिदर्शनावरणक्षयोपशमविशेषस्य करणनिरपेक्षत्वात् केवलदर्शनवत् अनुपदेशपूर्वक प्रवृत्ते अतीतानागतयोरस्पृष्टाविषयत्वेऽपि अवधिदर्शन प्रवर्तते ।

**मनःपर्ययदर्शनमप्यस्त्विति चेन्न कारणाभावात् ॥ १८ ॥** यथावधिज्ञान दर्शनपूर्वक तथा मन पर्ययज्ञानेनापि दर्शनपुरस्सरेण भवितव्यमिति चेन्न किंकारण ? कारणाभावात् । न मन पर्ययदर्शनावरणमस्ति दर्शनावरणचतुष्टयोपदेशात् । तदभावात् तत्क्षयोपशमाभावे तन्निमित्तमन पर्ययदर्शनोपयोगाभाव । किं च—

**परकीयमन प्रणालिकया तदधिगमात् ॥ १९ ॥** मन.पर्ययज्ञान स्वविषयेऽवधिज्ञानवत् न स्वमुखेन वर्तते । कथ तर्हि ? परकीयमन प्रणालिकया । ततो यथा मनोऽतीतानागतानर्थांश्चिन्तयति न तु पश्यति तथा मन पर्ययज्ञान्यपि भूतभविष्यन्तौ वेत्ति न पश्यति । वर्तमानमपि मनोविषयं विशेषाकारेणैव प्रतिपद्यते तत सामान्यपूर्वकवृत्त्यभावान्मन पर्ययदर्शनाभाव । अलमतिप्रसङ्गिन्या कथया प्रकृत प्रस्तूयते ।

**भिन्नास्रवत्वं वा प्रदोषादीनां विषयभेदाद्भेदसिद्धे ॥ २० ॥** अथवा भिन्नास्रवत्व ज्ञानदर्शनावरणयोर्वेदितव्य । कुत प्रदोषादीना विषयभेदाद्भेदसिद्धे । ज्ञानविषया हि प्रदोषादयो ज्ञानावरणस्यास्रवा । दर्शनविषयाश्च दर्शनावरणस्येति । अपि चाचार्योपाध्यायप्रत्यनीकत्वाकालाध्ययनश्रद्धाभावाभ्यासालस्यानादरार्थश्रवणतीर्थोपरोधबहुश्रुतगर्वमिथ्योपदेशबहुश्रुतावमानस्वपक्षपरिग्रहपण्डितत्वस्वपक्षपरित्यागाबद्धप्रलापोत्सूत्रवादसाध्यपूर्वकज्ञानाधिगमशास्त्रविक्रयप्राणातिपातादय ज्ञानावरणस्यास्रवा । दर्शनमात्सर्यान्तरायनेत्रोत्पाटनेन्द्रियप्रत्यनीकत्वदृष्टिगौरवायतस्वापितादिवाशयनालस्यनास्तिक्यपरिग्रहसम्यग्दृष्टिसंदूषणकुतीर्थप्रशंसाप्राणव्यपरोपणयतिजनजुगुप्सादयो दर्शनावरणस्यास्रवा. इत्यस्ति आस्रवभेद । यथा अनयो कर्मप्रकृत्योरास्रवभेदस्तथा—

भाव । सतानादिति चेन्न तदभावादित्युक्तत्वात् । भावसाधनत्वमपि नोपपत्तिक्षम भावव्रतमतरेण भावस्य दृश्यभावात् । द्रव्यमात्रत्वे च क्रियागुणविरहात् पुरुषस्य निर्गुणत्व निष्क्रियत्व वा दर्शनस्य सुखदुःखादिपरिणामप्राप्तिं प्रति कर्तृत्वाभाव । तदभावात् करणादीनाम् अभाव । अथ कर्त्रादिसाधनभाव कल्प्यते न तर्हि निर्गुणत्व निष्क्रियत्व चात्मनोऽवतिष्ठते । तथाऽचेतनस्यापि दुःखादिपरिणाम प्रति कर्तृत्वाभावोऽनुपपन्न । दुःखादीना घटादिष्वचेतनेष्वदर्शनात् । यद्यचेतनस्यापि दुःखाद्योऽभ्युपगम्येरन् चेतनाचेतनयोरविशेष स्यात् । निष्क्रियत्वेऽप्यधर्मनिमित्ता पुरुषस्य दुःखादय इति चेन्न निःक्रियस्य धर्माधर्मोपार्जनविध्यभावात् तत्फलानुभवनाभावाच्च ।

**तान्यात्मपरोभयस्थानि क्रोधाद्यावेशात् ॥ ११ ॥** तानि दुःखादीनि क्रोधाद्यावेशात् आत्मपरोभयस्थानि भवन्ति । तद्यथा—यदा क्रोधाद्याविष्ट आत्मा स्वस्मिन् दुःखादीन्युत्पादयति तदात्मस्थानि भवन्ति । यदा पुनरीश्वर कषायवशात् परस्य दुःखादीनि जनयति तदा परस्थानि भवन्ति । यदा तूत्तमर्णादय अधमर्णादिनिरोधे वर्तमाना तज्जनितानि क्षुत्पिपासादीनि वाप्नुवन्ति तदोभयस्थानि ।

**विदादीनामवगमनाद्यर्थत्वादनिर्देश इति चेन्न विदेश्चेतनार्थस्य ग्रहणात् ॥ १२ ॥** स्यान्मत इमे चत्वारो विदय विदतिर्विंदतिर्विचतय अवगमनलाभविचारसद्भावार्था एतेषा कस्यचिदपि समूहेऽभिप्रेतस्यार्थस्यागतेरनिर्देश इति तन्न किं कारण ? विदेश्चेतनार्थस्य ग्रहणात् । विदे चुरादिण्यन्तस्य चेतनार्थस्येद वेद्यमिति ।

**तदसद्वेद्यमप्रशस्तत्वात् ॥ १३ ॥** तद्वेद्यमसदिति विशेष्यते । कुत ? अप्रशस्तत्वात् । अनिष्टफलप्रादुर्भावकरणत्वादप्रशस्तमित्याख्यायते ।

**दुःखाभिधानमादौ प्रधानत्वात् ॥ १४ ॥** दुःखग्रहणमादौ क्रियते । कुत ? प्रधानत्वात् । कुत पुनरस्य प्राधान्य ? तद्विकल्पत्वात् । इतरेषा किमेतावत एव विकल्पा ? नेत्याह—

**शोकादिग्रहणस्य विकल्पोपलक्षणत्वादन्यसंग्रह ॥१५॥** इमे शोकादय दुःखविकल्पा दुःखविकल्पानामुपलक्षणार्थमुपादीयन्ते ततोऽन्येषामपि सग्रहो भवति । के पुनस्ते ? अशुभप्रयोगपरपरिवादपैशुन्यानुकम्पाभावपरपरितापनाङ्गोपाङ्गच्छेदनभेदनताडनत्रासनतर्जनभर्त्सनतक्षणविशसनबन्धनरोधनमर्दनदमनवाहनविहेडनहेपणकायरौक्ष्यपरनिंदात्मप्रशसासंक्लेशप्रादुर्भावनायुर्बहुमानतानिर्दयत्वसत्त्वव्यपरोपणमहारम्भपरिग्रहविश्रम्भोपघातवक्रशीलतापापकर्मजीवित्वानर्थदण्डविषमिश्रणशरजालपाशवागुरापञ्जरयन्त्रोपायसर्जनबलाभियोगशस्त्रप्रदानपापमिश्रभावा । ते दुःखादय आत्मपरोभयस्था असद्वेद्यस्यास्रवा वेदितव्या ।

**स्वतीर्थकरोपदेशविरोधादयुक्तिरिति चेन्न सर्वथा प्रश्नविनिवृत्तेः ॥१६॥** स्यादेतत् यदि दुःखाधिकरणमसद्वेद्यहेतु । ननु नाग्न्यानशनादितप करण दुःखहेतुरिति तदनुष्ठानोपदेशात् स्वतीर्थकरस्य विरुद्ध तदविरोधे च दुःखादीनामसद्वेद्यास्रवस्यायुक्तिरिति ? तन्न किं कारण ? सर्वथा प्रश्नविनिवृत्ते न तावदार्हतस्य प्रश्न उपपद्यते स्वतीर्थकरोपदेशव्याघातप्रसगात् । यस्य क्षणिकवाद तस्यापि न युज्यते । सर्वदुःखशून्यानात्मकत्वाभ्युपगमे हिंसादिवत् दानादरप्यकुशलत्व दुःखहेतुत्वस्यत्वादिति । तथेतरेषामपि हिंसादीना दुःखहेतुत्वन पापास्रवहेतुत्वाभ्युपगच्छता यमनियमपरिपालनविविधतपानुष्ठानदुश्चरोपवासब्रह्मचर्यादीनां दुःखहेतुत्वात् तदनुष्ठानविरोधप्रसगान्नोपपद्यते प्रश्न । किं च—

**द्वेषासंभवात् ॥ १७ ॥** यथानिष्टद्रव्यसपर्काद्द्वेषोत्पत्तौ दुःखोत्पत्ति न तथा बाह्याभ्यन्तरतप प्रवृत्तौ धर्मध्यानपरिणतस्य यतेरनशनकेशलुञ्चनादिकरणकारणापादितकायक्लेशेऽस्ति द्वेषसभव । तस्मान्नासद्वेद्यबन्धोऽस्ति । क्रोधाद्यावेशे हि सति स्वपरोभयदुःखादीना पापास्रवहेतुत्वमिष्ट न केवलाना । किं च—

**आहितप्रसादत्वात् ॥ १८ ॥** यथा यतिरहिंसादिकरणकारणोद्यतत्वादाहितप्रसाद तथायमुपवासादिकरणकारणेष्वाहितप्रसाद अनशनादितप करोतीति दुःखाभाव । किं च—

**दुःखशोकतापाक्रंदनवधपरिदेवनान्यात्मपरोभयस्थानान्यसद्वेद्यस्य ११**

**पीडालक्षणः परिणामो दुःखं ॥ १ ॥** विरोधिद्रव्योपनिपाताभिलषितवियोगानिष्टनिष्ठुरश्रवणादिबाह्यसाधनापेक्षादसद्वेद्योदयादुत्पद्यमान पीडालक्षण परिणामो दु खमित्याख्यायते ।

**अनुग्राहकसंबंधविच्छेदे वैक्लव्यविशेष शोकः ॥ २ ॥** अनुग्राहकस्य बाधनादे संबधविच्छेदे तद्गताशयस्य चिंताखेदलक्षण परिणामो वैक्लव्यविशेषो मोहकर्मविशेष शोकोदयापेक्ष शोक इत्युच्यते ।

**परिवादादिनिमित्तादाविलांत करणस्य तीव्रानुशयस्तापः ॥ ३ ॥** परिवाद परिभव परुषवचनश्रवणादिनिमित्तापेक्षया कलुषात करणस्य तीव्रानुशय परिणाम ताप इत्यभिधीयते ।

**परितापजाश्रुपातप्रचुरविलापाद्यभिव्यक्त क्रदनमाक्रदन ॥ ४ ॥** परितापनिमित्तेनाश्रुपातप्रचुरविलापेनागविकारादिना चाभिव्यक्त क्रदनमाक्रदन प्रत्येतव्य ।

**आयुरिंद्रियबलप्राणवियोगकरण वधः ॥५॥** भवधारणकारणस्यायुष रूपादिग्रहणनिमित्तानां इंद्रियाणा कायादिवर्गणालंबनबलस्योच्छ्वासलक्षणस्य च प्राणस्य परस्परवियोगकरण वध इत्यवधार्यते ।

**सक्लेशप्रवण स्वपरानुग्रहाभिलाषविषयमनुकंपाप्राय परिदेवन ॥ ६ ॥** संक्लेशपरिणामावलंबन स्वपरानुग्रहाभिलाषविषय अनुकंपाप्रचुर परिदेवनमिति परिभाष्यते ।

**दुःखजातीयत्वात् सर्वेषां पृथगवचनमिति चेन्न कतिपयविशेषसबंधेन तज्जात्याख्यानात् ॥ ७ ॥** स्यान्मत शोकादयो हि सर्वे दु खजातीया , ततो दु खग्रहणादेव सिद्ध पृथगेषा वचनमनर्थकमिति ? तन्न किं कारण ? कतिपयविशेषसबंधेन तज्जात्याख्यानात यथा गौरित्युक्ते अनिर्ज्ञातविशेषे तत्प्रतिपादनार्थं खडमुडशुक्लकृष्णाद्युपादान क्रियते । तथा दु खविषयासख्यासख्येयलोकभेदसभवात् दु खमित्युक्ते विशेषानिर्ज्ञानात् कतिपयविशेषनिदर्शनेन, तद्विवेकप्रतिपत्ति कथ स्यादिति शोकाद्युपादान क्रियते । एते खल्वपि विषय सुपरिगृहीता भवति । येषु लक्षण प्रपचश्चेति ।

**कथंचिदन्यत्वोपपत्तेश्च ॥ ८ ॥** यथा मृत्पिंडघटकपालादीना मूर्तिमद्रूपद्रव्यार्थादेशात् स्यादनन्यत्व । प्रतिनियतसस्थानादिपर्यायादेशात् स्यादन्यत्व । तथा दु खशोकतापाक्रदनवधपरिदेवनानामपीति सामान्यादेशात् स्याद्दु खपरिणामादनन्यत्व, प्रत्यर्थनियतहेतुभेदाहितविशेषदु खशोकतापाक्रदनवधपरिदेवनपर्यायादेशात् स्यादन्यत्व ।

**दु खादीनां कर्त्रादिसाधनभाव पर्यायिपर्याययोर्भेदा भेदविवक्षोपपत्ते ॥ ९ ॥** दु खादीनां शब्दानां कर्त्रादिसाधनत्वमवसेय । कुत ? पर्यायिपर्याययोर्भेदाभेदविवक्षोपपत्ते । यदा पर्यायिपर्याययोरभेदविवक्षा तदा तत्ताय पिंडन्तत्परिणामादात्मैव दु खयतीति दु खमिति कर्तृसाधनत्व । यदा पर्यायिपर्याययो र्भेदविवक्षा तदा दु खयत्यनेनास्मिन्निति वा दु खमिति कारणादिसाधनत्व वस्तुस्वरूपमात्रकथनात् । दु खन दु खमिति भावसाधनत्व वा । एव शोकादिष्वपि योज्य ।

**तदेकांतावधारणेऽनुपपन्न अन्यतरैकांतसंग्रहात् ॥ १० ॥** कर्त्रादिसाधनत्व दु खादीनामेकांतावधारणेनुपपन्न । कुत ? अन्यतरैकातसग्रहात् । पर्यायमात्रत्वे तावदसत्यात्मनि विज्ञानादीना करणादिसाधनत्वमयुक्त कर्तुरभावात । स्वातत्र्यशक्तिविशिष्टार्थापेक्षाणि हि शेषकारकाणि तदभावादभावमास्कंदेयु । कर्तृसाधनत्वमपि वा युक्त करणादिसाध्यव्यपेक्षाभावात् । न च तेषा विज्ञानादीना परस्परं प्रति ग्राचिन्यमस्ति युगपदुपजायमानत्वात् सव्येतरगोविषाणवत् । नाप्यतीतानागताना वर्तमान प्रति सहायभावोस्ति असत्वाद्वध्यापुत्रवत् ।

**क्षणिकत्वाच्च पूर्वानुभूतस्मरणाभावात् शोकादिपरिणामाभाव. ॥ ११ ॥** पूर्वानुभूतहि अर्थे विनष्ट चिंतयत. शोकादयो भवति । नच क्षणिकवादे स्मरणमस्ति तदभावाच्छोकाद्य-

**धर्मप्रणिधानात्क्रोधादिनिवृत्तिः क्षान्तिः ॥ ९ ॥** क्रोधादे कषायस्य शुभपरिणामभावनापूर्विका निवृत्ति क्षान्तिरित्युच्यते। ननु क्षमूषिति षित्वात् अङि क्षमेति भवितव्य सत्यमेवमेतत् यदि भ्वादिषु पठितस्य ग्रहण स्यात् । इद दिवादिपठितस्य क्षमूष् सहने इत्यस्य रूप ।

**लोभप्रकाराणामुपरम शौच ॥ १० ॥** लोभप्रकारेभ्य उपरत शुचिरित्युच्यते तस्य भाव कर्म वा शौच । के पुनर्लोभप्रकारा ? स्वद्रव्यात्यागपरद्रव्यापहरणसान्यासिकानिन्हव दय । इति करण प्रकारार्थेहेत्वेव प्रकारादिव्यवच्छेदादिषु दृष्टप्रयोग इति शब्द । तत्रेह प्रकारार्थो गृह्यते एवप्रकारा सद्वेद्यस्यास्रवा इति ।

**वृत्तिप्रसङ्गो लघुत्वादिति चेन्नान्योपसग्रहार्थत्वात् ॥ ११ ॥** स्यान्मत वृत्तिरत्र न्याय्या सयमादियोगक्षान्तिशौचानीति । कुत ? लघुत्वादिति ? तन्न किं कारण ? अन्योपसग्रहार्थत्वात् ।

**इति करणानर्थक्यमिति चेन्नोभयग्रहणस्य व्यक्त्यर्थत्वात् ॥ १२ ॥** स्यादेतत् यदवृत्तिकरणमन्योपसग्रहार्थमिति शब्दोपादानस्यापि तदेव प्रयोजनमिति तस्यानर्थक्यमिति तन्न किं कारण ? उभयग्रहणस्य व्यक्त्यर्थत्वात् । व्यक्त्यर्थमुभय गृह्यते । के पुनस्ते गृह्यमाणा अर्हत्पूजाकरणपरतापताबालवृद्धतपस्विवैयावृत्त्योद्योगार्जननिनयप्रधानतादय ।

**व्रतिग्रहणमनर्थकमिति चेन्न प्राधान्यख्यापनार्थत्वात् ॥ १३ ॥** स्यान्मत भूतग्रहणादेव सिद्ध व्रतिग्रहणमनर्थक सामान्यनिर्देशस्य सर्वविशेषव्यापित्वाविरोधादिति ? तन्न किं कारण ? प्राधान्यख्यापनार्थत्वात् । भूतेषु यानुकपा तस्या व्रतिष्वनुकपा प्रधानभूतेत्ययमर्थ ख्याप्यते ।

**नित्यानित्यात्मकत्वेऽनुकपादिसिद्धिर्नान्यथा ॥ १४ ॥** द्रव्यत्वाद्यन्वयदेशान्नित्यतामजहत नैमित्तिकपरिणामसुखेनानित्यतामास्कन्दत जीवस्यानुकपादय परिणामविशेषा युज्यते नान्यथा । यदि नित्यत्वमेव स्यात् विक्रियाभावात् अनुकपादिपरिणत्यभाव तदभ्युपगमे च नित्यताव्याघात । क्षणिकैकातेपि पूर्वोत्तरावग्राहकैकनिज्ञानाभावात् अनुकपादिप्रच्यव । सस्कारादिति चेन्न तस्याप्यनित्यत्वात् । ज्ञानाज्ञानभावेवानुपपत्ते । आह उक्ता सदसत्प्रकारस्य वेदनीयस्योपादानहेतव । अथ अनतरस्यानतप्रवाहससारास्पद कारणस्य मोहस्यात्मलाभे को हेतुरित्यत्रोच्यते—

## केवलिश्रुतसंघधर्मदेवावर्णवादो दर्शनमोहस्य ॥ १३ ॥

**करणक्रमव्यवधानातिवर्तिज्ञानोपेता केवलिनः ॥ १ ॥** करण चक्षुरादि, कालभेदेन वृत्ति क्रम, कुड्यादिनाऽतर्धान व्यवधान एतान्यतीत्य वर्तते । ज्ञानावरणस्यात्यतसक्षये आविर्भूतमात्मन स्वाभाविक ज्ञान तद्वत अर्हतो भगवत केवलिन इति व्यपदिश्यते ।

**तदुपदिष्टं बुद्ध्यतिशयर्द्धियुक्तगणधरावधारित श्रुत ॥ २ ॥** तैर्व्यपगतरागद्वेषमोहैरुपदिष्ट बुद्ध्यतिशयर्द्धियुक्त गणधरैरवधारित श्रुतमित्युच्यते तद्विस्तरतो व्याख्यात ।

**रत्नत्रयोपेतः श्रवणगण सघ ॥ ३ ॥** सम्यग्दर्शनादिरत्नत्रयभावनापराणा चतुर्विधाना श्रवणाना गण सघ इति कथ्यते ।

**एकस्यासघत्वमिति चेन्नानेकव्रतगुणसहननादेकस्यापि सघत्वसिद्धे ॥ ४ ॥** स्यादेतत् सघो गणो वृदमित्यनर्थांतर तस्य कथमेकस्मिन् वृत्तिरिति ? तन्न किं कारण अनेकव्रतगुणसहननादेकस्यापि सघत्वसिद्धे उक्त च—

सघो गुणसघादो कम्माणविमोखदो हवदि सघो ।
दसणणाणचरित्ते सघादितो हवदि सघो ॥ १ ॥

**अहिंसादिलक्षणो धर्म ॥ ५ ॥** तस्मिन् जिनप्रवचने निर्दिष्टोऽहिंसादिलक्षणो धर्म इत्युच्यते ।

**प्रायश्चित्तोपदेशात् ॥ १९ ॥** कादाचित्कान्यकारणाविर्भूतक्रोधादिपरिणामे च सति तदुत्सिसृक्षार्थं प्रायश्चित्तविधान क्रियते तत. कथमिव यते.—अनशनादितपश्चरणे क्रोधादिपरिणामो भवेत् [१]। किं च—

**अनुग्रहबुद्ध्या तद्व्यापाराद्दुःखोत्पादनवत् ॥ २० ॥** यथा भिषक् करुणार्द्रीकृतचेता. सयतस्योपरि अनुग्रहबुद्ध्या गड पाटयस्तत्र क्रोधाद्यभावात् नापुण्य बध्नाति। तथा अनादिसासारिकजातिजरामरणखेद नाजिघास प्रत्यागूर्णो यति तदुपाये प्रवर्तमान स्वपरस्यदु खहेतुत्वे सत्यपि क्रोधाद्यभावात् पापस्याबधक। किं च—

**मनोरत्या सौख्याभिधानात् ॥ २१ ॥** यथा दुखाभिभूतानामपि ससारिणा यत्र मनोरतिस्तत्र सौख्यं तथानशनादिकरणस्य यतेर्मनोरतिसौख्यसान्निध्यात् अदोष । उक्त च—

पुरे वने वा स्वजने जने वा प्रसादशृगे द्रुमकोटरे वा ।
प्रियांगनाऽकेऽथ शिलातले वा मनोरतिं सौख्यमुदाहरति ॥ १ ॥

इति । यद्यसद्वेद्यस्यामी प्रयोगा यथा द्वितीयस्य क आस्रव इत्युच्यते—

## भूतवृत्त्यनुकंपादानसरागसयमादियोगः क्षांतिःशौचमिति सद्वेद्यस्य ॥ १२ ॥

**आयुर्नामकर्मोदयवशाद्भवनाद्भूतानि ॥ १ ॥** तासु तासु योनिष्वायुर्नामकर्मोदयवशाद्भवनाद्भूतानि सर्वे प्राणिन इत्यर्थ ।

**व्रताभिसबंधिनो व्रतिन ॥ २ ॥** व्रतानि वक्ष्यते अहिंसादीनि तदाभिसबधिनो ये ते व्रतिन । ते द्वेधा आरभ प्रति निवृत्तौत्सुक्या सयता गृहिणश्च सयतासयता ।

**अनुकपनमनुकपा ॥ ३ ॥** अनुग्रहार्द्रीकृतचेतस परपीडामात्मस्थामिव कुर्वतोऽनुकपनमनुकपा । भूतानि च व्रतिनश्च भूतव्रतिन भूतव्रतिष्वनुकपा भूतव्रत्यनुकपा। 'साधन कृता बहुलमिति' वृत्ति । यथा गलचोपक इति । मयूरव्यसकादित्वाद्वा ।

**स्वस्य परानुग्रहबुद्ध्याऽतिसर्जनं दानं ॥ ४ ॥** आत्मीयस्य वस्तुन परानुग्रहबुद्ध्या अतिसर्जन दानमिति कथ्यते ।

**संपरायनिवारणप्रवणोऽक्षीणाशयः सराग ॥ ५ ॥** पूर्वोपात्तकर्मोदयवशादक्षीणाशय सन् सपरायनिवारण प्रत्यागूर्णमना सराग इत्युच्यते ।

**प्राणींद्रियेष्वशुभप्रवृत्तेर्विरति सयम ॥ ६ ॥** प्राणेष्वेकेंद्रियादिषु चक्षुरादिष्विंद्रियेषु चाऽशुभप्रवृत्तेर्विरति सयम इति निश्चीयते । सरागस्य सयम सरागसयम । सरागो वा सयम सरागसयम ।

**आदिशब्देन सयमासयमाऽकामनिर्जराबालतपोनुरोध ॥ ७ ॥** सयमासयम अकामनिर्जरा बालतप इत्येतेषामादिशब्देनानुरोध क्रियते । तत्र सयमासयम अनात्यतिकी विरति । विषयानर्थनिवृत्तिं चात्माभिप्रायेणाकुर्वत पारतन्त्र्याद्भोगनिरोधोऽकामनिर्जरा यथार्थप्रतिपत्त्यभावादज्ञानिनो बाला मिथ्यादृष्ट्यादयस्तेषा तप बालतप अग्निप्रवेशकारीषसादनादिप्रतीत ।

**निरवद्यक्रियाविशेषानुष्ठान योगः ॥ ८ ॥** निरवद्यस्य क्रियाविशेषस्यानुष्ठान स योग समाधि । सम्यक् प्रणिधानमित्यर्थ । दडभावनिवृत्त्यर्थं च तस्य ग्रहण क्रियते । भूतव्रत्यनुकपादान च सरागसयमादयश्च भूतव्रत्यनुकपादानसरागसंयमादयस्तेषा योग भूतव्रत्यनुकपादानसरागसयमादियोग ।

---

१ जैनेंद्रमहावृत्तिरित्यर्थ ।

स्य । प्रचुरक्रोधमानमायालोभपरिणामगुह्येंद्रियव्यपरोपणस्त्रीपुंसानङ्गव्यसनित्वशीलव्रतगुणधारिप्रव्रज्याश्रित-प्रथमपरागनास्कन्दनरागतीव्रानाचारादिर्नपुंसकवेदनीयस्य । आह—मोहनीयस्यानेकविकल्पस्यास्रवभेदो निर्दिष्ट । इदानीं आयुश्चतुष्टयस्यास्रवभेदो वक्तव्य इति । तत्राद्यस्य नियतकालपरिपाकस्यायुष कारण-प्रदर्शनार्थमिदमुच्यते—

## बह्वारंभपरिग्रहत्वं नारकस्यायुषः ॥ १५ ॥

**सङ्ख्यावैपुल्यवाचिनो बहुशब्दस्य ग्रहणमविशेषात्॥१॥** अथ बहुशब्द अस्त्यय सङ्ख्यावाची एक, द्वौ बहव इति । अस्ति वैपुल्यवाची बहुरोदनो बहुसूप इति । तस्य द्विप्रकारस्यापि ग्रहणमिह न विरुध्यते । कुत विशेषात् ।

**आरंभो हैंस्र कर्म ॥ २ ॥** हिंसनशीला हिंस्रा तेषा कर्म हैंस्र आरभ इत्युच्यते । बहव आरभा बह्वारभा बहुर्वा आरंभो बह्वारभ ।

**ममेदमिति संकल्प परिग्रहः ॥ ३ ॥** ममेद वस्तु अहमस्य स्वामीत्यात्मात्मीयाभिमान सकल्प परिग्रह इत्युच्यते । बह्वारभा परिग्रहा यस्य स बह्वारंभपरिग्रह तस्य भाव बह्वारंभपरिग्रहत्व नारकस्यायुष आस्रवो भवति । एतदुक्त भवति—परिग्रहप्रणिधानप्रयुक्ता तीव्रतरपरिणामा हिंसापरा बहुशो निशाश्चानुमता भाविताश्च तत्कृतकर्मात्मसात् करणात् तक्षाय पिंडवत् अहितक्रोधावर्था नारकस्यायुष आस्रव इति संक्षेप । तद्विस्तरस्तु मिथ्यादर्शनश्लिष्टाचारतोत्कृष्टमानताशैलभेदसदृशरोषतातीव्रलोभानुरागानुकपादीनभाव-परपरितापात प्रणिधानबधबधनाभिनिवेशप्राणभूतजीवसत्त्वाजस्रोपघातपरिणामप्राणप्रधात्मकानृतवचनशील-स्वपरस्वहरणानिभृताभिष्वगपरिणाममैथुनोपसेवनानिरतिमहारभवशीकृतेंद्रियताकामभोगाभिलाषप्रवृद्धता नै-शील्यपापनिमित्ताहाराभिप्रायस्थिरवैरक्रूरासासमीक्षितकदनकारितानिरनुग्रहस्वाभाव्ययातिसमयभेदती र्थकरासा-दनकृष्णलेश्याभिजातरौद्रध्यानमरणकालत्वादिलक्षणो विज्ञेय । आह उक्तो नारकस्यायुष आस्रव तैर्य-ग्योनस्येदानीं वक्तव्य इत्यत्रोच्यते—

## माया तैर्यग्योनस्य ॥ १६ ॥

**चारित्रमोहोदयात् कुटिलभावो माया ॥ १ ॥** चारित्रमोहकर्मोदयाविर्भूत आत्मन कुटिल स्वभाव मायेति व्यपदिश्यते । सा माया निकृतिस्तैर्यग्योनस्यायुष आस्रव इति संक्षेप । प्रपचस्तु मि-थ्यात्वोपष्टम्भाधर्मदेशनानल्पारंभपरिग्रहनिकृतिकूटकर्मावनिभेदसदृशरोषनि शील्ताशब्दालिंगरचनातिसंधानप्रि-यताभेदकरणानर्थोद्भावनवर्णगधरसस्पर्शान्यत्वापादनजातिकुलशीलसदूषणाविसंवादनाभिसंधिमिथ्याजीवित्व-सद्गुणव्यपलापासद्गुणख्यापननीलकपोतलेश्यापरिणामार्तध्यानमरणकालतादिलक्षण प्रत्येतव्य । आह—व्याख्यातस्तैर्यग्योनस्यायुष आस्रव । इदानीं मानुषस्यायुष को हेतुरित्यत्रोच्यते—

## अल्पारंभपरिग्रहत्वं मानुषस्य ॥ १७ ॥

**नारकायुरास्रवविपरीतो मानुषस्य ॥ १ ॥** नारकायुरास्रवो व्याख्यात तद्विपरीतो मानुष-स्यास्रव इति संक्षेप व्यासस्तु—मिथ्यादर्शनालिंगितमतिविनीतस्वभावताप्रकृतिभद्रतामार्दवार्जवसमाचार-सुखप्रज्ञापनीयतावालुकाराजिसदृशरोषप्रगुणव्यवहारप्रायताऽल्पारंभपरिग्रहसंतोषाभिरतिप्राण्युपघातविरमणप्र-दोषकर्मनिवृत्तिस्वागताभिभाषणामौखर्यप्रकृतिमधुरतालोकयात्रानुग्रहौदासीन्यानुसूयाल्पसंक्लेशतागुरुदेवता-तिथिपूजासंविभागशीलताकपोतपीतलेश्योपश्लेषधर्म्यध्यानमरणकालतादिलक्षण । किमेतावानेवायुषो मानुष-स्यास्रव ? इत्युच्यते—

## स्वभावमार्दवं च ॥ १८ ॥

**उपदेशानपेक्ष स्वभावमार्दव ॥१॥** मृदोर्भाव कर्म वा मार्दव । स्वभावेन मार्दव स्वभावमार्दव च ।

**देवशब्दो व्याख्यातार्थ** ॥ ६ ॥ देवाश्चतुर्णिकाया इत्यत्र देवशब्दो व्याख्यातार्थ ।

**अत कलुपदोषादसद्भूतमलोद्भावनमवर्णवाद** ॥ ७ ॥ गुणवत्सु महत्सु स्वमतिकलुषदोषात् असद्भूतमलोद्भावनमवर्णवाद इति वर्ण्यते । केवलिश्रुतसंघधर्मदेवानामवर्णवाद केवलिश्रुतसंघधर्मदेवावर्णवाद ।

**पिंडाभ्यवहारजीवनादिवचन केवलिषु** ॥ ८ ॥ पिंडाभ्यवहारजीविन केवलदशानिर्हरणा अलाबूपात्रपरिग्रहा कालभेदवृत्तज्ञानदर्शना केवलिन इत्यादिवचन केवलिष्ववर्णवाद ।

**मांसभक्षणानवद्याभिधान श्रुते** ॥ ९ ॥ मांसमत्स्यभक्षण मधुसुरापान वेदनार्दितमैथुनोपसेवा-रात्रिभोजनमित्येवमाद्यनवद्यमित्यनुज्ञान श्रुतेऽवर्णवाद ।

**शूद्रत्वाशुचित्वाद्याविर्भावन संघे** ॥ १० ॥ एते श्रवणा शूद्रा अस्नानमलदिग्धांगा अशुचयो दिगम्बरा निरपत्रपा इहैवेति दु खमनुभवति परलोके कुतश्च सुखिन इत्यादिवचन संघेऽवर्णवाद. ।

**निर्गुणत्वाद्यभिधान धर्मे** ॥ ११ ॥ जिनोपदिष्टो दशविकल्पो धर्म निर्गुण तदुपसेविनो ये ते चासुरा भवति । इत्येवमाद्यभिधान धर्मावर्णवाद ।

**सुरामांसोपसेवाद्याघोषण देवावर्णवाद** ॥ १२ ॥ सुरा मांस चोपसेवते देवा अहल्यादिष्वासक्तचेतस इत्याद्याघोषण देवावर्णवाद ॥

**दर्शनं मोहयति मोहन वा दर्शनमोह** ॥ १३ ॥ दर्शनमुक्तलक्षण तत्त्वार्थश्रद्धानमित्यत्र, दर्शनं मोहयतीति दर्शनमोह दर्शनस्य मोहन व दर्शनमोह तस्य दर्शनमोहस्यैते आस्रवा वेदितव्या । आह यदेते दर्शनमोहस्यापादका परिणामा निश्चीयते । क इदानीमनतरोद्दिष्टस्य चारित्रमोहस्यास्रव इत्यत्रोच्यते–

## कषायोदयात्तीव्रपरिणामश्चारित्रमोहस्य ॥ १४ ॥

**द्रव्यादिनिमित्तवशात् कर्मपरिपाक उदयः** ॥ १ ॥ प्रागुपात्तस्य कर्मण द्रव्यादिनिमित्तवशात् फलप्राप्ति परिपाक उदय इति निश्चीयते । कषायो निरुक्त । कषायस्य उदय कषायोदय तस्मात् कषायोदयात् ।

**तीव्रपरिणामशब्दावुक्तार्थौ** ॥ २ ॥ तीव्रमद इत्यत्र तीव्रशब्दो व्याख्यातार्थ तद्भावः परिणाम इत्यत्र परिणामशब्दो वर्णितार्थ ।

**चारित्रं मोहयति मोहनं वा चारित्रमोह** ॥ ३ ॥ चारित्रमुक्तलक्षण तन्मोहयति मोहन वा तस्य चारित्रमोह इति निर्दिश्यते तस्य चारित्रमोहस्य कषायोदयनिमित्त तीव्रपरिणामो य स आस्रव इति वेदितव्य । स किंस्वरूप ? इति चेदुच्यते–जगदनुग्रहतत्रशीलव्रतभावितात्मतपस्विजनगर्हणधर्मविध्वसनतदतरायकरणशीलगुणदेशसयतविरतिप्रच्यावनमधुमद्यमांसविरतचित्तभ्रमापादनवृत्तसदूषणसंक्लिष्टलिंगव्रतधारणस्वपरकषायोत्पादनादिलक्षण कषायवेदनीयस्यास्रव. । उत्प्रहासदीनाभिहासित्वकदर्पोपहसनबहुप्रलापोपहासशीलता हास्यवेदनीयस्य । विचित्रपरक्रीडनपरतौचित्यावर्जनबहुविधपीडाभावदेशाद्यनौत्सुक्यप्रीतिसजननादि रतिवेदनीयस्य । परारतिप्रादुर्भावनरतिविनाशनपापशीलससर्गताकुशलक्रियाप्रोत्साहनादि, अरतिवेदनीयस्य । स्वशोकामोदशोचनपरदु खाविष्करणशोकप्लुताभिनदनादि शोकवेदनीयस्य । स्वय भयपरिणामपरभयोत्पादननिर्दयत्वत्रासनादिर्भयवेदनीयस्य । सद्धर्मापन्नचतुर्वर्णविशिष्टवर्गकुलक्रियाचारप्रवणजुगुप्सापरिवादशीलत्वादिर्जुगुप्सावेदनीयस्य । प्रकृष्टक्रोधपरिणामातिमानितेर्ष्याव्यापारालीकाभिधायितातिसधानपरत्वप्रवृद्धरागपरागनागमनादरवामलोचनाभावाभिष्वगतादि स्त्रीवेदस्य । स्तोकक्रोधजैह्मनिवृत्त्यानुत्सिक्तत्वालोभत्वागनासमवायाल्परागत्वस्वदारसतोषेर्ष्याविशेषोपरमस्नानगधमाल्याभरणानादरादि पुवेदनीय-

**नातस्तत्सिद्धेः ॥ ३ ॥** नैष दोषः । कुतः ? अतस्तत्सिद्धेः । यत एव सम्यक्त्वं सौधर्मादिष्विति नियम्यते तत एव तयोरपि नियमसिद्धिः । नासति सम्यक्त्वे सरागसंयमसंयमासंयमव्यपदेश इति । आह–आयुषोऽनन्तरं यन्निर्दिष्टं नाम तस्य क आस्रव इत्यत्रोच्यते—तत्र तद्द्विविधमशुभं शुभं चेति । तत्राशुभनामास्रवप्रतिपत्त्यर्थमारभ्यते—

## योगवक्रता विसंवादनं चाऽशुभस्य नाम्नः ॥ २२ ॥

**कायवाङ्मनसां कौटिल्येन वृत्तिर्योगवक्रता ॥ १ ॥** कायवाङ्मनांसि व्याख्यातानि तेषां कुटिलता योगवक्रता इत्युच्यते । अनार्जवं प्रणिधानमिति यावत् ।

**विसंवादनमन्यथाप्रवर्तनं ॥ २ ॥** अन्येन प्रकारेण प्रवर्तनं प्रतिपादनं विसंवादनमिति विज्ञायते ।

**योगवक्रतैवेति चेदसत्यमात्मान्तरेऽपि तद्भावप्रयोजकत्वात् पृथग्वचनं ॥ ३ ॥** स्यादेतत् अन्यथाप्रवर्तनं विसंवादनं तदेव योगवक्रतापीति पृथग्ग्रहणमनर्थकमिति ? सत्यमेवमेतत् किंतु आत्मान्तरेऽपि तद्भावप्रयोजकत्वात् पृथग्वचनं । सम्यगभ्युदयनिःश्रेयसार्थासु क्रियासु प्रवर्तमानमन्यं कायवाङ्मनोभिर्विसंवादयति–मैवं कार्षीरेवं कुर्विति कुटिलतया प्रवर्तनं विसंवादनं । आत्मगता योगवक्रता, इत्ययमनयोर्भेदः ।

**चशब्दोऽनुक्तसमुच्चयार्थः ॥ ४ ॥** चशब्दः क्रियते अनुक्तस्यास्रवस्य समुच्चयार्थः । कः पुनरसौ ? मिथ्यादर्शनपिशुनतास्थिरचित्तस्वभावताकूटमानतुलाकरणसुवर्णमणिरत्नाद्यनुकृतिकुटिलसाक्षित्वाङ्गोपाङ्गच्यावनवर्णगन्धरसस्पर्शान्यथाभावनयन्त्रपञ्जरक्रियाद्रव्यान्तरविषयसंबन्धनिकृतिभूयिष्ठतापरनिंदात्मप्रशंसानृतवचनपरद्रव्यादानमहारम्भपरिग्रहोज्ज्वलवेषरूपमदपरुषासत्यप्रलापाक्रोशमौखर्यसौभाग्योपयोगवशीकरणप्रयोगपरकुतूहलोत्पादनालङ्कारादरचैत्यप्रदेशगन्धमाल्यधूपादिमोषणविलम्बनोपहासेष्टकापाकदवाग्निप्रयोगप्रतिमायतनप्रतिश्रयारामोद्याननिनाशतीव्रक्रोधमानमायालोभपापकर्मोपजीवनादिलक्षणः । स एष सर्वोऽशुभस्य नाम्नः ।

आह—अथ शुभनामकर्मणः क आस्रव इत्युच्यते—

## तद्विपरीतं शुभस्य ॥ २३ ॥

**ऋजुयोगोऽविसंवादनं च ॥ १ ॥** तद्विपरीतं कायवाङ्मनसामृजुत्वमविसंवादनं च तद्विपरीतमित्युच्यते । चशब्देन धार्मिकदर्शनसंभ्रमसद्भावोपनयनसंसरणभीरुताप्रमादवर्जनादयः समुच्चीयन्ते । ते यथोक्ताऽशुभविपरीताः परिणामाः शुभनाम्न आस्रवाः प्रत्येतव्याः । आह–किमेतावानेव शुभनामास्रवविधिः । उत कश्चिदस्ति प्रतिविशेषः ? इत्युच्यते—यदिदं तीर्थकरनामकर्म अनन्तानुपमप्रभावमचिन्त्यविभूतिविशेषकारणं त्रैलोक्यविजयकरं तस्यास्रवविधिविशेषोऽस्तीति । यद्येवमुच्यतां तस्यास्रव इत्यत इदमारभ्यते—

## दर्शनविशुद्धिर्विनयसंपन्नता शीलव्रतेष्वनतिचारोऽभीक्ष्णज्ञानोपयोगसंवेगौ शक्तितस्त्यागतपसी साधुसमाधिर्वैयावृत्त्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिरावश्यकापरिहाणिर्मार्गप्रभावना प्रवचनवत्सलत्वमिति तीर्थकरत्वस्य ॥ २४ ॥

**जिनोपदिष्टे निर्ग्रन्थे मोक्षवर्त्मनि रुचिः निःशङ्कितत्वाद्यष्टाङ्गा दर्शनविशुद्धिः ॥ १ ॥** जिनेन भगवताऽर्हता परमेष्ठिनोपदिष्टे निर्ग्रन्थलक्षणे मोक्षवर्त्मनि रुचिर्दर्शनविशुद्धिः । तस्या अष्टावङ्गानि–निःशङ्कितत्वं, निःकाङ्क्षता, विचिकित्साविरहः, अमूढदृष्टिता, उपबृंहणं, स्थितिकरणं, वात्सल्यं, प्रभावनं चेति । तत्रेहलोकपरलोकव्याधिमरणासंयमारक्षणाकस्मिकसप्तविधभयाविनिर्मुक्तता—अर्हदुपदिष्टे वा प्रवचने किमिदं स्याद्वा नवेति शङ्कानिरासो निःशङ्कितत्वं । उभयलोकविषयोपभोगाकाङ्क्षानिवृत्तिः कुदृष्ट्यन्तराकाङ्क्षा-

उपदेशानपेक्षमित्यर्थः । ननु पूर्वत्र व्याख्यातमिदं पुनर्ग्रहणमनर्थकं सूत्रेनुपात्तमिति कृत्वा पुनरिदमुच्यते—

**एकयोगीकरणमिति चेन्नोत्तरापेक्षत्वात् ॥ १ ॥** स्यान्मतं एको योगः कर्तव्यः–अल्पारंभपरिग्रहत्वं स्वभावमार्दवं मानुषस्येति ? तन्न; किं कारणं ? उत्तरापेक्षत्वात् । दैवस्यायुषः कथमयमास्रवः स्यादिति पृथक्करणं । किमेतदेव द्वितीयं मानुषस्यास्रवः ? नेत्युच्यते—

## निःशीलव्रतत्वं च सर्वेषां ॥ १९ ॥

**च शब्दोधिकृतसमुच्चयार्थः ॥ १ ॥** अल्पारंभपरिग्रहत्वं मानुषस्यायुः निःशीलव्रतत्वं चेत्यधिकृतसमुच्चयार्थश्चशब्दः क्रियते । शीलानि च व्रतानि च शीलव्रतानि निःक्रांतः शीलव्रतेभ्यः निःशीलव्रतः तस्य भावः निःशीलव्रतत्वं ।

**सर्वेषां ग्रहणं सकलास्रवप्रतिपत्त्यर्थं ॥ २ ॥** सकलस्यायुषः आस्रवप्रतिपत्तिः कथं स्यादिति सर्वेषामित्युच्यते ।

**देवायुषोपि प्रसंग इति चेन्नातिक्रांतापेक्षत्वात् ॥ ३ ॥** यदि सर्वेषां ग्रहणं सकलसंग्रहार्थं क्रियते देवायुषोप्ययमास्रवः प्रसक्तः ? नैष दोषः अतिक्रांतापेक्षत्वात् अतिक्रांतानामायुषां सर्वेषामास्रव इत्यपेक्ष्यते ।

**पृथक्करणात् सिद्धेरानर्थक्यमिति चेन्न भोगभूमिजार्थत्वात् ॥ ४ ॥** स्यादेतत् पृथक्करणा देवातिक्रांतायुस्त्रयापेक्षा सिध्यति यदि मानुषायुरास्रव एवेष्टः स्यात् तत्रैव क्रियते ततः सर्वेषां ग्रहणमनर्थकमिति तन्न किं कारणं ? भोगभूमिजार्थत्वात् । भोगभूमिजापेक्षया निःशीलव्रतत्वं दैवस्यायुषः आस्रव इत्येतस्य प्रदर्शनार्थं सर्वेषामित्युच्यते । आह—त्रयाणामास्रवविधिरुक्तः । इदानीं दैवस्यायुषो विध्रियतामित्यत्रोच्यते—

## सरागसंयमसंयमासंयमाकामनिर्जराबालतपांसि दैवस्य ॥२०॥

**व्याख्याताः सरागसंयमादयः ॥ १ ॥** शुभपरिणामाः सरागसंयमादयः व्याख्याताः ते दैवस्यायुषः आस्रवः हेतवो भवंतीति संक्षेपः । विस्तरस्तु कल्याणमित्रसंबंधायतनोपसेवासद्धर्मश्रवणागौरवदर्शनानवद्यप्रोषधोपवासास्तपोभावनादिषु अनधिगतजीवाजीवा बालतपसः अनुपलब्धतत्त्वस्वभावाज्ञानकृतसंयमासक्लेशभावविशेषात् केचिद्भवनव्यंतरादिषु सहस्रारपर्यंतेषु मनुष्यतिर्यक्ष्वपि च । आकामनिर्जराक्षुत्तृष्णानिरोधब्रह्मचर्यभूशय्यामलधारणपरितापादिभिः परिखेदितमूर्तयः नारकाः निरोधकबंधनबद्धा दीर्घकालरोगिणः असंक्लिष्टाः तरुगिरिशिखरपातिनः अनशनज्वलनजलप्रवेशनविषभक्षणधर्मबुद्धयः व्यंतरमानुषतिर्यक्षु । निःशीलव्रताः सानुकंपहृदयाः जलराजितुल्यरोषाः भोगभूमिसमुत्पन्नाश्च व्यंतरादिषु जन्म प्रतिपद्यते । इत्युक्तो दैवस्यायुषः आक्रांतभेद आस्रवः । किमेतावानेव देवायुरास्रवविधिराहोस्विदन्योप्यस्तीत्यत्रोच्यते—

## सम्यक्त्वं च ॥ २१ ॥

किं ? दैवस्यायुषः आस्रव इत्यनुवर्तते ।

**उक्तं सम्यक्त्वलक्षणं ॥ १ ॥**

**अविशेषाभिधानेपि सौधर्मादिविशेषगतिः पृथक्करणात् ॥ २ ॥** सम्यक्त्वं दैवस्यायुषः आस्रवः इत्यविशेषाभिधानेपि सौधर्मादिविशेषगतिर्भवति । कुतः ? पृथक्करणात् यद्यविशेषगतिरेवेष्टा स्यात् पृथक्करणमनर्थकं स्यात् पूर्वसूत्रे एवोच्यते । यद्येवं पूर्वसूत्रे उक्तः आस्रवविधिः अविशेषेण प्रसक्तः तेन सरागसंयमसंयमासंयमावपि भवनावास्याद्यायुषः आस्रवौ प्रसक्तौ ?

**नातस्तत्सिद्धेः ॥ ३ ॥** नैष दोषः । कुतः ? अतस्तत्सिद्धेः । यत एव सम्यक्त्वं सौधर्मादिष्विति नियम्यते तत एव तयोरपि नियमसिद्धिः । नासति सम्यक्त्वे सरागसंयमसंयमासंयमव्यपदेश इति । आह—आयुषोनंतरं यन्निर्दिष्टं नाम तस्य क आस्रव इत्यत्रोच्यते—तत्र तद्द्विविधमशुभं शुभं चेति । तत्राशुभनामास्रवप्रतिपत्त्यर्थमारभ्यते—

## योगवक्रता विसंवादनं चाऽशुभस्य नाम्नः ॥ २२ ॥

**कायवाङ्मनसां कौटिल्येन वृत्तिर्योगवक्रता ॥ १ ॥** कायवाङ्मनांसि व्याख्यातानि तेषां कुटिलता योगवक्रता इत्युच्यते । अनार्जवं प्रणिधानमिति यावत् ।

**विसंवादनमन्यथाप्रवर्तनं ॥ २ ॥** अन्येन प्रकारेण प्रवर्तनं प्रतिपादनं विसंवादनमिति विज्ञायते ।

**योगवक्रतैवेति चेत्सत्यमात्मांतरेपि तद्भावप्रयोजकत्वात् पृथग्वचनं ॥३॥** स्यादेतत् अन्यथाप्रवर्तनं विसंवादनं तदेव योगवक्रतापीति पृथग्ग्रहणमनर्थकमिति ? सत्यमेवमेतत् किंतु आत्मांतरेपि तद्भावप्रयोजकत्वात् पृथग्वचनं । सम्यगभ्युदयनिःश्रेयसार्थासु क्रियासु प्रवर्तमानमन्यं कायवाङ्मनोभिर्विसंवादयति—मैवं कार्षीरेवं कुर्विति कुटिलतया प्रवर्तनं विसंवादनं । आत्मगता योगवक्रता, इत्ययमनयोर्भेदः ।

**चशब्दोनुक्तसमुच्चयार्थः ॥ ४ ॥** चशब्दः क्रियते अनुक्तस्यास्रवस्य समुच्चयार्थः । क पुनरसौ ? मिथ्यादर्शनपिशुनतास्थिरचित्तस्वभावताकूटमानतुलाकरणसुवर्णमणिरत्नाद्यनुकृतिकुटिलसाक्षित्वांगोपांगच्यावनवर्णगंधरसस्पर्शान्यथाभावनयंत्रपंजरक्रियाद्रव्यांतरविषयसंबंधनिकृतिभूयिष्ठतापरनिंदात्मप्रशंसानृतवचनपरद्रव्यादानमहारंभपरिग्रहोज्ज्वलवेषरूपमदपरुषासत्यप्रलापाक्रोशमौखर्यसौभाग्योपयोगवशीकरणप्रयोगपरकुतूहलोत्पादनालंकारादरचैत्यप्रदेशगंधमाल्यधूपादिमोषणविलंबनोपहासेष्टकापाकदवाग्निप्रयोगप्रतिमायतनप्रतिश्रयारामोद्यानविनाशतीव्रक्रोधमानमायालोभपापकर्मोपजीवनादिलक्षणः । स एष सर्वोऽशुभस्य नाम्नः ।

आह—अथ शुभनामकर्मणः क आस्रव इत्युच्यते—

## तद्विपरीतं शुभस्य ॥ २३ ॥

**ऋजुयोगोऽविसंवादनं च ॥ १ ॥** तद्विपरीतं कायवाङ्मनसां ऋजुत्वमविसंवादनं च तद्विपरीतमित्युच्यते । चशब्देन धार्मिकदर्शनसंभ्रमसद्भावोपनयनसंसरणभीरुताप्रमादवर्जनादयः समुच्चीयन्ते, तादयो यथोक्ताऽशुभविपरीताः परिणामाः शुभनाम्न आस्रवाः प्रत्येतव्याः । आह—किमेतावानेव शुभनामास्रवविधिः । उत कश्चिदस्ति प्रतिविशेषः ? इत्युच्यते—यदिदं तीर्थकरनामकर्म अनंतानुपमप्रभावमचिंत्यविभूतिविशेषकारणं त्रैलोक्यविजयकरं तस्यास्रवविधिविशेषोस्तीति । यद्येवमुच्यतां तस्यास्रव इत्यत इदमारभ्यते—

## दर्शनविशुद्धिर्विनयसंपन्नता शीलव्रतेष्वनतिचारोऽभीक्ष्णज्ञानोपयोगसंवेगौ शक्तितस्त्यागतपसी साधुसमाधिर्वैयावृत्त्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिरावश्यकापरिहाणिर्मार्गप्रभावना प्रवचनवत्सलत्वमिति तीर्थकरत्वस्य ॥ २४ ॥

**जिनोपदिष्टे निर्ग्रन्थे मोक्षवर्त्मनि रुचिः निःशंकितत्वाद्यष्टांगा दर्शनविशुद्धिः ॥ १ ॥** जिनेन भगवताऽर्हता परमेष्ठिनोपदिष्टे निर्ग्रन्थलक्षणे मोक्षवर्त्मनि रुचिर्दर्शनविशुद्धिः । तस्या अष्टावंगानि—निःशंकितत्वं, निःकांक्षता, निर्विचिकित्साविरहः, अमूढदृष्टिता, उपबृंहणं, स्थितिकरणं, वात्सल्यं, प्रभावनं चेति । तत्रेहलोकपरलोकव्याधिमरणासंयमारक्षणाकास्मिकसप्तविधभयविनिर्मुक्तता—अर्हदुपदिष्टे वा प्रवचने किमिदं स्याद्वा नवेति शंकानिरासो निःशंकितत्वं । उभयलोकविषयोपभोगाकांक्षानिवृत्तिः कुदृष्ट्यन्तराकांक्षा-

निरासो वा नि कांक्षता । शरीराद्यशुचिस्वभावमवगम्य शुचीति मिथ्यासंकल्पापनय , अर्हत्प्रवचने वा इद मयुक्त घोर कष्ट न चेदिद सर्वमुपपन्नमित्यशुभभावनाविरह निर्विचिकित्सता । बहुविधेषु दुर्नयदर्शनवर्त्मसु तत्त्ववदाभासमानेषु युक्त्यभाव परीक्षाचक्षुषा व्यवसाय्य विरहितमोहता अमूढदृष्टिता । उत्तमक्षमादिभावनयात्मनो धर्मपरिवृद्धिकरणमुपबृंहण । कषायोदयादिषु धर्मपरिभ्रंशकारणेषु उपस्थितेष्वात्मनो धर्मप्रच्यव परिपालन स्थितीकरण । जिनप्रणीतधर्मामृते नित्यानुरागता वात्सल्य । सम्यग्दर्शनज्ञानचारित्ररत्नत्रयप्रभावेनात्मन प्रकाशन प्रभावनं ।

**ज्ञानादिषु तद्वत्सु चादरः कषायनिवृत्तिर्वा विनयसंपन्नता ॥ २ ॥** सम्यग्ज्ञानादिषु मोक्षसाधनेषु तत्साधनेषु गुर्वादिषु च स्वयोग्यवृत्त्या सत्कार आदर कषायनिवृत्तिर्वा विनयसंपन्नता ।

**चारित्रविकल्पेषु शीलव्रतेषु निरवद्या वृत्तिः शीलव्रतेष्वनतिचारः ॥ ३ ॥** अहिंसादिषु व्रतेषु तत्परिपालनार्थेषु च क्रोधवर्जनादिषु शीलेषु निरवद्या वृत्ति कायवाङ्मनसां शीलव्रतेष्वनतिचार इति कथ्यते ।

**ज्ञानभावनायां नित्ययुक्तता ज्ञानोपयोगः ॥ ४ ॥** मत्यादिविकल्प ज्ञान जीवादिपदार्थस्वतत्त्वविषय प्रत्यक्षपरोक्षलक्षण अज्ञाननिवृत्त्यव्यवहितफल हिताहितानुभयप्राप्तिपरिहारोपेक्षाव्यवहितफल यत्तस्य भावनायां नित्ययुक्तता ज्ञानोपयोग ।

**संसारदुःखान्नित्यभीरुता संवेगः ॥ ५ ॥** शारीर मानस च बहुविकल्पं प्रियविप्रयोगाप्रियसंयोगेप्सितालाभादिजनित संसारदु ख यदतिकष्ट ततो नित्यभीरुता संवेग ।

**परप्रीतिकरणातिसर्जनं त्यागः ॥ ६ ॥** आहारो दत्त पात्राय तस्मिन्नहनि तत्प्रीतिहेतुर्भवति, अभयदानमुपपादितमेकभवव्यसननोदनकर। सम्यग्ज्ञानदान पुन अनेकभवशतसहस्रदु खोत्तरणकारणमत एतत्त्रिविध यथाविधिप्रतिपद्यमान त्यागव्यपदेशभाग्भवति ।

**अनिगूहितवीर्यस्य मार्गाविरोधिकायक्लेशस्तपः ॥ ७ ॥** शरीरमिद दु खकारणमनित्यमशुचि, नास्य यथेष्टभोगविधिना परिपोषो युक्त , अशुच्यपीद गुणरत्नसंचयोपकारीति विचिंत्य विनिवृत्तविषयसुखाभिष्वंगस्य स्वकार्यं प्रत्येतदद्भृतकमिव नियुंजानस्य यथाशक्तिमार्गाविरोधि कायक्लेशानुष्ठान तप इति निश्चीयते

**मुनिगणतपःसंधारणं समाधिः भांडागाराग्निप्रशमनवत् ॥ ८ ॥** यथा भांडागारे दहने समुत्थिते तत्प्रशमनमनुष्ठीयते बहूपकारत्वात् तथानेकव्रतशीलसमृद्धस्य मुनिगणस्य तपस कुतश्चित् प्रत्यूहे समुत्थिते तत्संधारण समाधिरिति समाख्यायते ।

**गुणवद्दुःखोपनिपाते निरवद्येन विधिना तदपहरणं वैय्यावृत्त्यं ॥ ९ ॥** गुणवत साधुजनस्य दु खे सन्निहिते निरवद्येन विधिना तदपहरण बहूपकार वैयावृत्त्यमिति व्याख्यायते ।

**अर्हदाचार्येषु बहुश्रुतेषु प्रवचने च भावविशुद्धियुक्तोनुरागो भक्तिः ॥ १० ॥** अर्हदाचार्येषु केवलश्रुतज्ञानादिदिव्यनयनेषु परहितकरप्रवृत्तेषु स्वपरसमयविस्तरनिश्चयज्ञेषु च बहुश्रुतेषु प्रवचने च श्रुतदेवतासन्निधिगुणयोगदुरासदे मोक्षपदभवनारोहणसुरचितसोपानभूते भावविशुद्धियुक्तोनुराग , भक्ति , त्रिविधा कल्प्यते ।

**षण्णामावश्यकक्रियाणां यथाकालं प्रवर्तनमावश्यकापरिहाणिः ॥ ११ ॥** षडावश्यकक्रिया.–सामायिक चतुर्विंशतिस्तव वंदना प्रतिक्रमण प्रत्याख्यान कायोत्सर्गश्चेति । तत्र सामायिक सर्वसावद्ययोगनिवृत्तिलक्षण चित्तस्यैकत्वेन ज्ञाने प्रणिधान । चतुर्विंशतिस्तव तीर्थकरगुणानुकीर्तन, वंदना त्रिशुद्धि द्व्यासना चतु शिरोवनति , द्वादशावर्तना । अतीतदोषनिवर्तन प्रतिक्रमण, अनागतदोषापोहन प्रत्याख्यान, परिमितकालविषया शरीरे ममत्वनिवृत्ति कायोत्सर्ग । इत्येतासां षण्णामावश्यकक्रियाणां यथाकालप्रवर्तन अनौत्सुक्य आवश्यकापरिहाणिरिति परिभाष्यते ।

**ज्ञानतपोजिनपूजाविधिना धर्मप्रकाशनं मार्गप्रभावनं ॥ १२ ॥** ज्ञानरविप्रभया परसमयखद्योततिरस्कारिण्या, सत्तपसा महोपवासादिलक्षणेन सुरपतिविष्टरप्रकंपनहेतुना, जिनपूजया वा भव्यजनकमलखंडप्रबोधनप्रभाकरप्रभया, सद्धर्मप्रकाशनं मार्गप्रभावनमिति समाख्यते ।

**वत्से धेनुवत्सधर्माणि स्नेहः प्रवचनवत्सलत्वं ॥ १३ ॥** यथा धेनुर्वत्सेऽकृत्रिमस्नेहमुत्पादयति तथा सधर्माणमवलोक्य तद्गतस्नेहार्द्रीकृतचित्तता प्रवचनवत्सलत्वमित्युच्यते । यः सधर्मणि स्नेहः स एव प्रवचनस्नेह इति । तान्येतानि षोडशकारणानि सम्यग्भाव्यमानानि व्यस्तानि समस्तानि च तीर्थकरनामकर्मास्रवकारणानि प्रत्येतव्यानि । आह—नामानंतरनिर्देशभाजो गोत्रस्योपादाने किं निबंधनमिति प्रतिविधीयते—तद्विनिश्चये सति आद्यस्य तावत्—

## परात्मनिंदाप्रशंसे सदसद्गुणच्छादनोद्भावने च नीचैर्गोत्रस्य ॥२५॥

**दोषोद्भावनेच्छा निंदा ॥ १ ॥** तथ्यस्य वाऽतथ्यस्य वा दोषस्योद्भावनं प्रतीच्छा मनःपरिणामाक्षेपो निंदेत्युच्यते ॥

**गुणोद्भावनाभिप्रायः प्रशंसा ॥ २ ॥** सद्भूतस्यासद्भूतस्य वा गुणस्योद्भावनं प्रत्यभिप्रायः प्रशंसेत्युपदिश्यते । परश्च आत्मा च परात्मानौ निंदा च प्रशंसा च निंदाप्रशंसे परात्मनोर्निंदाप्रशंसे परात्मनिंदाप्रशंसे यथासंख्यमभिसंबंधः । परनिंदा आत्मप्रशंसेति यावत् ।

**अनुद्भूतवृत्तिताच्छादनं ॥ ३ ॥** प्रतिबंधकहेतुसंनिधाने सति अनुद्भूतवृत्तिताविर्भावः छादनमित्यवसीयते ॥

**प्रतिबंधकाभावे प्रकाशितवृत्तितोद्भावनं ॥४॥** प्रतिबंधकस्य हेतोरभावे प्रकाशितवृत्तिता उद्भावनमिति व्यपदेशमर्हति सच्चासच्च सदसती तौ च तौ गुणौ च सदसद्गुणौ, छादनं चोद्भावनं च छादनोद्भावने सदसद्गुणयोः छादनोद्भावने सदसद्गुणच्छादनोद्भावने, अत्रापि यथासंख्यमभिसंबंधः । सद्गुणच्छादनमसद्गुणोद्भावनमिति ।

**गूयते तदिति गोत्रं ॥ ५ ॥** गूयते शब्द्यते तदिति गोत्रं उणादिकेन त्रदा निष्पत्तिः ।

**नीचैरित्यधिकरणप्रधानः शब्दः ॥ ६ ॥** नीचैरित्ययं शब्दः अधिकरणप्रधानो द्रष्टव्यः नीचैः स्थाने येनात्मा क्रियते तन्नीचैर्गोत्रं तस्यास्रवकारणान्येतानि परनिंदादीनि । तत्प्रपंच उच्यते—जातिकुलबलरूपश्रुताज्ञैश्वर्यतपोमदपरावज्ञानोत्प्रहसनपरपरिवादशीलताधार्मिकजननिंदात्मोत्कर्षोऽन्ययशोविलोपासत्कीर्त्युत्पादनगुरुपरिभवतदुद्घट्टनदोषख्यापनविहेडनस्थानावमानभर्त्सनगुणावसादनांजलिस्तुत्यनभिवादनाभ्युत्थानाकरणतीर्थकराधिक्षेपादि । आहोपपादितं नीचैर्गोत्रस्यास्रवः, इदानीमुच्चैर्गोत्रस्यास्रवविधिः क इति ? अत्रोच्यते—

## तद्विपर्ययो नीचैर्वृत्त्यनुत्सेकौ चोत्तरस्य ॥ २६ ॥

**नीचैर्गोत्रास्रवप्रतिनिर्देशनार्थस्तच्छब्दः ॥ १ ॥** प्रत्यासत्तेस्तादित्यनेन नीचैर्गोत्रास्रवः प्रतिनिर्दिश्यते ।

**विपर्ययोऽन्यथावृत्तिः ॥ २ ॥** अन्येन प्रकारेण वृत्तिर्विपर्यय इति व्यपदिश्यते तस्य विपर्ययः तद्विपर्ययः । कः पुनरसौ—आत्मनिंदा परप्रशंसे सद्गुणोद्भावनमसद्गुणच्छादनं च ।

**गुरुष्ववनतिर्नीचैर्वृत्तिः ॥ ३ ॥** गुणोत्कृष्टेषु विनयेनावनतिर्नीचैर्वृत्तिरित्याख्यायते ।

**अनहंकारतानुत्सेकः ॥ ४ ॥** विज्ञानादिभिरुत्कृष्टस्यापि सतः तत्कृतमदविरहोऽनहंकारतानुत्सेक इत्युच्यते । तान्येतानि उत्तरस्योच्चैर्गोत्रस्यास्रवकारणानि भवंति । प्रपंचस्तु विध्रियते—जातिकुलरूपबलवीर्य

परिज्ञानैश्वर्यतपोविशेषकृत आत्मोत्कर्षाप्रणिधान परावज्ञानौद्धत्यनिंदासूयोपहासपरपरिवादनिवृत्ति विनिहतमानता धर्म्यजनपूजाऽभ्युत्थानाञ्जलिप्रणतिवंदना ऐदंयुगीनान्यपुरुषदुर्लभगुणस्याप्यनुत्सिक्तता। अहंकारात्यये नीचैर्वृत्तिता भस्माच्छन्नस्यैव हुतभुज स्वमाहात्म्याप्रकाशन धर्मसाधनेषु परमसंभ्रम इत्यादि। आहोक्त सप्तविधकर्म प्रत्यास्रवविकल्प। इदानीमष्टमस्य कर्मणोऽन्तरायस्यास्रवविधि क.? इत्यत्रोच्यते-

## विघ्नकरणमंतरायस्य ॥ २७ ॥

**दानादिविहनन विघ्नः ॥ १ ॥** दानादीन्युक्तानि दानलाभभोगोपभोगवीर्याणि चेत्यत्र तेषा विहनन विघ्न इत्युच्यते।

**घञर्थे कविधान ॥ २ ॥** "स्थास्नापाव्यधिहनियुध्यर्थमिति" कविधि। विघ्नस्य करण विघ्नकरणमंतरायस्यास्रव इति सक्षेप। तद्विस्तारस्तु निर्ध्रियते—ज्ञानप्रतिषेधसत्कारोपघातदानलाभभोगोपभोगवीर्यस्नानानुलेपनगंधमाल्याच्छादनविभूषणशयनासनभक्ष्यभोज्यपेयलेह्यपरिभोगविघ्नकरणविभवसमृद्धिविस्मयद्रव्यापरित्यागद्रव्यासंप्रयोगसमर्थनाप्रमादावर्णवाददेवतानिवेद्यानिवेद्यग्रहणनिरवद्योपकरणपरित्यागपरवीर्यापहरणधर्मव्यवच्छेदनकुशलाचरणतपस्विगुरुचैत्यपूजाव्याघातप्रव्रजितकृपणदीनानाथवस्तुपात्रप्रतिश्रयप्रतिषेधक्रियापरनिरोधबंधनगुह्याङ्गछेदनकर्णनासिकौष्ठकर्तनप्राणिवधादि.। अत्र चोद्यते सूत्रेऽनुपात्त सर्वास्रवप्रपंच कथमेव गंतु शक्यते? इत्यत्रोच्यते—

**इतिकरणानुवृत्तेः सर्वत्रानुक्तसंग्रहः ॥ ३ ॥** इति करणोऽनुवर्तते। क्व प्रकृत? क्षांतिशौचमिति सद्वेद्यस्येत्यत तेनानुक्तार्थसंग्रह सर्वत्र वेदितव्य। प्रकारार्थो हि इतिकरण इति।

**स्वोपात्तकर्मवशादात्मनो विकारः शौंडातुरवत् ॥ ४ ॥** एवमुक्तेनास्रवविधिनोपात्त कर्माष्टविध ज्ञानावरणादिसंज्ञक वक्ष्यमाण मूलोत्तरप्रकृतिभेद यन्निमित्त आत्मा ससारविकारमनुपरतमनुभवति। यथा शौंड स्वरुचिविशेषान्मदमोहविभ्रमकरीं मदिरा पीत्वा तत्परिपाकवशात् अनेकविकारमास्कंदति। यथा वा आतुर अपथ्यभोजनकृत वातादिविकारमवाप्नोति।

**अनपदिष्टहेतुकत्वादास्रवानियम इतिचेन्न स्वभावाभिव्यंजकत्वाच्छास्त्रस्य ॥ ५ ॥** स्यान्मत य उक्त आस्रवनियमो ज्ञानावरणादीना तत्प्रदोषनिह्नवादि स नोपपद्यते कुत. अनपदिष्टहेतुत्वात्। नात्र हेतुरपदिष्ट येनास्रवनियम प्रतिपद्येमहि। यच्च नाम सहेतुक तद्विदुषा ग्राह्यमिति? तन्न किं कारण? स्वभावाभिव्यंजकत्वात् शास्त्रस्य। यथा प्रदीपो घटादीना स्वभावमभिव्यनक्ति तथा शास्त्रमपि सतामेवार्थाना प्रकाशक, तत्राय परिणाम इद वीर्यं द्रव्यावर्जनसमर्थ इति स्वभावव्याख्यानादुपालभाभाव।

**तत्सिद्धिरतिशयज्ञानदृष्टत्वात् ॥ ६ ॥** तस्य शास्त्रस्य सतामर्थानामभिव्यंजकत्व दृष्ट कुत अतिशयज्ञानदृष्टत्वात्। भगवतामर्हतामतिशयवज्ज्ञान युगपत्सर्वार्थावभासनसमर्थ प्रत्यक्ष तेन दृष्ट यच्छास्त्र तदर्थोपदेशक, अतस्तत्प्रामाण्यात् ज्ञानावरणाद्यास्रवनियमप्रसिद्धि।

**सर्वाविप्रवादाच्चोपालंभनिवृत्तिः ॥ ७ ॥** तत्र प्रवादिनो न विसंवदते-पृथिव्यादीना द्रव्याणां कठिनद्रवोष्णचलनादिस्वभावाना रूपादीना च गुणाना चाक्षुषत्वादिप्रतिनियतस्वभावादीना चोत्क्षेपणादीना च संयोगविभागनिरपेक्षकारणत्वादिस्वभावानामभ्युपगमात्। तथा सत्त्वरजस्तमसा गुणानां प्रकाशप्रवृत्तिनियमस्वभावानामभ्युपेतत्वात्। तथा अविद्याना सस्कारादिप्रतिनियतकारणस्वभावानामिष्टत्वात् ततो नायमुपालभ आस्रवनियमाभाव इति।

**तत्प्रदोषादीनां सर्वास्रवत्वान्नियमाभाव इतिचेन्न अनुभागविशेषनियमोपपत्तेः ॥ ८ ॥** स्यादेतत् यत्प्रदोषनिह्नवादय ज्ञानावरणादीनामास्रवा प्रतिनियता उक्ता, ते सर्वेषा कर्मणा आस्रवा भवति। ज्ञानावरणे बध्यमाने युगपदितरेषामपि बध इष्यते आगमे, तस्मादास्रवनियमाभाव इति? तन्न

कि कारण ? अनुभागविशेषनियमोपपत्ते । यद्यपि तत्प्रदोषादिभि ज्ञानावरणादीनां सर्वासां प्रकृतीना प्रदेशादिबन्धनियमो नास्ति तथापि अनुभागविशेषनियमहेतुत्वेन तत्प्रदोषनिह्नवादय प्रविभज्यते ।

इति तत्त्वार्थवार्तिके व्याख्यानालङ्कारे षष्ठोध्यायः समाप्तः ॥ ६ ॥

# अथ सप्तमोध्यायः ।

आस्रवपदार्थो व्याख्याप्रतिज्ञयोक्तोऽष्टोत्तरशतभेदसंख्यो बहुविचार स द्वेधा पुण्यपापलक्षणसांपरायिकनिमित्तत्वात् । तत्र पुण्यास्रवो व्याख्येय प्रधानत्वात् तत्पूर्वकत्वात् मोक्षस्य । यद्येवमुच्यता कैस्ते क्रियाविशेषा प्रारभ्यमाणास्तस्यास्रवा भवतीत्यत्रेत्युच्यते व्रतिभि तत्रानिर्धारिते यत्राविशेषलक्षणत्वात्(?) व्रतस्य तत्प्रसिद्ध्यर्थमिदमुच्यते । अथवा 'कायवाङ्मनःकर्म योग स आस्रव शुभ पुण्यस्येति' सामान्येनोक्त तद्विशेषप्रतिपत्त्यर्थमिदमुच्यते । अथवा उक्तमेतत् सद्वेद्यास्रवविधाने भूतव्रत्यनुकम्पेति तत्र न ज्ञायते किं व्रत ? कोव्रतीति तन्निर्धारणार्थमिदमुच्यते—

## हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतं ॥ १ ॥

**हिंसादयो निर्देक्ष्यमाणलक्षणाः ॥ १ ॥** प्रमत्तयोगात् प्राणव्यपरोपण हिंसेत्येवमादिभि सूत्रै हिंसादीना लक्षण निर्देक्ष्यते ।

**विरमण विरतिः ॥ २ ॥** चारित्रमोहोपशमक्षयक्षयोपशमनिमित्तौपशमिकादिचारित्राविर्भावात् विरमण विरति ।

**व्रतमभिसंधिकृतो नियमः ॥ ३ ॥** बुद्धिपूर्वकपरिणामोभिसंधि इदमेवेत्थमेव वा कर्तव्यमित्यन्यनिवृत्ति नियम । अभिसंधिना कृत अभिसंधिकृत सर्वत्र व्रतव्यपदेशभाग्भवति ।

**हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्य इत्यपादाननिर्देश ॥ ४ ॥** हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्य इत्यपादाननिर्देशो द्रष्टव्य ।

**ध्रुवत्वाभावात्तदनुपपत्तिरिति चेन्न बुद्ध्यपाये ध्रुवत्वविवक्षोपपत्तेः ॥ ५ ॥** स्यान्मत नात्रापादानत्वमुपपद्यते कुत ध्रुवत्वाभावात् ध्रुवत्वेन हि प्रसिद्धोर्थ अपादानसंज्ञो भवति यथा ग्रामादागच्छतीति, न तथा हिंसादय परिणामा ध्रुवा कारणत्वात्, तदपायेऽपादानाप्रतीते । अथ हिंसादिपरिणत आत्मव हिंसादिव्यपदेशभागिति द्रव्यार्थादेशात् ध्रुवत्व कल्प्यते । एवमपि ततो विरतिर्नोपपद्यते नित्यत्वात्तस्मादपादानत्वमयुक्तमिति ? तन्न, किं कारण ? बुद्ध्यपाये ध्रुवत्वविवक्षोपपत्ते । यथा धर्माद्विरमतीत्यत्र य एप मनुष्य संभिन्नबुद्धि स पश्यति दुष्करो धर्म फल चास्य श्रद्धामात्रगम्यमिति स बुद्ध्या सप्राप्य निवर्तते । एव मिहापि य एप मनुष्य प्रेक्षापूर्वकारी स पश्यति य एते हिंसादय परिणामा पापहेतव पापकर्मणि च प्रवर्तमानमिहैव राजानो दडयति परत्र च बहुविध दु खमवाप्नोतीति स बुद्ध्या सप्राप्य निवर्तते ततो बुद्ध्या ध्रुवत्वविवक्षोपपत्ते अपादानत्व युक्त ।

**अहिंसायाः प्रधानत्वादादौ तद्वचनमितरेषा तत्परिपालनार्थत्वात् ॥ ६ ॥** अहिंसा सर्वेषु व्रतेषु प्रधानमतस्तद्वचनमादौ क्रियते । कुत पुन प्राधान्य ? इतरेषा तत्परिपालनार्थत्वात् । इतराणि हि सत्यादीनि व्रतानि सस्यवृत्तिपरिक्षेपवत् अहिंसापरिपालनार्थानि ।

**विरतिशब्दः प्रत्येक परिसमाप्यते ॥ ७ ॥** हिंसाया विरति, अनृताद्विरति, स्तेयाद्विरति, अब्रह्मणो विरति, परिग्रहाद्विरति । यथैव—

**विषयभेदाद्विरतिभेदे बहुत्वप्रसंगः ॥ ८ ॥** यथा गुडतिलौदनादीना पक्तव्याना भेदात् पाको

भिद्यते । द्वौ पाकौ त्रय पाका इति । एव वक्तव्यहिंसादिभेदात्त्यागस्यापि भेदोपपत्ते. विरतेर्बहुत्व प्राप्नोति इति ?

**न वा तद्विषयविरमणसामान्योपादनात् ॥ ९ ॥** नवा एष दोष किं कारण। तद्विषयविरमणसामान्योपादानात्। नात्र विषयभेदाद्भेदो विवक्षित । यथा गुडतिलौदनादीना पाक इति सामान्ये विवक्षिते एकवचन तथा विरमणसामान्यस्य विवक्षितत्वादेकवचन न्याय्यं तत एव सर्वसावद्यनिवृत्तिलक्षणसामायिकापेक्षया एक व्रत, भेदपरतन्त्रच्छेदोपस्थापनापेक्षया पचविध व्रत, अत्र कश्चिदाह—

**हिंसादिभ्यो निवृत्तिवचनमनर्थकं सवरेंतर्भावात् ॥ १० ॥** हिंसादिभ्यो निवृत्तिर्व्रतमिति आस्रवप्रकरणे विधानमिदमनर्थक कुत सवरेंतर्भावात ।

**प्रतिज्ञामात्रमिति चेन्न धर्माभ्यंतरत्वात् ॥ ११ ॥** स्यान्मत प्रतिज्ञामात्रमेतत् सवरेंतर्भाव इति ? तन्न किं कारण ? धर्माभ्यतरत्वात्। दशविधो हि धर्मो वक्ष्यते तत्र सयमे भावकायविनयेर्यापथभैक्ष्यशयनासनप्रतिष्ठापनवाक्याष्टविधविशुद्धिलक्षणे अहिंसादीनामतर्भावः ।

**सत्यादिषु च तत्प्रपंचार्थ उपन्यास इति चेन्न तत्रैवाकरणात् ॥ १२ ॥** स्यादेतत् तस्य सयमस्याय प्रपचो यथा स्यादित्यहिंसादीनां उपन्यास इति ? तन्न किं कारण ? तत्रैवाकरणात् । यदि तस्यैवाय प्रपच तत्रैव क्रियेत प्रकरणोत्कर्षकरणे प्रयोजनाभावात् ।

**न संवरो व्रतानि परिस्पंददर्शनात् ॥ १३ ॥** व्रतानि सवरव्यपदेशं नार्हंति कुत परिस्पददर्शनात्। परिस्पदो हि दृश्यते अनृतादत्तादानपरित्यागे सत्यवचनदत्तादानक्रियाप्रतीते ।

**गुप्त्यादिसंवरपरिकर्मत्वाच्च ॥ १४ ॥** गुप्त्यादिलक्षण सवरो वक्ष्यते तस्येद परिकर्म व्रतानि, कृतव्रतपरिकर्मा हि साधु सुखेन सवर करोतीति ततश्च पृथक्त्वमवसेय ॥

**रात्रिभोजनविरत्युपसख्यानमितिचेन्न भावनांतर्भावात् ॥ १५ ॥** स्यान्मतमिह रात्रिभोजनविरत्युपसख्यानं कर्त्तव्य तदपि षष्ठमणुव्रतमिति ? तन्न किंकारण ? भावनांतर्भावात् । भावनासु हि अतर्भवति रात्रिभोजनविरमण ॥

**अनिर्देशादितिचेन्न आलोकितपानभोजनवचनात् ॥ १६ ॥** अथ मतमेतत् भावनासु निर्देशाभावादयुक्तमिति ? तन्न किं कारण ? आलोकितपानभोजनवचनात् । वक्ष्यते ह्यहिंसाव्रतपरिपालनायालोकितपानभोजनभावना कार्या इति ।

**प्रदीपादिसंभवे सति रात्रावपि तत्प्रसग इतिचेन्नानेकारंभदोषात् ॥ १७ ॥** स्यान्मत यथालोकनार्थ दिवाभोजन, प्रदीपचद्रादिप्रकाशाभिव्यक्त रात्रौ भोजन कार्यमिति ? तन्न किं कारण अनेकारभदोषात् । अग्न्यादिसमारभकरणलक्षणो हि दोष स्यात् ।

**परकृतप्रदीपादिसंभवे तदभाव इतिचेन्न चंक्रमणाद्यसंभवात् ॥ १८ ॥** स्यादेतत् परकृतप्रदीपादिसभवे नारभदोष इति तन्न किं कारण चक्रमणाद्यसभवात् । ज्ञानादित्यस्वेंद्रियप्रकाशपरीक्षितमार्गेण युगमात्रपूर्वापेक्षी देशकाले पर्यट्य यति भिक्षां शुद्धामुपादीयतेत्याचारोपदेश., नचाय विधि रात्रौ भवतीति चक्रमणाद्यसभव ।

**दिवानीतस्य रात्रौ भोजनप्रसंग इतिचेन्नोक्तोत्तरत्वात् ॥ १९ ॥** स्यान्मत दिवा ग्राम पर्यट्य केनचिद्भाजनेन भोजनाद्यानीय रात्रावुपयोग प्रसक्त इति ? तन्न किं कारण उक्तोत्तरत्वात् । उक्तोत्तरमेतत् प्रदीपादिसमारभ इति, नेद सयमसाधनमानीय भोक्तव्यमिति । नापि निस्सगस्य पाणिपात्रपुटाहारिण आनयन सभवति । भाजनातरसमदे अनेकारंभदर्शनादतिदीनचरितप्रसगाद्‌चिरादेव निवृत्तिपरिणामासभवाच्च । भाजनेनानीतस्य परीक्ष्य भोजन सभवतीतिचेन्न योनिप्राभृतज्ञस्य सयोगविभागगुणदोषविचारस्य तदानीमेवोपपत्तेरानीतस्य पुनर्दोषदर्शनात् विसर्जनेऽनेकदोषोपपत्तेश्च ।

**स्फुटार्थाभिव्यक्तेश्च दिवाभोजनं युक्तं ॥ २० ॥** यथा रविप्रकाशस्य स्फुटार्थाभिव्यंजकत्वा द्भूमिदेशदातृजनचंक्रमणाद्यन्नपानादिपतितमितरच्च स्पष्टमुपलभ्यते । न तथा चंद्रादिप्रकाशानामस्फुटार्थाभिव्यंजकत्वात् । स्फुटा भूम्याद्युपलब्धिरस्तीति दिवाभोजनमेव युक्तं तदेतदविशेषचोदितं । पंचतयविषयव्रताभिधानं नित्याश्रयविवक्षाद्वयसंभवादभिधेयात्मभूतधर्मोपादानादभिधानानां व्यक्तिव्यपदेशवद्द्विध्यमनुभवतीत्याह—

## देशसर्वतोणुमहती ॥ २ ॥

**कुतश्चिद्दिश्यते इति देशः ॥ १ ॥** कुतश्चिदवयवान् दिश्यत इति देश प्रदेश । एकदेश इत्यर्थ ।

**सरत्यशेषानवयवानिति सर्वः ॥ २ ॥** सरति गच्छति अशेषानवयवानिति सर्व इत्युच्यते । देशश्च सर्वश्च देशसर्वौ देशसर्वाभ्यां देशसर्वत । विरतिरित्यनुवर्तते । हिंसादेर्देशतो विरतिरणुव्रत । सर्वतो विरतिर्महाव्रत । अणु च महच्च अणुमहती इति व्रतापेक्षया नपुंसकलिंगनिर्देश ।

आह न हिनस्मि नानृतं वदामि नादत्तमाददे नागनां स्पृशामि न परिग्रहमुपाददे इति एषोऽभिसंधि । योऽत्राऽसमर्थभावनापर कथं यथाप्रतिज्ञाताभिघातभाक् स्यात् इत्यत्रोच्यते—यस्मादविहितनेमा भावयितव्या परमार्थादित्सया ।

## तत्स्थैर्यार्थं भावनाः पंच पंच ॥ ३ ॥

**भावनाशब्दः कर्मसाधनः ॥ १ ॥** अयं भावनाशब्द कर्मसाधनो द्रष्टव्य । वीर्यान्तरायक्षयोपशमचारित्रमोहोपशमक्षयोपशमांगोपांगनामलाभापेक्षेणाऽऽत्मना भाव्यन्ते ता इति भावना ।

**पंच पंचेत्यत्र वीप्सायां शस्प्रसंग इतिचेन्न कारकाधिकारात् ॥ २ ॥** स्यादेतत् पंचपंचेत्यस्मिन् निर्देशे वीप्साविविक्षिते वीप्सायां शसा भवितव्यं पंचश इति तथा सति लघुश्च निर्देशो भवतीति ? तन्न किं कारण ? कारकाधिकारात् । कारकादिति तत्र वर्तते नचाऽत्र कारकत्वमस्ति इति शसा न भवितव्यं ॥

**क्रियाध्याहारात् कारकत्वमितिचेन्न विकल्पाधिकारात् ॥ ३ ॥** स्यादेतत् पंच पंच भावयेत् इत्येवमादि क्रियापदाध्याहारे कारकत्वोपपत्तौ शसा भवितव्यमिति तन्न किं कारण विकल्पाधिकारात् । वेत्यनुवर्तते तेनात्र शसा ( ? ) [ शस् ] न भवति । ननु लघुत्वात् शसा निर्देश कर्तव्य ? प्रतिपत्ते गौरव माभूत् इति द्वित्वमेव कृत, वाक्याध्याहारे हि क्रियमाणे प्रतिपत्तेर्गौरवं स्यात् इति । तस्य पंचविधस्य व्रतस्य स्थैर्यार्थं एकैकस्य पंच पंच भावना वेदितव्या ।

यद्येवमाद्यस्य अहिंसाव्रतस्य का इत्युच्यते—

## वाङ्मनोगुप्तीर्यादाननिक्षेपणसमित्यालोकित- पानभोजनानि पंच ॥ ४ ॥

वाग्गुप्तिर्मनोगुप्तिरीर्यासमितिरादाननिक्षेपणसमितिरालोकितपानभोजनमित्येता पंच अहिंसाव्रतस्य भावना ॥

अथ द्वितीयस्य व्रतस्य का ?

## क्रोधलोभभीरुत्वहास्यप्रत्याख्यानान्यनुवीचिभाषणं च पंच ॥ ५ ॥

क्रोधप्रत्याख्यान लोभप्रत्याख्यान भीरुत्वप्रत्याख्यान हास्यप्रत्याख्यान अनुवीचिभाषण चेत्येता पंच भावना सत्यव्रतस्य ज्ञेया । अनुवीचिभाषण अनुलोमभाषणमित्यर्थ । ननु अप्रशस्तक्रियस्यापि वचसोऽनुवीचिभाषणमापन्न ? नैष दोष पुण्याश्रवस्य प्रकृतत्वात् अप्रशस्तक्रियानुवीचिभाषणस्यानधिकार । विचार्य भाषणमनुवीचिभाषणमिति वा । इदानीं तृतीयस्य व्रतस्य भावना वक्तव्या —

## शून्यागारविमोचितावासपरोपरोधाकरणभैक्ष्यशुद्धिसद्धर्माविसंवादाः पंच ॥ ६ ॥

शून्यागारेषु गिरिगुहातरुकोटरादिष्वावासः । परकीयेषु च मोचितेष्वावासः । परेषां उपरोधाकरणं । आचारशास्त्रमार्गेण भैक्ष्यशुद्धिर्या । ममेदं तवेदमितिसद्धर्मभि —अविसंवाद इत्येताः पंच अदत्तादानविरमणव्रतस्य भावना प्रत्येतव्या । अथेदानीं ब्रह्मचर्यस्य भावना कथ्यते—

## स्त्रीरागकथाश्रवणतन्मनोहरांगनिरीक्षणपूर्वरतानुस्मरणवृष्येष्टरसस्वशरीरसंस्कारत्यागाः पंचः ॥ ७ ॥

स्त्रीरागकथाश्रवणवर्जनं तन्मनोहरांगनिरीक्षणविरहः पूर्वरतानुस्मरणपरित्यागः वृष्येष्टरसानुभवननिरासः स्वशरीरसंस्कारत्यागश्चेति चतुर्थव्रतस्य भावनाः पंच निज्ञेयाः । अतः परं पंचमव्रतस्य भावना निर्देष्टव्या —

## मनोज्ञामनोज्ञेंद्रियविषयरागद्वेषवर्जनानि पंच ॥ ८ ॥

पंचानामिंद्रियाणां स्पर्शादीनामिष्टानिष्टेषु विषयेषु उपनिपतितेषु रागद्वेषवर्जनानि पंचाऽस्य आकिंचन्यस्य व्रतस्य भावनाः प्रत्येतव्याः । किंचान्यद्यथामीषां व्रतानां दृढिमार्थं भावनाः प्रतीयते तद्विपक्षैश्चिद्रिरिति भावनोपदेशः तथा तदर्थं तद्विरोधिष्वपीत्याह—

## हिंसादिष्विहामुत्रापायावद्यदर्शनं ॥ ९ ॥

**अभ्युदयनिःश्रेयसार्थानां नाशकोपायो भयं वा ॥ १ ॥** अभ्युदयनिःश्रेयसार्थानां क्रियासाधनानां नाशकोऽनर्थः अपाय इत्युच्यते । अथवा ऐहलौकिकादिसप्तविधं भयमपाय इति कथ्यते ।

**अवद्यं गर्ह्यं ॥ २ ॥** गर्ह्यमवद्यमिति यावत् । अपायश्च अवद्यं च अपायावद्ये । अपायावद्ययोर्दर्शनं अपायावद्यदर्शनं भावयितव्यं । क्व ? इहामुत्र च । केषु ? हिंसादिषु । कथमितिचेदुच्यते--हिंसायां तावत् हिंस्रो हि नित्योद्वेजनीयः सततानुबद्धवैरश्च । इहैव च वधबंधपरिक्लेशादीन् प्रतिलभते । प्रेत्य चाशुभां गतिं गर्हितश्च भवति इति हिंसाया व्युपरमः श्रेयान् । तथा अनृतवादी अश्रद्धेयो न भवति इहैव च जिह्वाछेदादीन् प्रतिलभते । मिथ्याभ्याख्यानदुःखितेभ्यश्च बद्धवैरेभ्यो बहूनि व्यसनानि अवाप्नोति । प्रेत्य चाशुभां गतिं गर्हितश्च भवति इति अनृतवचनात् व्युपरमः श्रेयान् । तथा स्तेनः परद्रव्याहरणासक्तमतिः सर्वस्योद्वेजनीयो भवति । इहैवाभिघातवधबंधहस्तपादकर्णनाशोत्तरोष्ठछेदनसर्वस्वहरणादीन् प्रतिलभते । प्रेत्य चाशुभां गतिं गर्हितश्च भवतीति स्तेयात् व्युपरमः श्रेयान् । तथा अब्रह्मचारी मदविभ्रमोद्भ्रमितचित्तः वनगज इव वनितावंचितो विवशो वधबंधपरिक्लेशादीन् अनुभवति । मोहाभिभूतत्वाच्च कार्यानभिज्ञो न किंचिदपि कुशलमाचरति । परांगनालिंगनासंगकृतरतिश्च इहैव वैरानुबंधिनः लिंगछेदनवधबंधसर्वस्वहरणादीन् अपायान् प्राप्नोति । प्रेत्य चाऽशुभां गतिमश्नुते गर्हितश्च भवतीति । अतो विरतिरात्महिता । तथा परिग्रहवान् शकुनिरिव गृहीतमांसखंडः अन्येषां तदर्थिनां पतत्रिणां, इहैव तस्करादीनामभिभवनीयो भवति । तदर्जनरक्षणप्रक्षयकृतांश्च दोषान् बहूनवाप्नोति । नचास्य तृप्तिर्भवतींधनैरिवाग्नेः । लोभाभिभूतत्वाच्च कार्याकार्यानपेक्षो भवति प्रेत्य चाऽशुभां गतिमास्कंदति । लुब्धोयमिति गर्हितश्च भवति इति तद्विरमणं श्रेयः । एवं हिंसादिष्वपायावद्यदर्शनं भावनीयं । हिंसादिषु भावनांतरप्रतिपादनार्थमिदमुच्यते—

## दुःखमेव वा ॥ १० ॥

अत्र चोद्यते दुःखमसद्वेद्योदयकृतः परितापः हिंसादयः क्रियाविशेषाः । कथं दुःखमेव हिंसादयः ? इत्यत्रोच्यते—

**दुःखमेवेति कारणे कार्योपचारोऽन्नप्राणवत्** ॥ १ ॥ यथान्नं वै प्राणा इति प्राणकारणे अन्ने प्राणोपचार तथा दु खकारणेषु हिंसादिषु दु खमेव इत्युपचारो वेदितव्य ।

**कार्यकारणे वा धनप्राणवत्** ॥ २ ॥ अथवा यथा द्रविणकारणमन्नपान, अन्नपानकारणा. प्राणा इति प्राणकारणे द्रविणे प्राणोपचार । उक्तंच—

यदेतद्द्रविण नाम प्राणा ह्येते बहिश्चरा
स तस्य हरते प्राणान् यो यस्य हरते धन ॥ १ ॥ इति

तथा हिंसादयोऽसद्वेद्यकारण, असद्वेद्यकर्म दु खकारणमिति दु खकारणकारणेषु हिंसादिषु दु खमेवेत्युपचार ।

**तदेतद्भावनमात्मसाक्षिकं** ॥ ३ ॥ तदेतद्दु खमेवेति भावन परत्रात्मसाक्षिक अवगतव्य । तद्यथा—ममाऽप्रिय यथा वधपरिपीडन तथा सर्वसत्वानां । यथा मम मिथ्याख्यापनकटुकपरुषादीनि वचांसि शृण्वत अतितीव्रदु खमनुभूतपूर्वमुत्पद्यते एव सर्वजीवाना । यथा च ममेष्टद्रव्यवियोगे व्यसनमपूर्वमुपजायते एव सर्वभूताना । यथा च मम कांताजनपरिभवे परकृते सति मानसपीडातितीव्रा जायते तथेतरेषां । यथा च मम परिग्रहेषु अप्राप्तेषु प्राप्तविनष्टेषु कांक्षारक्षाशोकोद्भवदु ख तथा सर्वप्राणिनामिति हिंसादिभ्यो व्युपरम परम, हित ।

**स्पर्शकृत सुखमिति चेन्न वेदनाप्रतीकारत्वात्** ॥ ४ ॥ स्यादेतत् न सर्वं दु खमेव किं तर्हि स्पर्शकृत सुखमप्यस्ति वरांगनामृदुसुभगगात्रसंश्लेषणात् रतिसुखमुपजायत इति ? तन्न । किं कारण ? वेदनाप्रतीकारत्वात् । यथा त्वङ्मांसरुधिरकलुषभावोदीर्णया कण्ड्वा बाध्यमान नखमुखसकलशर्करादिभिः छिन्नगात्रो रुधिरार्द्रोनुपरतकण्डूयो दु खमपि तत्सुखमिति मन्यते । तथा मैथुनोपसेवी मोहादसुखमपि सुखमिति मन्यते । दु खयोनित्वाच्च दु खमेवेति भावनीय । यथैते क्रियाविशेषा तात्पर्येण भाव्यमाना व्रतपूर्णता जनयति तथामूनि तादर्थ्यात् ऐहिकप्रयोजनविनिवृत्तौत्सुक्येन अवहितचेतसाऽजस्रं भाव्यमानानि व्रतसपदमापादयतीत्याह—

## मैत्रीप्रमोदकारुण्यमाध्यस्थानि च सत्वगुणाधिकक्लिश्यमानाविनयेषु ॥ ११ ॥

**परेषां दुःखानुत्पत्त्यभिलाषा मैत्री** ॥ १ ॥ स्वकायवाङ्मनोभि कृतकारितानुमतविशेषणै परेषां दु खानुत्पत्तौ, अभिलाष मित्रस्य भाव कर्म वा मैत्री ।

**वदनप्रसादादिभिरभिव्यज्यमानांतर्भक्तिरागः प्रमोदः** ॥ २ ॥ वदनप्रसादेन नयनप्रह्लादेन रोमाचोद्भवेन स्तुत्यभीक्ष्णसज्ञाकीर्तनादिभिश्च अभिव्यज्यमानांतर्भक्तिराग प्रकर्षेण मोद प्रमोद इत्युच्यत ।

**दीनानुग्रहभावः कारुण्य** ॥ ३ ॥ शारीरमानसदु खाभ्यार्दिताना दीनाना प्राणिना अनुग्रहात्मक परिणाम करुणस्य भाव कर्म वा कारुण्यमिति कथ्यते ।

**रागद्वेषपूर्वकपक्षपाताभावो माध्यस्थ** ॥ ४ ॥ रागद्वेषाच्च कस्य चित् पक्षे पतन पक्षपात तदभावात् मध्ये तिष्ठतीति मध्यस्थस्य भाव कर्म वा माध्यस्थ ।

**अनादिकर्मबंधवशात् सीदतीति सत्वाः** ॥ ५ ॥ अनादिनाष्टविधकर्मसतानेन तीव्रदु खयोनिषु चतसृषु गतिषु सीदतीति सत्वा ।

**सम्यग्ज्ञानादिभिः प्रकृष्टा गुणाधिकाः** ॥६॥ सम्यग्ज्ञानदर्शनादयो गुणास्तै प्रकृष्टा गुणाधिका इति विज्ञायते ।

**असद्वेद्योदयापादितक्लेशाः क्लिश्यमानाः ॥ ७ ॥** असद्वेद्योदयापादितशारीरमानसदुःखसतापात् क्लिश्यत इति क्लिश्यमाना ।

**तत्त्वार्थश्रवणग्रहणाभ्याससंपादितगुणा अविनेयाः ॥ ८ ॥** तत्त्वार्थोपदेशश्रवणग्रहणाभ्या विनीयते पात्रीक्रियत इति विनेया । न विनेया अविनेया । एतेषु सत्वादिषु मैत्र्यादीनि यथाक्रम भावयितव्यानि । तद्यथा क्षमयामि सर्वजीवान्, क्षाम्यामि सर्वजीवेभ्य , प्रीतिर्मे सर्वसत्वे , वैर मे न केनचित् इति मैत्री सत्वेषु भावयितव्या । सम्यग्ज्ञानचारित्राधिकेषु वदनास्तुतिवैयावृत्त्यकरणादिभि प्रमोदो भावनीय । मोहाभिभूतेषु मतिश्रुताज्ञानविभगपरिगतेषु विषयतर्षाग्निना दह्यमानमानसेषु हिताहितविपरीतप्रवृत्तिषु विविधदुःखाभिभूतेषु दीनकृपणानाथबालवृद्धेषु क्लिश्यमानेषु कारुण्य भाव्य । अविनेयेषु ग्रहणधारणविज्ञानोहापोहवियुक्तेषु महामोहाभिभूतेषु दुष्टव्युद्ग्राहितेषु च माध्यस्थ भावनीय। न हि तत्र वक्तुर्हितोपदेशस्य फलवत्त्व भवतीत्येव भावयत परिपूर्णानि अहिंसादीनि व्रतानि भवति । किमेतावानेव अभिनवाकुशलकर्मादाननिवृत्तिपरेण महाव्रतधारिणा क्रियाकलाप प्रणिधातव्यो नेत्याह—

## जगत्कायस्वभावौ वा संवेगवैराग्यार्थं ॥ १२ ॥

**जगत्कायशब्दावुक्तार्थौ ॥ १ ॥** जगच्छब्द. कायशब्दश्च उक्तार्थौ दृष्टव्यौ ।

**स्वेनात्मना भवनं स्वभावः ॥ २ ॥** स्वेनात्मना असाधारणेन धर्मेण भवन स्वभाव इत्युच्यते जगच्च कायश्च जगत्कायौ, जगत्काययो स्वभावौ जगत्कायस्वभावौ

**संसाराद् भीरुता संवेगः ॥ ३ ॥** ससाराद् विविधवेदनाकराद् भीरुता सवेजन सवेग इत्युच्यते।

**रागकारणभावात् विषयेभ्यो विरंजन विरागः ॥ ४ ॥** चारित्रमोहोदयाभावे तस्योपशमात् क्षयात् क्षयोपशमाद्वा शब्दादिभ्यो विरजन विराग इति व्यवसीयते। विरागस्य भाव कर्म वा वैराग्य। सवेगश्च वैराग्य च सवेगवैराग्ये सवेगवैराग्याभ्या सवेगवैराग्यार्थं जगत्कायस्वभावौ भावयितव्यौ । तद्यथा—जगत्स्वभावस्तावत् आदिमदनादिमत्परिणामद्रव्यसमुदायरूप तालवृक्षसस्थान अनादिनिधन । अत्र जीवा चतसृषु गतिषु नानाविधदुःख भोज भोज परिभ्रमति नचात्र किंचिन्नियतमस्ति । जलबुद्बुदोपम जीवित विद्युन्मेघादिविकारचत् अफला भोगसंपद इत्येवमादि । कायस्वभावश्च अनित्यता दुःखहेतुत्व नि सारता अशुचित्वमित्येवमादि । एव भावयत सवेग सजायते । तत आरभपरिग्रहदोषदर्शनाद्विरति धर्मे बहुमानो धार्मिकेषु च धर्मश्रवणे धार्मिकदर्शने च मन प्रसाद । उत्तरोत्तरगुणप्रतिपत्तौ च श्रद्धेति वैराग्य च भवति शरीरभोगोपभोगससारनिर्वेदलक्षण । एव भावनोपेत सम्यग्व्रतानि परिपालयति । ता एता सर्वा व्रतभावना सर्वेषु पदार्थेषु सर्वथा नित्येषु सत्सु निष्क्रियाभावात् नोपपद्यते, निष्क्रियाभ्युपगमे च नित्यताप्रतिज्ञाहानि । सर्वथैवानित्येषु चाऽनेकक्षणवृत्त्येकवस्त्वभावात् अनेकार्थविषयैकविज्ञानाभावाच्च स्मरणानुपपत्तेर्भावनाभाव , अनेकान्तवादिन पुन द्रव्यार्थिकनयादेशात् नित्यतामवलम्बमानस्य उभयनिमित्तवशात् उत्पत्तिनिरोधौ प्रत्यभिमुख्यमादधानस्य स्मरणोपपत्ते विक्रियोपपत्तेश्च भावनासिद्धि । अत्राह उक्त भवता हिंसादिनिवृत्तिर्व्रतमिति तत्र न जानीम के हिंसादय क्रियाविशेषा इति ?

अत्रोच्यते युगपदशक्यत्वात् तल्लक्षणनिर्देशस्य क्रमप्रसगे यासावादौ चोदिता सैव तावत्—

## प्रमत्तयोगात्प्राणव्यपरोपणं हिंसा ॥ १३ ॥

**अनवगृहीतप्रचारविशेषः प्रमत्तः ॥ १ ॥** इंद्रियाणा प्रचारविशेष अनवधार्य प्रवर्तते य स प्रमत्त ।

**अभ्यतरीकृतेवार्थो वा ॥ २ ॥** अथवा अभ्यतरीकृतेवार्थ प्रमत्त इत्युच्यते। क. पुनरिवार्थ ? यथा सुराप प्रवृद्धमदत्वात् कार्याकार्यवाच्यावाच्यानभिज्ञस्तथा जीवस्थानयोन्याश्रयविशेषानविद्वान् कषायोदयाविष्ट हिंसाकारणेषु स्थित. अहिंसाया सामान्येन यतत इति प्रमत्त. ।

**पंचदशप्रमादपरिणतो वा ॥ ३ ॥** अथवा चतसृभि विकथाभि कषायचतुष्टयेन पंचभिरिंद्रियै निद्राप्रणयाभ्या च परिणतो य स प्रमत्त इति कथ्यते ।

**योगशब्दः संबधपर्यायवचनः ॥ ४ ॥** अथ योगशब्द सबधपर्यायवचनो दृष्टव्य । योजन योग सबध इति यावत् । यद्येव भावप्रधानो निर्देश कर्तव्य प्रमत्तत्वयोगाद् इति, द्रव्यप्रधाने हि सति सबधाप्रतीते ? नैष दोष आत्मपरिणाम एव कर्तृत्वेन निर्दिश्यते प्रमाद्यतिस्म इति प्रमत्त परिणाम । तेन ग [ प्रमत्तयोगादिति ।

**कायवाङ्मनस्कर्म वा ॥ ५ ॥** अथवा कायवाङ्मनस्कर्मयोग इत्युच्यते । प्रमत्तस्य योग प्रमत्तयोग तस्मात्प्रमत्तयोगात् इति हेतुनिर्देश । प्रमत्तयोगाद्धेतो प्राणव्यपरोपण हिंसेति ।

**व्यपरोपणं वियोगकरण ॥६॥** वियोगकरण व्यपरोपणमित्युच्यते । प्राणा उक्ता तेषा व्यपरोपण । प्राणव्यपरोपण

**प्राणग्रहण तत्पूर्वकत्वात् प्राणिव्यपरोपणस्य ॥ ७ ॥** प्राणग्रहण क्रियते तत्पूर्वकत्वात् प्राणिव्यपरोपणस्य । प्राणवियोगपूर्वको हि प्राणिवियोग , स्वत प्राणिनो निरवयवत्वाद्वियोगाभावात् ।

**अन्यत्वादधर्माभावः इति चेन्न दुःखोत्पादकत्वात् ॥ ८ ॥** स्यान्मत प्राणेभ्योऽन्य आत्मा अत प्राणवियोगेन आत्मन किंचिद्भवतीत्यधर्माभाव स्यात् इति ? तन्न किं कारण । तद्दुःखोत्पादकत्वात् । प्राणव्यपरोपणे हि सति तत्सबधिनो जीवस्य दुःख समुत्पद्यत इत्यधर्मसिद्धि

**शरीरिणोऽन्यत्वात् दुःखाभाव इति चेन्न पुत्रकलत्रादिवियोगे तापदर्शनात् ॥ ९ ॥** स्यादेतदन्य शरीरी प्राणेभ्य अतस्तत्पूर्वकदुःखमस्य न युज्यते इति ? तन्न किं कारण ? पुत्रकलत्रादिवियोगे तापदर्शनात् अन्यत्वेऽपि सति पुत्रकलत्रादिवियोगे तापो दृश्यते ।

**बध प्रत्येकत्वाच्च ॥ १० ॥** यद्यपि शरीरिशरीरयो लक्षणभेदान्नानात्व तथापि बध प्रत्येकत्वात् तद्वियोगपूर्वकदुःखोपपत्तेरधर्माभाव इत्यनुपालभ ।

**एकांतवादिना तदनुपपत्तिर्बंधाभावात् ॥ ११ ॥** ये नि क्रियत्वनित्यत्वशुद्धत्वसर्वगतत्वादिभि एकातेन आत्मान कल्पयति तेषा शरीरेण सह बधाभावात् दुःखादीनामनुपपत्तिर्भवति ।

**उभयविशेषणोपादानमन्यतराभावे हिंसाभावज्ञापनार्थं ॥ १२ ॥** प्रमत्तयोगात्प्राणव्यपरोपणमित्येतदुभय विशेषणमुपादीयते । किमर्थं ? अन्यतराभावे हिंसाभावज्ञापनार्थं यदा प्रमत्तयोगो नास्ति केवल प्राणव्यपरोपणमेव न तदा हिंसा । उक्तच—"वियोजयति चासुभिर्नच वधेन सयुज्यते "

उच्चालदम्मि पादे इरियासमिदस्स णिग्गमट्ठाणे
आवादेज्ज कुलिंगो मरेज्ज तज्जोगमासेज्ज ॥ १ ॥
णहि तस्स तण्णिमित्तो बधो सुहुमावि देसिदो समये ।
मुच्छा परिग्गहोत्तिय अज्झप्प पमाणदो भणिदो ॥ २ ॥ इति ।

ननु च प्राणव्यपरोपणाभावेपि प्रमत्तयोगमात्रादेव हिंसेष्यते । उक्त च—

मरदु व जियदु व जीवो अयदाचारस्स णिच्छिदा हिंसा ।
पयदस्स णत्थि बधो हिंसामेत्तेण समिदस्स ॥ १ ॥ इति ।

नैष दोष तत्रापि प्राणव्यपरोपणमस्ति भावलक्षण । तथा चोक्त—

स्वयमेवात्मनात्मान हिनस्त्यात्मा प्रमादवान् ।
पूर्वं प्राण्यतराणा तु पश्चात्स्याद्वा न वा वध ॥ १ ॥

इत्येव कृत्वा वैरुपालभ क्रियते—

" जले जंतु स्थले जतुराकाशे जतुरेव च ।
जंतुमालाकुले लोके कथ भिक्षुरहिंसक ॥ इति ।"

सोऽत्रावकाश न लभते । भिक्षोर्ज्ञानध्यानपरायणस्य प्रमत्तयोगाभावात् । किंच स्थूलसूक्ष्मजीवाभ्युपगमात् ।

सूक्ष्मा न प्रतिपीड्यते प्राणिन स्थूलमूर्तय ।
ये शक्यास्ते विवर्ज्यते का हिंसा सयतात्मन ॥ १ ॥

अत्र कश्चिदाह—साधूक्त भवता प्राणव्यपरोपण हिंसेति । प्राणानां परस्परतो वियोगो हिंसा न कश्चित् प्राणी विद्यते इति । अत उत्तर पठति ।

**प्राण्यभावे प्राणाभावः कर्तुरभावात् ॥ १३ ॥** यदि प्राणी न स्यात् प्राणानामभाव । कुत ? कर्तुरभावात् । इह कुशलाकुशलात्मककर्मपूर्वका प्राणा तच्च कर्मासति कर्तरि न भवतीति प्राणाभाव स्यात् अत प्राणसद्भाव एव प्राणिनोस्तित्व गमयति । सदशादिकरणसद्भावेऽयस्कारससिद्धिवत् । किंचासति प्राणिनि रूपणानुभवनोपलभननिमित्तग्रहणसस्करणभिन्नलक्षणा रूपवेदनासज्ञाविज्ञानसस्कारा विविक्तशक्तित्वात् परस्परोपकारप्रतिनिवृत्तौत्सुक्या क्षणिकत्वात् स्वप्रयोजन प्रत्यप्यसमर्था. हिंसानिवृत्तिहेतवो न भवंति । स्मृत्यभिसधिक्रियाचिंताना व्यधिकरणवदेकाधिकरणेप्यनुपपत्ते । एकेनापि निकले प्राणातिपातान भ्युपगमात् । अपि च उत्पत्त्यनतर विनाशाभ्युपगमे निरोधस्याहेतुकत्वात् प्राणातिपातलक्षणस्य विनाशस्य हिंसको हेतुर्न भवति इति तत्फलानभिसबध । अथाहेतोरपि तत्फलमिष्यते । अहिंसको नाम न कश्चिदस्ति भिन्नसतानोत्पत्तिहेतुर्हिंसक इति चेन्नाऽसत उत्पत्तेर्हेत्वभावात् । अथासत उत्पत्तेर्हेतुरिष्यते सतो विनाशे हेतु स्यादिति को विरोध । आह—अभिहितलक्षणापहिंसानंतरोद्दिष्ट अनृत किं-लक्षण मित्यत्रोच्यते—

## असदविधानमनृतं ॥ १४ ॥

**असदिति नञासत्प्रतिषेधाच्छून्यार्थसप्रत्ययप्रसंगः ॥ १ ॥** न सदसदिति नञासत्प्रतिषेध क्रियते तेन शून्यार्थसप्रत्यय प्रसज्यते तेन नास्ति न किंचिदित्येवमाद्येवानृत स्यात् यदसत सदिति ब्रूयात् न तदनृत स्यात् ।

**न वा सच्छब्दस्य प्रशंसार्थवाचित्वात् ॥ २ ॥** न वैष दोष किं कारण सच्छब्दस्य प्रशसार्थवाचित्वात् । न सदसत् अप्रशस्तमिति यावत् ।

**अभिधानशब्द करणादिसाधन ॥ ३ ॥** अयमभिधानशब्द करणादिषु साधनेषु द्रष्टव्य । अभिधीयते अनेन अभिधा वा अभिधानमिति । असतोर्थस्याभिधान असदभिधान ।

**ऋत सत्यार्थे ॥ ४ ॥** ऋतमित्येतत् पद सत्यार्थे द्रष्टव्य सत्सु साधु सत्य प्रत्यवायकारणानिष्पादकत्वात् । न ऋतमनृत ।

**मिथ्यानृतमित्यस्तु लघुत्वात् इति चेन्न विपरीतार्थमात्रसप्रत्ययप्रसंगात् ॥ ५ ॥** स्यान्मत मिथ्यानृतमित्येतत् सूत्रमस्तु । कुत ? लघुत्वात् । सूत्र हि नाम यल्लघु गमक च तत् कर्तव्य मिति ? तन्न । किं कारण ? विपरीतार्थमात्रसप्रत्ययप्रसगात् । अय हि मिथ्याशब्द विपरीतार्थे वर्तते । तेन भूतनिह्नवे अभूतोद्भावने च यदभिधान तदेवानृत स्यात् नास्ति आत्मा नास्ति परलोक इति श्यामाकतडुलमात्र आत्मा अगुष्ठपर्वमात्र सर्वगतो नि ष्क्रिय इति च ।

यत्तु विद्यमानार्थविषय परप्राणिपीडाकरण तन्न स्यात् । असदिति पुनरुच्यमाने अप्रशस्तार्थ यत् तत्सर्वमनृतमुक्त भवति । तेन विपरीतार्थस्य प्राणिपीडाकरस्य चानृतत्वमुपपन्न भवति । अथाऽनृतानतर उद्दिष्ट यत्स्तेय तस्य किं लक्षण ? इत्यत आह—

## अदत्तादान स्तेयं ॥ १५ ॥

आदान ग्रहण अदत्तस्याऽऽदान अदत्तादान स्तेयमित्युच्यते ॥

**सर्वमदत्तमाददानस्याकुशलकल्पनायां कर्मादेयमात्मसात्कुर्वतः स्तेयप्रसगः ॥ १ ॥** यद्यविशेषण अदत्तस्य आदान स्तेयमित्युच्यते कर्माष्टविध अन्येनाऽदत्तमाददानस्य स्तेय प्राप्नोतीति । एते न नोकर्मापि चोदित भवति ।

**न दानादानयोर्यत्रैव प्रवृत्तिनिवृत्ती तत्रैवोपपत्ते ॥ २ ॥** नैष दोष येषु मणिमुक्ताहिरण्यादिषु दानादानयो प्रवृत्तिनिवृत्तिसभव तेष्वेव स्तेयस्योपपत्ते, तेन कर्मणि नास्ति प्रसग ।

**इच्छामात्रमिति चेन्न अदत्तादानग्रहणात् ॥ ३ ॥** स्यादेतत् इच्छामात्रमिद यस्य दानादानस भवस्तस्य ग्रहणमिति ? तन्न किं कारण ? अदत्तादानग्रहणात्। यस्य हि दानादाने सभवत तस्य ग्रहणमकुशल यदि हि कर्मादानमपि स्तेय स्यात् अदत्तादानमित्येतत् विशेषणमयुक्त स्यात्, प्रसक्तस्यादत्तमिति प्रतिषेधोपपत्ते ।

**कर्मापि हि किमर्थं कस्मैचिन्न दीयत इति चेन्न हस्तादिकरणग्रहणविसर्गासभवात् सूक्ष्मत्वात् ॥४॥** अथ मतमेतत् किमर्थं कर्म न कस्मै चिदीयत इति गृह्यते ननु लोकवाद प्रसिद्ध आरामविहारादिपादपाना फल अन्यस्मै जलसेकेन दीयते इति ? तन्न। किं कारण ? हस्तादिकरणविसर्गासभवात्। यथा वस्त्रपात्रादि हस्तादिकरणैरादीयते अन्यस्मै च दीयते न तथा कर्म हस्तादिभिरादीयते अन्यस्मै च दीयते। कुत ? सूक्ष्मत्वात्। सूक्ष्म हि कर्म हस्तादिग्रहणविसर्गयोग्य न भवति। कथ तर्हि तदादीयते ?

**शरीराहारविषयपरिणामतस्तद्बधः ॥ ५ ॥** स्वपरकीयेषु शरीरेषु आहारेषु शब्दादिविषयेषु च रागद्वेषरूपाप्रीत्यादिविकल्पात् परिणामात् तस्य कर्मबधो भवति तत स्वपरिणामवशीकृतत्वाच्च नान्यस्मै दीयते। यद्येव नित्यकर्मबध प्राप्नोति ? नैषदोष ।

**आस्रवनिरोधे सति संवृतत्वाद्बधाभावः ॥ ६ ॥** आस्रवनिरोधो वक्ष्यते गुप्त्यादिलक्षण तस्मिन् सति सवृतत्वात् नास्ति बध इति नित्यबधाभाव । अतो यत्रैवैहलौकिकोपकारविशेषादानाभिप्राय स्तत्रैव अदत्तादानप्रक्लृप्ति ।

**शब्दादिविषयरथ्याद्वाराद्यदत्तादानात्स्तेयप्रसग इतिचेन्न अप्रमत्तत्वात् ॥ ७ ॥** स्यादेतत् शब्दादिविषयरथ्याद्वारादीन्यदत्तानि आददानस्य भिक्षो स्तेय प्राप्नोतीति ? तन्न किं कारण ? अप्रमत्तत्वात्। यत्नवतो ह्यप्रमत्तस्य ज्ञानिन शास्त्रदृष्ट्या शब्दादिविषयरथ्याद्वाराद्यादानेपि निरतस्यास्तेयप्रसिद्धे, सामान्यतो मुक्तत्वात् दत्तमेव वा तत्सर्व। तथा हि अय पिहितद्वारादीन् न प्रविशति।

**वंदनादिनिमित्तधर्मादानात् स्तेयप्रसग इतिचेन्न उक्तत्वात् ॥ ८ ॥** स्यान्मत वदनाक्रिया सबधेन धर्मोपचये सति प्रशस्त स्तेय प्राप्नोति ? तन्न किं कारण। उक्तत्वात्। उक्तमेतत् दानादानसभवो यत्र तत्र स्तेयप्रसग इति।

**प्रमत्ताधिकाराद्वान्यत्राऽप्रसंगः ॥ ९ ॥** प्रमत्तयोगात् प्राणव्यपरोपण हिंसेत्यत्र प्रमत्तयोगग्रहण अनुवर्तते। तेन प्रमत्तस्य स्तेय वदनादिषु योगत्रयेणाऽऽभिमुख्यादात्मन प्रमत्तत्व नास्ति । अत सत्यपि धर्मादानेऽस्य न स्तेय परिशेषात् प्रमत्तस्य सत्यसति च परकीयद्रव्यादाने त्रिधापि तदादानाद्यर्थोद्यतत्वात् स्तेय तदपि प्राणिपीडाकारणत्वात् पापास्रव इत्युच्यते । अत्राह व्याख्यात हिंसादित्रयलक्षण । अथाऽब्रह्म किंलक्षणमित्यत्रोच्यते—

## मैथुनमब्रह्म ॥ १६ ॥

मैथुनमिति । किमिद ? मिथुनस्य भावो मैथुन ।

**मिथुनस्य भाव इति चेन्न द्रव्यद्वयभवनमात्रप्रसंगात्** ॥ १ ॥ यदि मिथुनस्य भावो मैथुनमित्युच्यते नैनद्युक्त । कुत ? द्रव्यद्वयभवनमात्रप्रसगात् । एव सति औदासीन्यावस्थितनिवृत्तरागस्त्रीपुसभवनेपि मैथुनप्रसग ।

**मिथुनस्य कर्मेति चेन्न पुरुषद्वयनिर्वर्त्यक्रियाविशेषप्रसगात्** ॥ २ ॥ यदि मिथुनस्य कर्म मैथुनमित्युच्यते नैतदुपपन्न कुत ? पुरुषद्वयनिर्वर्त्यक्रियाविशेषप्रसगात् द्वयो पुरुषयो निर्वर्त्य यद्भारोद्वहनादि कर्म तत्रापि प्रसग स्यात् ।

**स्त्रीपुंसयोः कर्म इति चेन्न पच्यादिक्रियाप्रसगात्** ॥ ३ ॥ स्यान्मत न सर्वमिथुनमिह परिगृह्यते अनिष्टप्रसगात् तत स्त्रीपुसमिथुनविषयकर्मसग्रह इति ? तन्न । किं कारण ? पच्यादिक्रियाप्रसगात् । ततश्च स्त्रीप्रव्रजितयोर्नमस्कारायासेवने मैथुनप्रसगदोष । अत उत्तर पठति—

**स्त्रीपुसयोः परस्परगात्रोपश्लेषे रागपरिणामो मैथुनं** ॥ ४ ॥ चारित्रमोहोदये सति स्त्रीपुसयो परस्परगात्रोपश्लेषे सति सुखमुपलिप्समानयो रागपरिणामो य स मैथुनव्यपदेशभाक् । ननु नाय शब्दार्थ सत्यमेवमेतत् तथापि प्रसिद्धिवशात् अर्थाध्यवसाय इतीष्टार्थो गृह्यते ।

**नवैकस्मिन्नप्रसगात्** ॥ ५ ॥ नवैतद्युक्त कुत ? एकस्मिन्नप्रसगात् । हस्तपादपुद्गलसघट्टनादिभिरब्रह्म सेवमाने एकस्मिन्नपि मैथुनमिष्यते, तन्न सिध्यति ।

**उपचारादिति चेन्न मुख्यफलाभावप्रसंगात्** ॥ ६ ॥ स्यादेतत् यथा स्त्रीपुसयो चारित्रमोहोदये वेदनापीडितयो कर्म मैथुन तथैकस्यापि चारित्रमोहोदयोद्रिक्तरागस्य हस्तादिसघट्टनेऽस्ति मैथुनमिति ? तन्न मुख्यफलाभावप्रसगात् । यन्मुख्य मैथुने कर्मास्रवफल तदत्र न प्रसज्येत । मुख्यसिंहगतक्रौर्यशौर्यादिमाणवकेऽप्रवृत्तिवत् । दृश्यते च मुख्यमतो नोपचारः ।

**नवास्य स्पर्शवद्द्रव्यसयोगस्याविशेषाभिधानात्** ॥ ७ ॥ यथा स्त्रीपुसयोरन्योन्यं सयोगे परस्परकृतस्पर्शाभिमानात् सुख । तथैकस्यापि हस्तादिसघट्टनात् स्पर्शाभिमानस्तुल्यस्तस्मान्मुख्य एव तत्रापि मैथुनशब्दलाभ रागद्वेषमोहाविष्टत्वात् । किंच—

**एकस्य द्वितीयोपपत्तौ मैथुनत्वसिद्धेः** ॥ ८ ॥ यथैकस्यापि पिशाचवशीकृतत्वात् सद्वितीयत्व तथैकस्य चारित्रमोहोदयाविष्कृतकामपिशाचवशीकृतत्वात् सद्वितीयत्वसिद्धे मैथुनव्यवहारसिद्धि ।

**प्रसिद्धवशाद्वार्थविशेषप्रतीतेः पूर्वोक्तानां चाऽनवद्यत्व** ॥ ९ ॥ अथ मैथुनशब्द लोके शास्त्रे च स्त्रीपुरुषसयोगजरतिविशेषे प्रसिद्ध । लोके तावद्गोपालादयोपि स्त्रीपुसरतिकर्म मैथुनमित्याचक्षते । शास्त्रेपि अश्ववृषभयोर्मैथुनेच्छाया इत्येवमादौ तदेव कर्माख्यायते तत प्रसिद्धिवशात् अर्थविशेषप्रतीते पूर्वोक्ताना च पक्षाणा अनवद्यत्वमवसेय । तद्यथा—यत्तावदुक्त मिथुनस्य भाव इति चेन्न द्रव्यद्वयभवनमात्रप्रसगादिति तदसत् अभ्यतरपरिणामाभावे बाह्यहेतोरफलत्वात् यथा ककडुकचणकादीना अभ्यतरपाककारणशक्त्यभावात् बाह्योदकाग्निसबन्धस्याफलत्व तथाभ्यतरचारित्रमोहोदयापादितस्त्रैणपौंस्नात्मकरतिपरिणामाभावात् बाह्यद्रव्यद्वयभवनेपि न मैथुन । यच्चोक्त—मिथुनस्य कर्मेति चेन्न पुरुषद्वयनिर्वर्त्यक्रियाविशेषप्रसगात् इति तच्च वार्त, कुत कदाचित् पुरुषद्वयेपि दर्शनात् । चारित्रमोहोदयाविष्टाना हि पुरुषाणा तादृशेषु पुरुषेषु मैथुन दृश्यते । उक्तच—

पुरुषा पुरुषेष्वेव यदानिष्टप्रयोजना ।
भयारूढस्य तत्सर्वं रागस्यैव विचेष्टित ॥ १ ॥

इति । यदप्युक्त स्त्रीपुसयो कर्मेति चेन्न पच्यादिक्रियाप्रसगात् इति तदसाम्प्रत–कुत तद्विषयस्यैव ग्रहणात् तयोरेव यत्कर्म तदिह गृह्यते पच्यादिकर्म पुन अन्येनापि क्रियते । अपि च प्रमत्तयोगादित्यनुवर्तते

तत चारित्रमोहोदयात् प्रमत्तस्य मिथुनस्य कर्म मैथुनमित्युक्त नमस्काराद्युपयुक्तस्य चाऽप्रमत्तत्वात् चारित्रमोहोदयाभावात् सत्यपि वेदनादिमिथुनकर्मणि न मैथुन ।

**अहिंसादिगुणबृंहणाद्ब्रह्म ॥ १० ॥** अहिंसादयो गुणा यस्मिन् परिपाल्यमाने बृहति वृद्धिमुपयाति तद्ब्रह्मेत्युच्यते । न ब्रह्म अब्रह्म किं तन्मैथुन । तत्र हिंसादयो दोषा पुष्यति । य स्मान्मैथुनसेवनप्रवण स्थास्नूश्चरिष्णून् प्राणिनो हिनस्ति मृषावादमाचष्टे अदत्तमादत्त सचेतनमितर च परिग्रह गृह्णाति । अत्राह उक्त भवता हिंसादिचतुष्टयस्य विशेषलक्षणमिदानीमिदमुच्यता परिग्रहस्य किं लक्षणमित्यत्रोच्यते ।

## मूर्च्छा परिग्रहः ॥ १७ ॥

मूर्च्छेत्युच्यते । केय मूर्च्छा ?

**बाह्याभ्यन्तरोपधिसंरक्षणादिव्यापृतिर्मूर्च्छा ॥ १ ॥** बाह्यानां गोमहिषमणिमुक्तादीना चेतनाचेतनानां अभ्यन्तराणा च रागादीनामुपधीना संरक्षणार्जनसंस्कारादिलक्षणव्यापृति मूर्च्छेति कथ्यते ।

**वातपित्तश्लेष्मविकारप्रसंग इतिचेन्न विशेषितत्वात् ॥ २ ॥** स्यान्मत वातपित्तश्लेष्मणामन्यतमस्य दोषस्य प्रकोपात् उपजायमानो विकारो मूर्च्छेति ? तन्न किं कारण विशेषितत्वात् । मूर्च्छेरिय मोहसामान्ये वर्तमान बाह्याभ्यन्तरोपधिसंरक्षणादिविषय परिगृहीत इति विशेषितत्वात् इष्टार्थसंप्रत्ययो भवति । सामान्यचोदनाश्च विशेषेष्ववतिष्ठत इति ।

**बाह्यस्याप्रसंग इति चेन्नाध्यात्मिकप्रधानत्वात् ॥ ३ ॥** स्यादेतत् मूर्च्छेत्यनेन आध्यात्मिक परिग्रह परिगृह्यते । तेन बाह्यस्य परिग्रहत्व न प्राप्नोतीति ? तन्न किं कारण ? आध्यात्मिकप्रधानत्वात् ममेति संकल्प आध्यात्मिक परिग्रह स प्रधानभूत इति तस्योपादान क्रियते तस्मिन् संगृहीते तत्कारणस्याप्यनुरोधेण प्रतीते । अथ यदा बाह्य प्राधान्येन इष्यते कथ तस्य संग्रह मूर्च्छाकारणत्वात् बाह्यस्य मूर्च्छाव्यपदेश । यथान्नं वै प्राणा इति प्राणकारणे अन्ने प्राणोपचार । तथा मूर्च्छाकारणत्वात् बाह्यपरिग्रहो मूर्च्छेति व्यवह्रियते ।

**ज्ञानदर्शनचारित्रेषु संगः परिग्रहः इति चेन्न प्रमत्तयोगाधिकारात् ॥ ४ ॥** स्यान्मत यथाध्यात्मिकेऽपि रागादावात्मपरिणामे संग परिग्रह इत्युच्यते । ज्ञानदर्शनचारित्रेष्वपि संग परिग्रह प्राप्नोतीति ? तन्न किं कारण ? प्रमत्तयोगाधिकारात् । तत ज्ञानदर्शनचारित्रवतो प्रमत्तस्य मोहाभावात् न मूर्च्छास्ति इति नि परिग्रहत्व सिद्ध । किंच तेषां ज्ञानादीना अहेयत्वात् आत्मस्वभावानतिवृत्तेरपरिग्रहत्व । रागादय पुन कर्मोदयतन्त्रा इत्यनात्मस्वभावत्वाद्धेया ततस्तेषु संकल्प परिग्रह इति युज्यते ।

**तन्मूलाः सर्वदोषानुषंगाः ॥ ५ ॥** स परिग्रहो मूलमेषां ते तन्मूला । के पुनस्ते सर्वदोषानुषंगा ममेदमिति हि सति संकल्पे रक्षणादय संजायते । तत्र च हिंसावश्य भाविनी तदर्थमनृत जल्पति चौर्य चाचरति मैथुने च कर्मणि प्रतियतते तत्प्रभवा नरकादिषु दु खप्रकारा । इहापि अनुपरतव्यसनमहार्णवावगाहन । एवममूभिर्भावनाभि निराकृतचेतसोपायावद्यदर्शिनो विरक्तस्य सवससारिक्रियाकलापा दु खबुद्ध्या निरुत्सुकीकृतविषयकुतूहलस्य मैत्रीप्रमोदकारुण्यमाध्यस्थ्यप्रणिधानापादितसौहार्दस्य जन्ममरणपरिखेदितमतेरवलोकितशरीरस्वभावस्य मोक्ष प्रत्यवहितस्य यस्य सति व्रतानि स भवति—

## नि शल्यो व्रती ॥ १८ ॥

**अनेकधा प्राणिगणशरणाच्छल्य ॥ १ ॥** विविधवेदनाशलाकाभि प्राणिगण शृणाति हिनस्ति इति शल्य ।

**आबाधकत्वादुपचारसिद्धिः ॥ २ ॥** यथा शरीरानुप्रवेशादिप्रहरण शरीरिणो बाधाकर शल्य तथा कर्मोदयविकारोपि शारीरमानसबाधाहेतुत्वात् शल्यमिव शल्यमित्युपचर्यते ।

**तच्चित्रविधं मायानिदानमिथ्यादर्शनभेदात् ॥ ३ ॥** तदेतच्छल्यं त्रिविधं वेदितव्यं कुतः मायानिदानमिथ्यादर्शनभेदात्, माया निकृतिर्वञ्चनेत्यनर्थांतरं । विषयभोगाकांक्षा निदानं, मिथ्यादर्शनमतत्त्वश्रद्धानं । एतस्मात्त्रिविधाच्छल्यान्निःक्रांतो निःशल्यो व्रतीत्युच्यते । अत्र कश्चिदाह—

**विरोधाद्विशेषणानुपपत्तिः ॥ ४ ॥** निःशल्यत्वं व्रतित्वमित्येतदुभयं विरुद्धं ततो न निःशल्यत्वाद्व्रती भवितुमर्हति न हि दंडसंबंधाच्छत्री स्यात्, तस्मात् व्रताभिसंबंधादेव व्रतीति वक्तव्यं । शल्याभावाच्च निःशल्य इति ।

**आनर्थक्यं वाऽन्यतरेण गतार्थत्वात् ॥ ५ ॥** यदि व्रतीत्यापि शल्यस्तस्मात् व्रतीत्येतावद्वाच्यं, न निःशल्य इति । यदि च निःशल्यत्वात् व्रती तस्मान्निःशल्य इत्येतावद्वाच्यं ?

**न व्रतीति विकल्पः इति चेन्न फलविशेषाभावात् ॥ ६ ॥** स्यादेतत् विकल्पोऽत्र गृह्यते निःशल्यो वा व्रती वा इति ततो न विशेषणविशेष्यसंबंधाभावो दोष इति ? तन्न किं कारणं ? फलविशेषाभावात् फलविशेषपरता हि लोके विकल्पो दृष्टः । यथा देवदत्तं घृतेन वा सूपेन वा दध्ना वा भोजयेत् इति । न तथेह फलविशेषोऽस्ति निःशल्यो वा व्रती वेति उभयविशेषणविशिष्टस्यैकस्येष्टत्वात् ।

**नवांगांगिभावस्य विवक्षितत्वात् ॥ ७ ॥** न वा एष दोषः किं कारणं ? अगांगिभावस्य विवक्षितत्वात् न हिंसाद्युपरतिमात्रव्रतसंबंधात् व्रती भवति अंतरेण शल्याभावं, सति शल्यापगमे व्रतसंबंधात् व्रतीति विवक्षितो यथा बहुक्षीरघृतो गोमानिति व्यपदिश्यते, बहुक्षीरघृताभावात् सतीष्वपि गोषु न गोमान् तथा सशल्यत्वात् सत्स्वपि व्रतेषु न व्रती यस्तु निःशल्यः स व्रती । तत्रैतत् स्यात् कथमेतदेव भविष्यतीत्युच्यते—

**प्रधानानुविधानात् अप्रधानस्य ॥ ८ ॥** यथा तीक्ष्णेन परशुना छिनत्तीति तीक्ष्णगुणविशिष्टपरशुरप्रधानभूतः छेत्तुः प्रधानस्योपकारे प्रवर्तते तथा निःशल्यत्वगुणविशिष्टानि व्रतानि गुणभूतानि तद्वत प्रधानस्य विशेषकाणि । आह—किमेष व्रती व्यपगतशल्यत्रयो हिंसाद्यभावात् यथोक्तक्रियासमूहविजृंभितपरिणामः परिग्रहे निरपेक्षः । सर्व एव अगारसंबंधं प्रति निवृत्तौत्सुक्यः प्रतिज्ञायते उत विरतोपि कश्चित् गृहीति निश्चीयत इति । अत्रोच्यते—अमीषामेव हिंसादीनां निरतिविशेषस्य भेदात् अधिकृतो व्रती द्वेधा—

## अगार्यनगारश्च ॥ १९ ॥

**प्रतिश्रयार्थितयांगनादगारं ॥ १ ॥** प्रतिश्रयार्थिभिः जनैरंग्यते गम्यते तदित्यगारं वेश्म इत्यर्थः । अगारमस्यास्तीत्यगारी न विद्यते अगारमस्येत्यनगारः ।

**अनियमप्रसंग इति चेन्न भावागारस्य विवक्षितत्वात् ॥ २ ॥** स्यान्मतं शून्यागारदेवकुलाद्यावासस्य मुनेरगारित्वं प्राप्तं अनिवृत्तविषयतृष्णस्य कुतश्चित्कारणात् विमुच्यागारं वने वसतः अनगारत्वं चेत्यनियमप्रसंग इति ? तन्न किं कारणं ? भावागारस्य विवक्षितत्वात् । चारित्रमोहोदये सति अगारसंबंधं प्रत्यनिवृत्तपरिणामः अगारमित्युच्यते स यस्यास्त्यसौ वने वसन्नपि अगारीति व्यपदेशमर्हति । तदभावादनगार इति च भवति ।

**व्रतिकारणसाकल्यात् गृहस्थस्याव्रतित्वमिति चेन्न नैगमसंग्रहव्यवहारव्यापारात् नगरावासवत् ॥ ३ ॥** यथा गृहापवरकादिनगरैकदेशे निवासेऽपि नगरावास इति शब्द्यते । तथा असकलव्रतोऽपि नैगमसंग्रहव्यवहारनयविवक्षापेक्षया व्रतीति व्यपदिश्यते ।

**राजवद्वा ॥ ४ ॥** यथा द्वात्रिंशज्जनपदसहस्राधिपतिः सार्वभौमो राजेति । एकजनपदपतिः तदर्धेश्वरो वा न राजा न भवति भवत्येव । तथाष्टादशशीलसहस्रचतुरशीतिगुणशतसहस्रधरत्वादनगारः संपूर्णव्रत इति संयतासंयतोऽणुव्रतधरत्वात् न व्रतीति न भवति भवत्येव । अत्राह हिंसादीनामन्यतमस्मात् यः प्रतिनिवृत्तः स खल्वगारी व्रती नैव, किं तर्हि पंचतय्या अपि विरतेर्वैकल्येन विवक्षित इत्युच्यते—

## अणुव्रतोऽगारी ॥ २० ॥

अणुशब्दः सूक्ष्मवचनो द्रष्टव्यः । अणूनि व्रतानि, अस्य सोऽणुव्रतः । कथमणुत्वमिति चेत् उच्यते– सर्वसावद्यनिवृत्त्यसंभवात् । कुतस्तर्हि असौ निवृत्तः ?

**द्वींद्रियादिव्यपरोपणान्निवृत्तः ॥ १ ॥** द्वींद्रियादीनां जंगमानां प्राणिनां व्यपरोपणात् त्रिधा निवृत्तः अगारीत्याद्यमणुव्रतं ।

**स्नेहद्वेषमोहावेशात् असत्याभिधानवर्जनप्रवणः ॥ २ ॥** स्नेहस्य द्वेषस्य मोहस्य चोद्रेकात् यदसत्याभिधानं ततो निवृत्तादरो गृहीति द्वितीयमणुव्रतं ।

**अन्यपीडाकराद् पार्थिवभयाद्युत्पादितनिमित्ताद्प्यदत्तात् प्रतिनिवृत्तः ॥ ३ ॥** अन्यपीडाकरं पार्थिवभयादिवशादवश्यं परित्यक्तमपि यददत्तं ततः प्रतिनिवृत्तादरः श्रावक इति तृतीयमणुव्रतं ।

**उपात्तानुपात्तान्यागनासंगाद्विरतरतिः ॥४॥** उपात्ताया अनुपात्तायाश्च अन्यागनायाः संगाद्विरतरतिः, विरताविरत इति चतुर्थमणुव्रतं ।

**परिच्छिन्नधनधान्यक्षेत्रावधिर्गृही ॥५॥** धनधान्यक्षेत्रादीनां इच्छावशात् कृतपरिच्छेदः गृहीति पंचममणुव्रतं । आह स्थवीयसि विरतिमभ्युपगतस्य श्रावकस्य किमेतावानेव विशेषः आहोस्विदस्ति कश्चिदन्योऽपीत्यत्रोच्यते—

## दिग्देशानर्थदंडविरतिसामायिकप्रोषधोपवासोपभोगपरिभोगपरिमाणातिथिसंविभागव्रतसंपन्नश्च ॥ २१ ॥

**आकाशप्रदेशश्रेणी दिक् ॥ १ ॥** आकाशस्य प्रदेशाः परमाणुपरिच्छेदात्प्रविभक्ताः श्रेणीकृता दिग्व्यपदेशमर्हति ।

**आदित्यादिगतिविभेदस्तद्भेदः ॥ २ ॥** आदित्यादिगत्योदयास्तमयपरिच्छिन्नया विभक्तस्तद्भेदः । प्राची दिक् दक्षिणा प्रतीची उत्तरा, ऊर्ध्वमधो विदिक्चेति ।

**ग्रामादीनां अवधृतपरिमाणः प्रदेशो देशः ॥ ३ ॥** ग्रामनगरगृहापवरकादीनामवधृतपरिमाणानां प्रदेशो देश इत्युच्यते ।

**उपकारात्यये पापादाननिमित्तमनर्थदंडः ॥ ४ ॥** असत्युपकारे पापादानहेतुः अनर्थदंड इति व्यपदिश्यते । विरमणं विरतिः निवृत्तिरिति यावत् । दिग्देशानर्थदंडेभ्यो विरतिः दिग्देशानर्थदंडविरतिः । साधनं कृतेति वृत्तिः । विरतिशब्दः प्रत्येकं परिसमाप्यते—दिग्विरतिः देशविरतिरनर्थदंडविरतिरिति ।

**विरत्यग्रहणमधिकारादिति चेन्नोपसर्जनानभिसंबंधात् ॥५॥** स्यादेतत् हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतं, इत्यतः विरतिग्रहणमनुवर्तते, ततः पुनरिह विरतिग्रहणमनर्थकमिति ? तन्न । किं कारणं ? उपसर्जनानभिसंबंधात् । तदनुवर्तमानं विरतिग्रहणं दिग्देशानर्थदंडग्रहणेन उपसर्जनेन नाभिसंबध्यते ततः पुनर्विरतिग्रहणं क्रियते ।

**एकत्वेन गमनं समयः ॥ ६ ॥** समेकीभावे वर्तते तद्यथा संगतं घृतं संगतं तैलं इत्युक्ते एकीभूतमिति गम्यते एकत्वेन गमनं समयः । प्रतिनियतकायवाङ्मनस्कर्मपर्यायार्थं प्रतिनिवृत्तत्वादात्मनो द्रव्यार्थेनैकत्वगमनमित्यर्थः । समय एव सामायिकं, समयः प्रयोजनं अस्येति वा सामायिकं ।

**उपेत्य तस्मिन् वसंतींद्रियाणि इत्युपवासः ॥७॥** शब्दादिग्रहणं प्रति निवृत्तौत्सुक्यानि पंचा-

१ विदिक्चेति ग पुस्तके पाठः ।

**तत्त्रिविधं मायानिदानमिथ्यादर्शनभेदात् ॥ ३ ॥** तदेतच्छल्य त्रिविध वेदितव्य कुत मायानिदानमिथ्यादर्शनभेदात्, माया निकृतिर्वंचनेत्यनर्थांतर । विषयभोगाकाक्षा निदान, मिथ्यादर्शनमतत्त्वश्रद्धान । एतस्मात्त्रिविधाच्छल्यान्नि क्रान्तो नि शल्यो व्रतीत्युच्यते । अत्र कश्चिदाह—

**विरोधाद्विशेषणानुपपत्तिः ॥ ४ ॥** नि शल्यत्व व्रतित्वमित्येतदुभय विरुद्ध ततो न नि शल्यत्वाद्व्रती भवितुमर्हति न हि दडसबधाच्छत्री स्यात्, तस्मात् व्रताभिसबधादेव व्रतीति वक्तव्य । शल्याभावाच्च नि शल्य इति ।

**आनर्थक्य वाऽन्यतरेण गतार्थत्वात् ॥ ५ ॥** यदि व्रतित्वान्नि शल्यस्तस्मात् व्रतीत्येतावद्वाच्य, न नि शल्य इति । यदि च नि शल्यत्वात् व्रती तस्मान्नि शल्य इत्येतावद्वाच्य ?

**न व्रतीति विकल्पः इति चेन्न फलविशेषाभावात् ॥ ६ ॥** स्यादेतत् विकल्पोऽत्र गृह्यते नि शल्यो वा व्रती वा इति ततो न विशेषणविशेष्यसबधाभावो दोष इति ? तन्न किं कारण ? फलविशेषाभावात् फलविशेषवता हि लोके विकल्पो दृष्ट । यथा देवदत्त घृतेन वा सूपेन वा दध्ना वा भोजयेत् इति । न तथेह फलविशेषोऽस्ति नि शल्यो वा व्रती वेति उभयविशेषणविशिष्टस्यैकस्येष्टत्वात् ।

**नवांगांगिभावस्य विवक्षितत्वात् ॥ ७ ॥** न वा एष दोष किं कारण ? अगागिभावस्य विवक्षितत्वात् न हिंसाद्युपरतिमात्रव्रतसबधात् व्रती भवति अतरेण शल्याभाव, सति शल्यापगमे व्रतसबधात् व्रतीति विवक्षितो यथा बहुक्षीरघृतो गोमानिति व्यपदिश्यते, बहुक्षीरघृताभावात् सतीष्वपि गोषु न गोमान् तथा सशल्यत्वात् सत्स्वपि व्रतेषु न व्रती यस्तु नि शल्य स व्रती । तत्रैतत् स्यात् कथमेतदेव भविष्यतीत्युच्यते—

**प्रधानानुविधानात् अप्रधानस्य ॥ ८ ॥** यथा तीक्ष्णेन परशुना छिनत्तीति तीक्ष्णगुणविशिष्टपरशुरप्रधानभूत छेत्तु प्रधानस्योपकारे प्रवर्तते तथा नि शल्यत्वगुणविशिष्टानि व्रतानि गुणभूतानि तद्वत प्रधानस्य विशेषकाणि । आह—किमेष व्रती व्यपगतशल्यत्रयो हिंसाद्यभावात् यथोक्तक्रियासमूहविजृंभितपरिणाम परिग्रहे निरपेक्ष । सर्व एव अगारसबध प्रति निवृत्तौत्सुक्य प्रतिज्ञायते उत विरतोऽपि कश्चित् गृहीति निश्चीयत इति । अत्रोच्यते—अमीषामेव हिंसादीना विरतिविशेषस्य भेदात् अधिकृतो व्रती द्वेधा—

## अगार्यनगारश्च ॥ १९ ॥

**प्रतिश्रयार्थितयांगनादगार ॥ १ ॥** प्रतिश्रयार्थिभि जनैरग्यते गम्यते तदित्यगार वेश्म इत्यर्थ । अगारमस्यास्तीत्यगारी न विद्यते अगारमस्येत्यनगार ।

**अनियमप्रसंग इति चेन्न भावागारस्य विवक्षितत्वात् ॥ २ ॥** स्यान्मत शून्यागारदेवकुलावासस्य मुनेरगारित्व प्राप्त अनिवृत्तविषयतृष्णस्य कुतश्चित्कारणात् विमुच्यागार वने वसत अनगारत्व चेत्यनियमप्रसग इति ? तन्न किं कारण ? भावागारस्य विवक्षितत्वात् । चारित्रमोहोदये सति अगारसबध प्रत्यनिवृत्तपरिणाम अगारमित्युच्यते स यस्यास्त्यसौ वने वसन्नपि अगारीति व्यपदेश, अर्हति । तदभावादनगार इति च भवति ।

**व्रतिकारणसाकल्यात् गृहस्थस्याव्रतित्वमिति चेन्न नैगमसंग्रहव्यवहारव्यापारात् नगरावासवत् ॥ ३ ॥** यथा गृहापवरकादिनगरैकदेशे निवासेऽपि नगरावास इति शब्द्यते । तथा असकलव्रतोऽपि नैगमसग्रहव्यवहारनयविवक्षापेक्षया व्रतीति व्यपदिश्यते ।

**राजवद्वा ॥ ४ ॥** यथा द्वात्रिंशज्जनपदसहस्राधिपति सार्वभौमो राजेति । एकजनपदपति तदर्धेश्वरो वा न राजा न भवति भवत्येव । तथाष्टादशशीलसहस्रचतुरशीतिगुणशतसहस्रधरत्वादनगार सपूर्णव्रत इति संयतासयतोऽणुव्रतधरत्वात् न व्रतीति न भवति भवत्येव । अत्राह हिंसादीनामन्यतमस्मात् य प्रतिनिवृत्त स खल्वगारी व्रती नैव, किं तर्हि एकदेशस्य अपि विरतैकदेशेन विवक्षित इत्युच्यते—

## अणुव्रतोऽगारी ॥ २० ॥

अणुशब्द सूक्ष्मवचनो द्रष्टव्य । अणूनि व्रतानि, अस्य सोऽणुव्रत । कथमणुत्वमिति चेत् उच्यते-सर्वसावद्यनिवृत्त्यसभवात् । कुतस्तर्हि असौ निवृत्त ?

द्वींद्रियादिव्यपरोपणान्निवृत्तः ॥ १ ॥ द्वींद्रियादीना जगमानां प्राणिना व्यपरोपणात् त्रिधा निवृत्त अगारीत्याद्यमणुव्रत ।

स्नेहद्वेषमोहावेशात् असत्याभिधानवर्जनप्रवणः ॥ २ ॥ स्नेहस्य द्वेषस्य मोहस्य चोद्रेकात् यदसत्याभिधान ततो निवृत्तादरो गृहीति द्वितीयमणुव्रत ।

अन्यपीडाकराद् पार्थिवभयाद्युत्पादितनिमित्तादप्यदत्तात् प्रतिनिवृत्तः ॥ ३ ॥ अन्यपीडाकर पार्थिवभयादिवशादवश्य परित्यक्तमपि यददत्त तत प्रतिनिवृत्तादर श्रावक इति तृतीयमणुव्रत ।

उपात्तानुपात्तान्यांगनासगाद्विरतरति ॥४॥ उपात्ताया अनुपात्तायाश्च अन्यागनाया सगाद्विरतरति, निरताविरत इति चतुर्थमणुव्रत ।

परिच्छिन्नधनधान्यक्षेत्राद्यवधिर्गृही ॥५॥ धनधान्यक्षेत्रादीना इच्छावशात् कृतपरिच्छेद गृहीति पचममणुव्रत । आह स्थयमिति विरतिमभ्युपगतस्य श्रावकस्य किमेतावानेव विशेष आहोस्विदस्ति कश्चिदन्योऽपीत्यत्रोच्यते—

## दिग्देशानर्थदंडविरतिसामायिकप्रोषधोपवासोपभोगपरिभोगपरिमाणातिथिसंविभागव्रतसंपन्नश्च ॥ २१ ॥

आकाशप्रदेशश्रेणी दिक् ॥ १ ॥ आकाशस्य प्रदेशा परमाणुपरिच्छेदादप्रविभक्ता श्रेणीकृता दिग्व्यपदेशमर्हति ।

आदित्योदिगतिविभेदस्तद्भेदः ॥ २ ॥ आदित्यादिगत्योदयास्तमयपरिच्छिन्नया विभक्तस्तद्भेद । प्राची दिक् दक्षिणा प्रतीची उत्तरा, ऊर्ध्वमधो [1]विदिक्चेति ।

ग्रामादीनां अवधृतपरिमाणः प्रदेशो देशः ॥ ३ ॥ ग्रामनगरगृहापवरकादीनामवधृतपरिमाणा ना प्रदेशो देश इत्युच्यते ।

उपकारात्यये पापादाननिमित्तमनर्थदंड ॥ ४ ॥ असत्युपकारे पापादानहेतु अनर्थदंड इति व्यवह्रियते । विरमण विरति निवृत्तिरिति यावत् । दिग्देशानर्थदडेभ्योविरति दिग्देशानर्थदडविरति । साधन कृतेति वृत्ति । विरतिशब्द प्रत्येक परिसमाप्यते—दिग्विरति देशविरतिरनर्थदडविरतिरिति ।

विरत्यग्रहणमधिकारादिति चेन्नोपसर्जनानाभिसबधात् ॥ ५ ॥ स्यादेतत् हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रत, इत्यत विरतिग्रहणमनुवर्तते, तत पुनरिह विरतिग्रहणमनर्थकमिति ? तन्न । किं कारण ? उपसर्जनानभिसबधात् । तदनुवर्तमान विरतिग्रहण दिग्देशानर्थदडग्रहणेन उपसर्जनेन नाभिसबध्यते तत पुनर्विरतिग्रहण क्रियते ।

एकत्वेन गमन समय ॥ ६ ॥ समेकीभावे वर्तते तद्यथा सगत घृत सगत तैल इत्युक्ते एकीभूतमिति गम्यते एकत्वेन गमन समय । प्रतिनियतकायवाड्मनस्कर्मपर्यायार्थे प्रतिनिवृत्तत्वादात्मनो द्रव्यार्थेनैकत्वगमनमित्यर्थ । समय एव सामायिक, समय प्रयोजन अस्येति वा सामायिक ।

उपेत्य तस्मिन् वसतींद्रियाणि इत्युपवासः ॥ ७ ॥ शब्दादिग्रहण प्रति निवृत्तौत्सुक्यानि पचा

[1] विदिक्चेति ग पुस्तके पाठ ।

पींद्रियाणि उपेत्य तस्मिन् वसतीत्युपवास । अशनपानभक्ष्यलेह्यलक्षणचतुर्विधाहारपरित्याग इत्यर्थः प्रोषधशब्द पर्वपर्यायवाची । प्रोषधे उपवास प्रोषधोपवास. । साधन कृतेतिवृत्ति , सज्ञायामिति वा ।

**उपेत्य भुज्यते इत्युपभोगः ॥ ८ ॥** उपेत्यात्मसात् कृत्य भुज्यते अनुभूयत इत्युपभोग. अशनपानगंधमाल्यादि ।

**परित्यज्य भुज्यत इति परिभोगः ॥ ९ ॥** सकृद्भुक्त्वा परित्यज्य पुनरपि भुज्यते इति परिभोग इत्युच्यते । आच्छादनप्रावरणालंकारशयनाशनगृहयानवाहनादिः । उपभोगश्च परिभोगश्च उपभोगपरिभोगौ उपभोगपरिभोगयो परिमाण, उपभोगपरिभोगपरिमाण ।

**संयममविनाशयन्नततीत्यतिथिः ॥ १० ॥** चारित्रलाभवलोपेतत्वात् सयममविनाशयन् अततीत्यतिथि । अथवा नास्य तिथिरस्ति इत्यतिथि । अनियतकालागमन, इत्यर्थ । सविभजन सविभाग अतिथये सविभाग अतिथिसविभाग । अश्ववासादिवद्वृत्ति ।

**व्रतग्रहणमनर्थकमिति चेदुक्तं ॥ ११ ॥** व्रतमित्यनुवर्तते पुनर्व्रतग्रहणमनर्थकमितिचेदुक्त किमुक्त ? उपसर्जनानभिसबधादिति ।

**व्रतसंपन्नशब्दः प्रत्येकमभिसबध्यते ॥१२॥** दिग्विरतिव्रतसपन्न देशविरतिव्रतसपन्न इत्यादि अथ किमर्था दिङ्निवृत्ति ?

**दुष्परिहारक्षुद्रजंतुप्रायत्वाद्दिग्निवृत्तिः ॥ १३ ॥** दुष्परिहारै क्षुद्रजतुभिराकुला दिश अतस्तान्निवृत्ति कर्तव्या ।

**तत्परिमाण च योजनादिभिरभिज्ञानवद्भिः ॥ १४ ॥** तासा परिमाण योजनादिभि पर्वतादिप्रसिद्धाभिज्ञानै कर्तव्य ।

**अगमनेपि प्राणिवधाभ्यनुज्ञानमिति चेन्न निवृत्त्यर्थत्वात् ॥ १५ ॥** स्यान्मत दिक्परिमाणकरणात् अगमनेपि तदतरावस्थितप्राणिगणवधाभ्यनुज्ञान प्रसक्त अन्यथा वा दिक्परिमाणमनर्थक इति तन्न। किं कारण ? निवृत्त्यर्थत्वात । कार्त्स्न्येन निवृत्ति कर्तुं अशक्नुवत शक्त्या प्राणिवधविरतिं प्रत्यागूर्णस्यात्र प्राणयात्रा भवतु वा मा वा भूत् । सत्यपि प्रयोजनभूयस्त्वे परिमितात् दिगवधेर्बहिर्नास्कंदस्यामिति प्रणिधानान्न दोषः ।

**तृष्णाप्राकाम्यनिरोधतंत्रत्वाच्च ॥ १६ ॥** प्रवृद्धेच्छस्य आत्मनस्तस्या दिशि विना यत्नात् मणिरत्नादिलाभोस्तीत्येव अन्येन प्रोत्साहितस्यापि मणिरत्नादिसप्राप्तितृष्णाप्राकाम्यनिरोध कथ तन्निवृत्तौ भवेदिति दिग्विरति श्रेयसी ।

**ततो वहिर्महाव्रतप्रसिद्धिः ॥ १७ ॥** अहिंसाद्यणुव्रतधारिणोप्यस्य परिमिताद्दिगवधेर्बहिर्मनोवाक्काययोगै कृतकारितानुमतविकल्पै हिंसादिसर्वसावद्यनिवृत्तिरिति महाव्रतत्वमवसेय ।

**तथैव देशनिवृत्तिः ॥ १८ ॥** यथा दिङ्निवृत्ति कृता तथैव देशनिवृत्ति कार्या । मदीयस्य गृहांतरस्य तटाकस्य वा मध्य मुक्त्वा देशातर नास्कत्स्या इति तन्निवृत्तौ पूर्ववत् प्रयोजन वदितव्य । महाव्रतत्व च बहिर्व्यवस्थाप्य । अयमनयोर्विशेष –दिग्विरति सार्वकालिकी देशविरतिर्यथाशक्तिकालनियमेनेति ।

**अनर्थदंड पंचधा अपध्यानपापोपदेशप्रमादाचरितहिंसाप्रदानाशुभश्रुतिभेदात् ॥१९॥** अनर्थदड पचधा भिद्यते कुत ? अपध्यानपापोपदेशप्रमादाचरितहिंसाप्रदानाशुभश्रुतिभेदात् ।

**क्लेशतिर्यग्वणिज्यावधकारंभकादिषु पापसंयुतं वचनं पापोपदेशः ॥ २१ ॥** तद्यथा अस्मिन् देशे दासा दास्यः सुलभास्तानमुं देशं नीत्वा विक्रयकृते महानर्थलाभो भवतीति क्लेशवणिज्या । गोमहिष्यादीन् अमुत्र गृहीत्वा अन्यत्र देशे व्यवहारे कृते भूरिवित्तलाभ इति तिर्यग्वणिज्या । वागुरिकसौकरिकशाकुनिकादिभ्यो मृगवराहशकुन्तप्रभृतयोऽमुष्मिन् देशे सन्तीति वचनं वधकोपदेशः । आरंभकेभ्यः कृषीवलादिभ्यः क्षित्युदकज्वलनपवनवनस्पत्यारंभोऽनेनोपायेन कर्तव्य. इत्याख्यानमारंभकोपदेशः । इत्येवं प्रकारं पापसंयुक्तं वचनं पापोपदेशः ।

**प्रयोजनमंतरेणापि वृक्षादिछेदनभूमिकुट्टनसलिलसेचनाद्यवद्यकर्म प्रमादाचरितमिति कथ्यते ॥ २२ ॥**

**विषशस्त्राग्निरज्जुकशादण्डादिहिंसोपकरणप्रदानं हिंसाप्रदानमित्युच्यते ॥ २३ ॥**

**हिंसारागादिप्रवर्धितदुष्टकथाश्रवणशिक्षणव्यापृतिरशुभश्रुतिरित्याख्यायते ॥ २४ ॥** एतस्मादनर्थदण्डाद्विरतिः कार्या ।

**मध्येऽनर्थदण्डग्रहणं पूर्वोत्तरातिरेकानर्थक्यज्ञापनार्थं ॥ २५ ॥** पूर्वयोः दिग्देशयोरुत्तरयोश्चोपभोगपरिभोगयोरवधृतपरिमाणयोरनर्थकं चंक्रमणादिविषयोपसेवनं च निष्प्रयोजनं न कर्म कर्तव्यमित्यतिरेकनिवृत्तिज्ञापनार्थं मध्येऽनर्थदण्डवचनं क्रियते ।

**सामायिके नियतदेशकाले महाव्रतत्वं पूर्ववत् ॥ २६ ॥** इयति देशे, एतावति काले इत्यवधारिते सामायिके स्थितस्य महाव्रतत्वं पूर्ववद्वेदितव्यं, अणुस्थूलकृतहिंसादिनिवृत्तेः ।

**संयमप्रसंग इति चेन्न तद्घातिकर्मोदयात् ॥ २७ ॥** स्यान्मतं सामायिके सर्वसावद्यनिवृत्तिलक्षणे स्थितस्य तस्य संयमः प्राप्नोतीति ? तन्न । किं कारणं ? तद्घातिकर्मोदयात् । तस्य हि संयमघातिकर्मोदयोऽस्तीति न संयतत्वं ।

**महाव्रतत्वाभाव इतिचेन्नोपचारात् राजकुले सर्वगतचैत्रवत् ॥ २८ ॥** यद्यप्यतरसंयमघातिकर्मोदयोऽस्ति तदुदयेनानवस्थ अनिवृत्तपरिणामेन भवितव्यं ततश्च महाव्रतत्वमस्य नोपपद्यत इति मतं ? तन्न । किं कारणं ? उपचारात् । राजकुले सर्वगतचैत्रवत् । यथा पौरजनपदकोष्ठागारादिषु बाह्येषु व्यापारेषु सर्वेषु व्यापृतः स्नानानुलेपनशयनात पुरादिव्यापारेषु अभ्यंतरेषु केषुचित् व्यापृतिमननुगच्छन्नपि राजकुले सर्वगतश्चैत्र इत्युपचर्यते । तथा हिंसादिषु बाह्येषु सर्वेषु अनाशक्तधिषणः अभ्यतरसंयमघातिकर्मोदयापादितमंदाविरतिपरिणामे सत्यपि महाव्रत इत्युपचर्यते । एवं च कृत्वा अभव्यस्यापि निर्ग्रंथलिंगधारिणः एकादशांगाध्यायिनः महाव्रतपरिपालनादसंयतभावस्यापि उपरिमग्रैवेयकविमानवासितोपपन्ना भवति ।

**स्नानगंधमाल्यादिविरहितोऽवकाशे शुचावुपवसेत् ॥ २९ ॥** स्वशरीरसंस्कारसंस्करणस्नानगंधमाल्याभरणादिभिर्विरहितः शुचौ अवकाशे साधुनिवासे चैत्यालये स्वप्रोषधोपवासगृहे वा धर्मकथाश्रवणश्रावणचिंतनावहितांतःकरणः सन्नुपवसेत् निरारंभः श्रावकः ।

**भोगसंख्यानं पंचविधं त्रसघातप्रमादबहुवधानिष्टानुपसेव्यविषयभेदात् ॥ ३० ॥** भोगपरिसंख्यानं पंचविधं प्रत्येतव्यं । कुतः ? त्रसघातप्रमादबहुवधानिष्टानुपसेव्यविषयभेदात् । तत्र मधुमांसं सदा परिहर्तव्यं त्रसघातं प्रति निवृत्तचेतसा । मद्यमुपसेव्यमानं कार्याकार्यविवेकसंमोहकरमिति तद्वर्जनं प्रमादविरहायानुष्ठेयं । केतक्यर्जुनपुष्पादीनि बहुजंतुयोनिस्थानानि शृंगवेरमूलकार्द्रहरिद्रानिंबकुसुमादीन्यनंतकायव्यपदेशार्हाणि, एतेषामुपसेवने बहुघातोऽल्पफलमिति तत्परिहारः श्रेयान् । यानवाहनाभरणादिषु एतावदेवेष्टमतोऽन्यदनिष्टमित्यनिष्टान्निवर्तनं कर्तव्यं । न हि असत्यभिसंधिनियमे व्रत-

क्षिति इष्टानामपि चित्रवस्त्रविकृतवेषाभरणादीनामनुपसेव्यानां परित्यागः कार्यः, यावज्जीवं । अथ न शक्तिरस्ति कालपरिच्छेदेन वस्तुपरिमाणेन च शक्त्यनुरूपं निवर्तनं कार्यं ।

**अतिथिसंविभागश्चतुर्विधो भिक्षोपकरणौषधप्रतिश्रयभेदात्** ॥ ११ ॥ अतिथिसंविभागश्चतुर्धा भिद्यते कुतः भिक्षोपकरणौषधप्रतिश्रयभेदात् । मोक्षार्थमभ्युद्यतायातिथये संयमपरायणाय शुद्धाय शुद्धचेतसा निरवद्या भिक्षा देया । धर्मोपकरणानि च सम्यग्दर्शनज्ञानचारित्रोपबृंहणानि दातव्यानि । औषधं प्रायोग्यमुपयोजनीयं । प्रतिश्रयश्च परमधर्मश्रद्धया प्रतिपादयितव्य इति । चशब्दो वक्ष्यमाणगृहस्थधर्मसमुच्चयार्थः । क पुनरसौ ?

## मारणांतिकीं सल्लेखनां जोषिता ॥ २२ ॥

**स्वायुरिंद्रियबलसंक्षयो मरणं** ॥ १ ॥ स्वपरिणामोपात्तस्यायुषः इंद्रियाणां बलानां च कारणवशात् संक्षयो मरणमिति मन्यते मनीषिणः ।

**अंतग्रहणं तद्भवमरणप्रतिपत्त्यर्थं** ॥ २ ॥ मरणं द्विविधं नित्यमरणं तद्भवमरणं चेति । तत्र नित्यमरणं समये समये स्वायुरादीनां निवृत्तिः । तद्भवमरणं भवांतरप्राप्त्यनंतरोपश्लिष्टं पूर्वभवविगमनं । तत्रांतग्रहणं क्रियते तद्भवमरणपरिग्रहार्थं । मरणमंतो मरणांतः मरणांतः प्रयोजनमस्या इति मारणांतिकी ।

**सम्यक्कायकषायलेखना सल्लेखना** ॥ ३ ॥ लिखेर्ण्यंतस्य लेखना तनूकरणमिति यावत् । कायस्य बाह्यस्य अभ्यंतराणां च कषायाणां तत्कारणहापनया क्रमेण सम्यक् लेखना । तां मारणांतिकीं सल्लेखनां जोषिता । सेविता गृहीत्यभिसंबंधः ।

**सेविताग्रहणं विस्पष्टार्थमिति चेन्नार्थविशेषोपपत्तेः** ॥ ४ ॥ स्यान्मतं इह सेवितेत्येव विस्पष्टार्थं वक्तव्यमिति तन्न । किं कारणं ? अर्थविशेषोपपत्तेः । न केवलमिह सेवनं गृह्यते किं तर्हि ? प्रीत्यर्थोपि । जुषि प्रीतिसेवनयोरिति यस्मात् । असत्यां प्रीतौ बलान्न सल्लेखना कार्यते सत्यां हि प्रीतौ स्वयमेव करोति ।

**सल्लेखनायाः जोषितेति प्राप्नोतीति चेन्न तृनः प्रयोगात्** ॥ ५ ॥ स्यान्मतं यथा कटस्य कर्तेति विभक्तिनिर्देशः तथा सल्लेखनायाः जोषितेति प्राप्नोतीति ? तन्न किं कारणं ? तृनः प्रयोगात् ।

**आत्मवधकत्वप्रसंग इतिचेन्नाऽप्रमत्तत्वात्** ॥ ६ ॥ स्यान्मतं सल्लेखनामास्थितस्य स्वाभिसंधिपूर्वकायुरिंनिवृत्तिरात्मवधः प्राप्नोतीति ? तन्न किं कारणं ? अप्रमत्तत्वात् । प्रमत्तयोगाद्धि प्राणव्यपरोपणं हिंसेत्युक्तं नचास्य प्रमादयोगोऽस्ति कुतः ।

**रागाद्यभावात्** ॥ ७ ॥ रागद्वेषमोहाविष्टस्य हि विषशस्त्राद्युत्तरकारणप्रयोगवशात् आत्मानं घ्नतः स्वघातो भवति । न तथा सल्लेखनां प्रतिपन्नस्य रागादयः संति ततो नात्मवधदोषसंस्पर्शः । उक्तंच—

रागादीणमणुप्पा अहिंसकत्तेति देसिदं समये ।
तेसिं चेदुप्पत्ती हिंसेति जिणेहि णिद्दिट्ठा ॥ १ ॥

किंच—

**मरणस्यानिष्टत्वात्** ॥ ८ ॥ यथा वणिजः विविधपण्यदानादानसंचयपरस्य गृहविनाशोऽनिष्टः तद्विनाशकारणे चोपस्थिते यथाशक्ति परिहरति दुष्परिहरे च पण्याविनाशो यथा भवति तथा यतते । एवं गृहस्थोपि व्रतशीलपुण्यसंचयप्रवर्तमानस्तदाश्रयस्य शरीरस्य न पातमभिवांछति तदुपप्लवकारणे चोपस्थिते स्वगुणाविरोधेन परिहरति, दुष्परिहरे च यथा स्वगुणाविनाशो न भवति तथा प्रयतति कथमात्मवधो भवेत् । किंच—

**उभयानभिसंधानात् ॥ ९ ॥** यथा तपस्व शीतोष्णजसुखदु खानभिसंधानात् नाभिसहितसुखदु खसंबंधेपि सुखदु खकृतरागद्वेषाभावात् न सुखदु खकृतकर्मबंधभाक्। तथार्हत्प्रणीता सल्लेखना कुर्वन् जीवितमरणानभिसंधानात् अनभिसहितात्मीयमरणसंबंधे रागद्वेषाभावात् नात्मवधक । किंच—

**स्वसमयविरोधात् ॥ १० ॥** यथा क्षणिकवादिन , अक्षणिका सर्वे भावा इति ब्रुवत स्वसमयविरोधस्तथा यदा सत्वश्च भवति सत्वसंज्ञा च भवति वधकश्च भवति वधचित्त चास्योत्पन्न भवति इत्येता चतुर्विधा चेतना प्राप्य हिंसा जायत इति ब्रुवतोऽसत्यात्मवधकत्वाचित्ते सल्लेखना कुर्वत आत्मवधकत्व जायत इत्याचक्षाणस्यासचेतितकर्मबंधाभावात् समयविरोध । अथ स्वसमयविरोधो माभूदिति चतुर्विधयैव चेतनया कर्म बिध्यते इतीष्ट । ननु सल्लेखनाया आत्मवधकचित्ताभावात् आत्माहिंसकत्व सिद्ध । अथवा यथा सदा मौनव्रतिकस्य मौनव्रतिकोस्मीति वचन स्ववचसा विरुध्यते । तथा सर्वानात्मकवादिन आत्माभावादात्मनो वधकत्वमाचक्षाणस्य सर्वात्मकार्यसत्यवचनविरोध । अथ स्वसमयाविरोधो माकल्पादिति सर्वात्मकमिष्ट । नन्वात्माभावात् आत्मवधाभाव । योपि ब्रूयात् नि क्रिय आत्मेति तस्य पुन साधनत सेविता सल्लेखनामातिष्ठमानस्यात्मवधकत्व भवतीत्यभिलपत आत्मनोनि क्रियत्वे प्रतिज्ञाहानि । नि क्रियत्वाभ्युपगमे चात्मवधप्राप्त्युपालभनाभाव । आह—

कदा अनेन सल्लेखनाया प्रयतितव्यमित्यत्रोच्यते—

**जरारोगेंद्रियहानिभिरावश्यकपरिक्षये ॥ ११ ॥** जरसा शरीरदूषिण्या यदा प्रहतजंघाबलवीर्यो भवति रोगैश्च वातादिविकारजनितैरभिद्रुत प्रक्षीणेंद्रियबलश्च भवति तदा आवश्यकपरिक्षयमपेक्षमाण स्मृतिमान् प्रासुकाशनपानकोपवासासेवनादिना क्रमेण प्रक्षीयमाणशरीरबल आमरणाद्भावनानुप्रेक्षासमाधिबहुल शास्त्रोक्तेन विधिना सल्लेखना जोषिता उत्तमार्थस्याराधको भवति ।

**एकयोगकरण न्याय्यमिति चेन्न कदाचित्कस्यचित्ता प्रत्याभिमुख्यज्ञापनार्थत्वात् ॥ १२ ॥** स्यादेतत् पूर्वसूत्रेण इह एक एव योग कर्तव्य , लघ्वर्थ इति ? तन्न किं कारण ? कदाचित् कस्यचित् ता प्रत्याभिमुख्यज्ञापनार्थत्वात्। सप्ततयशीलवत कदाचित् कस्यचिदेव गृहिण. सल्लेखनाभिमुख्य न सर्वस्येति । किंच—

**वेश्मापरित्यागिनस्तदुपदेशात् ॥ १३ ॥** वेश्मापरित्यागिन दिग्विरत्यादिसप्ततयशीलोपदेश । वेश्मपरित्यागेन तु श्रावकत्वेनैव गृहिण सल्लेखनेत्येवमर्थो भेदेनोपदेश ।

**अविशेषविधिप्रतिपादनार्थत्वाद्वा ॥ १४ ॥** अथ सल्लेखनाविधि , न श्रावकस्यैव दिग्विरत्यादिशीलवत ? किं तर्हि संयतस्यापीति अविशेषज्ञापनार्थत्वाद्वा पृथगुपदेश कृत । अत्राह उक्त भवता नि शल्यो व्रतीति तत्र चोक्तानि शल्यानि मायानिदानमिथ्यादर्शनसंज्ञकानि तत सम्यग्दृष्टिना व्रतिना भवितव्य । तत्सम्यग्दर्शनं किं निरपवादमुत सापवादमित्युच्यते । कस्यचिन्मोहनीयावस्थाविशेषात् कदाचिदिमे भवत्यपवादा —

## शंकाकांक्षाविचिकित्सान्यदृष्टिप्रशंसासंस्तवाः सम्यग्दृष्टेरतीचाराः ॥ २३ ॥

नि शंकितत्वादयो व्याख्याता दर्शनविशुद्धिरित्यत्र । तत्प्रतिपक्षभूता शंकादयो वेदितव्या । अथ प्रशंसासंस्तवयो को विशेष ?

**वाङ्मानसविषयभेदात् प्रशंसासंस्तवभेदः ॥ १ ॥** मनसा मिथ्यादृष्टिज्ञानचारित्रगुणोद्भावन प्रशंसा । भूताभूतगुणोद्भावनवचन संस्तव इत्ययमनयोर्भेद ।

## परविवाहकरणेत्वरिकापरिगृहीतापरिगृहीतागमनानंगक्रीडाकामतीव्राभिनिवेशाः ॥ २८ ॥

**सद्वेद्यचारित्रमोहोदयाद्विवहनं विवाहः ॥ १ ॥** सद्वेद्यस्य चारित्रमोहस्य चोदयात् विवहन कन्यावरण विवाह इत्याख्यायते । परस्य विवाह परविवाह परविवाहस्य करण परविवाहकरण ।

**अयनशीलेत्वरी ॥ २ ॥** ज्ञानावरणक्षयोपशमापादितकलागुणज्ञतया चारित्रमोहस्त्रीवेदोदयप्रकर्षादंगोपांगनामोदयावष्टम्भाच्च परपुरुषानेति गच्छतीत्येवंशीला इत्वरी । तत कुत्सायां क । इत्वरिका । अपरिगृहीता च परिगृहीता च अपरिगृहीतापरिगृहीते । या गणिकात्वेन पुंश्चलित्वेन वा परपुरुषगमनशीला अस्वामिका अपरिगृहीता । या पुन एकपुरुषभर्तृका सा परिगृहीता । इत्वरिके च ते अपरिगृहीतापरिगृहीते च इत्वरिकापरिगृहीतापरिगृहीते तयोर्गमन इत्वरिकापरिगृहीतापरिगृहीतागमन ।

**अनंगेषु क्रीडा अनंगक्रीडा ॥ ३ ॥** अंगं प्रजनन योनिश्च ततोन्यत्र क्रीडा अनंगक्रीडा । अनेकविधप्रजननविकारेण जघनादन्यत्र चांगे रतिरित्यर्थ ।

**कामस्य प्रवृद्ध परिणामः कामतीव्राभिनिवेश ॥ ४ ॥** कामस्य प्रवृद्ध परिणाम अनुपरतवृत्त्यादि कामतीव्राभिनिवेश इत्युच्यते । एते पंच स्वदारसंतोषव्रतस्यातिचारा ।

**दीक्षितातिबालातैर्यग्योन्यादीनामनुपसंग्रह इति चेन्न कामतीव्राभिनिवेशग्रहणात् सिद्धेः ॥ ५ ॥** स्यान्मत दीक्षिता अतिबाला तैर्यग्योनीत्येवमादीनां अनुपसंग्रह इति ? तन्न किं कारण ? कामतीव्राभिनिवेशग्रहणात् सिद्धे । दीक्षितादिषु हि परिहर्तव्यासु वृत्ति कामतीव्राभिनिवेशाद्भवति । उक्तोत्र दोष राजभयलोकापवादादि ।

## क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदासकुप्यप्रमाणातिक्रमाः ॥२९॥

**क्षेत्रवास्त्वादीनां द्वयोर्द्वयोर्द्वंद्व प्राक् कुप्यात् ॥ १ ॥** क्षेत्रवास्त्वादीनां द्वयोर्द्वयो द्वंद्वो भवति । किं-अविशेषेणेत्याह-प्राक्कुप्यात् । क्षेत्र च वास्तु च क्षेत्रवास्तु, हिरण्य च सुवर्ण च हिरण्यसुवर्णं, धन च धान्य च धनधान्य, दासी च दासश्च दासीदास । क्षेत्रवास्तु च हिरण्यसुवर्णं च धनधान्य च दासीदास च कुप्य च क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदासकुप्यानि । दासीदासमिति गवाश्वादिषु निपातनात् एकशेषभाव । क्षेत्र सस्याधिकरण, वास्तु आगार, हिरण्य रूप्यादिव्यवहारतंत्र, सुवर्ण प्रतीत, धन गवादि, धान्य व्रीह्यादि दासीदास भृत्यस्त्रीपुंसवर्ग कुप्य क्षौमकार्पासकौशेयचंदनादि ।

**तीव्रलोभाभिनिवेशादतिरेकाः प्रमाणातिक्रमाः ॥ २ ॥** एतावानेव परिग्रहो मम नातोन्य इति परिच्छिन्नात् क्षेत्रवास्त्वादिविषयादतिरेका, अतिलोभवशात् प्रमाणातिक्रमा इति प्रत्याख्यायते । त एते पंच परिग्रहविरमणस्यातिक्रमा उक्ता व्रतानामतिचारा । शीलानामतिचारा वक्ष्यते । तद्यथा—

## ऊर्ध्वाधस्तिर्यग्व्यतिक्रमक्षेत्रवृद्धिस्मृत्यंतराधानानि ॥ ३० ॥

**परिमितदिगवधिव्यतिलंघनमतिक्रमः ॥ १ ॥** परिमितस्य दिगवधेरतिलंघनमतिक्रम इत्युच्यते

**स समासतस्त्रिविधः—ऊर्ध्वातिक्रमः अधोतिक्रमः तिर्यगतिक्रमश्चेति ॥ २ ॥**

**तत्र पर्वताद्यारोहणादूर्ध्वातिक्रमः ॥ ३ ॥** पर्वततरुभूम्यादीनामारोहणादूर्ध्वातिक्रमो भवति ।

**कूपावतरणादेरधोतिवृत्तिः ॥ ४ ॥** कूपावतरणादे, अधो दिगवधेरतिवृत्तिर्वेदितव्या ।

**विलप्रवेशादिस्तिर्यगतीचारः ॥ ५ ॥** भूमिविलगिरिदरीप्रवेशादिस्तिर्यगतीचारो द्रष्टव्य ।

**अभिगृहीताया दिशो लोभावेशादाधिक्याभिसंधिः क्षेत्रवृद्धिः ॥६॥** प्राग् दिश योजनादिभि परिच्छिद्य पुनर्लोभवशात्ततोऽधिकाकाङ्क्षण क्षेत्रवृद्धिरित्यध्यवसीयते ।

**इच्छापरिमाणेऽन्तर्भावात् पौनरुक्त्यमिति चेन्न तस्यान्याधिकरणत्वात् ॥ ७ ॥** स्यादेतत् इच्छापरिमाणे पञ्चमेऽणुव्रते अस्यांतर्भावात् पुनर्ग्रहण पुनरुक्तमिति ? तन्न । किं कारण ? तस्यान्याधिकरणत्वात्, इच्छापरिमाण क्षेत्रवास्त्वादिविषय इदं पुन दिग्विरमणमन्यार्थं अस्यां दिशि लाभे जीवितमलाभे च मरणमतोऽन्यत्र लाभेऽपि न गमनमिति, न तु दिशि क्षेत्रादिष्विव परिग्रहबुद्ध्यात्मसात्करणात् परिमाणकरणमस्ति, ततोऽर्थविशेषोऽस्यावसेय ।

**तदतिक्रमः प्रमादमोहव्यासंगादिभिः ॥ ८ ॥** तस्यैतस्य दिक्परिमाणस्यातिक्रम प्रमादात्, मोहाद् व्यासगाद्वा भवतीत्यवसेय ।

**अननुस्मरणं स्मृत्यन्तराधानं ॥ ९ ॥** अनुस्मरण परामर्शन प्रत्यवेक्षणमित्यनर्थांतर । इदमिदं मया योजनादिभिरभिज्ञान कृतमिति तदभाव स्मृत्यन्तराधान । त एते पञ्च दिग्विरमणस्यातिक्रमा ।

## आनयनप्रेष्यप्रयोगशब्दरूपानुपातपुद्गलक्षेपाः ॥ ३१ ॥

**अन्यमानयेत्याज्ञापनमानयनं ॥ १ ॥** आत्मना सकल्पिते देशे स्थितस्य प्रयोजनवशात् यत्किंचिदानयेत्याज्ञापन आनयनमित्याख्यायते ।

**एवं कुर्विति विनियोगः प्रेष्यप्रयोगः ॥ २ ॥** परिच्छिन्नदेशाद्बहि स्वयमगत्वा अन्यमप्यनानीय प्रेष्यप्रयोगेणैवाभिप्रेतव्यापारसाधन प्रेष्यप्रयोग ।

**अभ्युत्कासिकादिकरणं शब्दानुपातः ॥ ३ ॥** व्यापारकरान् पुरुषान् उद्दिश्याभ्युत्कासिकादिकरण शब्दानुपात इति कथ्यते ।

**स्वविग्रहप्ररूपणं रूपानुपातः ॥ ४ ॥** मम रूप निरीक्ष्य व्यापारमचिरान्निष्पादयति इति स्वविग्रहप्ररूपणं रूपानुपात इति निर्णीयते ।

**लोष्टादिनिपातः पुद्गलक्षेपः ॥ ५ ॥** कर्मकरान् पुरुषानुद्दिश्य लोष्टपाषाणनिपात पुद्गलक्षेप इति कथ्यते । त एते देशविरमणस्य पञ्चातिक्रमा ।

कथ पुनरतिक्रम इत्युच्यते—

**स्वयमनाक्रामन्नन्येनाक्रामयतीत्यतिक्रमः ॥ ६ ॥** यस्मात् स्वयमनतिक्रमन् अन्येनातिक्रमयति ततोऽतिक्रम इति व्यपदिश्यते । यदि हि स्वयमतिक्रामेत्, व्रतलोप एवास्य स्यात् ।

## कंदर्पकौत्कुच्यमौखर्यासमीक्ष्याधिकरणोपभोगपरिभोगानर्थक्यानि ॥ ३२ ॥

**रागोद्रेकात् प्रहासमिश्रोऽशिष्टवाक्प्रयोगः कंदर्पः ॥ १ ॥** चारित्रमोहोदयापादितात् रागोद्रेकात् प्रहाससयुक्तो योऽशिष्टवाक्प्रयोग स कंदर्प इति निर्णीयते ।

**तदेवोभयं परत्र दुष्टकायकर्मयुक्तं कौत्कुच्यं ॥ २ ॥** रागस्य समावेशाद्धास्यवचन अशिष्टवचन इत्येतदुभय परत्र दुष्टेन कायकर्मणा युक्त कौत्कुच्यमित्युच्यते ।

**धार्ष्ट्यप्रायमसंबद्धबहुप्रलापित्वं मौखर्यं ॥ ३ ॥** असमीक्षितया यत्किंचनानर्थक बहुप्रलपनं मौखर्यमिति प्रत्येतव्य ।

**असमीक्ष्य प्रयोजनमाधिक्येन करणमधिकरणं ॥ ४ ॥** अधिरुपभावे वर्तते, करोतिश्चापूर्वप्रादुर्भावे, प्रयोजनमसमीक्ष्य आधिक्येन प्रवर्तनमधिकरण ।

**तत्त्रेधा कायवाङ्मनोविषयभेदात् ॥ ५ ॥** तदधिकरण त्रेधा व्यवतिष्ठते। कुत ? कायवाङ्मनोविषयभेदात् । तत्र मानस परानर्थककाव्यादिचिंतन, वाग्गत निष्प्रयोजनकथाख्यान परपीडाप्रधान यत्किंचनवक्तृत्व, कायिक च प्रयोजनमतरेण गच्छंस्तिष्ठन्नासीनो वा सचित्तेतरपत्रपुष्पफलच्छेदनभेदनकुट्टनक्षेपणादीनि कुर्यात् । अग्निविषक्षारादिप्रदान चारभत्येवमादि तत्सर्वमसमीक्ष्याधिकरण ।

**यावतार्थेनोपभोगपरिभोगौ सोऽर्थस्ततोऽन्यस्याधिक्यमानर्थक्यं ॥ ६ ॥** यस्य यावतार्थेन उपभोगपरिभोगौ प्रकल्प्येते तस्य तावानर्थ इत्युच्यते ततोऽन्यस्याधिक्यमानर्थक्य भवति ।

**उपभोगपरिभोगव्रतेऽतर्भावात् पौनरुक्त्यप्रसग इति चेन्न तदर्थानवधारणात् ॥ ७ ॥** स्यादेतत् उपभोगपरिभोगव्रतेऽतर्भवतीति पौनरुक्त्यमासज्यत इति ? तन्न, किं कारण ? तदर्थानवधारणात् । इच्छावशात् उपभोगपरिभोगपरिमाणावग्रह सावद्यप्रत्याख्यान चेति तदुक्त । इह पुन कल्प्यस्यैव आधिक्यमित्यतिक्रम इत्युच्यते । नन्वेवमपि तद्व्रतातिचारातर्भावात् इद वचनमनर्थक ? नानर्थक सचित्ताद्यतिक्रमवचनात् । असमीक्ष्याधिकरणमित्यत्र 'सुप्सुपेति वृत्ति । मयूरव्यसकादित्वाद्वा । त एते पचानर्थदडविरतेरतीचारा ।

## योगदुःप्रणिधानानादरस्मृत्यनुपस्थानानि ॥ ३३ ॥

**योगशब्दो व्याख्यातार्थः ॥ १ ॥** अय योगशब्दो व्याख्यातार्थो द्रष्टव्य । क ? कायवाङ्मनस्कर्मयोग इत्यत्र ।

**दुष्टं प्रणिधानमन्यथा वा दुःप्रणिधानं ॥ २ ॥** प्रणिधान प्रयोग परिणाम इत्यनर्थातर । दुष्ठु पाप प्रणिधान दु प्रणिधान अन्यथा वा प्रणिधान दु प्रणिधान । तत्र क्रोधादिपरिणामवशात् दुष्ठु प्रणिधान शरीरावयवाना अनिभृतमवस्थान, वर्णसंस्काराभावार्थागमकत्वचापलादि वाग्गत, मनसोऽनर्पितत्व च, इत्यन्यथा प्रणिधान ।

**अनादरोऽनुत्साहः ॥ ३ ॥** इतिकर्तव्य प्रत्यसाकल्यात् यथाकथचित् प्रवृत्तिरनुत्साह अनादर इत्युच्यते ।

**अनैकाग्र्यं स्मृत्यनुपस्थानं ॥ ४ ॥** अनैकाग्र्यमसमाहितमनस्कता स्मृत्यनुपस्थानमित्याख्यायते ।

**मनोदुःप्रणिधानं तदिति चेन्न तत्रान्याचिंतनात् ॥ ५ ॥** स्यादेतत स्मृत्यनुपस्थान तन्मनोदु प्रणिधानमेवेति तस्य ग्रहणमनर्थकमिति ? तन्न किं कारण ? तत्रान्याचिंतनात् तत्र हि अन्यत् किंचित् अचिंतयश्चितयत एव वा विषये क्रोधाद्यावेश औदासीन्येन वाऽवस्थान मनस । इह पुन परिस्पदनात् चिंताया एकाग्र्येणानवस्थानमिति निस्पष्टमन्यत्व। रात्रिंदिवि यस्य वा प्रमादाधिकस्य संचित्यानुपस्थान । त एते पच सामायिकस्यातिक्रमा ।

## अप्रत्यवेक्षिताप्रमार्जितोत्सर्गादानसंस्तरोपक्रमणानादरस्मृत्यनुपस्थानानि ॥ ३४ ॥

**प्रत्यवेक्षणं चाक्षुषो व्यापारः ॥ १ ॥** जतव सति न सति चेति प्रत्यवेक्षण चाक्षुषो व्यापार प्रतीयते ।

**प्रमार्जनमुपकरणोपकारः ॥ २ ॥** मृदुनोपकरणेन यत् क्रियते प्रयोजन तत् प्रमार्जन प्रत्येतव्य ।

**तस्य प्रतिषेधविशिष्टस्योत्सर्गादिभिः संबंधः ॥ ३ ॥** तस्योभयस्य प्रतिषेधविशिष्टस्य उत्स

र्गादिभिस्त्रिभि प्रत्येकमभिसंबन्धो भवति अप्रत्यवेक्षिताप्रमार्जितोत्सर्ग इत्यादि । तत्राऽप्रत्यवेक्षिताया भुवि मूत्रपुरीषोत्सर्ग अप्रत्यवेक्षिताप्रमार्जितस्य अर्हदाचार्यपूजोपकरणस्य, गन्धमाल्यधूपादेरात्मपरिधानाद्यर्थस्य वस्त्रपात्रादेश्चाऽऽदानमप्रत्यवेक्षिताप्रमार्जितस्य प्रावरणादे संस्तरस्योपक्रमण ।

**आवश्यकेष्वनादरः** ॥४॥ अनुत्साहो भवति । कुत ? क्षुदभ्यर्दितत्वात् । स्मृत्यनुपस्थान व्याख्यात । त एते पञ्च प्रोषधोपवासस्यातिचारा ।

## सचित्तसंबन्धसंमिश्राभिषवदुःपक्वाहाराः ॥ ३५ ॥

**सह चित्तेन वर्तत इति सचित्तः** ॥ १ ॥ चित्त विज्ञान तेन सह वर्तत इति सचित्त, चेतनावद्द्रव्यमित्यर्थ ।

**तदुपश्लिष्टः संबन्धः** ॥ २ ॥ तेन चित्तवता द्रव्येणोपश्लिष्ट संबन्ध इत्याख्यायते । संबध्यत इति संबन्ध ।

**तद्व्यतिकीर्णः संमिश्रः** ॥ ३ ॥ तेन सचित्तेन द्रव्येण व्यतिकीर्ण संमिश्र इति कथ्यते । संमिश्र्यत इति संमिश्र ।

**पूर्वेणाविशिष्ट इति चेन्न तत्र संसर्गमात्रत्वात्** ॥ ४ ॥ स्यान्मत संबन्धेनाविशिष्ट संमिश्र इति ? तन्न । किं कारण ? तत्र संसर्गमात्रत्वात् । सचित्तसंबन्धे हि संसर्गमात्र विवक्षित इह तु सूक्ष्मजन्तुव्याकुलत्वे विभागीकरणस्याशक्यत्वात् नानाजातीयद्रव्यसमाहार सूक्ष्मजन्तुप्राय आहार संमिश्र इष्ट । कथ पुनरस्य सचित्तादिषु वृत्ति ? प्रमादसंमोहाभ्यां सचित्तादिषु वृत्ति । क्षुत्पिपासातुरत्वात् त्वरमाणस्य सचित्तादिषु अशनाय पानायानुलेपनाय परिधानाय वा वृत्तिर्भवति ।

**द्रवो वृष्यो वाऽभिषवः** ॥ ५ ॥ द्रव सौवीरादिक वृष्य वा द्रव्यमभिषव इत्यभिधीयते ।

**असम्यक् पक्वो दुष्पक्वः** ॥ ६ ॥ अस्विन्नतण्डुलभावेनातिक्लेदनेन वा दुष्ठु पक्व आहार दुष्पक्व इत्युच्यते । ननु दुष्पच इति प्राप्नोतीति तन्न । किं कारण ? कृदर्थविवक्षाभावात् न भवति । तस्याभ्यवहारे को दोष ? इन्द्रियमदवृद्धि स्यात् । सचित्तप्रयोगो वा वाताद्विप्रकोपो वा । तत्प्रतीकारविधाने स्यात् पापलेप । अतिथयश्चैनं परिहरेयुरिति । त एते पञ्च उपभोगपरिभोगसंख्यानमर्यादाश्रया ।

## सचित्तनिक्षेपापिधानपरव्यपदेशमात्सर्यकालातिक्रमाः ॥ ३६ ॥

**सचित्ते निक्षेपः सचित्तनिक्षेपः** ॥ १ ॥ सचित्तो व्याख्यात । सचित्ते पद्मपत्रादौ निधान निक्षेप इत्युच्यत । साधन कृतेति वा मयूरव्यंसकादित्वाद्वा वृत्ति ।

**प्रकरणात् सचित्तेनाऽपिधान** ॥ २ ॥ अपिधानमावरणमित्यर्थ । प्रकरणवशात् सचित्तेनापिधानमिति विशेष्यते, इतरथा हि प्रागधिकरणत्वेन निर्दिष्ट सचित्तग्रहण नाभिसंबध्येत ।

**अन्यदातृदेयार्पण परव्यपदेशः** ॥ ३ ॥ अन्यत्र दातार सति दीयमानोऽप्ययमन्यस्येति वा अर्पण परव्यपदेश इति प्रतिपद्यते ।

**प्रयच्छतोऽप्यादराभावो मात्सर्य** ॥ ४ ॥ प्रयच्छतोऽपि सत आदरमन्तरेण दान मात्सर्यमिति प्रतीयते ।

**अकाले भोजन कालातिक्रम** ॥ ५ ॥ अनगाराणा अयोग्यकाले भोजन कालातिक्रम इति कथ्यते । पञ्चातिथिसंविभागशीलभेदा प्रणीता —समानामपि शीलानामतीचारा उक्ता, उच्चावचा । अथ सल्लेखनाया मरणविशेषापादानसमर्थाया अनुपदिष्टचिन्तेनारभ्याया कतीचारा भवन्तीत्यत आह—

१ ख पुस्तके पाठोऽयमधिक । २ अतीचारा इत्यपि ।

## जीवितमरणाशंसामित्रानुरागसुखानुबंधनिदानानि ॥ ३७ ॥

आकांक्षणमाशंसा ॥ १ ॥ आकांक्षणमभिलाष आशंसेत्युच्यते। जीवितं च मरणं च जीवितमरणे तयोराशंसा जीवितमरणाशंसा।

अवश्यहेयत्वशरीरस्यावस्थानादरो जीविताशंसा ॥ २ ॥ शरीरमिदमवश्यं हेयं जलबुद्बुदनित्यं अस्यावस्थानं कथं स्यादित्यादरो जीविताशंसा प्रत्येतव्या।

जीवितसंक्लेशान्मरणं प्रति चित्तानुरोधो मरणाशंसा ॥३॥ रोगोपद्रवाकुलतया प्राप्तजीवितसंक्लेशस्य मरणं प्रति चित्तस्य प्रणिधानं मरणाशंसा इति व्यपदेशमर्हति।

पूर्वकृतसहपांशुक्रीडनाद्यनुस्मरणान्मित्रानुरागः ॥ ४ ॥ व्यसने सहायत्वमुत्सवे संभ्रम इत्येवमादिषु कृतं बाल्ये युगपत् क्रीडनमित्येवमादीनामनुस्मरणात् मित्रानुरागो भवति।

अनुभूतप्रीतिविशेषस्मृतिसमन्वाहारः सुखानुबंध ॥ ५ ॥ एवं मया भुक्तं शयितं क्रीडितमित्येवमादि प्रीतिविशेषं प्रति प्रीतिविशेषस्मृतिसमन्वाहारः सुखानुबंध इत्यभिधीयते।

भोगाकांक्षया नियतं दीयते चित्तं तस्मिंस्तेनेति वा निदानं ॥ ६ ॥ विषयसुखोत्कर्षाभिलाषो भोगाकांक्षा तया नियतं चित्तं दीयते तस्मिंस्तेनेति वा निदानमिति व्यपदिश्यते। त एते पंच सल्लेखनायाः क्रमव्यतिक्रमा।

अत्राह उक्तं भवता तीर्थंकरत्वकारणकर्मास्रवनिर्देशे शक्तितस्त्यागतपसी इति, पुनश्चोक्तं शीलव्रतविधानेऽतिथिसंविभाग इति तस्य दानस्य लक्षणमनिर्ज्ञातं तदुच्यतामित्यत आह—

## अनुग्रहार्थं स्वस्यातिसर्गो दानं ॥ ३८ ॥

स्वपरोपकारोऽनुग्रहः ॥ १ ॥ स्वस्य परस्य चोपकार अनुग्रह इत्याख्यायते। स्वोपकार पुण्यसंचय परोपकार. सम्यग्ज्ञानादिवृद्धि ॥

स्वशब्दो धनपर्यायवचन ॥ २ ॥ आत्मात्मीयज्ञातिधनपर्यायवाचित्वे स्वशब्दस्य धनपर्यायवाचिनो ग्रहणमिह द्रष्टव्य। अनुग्रहार्थं स्वस्यातिसर्गस्त्यागो दानं वेदितव्य।

अत्राहोक्तं दानं तत्किमविशिष्टफलमाहोस्वित् अस्ति कश्चित् प्रतिविशेष इत्यत्रोच्यते—

## विधिद्रव्यदातृपात्रविशेषात्तद्विशेषः ॥ ३९ ॥

प्रतिग्रहादिक्रमो विधि. ॥ १ ॥ प्रतिग्रह उच्चदेशस्थापन पादप्रक्षालन अर्चन प्रणमनमित्येवमादिक्रियाविशेषाणां क्रमो विधिरित्याख्यायते।

विशेषो गुणकृतस्तस्य प्रत्येकमभिसंबंधः ॥ २ ॥ परस्परतो विशिष्यते विशिष्टिर्वा विशेषः स गुणकृतस्तस्य प्रत्येकमभिसंबंधो भवति विधिविशेष, द्रव्यविशेष दातृविशेष, पात्रविशेष इति। तत्र विधिविशेष प्रतिग्रहादिषु आदरानादरकृतो भेद।

तप स्वाध्यायपरिवृद्धिहेतुत्वादिर्द्रव्यविशेषः ॥ ३ ॥ दीयमानेऽन्नादौ प्रतिगृहीतुस्तप स्वाध्यायपरिणामविवृद्धिकारणत्वादिर्द्रव्यविशेष इति भाष्यते।

अनुसूयाविषादादिर्दातृविशेषः ॥ ४ ॥ प्रतिग्रहीतरि अनुसूया त्यागेऽविषाद दित्सतो ददतो दत्तवतश्च प्रीतियोग.-कुशलाभिसंधिता दृष्टफलानपेक्षिता निरुपरोधत्वमनिदानत्वमित्येवमादि दातृ-

**मोक्षकारणगुणसंयोगः पात्रविशेषः ॥ ५ ॥** मोक्षकारणै सम्यग्दर्शनादिभि गुणै योग. पात्रविशेष इति प्रतीयते ।

**ततश्च फलविशेषः क्षित्यादिविशेषाद्बीजफलविशेषवत् ॥ ६ ॥** ततश्च विधादिविशेषाद्दान-फलविशेषा भवति यथा क्षित्यादिकारणविशेषसंनिपाते सति नानाविधबीजफलविशेष इति ।

**निरात्मकत्वे सर्वभावानां विधादिस्वरूपाभावः ॥७॥** निरात्मका सर्वे भावा इत्यस्मिन् दर्शने विधादिस्वरूपाभाव स्यात्। अस्ति चेद्विधादिस्वरूप ? निरात्मका सर्वे भावा इत्यमुष्य सगरस्य व्याघात ।

**क्षणिकत्वाच्च विज्ञानस्य तदभिसंधानाभावः ॥ ८ ॥** क्षणमात्रावलंबिनि विज्ञाने पात्रभूतो यम्प्रपिस्ताप स्वाध्यायपरायणो मामनुगृहीष्यति । असमै च दयमिद मतशीलभावनापरिबृंहणकर । अय चात्र विधिरित्यभिसंधिर्न स्यात् ।

**पूर्वोत्तरक्षणविषयसंस्कारावग्रहसमर्थैकज्ञानाभावात् नित्यत्वाज्ञत्वनिष्क्रियत्वाच्च ॥ ९ ॥** यस्यापि दर्शने सत आत्मनोऽकारणत्वान्नित्यत्व ज्ञानगुणादर्थांतरभूतत्वादज्ञत्व सर्वगतत्वान्निष्क्रियत्व तस्य तत एव विधाद्यनुपपत्ति ।

**क्रियागुणसमवायादुपपत्तिरिति चेन्न तत्परिणामाभावात् ॥ १० ॥** स्यादेतत् अर्थांतरत्वेपि इहेद बुद्धिलक्षणात् समवायादेकत्वापत्ताविव तद्व्यपदेशोपपत्ते विधाद्युपपत्तिरिति ? तन्न । किं कारण ? तत्प-रिणामाभावात् । यथा देवदत्तस्य दडयोगाद्दडिव्यपदेशोऽपि न दडस्वभावापत्ति तथात्मनोपि क्रियागुणव्यप-देशेपि तत्स्वभावसंक्रमाभाव ततश्चाधिकृतविधाद्यभाव एव ।

**क्षेत्रस्य वाचेतनत्वात् ॥ ११ ॥** यस्यापि दर्शने चतुर्विंशतिविध क्षेत्र अचेतन, क्षेत्रज्ञश्चेतन पुरुष इति तस्यापि क्षेत्रस्याचेतनत्वाद्विधाद्यभिसंधानाभावो घटादिवत् । अथास्ति विधाद्यभिसंधिर्न तर्हि अचेतनं क्षेत्र, क्षेत्रज्ञस्य च नित्यत्वात् शुद्धत्वात् नि क्रियत्वादेव विधाद्यनुपपत्ति ।

**स्याद्वादिनस्तदुपपत्तिरनेकांताश्रयणात् ॥ १२ ॥** स्याद्वादिनस्तु तेषां विधादीनां उपपत्तिः कुत ? अनेकांताश्रयणात् । स्यान्नित्य आत्मा स्यादनित्य इत्येवमाद्यनेकांताश्रयणादेकांतदृष्टिदोषाभाव ।

इति तत्त्वार्थवार्तिकव्याख्यानालंकारे सप्तमोऽध्याय ॥ ७ ॥

---

ॐ नमः सिद्धेभ्यः ।

# अथाष्टमोऽध्यायः ।

आस्रवपदार्थ उक्त । अवसरप्राप्त बंध व्याचक्ष्महे । स पुनश्चेतनेतरद्रव्यपरिणाम नामादिचतुष्टय-धर्मभागपि द्रव्यभावसंबंधविशेषाद्द्वैविध्यमवस्थां बिभर्ति । तत्र जतुकाष्ठरज्जुनिगलादिलक्षण द्रव्यबंध बहु-प्रकार हित्वा प्रकरणसामर्थ्याद्भावबंध ब्रूम । स द्वेधा कर्मनोकर्मबंधभेदात् । मातापितृपुत्रस्नेहसंबंध नोकर्मबंध । य पुन अयमितर कर्मबंध । तं पौनर्भविककर्मबंधसंततिसद्भावादादिमंतमनादिमंत च प्रतिजानीमहे बीजांकुरप्रादुर्भावसंतानवत् । आस्तामेतावद्व्याख्यान इदमेव तावदत्र वक्तव्य–इमे बंधहेतवो येभ्य बंध प्रवर्तत इति । इतरथा हि बंधपदार्थप्रक्लृप्तये पुनस्तद्धेतव प्रणेतव्या स्यु । स्यादेतत्

**अकस्माच्च तद्भावात् ॥ १ ॥** यद्यकस्माद्बंधो मोक्ष कस्मान्नाकस्मात्, न चाकस्माद्बंधमोक्षौ तदर्थप्रक्रियाया विरोधप्रसंगात्। अतो बंधमुक्त्वा मापुनर्वोच इति आदौ एव बंधकारणनिर्देशोऽनुष्ठेय। कार्यकारणयोश्च पूर्वापरभावात् पूर्वं कारणं वाच्य पश्चात् कार्यमुच्यते। न वक्तव्या पुनरिह यस्मात् षष्ठसप्तमयो विविधफलानुग्रहतन्त्रास्त्रवप्रकरणवशात् सप्रपंचा, आत्मन कर्मबंधहेतवो व्याख्याता.। के पुनस्त ?

## मिथ्यादर्शनाविरतिप्रमादकषाययोगा बंधहेतवः ॥१॥

क्व पुनरेते ? उक्ता.

**मिथ्यादर्शनं क्रियास्वंतर्भूतं ॥ १ ॥** पंचविंशति. क्रिया उक्ता तास्वंतर्भूत मिथ्यादर्शन द्रष्टव्य।

**विरतिप्रतिपक्षभूताप्यविरतिः ॥ २ ॥** विरतिर्व्याख्याता तत्प्रतिपक्षभूता अविरतिरपि तत्रैव वर्णिता--इंद्रियकषायाव्रतक्रिया इत्यत्र।

**आज्ञाव्यापादनानाकांक्षक्रिययोरंतर्भावः प्रमादस्य ॥ ३ ॥** आज्ञाव्यापादनक्रियानाकांक्षक्रियेत्यनयो प्रमादस्यांतर्भावो वेदितव्य। (सच प्रमाद कुशलेष्वनादर मनसोऽप्रणिधान)

**कषाया क्रोधादय प्रोक्ताः ॥ ४ ॥** क्रोधादयोऽनंतानुबंध्यप्रत्याख्यानसंज्वलनाविकल्पा कषाया. प्रोक्ता। क्व ? इंद्रियकषायाव्रतक्रिया इत्यत्रैव।

**योगः कायादिविकल्प प्रक्लृप्तः ॥ ५ ॥** योगश्च कायादिविकल्प प्रक्लृप्त'। क्व ? कायवाङ्मनस्कर्मयोग इत्यत्र।

**मिथ्यादर्शनं द्वेधा नैसर्गिकपरोपदेशनिमित्तभेदात् ॥ ६ ॥** मिथ्यादर्शन द्वेधा व्यवतिष्ठते कुत ? नैसर्गिकपरोपदेशनिमित्तभेदात्।

**तत्रोपदेशनिरपेक्षं नैसर्गिकं ॥ ७ ॥** तत्र परोपदेशमंतरेण मिथ्याकर्मोदयवशात् यदाविर्भवति तत्त्वार्थाश्रद्धानलक्षण तन्नैसर्गिकमिति व्यवसीयते।

**परोपदेशनिमित्त चतुर्विधं क्रियाक्रियावाद्याज्ञानिकवैनेयिकमतविकल्पात् ॥ ८ ॥** परोपदेशनिमित्त मिथ्यादर्शन चतुर्विध अवगतव्य। कुत ? क्रियाक्रियावाद्याज्ञानिकवैनेयिकमतविकल्पात्।

**चतुरशीतिक्रियावादाः इति कौक्कलकांड विद्धिप्रभृतिमतविकल्पात् ॥ ९ ॥** कौक्कलकांडे विद्धिकौशिकहरिश्मश्रुमान्कपिकरोमशहारिताश्वमुंडाशालयनादिमतविकल्पात् क्रियावादाश्चतुरशीतिविधा द्रष्टव्या।

**अशीतिशतमक्रियावादानां ॥ १० ॥** मरीचिकुमारोलूककपिलगार्ग्यव्याघ्रभूतिवाद्वलिकमाठरमौद्गलायनप्रभृतिदर्शनभेदात् अक्रियावादा अशीतिशतसंख्या प्रत्येतव्या।

**आज्ञानिकवादाः सप्तषष्टिसंख्याः साकल्यवाष्कलप्रभृतिदृष्टिभेदात् ॥ ११ ॥** साकल्यवाष्कलकुथुमिसात्यमुग्रिचारायणकठमाध्यंदिनीमौदपैप्पलादबादरायणस्विष्टिकृदैतिकायनवसुजैमिनिप्रभृतिदृष्टिभेदात् सप्तषष्टिसंख्या आज्ञानिकवादा ज्ञेया।

**वैनयिकानां द्वात्रिंशद्वशिष्ठपाराशरादिमार्गभेदात् ॥ १२ ॥** वाशिष्टपाराशरजतुकर्णवाल्मीकिरोमहर्षिणसत्यदत्तव्यासैलापुत्रौपमन्यवेंद्रदत्तायस्थूलादिमार्गभेदात् वैनयिका द्वात्रिंशद्गणना भवति। त एते मिथ्योपदेशभेदा त्रीणि शतानि त्रिषष्ठ्युत्तराणि। अत्र चोद्यते—बादरायणवसुजैमिनिप्रभृतीना श्रुतिविहितक्रियानुष्ठायिना कथमाज्ञानिकत्वमित्युच्यते प्राणिवधधर्मसाधनाभिप्रायात्। न हि प्राणिवध. पापहेतुर्धर्मसाधनत्वमाप्तुमर्हति।

**आगमप्रामाण्यात् प्राणिवधो धर्महेतुरितिचेन्न तस्यागमत्वासिद्धेः ॥ १३ ॥** स्यादेतत्

अपौरुषेयो वेदागमोस्ति तस्य कर्तृदोषानुपगाशङ्काभावात् प्रामाण्यमतस्तत्र प्रणीत प्राणिवधो धर्महेतुरिति ? तन्न । किं कारण ? तस्यागमकत्वासिद्धे । सर्वप्राणिहितानुशासने हि प्रवृत्त आगम, न हिंसाविधायि वच. आगमो भवितुमर्हति दस्युजनवचनवत् । किंच—

**अनवस्थानात् ॥ १४ ॥** यथाद्य पुष्य अद्य पुनर्वसू इति विसंवादिवचोनवस्थानात अप्रमाण तथा वेद एव क्वचित् प्रदेशे धर्महेतु पशुवध उक्त । पशुवधेन सर्वान् कामान् न वाप्नोति " यज्ञो हि भूत्यै सर्वस्य तस्माद्यज्ञे वधो वध " इति च । क्वचिन पुनरजै त्रिवर्षपरमोषितैर्व्रीहिभिरज पिष्टमय कृत्वा यष्टव्यमिति, हिंसा परिहृता । अतोनवस्थानाच्च वेदागमस्याप्रामाण्य । किंच—

**परमागमे प्रतिषिद्धत्वात् ॥ १५ ॥** अर्हता भगवता प्रोक्ते परमागमे प्रतिषिद्ध प्राणिवध सर्वत्र हिंसाविरति श्रेयसीति । अत परमागमे प्रतिषिद्धत्वात् न धर्महेतु प्राणिवध ।

**तदसिद्धिरिति चेन्नातिशयज्ञानाकरत्वात् ॥ १६ ॥** स्यान्मत आर्हतस्य प्रवचनस्य परमागमत्वमसिद्ध तस्य पुरुषकृतित्वे सति अयुक्तेरिति तन्न। किं कारण ? अतिशयज्ञानाकरत्वात्। यदिद जीवादिपदार्थस्वरूपनिरूपण नयप्रमाणाद्यधिगमोपायप्रापितयुक्तिबंधमोक्षादिप्रतिपादनसमर्थमित्येवमादीनामतिशयज्ञानानामाकर आर्हत आगम, रत्नानामिवोदधि, अतोस्य परमागमत्व ।

**अन्यत्राप्यतिशयज्ञानदर्शनादिति चेन्नात एव तेषां संभवात् ॥१७॥** स्यान्मतमन्यत्रापि अतिशयज्ञानानि दृश्यते । कल्पव्याकरणछन्दोज्योतिषादीनि ततोनैकान्तिकत्वात् नाय हेतुरिति ? तन्न । किं कारण ? अत एव तेषा संभवात् । आर्हतमेव प्रवचन तेषा प्रभव । उक्तं च—

सुनिश्चित न परतन्त्रयुक्तिषु स्फुरति या काश्चनसूक्तसंपद ।
तवैव ता पूर्व महार्णवोत्थिता जगत्प्रमाण जिनवाक्यविप्रुष ॥ इति ।

**श्रद्धामात्रमिति चेन्न भूयसामुपलब्धेरत्नाकरवत् ॥ १८ ॥** स्यादेतत् आर्हतमेव प्रवचन सर्वेषा अतिशयज्ञानाना प्रभव इति श्रद्धामात्रमेतत् न युक्तिक्षममिति ? तन्न। किं कारण ? भूयसामुपलब्धेरत्नाकरवत्। यथा ग्रामनगरपत्तनादिषु दृश्यमानानामपि रत्नाना तत्प्रभवत्वमध्यवस्यति लोक, भूयसामुपलब्धेरत्नाकरवत्तेषा प्रभव इति अध्यवसीयते । तथा सर्वातिशयज्ञाननिधानत्वात् जैनमेव प्रवचन आकर इत्यवगम्यते ।

**तदुद्भवत्वात्तेषामपि प्रामाण्यमिति चेन्न निःसारत्वात् काचादिवत् ॥ १९ ॥** अथ मतमेतत् यदि वेदव्याकरणादीना अर्हत्प्रवचनोद्भवत्वमभ्युपगम्यते तेषा प्रामाण्यात् तद्विहितहिंसाद्यनुष्ठानदानादिवन्न दोषकारण ? इति तन्न । किं कारण ? नि सारत्वात् यथा काचमणिक्षारसंबूकादीना रत्नाकरसमुद्भवत्वेपि नि सारत्व । तथा वेदादीना जिनशासनसमुद्रसमुद्भवत्वेपि न प्रामाण्यमित्यवसेय । किंच—

**सर्वेषामविशेषप्रसंगात् ॥ २० ॥** यदि हिंसा धर्मसाधन मत्स्यवधशाकुनिकसौकरिकादीना सर्वेषामविशिष्टा धर्मावाप्ति स्यात् । ततश्चाऽहिंसालक्षणोधर्म इत्येवमादिवचनमयुक्त स्यात् ।

**यज्ञात्कर्मणोन्यत्र वध पापायेति चेन्नोभयत्र तुल्यत्वात् ॥ २१ ॥** स्यादेतत् यज्ञे पशुवध प्रत्यवायहेतुर्न भवति अन्यत्र पापहेतुरिति न अहिंसालक्षणधर्मविरोध इति ? तन्न किं कारण ? उभयत्र तुल्यत्वात् । उभयत्र हि असौ दु खहेतुत्वेन तुल्य, अत फलेनापि समेन भवितव्य । अतर्वेदिगत पशुवध प्रत्यवायहेतु प्राणवियोगहेतुत्वात् । बहिर्वेदिपशुवधवत् ।

**विपर्ययो वा तादर्थ्यात् सर्गस्येति चेन्न साध्यत्वात् ॥ २२ ॥** स्यादेतत् "यज्ञार्थं पशव सृष्टा स्वयमेव स्वयभुवा । इत्यभिसर्गस्य यज्ञार्थत्वात् न तस्य विनियोक्तु पापमिति ? तन्न किं कारण ? साध्यत्वात् । साध्यमेतत् स्वयभुवा यज्ञार्थं पशव सृष्टा इति" किंच—

**अन्यथोपयोगे दोषप्रसंगात् ॥ २३ ॥** यदि यदर्थं तस्यान्यथोपयोगे दोषो दृष्ट यथा श्लेष्मप्रशमनार्थं औषध, अन्यथा प्रयुज्यमान दोषकर तथा यज्ञार्थं पशुसर्ग इति कृत्वा क्रयविक्रयादिषु क्रियमाणेषु कर्तुरनिष्टफलावाप्ति प्रसज्येत ।

**मंत्रप्राधान्याददोष इति चेन्न प्रत्यक्षविरोधात् ॥ २४ ॥** स्यान्मत यथा विष मन्त्रप्राधान्यादुपयुज्यमान न मरणकारण । तथा पशुवधोपि मन्त्रसंस्कारपूर्वक क्रियमाणो न पापहेतुरिति ? तन्न किं कारण प्रत्यक्षविरोधात् । यथा मन्त्रेणाऽसंक्रियमाण गौरवहीन प्रत्यक्षत उपलभ्यत । यथा वा विना रज्जुनिगलादिबंधेभ्यो जलमनुष्यादिस्तंभयत प्रत्यक्षत प्रतीता मन्त्रबलादेव केवलात् । तथा यदि मन्त्रेभ्य एव केवलेभ्यो यज्ञे कर्मणि पशून्निपातयत दृश्येरन् मन्त्रबल श्रद्धीयेत । दृश्यते तु रज्ज्वादिभिर्मारण तस्मात् प्रत्यक्षविरोधात् मन्यामहे न मन्त्रसामर्थ्यमिति ।

**हिंसादोषाविनिवृत्तेः ॥ २५ ॥** अभ्युपगम्योच्यते—यथा शस्त्रादिभि प्राणिनो व्यापादयन्नशुभाभिसंधि पापेन बध्यते तथा मन्त्रैरपि पशून् मारयन् दुष्कर्मबधो भवेदेवेति हिंसादोषो न निवर्तते ।

**नियतपरिणामनिमित्तस्यान्यथाविधिनिषेधासंभवात् ॥ २६ ॥** नियत शुभाशुभलक्षण परिणाम प्रतीत्य पुण्यपापकर्मबंधो भवति । नासावन्यथा विधातु निषद्धु वा शक्यते । यदि स्यादसंचेतितकर्मबंधाभ्युपगमे बंधमोक्षप्रक्रियाविरोध स्यात् ।

**कर्तुरसंभवाच्च ॥ २७ ॥** 'अग्निहोत्र जुहुयात् स्वर्गकाम इति' अग्निहवनादिक्रियाया कर्ता पिंडो वा स्यात् भौतिक पुरुषो वा ? । यदि भौतिक पिंड तस्याचेतनत्वात् घटादिवत् पुण्यापुण्यलक्षणक्रियासचेतनाभावात् कर्तृत्वाभाव । अथ पुरुष स नित्यो वा स्यात् क्षणिको वा ? यदि क्षणिक मन्त्राद्यनुस्मरणतत्प्रयोगानुविधानचिंतनाद्यभावात् न कर्तृत्वमुपपन्न । अथ हि नित्य स्यात् पूर्वापरकालतुल्यत्वात विक्रियाविरहे दूरादेव कर्तृत्व व्यावृत्त तत कर्तुरभावात् क्रियाफलानभिसंबध , पुरुष एवेद सर्वं यच्च भूत यच्च भाव्यमित्येवमाद्युपनिषद्वाक्यप्रामाण्याच्च, एकपुरुषैकांतकल्पनाया बध्यघातकादिविवेकाभाव । चेतनाशक्तिपरिणाममात्राभ्युपगमे च दृश्यस्य विरूपस्याभावात् प्रत्यक्षविरोध । प्रमाणतदाभासाविशेषप्रसंगस्तु, निर्विकल्पपुरुषतत्त्वकल्पनाया च निर्विकल्पकत्वादिविकल्पभावाभावयो संगरवचननिरोधप्रसंगश्चेति विषयतृष्णातुरविकल्पित वैदिकवचन न प्रामाणिक कर्तव्य । एव परोपदेशनिमित्तमिथ्यादर्शनविकल्पा अन्ये च संख्येया योज्या , ऊह्या । परिणामविकल्पात् असंख्येयाश्च भवति । अनंता , अनुभागभेदाद्यनैसर्गिक मिथ्यादर्शन तदप्येकद्वित्रिचतुरिंद्रियासंज्ञिपचेंद्रियसंज्ञितिर्यङ्म्लेच्छशबरपुलिंदादिपरिग्रहादनेकविध ।

**पंचविध वा ॥ २८ ॥** अथवा पचविध मिथ्यादर्शनमवगतव्य—एकातमिथ्यादर्शन विपरीतमिथ्यादर्शन संशयमिथ्यादर्शन वैनयिकमिथ्यादर्शन आज्ञानिकमिथ्यादर्शन चेति । तत्रेदमेवेत्थमेवेति धर्मिधर्मयोरभिनिवेश एकात , पुरुष एवेद सर्वं इति वा । नित्य एव वा अनित्य एवेति सग्रन्थो निर्ग्रंथ , केवली कवलाहारी स्त्री सिद्ध्यतीत्येवमादिर्विपर्यय । सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग किं स्याद्वा नवेति मतिद्वैत संशय । सर्वदेवताना सर्वसमयाना च समदर्शन वैनयिकत्व । हिताहितपरीक्षाविरह आज्ञानिकत्व ।

**अविरतिकषाययोगा द्वादशपंचविंशतित्रयोदशभेदा ॥ २९ ॥** अविरति कषाय योग इत्येते द्वादश पचविंशति- त्रयोदश-भेदा द्रष्टव्या । तत्र पृथिव्यप्तेजोवायुवनस्पतित्रसकायचक्षुःश्रोत्रघ्राणरसनस्पर्शननोइंद्रियेषु हननासयमनाविरतिभेदात् द्वादशविधा अविरति । षोडश कषाया नव नोकषाया ईषद्भेदो नोभेद इति पचविंशति कषाया । चत्वारो मनोयोगा चत्वारो वाग्योगा , पच काययोगा इति त्रयोदशविकल्पो योग । आहारककाययोगाऽऽहारकमिश्रयोगयो प्रमत्तसंयते संभवात् पचदशापि भवति ।

**प्रमादोनेकविधिः ॥३०॥** भावकायविनयेर्यापथभैक्ष्यशयनासनप्रतिष्ठापनवाक्यशुद्धिलक्षणाष्टविधसंयमोत्तमक्षमामार्दवार्जवशौचसत्यतपस्त्यागाऽऽकिंचन्यब्रह्मचर्यादिविषयानुत्साहभेदादनेकविध. प्रमादोवसेय ।

**समुदायावयवयोर्बंधहेतुत्वं वाक्यपरिसमाप्तेर्वैचित्र्यात् ॥ ३१ ॥** मिथ्यादर्शनादीना बधहेतुत्व समुदायेऽवयवे च वेदितव्य । कुत ? वाक्यपरिसमाप्तेर्वैचित्र्यात् । तत्र मिथ्यादृष्टे पचापि समुदिता बधहेतव । सासादनसम्यग्दृष्टि–सम्यङ्मिथ्यादृष्टि–असयतसम्यग्दृष्टीनामविरत्यादयश्चत्वार । सयतासयतस्याविरतिमिश्रा प्रमादकषाययोगाश्च । प्रमत्तसयतस्य प्रमादकषाययोगा । अप्रमत्तादीना चतुर्णां कषाययोगौ । शांतक्षीणकषायसयोगकेवलिनां एक एव योग । अयोगकेवली, अबधहेतु । तत्र च मिथ्यादर्शनादिविकल्पानां प्रत्येक बधहेतुत्वमवगतव्य । न हि सर्वाणि मिथ्यादर्शनानि एकस्मिन्नात्मनि युगपत् सभवति । नापि हिंसादय सर्वे परिणामा ।

**अविरतेः प्रमादस्य चाविशेष इति चेन्न विरतस्यापि प्रमाददर्शनात् । ३२ ॥** स्यादेतत् प्रमादोपि, अविरतिरेवेति पृथग्ग्रहणमनर्थकमिति तन्न । किं कारण ? विरतस्यापि प्रमाददर्शनात् विरतस्यापि पचदशप्रमादा सभवति–विकथाकषायेंद्रियनिद्राप्रणयलक्षणा ।

**कषायाविरत्योरभेद इति चेन्न कार्यकारणभेदोपपत्ते ॥ ३३ ॥** स्यादेतत् कषायाविरत्योर्नास्ति भेद उभयोरपि हिंसादिपरिणामरूपत्वादिति ? तन्न । किं कारण ? कार्यकारणभेदोपपत्ते । कारणभूता हि कषाया कार्यात्मिकाया हिंसाद्यविरतेरर्थांतरभूता इति ।

आह—प्रपचेनोपपादितान् बधहेतूश्चिरजेष्म इद तु सदिह्य, अमूर्तेरात्मनो हस्ताद्यसभवे सत्यादानशक्तिविरहात् कथ सबधो भवतीति ? इमे ब्रूमहे

**आत्मकर्मसबधसततेः पूर्वापरीभावानवधारणात् ॥ ३४ ॥** नैवमवधार्यते–पूर्वमात्मा पश्चात् कर्माणि प्राक् वा कर्माण्यपर आत्मेति ऐकातिकाऽमूर्तत्वनिवृत्ति तत कार्मणशरीरसबधात्तप्ताय पिंडाभ इव–

## सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते स बंधः ॥ २ ॥

**पुनः कषायग्रहणमनुवाद इति चेन्न कर्मविशेषाशयवाचित्वात् जठराग्निवत् ॥ १ ॥** यथा जठराग्न्याशयानुरूपमभ्यवहरण तथा कषायेषु सत्सु तीव्रमदमध्यमकषायाशयानुरूपे स्थित्यनुभवने भवत इति एतस्य विशेषस्य प्रतिपत्त्यर्थ बधहेतुविधाने कषायग्रहण निर्दिष्ट पुनरनूद्यते ।

**जीवाभिधानं प्रचोदितत्वात् ॥ २ ॥** यच्चोदितममूर्तिरहस्तो जीव कथ कर्मादत्त इति तस्य प्रतिवचनार्थं जीव इत्यभिधीयते ।

**जीवनाविनिर्मुक्तत्वाद्वा ॥ ३ ॥** जीवनमायुस्तदविनिर्मुक्तोय कर्मादत्ते न विनिर्मुक्त इति, अतश्च जीववचन ।

**कर्मणो योग्यानिति पृथग्विभक्त्युच्चारण वाक्यांतरज्ञापनार्थं ॥ ४ ॥** कर्मयोग्यानिति लघुनिर्देशात् सिद्धे कर्मणो योग्यानिति पृथग्विभक्त्युच्चारण वाक्यांतरज्ञापनार्थं क्रियते किं पुनस्तद्वाक्यांतर ? कर्मणो जीव सकषायो भवतीत्येक वाक्य । एतदुक्त भवति कर्मण इति हेतुनिर्देश, कर्मणो हेतोर्जीव सकषायो भवति, नाकर्मकस्य कषायलेशोस्ति तत जीवकर्मणोरनादिसबध इति । द्वितीय वाक्य–योग्यान् पुद्गलानादत्त इति एतदुक्त भवति अर्थवशाद्विभक्तिपरिणाम इति प्राक्कर्मण इति हेतुनिर्देश इह सबधनिर्देश सपद्यते, सकषायत्वाज्जीव कर्मणो योग्यान् पुद्गलानादत्त इति ।

**पुद्गलवचन कर्मणस्तादात्म्यख्यापनार्थं ॥ ५ ॥** पुद्गलात्मक कर्मेत्येतस्य विशेषस्य ख्यापनार्थं पुद्गलग्रहण क्रियते ।

**तदसिद्धमिति चेन्नामूर्तेरनुग्रहोपघाताभावात् ॥ ६ ॥** स्यादेतत् पौद्गलिक कर्मेत्येतदसिद्ध आत्मगुणत्वात् तस्येति ? तन्न । किं कारण ? अमूर्तेरनुग्रहोपघाताभावात् । यथाऽऽकाशममूर्ति दिगादीनाममूर्तानां नानुग्राहक उपघातक च तथैवामूर्ति कर्मामूर्तेरात्मनोनुग्राहकोपघातयोर्हेतुर्न स्यात् ।

**आदत्त इति प्रतिज्ञातोपसंहारार्थं ॥ ७ ॥** यत्प्रतिज्ञातं सकषायत्वाज्जीवो बधमनुभवति इति तस्योपसहारार्थं इदमुच्यते आदत्त इति ।

**अतस्तदुपश्लेषो बंधः ॥ ८ ॥** अतो मिथ्यादर्शनाद्यावेशादार्द्रीकृतस्यात्मनः सर्वतो योगविशेषात् तेषां सूक्ष्मैकक्षेत्रावगाहिनां अनंतप्रदेशानां पुद्गलानां कर्मभावयोग्यानामविभागेनोपश्लेषो बंध इत्याख्यायते ।

**तद्भावो मदिरापरिणामवत् ॥ ९ ॥** यथा भाजनविशेषे प्रक्षिप्तानां विविधरसबीजपुष्पफलानां मदिराभावेन परिणामः तथा पुद्गलानामपि आत्मनि स्थितानां योगकषायवशात् कर्मभावेन परिणामो वेदितव्यः ।

**सवचनमन्यनिवृत्त्यर्थं ॥ १० ॥** स एव बंधो नान्योऽस्तीत्यन्यनिवृत्त्यर्थं सवचनं क्रियते तेन गुणिगुणबंधो निवर्तितो भवति । यदि हि गुणिगुणबंधः स्यात् मुक्त्यभावः प्रसज्येत, गुणस्वभावापरित्यागाद् गुणिनः, स्वभावपरित्यागे च गुणिनोऽप्यभाव इति मुक्त्यभावः ।

**करणादिसाधनेष्वयं बंधशब्दो द्रष्टव्यः ॥ ११ ॥** तत्र करणसाधनस्तावत् बध्यतेऽनेनात्मेति बंधः । "हलः" इति करणे घञ् । कः पुनरसौ मिथ्यादर्शनादिः । ननु स बंधहेतुरुक्तः कथं बंधो भवितुमर्हति सत्यमेवमेतत् अभिनवद्रव्यकर्मादाननिमित्तत्वाद् बंधहेतुरपि सन् पूर्वोपात्तकर्महेतुकत्वात् कार्यतामास्कंदन् तदनुविधानात् आत्मनोऽस्वतंत्रीकरणत्वात् करणव्यपदेशमर्हतीति तदनेनात्मनात्मसात्क्रियते इति कर्मसाधनत्वमपि च युक्तिमत् ज्ञानदर्शनाव्याबाधानामगोत्रानंतरायत्वलक्षणं पुरुषसामर्थ्यं प्रतिबध्नाति बंधः इति कर्तृसाधनत्वमपि चोपपत्तिमत् एवं बंध इति भावसाधनो वाऽस्वतंत्रीक्रियामात्रविवक्षायां । ननु भावसाधने सामानाधिकरण्यं नोपपद्यते ज्ञानावरणं बंध इति नैष दोषः तदव्यतिरेकात् भावस्य तद्वता सामानाधिकरण्यं भवति । यथा ज्ञानमेवात्मेति । एवमितरसाधनयोजना च कर्तव्या ।

**तस्योपचयापचयसद्भावः कर्माऽऽयव्ययदर्शनाद्व्रीहिकोष्ठागारवत् ॥ १२ ॥** यथा कोष्ठागारे व्रीहीणामन्येषां निर्गमादपरेषां च प्रवेशनात् उपचयापचयौ दृष्टौ तथानादिकार्मणकोष्ठागारस्यान्येषां कर्मणां भोगादानदानाच्चेतरेषामुपचयापचयौ स्तः ।

आह किमयं बंध एकरूप एव आहोस्वित् प्रकारा अपि अस्य सन्तीत्यत इदमाह—

## प्रकृतिस्थित्यनुभव ( भाग ) प्रदेशास्तद्विधयः ॥ ३ ॥

**अकर्तरीत्यनुवृत्तेरपादानसाधना प्रकृतिः ॥ १ ॥** श्रिया क्तिरित्यत्र अकर्तरीत्यनुवर्तते तस्मादपादाने प्रकृतिशब्दो व्युत्पाद्यते प्रक्रियते अस्या ज्ञानावरणादेरर्थानवगमादिति प्रकृतिः ।

**भावसाधनौ स्थित्यनुभवौ ॥ २ ॥** स्थानं स्थितिः अनुभवनमनुभव इति भावसाधनत्वमनयोरवगंतव्यं ।

**कर्मसाधनः प्रदेशशब्दः ॥ ३ ॥** प्रदिश्यतेऽसाविति प्रदेशः कर्मणि घञ् ।

**प्रकृतिः स्वभाव इत्यनर्थांतरं ॥ ४ ॥** *यथा निंबस्य का प्रकृतिः तिक्ततास्वभावः ।* गुडस्य का प्रकृतिः मधुरतास्वभावः । तथा ज्ञानावरणीयस्य का प्रकृतिः अर्थानवगमः । प्रकृतिः स्वभाव इत्यनर्थांतरं । एवं दर्शनावरणस्य अर्थानालोचनं, वेद्यस्य सदसल्लक्षणस्य सुखदुःखसंवेदनं, दर्शनमोहस्य तत्त्वार्थाश्रद्धानं, चारित्रमोहस्याऽसंयमः परिणामः, आयुषो भवधारणं, नाम्नो नारकादिनामकरणं, गोत्रस्य उच्चैर्नीचैःस्थानसंशब्दनं, अंतरायस्य दानादिविघ्नकरणं तदेव लक्षणं कार्यं प्रक्रियते प्रभवत्यस्या इति प्रकृतिः ।

**तत्स्वभावाप्रच्युतिः स्थितिः ॥ ५ ॥** तस्य स्वभावस्य अप्रच्युतिः स्थितिरित्युच्यते । यथा अजागोमहिष्यादिक्षीराणां माधुर्यस्वभावादप्रच्युतिः स्थितिः । तथा ज्ञानावरणादीनामर्थानवगमादिस्वभावादप्रच्युतिः स्थितिः ।

**तद्रसविशेषोनुभवः ॥ ६ ॥** यथा—अजागोमहिष्यादिक्षीराणां तीव्रमन्दादिभावेन रसविशेष तथा कर्मपुद्गलानां स्वगतसामर्थ्यविशेषोनुभव इति कथ्यते ।

**इयत्तावधारण प्रदेशः ॥ ७ ॥** कर्मभावपरिणतपुद्गलस्कन्धानां परमाणुपरिच्छेदेनावधारण प्रदेश इति व्यपदिश्यते ।

**विधिशब्दः प्रकारवचन ॥ ८ ॥** अय विधिशब्द प्रकारवचनो द्रष्टव्य विधय प्रकारा इति । यावत् तस्य विधयस्तद्विधय बधप्रकारा इत्यर्थ । त एते प्रकृत्यादयश्चत्वारो बधप्रकाराः ।

**तत्र योगनिमित्तौ प्रकृतिप्रदेशौ ॥ ९ ॥** तेषु बधविकल्पेषु प्रकृतिबध प्रदेशबध इत्येतौ द्वौ योगनिमित्तौ वेदितव्यौ ।

**स्थित्यनुभवौ कषायहेतुकौ ॥ १० ॥** स्थितिविधोनुभवबध इत्येतौ द्वावपि कषायहेतुकौ प्रत्येतव्यौ तत्प्रकर्षाप्रकर्षभेदात् तद्बधविचित्रभाव । कारणानुरूप हि कार्यमिति ।

**आद्यो द्वेधा मूलोत्तरप्रकृतिभेदात् ॥ ११ ॥** आद्य प्रकृतिबध द्वेधा विभज्यते। कुत ? मूलोत्तरप्रकृतिभेदात्। यद्येव कास्ता मूलप्रकृतय इत्यत्रोच्यते—

## आद्यो ज्ञानदर्शनावरणवेदनीयमोहनीयायुर्नामगोत्रांतरायाः ॥४॥

**सामानाधिकरण्ये सति पूर्वोत्तरवचनविरोध इति चेन्नोभयनयधर्मविवक्षासद्भावात् ॥१॥** स्यादेतत् ज्ञानावरणादयोंतरायांता प्रकृतिबधो नान्य इति ज्ञानावरणादिभि सामानाधिकरण्यात् आद्यशब्दस्य बहुवचनप्रसग इति ? तन्न किं कारण ? उभयनयधर्मविवक्षासद्भावात् । द्रव्यार्थिकनयविषयस्य सामान्यस्य विवक्षात प्रकृतिबध एक इत्याद्यशब्दादेकवचनप्रयोग कृत, तस्य विशेषा ज्ञानावरणादय पर्यायार्थिकनयविषयभूता प्राधान्येन विवक्षिता इति तेभ्य बहुवचनप्रयोग कृत । दृश्यते हि लोके सत्यपि सामानाधिकरण्ये वचनभेदा । यथा प्रमाण श्रोतार, गावो धनमिति ।

**यथासंभवं कर्त्रादिसाधनत्वं ज्ञानावरणादिशब्दानां ॥ २ ॥** ज्ञानावरणादय शब्दाः कर्त्रादिषु यथासभव साधयितव्या । तद्यथा—आवृणोति आव्रियतेऽनेन वा इत्यावरण, आवरणशब्द प्रत्येक परिसमाप्यते ज्ञानावरण दर्शनावरणमिति। ननु करणाधिकरणयोरनट्, कथ कर्तरि?बहुलापेक्षया। वेद्यत इति वेदनीय "कर्मण्यनीय" मोहयति मुह्यतेऽननेति वा मोह, कथ ज्ञानावरणीय दर्शनावरणीय मोहनीयमिति ? बहुलापेक्षया कर्त्तर्यनीय । एत्यनेन गच्छति नारकादिभवमित्यायु । जनेरुसिति प्रकृते, एतेर्णिद्वेत्युसि । नमयत्यात्मान नारकादिभावेन नम्यतेनेनेति नाम, उणादिषु निपातित शब्द । उच्चैर्नीचैश्च गूयते शब्द्यतेनेनेति गोत्र । अतर मध्य दातृदेयादीनामतर मध्यमेति ईयते वानेनेत्यतराय ।

**बहिर्योगे वा ॥ ३ ॥** यस्मिन् मध्येऽवस्थिते दात्रादीनां दानादिक्रियाभाव, दानादीच्छाया बहिर्भावो वा सोंतराय ।

**प्रयोगपरिणामादागच्छदेवाऽविशिष्ट कर्माऽऽवरणादिविशेषैर्विभज्यते अन्नादेर्वातादिविकारवत् ॥ ४ ॥** *यथाऽन्नादेरभ्यवह्रियमाणस्यानेकविकारसमर्थवातपित्तश्लेष्मखलरसभावेन परिणामविभाग* तथा प्रयोगापेक्षानतरमेव कर्माण्यावरणानुभवनमोहापादानभवधारणनानाजातिनामगोत्रव्यवच्छेदकरणसामर्थ्यवैश्वरूप्येणाऽऽत्मनि सन्निदान प्रतिपद्यते ।

**ज्ञानावरणमेव मोह इति चेन्नार्थांतरभावात् ॥ ५ ॥** स्यादेतत् सति मोहे हिताहितपरीक्षणाभावात् ज्ञानावरणादविशेषो मोहस्येति तन्न । किं कारण ? अर्थांतरभावात् । याथात्म्यमर्थस्यावगम्यापि इदमेवेति सद्भूतार्थाश्रद्धान, यत स मोह । ज्ञानावरणेन ज्ञान तथा यथा वा न गृह्णाति ।

**कार्यभेदे च कारणान्यत्वात् ॥ ६ ॥** यथा भिन्नलक्षणांकुरदर्शनात् बीजकारणान्यत्वं तथैवाज्ञानचारित्रमोहकार्यांतरदर्शनात् ज्ञानावरणमोहनीयकारणभेदोऽध्यवसीयते ।

**ज्ञानदर्शनयोरन्यत्वं प्रयुक्तं ॥ ७ ॥** ज्ञानदर्शनयोरन्यत्वं पुरस्ताद्विहितं अत. किं ? ज्ञानदर्शन कार्यान्यत्वात् यत् क्षयक्षयोपशमकरणे ज्ञानदर्शने तयोरपि ज्ञानदर्शनावरणयोरन्यत्वं सिद्धं ।

**ज्ञानावरणस्याविशेषेपि प्रत्यास्रवं मत्यादीनामविशेषो जलवत् ॥ ८ ॥** यथाभो नभस. पतदेकरसं भाजनविशेषात् विष्वग् रसत्वेन विपरिणमते । तथा ज्ञानशक्त्युपरोधस्वभावविशेषात् उपनिपतत् कर्म प्रत्यास्रवं सामर्थ्यभेदात् मत्याद्यावरणभेदेन व्यवतिष्ठते ।

**एतेनेतराणि व्याख्यातानि ॥ ९ ॥** इतराणि दर्शनावरणादीनि मूलोत्तरप्रकृतिविकल्पानि उक्तेनैव क्रमेण व्याख्यातानि भवति । अत्र चोद्यते—

**पुद्गलद्रव्यस्यैकस्यावरणसुखदुःखादिनिमित्तत्वानुपपत्तिर्विरोधात् ॥ १० ॥** एकस्य पुद्गलद्रव्यस्यावरणसुखदु खादिनिमित्तत्वं नोपपद्यते कुत ? विरोधात् ।

**न वा तत्स्वाभाव्यादग्नेर्दाहपाकप्रतापप्रकाशसामर्थ्यवत् ॥ ११ ॥** नवैष दोष । किं कारणं ? तत्स्वाभाव्यात् । यथाग्नेरेकस्यापि दाहपाकप्रतापप्रकाशसामर्थ्यं न विरुध्यते, तथैकस्यापि पुद्गलद्रव्यस्यावरणसुखदु खादिनिमित्तत्वं न विरुध्यते । किंच—

**अनेकांतिकत्वात् ॥ १२ ॥** एकानेकलक्षणत्वात् द्रव्यस्य स्यादेकत्वं स्यादनेकत्वं । द्रव्यार्थदेशात् स्यादेकं पुद्गलद्रव्यं । अनेकपरमाणुस्निग्धरूक्षबंधापादितानेकात्मकस्कंधपर्यायार्थादेशात् स्यादनेकं ततश्च नास्ति विरोध ।

**पराभिप्रायेणेंद्रियाणां भिन्नजातीयानां क्षीराद्युपभोगे वृद्धिवत् ॥ १३ ॥** पराभिप्रायेणेदमुच्यते यथा पृथिव्यप्तेजोवायुभिरारब्धानामिंद्रियाणां भिन्नजातीयानां क्षीरघृतादिष्वेकमभ्युपयुज्यमानं अनुग्राहकं दृष्टं तथेदमपि इति ।

**वृद्धिरेकैवेति चेन्न प्रतींद्रियवृद्धिभेदात् ॥ १४ ॥** स्यादेतत् वृद्धिरेकैव, तस्या घृताद्यनुग्राहकमिति न विरोध इति ? तन्न किं कारण ? प्रतींद्रियवृद्धिभेदात् । यथैवेंद्रियाणि भिन्नानि तथैवेंद्रियवृद्धयोपि भिन्ना ।

**तथैवातुल्यजातीये नानुग्रहसिद्धिः ॥ १५ ॥** तथा भिन्नजातीयेन क्षीरेण तेजोजातीयस्य चक्षुषोनुग्राह । तथैवात्मकर्मणोश्चेतनाचेतनत्वात् अतुल्यजातीयं कर्मात्मनोनुग्राहकमिति सिद्धं । किमेतावानेव संख्याविकल्प ? नेत्युच्यते—

**एकादिसंख्येयविकल्पश्च शब्दत ॥ १६ ॥** एकाद्य संख्येयविकल्पा भवति शब्दत तत्रैकस्तावत् समादानकर्मबंध विशेषाणामविवक्षितत्वात्—

**सेनावनवत् ॥ १७ ॥** यथा सैनिकानां तुरगादीनां भेदानां अविवक्षायां समुदायादेशात् एका सेना । यथा वा अशोकतिलकबकुलादीनां भेदेनाविवक्षायां सामान्यादेशात् एकं वनं । स एव पुण्यपापभेदाद्विविध । यथा स्वामिभृत्यादेशात् द्विविधा सेना । त्रिविधो बंध अनादि सांत.। अनादिरनत । सादि सातश्चेति । भुजाकारात्पतरावस्थितभेदाद्वा प्रकृतिस्थित्यनुभवप्रदेशाच्चतुर्विध , द्रव्यक्षेत्रकालभवभावनिमित्तभेदात् पंचविध । षड्जीवनिकायविकल्पात् षोढा व्यपदिश्यते । रागद्वेषमोहक्रोधमानमायालोभहेतुभेदात् सप्ततयीं वृत्तिमनुभवति । ज्ञानावरणादिविकल्पादष्टधा, एवं संख्येया विकल्पा शब्दतो योज्या । चशब्देनाध्यवसायस्थानविकल्पात् असंख्येया । अनंतानंतप्रदेशस्कंधपरिणामविधिरनंत । ज्ञानावरणाद्यनुभवाविभागपरिच्छेदापेक्षया वा अनंत ।

**क्रमप्रयोजनं ज्ञानेनात्मनोधिगमात् ॥ १८ ॥** क्रमप्रयोजनमिदानीं वक्तव्य तदुच्यते ज्ञानावरण सर्वेषामादावुक्त कुत ज्ञानेनात्मनोधिगमात् । ज्ञान हि स्वाधिगमनिमित्तत्वात् प्रधान ।

**ततो दर्शनावरणमनाकारोपलब्धेः ॥१९॥** तत पश्चात् दर्शनावरणमुच्यते कुत अनाकारोपलब्धे साकारोपयोगाद्धि अनाकारोपयोगो निकृष्टोऽनभिव्यक्तग्रहणात् । उत्तरेभ्यस्तु प्रकृष्यते अर्थोपलब्धितत्त्वात् ।

**तदनंतर वेदनावचन तदव्यभिचारात् ॥ २० ॥** तदनतर वेदना उच्यते कुतस्तदव्यभिचारात् ज्ञानदर्शनाऽव्यभिचारिणी हि वेदना घटादिष्वप्रवृत्ते ।

**ततो मोहाभिधान तद्विरोधात् ॥ २१ ॥** तत पश्चात् मोहोभिधीयते कुतस्तद्विरोधात् । तेषां ज्ञानदर्शनसुखदु खानां विरोधात् । मूढो हि न जानाति न पश्यति न च सुखदु ख वेदयते । ननु च मूढानामपि सुखदु खज्ञानदर्शनानि उपलभ्यते । यदि हि विरोध स्यात् सुखदु खज्ञानदर्शनानि मिथ्यादृष्टयसयतानां न स्यु । नैष दोष कचिद्विरोधात् इत्युच्यते—न सर्वत्र मोहाभिभूतस्य हि कस्यचित् हिताहितविवेकादिर्नास्ति ।

**आयुर्वचन तत्समीपे तन्निबंधनत्वात् ॥ २२ ॥** तत्समीपे आयुर्वचन क्रियते कुतस्तन्निबधनत्वात् । आयुर्निबधनानि हि प्राणिनां सुखादीनि ।

**तदनतर नामवचन तदुदयापेक्षत्वात् प्रायोनामोदयस्य ॥ २३ ॥** तदनतर नाम वचन क्रियते कुत ? तदुदयापेक्षत्वात् प्रायो नामोदयस्य । आयुरुदयापेक्षोहि प्रायेण गत्याद्युदयो लक्ष्यते ।

**ततो गोत्रवचन प्राप्तशरीरादिकाभस्य सशब्दनाभिव्यक्तेः ॥ २४ ॥** परिप्राप्तशरीरादिलाभस्य हि पुस गोत्रोदयनिमित्त शुभाशुभ सशब्दन अभिव्यज्यते ततो नाम्नोनतर गोत्राभिधाम क्रियते ।

**परिशेषादतेंतरायवचन ॥ २५ ॥** अन्यस्याभावात् परिशेषात् अत अतरायवचन क्रियते । आह उक्तो मूलप्रकृतिबधोऽष्टविध । अथ द्वितीय पुनरुत्तरप्रकृतिबध कतिविध इत्यत्रोच्यते—

## पंचनवद्व्यष्टाविंशतिचतुर्द्विचत्वारिंशद्द्विपचभेदोयथाक्रम ॥ ५ ॥

**पचादीनां पचांतानां द्वद्वपूर्वोन्यपदार्थनिर्देशः ॥ १ ॥** पच नव च द्वौ च अष्टाविंशतिश्च चत्वारश्च द्विचत्वारिंशच्च द्वौ च पच च पचनवद्व्यष्टाविंशतिचतुर्द्विचत्वारिंशद्द्विपच, ते भेदा यस्य स भवति पचनवद्व्यष्टाविंशतिचतुर्द्विचत्वारिंशद्विपचभेद , इति द्वद्वगर्भोऽन्यपदार्थनिर्देशो वेदितव्य ।

**द्वितीयग्रहणमिति चेन्न परिशेषात्सिद्धेः ॥ २ ॥** स्यादेतत् द्वितीयग्रहण कर्तव्य द्वितीय उत्तर प्रकृतिबध एवभेद इति सप्रत्यय कथ स्यात् इति ? तन्न किं कारण ? परिशेषात् सिद्धे । आद्यो मूल प्रकृतिबधो व्याख्यात , तत परिशेषात् उत्तरप्रकृतिबधसप्रत्यय सिद्ध्यति ।

**भेदशब्दः प्रत्येक परिसमाप्यते ॥ ३ ॥** अथ भेदशब्द प्रत्येक परिसमाप्यते पचभेदो नवभेद इत्यादि ।

**यथाक्रम यथानुपूर्व ॥ ४ ॥** योय क्रम यथाक्रम यथानुपूर्वमित्यर्थ पचविध ज्ञानावरण नवविध दर्शनावरणमित्यादि । यद्येवमाद्यमावरण केषा पचानामित्यत्रोच्यते—

## मतिश्रुतावधिमन पर्ययकेवलानां ॥ ६ ॥

**मत्यादीन्युक्तलक्षणानि ॥ १ ॥** मत्यादीनि ज्ञानानि उक्तलक्षणानि वेदितव्यानि । क ? आद्येऽध्याये ।

**मत्यादीनामिति पाठो लघुत्वादिति चेन्न प्रत्येकमभिसबधार्थत्वात् ॥ २ ॥** स्यान्मत मत्यादीनि ज्ञानानि उक्तानि तेषामिहादिशब्दोपलक्षितानां पाठोयुक्तो लघुत्वादिति ? तन्न किं कारण ? प्रत्येक-

मभिसंबंधार्थ इह प्रतिपद पाठ क्रियते । मतेरावरण श्रुतस्यावरणमित्यादि । इतरथा हि मत्यादीनामित्यु-च्यमाने तेषामेकमावरणमिति सप्रत्यय स्यात् ।

**वचनात् पचसंख्याप्रतीतिरिति चेन्न प्रत्येकं पंचत्वप्रसंगात् ॥ ३ ॥** स्यादेतत् पच ज्ञाना-वरणस्योत्तरप्रकृतय इत्युक्त, मत्यादीनि च ज्ञानानि पचोक्तानि ततो वचनात् पचसख्यासप्रत्यय. इति ? तन्न किं कारण ? प्रत्येक पचत्वप्रसगात् । वचनात् मत्यादीनां प्रत्येक पचावरणानीत्यनिष्ट प्रसज्येत । प्रति-पदग्रहणे पुन सति सामर्थ्यादिष्टार्थसप्रत्यय शक्यते कर्तुं । अत्र कश्चिदाह—

**मत्यादीनां सत्त्वासत्त्वयोरावृत्त्यभावः ॥ ४ ॥** इदमिह सप्रधार्य सतां मत्यादीनां कर्मावरण भवेत् असतां चेति । किंचात ? यदि सतां प्राप्तात्मलाभत्वात् सत्त्वादेव आवृत्तिर्नोपपद्यते । अथासतां नन्वावरणाभाव' । नहि खरविषाणवदसदाव्रियते ।

**न वादेशवचनात् ॥ ५ ॥** न वैष दोष । किं कारण ? आदेशवचनात् । कथंचित् सतामावरण कथ-चिदसतां । द्रव्यार्थादेशेन सतां मत्यादीनामावरण । पर्यायार्थादेशेनासतां । यदैकांतेन सतामावरण क्षायो-पशमिकत्वमेषा न स्यात् । अथैकांतेनासतामेवमपि क्षायोपशमिकत्व नोपपद्यते असत्त्वात् । सत-श्चावरणदर्शनात् । सतो हि नभस मेघपटलादिना आवरण दृश्यते तथा सतां मत्यादीना आवरण-मिति को विरोध ।

**अर्थांतरभावाच्च प्रत्याख्यानावरणवत् ॥ ६ ॥** यथा न कुटीभूत प्रत्याख्यान नाम कश्चित् पर्यायोऽस्ति, यस्यावरणात् प्रत्याख्यानावरणत्व भवेत् किंतु प्रत्याख्यानावरणसांनिध्यात् आत्मा प्रत्याख्यान-पर्यायेण नोत्पद्यत इति, अत प्रत्याख्यानावरणस्य आवरणत्व । तथा न कुटीभूतानि मत्यादीनि कानिचित् संति येषामावरणात् मत्याद्यावरणाना आवरणत्व भवेत् किंतु मत्याद्यावरणसंनिधाने आत्मा मत्यादिज्ञानप-र्यायैर्नोत्पद्यते इत्यतो मत्याद्यावरणाना आवरणत्व । अपर आह—

**अभव्यस्योत्तरावरणद्वयानुपपत्तिस्तदभावात् ॥ ७ ॥** इदमिह सप्रधार्यं मन पर्ययज्ञानगमन-शक्ति केवलप्राप्तिसामर्थ्यं चाभव्यस्य स्याद्वा न वेति ? यदि स्यात्तस्याभव्यत्वानुपपत्ति । अथ नास्ति तदुभय-सामर्थ्याभावात् तदावरणकल्पना व्यर्थेति उत्तरस्यावरणद्वयस्य नोपपत्ति ?

**नवोक्तत्वात् ॥ ८ ॥** नैष दोष किं कारणमुक्तत्वात् । उक्तमेतत् । आदेशवचनादिति । द्रव्या-र्थादेशेन सतोर्मन पर्ययकेवलज्ञानयोरावरण । पर्यायार्थादेशेनासतोरपि चोक्त–'अर्थांतराभावाच्च प्रत्याख्या-नावरणवदिति' । यदि द्रव्यार्थादेशेन मन पर्ययज्ञान केवलज्ञान चास्त्यभव्यस्य भव्यत्वमस्य, प्राप्नोति । न सम्यग्ज्ञानदर्शनचारित्रशक्तिभावाभावाभ्यां भव्याभव्यत्व कल्प्यते । कथ तर्हि—

**सम्यक्त्वादिव्यक्तिभावाभावाभ्यां भव्याभव्यत्वमिति विकल्पः कनकेतरपाषाणवत् ॥ ९ ॥** यथा कनकभावव्यक्तियोगमवाप्स्यति इति कनकपाषाण इत्युच्यते तदभावादधपाषाण इति । तथा सम्य-क्त्वादिपर्यायव्यक्तियोगार्हो य स भव्य तद्विपरीतोऽभव्य इति चोच्यते–

**ज्ञानावरणादज्ञातिदुःखितः ॥ १० ॥** ज्ञानावरणोदयेनोपरतज्ञानसामर्थ्य लुप्तस्मृतिधर्म-श्रवणनिरुत्सुक ज्ञानावमानकृत च वहुदु खमनुभवति । आह उक्तो ज्ञानावरणोत्तरप्रकृतिविकल्प । इदानीं दर्शनावरणस्य वक्तव्य इत्यत आह—

## चक्षुरचक्षुरवधिकेवलानां निद्रानिद्रानिद्राप्रचला-प्रचलाप्रचलास्त्यानगृद्धयश्च ॥ ७ ॥

**चक्षुरादीनां दर्शनावरणसंबंधात् भेदनिर्देशः ॥ १ ॥** चक्षुश्चाचक्षुश्चावधिश्च केवलं च चक्षुर-चक्षुरवधिकेवलानि तेषां चक्षुरचक्षुरवधिकेवलानां दर्शनावरणानीति भेदनिर्देश दर्शनावरणसबंधाद्वेदितव्य ।

**मदखेदक्लमविनोदार्थः स्वापो निद्रा ॥ २ ॥** मदखेदक्लमाना विनोदाय य स्वाप. स निद्रा इत्युच्यते कथ निपूर्वस्य द्राते कुत्साक्रियस्याङि निद्राशब्दनिष्पत्ति । यत्सन्निधानादात्मा निद्रायते कुत्स्यते सा निद्रा । यतेर्वा स्वप्नक्रियस्य निद्रा ।

**उपर्युपरि तद्वृत्तिर्निद्रानिद्रा ॥ ३ ॥** तस्या निद्राया उपर्युपरि पुन पुन वृत्ति निद्रानिद्रा इत्युच्यते ।

**प्रचलयत्यात्मानमिति प्रचला ॥ ४ ॥** या क्रिया आत्मान प्रचलयति सा प्रचलेत्युच्यते । पचादिलक्षणे अचि । सा पुन शोकश्रममदादिप्रभवा । विनिवृत्तेंद्रियव्यापारस्यात प्रीतिक्लमामात्रहेतु आसीनस्यापि नेत्रगात्रक्रिया सूचिता ।

**पौन पुन्येन सैवाहिता वृत्तिः प्रचलाप्रचला ॥ ५ ॥** सैव प्रचला पुन पुनरावर्तमाना प्रचलाप्रचलेत्युच्यते ।

**स्वप्ने यया वीर्यविशेषाविर्भावः सा स्त्यानगृद्धिः ॥ ६ ॥** यत्सन्निधानाद्रौद्रकर्मकरण बहुकर्मकरण च भवति सा स्त्यानगृद्धि कथ स्त्यायतेरनेकार्थत्वात् स्वप्नार्थ इह गृह्यते । गृद्धेरपि दीप्ति । स्त्याने स्वप्ने गृध्यति दीप्यते यदुदयादात्मा रौद्र बहुकर्म करोति सा स्त्यानगृद्धि ।

**नानाधिकरणाभावात् वीप्सानुपपत्तिरिति चेन्न कालादिभेदतस्तद्भेदासिद्धे ॥ ७ ॥** स्यान्मत नानाधिकरणविषया वीप्सा न चेह नानाधिकरणत्वमस्ति एकात्मगोचरत्वात् ततो वीप्साभावात् असति द्वित्वे निद्रानिद्राप्रचलाप्रचलेति निर्देशो नोपपद्यत इति ? तन्न । किं कारण ? कालादिभेदात् तद्भेदसिद्धे । इह एकस्यापि वस्तुन कालकृताद्गुणभेदाद् भेदो दृश्यते पटुर्भवान् पटुरासीत् पटुतर एव स इति। तथा देशकृतादपि--मथुराया दृष्ट , पुन पाटलीपुत्रे दृश्यमान उच्यते, अन्योत्र त्वमासि सपन्न इति। एवमिहापि कालादिभेदात् भेदोपपत्ते वीप्सा युज्यते ।

**आभीक्ष्ण्ये वा द्वित्वप्रसिद्धिः ॥ ८ ॥** अथवा मुहुर्मुहुर्वृत्तिराभीक्ष्ण्य तस्य विवक्षायां द्वित्व भवति यथा गेहमनुप्रवेशामस्त इति ।

**निद्रादिकर्मसद्वेद्योदयात् निद्रादिपरिणामप्रसिद्धिः ॥ ९ ॥** निद्रादिकर्मण सद्वेद्यस्य चोदयात् निद्रादिपरिणामसिद्धिर्भवति तत्र हि शोकक्लमादिविगमदर्शनात् सद्वेद्योदय स्फुटोवगतव्य । असद्वेद्यस्य च मदोदय ।

**निद्रादीनामभेदेनाभिसबधः ॥ १० ॥** निद्रा च निद्रानिद्रा च प्रचला च प्रचलाप्रचला च स्त्यानगृद्धिश्च निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानगृद्धय । अनुवर्तमानेन दर्शनावरणेनाभेदेनाभिसबध क्रियते ।

**निद्रादीनामभेदेनाभिसबंधो विरोध इति चेन्न विवक्षातः सबधात् ॥ ११ ॥** स्यादेतत् चक्षुरादीनां भेदानिर्देश निद्रादीनामभेदनिर्देश एकमेव दर्शनावरणमपेक्ष्य क्रियमाणो विरुद्ध इति ? तन्न । किं कारण ? विवक्षात सबधात् विवक्षावशाद्धि भेदेनाभेदेन च सबधो न विरुध्यते ।

अथ चक्षुरादिदर्शनावरणोदयात् आत्मा किमवस्थो भवति । अत्रोच्यते—

**चक्षुरचक्षुर्दर्शनावरणोदयात् चक्षुरादींद्रियालोचनविकलः ॥ १२ ॥** चक्षुर्दर्शनावरणस्याचक्षुर्दर्शनावरणस्य चोदयात् आत्मा चक्षुरादींद्रियालोचनविकलो भवति एकेंद्रियमात्रेन विकलेंद्रियमात्रेन च पचेंद्रियत्वेप्युपहतेंद्रियलोचनसामर्थ्यश्च भवति ।

**अवधिदर्शनावरणोदयादवधिदर्शनविप्रमुक्तः ॥ १३ ॥** अवधिदर्शनावरणोदयाद्व्यपेतावधिदर्शन सपद्यते ।

**केवलदर्शनावरणोदयादनाविर्भूतकेवलदर्शनः ॥ १४ ॥** केवलदर्शनावरणस्य कर्मण उदयात् अनाविर्भूतकेवलदर्शनः, अपर्यवसितससारोऽवतिष्ठते ।

**निद्रानिद्रानिद्रोदयात्तमोमहातमोवस्था ॥ १५ ॥** निद्राया उदयात् तमोवस्था निद्रानिद्राया उदयात् महातमोवस्था सजायते ।

**प्रचलाप्रचलाप्रचलोदयाच्चलनातिचलनभावः ॥ १६ ॥** प्रचलोदयादासीनो घूर्णमानश्चलनय नगात्र पश्यन्नपि न पश्यति । प्रचलाप्रचलोदयादासीनोऽतिघूर्णमान स्वन्यमानमपि शरनाराचादिभि शिरोगप्रत्यगादि यत्किंचिन्न पश्यति । आह यत्तत्कर्म तृतीयगणनामभाक् तस्योत्तरप्रकृतिविकल्पो न निर्ज्ञात इत्यत्रोच्यते—

## सदसद्वेद्ये ॥ ८ ॥

**यस्योदयाद्देवादिगतिषु शारीरमानससुखप्राप्तिस्तत्सद्वेद्यं ॥ १ ॥** देवादिषु गतिषु बहुप्रकारजातिविशिष्टासु यस्योदयात् अनुगृहीतद्रव्यसबधापेक्षात् प्राणिना शारीरमानसानेकविधसुखपरिणामस्तत्सद्वेद्य । प्रशस्त वेद्य सद्वेद्य ।

**यत्फलं दुःखमनेकविधं तदसद्वेद्यं ॥ २ ॥** नारकादिषु गतिषु नानाप्रकारजातिविशेषावकीर्णासु कायिक बहुविध मानस चातिदु सह जन्मजरामरणप्रियविप्रयोगाप्रियसयोगव्याधिवधबधादिजनित दु ख यस्य फल प्राणिना तदसद्वेद्य । अप्रशस्त वेद्य असद्वेद्य । आह व्याख्यातो वेदनीयस्य प्रकृतिबध । अथ खलु मोहनीयस्याष्टाविंशतिप्रभेदस्य किमाख्या प्रकारा इत्यत्र ब्रूम –

## दर्शनचारित्रमोहनीयाकषायाकषायवेदनीयाख्यास्त्रिद्विनवषोडशभेदाः सम्यक्त्वमिथ्यात्वतदुभयान्यकषायकषायौ हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुनपुंसकवेदाः अनंतानुबंध्यप्रत्याख्यानप्रत्याख्यानसंज्वलनविकल्पाश्चैकशः क्रोधमानमायालोभाः ॥ ९ ॥

**दर्शनादिभिस्त्रिद्विनवषोडशभेदानां यथासंख्येन संबंध ॥ १ ॥** दर्शनादयश्चत्वार त्र्यादयोपि तेषा यथासख्येन सबधो भवति—दर्शनमोहनीय त्रिविध चारित्रमोहनीय द्विभेद अकषायवेदनीय नवविध कषायवेदनीय षोडशविधमिति ।

**तत्र दर्शनमोहनीय त्रिभेद सम्यक्त्वमिथ्यात्वतदुभयानीति ॥ २ ॥** तत्र दर्शनमोहनीय त्रिभेदमवगतव्य । कुत सम्यक्त्वमिथ्यात्वतदुभयानि इति । तद्बध प्रत्येक भूत्वा सत्कर्मापेक्षया त्रैविध्यमास्कदति । तत्र यस्योदयात् सर्वज्ञप्रणीतमार्गपराङ्मुख तत्त्वार्थश्रद्धाननिरुत्सुको हिताहितविभागासमर्थो मिथ्यादृष्टिर्भवति तन्मिथ्यात्व । तदेव सम्यक्त्व शुभपरिणामनिरुद्धस्वरस यदौदासीन्येनावस्थितमात्मान श्रद्धान न निरुणद्धि । तद्वेदयमान पुरुष सम्यग्दृष्टिरित्यभिधीयते । तदेव मिथ्यात्व प्रक्षालनविशेषात् क्षीणाक्षीणमदशक्तिकोद्रववत् सामिशुद्धस्वरस तदुभयमित्याख्यायते सम्यङ्मिथ्यात्वमिति यावत्, यस्योदयादात्मन अर्धशुद्धमदकोद्रवौदनोपयोगापादितमिश्रपरिणामवदुभयात्मको भवति परिणाम ।

**चारित्रमोहनीय द्वेधा कषायाकषायभेदात् ॥ ३ ॥** चारित्रमोहनीय द्वेधा विभज्यते अकषायकषायभेदात् कषायप्रतिषेधप्रसग इतिचेन्नेषदर्थत्वात् नञ । यथा अलोमिकाऽडका इति । नास्या कच्छपवल्लोमाभाव किंतु छेदयोग्यलोमाभावेपि ईषत्प्रतिषेधादलोमिकेत्युच्यते तथा नोकषाया अकषाया हास्यादय इति । नैषा सर्वथैवाकषायत्व किंतु परोपष्टभात् स्ववत्प्रवृत्तेरीषत्प्रतिषेध । यथा श्वा स्वाम्युपष्टभात् प्रवृद्धबल स्वजिघांसा प्रति वर्तते स्वामिनिवर्तनाच्च निवर्तते । तथा क्रोधादिकषायोपष्टभात् ईषत्प्रतिषेधे सति हास्या-

दीनां प्रवृत्ते । काधायप्रवृत्तौ च निवृत्तेरकषायत्व । कथमीषत्प्रतिषेधगतिरिति चेद्व्याख्यानत ।

**अकषायवेदनीय नवविध हास्यादिभेदात् ॥ ४ ॥** अकषायवेदनीय नवविध, कुत ? हास्यादिभेदात् । तत्र यस्योदयात् हास्याविर्भावस्तद्धास्य । यदुदयाद्देशादिष्वौत्सुक्य सा रति । अरतिस्तद्विपरीता । यद्विपाक शोचन स शोक । यदुदयादुद्वेग तद्भय सप्तविध । कुत्साप्रकारो जुगुप्सा । यद्येव कुत्साग्रहणमेवास्तु लघुत्वात् ? न अर्थविशेषोपपत्त । आत्मीयदोषसवरण जुगुप्सा । परकीयकुलशीलादिदोषाविष्करणावक्षेपभर्त्सनप्रवणा कुत्सा । यस्योदयात् स्त्रैणान् भावान् मार्दवास्फुटत्वक्लैव्यमदनावेशनेत्रविभ्रमास्फालनसुखपुस्कामादीन् प्रतिपद्यते स स्त्रीवेद । तस्योद्भूतवृत्तित्वमितरयो पुनपुसकयो सत्कर्मद्रव्यावस्थानान्यभाव । ननु लोके प्रतीत योनिमृदुस्तनादि स्त्रीवेदलिंग ? न तस्य नामकर्मोदयनिमित्तत्वात्, अत पुसोपि स्त्रीवेदोदय । कदाचिद्योषितोपि पुवेदोदयोप्याभ्यतरविशेषात् । शरीराकारस्तु नामकर्मनिर्वर्तित । एतेनेतरौ व्याख्यातौ । यस्योदयात् पौंस्नान् भावानास्कदति स पुवेद । यत्कर्मोदयात् नपुसकान् भावान् प्रव्रजति स नपुसकवेद ।

**कषायवेदनीय षोडशविध अनतानुबध्यादिविकल्पात् ॥ ५ ॥** कषायवेदनीय षोडशविध द्रष्टव्य, कुत ? अनतानुबध्यादिविकल्पात् । तद्यथा कषाया क्रोधमानमायालोभा । स्वपरोपघातनिरनुग्रहाहितक्रौर्यपरिणामोऽमर्ष क्रोध, स चतु प्रकार पर्वतपृथ्वीवालुकोदकराजितुल्य । जात्याद्युत्सेकावष्टभात् पराप्रणतिर्मान शैलस्तभास्थिदारुलतासमानश्चतुर्विध । परातिसधानतयोपहितकौटिल्यप्राय प्रणिधिर्माया प्रत्यासन्नवशपर्वोपचितमूलमेषशृगगोमूत्रिकावलेखनीसदृशी चतुर्विधा । अनुग्रहप्रवणद्रव्याद्यभिकाक्षावेशो लोभ क्रिमिरागकज्जलकर्दमहरिद्रारागसदृशश्चतुर्विध । तेषां क्रोधमानमायालोभाना चतस्रोवस्था — अनतानुबधिन अप्रत्याख्यानावरणा प्रत्याख्यानावरणा सज्वलनाश्चेति । अनतससारकारणत्वान्मिथ्यादर्शनमनत तदनुबधिनोऽनतानुबधिक्रोधमानमायालोभा । यदुदयाद्देशविरतिसयमासयमाख्यामल्पामपि कर्तुं न शक्नोति ते देशप्रत्याख्यानमावृण्वत अप्रत्याख्यानावरणा क्रोधमानमायालोभा । यदुदयाद्विरतिं कृत्स्ना सयमाख्या न शक्नोति कर्तुं ते कृत्स्न प्रत्याख्यानमावृण्वत प्रत्याख्यानावरणा क्रोधमानमायालोभा । समेकीभावे वर्तते सयमेन सहावस्थानादेकीभूता ज्वलति सयमो वा ज्वलति एतेषु सत्स्वपीति सज्वलना क्रोधमानमायालोभा । त एते समुदिता षोडश कषाया भवति । आह व्याख्यातमष्टाविंशत्युत्तरप्रकृतिभेद मोहनीयमथायुषश्चतुर्विधस्य को नामनिर्देश इत्यत्रोच्यते —

## नारकतैर्यग्योनमानुषदैवानि ॥ १० ॥

**नारकादिषु भवसबधेनायुर्व्यपदेश ॥ १ ॥** नारकादिषु भवसबधेनायुषो व्यपदेशो भवति । नरकेषु भव नारक तिर्यग्योनौ भव तैर्यग्योन मनुष्येषु भव मानुष देवेषु भव दैवमिति ।

**यद्भावाभावयोर्जीवितमरण तदायु ॥ २ ॥** यस्य भावात् आत्मन जीवित भवति यस्य चाभावात् मृत इत्युच्यते तद्भवधारणमायुरित्युच्यते ।

**अन्नादि तन्निमित्त इति चेन्न तस्योपग्राहकत्वात् ॥ ३ ॥** स्यादेतदन्नादि तन्निमित्त तल्लाभालाभयोर्जीवितमरणदर्शनादिति ? तन्न किं कारण ? तस्यानुग्राहकत्वात् । यथा घटभवने मृत्पिडो मूलकारण तस्योपग्राहक दडादि तथाभ्यतर भवधारणस्य कारणमायु, अन्नादि तस्योपग्राहक, अतश्चैतदेव यत्क्षीणायुषोऽन्नादिसन्निधानेपि मरण दृश्यते ।

**देवनारकेषु चान्नाद्यभावात् ॥ ४ ॥** देवेषु नारकेषु चान्नाद्यभावात् भवधारणमायुरधीनमेवेत्यवसेय । तेषा हि कादाचित्क आहारोऽनाभोगो व्याख्यात ।

---

१ अनुग्रहप्रवणद्रव्याद्यभिकाक्षावेश पाठाय ख पुस्तके

नरकेषु तीव्रशीतोष्णवेदनेषु यन्निमित्तं दीर्घजीवन तन्नारकायुः ॥ ५ ॥ नरकेषु तीव्रशीतोष्णवेदनाकरेषु यन्निमित्त दीर्घजीवन भवधारण भवति तन्नारकायु ।

क्षुत्पिपासाशीतोष्णादिकृतोपद्रवप्रचुरेषु तिर्यक्षु यस्योदयाद्वसन तत्तैर्यग्योन ॥ ६ ॥ क्षुत्पिपासाशीतोष्णदशमशकादिविविधव्यसनविधेयीकृतेषु तिर्यक्षु यस्योदयाद्वसन भवति तत्तैर्यग्योनमायुरवगतव्य ।

शारीरमानुपसुखदुःखभूयिष्ठेषु मनुष्येषु जन्मोदयात् मनुष्यायुषः ॥ ७ ॥ शारीरेण मानसेन च सुखदु खेन समाकुलेषु मनुष्येषु यस्योदयाज्जन्म भवति तन्मानुषमायुरवसेय ।

शारीरमानससुखप्रायेषु देवेषु जन्मोदयात् देवायुषः ॥ ८ ॥ शारीरेण मानसेन च सुखेन प्राय समाविष्टेषु देवेषु यस्योदयाज्जन्म भवति तद्दैवमायुरवगतव्य । कदाचित् प्रियाविप्रयोगात् महर्द्धिदेवनिरीक्षणात् च्यवनलिंगाज्ञाहानिमालाभूयाम्लानदर्शनाच्च मानस दु खमाविर्भवतीति ज्ञापनार्थं प्रायग्रहण । आह व्याख्यातमायुश्चतुर्विध तदनतरमुद्दिष्ट यन्नामकर्म तदुत्तरप्रकृतिसमाख्या का इत्यत्रोच्यते ।

## गतिजातिशरीरांगोपांगनिर्माणबंधनसंघातसंस्थानसंहननस्पर्शरसगंधवर्णानुपूर्व्यागुरुलघूपघातपरघातातपोद्योतोच्छ्वासविहायोगतयः प्रत्येकशरीरत्रससुभगसुस्वरशुभसूक्ष्मपर्याप्तिस्थिरादेययशस्कीर्तिसेतराणि तीर्थकरत्वं च ॥ ११ ॥

यदुदयादात्मा भवांतरं गच्छति सा गतिः ॥ १ ॥ यस्य कर्मण उदयवशात् आत्मा भवांतरं प्रत्यभिमुखो गच्छामास्कदाति सा गति , गम्यत इति गतिरित्युच्यमानेपि रूढिवशात् कस्मिंश्चिद्गतिविशेषे वर्तते गोशब्दप्रवृत्तिवत् ? इतरथा हि यदात्मा न गच्छति न तदा गतिर्भवेत् सत्कर्मावस्थायां च गतिव्यपदेशो न स्यात् । सा चतुर्विधा नरकगतिस्तिर्यग्गतिर्मनुष्यगतिर्देवगतिश्चेति । यन्निमित्त आत्मनो नारकभाव तन्नरकगतिनाम एवं शेषेष्वपि योज्य ।

तत्राव्यभिचारिसादृश्यैकीकृतोऽर्थात्मा जातिः ॥ २ ॥ तासु नारकादिगतिषु अव्यभिचारिणा सादृश्येन एकीकृतोर्थात्मा जातिरिति व्यपदेशमर्हति । तन्निमित्त जातिनाम तत्पचविध—एकेंद्रियजातिनाम द्वींद्रियजातिनाम त्रींद्रियजातिनाम चतुरिंद्रियजातिनाम पचेंद्रियजातिनाम चेति । यदुदयादात्मा एकेंद्रिय इति शब्यते तदेकेंद्रियजातिनाम एव शेषेष्वपि योज्य ।

यदुदयादात्मनः शरीरनिर्वृत्तिस्तच्छरीरनाम ॥ ३ ॥ यस्योदयादात्मन. शरीरनिर्वृत्तिर्भवति तच्छरीरनाम । तत्पचविध—औदारिकशरीरनाम वैक्रियिकशरीरनाम आहारकशरीरनाम तैजसशरीरनाम कार्मणशरीरनाम चेति । तेषा विशेषो व्याख्यात ।

यदुदयादगोपांगविवेकस्तदंगोपांगनाम ॥ ४ ॥ यस्योदयाच्छिर पृष्ठोरुर्बाहुदरनालकपाणिपादानामष्टानामगाना तद्भेदानां च ललाटनासिकादीनां उपागाना विवेको भवति तदगोपागनाम । तत्त्रिविध औदारिकशरीरागोपागनाम वैक्रियिकशरीरागोपागनाम आहारकशरीरागोपागनाम चेति ।

यन्निमित्ता परिनिष्पत्तिस्तन्निर्माण ॥ ५ ॥ अगोपागाना यन्निमित्ता परिनिष्पत्तिस्तान्निर्माणमिति ज्ञायते तद्द्विविध स्थाननिर्माण प्रमाणनिर्माण चेति । तज्जातिनामकर्मोदयापेक्ष चक्षुरादीनां स्थान प्रमाण च निर्वर्तयति । निर्मीयतेऽनेन इति हि निर्माण ।

१ बाहूदरनलकेति पाठांतर ग पुस्तके ।

**शरीरनामकर्मोदयोपात्तानां यतोऽन्योन्यसंश्लेषणं तद्बन्धनं ॥ ६ ॥** शरीरनामकर्मोदयवशादुपात्तानां पुद्गलानामन्योन्यप्रदेशसंश्लेषणं यतो भवति तद्बन्धनमित्याख्यायते । तस्याभावे शरीरप्रदेशानां दारुनिचयवत् असंपर्कः स्यात् ।

**अविवरभावेनैकत्वकरणं संघातनामकर्म ॥ ७ ॥** यदुदयादौदारिकादिशरीराणां विवरविरहितान्योन्यप्रदेशानुप्रवेशेनैकत्वापादनं भवति तत्संघातनाम ।

**यद्धेतुका शरीराकृतिनिर्वृत्तिस्तत्संस्थाननाम ॥ ८ ॥** यदुदयादौदारिकादिशरीराकृतिनिर्वृत्तिर्भवति तत्संस्थाननाम प्रत्येतव्यं । तत् षोढा प्रविभज्यते समचतुरस्रसंस्थाननाम, न्यग्रोधपरिमंडलसंस्थाननाम, स्वातिसंस्थाननाम, कुब्जकसंस्थाननाम, वामनसंस्थाननाम, हुंडकसंस्थाननाम चेति तत्रोर्ध्वाधोमध्येषु समप्रविभागेन शरीरावयवसंनिवेशव्यवस्थापनं कुशलशिल्पिनिर्वर्तितसमस्थितिचक्रवत् अवस्थानकरं समचतुरस्रसंस्थाननाम । नाभेरुपरिष्टाद्भूयसो देहसंनिवेशस्याधस्ताच्चाल्पीयसो जनकं न्यग्रोधपरिमंडलसंस्थाननाम, न्यग्रोधाकारसमतावाप्तिरित्यादन्वर्थं । तद्विपरीतसंनिवेशकरं स्वातिसंस्थाननाम वल्मीकतुल्याकारं । पृष्ठप्रदेशभाविबहुपुद्गलप्रचयविशेषलक्षणस्य निर्वर्तकं कुब्जकसंस्थाननाम । सर्वांगोपांगह्रस्वव्यवस्थाविशेषकारणं वामनसंस्थाननाम । सर्वांगोपांगानां हुंडसंस्थितत्वात् हुंडसंस्थाननाम ।

**यदुदयादस्थिबंधनविशेषस्तत्संहननं ॥ ९ ॥** यस्योदयादस्थिबंधनविशेषो भवति तत्संहननं तत्षड्विधं—वज्रर्षभनाराचसंहनननाम, वज्रनाराचसंहनननाम नाराचसंहनननाम, अर्धनाराचसंहनननाम, कीलिकासंहनननाम, असंप्राप्तसृपाटिकासंहनननाम चेति । तत्र वज्राकारोभयास्थिसंधि प्रत्येकं मध्ये वलयबंधनं सनाराचं सुसंहतं वज्रर्षभनाराचसंहननं । तदेव वलयबंधनविरहितं वज्रनाराचसंहननं । तदेवोभयवज्राकारबंधनव्यपेतमवलयबंधनं सनाराचं नाराचसंहननं । तदेवैकपार्श्वे सनाराचं इतरत्रानाराचं अर्धनाराचसंहननं । तदुभयमंते सकीलकं कीलिकासंहननं । अंतरसंप्राप्तपरस्परास्थिसंधि बहिः सिरास्नायुमांसघटितं असंप्राप्तसृपाटिकासंहननं ।

**यदुदयात्स्पर्शरसगंधवर्णविकल्पा अष्टपंचद्विपंचसंख्यास्तानि स्पर्शनामादीनि ॥ १० ॥** यस्योदयात्स्पर्शप्रादुर्भावः तत्स्पर्शनाम तदष्टविधं—कर्कशनाम, मृदुनाम, गुरुनाम, लघुनाम, स्निग्धनाम, रूक्षनाम, शीतनाम, उष्णनाम चेति । यन्निमित्तो रसविकल्पः तद्रसनाम तत्पंचविधं—तिक्तनाम, कटुकनाम, कषायनाम, आम्लनाम, मधुरनाम चेति । यदुदयभवो गंधस्तद्गंधनाम तद्द्विविधं सुरभिगंधनाम, असुरभिगंधनाम चेति । यद्धेतुको वर्णविभागस्तद्वर्णनाम तत्पंचविधं—कृष्णवर्णनाम, नीलवर्णनाम, रक्तवर्णनाम, हारिद्रवर्णनाम, शुक्लवर्णनाम चेति । अचेतनेषु स्पर्शादयः कथमितिचेत् न कर्मोदयकृतास्ते पुद्गलस्वभावपरिणामाः ।

**यदुदयात्पूर्वशरीराकाराविनाशस्तदानुपूर्व्यनाम ॥११॥** यत्पूर्वशरीराकाराऽविनाशः यस्योदयाद्भवति तदानुपूर्व्यं नाम । तच्चतुर्विधं नरकगतिप्रायोग्यानुपूर्व्यनाम तिर्यग्गतिप्रायोग्यानुपूर्व्यनाम मनुष्यगतिप्रायोग्यानुपूर्व्यनाम देवगतिप्रायोग्यानुपूर्व्यनाम चेति । यदा छिन्नायुर्मनुष्यास्तिर्यंचो वा पूर्वेण शरीरेण वियुज्यते तदैव नरकभवं प्रत्यभिमुखस्य तस्य पूर्वशरीरसंस्थानानिवृत्तिकारणं विग्रहगतावुदेति तन्नरकगतिप्रायोग्यानुपूर्व्यनाम, एवं शेषेष्वपि याज्यं । ननु च तन्निर्माणनामकर्मसाध्यं फलं नानुपूर्व्यनामोदयकृतं ? नैष दोषः पूर्वायुरुच्छेदसमकाल एव पूर्वशरीरनिवृत्तौ निर्माणनामोदयो निवर्तते तस्मिन्निवृत्तेऽष्टविधकर्म तैजसकार्मणशरीरसंबंधिन आत्मनः पूर्वशरीरसंस्थानाविनाशकारणमानुपूर्व्यनामोदयमुपैति । तस्य कालो विग्रहगतौ जघन्येनैकः समयः, उत्कर्षेण त्रयः समयाः । ऋजुगतौ तु पूर्वशरीराकाराविनाशे सति उत्तरशरीरयोग्यपुद्गलग्रहणान्निर्माणनामकर्मोदयव्यापारः ।

**यन्निमित्तमगुरुलघुत्वं तदगुरुलघुनाम ॥ १२ ॥** यस्योदयादयः पिंडवत् गुरुत्वान्नाधः पतति

**नरकेषु तीव्रशीतोष्णवेदनेषु यन्निमित्तं दीर्घजीवनं तन्नारकायुः ॥ ५ ॥** नरकेषु तीव्रशीतोष्णवेदनाकरेषु यन्निमित्तं दीर्घजीवनं भवधारणं भवति तन्नारकायुः ।

**क्षुत्पिपासाशीतोष्णादिकृतोपद्रवप्रचुरेषु तिर्यक्षु यस्योदयाद्वसनं तत्तैर्यग्योनं ॥ ६ ॥** क्षुत्पिपासाशीतोष्णदंशमशकादिविविधव्यसनविधेयीकृतेषु तिर्यक्षु यस्योदयाद्वसनं भवति तत्तैर्यग्योनमायुरवगंतव्यं ।

**शारीरमानुषसुखदुःखभूयिष्ठेषु मनुष्येषु जन्मोदयात् मनुष्यायुषः ॥ ७ ॥** शारीरेण मानसेन च सुखदुःखेन समाकुलेषु मनुष्येषु यस्योदयाज्जन्म भवति तन्मानुषमायुरवसेयं ।

**शारीरमानससुखप्रायेषु देवेषु जन्मोदयात् देवायुषः ॥ ८ ॥** शारीरेण मानसेन च सुखेन प्रायः समाविष्टेषु देवेषु यस्योदयाज्जन्म भवति तद्दैवमायुरवगंतव्यं । कदाचित् प्रियाविप्रयोगात् महर्द्धिदेवनिरीक्षणात् च्यवनलिंगाज्ञाहानिमालाभूयाम्लानदर्शनाच्च मानसं दुःखमाविर्भवतीति ज्ञापनार्थं प्रायग्रहणं । आह व्याख्यातमायुश्चतुर्विधं तदनंतरमुद्दिष्टं यन्नामकर्म तदुत्तरप्रकृतिसमाख्या का इत्यत्रोच्यते ।

## गतिजातिशरीरांगोपांगनिर्माणबंधनसंघातसंस्थानसंहननस्पर्शरसगंधवर्णानुपूर्व्यागुरुलघूपघातपरघातातपोद्योतोच्छ्वासविहायोगतयः प्रत्येकशरीरत्रससुभगसुस्वरशुभसूक्ष्मपर्याप्तिस्थिरादेययशस्कीर्तिसेतराणि तीर्थकरत्वं च ॥ ११ ॥

**यदुदयादात्मा भवांतरं गच्छति सा गतिः ॥ १ ॥** यस्य कर्मण उदयवशात् आत्मा भवांतरं प्रत्यभिमुखो गच्छति सा गतिः, गम्यत इति गतिरित्युच्यमानेपि रूढिवशात् कस्मिंश्चिद्गतिविशेषे वर्तते गोशब्दप्रवृत्तिवत्[१] इतरथा हि यदात्मा न गच्छति न तदा गतिर्भवेत् सत्कर्मावस्थायां च गतिव्यपदेशो न स्यात् । सा चतुर्विधा नरकगतिस्तिर्यग्गतिर्मनुष्यगतिर्देवगतिश्चेति । यन्निमित्त आत्मनो नारकभावः तन्नरकगतिनाम एवं शेषेष्वपि योज्यं ।

**तत्राव्यभिचारिसादृश्यैकीकृतोऽर्थात्मा जातिः ॥ २ ॥** तासु नारकादिगतिषु अव्यभिचारिणा सादृश्येन एकीकृतोर्थात्मा जातिरिति व्यपदेशमर्हति । तन्निमित्तं जातिनाम तत्पंचविधं—एकेंद्रियजातिनाम द्वींद्रियजातिनाम त्रींद्रियजातिनाम चतुरिंद्रियजातिनाम पंचेंद्रियजातिनाम चेति । यदुदयादात्मा एकेंद्रिय इति शब्द्यते तदेकेंद्रियजातिनाम एवं शेषेष्वपि योज्यं ।

**यदुदयादात्मनः शरीरनिर्वृत्तिस्तच्छरीरनाम ॥ ३ ॥** यस्योदयादात्मनः शरीरनिर्वृत्तिर्भवति तच्छरीरनाम । तत्पंचविधं—औदारिकशरीरनाम वैक्रियिकशरीरनाम आहारकशरीरनाम तैजसशरीरनाम कार्मणशरीरनाम चेति । तेषां विशेषो व्याख्यातः ।

**यदुदयादंगोपांगविवेकस्तदंगोपांगनाम ॥ ४ ॥** यस्योदयाच्छिरःपृष्ठोरुबाहूदरनालकपाणिपादानामष्टानामंगानां तद्भेदानां च ललाटनासिकादीनां उपांगानां विवेको भवति तदंगोपांगनाम । तत्त्रिविधं औदारिकशरीरांगोपांगनाम वैक्रियिकशरीरांगोपांगनाम आहारकशरीरांगोपांगनाम चेति ।

**यन्निमित्ता परिनिष्पत्तिस्तन्निर्माणं ॥ ५ ॥** अंगोपांगानां यन्निमित्ता परिनिष्पत्तिस्तन्निर्माणमिति ज्ञायते तद्विविधं स्थाननिर्माणं प्रमाणनिर्माणं चेति । तज्जातिनामकर्मोदयापेक्षं चक्षुरादीनां स्थानं प्रमाणं च निर्वर्तयति । निर्मीयतेऽनेन इति हि निर्माणं ।

---

१ बाहूदरनलकेति पाठांतरं ग पुस्तके ।

**शरीरनामकर्मोदयोपात्तानां यतोऽन्योन्यसंश्लेषण तद्बधन ।। ६ ।।** शरीरनामकर्मोदयवशादुपात्ताना पुद्गलानामन्योन्यप्रदेशसश्लेषण यतो भवति तद्बंधनमित्याख्यायते । तस्याभावे शरीरप्रदेशानां दारुनिचयवत् असपर्क स्यात् ।

**अविवरभावेनैकत्वकरण सघातनामकर्म ॥ ७ ॥** यदुदयादौदारिकादिशरीराणा विवरविरहितान्योन्यप्रदेशानुप्रवेशेनैकत्वापादन भवति तत्सघातनाम ।

**यद्धेतुका शरीराकृतिनिर्वृत्तिस्तत्सस्थाननाम ॥ ८ ॥** यदुदयादौदारिकादिशरीराकृतिनिर्वृत्तिर्भवति तत्सस्थाननाम प्रत्येतव्य । तत् षोढा प्रविभज्यते समचतुरस्रसस्थाननाम, न्यग्रोधपरिमडलसस्थाननाम, स्वातिसस्थाननाम, कुब्जकसस्थाननाम, वामनसस्थाननाम, हुडकसस्थाननाम चेति ।तत्रोर्ध्वाधोमध्येषु समप्रविभागेन शरीरावयवसनिवेशव्यवस्थापन कुशलशिल्पिनिर्वर्तितसमस्थितिचक्रवत् अवस्थानकर समचतुरस्रसस्थाननाम । नाभेरुपरिष्टाद्भूयसो देहसनिवेशस्याधस्ताच्चाल्पीयसो जनक न्यग्रोधपरिमडल सस्थाननाम, न्यग्रोधाकारसमताप्रापित्वादन्वर्थं । तद्विपरीतसनिवेशकर स्वातिसस्थाननाम वल्मीकतुल्याकार । पृष्ठप्रदेशभाविबहुपुद्गलप्रचयविशेषलक्षणस्य निर्वर्तक कुब्जकसस्थाननाम । सर्वांगोपागह्रस्वव्यवस्थाविशेषकारण वामनसस्थाननाम । सर्वांगोपागाना हुडसस्थितत्वात् हुडसस्थाननाम ।

**यदुदयादस्थिबधनविशेषस्तत्सहनन ॥ ९ ॥** यस्योदयादस्थिबधनविशेषो भवति तत्सहनन तत्षड्विध—वज्रर्षभनाराचसहनननाम, वज्रनाराचसहनननाम नाराचसहनननाम, अर्धनाराचसहनननाम, कीलिकासहनननाम, असप्राप्तसृपाटिकासहनननाम चेति । तत्र वज्राकारोभयास्थिसधि प्रत्येक मध्ये वलयबधन सनाराच सुसहत वज्रर्षभनाराचसहनन । तदेव वलयबधनविरहित वज्रनाराचसहनन । तदेवोभय वज्राकारबधनव्यपेतमवलयबधन सनाराच नाराचसहनन । तदेवैकपार्श्वे सनाराच इतरत्रानाराच अर्धनाराचसहनन । तदुभयमते सकीलक कीलिकासहनन । अतरसप्राप्तपरस्परास्थिसधि बहि सिरास्नायुमासघटित असप्राप्तसृपाटिकासहनन ।

**यदुदयात्स्पर्शरसगधवर्णविकल्पा अष्टपचद्विपचसख्यास्तानि स्पर्शनामादीनि ॥ १० ॥** यस्योदयात्स्पर्शप्रादुर्भाव तत्स्पर्शनाम तदष्टविध—कर्कशनाम, मृदुनाम, गुरुनाम, लघुनाम, स्निग्धनाम, रूक्षनाम, शीतनाम, उष्णनाम चेति । यन्निमित्तो रसविकल्प तद्रसनाम तत्पचविध—तिक्तनाम, कटुकनाम, कषायनाम, आम्लनाम, मधुरनाम चेति । यदुदयभवो गधस्तद्गधनाम तद्द्विविध सुरभिगधनाम, असुरभिगधनाम चेति । यद्धेतुको वर्णविभागस्तद्वर्णनाम तत्पचविध—कृष्णवर्णनाम, नीलवर्णनाम, रक्तवर्णनाम, हारिद्रवर्णनाम, शुक्लवर्णनाम चेति । अचेतनेषु स्पर्शादय कथमितिचेत न कर्मोदयकृतास्ते पुद्गलस्वभावपरिणामा ।

**यदुदयात्पूर्वशरीराकारविनाशस्तदानुपूर्व्यनाम ॥११॥** यत्पूर्वशरीराकाराऽविनाश यस्योदयाद्भवति तदानुपूर्व्यं नाम । तच्चतुर्विध नरकगतिप्रायोग्यानुपूर्व्यनाम तिर्यग्गतिप्रायोग्यानुपूर्व्यनाम मनुष्यगतिप्रायोग्यानुपूर्व्यनाम देवगतिप्रायोग्यानुपूर्व्यनाम चेति । यदा छिन्नायुर्मनुष्यस्तिर्यग्वा पूर्वेण शरीरेण वियुज्यते तदैव नरकभव प्रत्यभिमुखस्य तस्य पूर्वशरीरसस्थानानिवृत्तिकारण विग्रहगतावुदेति तन्नरकगतिप्रायोग्यानुपूर्व्यनाम, एव शेषेष्वपि योज्य । ननु च तन्निर्माणनामकर्मसाध्य फल नानुपूर्व्यनामोदयकृत ? नैष दोष पूर्वायुरुच्छेदसमकाल एव पूर्वशरीरनिवृत्तौ निर्माणनामोदयो निवर्तते तस्मिन्निवृत्तेऽष्टविधकर्म तैजसकार्मणशरीरसबधिन आत्मन पूर्वशरीरसस्थानाविनाशकारणमानुपूर्व्यनामोदयमुपैति । तस्य कालो विग्रहगतौ जघन्येनैक समय , उत्कर्षेण त्रय समया । ऋजुगतौ तु पूर्वशरीराकारविनाशे सति उत्तरशरीरयोग्यपुद्गलग्रहणान्निर्माणनामकर्मोदयव्यापार ।

**यन्निमित्तमगुरुलघुत्व तदगुरुलघुनाम ॥ १२ ॥** यस्योदयादय पिंडवत् गुरुत्वादध पतति

न यार्कतूलवल्लघुत्वादूर्ध्वं गच्छति तदगुरुलघुनाम। धर्मादीनामजीवानां कथमगुरुलघुत्वमिति चेत् अनादिपारिणामिकागुरुलघुत्वगुणयोगात्। मुक्तजीवानां कथमिति चेत् अनादिकर्मनोकर्मसंबंधानां कर्मोदयकृतमगुरुलघुत्वं, तदत्यंतविनिवृत्तौ तु स्वाभाविकमाविर्भवति।

**यदुदयात्स्वयंकृतोद्बंधनाद्युपघातस्तदुपघातनाम ॥ १३ ॥** यस्योदयात् स्वयंकृतोद्बंधनमरुत्प्रपतनादिनिमित्त उपघातो भवति तदुपघातनाम।

**यन्निमित्तः परशस्त्राद्याघातस्तत्परघातनाम ॥१४॥** परशब्दोन्यपर्यायवाची फलकाद्यावरणसन्निधानेपि यस्योदयात् परप्रयुक्तशस्त्राद्याघातो भवति तत्परघातनाम।

**यदुदयान्निर्वृत्तमातपनं तदातपननाम ॥ १५ ॥** आतपति येन आतपनमातपतीति वा आतपः। तस्य निर्वर्तकं कर्म आतपननाम। तदादित्ये वर्तते।

**यन्निमित्तमुद्योतनं तदुद्योतनाम ॥ १६ ॥** उद्योत्यते येन उद्योतनं वोद्योतः तन्निमित्तं कर्म उद्योतनाम। तच्चंद्रखद्योतादिषु वर्तते।

**यद्धेतुरुच्छ्वासस्तदुच्छ्वासनाम ॥ १७ ॥** उच्छ्वसनमुच्छ्वासः प्राणापानकर्म तद्धेतुकं तदुच्छ्वासनाम।

**विहाय आकाशं तत्र गतिनिर्वर्तकं विहायोगतिनाम ॥ १८ ॥** विहायाकाशं तत्र गतिनिर्वर्तकं विहायोगतिनाम तद्विविधं प्रशस्ताप्रशस्तविकल्पात्। वरवृषभद्विरदादिप्रशस्तगतिकारणं प्रशस्तविहायोगतिनाम। उष्ट्रखराद्यप्रशस्तगतिनिमित्तमप्रशस्तविहायोगतिनाम चेति। सिध्यज्जीवपुद्गलानां विहायोगतिः कुत इति चेत् सा स्वाभाविकी। ननु च विहायोगतिनामकर्मोदयः पक्ष्यादिष्वेव प्राप्नोति न मनुष्यादिषु? कुतः? विहायसि गत्यभावात्। नैष दोषः सर्वेषां विहायस्येव गतिरवगाहनशक्तियोगात्।

**एकात्मोपभोगशरीरकारणता यतस्तत्प्रत्येकशरीरनाम ॥ १९ ॥** शरीरकर्मोदयात् निर्वर्त्यमानं शरीरमेकात्मोपभोगकारणं यतो भवति तत्प्रत्येकशरीरनामकर्म। एकमेकमात्मानं प्रति प्रत्येकं शरीरं।

**यतो बह्वात्मसाधारणोपभोगशरीरं तत्साधारणशरीरनाम ॥ २० ॥** बहूनामात्मनामुपभोगहेतुत्वेन साधरणं शरीरं यतो भवति तत्साधारणशरीरनाम तदुदयवर्तिनो जीवाः कीदृशा इति चेदुच्यते– साधारणाहारादिपर्याप्तिचतुष्टयजन्ममरणप्राणापानानुग्रहोपघाताः साधारणजीवाः। यदैकस्याहारशरीरेंद्रियप्राणापानपर्याप्तिनिर्वृत्तिस्तदैवानंतानामाहारादिपर्याप्तिनिर्वृत्तिः। यदैको जायते तदैवानंतानां जन्म। यदैवैको म्रियते तदैवानंतानां मरणं। यदैकस्य प्राणापानग्रहणविसर्गौ तदैवानंता प्राणापानग्रहणविसर्गौ कुर्वंति। यदैक आहारादिनानुगृह्यते तदैवानंता तेनाहारेणानुगृह्यते। यदैकोऽग्निविषादिनोपहन्यते तदैवानंतानां उपघातः।

**यदुदयाद्द्वींद्रियादिषु जन्म तत्त्रसनाम ॥ २१ ॥** यस्योदयाद् द्वींद्रियादिषु प्राणिषु जंगमेषु जन्म लभते तत्त्रसनाम।

**यन्निमित्त एकेंद्रियेषु प्रादुर्भावः तत्स्थावरनाम ॥ २२ ॥** एकेंद्रियेषु पृथिव्यप्तेजोवायुवनस्पतिकायेषु प्रादुर्भावो यन्निमित्तो भवति तत्स्थावरनाम।

**यदुदयादन्यप्रीतिप्रभवस्तत्सुभगनाम ॥ २३ ॥** विरूपाकृतिरपि सन् यदुदयात्परेषां प्रीतिहेतुर्भवति तच्छुभगनाम।

**यदुदयात् रूपादिगुणोपेतोपि अप्रीतिकरस्तद्दुर्भगनाम ॥ २४ ॥** रूपादिगुणोपेतोपि सन् यस्योदयात् परेषामप्रीतिहेतुर्भवति तद्दुर्भगनाम।

**यन्निमित्तं मनोज्ञस्वरनिर्वर्तनं तत्सुस्वरनाम ॥ २५ ॥** मनोज्ञस्वरनिर्वर्तनं यन्निमित्तमुपजायते प्राणिनस्तत्सुस्वरनाम ।

**तद्विपरीतं दुःस्वरनाम ॥ २६ ॥** तद्विपरीतफलत्वात् तद्विपरीतं अमनोज्ञस्वरानिर्वर्तनकरं दुःस्वरनाम।

**यदुदयाद्रमणीयत्वं तच्छुभनाम ॥ २७ ॥** यदुदयाद्दृष्टः श्रुतो वा रमणीयो भवत्यात्मा तच्छुभनाम।

**तद्विपरीतमशुभनाम ॥ २८ ॥** तद्विपरीतफलं दृष्टुः श्रोतुश्चारमणीयकरं अशुभनाम ।

**सूक्ष्मशरीरनिर्वर्तकं सूक्ष्मनाम ॥ २९ ॥** यदुदयादन्यजीवानुपग्रहोपघातायोग्यसूक्ष्मशरीरनिर्वृत्तिर्भवति तत्सूक्ष्मनाम ।

**अन्यबाधाकरशरीरकारणं बादरनाम ॥ ३० ॥** अन्यबाधानिमित्तं स्थूलं शरीरं यतो भवति तद्बादरनाम ।

**यदुदयादाहारादिपर्याप्तिनिर्वृत्तिस्तत्पर्याप्तिनाम ॥ ३१ ॥** यस्योदयात् आहारादिपर्याप्तिभिरात्मांतर्मुहूर्ते पर्याप्तिं प्राप्नोति तत्पर्याप्तिनाम । तत्षड्विध—आहारपर्याप्तिनाम, शरीरपर्याप्ति नाम, इंद्रियपर्याप्ति नाम, भाषापर्याप्तिनाम, मनःपर्याप्तिनाम चेति । अत्राह प्राणापानकर्मोदये वायोर्निष्क्रमणप्रवेशनात्मकं फलमुच्छ्वासकर्मोदयेपि तदेवेति नास्त्यनयोर्विशेष इत्युच्यते—

**ऐंद्रियकानिंद्रियभेदात्तद्विशेषः ॥ ३२ ॥** शीतोष्णसंबंधजनितदुःखस्य पंचेंद्रियस्य यावुच्छ्वासनिःश्वासौ दीर्घनादौ श्रोत्रस्पर्शनेंद्रियप्रत्यक्षौ तावुच्छ्वासनामोदयजौ, यौ तु प्राणापानपर्याप्तिनामोदयकृतौ सर्वसंसारिणः श्रोतृस्पर्शानुपलभ्यत्वादतींद्रियौ ।

**षड्विधपर्याप्त्यभावहेतुरपर्याप्तिनाम ॥ ३३ ॥** यस्योदयात् षडपि पर्याप्तीः पर्यापयितुं आत्मा असमर्थो भवति तदपर्याप्तिनाम ।

**स्थिरभावस्य निर्वर्तकं स्थिरनाम ॥ ३४ ॥** यदुदयात् दुष्करोपवासादितपस्करणेपि अंगोपांगानां स्थिरत्वं जायते तत्स्थिरनाम ।

**तद्विपरीतमस्थिरनाम ॥ ३५ ॥** यदुदयादीषदुपवासादिकरणात् स्वल्पशीतोष्णादिसंबंधाच्च अंगोपांगानि कृशीभवंति तदस्थिरनाम ।

**प्रभोपेतशरीरताकारणं आदेयनाम ॥ ३६ ॥** यस्योदयात् प्रभोपेतशरीरं दृष्टमुपजायते तदादेयनाम ।

**निष्प्रभशरीरकारणमनादेयनाम ॥ ३७ ॥** निष्प्रभं शरीरं यस्योदयादापद्यते तदनादेयनाम । अत्राह तैजसं नाम सूक्ष्मशरीरमस्ति तन्निमित्ता शरीरप्रभा नादेयकर्मनिमित्तेत्युच्यते—सर्वसंसारिजीवशरीरप्रभाविशेषप्रसंगः स्यात् तैजसस्य सर्वेषां साधारणत्वात् , तत आदेयकर्मोदयनिमित्ता प्रभेति युक्तं ।

**पुण्यगुणख्यापनकारणं यशस्कीर्तिनाम ॥ ३८ ॥** पुण्यगुणानां ख्यापनं यदुदयाद्भवति तद्यशस्कीर्तिनाम प्रत्येतव्यं । ननु यशःकीर्तिरित्यनयोर्नास्त्यर्थविशेष इति पुनरुक्तत्वप्रसंगः ? नैष दोषः यशोनाम गुणः कीर्तनं संशब्दनं कीर्तिः, यशसः कीर्तिः यशःकीर्तिरित्यस्त्यर्थभेदः ।

**तत्प्रत्यनीकफलमयशस्कीर्तिनाम ॥ ३९ ॥** पापगुणख्यापनकारणं अयशस्कीर्तिनाम वेदितव्यं ।

**आर्हन्त्यकारणं तीर्थकरत्वं नाम ॥ ४० ॥** यस्योदयादार्हन्त्यमचिंत्यविभूतिविशेषयुक्तमुपजायते तत्तीर्थकरत्वनाम कर्म प्रतिपत्तव्यं ।

**गणधरत्वादीनामुपसंख्यानमिति चेन्नाऽन्यनिमित्तत्वात् ॥ ४१ ॥** यथा ...

कर्मोच्यते तथा गणधरत्वादीनां उपसंख्यानं कर्तव्यं, गणधरचक्रधरवासुदेवबलदेवा अपि विशिष्टर्द्धियुक्ता इति चेत् तन्न। किं कारणं? अन्यनिमित्तत्वात्। गणधरत्वं श्रुतज्ञानावरणक्षयोपशमनिमित्तं चक्रधरत्वादीनि उच्चैर्गोत्रविशेषहेतुकानि।

**तदेव तीर्थकरत्वस्यापीति चेन्न तीर्थप्रवर्तनफलत्वात् ॥ ४२ ॥** स्यान्मतं तदेव उच्चैर्गोत्रं तीर्थकरत्वस्यापीति निमित्तं भवतु किं तीर्थकरत्वनाम्नेति? तन्न। किं कारणं? तीर्थप्रवर्तनफलत्वात् तीर्थप्रवर्तनफलं हि तीर्थकरनामेष्यते न चोच्चैर्गोत्रोदयात् तदवाप्यते चक्रधरादीनां तदभावात्। किमर्थं विहायोगगतानां प्रत्येकशरीरादिभिरेकवाक्यत्वं न कृतं?

**पूर्वेषां प्रतिपक्षविरहात् एकवाक्यत्वाभावः ॥ ४३ ॥** पूर्वे गत्यादयो विहायोगत्यंता प्रतिपक्षविरहिताः प्रत्येकशरीरादयः सेतरग्रहणेन विशेषयितुमिष्टास्ततस्तेषां एकवाक्यभावो न कृतः। अथ किमर्थं तीर्थकरत्वस्य पृथग्ग्रहणं?

**प्रधानत्वात्तीर्थकरत्वस्य ॥ ४४ ॥** तीर्थकरत्वं हि प्रधानभूतं सर्वेषु शुभकर्मसु ततस्तस्य पृथग्ग्रहणं क्रियते।

**अल्पत्वाच्च ॥ ४५ ॥** प्रत्यासन्ननिष्ठस्य तस्योदयो जायते ततश्चास्य पृथग्ग्रहणं क्रियते। आह उक्ता सोत्तरप्रकृतिबंधभेदा विविधभावनामनिर्वर्तनाहितान्वर्थसंज्ञा षष्ठी कर्मप्रकृतिः। अथ सप्तमी कियत्प्रकारेत्यत्रोच्यते—

## उच्चैर्नीचैश्च ॥ १२ ॥

**गोत्रं द्विविधमुच्चैर्नीचैरिति विशेषणात् ॥ १ ॥** गोत्रं द्विविधं द्रष्टव्यं उच्चैर्नीचैरिति विशेषणात् उच्चैर्गोत्रं नीचैर्गोत्रमिति। तत्र कीदृशमुच्चैर्गोत्रं कीदृशं नीचैर्गोत्रं?

**यस्योदयात् लोकपूजितेषु कुलेषु जन्म तदुच्चैर्गोत्रं ॥ २ ॥** लोकपूजितेषु कुलेषु प्रथितमाहात्म्येषु इक्ष्वाकुयदुकुरुहरिज्ञातिप्रभृतिषु जन्म यस्योदयाद्भवति तदुच्चैर्गोत्रमवसेयं।

**गर्हितेषु यत्कृतं तन्नीचैर्गोत्रं ॥ ३ ॥** गर्हितेषु दरिद्राप्रतिज्ञातदुःखाकुलेषु यत्कृतं प्राणिनां जन्म तन्नीचैर्गोत्रं प्रत्येतव्यं। आह व्याख्यातौ गोत्रभेदौ तदनंतरमुद्दिष्टस्यांतरायस्य किमाख्या प्रकारा इत्यत्रोच्यते-

## दानलाभभोगोपभोगवीर्याणां ॥ १३ ॥

**दानादीनामंतरायापेक्षयाऽर्थव्यतिरेकनिर्देशः ॥ १ ॥** अंतराय इति वर्तते तदपेक्षया दानादीनामर्थव्यतिरेकः क्रियते दानस्यांतरायो लाभस्यांतराय इत्यादि।

( **दानादिपरिणामव्याघातहेतुत्वात् तद्व्यपदेशः ॥ १ ॥** यदुदयाद्दातुकामो न प्रयच्छति लब्धुकामोपि न लभते भोक्तुमिच्छन्नपि न भुंक्ते उपभोक्तुमिच्छन्नपि नोपभुंक्ते उत्सहितुकामोपि नोत्सहते। त एते पंचांतरायव्यपदेशा वेदितव्याः )

**भोगोपभोगयोरविशेष इति चेन्न गंधादिशयनादिभेदतस्तद्भेदसिद्धेः ॥ २ ॥** स्यान्मतं भोगोपभोगयोरविशेषः कुतः? सुखानुभवननिमित्तत्वाभेदादिति? तन्न किं कारणं? गंधादिशयनादिभेदतस्तद्भेदसिद्धेः गंधमाल्यशिरःस्नानवस्त्रान्नपानादिषु भोगव्यवहारः। शयनासनांगनाहस्त्यश्वरथ्यादिषूपभोगव्यपदेशः। ता एता ज्ञानावरणादीनां उत्तरप्रकृतयः संख्येया उक्ताः। ज्ञानावरणस्य नामश्चाऽसंख्येया अपि भवंतीत्याप्तोपदेशः। व्याख्यातः प्रकृतिबंधविकल्पः, अतः परं स्थितिबंधविकल्पं व्याख्यास्यामः।

आह व्याख्यास्यति भवान् स्थितिबन्ध इद तु संशेमहे किमसावभिहितलक्षणात् पूर्वस्मात् प्रकृतिबधात् विशिष्टात् अर्थांतरभूतकर्मविषय आहोस्वित् तस्यैव प्रथमकालिककर्मण प्राक्प्रकृतिबधव्यपदेशवत् पर्यायांतरनिर्देश इति । अत्र ब्रूमहे—अस्थानेऽय सशय कुत ? यस्मादेतासामेव प्रकृतीना अनेकभेदाना यथास्वमनिर्जीर्णाना यावत कालमवस्थान आश्रयविनाशाभावात् तस्मिन् स्थितिबधविवक्षा सा पुन स्थितिरुभयथा—परापरा च । प्रकृष्टात् प्रणिधानात् परा निकृष्टात् प्रणिधानात् अपरा । यद्येव उच्यतां कियत्कालेय कर्मप्रकृतिरित्यत्रोच्यते सति वक्तव्ये—

## आदितस्तिसृणामंतरायस्य च त्रिंशत्सागरोपमकोटीकोट्यः परा स्थिति ॥ ४ ॥

**आदित इति वचन मध्यांतनिवृत्त्यर्थं ॥ १ ॥** मध्ये अते वा तिसृणा ग्रहण माभूदित्येवमर्थमादित इत्युच्यते आदौ आदित तसा प्रकरणे—'आद्यादिभ्य उपसख्यानमिति' तस् ।

**तिसृणामिति वचनं अवधारणार्थं ॥ २ ॥** आदित इत्युच्यमाने इयतीनां प्रकृतीनां ग्रहणमित्यवधारण न स्यात् अतोऽवधारणार्थं तिसृणामित्युच्यते ।

**अतरायस्य चेति क्रमभेदवचन समानस्थितिप्रतिपत्त्यर्थं ॥ ३ ॥** मूलप्रकृतिक्रममुल्लघ्यांतरायस्य चेत्युच्यते समानस्थितिप्रतिपत्त्यर्थं । का पुनरसौ समानस्थिति ? त्रिंशत्सागरोपमकोटीकोट्य । उक्तपरिमाणं सागरोपम ।

**कोटीकोट्य इति द्वित्वे बहुत्वानुपपत्तिः इति चेन्न राजपुरुषवत्तत्सिद्धेः ॥ ४ ॥** स्यान्मत यथा ग्रामो ग्रामो रमणीय इति वीप्साया द्वित्वेनैव गतत्वात् बहुवचन न प्रयुज्यते तथा कोटीकोट्य इत्यत्रापि वीप्साया द्वित्वेन गतत्वात् बह्वर्थस्य बहुवचन न प्राप्नोति ? तन्न । किं कारण ? राजपुरुषवत्तत्सिद्धे । यथा राज्ञ पुरुष राजपुरुष इति । एव कोटीना कोट्य कोटीकोट्य इति वृत्तिर्द्रष्टव्या ।

**पराभिधानं जघन्यस्थितिनिवृत्त्यर्थं ॥ ५ ॥** परेत्युच्यते किमर्थं ? जघन्यस्थितिनिवृत्त्यर्थं परा उत्कृष्टा इत्यर्थ । सा कस्येति चेदुच्यते—

**संज्ञिपचेंद्रियपर्याप्तकस्य परा स्थितिः ॥६॥** सज्ञिन पचेन्द्रियस्य पर्याप्तकस्य ज्ञानदर्शनावरणवेदनीयांतरायाणा त्रिंशत् सागरोपमकोटीकोट्य परा स्थितिर्भवति ।

**अन्येषामागमात् सम्प्रत्ययः ॥ ७ ॥** अन्येषामेकेंद्रियादीनामागमात् सम्प्रत्ययो भवति । तद्यथा एकेंद्रियपर्याप्तकस्य एकसागरोपमसप्तभागास्त्रय । द्वींद्रियपर्याप्तकस्य पचविंशतिसागरोपमसप्तभागास्त्रय । त्रींद्रियपर्याप्तकस्य पचाशत्सागरोपमसप्तभागास्त्रय । चतुरिंद्रियपर्याप्तकस्य सागरोपमशतसप्तभागास्त्रय । असज्ञिपचेंद्रियपर्याप्तकस्य सागरोपमसहस्रसप्तभागास्त्रय । सज्ञिपचेंद्रियपर्याप्तकस्यांत सागरोपमकोटीकोट्य । एकेंद्रियापर्याप्तकस्य त एव भागा पल्योपमस्यासख्येयभागोना । द्वित्रिचतु पचेंद्रियाऽपर्याप्तसज्ञिना त एव भागा पल्योपमासख्येयभागोना । यस्य कर्मण स्थितिमतिलघ्यान्यकर्मस्थितिरभिहिता तस्य खलु वेदनीयानतरोद्देशभाज —

## सप्ततिर्मोहनीयस्य ॥ १५ ॥

सागरोपमकोटीकोट्य परा स्थितिरित्यनुवर्तते । इयमपि परा स्थिति सज्ञिपचेंद्रियपर्याप्तकस्यावसेया । इतरेषामेकेंद्रियादीनां यथागम । तद्यथा—पर्याप्तकैकद्वित्रिचतुरिंद्रियाणामेकपचविंशतिपचाशच्छतसागरोपमाणि यथासख्यमपर्याप्तकैकेंद्रियस्य पल्योपमासंख्येयभागोना सैव स्थिति । द्वींद्रियादीनामपि सैव पल्योपमासख्येयभागोना पर्याप्तकासज्ञिपचेंद्रियस्य सागरोपमसहस्र तस्यैवापर्याप्तकस्य सागरोपमसहस्र पल्योपमसख्येयभागोन, अपर्याप्तसज्ञिन अत सागरोपमकोटीकोट्य ।

आह निर्दिष्टा पचानां कर्मप्रकृतीना स्थिति अथोपरिष्टयो का परा स्थितिरित्यत्रोच्यते—

## विंशतिर्नामगोत्रयोः ॥ १६ ॥

सागरोपमकोटीकोट्य परा स्थितिरित्यनुवर्तते इयमप्युत्कृष्टा सज्ञिपचेद्रियपर्याप्तकस्य, एकेंद्रियादीना यथागम तद्यथा-एकेंद्रियपर्याप्तकस्यैकसागरोपमसप्तभागौ द्वौ। द्वींद्रियपर्याप्तकस्य पचविंशतिसागरोपमसप्तभागौ द्वौ। त्रींद्रियपर्याप्तकस्य पचाशत्सागरोपमसप्तभागौ द्वौ। चतुरिंद्रियपर्याप्तकस्य सागरोपमशतसप्तभागौ द्वौ। असज्ञिपचेंद्रियापर्याप्तकस्य अत सागरोपमकोटीकोट्य। एकेंद्रियापर्याप्तकस्य तावद्भागौ पल्योपमासख्येयभागोनौ। द्वित्रिचतु पर्चेद्रियापर्याप्तकासज्ञिनां सैव स्थिति पल्योपमासख्येयभागोना।

आह आयुष कोत्कृष्टा स्थितिरित्यत्रोच्यते—

## त्रयस्त्रिंशत् सागोपमाण्यायुषः ॥ १७ ॥

पुन सागरोपमग्रहण कोटीकोटीनिवृत्त्यर्थ, परा स्थितिरित्यनुवर्तते एव अस्याप्युत्कृष्टा स्थिति सज्ञिपर्याप्तकस्यैव। इतरेषा यथागम तद्यथा-असज्ञिपचेंद्रियपर्याप्तकस्य पल्योपमस्यासख्येयभाग, शेषाणां उत्कृष्टा पूर्वकोटी।

आह अष्टानामपि कर्मप्रकृतीना व्याख्याता परा स्थिति। अथ तासामेव का जघन्या स्थितिरित्युपदिश्यते-अन्यकर्मस्थितिविशेषाधिकत्वात्। आनुपूर्व्योल्लघनेन अमुष्यैव तावत् स्वसवेद्यफलस्य वेद्यस्य वेदितव्या स्थिति —

## अपरा द्वादश मुहूर्ता वेदनीयस्य ॥ १८ ॥

सूक्ष्मसांपराय इति वाक्यशेष।

अथानुपूर्व्यनिरोधात्यये सति मोहायुर्भ्यांरहितयोरन्ययो का जघन्या स्थितिरित्युच्यते—

## नामगोत्रयोरष्टौ ॥ १९ ॥

अत्रापि सूक्ष्मसांपराय इति वाक्यशेष। मुहूर्ता इत्यनुवर्तते। अपरा स्थितिरिति च।

अथान्यासा कर्मप्रकृतीनां का जघन्या स्थितिरित्युच्यते—

## शेषाणामंतर्मुहूर्ता ॥ २० ॥

अपरा स्थितिरित्यनुवर्तते। तत्र ज्ञानदर्शनावरणातरायाणा सूक्ष्मसापराये मोहनीयस्यानिवृत्तिबादरसापराये आयुष सख्येयवर्षायुस्सु तिर्यक्षु मनुष्येषु च।

आह उभयी ज्ञानावरणादीनामभिहिता स्थिति, अथानुभव किंलक्षण? इत्यत्रोच्यते—

## विपाकोनुभवः ॥ २१ ॥

**विशिष्ट. पाको नानाविधो वा विपाकः ॥१॥** ज्ञानावरणादीनां कर्मप्रकृतीना अनुग्रहोपघातात्मिकाना पूर्वास्रवतीव्रमदभावनिमित्तो विशिष्ट पाको विपाक। द्रव्यक्षेत्रकालभवभावलक्षणनिमित्तभेदजनितवैश्वरूप्यो नानाविधो वा पाको विपाक असावनुभव इत्याख्यायते। शुभपरिणामाना प्रकर्षभावात् शुभप्रकृतीना प्रकृष्टोनुभव अशुभप्रकृतीनां निकृष्ट। अशुभपरिणामाना प्रकर्षभावात् अशुभप्रकृतीनां प्रकृष्टोनुभव शुभप्रकृतीनां निकृष्ट। स एव प्रत्ययवशादुपात्तोनुभवो द्विधा प्रवर्तते स्वमुखेन परमुखेन च। सर्वासा मूलप्रकृतीना स्वमुखेनैवानुभव। उत्तरप्रकृतीना तु तुल्यजातीयाना परमुखेनापि भवति-आयुर्दर्शन चारित्रमोहवर्जानां। न हि नारकायुर्मुखेन तिर्यगायुर्मनुष्यायुर्वा विपच्यते। नापि दर्शनमोह चारित्रमोहमुखेन चारित्रमोहो वा दर्शनमोहमुखेन। आह अभ्युपेम प्रागुपचितनानाप्रकारकर्मविपाकोनुभव इति इद तु न विजानीम किमय सख्यातोऽसख्यात? इत्यत्रोच्यते प्र... इत्यनुभूयत इति ब्रूमहे कुत? यत—

## स यथानाम ॥ २२ ॥

**ज्ञानावरणादीना सविकल्पाना प्रत्येकमन्वर्थसंज्ञानिर्देशादनुभवसंप्रत्यय ॥ १ ॥** ज्ञानावरणस्य फल ज्ञानाभाव , दर्शनावरणस्य फल दर्शनशक्त्युपरोध इत्येवमाद्यन्वर्थसंज्ञानिर्देशात् सर्वासा कर्मप्रकृतीना सविकल्पाना अनुभवसंप्रत्ययो जायते ।

आह यदि विपाकोऽनुभव प्रतिज्ञायते तत्कर्मानुभूत सत् किमावरणवदवतिष्ठते ? आहोस्विन्निष्पादितसार प्रच्यवते इत्यत्रोच्यते–

## ततश्च निर्जरा ॥ २३ ॥

**पूर्वार्जितकर्मपरित्यागो निर्जरा ॥ १ ॥** पीडानुग्रहावात्मान प्रदायाभ्यवहृतौदनादिविकारवत्पूर्वस्थितिक्षयादवस्थानाभावात् ।

**सा द्विप्रकारा विपाकजेतरा च ॥ २ ॥** सा द्विप्रकारा वेदितव्या। कुत ? विपाकजेतरा चेति। तत्र चतुर्गतावनेकजातिविशेषावघूर्णिते ससारमहार्णवे चिर परिभ्रमत शुभाशुभस्य कर्मण औदयिकभावादीरितस्य क्रमेण विपाककालप्राप्तस्य यथासदसद्वेद्यतान्यतरविकल्पबद्धस्य तस्य तेन प्रकारेण वेद्यमानस्य यथानुभवोदयावलीस्रोतोऽनुप्रविष्टस्यारब्धफलस्य स्थितिक्षयादुदयागतपरिभुक्तस्य या निवृत्ति सा विपाकजा निर्जरा । यत्कर्माप्राप्तविपाककालमौपक्रमिकक्रियाविशेषसामर्थ्यादनुदीर्णं बलादुदीर्य उदयावलिं प्रवेश्य वेद्यते आम्रपनसादिपाकवत् सा अविपाकानिर्जरा ।

**निमित्तान्तरसमुच्चयार्थश्चशब्दः ॥ ३ ॥** तपसा निर्जरेति वक्ष्यते तस्य समुच्चयार्थश्चशब्द क्रियते । ततश्च भवति अन्यतश्चेति ।

**संवरात्परत्र पाठ इतिचेन्नानुभवानुवादपरिहारार्थत्वात् ॥ ४ ॥** स्यान्मत संवरान्निर्जरा परत्र पठितव्या यथोद्देश तथा निर्देश इति ? तन्न । किं कारण ? अनुभवानुवादपरिहारार्थत्वात् तत्र हि पाठे क्रियमाणे विपाकोऽनुभव इति पुनरनुवाद कर्तव्य स्यात् ।

**पृथक् निर्जरावचनमनर्थक बधेऽतर्भावादिति चेन्नाऽर्थापरिज्ञानात् ॥ ५ ॥** स्यान्मत यथा पुण्यपापयो पृथग्ग्रहण न कृत बधेऽतर्भावात् तथा निर्जरा अपि उक्तेन क्रमेण अनुभवेऽन्तर्भवति इति पृथगस्या ग्रहणमनर्थकमिति ? तन्न । किं कारण ? अर्थापरिज्ञानात् । फलदानसमर्थ्यमनुभव इत्युच्यते । ततोऽनुभूतानामात्तवीर्याणा पुद्गलाना निवृत्तिर्निर्जरेत्ययमर्थभेद । एव च कृत्वा ततश्चेति अपादाननिर्देश उपपन्नो भवति इतरथा हि भेदाभावान्नोपपद्यते ।

**लघ्वर्थमिहैव तपसेति वक्तव्यमितिचेन्न संवरानुग्रहतन्त्रत्वत् ॥ ६ ॥** स्यादेतत् लघ्वर्थमिहैव 'ततो निर्जरा तपसा चेति' वक्तव्य पुनर्निर्जराग्रहणमाकर्षमिति ? तन्न । किं कारण ? संवरानुग्रहतन्त्रत्वात् । तपसा निर्जरा च भवति सवरश्चेति ।

**धर्मेंतर्भावात् संवरहेतुत्वमिति चेन्न पृथग्ग्रहणस्य प्राधान्यख्यापनार्थत्वात् ॥७॥** स्यान्मत उत्तमक्षमामार्दवार्जवादियोगे उत्तम तप संवरहेतुरिति वक्ष्यते ततस्तत्रान्तर्भावात् संवरहेतुत्वसिद्धे इह वचनाच्च निर्जराहेतुत्वविज्ञानात् पृथक् तत्र तपोग्रहणमनर्थकमिति ? तन्न । किं कारण ? पृथग्ग्रहणस्य प्राधान्यख्यापनार्थत्वात् । सर्वेषु संवरनिर्जराहेतुषु तप प्रधानभूतमित्येतस्य ज्ञापनार्थं पुनस्तपोग्रहण क्रियते । उक्त च—

कायमणोवचिगुत्तो चोतवसाचेट्ठदे अणेयविह ।
सो कम्मणिज्जराए विपुलाए वट्टदि मणसोत्ति ॥

१ ब पुस्तके आरब्धक्रमेण स्थितिक्षयादि पाठ । २ निर्जराग्रहणं माकर्षादिति ॥ समाने ।

आह निर्दिष्टा पचाना कर्मप्रकृतीना स्थिति अथोपरिष्टयो का परा स्थितिरित्यत्रोच्यते—

## विंशतिर्नामगोत्रयोः ॥ १६ ॥

सागरोपमकोटीकोट्य परा स्थितिरित्यनुवर्तते इयमप्युत्कृष्टा सज्ञिपचेंद्रियपर्याप्तकस्य, एकेंद्रियादीना यथागम तद्यथा–एकेंद्रियपर्याप्तकस्यैकसागरोपमसप्तभागौ द्वौ। द्वींद्रियपर्याप्तकस्य पचविंशतिसागरोपमसप्तभागौ द्वौ। त्रींद्रियपर्याप्तकस्य पचाशत्सागरोपमसप्तभागौ द्वौ। चतुरिंद्रियपर्याप्तकस्य सागरोपमशतसप्तभागौ द्वौ। असज्ञिपचेंद्रियापर्याप्तकस्य अत सागरोपमकोटीकोट्य। एकेंद्रियापर्याप्तकस्य तावद भागो पल्योपमासख्येयभागोनौ। द्वित्रिचतु पचेंद्रियापर्याप्तकासज्ञिनां सैव स्थिति पल्योपमासख्येयभागोना।

आह आयुष कोत्कृष्टा स्थितिरित्यत्रोच्यते—

## त्रयस्त्रिंशत् सागोपमाण्यायुषः ॥ १७ ॥

पुन सागरोपमग्रहण कोटीकोटीनिवृत्त्यर्थ, परा स्थितिरित्यनुवर्तते एव अस्याप्युत्कृष्टा स्थिति सज्ञिपर्याप्तकस्यैव। इतरेषा यथागम तद्यथा असज्ञिपचेंद्रियपर्याप्तकस्य पल्योपमस्यासख्येयभाग, शेषाणां उत्कृष्टा पूर्वकोटी।

आह अष्टानामपि कर्मप्रकृतीनां व्याख्याता परा स्थिति। अथ तासामेव का जघन्या स्थितिरित्युपदिश्यते–अन्यकर्मस्थितिविशेषाधिकत्वात्। आनुपूर्व्योल्लघनेन अमुष्यैव तावत् स्वसवेद्यफलस्य वेद्यस्य वेदितव्या स्थिति —

## अपरा द्वादश मुहूर्ता वेदनीयस्य ॥ १८ ॥

सूक्ष्मसांपराय इति वाक्यशेष।

अथानुपूर्व्यविशेषात्यये सति मोहायुर्व्यवहितयोरन्ययो का जघन्या स्थितिरित्युच्यते—

## नामगोत्रयोरष्टौ ॥ १९ ॥

अत्रापि सूक्ष्मसांपराय इति वाक्यशेष। मुहूर्ता इत्यनुवर्तते। अपरा स्थितिरिति च।

अथान्यासा कर्मप्रकृतीनां का जघन्या स्थितिरित्युच्यते—

## शेषाणामंतर्मुहूर्ता ॥ २० ॥

अपरा स्थितिरित्यनुवर्तते। तत्र ज्ञानदर्शनावरणातरायाणा सूक्ष्मसापराये मोहनीयस्यानिवृत्तिबादरसापराये आयुष सख्येयवर्षायुस्सु तिर्यक्षु मनुष्येषु च।

आह उभयी ज्ञानावरणादीनामभिहिता स्थिति, अथानुभव किंलक्षण ? इत्यत्रोच्यते—

## विपाकोनुभवः ॥ २१ ॥

**विशिष्टः पाको नानाविधो वा विपाकः ॥१॥** ज्ञानावरणादीना कर्मप्रकृतीना अनुग्रहोपघातात्मिकाना पूर्वास्रवतीव्रमदभावनिमित्तो विशिष्ट पाको विपाक। द्रव्यक्षेत्रकालभवभावलक्षणनिमित्तभेदजनितवैश्वरूप्यो नानाविधो वा पाको विपाक असावनुभव इत्याख्यायते। शुभपरिणामाना प्रकर्षभावात् शुभप्रकृतीना प्रकृष्टोनुभव अशुभप्रकृतीनां निकृष्ट। अशुभपरिणामाना प्रकर्षभावात् अशुभप्रकृतीनां प्रकृष्टोनुभव शुभप्रकृतीना निकृष्ट। स एव प्रत्ययवशादुपात्तोनुभवो द्विधा प्रवर्तते स्वमुखेन परमुखेन च। सर्वासा मूलप्रकृतीना स्वमुखेनैवानुभव। उत्तरप्रकृतीना तु तुल्यजातीयाना परमुखेनापि भवति–आयुर्दर्शनचारित्रमोहवर्जानां। न हि नारकायुर्मुखेन तिर्यगायुर्मनुष्यायुर्वा विपच्यते। नापि दर्शनमोह चारित्रमोहमुखेन चारित्रमोहो वा दर्शनमोहमुखेन। आह अभ्युपेम प्रागुपचितनानाप्रकारकर्मविपाकोनुभव इति इद तु न विजानीम किमय सख्यातोऽप्रसख्यात ? इत्यत्रोच्यते प्र..र्द..ऽनुभूयत इति ब्रूमहे कुत ? यत –

वेदितव्य । आह वधपदार्थानतर पुण्यपापोपसख्यान चोदित तद्वधंतभूर्तमिति प्रत्याख्यात । तत्रेद वक्तव्य कोत्र पुण्यबंध क पापबन्ध इति तत्र पुण्यप्रकृतिपरिगणनार्थमिदमुच्यते—

## सद्वेद्यशुभायुर्नामगोत्राणि पुण्यं ॥ २५ ॥

**शुभग्रहणमायुरादीनां विशेषण ॥ १ ॥** शुभ प्रशस्तमित्यर्थ सद्ग्रहणमायुरादीना विशेषण द्रष्टव्य । शुभायु, शुभनाम शुभगोत्रमिति ।

**शुभायुस्त्रिविध ॥ २ ॥** तिर्यगायुर्मनुष्यायुर्देवायुरिति एतत्त्रितय शुभायुरित्युच्यते ।

**शुभनाम सप्तत्रिंशद्विकल्पं ॥ ३ ॥** शुभनाम सप्तत्रिंशद्विकल्प, अवगतव्य । तद्यथा-मनुष्यगति, देवगति, पचेंद्रियजाति, पचशरीराणि, त्रीण्यगोपागानि, समचतुरस्रसस्थान, वज्रर्षभनाराचसहनन, प्रशस्तवर्ण-गध—रस स्पर्शा, मनुष्यगति-देवगत्यानुपूर्व्यद्वय अगुरुलघुपरघातोच्छ्वासातपोद्योतप्रशस्तविहायोगतय त्रस—बादर—पर्याप्ति—प्रत्येकशरीर-स्थिर—शुभ—सुभग-सुस्वर-आदेय-यशस्कीर्तय निर्माण तीर्थकरनाम चेति शुभमेकमुच्चैर्गोत्र सद्वेद्यमित्येता द्वाचत्वारिंशत्प्रकृतय पुण्यसज्ञा ।

## अतोन्यत् पाप ॥ २६ ॥

अस्मात् पुण्यसज्ञककर्मप्रकृतिसमूहाद् यत् कर्म पापमित्युच्यते । तद्द्व्यशीतिविध । तद्यथा ज्ञानावरणप्रकृतय पच, दर्शनावरणस्य नव, मोहनीयस्य षड्विंशति, पचांतरायस्य, नरकगति, तिर्यग्गति, चतस्रो जातय, पच सस्थानानि, पच सहननानि, अप्रशस्तवर्ण-गध-रस-स्पर्शा नरकगतितिर्यग्गत्यानुपूर्व्यद्वय उपघाताप्रशस्तविहायोगतिस्थावरसूक्ष्मापर्याप्तिसाधारणशरीराशुभदुर्भगास्थिरदु स्वरानादेयायशस्कीर्तयश्चेति नामप्रकृतय चतुस्त्रिंशत् असद्वेद्य नरकायु, नीचर्गोत्रमिति । एव व्याख्यात सप्रपचो बधपदार्थ अवधिमन पर्ययकेवलज्ञानप्रत्यक्षप्रमाणगम्य तदुपदिष्टागमानुमेय ।

इति तत्त्वार्थवार्तिके व्याख्यानालकारेऽष्टमोध्याय समाप्त ॥ ८ ॥

---

ॐ नमः सिद्धेभ्यः ।

# अथ नवमोध्यायः ।

अत्राह योऽय अनादिसततिपौनर्भविकसुखदु खहेतु, अष्टविधविशेषोपचितमूर्ति नानाजातिविग्रहोत्पादनप्रवण पौरुषेण य सर्वात्मप्रदेशावेष्टनसमर्थ कर्मबध स केनचिदुपायेनापि नाम कस्यचित् अनात्यतिक स्यादिति ? अत्रोच्यते भवति हि केषांचिदात्यतिकस्तद्विनाश यस्मात्तदर्थमेव भगवद्भिरुपदिष्ट ।

## आस्रवनिरोध· सवरः ॥ १ ॥

अथवा आह कथ पुनरेतदाहितवैचित्र्य नानास्रवापादित ज्ञानावरणादिकर्मबध नोपयादिति । अत्रोच्यते सवरात् । कोसौ सवर इति ? अत एवाह आस्रवनिरोध सवर इति । अथवा वधपदार्थो निर्दिष्ट । इदानीं तदनतरोद्देशभाज सवरस्य निर्देश प्राप्तकाल इत्यत इदमाह । आस्रवनिरोध सवर इति । कोयमास्रवनिरोध ?

सत इह तपोऽन्वर्न गौरव जनयति इति न कृत । ता पुन कर्मप्रकृतयो द्विविधाः-घातिका अघातिकाश्चेति । तत्र ज्ञानदर्शनावरणमोहांतरायाख्या घातिका । इतरा अघातिका । घातिकाश्चापि द्विविधा सर्वघातिका देशघातिकाश्चेति । तत्र केवलज्ञानावरणनिद्रानिद्राप्रचलाप्रचलास्त्यानगृद्धिनिद्राप्रचलाकेवलदर्शनावरणद्वादशकषायदर्शनमोहाख्या. विंशतिप्रकृतय सर्वघातिका । ज्ञानावरणचतुष्कदर्शनावरणत्रयांतरायपंचकसंज्वलननोकषायसंज्ञिका देशघातिका । अवशिष्टा प्रकृतय, अघातिका । तथेदमपरमवसेय— शरीरनामादय स्पर्शांता अगुरुलघूपघातपरघातातपोद्योतप्रत्येकशरीरसाधारणशरीरस्थिरास्थिरशुभाशुभनिर्माणनामाख्याश्च पुद्गलविपाकप्रदा । आनुपूर्व्यनाम क्षेत्रविपाककर, आयुर्भवधारणफल । अवशिष्टा. प्रकृतयोजीवविपाकहेतव इत्येवमनुभावबधो व्याख्यात । इदानीं प्रदेशबधो वक्तव्यस्तस्मिंश्च वक्तव्ये सति इमे निर्देष्टव्या किंहेतव कदा ? कुत ? किंस्वभावा ? कस्मिन् ? किंपरिमाणाश्चेति ? तदर्थमिद यथासख्यपरिगृहीततत्प्रश्नापेक्षा भेद सूत्र प्रणीयते ।

## नामप्रत्ययाः सर्वतोयोगविशेषात् सूक्ष्मैकक्षेत्रावगाहस्थिताः सर्वात्मप्रदेशेष्वनंतानंतप्रदेशाः ॥ २४ ॥

नाम्न प्रत्यया नामप्रत्यया । नामेति सर्वा कर्मप्रकृतय, अभिधीयते स यथानामेति वचनात् ।

**नामासां प्रत्यय इतिचेन्न समयविरोधात् ॥ १ ॥** अथमतमेतत् नामप्रत्ययो यासां ताः नामप्रत्यया इति ? तन्न । किं कारण ? समयविरोधात् । एव हि विग्रहे क्रियमाणे नामकर्म एव सर्वासां प्रकृतीना प्रत्यय इति प्राप्त तच्च समयविरुद्ध । अनेन हेतुभाव उक्त ।

**सर्वेषु भवेषु सर्वतः ॥ २ ॥** 'दृश्यतेऽन्यतोपीति' तसि कृते सर्वेषु भवेषु सर्वत इति भवति । अनेन कालोपादान कृत । एकैकस्य जीवस्य अतिक्रांता अनता भवा आगामिन सख्येया असख्येया. अनता वा भवा भवति तेषु सर्वेष्वेवेति ।

**योगविशेषादिति वचन निमित्तनिर्देशार्थं ॥ ३ ॥** योगो व्याख्यात कायवाङ्मनस्कर्मलक्षण । परस्परतो विशिष्यते इति विशेष । ततो योगविशेषान्निमित्तात्कर्मभावेन पुद्गला आधीयत इति योगविशेषादित्यनेन निमित्तनिर्देश कृतो भवति ।

**सूक्ष्मग्रहण ग्रहणयोग्यस्वभावप्रतिपादनार्थं ॥ ४ ॥** ग्रहणयोग्या पुद्गला. सूक्ष्मा न स्थूला इति प्रतिपादनार्थं सूक्ष्मग्रहण क्रियते ।

**एकक्षेत्रावगाहवचन क्षेत्रांतरनिवृत्त्यर्थं ॥ ५ ॥** आत्मप्रदेशकर्मपुद्गलैकाधिकरणव्यतिरिक्तक्षेत्रांतरनिवृत्त्यर्थमेकक्षेत्रावगाह इति वचन क्रियते ।

**स्थिता इति वचनं क्रियांतरनिवृत्त्यर्थं ॥ ६ ॥** स्थिता कर्मभावमापद्यते न गच्छत इति क्रियांतरनिवृत्त्यर्थं स्थिता इत्युच्यते । एव सूक्ष्मादिग्रहणेन कर्मयोग्यस्वभावानुवर्णन कृत भवति ।

**सर्वात्मप्रदेशेष्विति वचनमेकप्रदेशाद्यपोहार्थं ॥ ७ ॥** एकद्वित्रिचतुरादिप्रदेशेष्वात्मन कर्मप्रदेशा न प्रवर्तते, किं तर्हि ? ऊर्ध्वमधस्तिर्यक्षु सर्वेष्वात्मप्रदेशेषु व्याप्य स्थिता इति प्रदर्शनार्थं ऊर्ध्वमधस्तिर्यक्सर्वात्मप्रदेशेष्वित्युच्यते ।

**अनतानतप्रदेशवचन प्रमाणांतरव्यपोहार्थं ॥ ८ ॥** न सख्येया नचासख्येया नाप्यनता इति प्रतिपादनार्थं अनतानतप्रदेशा इत्युच्यते । ते खलु पुद्गलस्कधा अभव्यानतगुणा सिद्धानतभागप्रमितप्रदेशा घनांगुलासख्येयभागक्षेत्रावगाहिन एकद्वित्रिचतु सख्येयानतसमयस्थितिका पचवर्णरसद्विगधचतु स्पर्शभावा अष्टविधकर्मप्रकृतियोग्या, योगवशात् आत्मना आत्मसात्क्रियत इति प्रदेशबध समासतो

मिथ्यादर्शनोदयनिवृत्ति कथमिति चेदुच्यते—अनादिमिथ्यादृष्टिर्भव्य षड्विंशतिमोहप्रकृतिसत्कर्मक सादिमिथ्यादृष्टिर्वा षड्विंशतिमोहप्रकृतिसत्कर्मक सप्तविंशतिमोहप्रकृतिसत्कर्मको वा अष्टाविंशतिमोहप्रकृतिसत्कर्मको वा प्रथमसम्यक्त्व गृहीतुमारभमाण शुभपरिणामाभिमुख अतर्मुहूर्तमनतगुणवृद्ध्या वर्धमानविशुद्धि, चतुर्षु मनोयोगेषु अन्यतमेन मनोयोगेन, चतुर्षु वाग्योगेषु अन्यतमेन वाग्योगेन, औदारिकवैक्रियिककाययोगयोरन्यतरेण काययोगेन वा समाविष्ट हीयमाननूतनकषाय साकारोपयोग त्रिषु वेदेष्वन्यतमेन वेदेन सक्लेशविरहित वर्धमानशुभपरिणामप्रतापेन सर्वकर्मप्रकृतीना स्थितिं ह्रासयन्, अशुभप्रकृतीनामनुभागबधमपसारयन् शुभप्रकृतीना रसमुद्वर्तयन् त्रीणि करणानि कर्तुं उपक्रमते । अथाप्रवृत्तकरण अपूर्वकरण अनिवृत्तिकरण चेति । तानि त्रीण्यपि करणानि प्रत्यकमतर्मुहूर्तकालानि । तत्र अत कोटीकोटीस्थितिकानि कर्माणि कृत्वा अथाप्रवृत्तकरणस्य आदिसमय कालादिलब्ध्युपेत प्रविशति, इद तु करण प्राक् न कदाचिदपि प्रवृत्त अत एवास्यान्वर्थसज्ञा । अथेद करण न तथा प्राक् प्रवृत्तमित्यथाप्रवृत्तमिति । तत्राद्ये समये जघन्या विशुद्धिरल्पा, द्वितीये समये जघन्याऽनतगुणा, तृतीये समये जघन्या अनतानतगुणा एवमादि अतर्मुहूर्तपरिसमाप्ते, तत प्रथमसमये उत्कृष्टा अनतगुणा द्वितीये उत्कृष्टा अनतगुणा एवमादि। अथाप्रवृत्तकरणचरमसमयात भव्या एवमेते नानाजीवानामसख्येयलोकप्रमाणा परिणामविकल्पा समा विषमाश्च भवति । एषा समुदायरूपमथाप्रवृत्तकरण । अपूर्वकरणस्य प्रथमसमये जघन्या विशुद्धिरल्पा तस्यैवोत्कृष्टा अनतगुणा । द्वितीये समये जघन्या अनतगुणा, एवमादि, अतर्मुहूर्तपरिसमाप्तेस्तत एते प्रथमसमये उत्कृष्टानतगुणा द्वितीये उत्कृष्टानतगुणा एवमातर्मुहूर्तपरिसमाप्ते त एते नानाजीवानामसख्येयलोकप्रमाणा परिणामविकल्पा नियमेन विषमा एव परस्परत तेषा समुदायरूपमपूर्वकरणमत एवास्यात्यतापूर्वत्वादन्वर्थसज्ञा । अनिवृत्तिकरणकाले नानाजीवाना प्रथमसमये परिणामा एकरूपा एव द्वितीयसमये ततोनतगुणा एकरूपा एवमाऽतर्मुहूर्तपरिसमाप्ते, तेषा समुदायरूपमनिवृत्तिकरणमत एवास्यान्वर्थनाम परस्परतो निवृत्त्यभावादनिवृत्तिकरणमिति । अत्राथाप्रवृत्तकरणेपि स्थितिखडनमनुभागखडन गुणश्रेणी गुणसक्रमो वा नास्ति केवलमनतगुणवृद्ध्या विशुद्ध्यत्र प्रशस्तप्रकृतीरनतगुणानुभागहीना बध्नाति प्रशस्तप्रकृतीश्चानतगुणरसवृद्ध्या । स्थितिमपि पल्योपमसख्येयभागहीना । अपूर्वकरणानिवृत्तिकरणयो स्थितिखडादीनि सभवति स्थितिबधश्च क्रमेण हीयते । अशुभप्रकृतीनामनुभवबधोऽनतगुणहान्या शुभप्रकृतीना चानतगुणवृद्ध्या वर्तते । तत्रानिवृत्तिकरणकालसख्येयेषु भागेषु गतेष्वतरकरणमारभते येन मिथ्यादर्शनकर्मण उदयघात क्रियते ततश्चरमसमये मिथ्यादर्शन त्रेधा विभक्त करोति । सम्यक्त्व मिथ्यात्व सम्यङ्मिथ्यात्व चेति । एतासा तिसृणा प्रकृतीना अनतानुबधिक्रोधमानमायालोभाना चोदयाभावेऽतर्मुहूर्तकाल प्रथमसम्यक्त्व भवति। तदते जघन्येन एकसमये उत्कर्षेणावलिकाषट्केऽवशिष्टे यदानतानुबधिक्रोधमानमायालोभानामन्यतमस्योदयो भवति तदा सासादनसम्यग्दृष्टिरित्युच्यते अत एवास्यान्वर्थसज्ञा । आसादन विराधन सहासादनेन वर्तत इति सासादना सासादना सम्यग्दृष्टिर्यस्य सोय सासादनसम्यग्दृष्टिरिति, तस्य मिथ्यादर्शनोदयाभावेपि अनतानुबध्युदयात् त्रीणि ज्ञानानि अज्ञानान्येव भवति अत एवास्यान्वर्थसज्ञा । अनत मिथ्यादर्शन तदनुबधनादनतानुबधीति । स हि मिथ्यादर्शनोदयफलमापादयन् मिथ्यादर्शनमेव प्रवेशयति ।

**सम्यङ्मिथ्यात्वोदयात् सम्यङ्मिथ्यादृष्टिः ॥ १४ ॥** सम्यङ्मिथ्यात्वसज्ञिकाया[1] प्रकृतेरुदयात् आत्मा क्षीणाक्षीणमदशक्तिकोद्रवोपयोगापादितेषत्कलुषपरिणामवत् तत्त्वार्थश्रद्धानाश्रद्धानरूप सम्यङ्मिथ्यादृष्टिरित्युच्यते । अत एवास्य त्राणि ज्ञानानि अज्ञानमिश्राणि इत्युच्यते ।

**सम्यक्त्वोपेतश्चारित्रमोहोदयादिपादिताऽविरतिरसयतसम्यग्दृष्टिः ॥१५॥** औपशमिकेन क्षायोपशमिकेन क्षायिकेण वा सम्यक्त्वेन समन्वित चारित्रमोहोदयात् अत्यतमविरतिपरिणामप्रवणोऽसयत-

१ अथ प्रवृत्तिकरणमित्यर्थ प्रसिद्ध । २ इत समारभ्य । ३ एतदवसानो द्विरावृत्त पाठ ग पुस्तके समुपलब्ध, सच न सम्यगिति निधाय न प्राकाशि ।

**कर्मागमनिमित्ताऽप्रादुर्भूतिरास्रवनिरोधः ॥ १ ॥** कर्मागमनिमित्त बहुविकल्प व्याख्यात तस्य कायवाङ्मनः प्रयोगस्य स्वात्मलाभहेतुत्वसन्निधानात् अप्रादुर्भूतिरास्रवनिरोध इत्युच्यते। अ ह यदि अयमास्रवनिरोध व्याख्यायतामित्यत्र, इदानीं संवर इत्यत्राभिधीयते स न व्याख्यातव्य ।किं कारण यस्मात्तन्निरोधे सति–

**तत्पूर्वककर्मादानाभावः संवरः कारणाभावात् कार्याभाव इति ॥ २ ॥** तस्मिन्नास्रवे निरुद्धे तत्पूर्वकस्यानेकदु खबीजजनकस्य कर्मण उपनिपाताभावो य स संवराभिमत , इति वाक्यशेष ।

**तथानिर्देशः कर्तव्य इति चेन्न कार्ये कारणोपचारात् ॥ ३ ॥** स्यादेतत् यद्ययमर्थ इष्टस्तथा निर्देश कर्तव्य , यथा गमको भवति आस्रवनिरोधे सति संवर आस्रवनिरोधादिति वा ? तन्न। किं कारणं ? कार्ये कारणोपचारात्। यथान्न वै प्राणा इति अन्नकार्येषु प्राणेषु अन्नोपचार । तथाऽऽस्रवनिरोधकार्ये संवरे आस्रवनिरोधोपचार कृत ।

**निरुध्यतेऽनेन निरोध इति वा ॥ ४ ॥** अथवा नाय भावसाधन निरुद्धिर्निरोध इति । किं तर्हि ? करणसाधन निरुध्यते येन स निरोध इति । तथा संवरशब्दापि करणसाधन संव्रियतेऽनेनेति । क पुनरसौ ? गुप्त्यादि वक्ष्यमाण तेन ह्युभय क्रियते इति सामानाधिकरण्य, मुपपद्यते ।

**योगविभागो वा ॥ ५ ॥** अथवा योगविभागोऽत्र द्रष्टव्य , आस्रवनिरोधो हितार्थिना कर्तव्य इति वाक्यशेष । तस्य किं प्रयोजनमिति चेत् अत आह संवर इति। संवर प्रयोजनमस्येत्यर्थ ।क पुनरसौ ?

**मिथ्यादर्शनादिप्रत्ययकर्मसंवरण संवरः ॥ ६ ॥** मिथ्यादर्शनादय प्रत्यया व्याख्याता तदुपादानस्य कर्मण संवरण संवर इति निर्भिद्यते ।

**स द्वेधा द्रव्यभावभेदात् ॥ ७ ॥** संवरो द्वेधा व्यवतिष्ठते कुत ? द्रव्यभावभेदात् ।

**संसारनिमित्तक्रियानिवृत्तिर्भावसंवरः इति ॥ ८ ॥** आत्मनो द्रव्यादिहेतुकभवांतरावाप्ति संसार तन्निमित्तक्रियापरिणामस्य निवृत्तिर्भावसंवर इति व्यपदिश्यते ।

**तन्निरोधे तत्पूर्वककर्मपुद्गलादानविच्छेदो द्रव्यसंवरः ॥ ९ ॥** तस्य संसारकारणस्य भावसंवरस्य निरोधे तत्पूर्वकस्य कर्मपुद्गलस्य निरासो द्रव्यसंवर इति निश्चीयते ।

**तद्विभावनार्थं गुणस्थानविभागवचन ॥ १० ॥** तस्य संवरस्य विभावनार्थं गुणस्थानविभागवचन क्रियते तद्यथा—

**मिथ्यादृष्टिसासादनसम्यग्दृष्टिसम्यङ्मिथ्यादृष्ट्यसंयतसम्यग्दृष्टिसंयतासंयतप्रमत्तसंयताऽप्रमत्तसंयतापूर्वकरणानिवृत्तिबादरसांपरायसूक्ष्मसांपरायोपशमकक्षपकोपशांतक्षीणकषायवीतरागछद्मस्थसयोग्ययोगकेवलिभेदात् चतुर्दशगुणस्थ नविकल्पः ॥ ११ ॥** मिथ्यादृष्टि सासादनसम्यग्दृष्टि सम्यङ्मिथ्यादृष्टि असंयतसम्यग्दृष्टि संयतासंयत प्रमत्तसंयत अप्रमत्तसंयत अपूर्वकरणोपशमकक्षपकौ अनिवृत्तिबादरसांपरायोपशमकक्षपकौ सूक्ष्मसांपरायोपशमकक्षपकौ उपशांतकषायवीतरागछद्मस्थ क्षीणकषायवीतरागछद्मस्थ. सयोगकेवल्ययोगकेवली चैव भेदात् चतुर्दशगुणस्थानविकल्पो वेदितव्य ।

**तत्र मिथ्यादर्शनोदयवशीकृतो मिथ्यादृष्टि ॥ १२ ॥** तेषु मिथ्यादर्शनकर्मोदयेन वशीकृतो जीवो मिथ्यादृष्टिरभिधीयते । यत्कृत तत्त्वार्थानामश्रद्धानं अभिनिवेशभाजि भवति तस्य विकल्पा , प्राग्व्याख्याता । ते सर्वे समासेन द्विधा व्यवतिष्ठन्ते—हिताहितपरीक्षाविरहिता परीक्षकाश्चेति । तत्रैकेंद्रियादय सर्वे संज्ञिपर्याप्तकवर्जिता हिताहितपरीक्षाविरहिता , पर्याप्तका उभयेपि भवंति ।

**तदुदयाभावेऽनतानुबंधिकषायोदयविधेयीकृतः सासादनसम्यग्दृष्टिः ॥ १३ ॥** तस्य मिथ्यादर्शनस्योदय निवृत्त अनंतानुबंधिकषायोदयकलुषीकृतांतरात्मा जीव सासादनसम्यग्दृष्टिरित्याख्यायते।

मिथ्यादर्शनोदयनिवृत्ति कथमिति चेदुच्यते—अनादिमिथ्यादृष्टिर्भव्य षड्विंशतिमोहप्रकृतिसत्कर्मक सादिमिथ्यादृष्टिर्वा षड्विंशतिमोहप्रकृतिसत्कर्मक सप्तविंशतिमोहप्रकृतिसत्कमको वा अष्टाविंशतिमोहप्रकृतिसत्कमको वा प्रथमसम्यक्त्व गृहीतुमारभमाण शुभपरिणामाभिमुख अतर्मुहूर्तमनतगुणवृद्ध्या वर्धमानविशुद्धि, चतुर्षु मनोयोगेषु अन्यतमेन मनोयोगेन, चतुर्षु वाग्योगेषु अन्यतमेन वाग्योगेन, औदारिकवैक्रियिककाययोगयोरन्यतरेण काययोगेन वा समाविष्ट हीयमाननूतनकषाय साकारोपयोग त्रिषु वेदेष्वन्यतमेन वेदेन सक्लेशविरहित वर्धमानशुभपरिणामप्रतापेन सर्वकर्मप्रकृतीना स्थितिं ह्रासयन्, अशुभप्रकृतीनामनुभागबन्धमपसारयन् शुभप्रकृतीना रसमुद्वर्तयन् त्रीणि करणानि कर्तुं उपक्रमते । अथाप्रवृत्तकरण अपूर्वकरण अनिवृत्तिकरण चेति । तानि त्रीण्यपि करणानि प्रत्यकमतर्मुहूर्तकालानि । तत्र अत कोटीकोटीस्थितिकानि कर्माणि कृत्वा अथाप्रवृत्तकरणस्य आदिसमय कालादिलब्ध्युपेत प्रविशति, इद तु करण प्राक् न कदाचिदपि प्रवृत्त अत एवास्यान्वर्थसज्ञा । अथेद करण न तथा प्राक् प्रवृत्तमित्यथाप्रवृत्तमिति । तत्राद्ये समये जघन्या विशुद्धिरल्पा, द्वितीये समये जघन्याऽनतगुणा, तृतीये समये जघन्या अनतानतगुणा एवमादि अतर्मुहूर्तपरिसमाप्ते, तत प्रथमसमये उत्कृष्टा अनतगुणा द्वितीये उत्कृष्टा अनतगुणा एवमादि । अथाप्रवृत्तकरणचरमसमयात भव्या एवमेते नानाजीवानामसख्येयलोकप्रमाणा परिणामविकल्पा समा विषमाश्च भवति । एषा समुदायरूपमथाप्रवृत्तकरण । अपूर्वकरणस्य प्रथमसमये जघन्या विशुद्धिरल्पा तस्यैवोत्कृष्टा अनतगुणा । द्वितीये समये जघन्या अनतगुणा, एवमादि, अतर्मुहूर्तपरिसमाप्तेस्तत्त एते प्रथमसमये उत्कृष्टानतगुणा द्वितीये उत्कृष्टानतगुणा एवमातर्मुहूर्तपरिसमाप्ते त एते नानाजीवानामसख्येयलोकप्रमाणा परिणामविकल्पा नियमेन विषमा एव परस्परत तेषा समुदायरूपमपूर्वकरणमत एवास्यात्यतापूर्वत्वादन्वर्थसज्ञा । अनिवृत्तिकरणकाले नानाजीवानां प्रथमसमये परिणामा एकरूपा एव द्वितीयसमये ततोनतगुणा एकरूपा एवमाऽतर्मुहूर्तपरिसमाप्ते, तेषा समुदायरूपमनिवृत्तिकरणमत एवास्यान्वर्थनाम परस्परता निवृत्यभावादनिवृत्तिकरणमिति । अत्राथाप्रवृत्तकरणेपि स्थितिखडनमनुभागखडन गुणश्रेणी गुणसक्रमो वा नास्ति केवलमनतगुणवृद्ध्या विशुद्ध्यन् प्रशस्तप्रकृतीरनतगुणानुभागहीना बध्नाति प्रशस्तप्रकृतीश्चानतगुणरसवृद्ध्या । स्थितिमपि पल्योपमसख्येयभागहीना । अपूर्वकरणानिवृत्तिकरणयो स्थितिखडादीनि सभवति स्थितिबधश्च क्रमेण हीयते । अशुभप्रकृतीनामनुभवबधोऽनतगुणहान्या शुभप्रकृतीना चानतगुणवृद्ध्या वर्तते । तत्रानिवृत्तिकरणकारणसख्येयेषु भागेषु गतेष्वतरकरणमारभते येन मिथ्यादर्शनकर्मण उदयघात क्रियते ततश्चरमसमये मिथ्यादर्शन त्रेधा विभक्त करोति । सम्यक्त्व मिथ्यात्व सम्यङ्मिथ्यात्व चेति । एतासा तिसृणा प्रकृतीना अनतानुबधिक्रोधमानमायालोभाना चोदयाभावेऽतर्मुहूर्तकाल प्रथमसम्यक्त्व भवति । तदते जघन्येन एकसमये उत्कर्षेणावलिकाषट्केऽवशिष्टे यदानतानुबधिक्रोधमानमायालोभानामन्यतमस्योदयो भवति तदा सासादनसम्यग्दृष्टिरित्युच्यते अत एवास्यान्वर्थसज्ञा । आसादन विराधन सहासादनेन वर्तत इति सासादना नासादना सम्यग्दृष्टिर्यस्य सोय सासादनसम्यग्दृष्टिरिति, तस्य मिथ्यादर्शनोदयाभावेपि अनतानुबध्युदयात् त्रीणि ज्ञानानि अज्ञानान्येव भवति अत एवास्यान्वर्थसज्ञा । अनत मिथ्यादर्शन तदनुबधनादनतानुबधीति । स हि मिथ्यादर्शनोदयफलमापादयन् मिथ्यादर्शनमेव प्रवेशयति ।

**सम्यङ्मिथ्यात्वोदयात् सम्यङ्मिथ्यादृष्टिः ॥ १४ ॥** सम्यङ्मिथ्यात्वसज्ञिकाया प्रकृतेरुदयात् आत्मा क्षीणाक्षीणमदशक्तिकोद्रवोपयोगापादितेषत्कलुषपरिणामवत् तत्त्वार्थश्रद्धानाश्रद्धानरूप सम्यङ्मिथ्यादृष्टिरित्युच्यते । अत एवास्य त्रीणि ज्ञानानि अज्ञानमिश्राणि इत्युच्यते ।

**सम्यक्त्वोपेतश्चारित्रमोहोदयादिषादिताऽविरतिरसयतसम्यग्दृष्टिः ॥१५॥** औपशमिकेन क्षायोपशमिकेन क्षायिकेण वा सम्यक्त्वेन समन्वित चारित्रमोहोदयात् असतमविरतिपरिणामप्रवणोऽसयत-

१ अथ प्रवृत्तिकरणमित्यर्थ प्रसिद्ध । २ इत समारभ्य । ३ एतदवसानो द्विरावृत्त पाठ ग पुस्तक समुपलब्ध सच न सम्यगिति विधाय न प्रकाशि ।

**कर्मागमनिमित्ताऽप्रादुर्भूतिरास्रवनिरोधः ॥ १ ॥** कर्मागमनिमित्त बहुविकल्प व्याख्यात तस्य कायवाङ्मन प्रयोगस्य स्वात्मलाभहेतुत्वसन्निधानात् अप्रादुर्भूतिरास्रवनिरोध इत्युच्यते। अ ह यदि अयमास्रवनिरोध व्याख्यायतामित्यत्र, इदानीं सवर इत्यत्राभिधीयते स न व्याख्यातव्य ।किं कारण यस्मात्तन्निरोधे सति-

**तत्पूर्वककर्मादानाभावः संवरः कारणाभावात् कार्याभाव इति ॥ २ ॥** तस्मिन्नास्रवे निरुद्धे तत्पूर्वकस्यानेकदु खबीजजनकस्य कर्मण उपनिपाताभावो य' स सवराभिमत, इति वाक्यशेष ।

**तथानिर्देशः कर्तव्य इति चेन्न कार्ये कारणोपचारात् ॥ ३ ॥** स्यादेतत् यद्ययमर्थ इष्टस्तथा निर्देश कर्तव्य, यथा गमको भवति आस्रवनिरोधे सति सवर आस्रवनिरोधादिति वा ? तन्न। किं कारणं ? कार्ये कारणोपचारात्। यथान्न वैप्राणा इति अन्नकार्येषु प्राणेषु अन्नोपचार । तथाऽऽस्रवनिरोधकार्ये सवरे आस्रवनिरोधोपचार कृत ।

**निरुध्यतेऽनेन निरोध इति वा ॥ ४ ॥** अथवा नाय भावसाधन निरुद्धिर्निरोध इति । किं तर्हि ? करणसाधन निरुध्यते येन स निरोध इति । तथा सवरशब्दोऽपि करणसाधन सव्रियतेऽनेनेति। क पुनरसौ ? गुप्त्यादि वक्ष्यमाण तेन ह्युभय क्रियते इति सामानाधिकरण्य, उपपद्यते ।

**योगविभागो वा ॥ ५ ॥** अथवा योगविभागोऽत्र द्रष्टव्य, आस्रवनिरोधो हितार्थिना कर्तव्य. इति वाक्यशेष । तस्य किं प्रयोजनमिति चेत् अत आह सवर इति। सवर प्रयोजनमस्येत्यर्थ । क पुनरसौ ?

**मिथ्यादर्शनादिप्रत्ययकर्मसवरण संवरः ॥ ६ ॥** मिथ्यादर्शनादय प्रत्यया व्याख्याता' तदुपादानस्य कर्मण सवरण सवर इति निर्भ्रियते ।

**स द्वेधा द्रव्यभावभेदात् ॥ ७ ॥** सवरो द्वेधा व्यवतिष्ठते कुत ? द्रव्यभावभेदात् ।

**संसारनिमित्तक्रियानिवृत्तिर्भावसवरः इति ॥ ८ ॥** आत्मनो द्रव्यादिहेतुकभवान्तरावाप्ति' ससार तन्निमित्तक्रियापरिणामस्य निवृत्तिर्भावसवर इति व्यपदिश्यते ।

**तन्निरोधे तत्पूर्वककर्मपुद्गलादानविच्छेदो द्रव्यसवरः ॥ ९ ॥** तस्य ससारकारणस्य भावसवरस्य निरोधे तत्पूर्वकस्य कर्मपुद्गलस्य निरासो द्रव्यसवर इति निश्चीयते ।

**तद्विभावनार्थं गुणस्थानविभागवचन ॥ १० ॥** तस्य सवरस्य विभावनार्थं गुणस्थानविभागवचन क्रियते तद्यथा—

**मिथ्यादृष्टिसासादनसम्यग्दृष्टिसम्यङ्मिथ्यादृष्ट्यसंयतसम्यग्दृष्टिसयतासयतप्रमत्तसंयताऽप्रमत्तसंयतापूर्वकरणानिवृत्तिबादरसांपरायसूक्ष्मसांपरायोपशमकक्षपकोपशान्तक्षीणकषायवीतरागछद्मस्थसयोग्ययोगकेवलिभेदात् चतुर्दशगुणस्थानविकल्पः ॥ ११ ॥** मिथ्यादृष्टि सासादनसम्यग्दृष्टि सम्यङ्मिथ्यादृष्टि असयतसम्यग्दृष्टि सयतासयत प्रमत्तसयत अप्रमत्तसयत अपूर्वकरणोपशमकक्षपकौ अनिवृत्तिबादरसापरायोपशमकक्षपकौ सूक्ष्मसापरायोपशमकक्षपकौ उपशान्तकषायवीतरागछद्मस्थ क्षीणकषायवीतरागछद्मस्थ सयोगकेवल्ययोगकेवली चैव भेदात् चतुर्दशगुणस्थानविकल्पो वेदितव्य ।

**तत्र मिथ्यादर्शनोदयवशीकृतो मिथ्यादृष्टि ॥ १२ ॥** तेषु मिथ्यादर्शनकर्मोदयेन वशीकृतो जीवो मिथ्यादृष्टिरभिधीयते । यत्कृत तत्त्वार्थानामश्रद्धानमन्यपदेशभाजि भवति तस्य विकल्पा, प्राग्व्याख्याता । ते सर्वे समासेन द्विधा व्यवतिष्ठते—हिताहितपरीक्षाविरहिता परीक्षकाश्चेति । तत्रैकेंद्रियादय सर्वे संज्ञिपर्याप्तकवर्जिता हिताहितपरीक्षाविरहिता, पर्याप्तका उभयेपि भवति ।

**तदुदयाभावेऽनन्तानुबंधिकषायोदयविधेयीकृतः सासादनसम्यग्दृष्टिः ॥ १३ ॥** तस्य मिथ्यादर्शनस्योदय निवृत्ते अनन्तानुबधिकषायोदयकलुषीकृतान्तरात्मा जीव सासादनसम्यग्दृष्टिरित्याख्यायते।

**तत्प्रत्ययस्य तदभावे संवरः ॥ १७ ॥** तत्प्रत्ययस्य कर्मण तदभावे संवरोऽवसेय । तद्यथा निद्रानिद्राप्रचलाप्रचलास्त्यानगृद्ध्यनन्तानुबंधिक्रोधमानमायालोभस्त्रीवेदतिर्यगायुस्तिर्यग्गतिचतु संस्थानचतु संहननतिर्यग्गतिप्रायोग्यानुपूर्व्योद्योताऽप्रशस्तविहायोगतिदुर्भगदु स्वरानादेयनीचैर्गोत्रसञ्ज्ञकाना पचविंशति-प्रकृतीनां अनन्तानुबंधिकषायोदयकृतासंयमप्रधानास्रवाणां एकेंद्रियादय सासादनसम्यग्दृष्ट्यन्ता बन्धका तदभावे तासामुत्तरत्र संवर । अप्रत्याख्यानावरणक्रोधमानमायालोभमनुष्यायुर्मनुष्यगत्यौदारिकशरीरतद-ङ्गोपाङ्गवज्रर्षभनाराचसंहननमनुष्यगतिप्रायोग्यानुपूर्व्यनामकानां दशाना प्रकृतीना अप्रत्याख्यानकषायोद-यकृतासंयमहेतूनां एकेंद्रियादय असंयतसम्यग्दृष्ट्यन्ता बधका तदभावादूर्ध्वं तासा संवर । सम्यङ्मि-थ्यात्वगुणेनायुर्न बध्यते प्रत्याख्यानावरणक्रोधमानमायालोभाना चतसृणा प्रकृतीना प्रत्याख्यानकषायोद-यकारणासंयमास्रवाणा एकेंद्रियप्रभृतय संयतासंयतावसाना बधका । तदभावात् उपरिष्टात् तासा संवर ।

**प्रमादोपनीतस्य तदभावे निरोधः ॥ १८ ॥** प्रमादोपनीतस्य कर्मण प्रमत्तसंयतादूर्ध्वं तद-भावान्निरोध प्रत्येतव्य । किं पुनस्तत् ? असद्वेद्यारतिशोकास्थिराशुभायशस्कीर्तिविकल्प । देवायुर्बंधारभस्य प्रमाद एव हेतु, अप्रमादोपि तत्प्रत्यासन्न । तत ऊर्ध्वं तस्य संवर ।

**कषायास्रवस्य तन्निरोधे निरासः ॥ १९ ॥** कषाय एवास्रवो यस्य कर्मण न प्रमादादिस्तस्य तन्निरोधे तन्निरासोऽवसेय स एव कषायक प्रमादादिविरहित तीव्रमध्यमजघन्यभावेन त्रिषु गुणस्थानेषु व्यवस्थित । तत्रापूर्वकरणस्यादौ संख्येयभागे द्वे कर्मप्रकृती निद्राप्रचले बध्येते । तत ऊर्ध्वं संख्येयभागे त्रिंशत्प्रकृतयो—देवगतिपंचेंद्रियजातिवैक्रियिकाहारकतैजसकार्मणशरीरसमचतुरस्रसंस्थानवैक्रियिकाहारकश-रीरांगोपांगवर्णगंधरसस्पर्शदेवगतिप्रायोग्यानुपूर्व्यागुरुलघूपघातपरघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्या-प्तकप्रत्येकशरीरस्थिरशुभसुभगसुस्वरादेयनिर्माणतीर्थकरनामाख्या बध्यते । तस्यैव चरमसमये बंधका चतस्र प्रकृतय हास्यरतिभयजुगुप्सासंज्ञा बंधमुपयांति । ता एता तीव्रकषायास्रवा तदभावान्निर्दिष्टा-द्भागादूर्ध्वं संव्रियते । अनिवृत्तिबादरसांपरायस्यादिसमयादारभ्य संख्येयेषु भागेषु पुंवेदक्रोधसंज्वलनौ बंध-मुपगच्छत । तस्यैव चरमसमये लोभसंज्वलनो बंधमेति ता एता प्रकृतय मध्यमकषायास्रवा, तदभावे निर्दिष्टस्य भागस्योपरिष्टात् संवरमाप्नुवंति । पचाना ज्ञानावरणाना चतुर्दर्शनावरणाना यशस्कीर्तेरुच्चैर्गो-त्रस्य पंचानामंतरायाणा च मंदकषायास्रवाणा सूक्ष्मसांपरायो बंधक तदभावादुत्तरत्र तेषा संवर ।

**केवलयोगनिमित्त सद्वेद्य तदभावात्तस्य निरोधः ॥ २० ॥** केवलेनैव योगेन सद्वेद्यस्योप-शांतकषायक्षीणकषायसयोगिना बंधो भवति तदभावादयोगकेवलिनस्तस्य संवरो भवति ।

अत्राह आस्रवनिरोध संवर इति व्याख्यात तत्रेदमनिर्ज्ञातमात्मलाभहेतुसन्निधाने सत्यास्रवता कर्मणा केन निरोधो भवतीति तत्र वक्तव्यमनेनास्रवनिरोध इत्यत्रोच्यते—

## सगुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैः ॥ २ ॥

**संसारकारणगोपनाद्गुप्तिः ॥ १ ॥** यत संसारकारणात् आत्मनो गोपन भवति सा गुप्ति । भावे क्ति । अपादानसाधनो वा यतो गोपन सा गुप्तिरिति, कर्तृसाधनो वा क्तिच् गोपयतीति गुप्तिरिति ।

**सम्यगयन समितिः ॥ २ ॥** परप्राणिपीडापरिहारेच्छया सम्यगयन समिति । संपूर्वादिणो भावे-क्ति । कर्तरि वा क्तिच् ।

**इष्टे स्थाने धत्त इति धर्मः ॥ ३ ॥** आत्मानमिष्टे नरेंद्रसुरेंद्रमुनींद्रादिस्थाने धत्त इति धर्म । उणादिषु निष्पादित ।

**स्वभावानुचिंतनमनुप्रेक्षाः ॥ ४ ॥** शरीरादीनां स्वभावानुचिंतनमनुप्रेक्षा वेदितव्या । अनुपूर्वा-दिक्षे भावादिसाधन, अकार ।

सम्यग्दृष्टिरिति व्यपदिश्यते। तस्य त्रीण्यपि ज्ञानानि सम्यग्ज्ञानव्यपदेशमर्हंति। तत्त्वार्थश्रद्धानसमावेशात् इत ऊर्ध्वं गुणस्थानेषु नियमेन सम्यक्त्वं।

**द्विविषयविरत्यविरतिपरिणतः संयतासंयतः ॥ १६ ॥** एतदादीनि गुणस्थानानि चारित्रमोहस्य क्षयोपशमादुपशमात् क्षयाच्च भवंति। तत्रानंतानुबंधिकषायाः क्षीणाः स्युरक्षीणा वा तथा अप्रत्याख्यानावरणकषाया वा प्रत्याख्यानावरणकषायाः सर्वघातिन एव तेषामुदये सति संज्वलनकषाया नव नोकषायाश्च देशघातिन एव तेषामुदये सति संयमासंयमलब्धिर्भवति। तद्योग्यया प्राणींद्रियविषयया विरताविरतवृत्त्या परिणतः संयतासंयत इत्याख्यायते।

**परिप्राप्तसंयमः प्रमादवान् प्रमत्तसंयतः ॥ १७ ॥** अनंतानुबंधिकषायेषु क्षीणेष्वक्षीणेषु वा प्राप्तोदयक्षयेषु अष्टानां कषायाणां उदयक्षयात् तेषामेव सदुपशमात् संज्वलननोकषायाणां उदये संयमलब्धिर्भवति। तन्मूलसाधनोपपादितोपजन बाह्यसाधनसान्निधानाविर्भावमापद्यमानं प्राणेंद्रियविषयभेदात् द्वितयीं वृत्तिमास्कंदन् संयमोपयोगमात्मसात् कुर्वन् पंचदशविधप्रमादवशात् किंचित्प्रस्खलितचारित्रपरिणामः प्रमत्तसंयत इत्याख्यायते।

**प्रमादविरहितोऽप्रमत्तसंयतः ॥ १८ ॥** पूर्ववत्संयममास्कंदन् पूर्वोक्तप्रमादविरहात् अविचलितसंयमवृत्तिः, अप्रमत्तसंयत समाख्यायते। इत ऊर्ध्वं गुणस्थानानां चतुर्णां द्विश्रेण्यौ भवतः। उपशमश्रेणी क्षपकश्रेणी चेति। यत्र मोहनीयं कर्मोपशमयन्नात्मा आरोहति सोपशमकश्रेणी। यत्र तत्क्षयमुपगमयन्नुद्गच्छति सा क्षपकश्रेणी।

**(अपूर्वकरणपरिणाम उपशमकः क्षपकश्चोपचारात् ॥ १९ ॥** अपूर्वकरणपरिणामस्तद्विशुद्धिवशेन श्रेणीमारोहयन्नपूर्वकरण इति व्यपदेशमश्नुते तत्र कर्मप्रकृतीनां नोपशमो नापि क्षयः किंतु पूर्वत्रोत्तरत्र च उपशमं क्षयं वाऽपेक्ष्य उपशमकः क्षपक इति च घृतघटवदुपचर्यते)

**अनिवृत्तिपरिणामवशात् स्थूलभावेनोपशमकः क्षपकश्चानिवृत्तिबादरसांपरायौ ॥२०॥** पूर्वोक्तानिवृत्तिपरिणामस्तद्वशात् कर्मप्रकृतीनां स्थूलभावेनोपशमकः क्षपकश्चानिवृत्तिबादरसांपरायाविति भाष्यते। तत्र उपशमनीयाः क्षपणीयाश्च प्रकृतय उत्तरत्र वक्ष्यते।

**सूक्ष्मभावेनोपशमात् क्षपणाच्च सूक्ष्मसांपरायौ ॥ २१ ॥** सांपरायः कषायः स यत्र सूक्ष्मभावेनोपशांतिं क्षयं च आपद्यते तौ सूक्ष्मसांपरायौ वेदितव्यौ।

**सर्वस्योपशमात् क्षपणाच्च उपशांतकषायः क्षीणकषायश्च ॥ २२ ॥** सर्वस्य मोहस्योपशमात् क्षपणाच्च उपशांतकषाय क्षीणकषाय इति च व्यपदेशमर्हतः।

**घातिकर्मक्षयादाविर्भूतज्ञानाद्यतिशयः केवली ॥ २३ ॥** घातिकर्मणां अत्यंतक्षयात् आविर्भूतस्वभावाचिंत्यकेवलज्ञानाद्यतिशयविभूतिर्भगवान् केवलीत्यभिलप्यते।

**स द्विविधो योगभावाभावभेदात् ॥ २४ ॥** स केवली द्विधा भिद्यते कुतः योगभावाभावभेदात् योगवान् सयोगीति गीयते तदभावादयोगीति च।

**तत्र मिथ्यात्वप्रत्ययस्य कर्मणः तदभावे संवरः शेषे ॥ २५ ॥** तत्र मिथ्यात्वप्राधान्येन यत्कर्मास्रवति तन्निरोधात् शेषे सासादनसम्यग्दृष्ट्यादौ तत्संवरो भवति। किं पुनस्तन्मिथ्यात्वं—नपुंसकवेदनरकायुर्नरकगत्येकद्वित्रिचतुरिंद्रियजातिहुंडकसंस्थानाऽसंप्राप्तासृपाटिकासंहनननरकगतिप्रायोग्यानुपूर्व्योऽऽतपस्थावरसूक्ष्माऽपर्याप्तकसाधारणशरीरसंज्ञकषोडशप्रकृतिलक्षणं।

**असंयमस्त्रिविधोऽनंतानुबंध्यप्रत्याख्यानप्रत्याख्यानोदयविकल्पात् ॥ २६ ॥** असंयमस्त्रिविधो वेदितव्यः कुतः? अनंतानुबंध्यप्रत्याख्यानप्रत्याख्यानविकल्पात्।

**तत्प्रत्ययस्य तदभावे संवरः ॥ १७ ॥** तत्प्रत्ययस्य कर्मण तदभावे संवरोऽवसेय । तद्यथा निद्रानिद्राप्रचलाप्रचलास्त्यानगृद्ध्यनन्तानुबन्धिक्रोधमानमायालोभस्त्रीवेदातिर्यगायुस्तिर्यग्गतिचतु सस्थानचतु सहननतिर्यग्गतिप्रायोग्यानुपूर्व्योद्योताऽप्रशस्तविहायोगतिदुर्भगदु स्वरानादेयनीचैर्गोत्रसज्ञकाना पचविंशति प्रकृतीनां अनतानुबधिकषायोदयकृतासयमप्रधानास्रवाणां एकेंद्रियादय सासादनसम्यग्दृष्ट्यता बधका तदभावे तासामुत्तरत्र सवर । अप्रत्याख्यानावरणक्रोधमानमायालोभमनुष्यायुर्मनुष्यगत्यौदारिकशरीरतद-गोपागवज्रर्षभनाराचसहननमनुष्यगतिप्रायोग्यानुपूर्व्यनामकानां दशाना प्रकृतीना अप्रत्याख्यानकषायोद-यकृतासयमहेतूनां एकेंद्रियादय असयतसम्यग्दृष्ट्यता बधका तदभावादूर्ध्वं तासा सवर । सम्यङ्मि थ्यात्वगुणेनायुर्न बध्यते प्रत्याख्यानावरणक्रोधमानमायालोभाना चतसृणा प्रकृतीना प्रत्याख्यानकषायोद-यकारणासयमास्रवाणा एकेंद्रियप्रभृतय सयतासयतावसाना बधका । तदभावात् उपरिष्टात् तासा सवर ।

**प्रमादोपनीतस्य तदभावे निरोधः ॥ १८ ॥** प्रमादोपनीतस्य कर्मण प्रमत्तसयतादूर्ध्वं तद-भावान्निरोध प्रत्येतव्य । किं पुनस्तत्[१] असद्वेद्यारतिशोकस्थिराशुभायशस्कीर्तिविकल्प । देवायुर्बंधारभकस्य प्रमाद एव हेतु , अप्रमादोपि तत्प्रत्यासन्न । तत ऊर्ध्वं तस्य सवर ।

**कषायास्रवस्य तन्निरोधे निरासः ॥ १९ ॥** कषाय एवास्रवो यस्य कर्मण न प्रमादादिस्तस्य तन्निरोधे तन्निरासोऽवसेय स एव कषायक प्रमादादिविरहित तीव्रमध्यमजघन्यभावेन त्रिषु गुणस्थानेषु व्यवस्थित । तत्रापूर्वकरणस्यादौ सख्येयभागे द्वे कर्मप्रकृती निद्राप्रचले बध्येते । तत ऊर्ध्वं सख्येयभागे त्रिंशत्प्रकृतयो—देवगतिपचेंद्रियजातिवैक्रियिकाहारकतैजसकार्मणशरीरसमचतुरस्रसस्थानवैक्रियिकाहारकश-रीरागोपागवर्णगधरसस्पर्शदेवगतिप्रायोग्यानुपूर्व्यागुरुलघूपघातपरघातोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्या-प्तकप्रत्येकशरीरस्थिरशुभसुभगसुस्वरादेयनिर्माणतीर्थकरनामाख्या बध्यते । तस्यैव चरमसमये बधकरा चतस्र प्रकृतय हास्यरतिभयजुगुप्सासज्ञा बधमुपयाति । ता एता तीव्रकषायास्रवा तदभावान्निर्दिष्टा-द्भागादूर्ध्वं सव्रियते । अनिवृत्तिबादरसापरायस्यादिसमयादारभ्य सख्येयेषु भागेषु पुंवेदक्रोधसज्वलनौ बध-मुपगच्छत । तस्यैव चरमसमये लोभसज्वलनो बधमेति ता एता प्रकृतय मध्यमकषायास्रवा , तदभावे निर्दिष्टस्य भागस्योपरिष्टात् सवरमाप्नुवति । पचाना ज्ञानावरणाना चतुर्दर्शनावरणाना यशस्कीर्तेरुच्चैर्गो-त्रस्य पचानामतरायाणां च मदकषायास्रवाणा सूक्ष्मसापरायो बधक तदभावादुत्तरत्र तेषा सवर ।

**केवलयोगनिमित्त सद्वेद्य तदभावात्तस्य निरोधः ॥ २० ॥** केवलेनैव योगेन सद्वेद्यस्योप-शांतकषायक्षीणकषायसयोगिना बधो भवति तदभावादयोगकेवलिनस्तस्य सवरो भवति ।

अत्राह आस्रवनिरोध सवर इति[१] व्याख्यात तत्रेदमनिर्ज्ञातमात्मलाभहेतुसन्निधाने सत्यास्रवता कर्मणा केन निरोधो भवतीति तत्र वक्तव्यमनेनास्रवनिरोध [१] इत्यत्रोच्यते—

## सगुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैः ॥ २ ॥

**ससारकारणगोपनाद्गुप्ति ॥ १ ॥** यत ससारकारणात् आत्मनो गोपन भवति सा गुप्ति । भावे क्ति । अपादानसाधनो वा यतो गोपन सा गुप्तिरिति, कर्तृसाधनो वा क्तिच् गोपयतीति गुप्तिरिति ।

**सम्यगयन समितिः ॥ २ ॥** परप्राणिपीडापरिहारेच्छया सम्यगयन समिति । सपूर्वादिणो भावे क्ति । कर्तरि वा क्तिच् ।

**इष्टे स्थाने धत्त इति धर्मः ॥ ३ ॥** आत्मानमिष्टे नरेंद्रसुरेंद्रमुनींद्रादिस्थाने धत्त इति धर्म । उणादिषु निष्पादित ।

**स्वभावानुचिंतनमनुप्रेक्षाः ॥ ४ ॥** शरीरादीनां स्वभावानुचिंतनमनुप्रेक्षा वेदितव्या । अनुपूर्वा दिक्षे भावादिसाधन , अकार ।

**परिषह्यत इति परीषहः ॥ ५ ॥** परिपूर्वात्सहे कर्मण्यकार परिषह्यत इति परीषह । कथमकार ? पचादिलक्षणोच् । ननु स कर्तरि विहित यस्तर्हि स करणाधिकरणयोर्विहितो घञ् ? तर्हि कर्मण्येव । परीषाह इति प्राप्नोति अनुबधकृतमनित्य यथा ज्योतिषमिति । अथवा बहुलवचनात् कर्मण्यकार 'अन्यस्यापीति' दीर्घ परीषहस्य जय परीषहजय' ।

**चारित्रशब्दो व्याख्यातः ॥ ६ ॥** सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग इत्यत्र चारित्रशब्दो व्याख्यात । चर्यते तच्चारित्रमिति ।

**सवृण्वतो गुप्त्यादयः करण ॥ ७ ॥** सवरणक्रियाया साधकतमत्वविवक्षायां गुप्त्यादीना करणभाव प्रत्येतव्य । गुप्तिश्च समितिश्च धर्मश्चानुप्रेक्षा च परीषहजयश्च चारित्र च गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्राणि तैर्गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैरिति ।

**संवर एव गुप्त्यादय इति चेन्नास्रवनिमित्तकर्मसंवरणात् ॥ ८ ॥** स्यान्मत सव्रियतेऽनेनेति सवर गुप्त्यादिभिश्च कर्म सव्रियते गुप्त्यादय एव सवर इति भेदनिर्देशो नोपपद्यते इति ? तन्न। किं कारण ? आस्रवनिमित्तकर्मसवरणात् । सवरणमिह सवर इति सवर इति भावसाधन । तस्य गुप्त्यादय करणत्वेन निर्दिश्यते । सव्रियते सवर इति कर्मसाधनो वा । गुप्त्यादिभिर्हि कर्म सव्रियत इति ।

**स इति वचनं गुप्त्यादिभिः साक्षात् सबधनार्थं ॥ ९ ॥** सवरोधिकृतोपि पुन इति परामृश्यते । किमर्थ ? गुप्त्यादिभि साक्षात् सबधनार्थं । तेन किं लब्ध ? नियम कृतो भवति स एव सवरो गुप्त्यादिभिरेव नान्येनोपायनेति तेन तीर्थाभिषेकदीक्षाशीर्षोपहारदेवताराधनादयो निवर्तिता भवति रागद्वेषमोहोपात्तस्य कर्मण अन्यथा निवृत्त्यसभवात । यदि हि स्यात् मत्स्यादीनामपि सुलभो मोक्ष स्यात् रक्तद्विष्टमूढाना च । एषा सवरभेदकथन उत्तरत्र करिष्यते ।

आह किमेतैरेव गुप्त्यादिभि अय सवरो निष्पाद्यते ? न । किं तर्हि ? अन्येन च। यद्येनमुच्यता केन ?

## तपसा निर्जरा च ॥ ३ ॥

**धर्मेतर्भावात् पृथग्ग्रहणमनर्थकमिति चेन्न निर्जराकारणत्वख्यापनार्थत्वात् ॥ १ ॥** स्यान्मत धर्मविकल्पेषु उत्तमक्षमादिषु तपो वक्ष्यते । तत सवरहेतुत्वासिद्धे पृथगस्य ग्रहणमनर्थकमिति ? तन्न किं कारण ? निर्जराकारणत्वख्यापनार्थत्वात् ।

**तपोनिर्जराकारणमपि भवतीति प्राधान्यप्रतिपत्त्यर्थं च ॥ २ ॥** सर्वेषु सवरहेतुषु प्रधान तप इत्यस्य प्रतिपत्त्यर्थं च पृथग्ग्रहण क्रियते ।

**सवरनिमित्तसमुच्चयार्थश्चशब्द ॥ ३ ॥** सवरहेतुरपि तपो भवतीति एतस्य समुच्चयार्थश्चशब्द क्रियते तपसा हि अभिनवकर्मसबधाभाव पूर्वोपाचितकर्मक्षयश्चाऽविपाकनिर्जराप्रतिज्ञानात् तस्मात्तपोजातीयत्वात् ध्यानाना निर्जराकारणप्रसिद्धि ।

**तपसोभ्युदयहेतुत्वान्निर्जराभाव इति चेन्नैकस्यानेककार्यारभदर्शनात् ॥४॥** स्यादेतत् तपोभ्युदयकारणमिष्ट देवेंद्रादिस्थानप्राप्तिहेतुत्वाभ्युपगमात्ततोस्य निर्जराङ्गत्वमनुपपन्न ? तन्न किं कारण ? एकस्यानेककार्यारभदर्शनात् । यथाग्निरेको विक्लेदनभस्मसाङ्गारनादिप्रयोजन उपलभ्यते । तथा तपोभ्युदयकर्मक्षयहेतुरित्यत्र को विरोध ?

**गुणप्रधानफलोपपत्तेर्वा कृषीबलवत् ॥** [illegible] कृषिक्रियाया पलालस्य फलगुणप्रधानफलाभिसबध तथा मुनेरपि तपःक्रि[illegible]

द्वेदितव्य । आह गुप्त्यादय उद्दिष्टा संवरहेतव ते किंविषया कियत्प्रकारा प्रत्येक च किंसामर्थ्या इत्यत्रोच्यते—

सति वहुवक्तव्ये आदावुद्देशभाजो गुप्तेरेव तावन्निर्धारणं क्रियते ।

## सम्यग्योगनिग्रहो गुप्तिः ॥ ४ ॥

**योगशब्दो व्याख्यातार्थः ॥ १ ॥** अथ योगशब्दो व्याख्यातार्थो द्रष्टव्य । क ? कायवाङ्मनस्कर्म योग इत्यत्र ।

**प्राकाम्याऽभावो निग्रहः ॥२॥** प्राकाम्य यथेष्ट चारित्र तस्याभावो निग्रह इत्याख्यायते, योगस्य निग्रहो योगनिग्रह ।

**सम्यगिति विशेषणं सत्कारलोकपक्तयाद्याकांक्षानिवृत्त्यर्थं ॥ ३ ॥** पूजापुरस्सरा क्रिया सत्कार संयतो महानिति, लोके प्रकाश लोकपक्ति एवमादैहलौकिकमनुद्दिश्य पारलौकिक च विषयसुख अनपेक्ष्य क्रियमाणो निग्रहो गुप्तिरिह परिगृह्यतेति प्रतिपत्त्यर्थं सम्यगिति विशेषणमुपादीयते ।

**तस्मात्कायादिनिरोधात्तन्निमित्तकर्मानास्रवणे संवरप्रसिद्धिः॥४॥** तस्मात् सम्यग्विशेषण विशिष्टात् संक्लेशाप्रादुर्भावपरात कायादियोगनिरोध सति तन्निमित्त कर्म नास्रवतीति कृत्वा संवरप्रसिद्धिरव गन्तव्या । तद्यथा तिस्रो गुप्तय —कायगुप्ति वाग्गुप्ति मनोगुप्तिरिति । तत्र यत्कायकर्मनिभृतस्याप्रत्यवेक्षिताप्रमार्जितधरणिप्रदेशचंक्रमणद्रव्यातराधाननिक्षेपशयनासनादिनिमित्त कर्म समूर्छति न तन्निगृहीतकायप्रचारस्याप्रमत्तस्यास्रोतुमर्हति । यच्च वाचिकमसंवृतस्यासत्प्रलापेनाऽप्रियवचनादिहेतुक कर्म निपतति न तद्विनिवृत्तवाक्प्रयोगस्यास्रवति । यदपि मानसे प्रदोषे रागद्वेषाभिभूतस्यातीतानागतविषयाभिलाषिण आस्रवति न तदात्मीकृतमनस कदाचिदप्युपनिपतति । आह यदि मूर्तिपरित्याग कार्त्स्न्येन कर्तुमशक्नुवत संक्लेशनिवृत्तये योगनिरोध प्रतिज्ञायते स यावन्न भवति तावदनेनावश्य प्राणयात्रानिमित्त तत्प्रत्यनीकभावात् परिस्पद कर्तव्य, वाक्प्रयोगो वा प्रश्नापेक्ष शरीरमलनिर्हरणार्थश्च तस्मिन् सति कथमस्य संवर स्यादित्यत्रोच्यते—

## ईर्याभाषैषणादाननिक्षेपोत्सर्गाः समितयः ॥ ५ ॥

**सम्यग्ग्रहणेनाधिकृतेन प्रत्येकमभिसंबंधः ॥ १ ॥** सम्यगित्यनुवर्तते तेन प्रत्येकमिहाभिसंबंध क्रियते । सम्यगीर्या सम्यग्भाषा सम्यगेषणा सम्यगादाननिक्षेपौ सम्यगुत्सर्ग इति ।

**समितिरित्यन्वर्थसंज्ञा वा तांत्रिकी पंचानां ॥ २ ॥** *समितिरितीय अन्वर्थसंज्ञा सम्यगिति समितिरिति ।* क प्रसिद्धा ? तांत्रिकी । केषां ? पंचानामीर्यादीनां ।

**तत्र चर्यायां जीववधपरिहार ईर्यासमिति ॥ ३ ॥** विदितजीवस्थानादिविधेर्मुने, धर्मार्थं प्रयतमानस्य सवितर्युदिते चक्षुषो विषयग्रहणसामर्थ्ये उपजाते मनुष्यादिचरणपातोपहतावश्यायप्रायमार्गे अनन्यमनस शनैर्न्यस्तपादस्य संकुचितावयवस्य युगमात्रपूर्वनिरीक्षणावहितदृष्टे पृथिव्यारंभाभावात् ईर्यासमितिरित्याख्यायते ।

अत्राह विदितजीवस्थानादिविधेरित्युक्त तत्र न ज्ञायते कानि जीवस्थानादीनि इत्यत्रोच्यते—

**सूक्ष्मबादरैकद्वित्रिचतुरिंद्रियसंज्ञ्यसंज्ञिपंचेंद्रियपर्याप्तकापर्याप्तकभेदाच्चतुर्दश जीवस्थानानि ॥ ४ ॥** एकेंद्रियादय *प्राक् व्याख्यातलक्षणा* । तत्रैकेंद्रिया द्विविधा सूक्ष्मा बादरा । तत्र सूक्ष्मा द्विविधा पर्याप्तका अपर्याप्तका । बादरा द्विविधा पर्याप्तका अपर्याप्तका इति । द्वींद्रिया द्विविधा पर्याप्तका अपर्याप्तका त्रींद्रिया द्विविधा पर्याप्तका अपर्याप्तका । चतुरिंद्रिया द्विविधा पर्याप्तका अपर्याप्तका,

पचेंद्रिया द्विविधा संज्ञिनोऽसंज्ञिन'। संज्ञिनो द्विविधा पर्याप्तका अपर्याप्तका'। असंज्ञिनो द्विविधा पर्याप्तका अपर्याप्तकाश्च एव जीवस्थानानि वेदितव्यानि। तानि नामादयापादितविशेषाणि एकेंद्रियजातिसूक्ष्मबादर-पर्याप्तकाऽपर्याप्तकनामोदयजनितानि चत्वारि जीवस्थानानि एकेंद्रियेषु। द्वींद्रियादिषु बादरनामोदय एव। विकलेंद्रियेषु द्वित्रिचतुरिंद्रियजातिपर्याप्तकापर्याप्तकनामोदयनिर्वर्तितानि षड्जीवस्थानानि। पचेंद्रियेषु सझ्यसंज्ञिपर्याप्तकापर्याप्तकनामोदयलब्धभेदानि चत्वारि जीवस्थानानि।

**हितमितासंदिग्धाभिधान भाषासमितिः ॥ ५ ॥** मोक्षपदप्रापणप्रधान फल हित, तद्द्विविध स्वहित परहित चेति। मितमनर्थकबहुप्रलपनरहित स्फुटार्थं व्यक्ताक्षर वाऽसंदिग्ध, एवविधमभिधान भाषा-समिति। तत्प्रपच —मिथ्याभिधानासूयाप्रियसभेदाल्पसारशंकितसंभ्रातकषायपरिहासाऽयुक्ताऽसभ्यनिष्ठु-राधर्मविध्यदेशकालालक्षणातिसंस्तवादिवाग्दोषविरताभिधान।

**अन्नादावुद्गमादिदोषवर्जनमेषणासमितिः ॥ ६ ॥** अनगारस्य गुणरत्नसचयसवाहिशरीरश-कटि समाधिपत्तन निनीषतोऽक्षम्रक्षणमिव शरीरधारणमौषधमिव जाठराग्निदाहोपशमनिमित्तमन्नाद्यनास्वाद यतो देशकालसामर्थ्यादिविशिष्टमगर्हितमभ्यवहरत उद्गमोत्पादनैषणासयोजनप्रमाणकारणागारधूमप्रत्यय-नवकोटिपरिवर्जनमेषणासमितिरिति समाख्यायते।

**धर्मोपकरणानां ग्रहणविसर्जनं प्रति यतनमादाननिक्षेपणा समितिः ॥७॥** धर्माविरोधिनां परानुपरोधिनां द्रव्याणां ज्ञानादिसाधनानां ग्रहणे विसर्जने च निरीक्ष्य प्रमृज्य प्रवर्तनमादाननिक्षेपणा समिति।

**जीवाविरोधेनांगमलनिर्हरणमुत्सर्गसमितिः ॥ ८ ॥** स्थावराणा जगमाना च जीवादीना अविरोधेनागमलनिर्हरण शरीरस्य च स्थापन उत्सर्गसमिति', अवगतव्या।

**वाक्कायगुप्तिरियमपीति चेन्न तत्र कालविशेषे सर्वनिग्रहोपपत्तेः ॥ ९ ॥** स्यान्मत ईर्या-समित्यादिलक्षणा वृत्ति वाक्कायगुप्ति, रक्षण प्राणिपीडापरिहार इत्यनर्थातरमिति ? तन्न किं कारण ? तत्र कालविशेषे सर्वनिग्रहोपपत्ते। परिमितकालविषयो हि सर्वयोगनिग्रहो गुप्ति। तत्रासमर्थस्य कुशलेषु वृत्ति समितिरतो गमनभाषणाभ्यवहरणग्रहणनिक्षेपोत्सर्गलक्षणसमितिविधावप्रमत्ताना तत्प्रणालिकाप्रसृ-तकर्माभावान्निभृताना प्रासीदत्संवर।

**पात्राभावात् पाणिपुटाहाराणां संवराभाव इति चेन्न परिग्रहदोषात् ॥ १० ॥** स्यादे-तत् असति पात्रे पाणिपुटेन भुजानस्य भिक्षो पतिताहारनिमित्तप्राणातिपातदर्शनादेषणासमित्यभावात् संवराभाव इति ? तन्न। किं कारण ? परिग्रहदोषात् नैस्सर्गीचर्यामातिष्ठमानस्य पात्रग्रहण सति तत्सरक्षणा विकृतौ दोष. प्रसज्यते। तस्मात् स्वायत्तेन पाणिपुटेन निराबाधदेशे स्थित्वा परीक्ष्य भुजानस्य निभृतस्य तत्कृतदोषाभाव। किंच—

**दैन्यप्रसगात् ॥ ११ ॥** कपालमन्यद्वा भाजनमादाय पर्यटतो भिक्षोर्दैन्यमासज्यते। गृहिजना-नीतमपि भाजन सर्वत्र सुलभ तत्प्रक्षालनादिविधौ च दु परिहार पापलेप, स्वभाजनेन देशातर नीत्वा भो-जने च आशानुबधन स्यात्। स्वपूर्वविशिष्टभाजनादिकगुणासभवाच्च येन केनचित्त भुजानस्य दैन्य स्यात्। तत स्वकरपुटभाजनान्नान्यद्विशिष्टमस्ति भिक्षो।

**अन्नवत्तत्प्रसग इति चेन्न तेन विनाऽभावात् ॥ १२ ॥** स्यादेतद्यथा प्रासव्यमन्न सस्कृत परम परित्यज्य परगृहे यत्किंचित् असस्कृतमन्न अरसमनुमन्यते भिक्षुणा तथा कपालाद्यादानमपि स्यादिति ? तन्न। किं कारण ? तेन विनाऽभावात् चिरकाल तप सचिकीर्षत सयतस्य शरीरयात्रा आहारमतरेण न स-भवतीति यत्किंचित्प्रासुक कादाचित्कमभ्युपगम्यते न तथा भाजनमिति [illegible] दृष्टात।

आह उक्त गुप्तिसमित्यो सवरहेतुत्वमिदानीं [illegible] [illegible] सवर्णयितव्यमि-त्यत्रेदमुच्यते—

# उत्तमक्षमामार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिंचन्यब्रह्मचर्याणि धर्मः ॥ ६ ॥

किमर्थमिदमुच्यते—

**प्रवर्तमानस्य प्रमादपरिहारार्थं धर्मवचनं ॥ १ ॥** आद्य गुप्त्यादिप्रवृत्तिनिग्रहार्थं तत्रासमर्थाना प्रवृत्त्युपायप्रदर्शनार्थं द्वितीयमेषणादि । इद पुनर्दशविधधर्माख्यान, प्रवर्तमानस्य प्रमाद परिहारार्थं वेदितव्य ।

**क्रोधोत्पत्तिनिमित्ताविषह्याक्रोशादिसभवे कालुष्योपरमः क्षमा ॥ २ ॥** शरीरस्थितिहेतु मार्गणार्थं परकुलान्युपगच्छतो भिक्षार्दुष्टजनाक्रोशोपसहनावज्ञानताडनशरीरव्यापादनादीना क्रोधोत्पत्तिनिमित्ताना सन्निधाने कालुष्याभाव क्षमेत्युच्यते ।

**जात्यादिमदावेशादभिमानाभावो मार्दव ॥ ३ ॥** उत्तमजातिकुलरूपविज्ञानैश्वर्यश्रुतलाभवीर्यस्यापि सतस्तत्कृतमदावेशाभावात् परप्रयुक्तपरिभवनिमित्ताभिमानाभावो मार्दव माननिर्हरणमवगतव्य ।

**योगस्यावक्रतार्जवं ॥ ४ ॥** योगस्य कायवाङ्मनोलक्षणस्यावक्रता आर्जवमित्युच्यते ।

**प्रकर्षप्राप्ता, लोभनिवृत्तिः शौच ॥ ५ ॥** लोभस्य निवृत्ति प्रकर्षप्राप्ता, शुचर्भाव कर्म च शौचमिति निश्चीयते ।

**गुप्तावतर्भाव इति चेन्न तत्र मानसपरिस्पंदप्रतिषेधात् ॥ ६ ॥** स्यादेतत् मनोगुप्तौ शौचमतर्भवतीति पृथग्ग्रहणमनर्थकमिति ? तन्न । किं कारण ? तत्र मानसपरिस्पदप्रतिषेधात् । मनोगुप्तौ हि मानस परिस्पद सकल प्रतिषिध्यते तत्रासमर्थेषु परकीयेषु वस्तुषु अनिष्टप्रणिधानोपरमार्थमिदमुच्यते ।

**आकिंचन्येऽवरोध इति चेन्न तस्य नैर्मम्यप्रधानत्वात् ॥ ७ ॥** स्यादेतत् आकिंचन्य वक्ष्यते तत्रास्यावरोधात् शौचग्रहण पुनरुक्तमिति ? तन्न । किं कारण ? तस्य नैर्मम्यप्रधानत्वात् । स्वशरीरादिषु सस्कारापोहार्थमाकिंचन्यमिष्यते ।

**तच्चतुर्विध जीवितारोग्येंद्रियोपभोगभेदात् ॥ ८ ॥** लोभश्चतु प्रकार —जीवनलोभ आरोग्यलोभ इद्रियलोभ उपभोगलोभश्चेति स प्रत्येक द्विधा भिद्यते स्वपरविषयत्वात् अतस्तन्निवृत्तिलक्षण शौच्च चतुर्विधमवसेय ।

**सत्सु साधुवचन सत्यं ॥ ९ ॥** सत्सु प्रशस्तेषु जनेषु साधुवचन सत्यमित्युच्यते । तद्दशप्रकार व्याख्यात ।

**भाषासमितावंतर्भाव इति चेन्न तत्र साध्वसाधुभाषाव्यवहारे हितमितार्थत्वात् ॥ १० ॥** स्यादेतत् सत्यग्रहणमनर्थक ? कुत भाषासमितावतर्भावात् इति ? तन्न किं कारण ? तत्र साध्वसाधुभाषाव्यवहारे हितमितार्थत्वात् । सयतो हि साधुषु असाधुषु च भाषाव्यवहार कुर्वन् हित मित च ब्रूयात् । अन्यथा रागानर्थदडादिदोषानुषग स्यादिति समितिलक्षणमुक्त । इह पुन सत्त प्रव्रजितास्तद्भक्ता वा तेषु साधु सत्य ज्ञानचारित्रशिक्षणादिषु बह्वपि वक्तव्यमित्यनुज्ञायते धर्मोपबृहणार्थं । अथ क सयम ? कश्चिदाह—भाषादिनिवृत्तिरिति ।

**न भाषादिनिवृत्तिः संयमो गुप्त्यतर्भावात् ॥ ११ ॥** गुप्तिर्हि निवृत्तिप्रवणा अतोऽतर्भावात् सयमाभाव स्यात् । अपर आह कायादिप्रवृत्तिर्विशिष्टा, सयम इति ।

**नापि कायादिप्रवृत्तिर्विशिष्टा समितिप्रसगात् ॥ १२ ॥** समितयो हि कायादिप्रवृत्तिदोषनिवृत्तय अतस्तत्रातर्भाव प्रसज्यते ।

**त्रसस्थावरवधप्रतिषेध आत्यंतिकः संयम इति चेन्न परिहारविशुद्धिचारित्रांतर्भावात्॥१३॥** अथ मत द्वींद्रियादीना त्रसाना पृथिवीकायिकादीना स्थावराणा च प्राणिना वधप्रतिषेध आत्यंतिक संयम इति तदपि नोपपद्यते। कुत ? परिहारविशुद्धिचारित्रांतर्भावात्। वक्ष्यते हि चारित्रभेदेषु परिहारविशुद्धिलक्षण चारित्रमिति तत्रांतर्भावात् पृथक् सयमग्रहण अनर्थक स्यात्। कस्तर्हि सयम ।

**समितिषु प्रवर्तमानस्य प्राणींद्रियपरिहारः संयमः ॥ १४ ॥** ईर्यासमित्यादिषु वर्तमानस्य मुनेस्तत्परिपालनार्थं प्राणींद्रियपरिहार सयम इत्युच्यते। एकेंद्रियादिप्राणिपीडापरिहार. प्राणिसयम । शब्दादिष्विन्द्रियार्थेषु रागानभिष्वग इंद्रियसयमः।

**अतोपहृतसंयमभेदसिद्धिः ॥ १५ ॥** एव च कृत्वाऽपहृतसयमभेदसिद्धिर्भवति। सयमो हि द्विविध —उपेक्षासयमोऽपहृतसयमश्चेति देशकालविधानज्ञस्य परोपरोधेन उत्सृष्टकायस्य त्रिधागुप्तस्य रागद्वेषानभिष्वगलक्षण उपेक्षासयम । अपहृतसयमस्त्रिविध उत्कृष्टो मध्यमो जघन्यश्चेति। तत्र प्रासुकवसत्याहारमात्रबाह्यसाधनस्य स्वाधीनेतरज्ञानचरणकरणस्य बाह्यजंतूपनिपाते आत्मान ततोपहृत्य जीवान् परिपालयत उत्कृष्ट, मृदुना प्रमृज्य जीवान् परिहरतो मध्यम, उपकरणांतरेच्छया जघन्य ।

**तत्प्रतिपादनार्थः शुद्ध्यष्टकोपदेशः ॥ १६ ॥** तस्यापहृतसयमस्य प्रतिपादनार्थं शुद्ध्यष्टकोपदेशो द्रष्टव्य । तद्यथा—अष्टौ शुद्धय —भावशुद्धि कायशुद्धि विनयशुद्धि ईर्यापथशुद्धि भिक्षाशुद्धि प्रतिष्ठापनशुद्धि शयनासनशुद्धि वाक्यशुद्धिश्चेति। तत्र भावशुद्धि कर्मक्षयोपशमजनिता मोक्षमार्गरुच्याहितप्रसादा रागाद्युपप्लवरहिता तस्या सत्या आचार प्रकाशते परिशुद्धभित्तिगतचित्रकर्मवत्। कायशुद्धिर्निरावरणाभरणा निरस्तसस्कारा यथाजातमलधारिणी निराकृतांगविकारा सर्वत्र प्रयतवृत्ति प्रशमसुख मूर्तिमिव प्रदर्शयतीति तस्या सत्या न स्वतोस्य भयमुपजायते नाप्यन्यत तस्य। विनयशुद्धि अर्हदादिषु परमगुरुषु यथार्ह पूजाप्रवणा ज्ञानादिषु च यथाविधिभक्तियुक्ता गुरो सर्वत्रानुकूलवृत्ति प्रश्नस्वाध्यायवाचनाकथाविज्ञप्त्यादिषु प्रतिपत्ति कुशला देशकालभावावबोधनिपुणा आचार्यानुमतचारिणी, तन्मूला सर्वसपद। सैषा भूषा पुरुषस्य सैव नौ ससारसमुद्रतरणे। ईर्यापथशुद्धि नानाविधजीवस्थानयोन्याश्रयावबोधजनितप्रयत्नपरिहृतजतुपीडाज्ञानादित्यस्वेंद्रियप्रकाशनिरीक्षितदेशगामिनी द्रुतविलबितसभ्रांतविस्मितलीलाविकारदिगतरावलोकनादिदोषरहितगमना तस्या सत्यां सयम प्रतिष्ठितो भवति विभव इव सुनीतौ। भिक्षाशुद्धि परीक्षितोभयप्रचारा, मृष्टपूर्वापरस्वागप्रदेशविधाना आचारसूत्रोक्तकालदेशप्रवृत्तिप्रतिपत्तिकुशला लाभालाभमानापमानसमानमनोवृत्ति लोकगर्हितकुलपरिवर्जनपरा चद्रगतिरिव हीनाधिकगृहा, विशिष्टोपस्थाना दीनानाथदानशाला विवाहयजनगेहादिपरिवर्जनोपलक्षिता दीनवृत्तिविगमा प्रासुकाहारगवेषणप्रणिधाना आगमविहितनिरवद्याशनपरिप्राप्तप्राणयात्राफला, तत्प्रतिबद्धा हि चरणसपत् गुणसपदिव साधुजनसेवानिबंधना। सा लाभालयाभो सुरसविरसयोश्च समसतोषाद्भिक्षेति भाष्यते यथा सलीलसालंकारवरयुवतिभिरुपनीयमानघासो गौर्न तदगगतसौंदर्यनिरीक्षणपर तृणमेवात्ति । यथा वा तृणोल्लुप नानादेशस्थ यथालाभमभ्य वहरति न योजनासपदमवेक्षते तथा भिक्षुरपि भिक्षापरिवेषकजनमृदुललितरूपवेषविलासावलोकननिरुत्सुक शुष्कद्रवाहारयोजनाविशेष चानवेक्षमाण यथागतमश्नाति इति गौरिव चारो गोचार इति व्यपदिश्यते। तथा गवेषणेति च यथा शकट रत्नभारपरिपूर्णं येन केनचित् स्नेहेन अक्षलेप च कृत्वा अभिलषितदेशांतर वणिगुपनयति तथा मुनिरपि गुणरत्नभरिततनुशकटीमनवद्यभिक्षायुरक्षम्रक्षणेन अभिप्रेतसमाधिपत्तन प्रापयतीत्यक्षम्रक्षणमिति च नामरूढ। यथा भाडागारे समुत्थितमनल अशुचिना शुचिना वा वारिणा शमयति गृही तथा यतिरपि उदराग्निप्रशमनमिति च निरुच्यते। दातृजनबाधया विना कुशलो मुनिर्भ्रमरवदाहरतीति भ्रमराहार इत्यपि परिभाष्यते । येन केनचित्प्रकारेण स्वभ्रपूरणवदुदरगर्तमनगार पूरयति स्वादुनेतरेण चेति स्वभ्रपूरणमिति च निरुच्यते। प्रति[illegible] [illegible]पर सयत [illegible] [illegible]नखरोमसिंघा[illegible] [illegible]आरमलनिर्हरणशोधने देहपरित्यागे च विदितदेशकाल[illegible] [illegible] शयनासनशुद्धिपरेण स्त्री-

क्षुद्रचोरपानाक्षशौंडशाकुनिकादिपापजनवासा वर्ज्या शृंगारविकारभूषणोज्ज्वलवेषवेश्याक्रीडाभिरामगीतनृत्यवादित्राकुलशालादयश्च परिहर्तव्या अकृत्रिमगिरिगुहातरुकोटरादय कृत्रिमाश्च शून्यागारादयो मुक्तमोचितावासा अनात्मोद्देशनिर्वर्तिता निरारंभा सेव्या । वाक्यशुद्धि पृथिवीकायिकारंभादिप्रेरणरहिता परुषनिष्ठुरादिपरपीडाकरप्रयोगनिरुत्सुका व्रतशीलदेशनादिप्रधानफला हितमितमधुरमनोहरा संयतस्य योग्या तदधिष्ठाना हि सर्वसंपद ॥

**तपो वक्ष्यमाणभेद ॥ १७ ॥** कर्मक्षयार्थं तप्यत इति तप, तदुत्तरत्र वक्ष्यमाण द्वादशविकल्प अवसेय ।

**परिग्रहनिवृत्तिस्त्यागः ॥ १८ ॥** परिग्रहस्य चेतनाचेतनलक्षणस्य निवृत्तिस्त्याग इति निश्चीयते ।

**अभ्यंतरतपोविशेषोत्सर्गग्रहणात्सिद्धिरितिचेन्न तस्यान्वर्थत्वात् ॥ १९ ॥** स्यान्मत वक्ष्यते तपोऽभ्यंतर षड्विध तत्रोत्सर्गलक्षणेन तपसा ग्रहणमस्य सिद्धमित्यनर्थक त्यागग्रहणमिति तन्न । किं कारण ? तस्यान्वर्थत्वात् । तद्धि नियतकाल सर्वोत्सर्गलक्षण । अयं पुनस्त्याग, यथाशक्ति अनियतकाल क्रियते इत्यस्ति भेद ।

**शौचवचनात्सिद्धिरिति चेन्न तत्रासत्यपि गर्द्धोत्पत्तेः ॥ २० ॥** अथ मत व्याख्यात शौच तत्रास्यांतर्भावात् त्यागग्रहणमनर्थकमिति ? तन्न किं कारण ? तत्रासत्यपि गर्द्धोत्पत्त असन्निहिते परिग्रहे कर्मोदयवशात् गर्द्धउत्पद्यते तन्निवृत्त्यर्थं शौचमुक्त । त्याग पुन सन्निहितस्यापाय दान वा स्वयोग्य, अथवा संयतस्य योग्य ज्ञानादिदान त्याग इत्युच्यते ।

**ममेदमित्यभिसंधिनिवृत्तिराकिंचन्यं ॥ २१ ॥** उपात्तेषु अपि शरीरादिषु संस्कारापोहाय ममेदमित्याभिसंधिनिवृत्तिराकिंचन्यमित्याख्याते । नास्य किंचनास्ति इत्यकिंचन तस्य भाव कर्म चाकिंचन्य ।

**अनुभूतागनास्मरणतत्कथाश्रवणस्त्रीसंसक्तशयनासनादिवर्जनाद्ब्रह्मचर्य ॥ २२ ॥** मयानुभूतागना कलागुणविशारदा इति स्मरण तत्कथाश्रवण रतिपरिमलादिवासितस्त्रीसंसक्तशयनासनमित्येवमादिवर्जनात् परिपूर्णब्रह्मचर्यमवतिष्ठते ।

**स्वातंत्र्यार्थं गुरौ ब्रह्मणि चर्यमिति वा ॥ २३ ॥** अथवा ब्रह्म गुरुस्तस्मिंश्चरण तदनुविधानधर्मस्वातंत्र्यप्रतिपत्त्यर्थं ब्रह्मचर्यमित्याचर्यते ।

**अन्वर्थसंज्ञाप्रतिपादनार्थत्वाद्वा पौनरुक्त्य ॥ २४ ॥** अथवा सर्वेषामेव परिहार । यद्यपि गुप्तिसमित्यादिष्वंतर्भूता केचन इहोपदिश्यते तथापि तेषा संवरणधारणसामर्थ्याद्धर्म इत्येषा संज्ञा अन्वर्थेति प्रतिपादनार्थं पुनर्वचनमिति नास्ति पौनरुक्त्य ।

**तद्भावनाप्रवणत्वाद्वा सप्तप्रकारप्रतिक्रमणवत् ॥ २५ ॥** अथवा ऐर्यापथिकरात्रिंदिवीयपाक्षिकचातुर्मासिकसांवत्सरिकोत्तमस्थानीकलक्षण सप्तप्रकारप्रतिक्रमण गुप्त्यादिप्रतिष्ठानार्थं भाव्यते । तथोत्तमक्षमादिदशविधधर्मभावना गुप्त्यादिपरिपालनार्थैवेति तत्रांतर्भूतानामपि पृथगुपदेशो युक्त ।

**उत्तमविशेषण दृष्टप्रयोजनपरिवर्जनार्थं ॥ २६ ॥** यत्किंचिद्दृष्ट प्रयोजनमनुद्दिश्य क्रियमाणानि क्षमादीनि संवरणकारणानि भवतीत्यस्य विशेषस्य प्रतिपत्त्यर्थमुत्तमविशेषणमुपादीयते । उत्तमक्षमा उत्तममार्दवमित्यादि । कथ पुनरेषा संवरहेतुत्वमिति चेदत्रोच्यते ।

**सर्वेषां स्वगुणप्रतिपक्षदोषभावनात् संवरहेतुत्व ॥ २७ ॥** सर्वेषामेवैषा उत्तमक्षमादीना स्वगुणस्य प्रतिपक्षदोषस्य भावनात् संवरहेतुत्वमवसेय । तद्यथा—उत्तमक्षमायास्तावत्—व्रतशीलपरिरक्षणमिहामुत्र च दु खानभिष्वंग सर्वस्य जगत सम्मानसत्कारभावपरिषद्भक्त्यादिगुण तत्प्रतिपक्षस्य क्रोधस्य धर्मार्थकाममोक्षप्राणनाशन दोष इति विचिंत्य क्षमितव्य । किंच—

**क्रोधनिमित्तस्य स्वात्मभावानुचिंतनात् ॥ २८ ॥** परै प्रयुक्तस्य क्रोधनिमित्तस्य आत्मनि भावचिंतन तावद्विद्यते मय्येते दोषा । किमत्रासौ मिथ्या ब्रवीतीति क्षमितव्यमभावचिंतनादपि नैते मयि विद्यते दोषा अज्ञानादसौ ब्रवीति इति क्षमा कार्या । अपि च बालस्वभावचिंतन परोक्षप्रत्यक्षाक्रोशताडनमारणधर्मभ्रंशनानामुत्तरोत्तररक्षार्थं । तद्यथा—परोक्षमाक्रोशति बाले क्षमितव्य एव स्वभावा हि बाला भवति दिष्ट्या च मा परोक्षमाक्रोशति न प्रत्यक्षमेतदपि विद्यते बालेष्विति लाभ एव मतव्य । प्रत्यक्षमाक्रोशति पोढव्य विद्यत एतत् बालेषु दिष्ट्या च मा प्रत्यक्षमाक्रोशति न ताडयति, एतदपि विद्यते बालेष्विति लाभ एव मतव्य । ताडयत्यपि च मर्षितव्य दिष्ट्या च मा ताडयति न प्राणैर्वियोजयति इत्येतदपि विद्यते बालेष्विति लाभ एव मतव्य । प्राणैर्वियोजयत्यपि तितिक्षा कर्तव्या दिष्ट्या च मा प्राणैर्वियोजयति न धर्माद्भ्रंशयति इति । किंचान्यत् ममैवापराधे यत्पुराचारित तन्महद्दुष्कर्म तत्फलमिदमाक्रोशवचनादि निमित्तमात्र परोऽत्रेति महितव्य । मार्दवोपेत गुरवोऽनुगृह्णति सावव साधु मन्यते ततश्च सम्यग्ज्ञानादीना पात्रीभवति । तत स्वर्गापवर्गफलावाप्ति । मतिमलिने मनसि व्रतशीलानि नावतिष्ठते । साधवश्चैन परित्यजति च । तन्मूला सर्वा विपद । ऋजुहृदयमधिवसति गुणा मायाचार नाश्रयतेऽगर्हिता च गतिर्भवति । शुच्याचारमिहापि सन्मानयति, सर्वे विश्रंभादयश्च गुणा तमधितिष्ठति, लोभभावनाक्राता हृदये नावकाश लभते गुणा , इह चामुत्र चाऽचिंत्य व्यसनमसावश्नुते, सत्यवाचि प्रतिष्ठिताः सर्वा गुणसपद । अनृतभाषिण बधवोपि अवमन्यते, मित्राणि च परित्यजति, जिह्वाछेदनसर्वस्वहरणादि व्यसनभागपि भवति, सयमो ह्यात्महित तमनुतिष्ठन्निहैव पूज्यते परत्र किमस्ति वाच्य असयत. प्राणवधविषयरागेषु नित्यप्रवृत्तकर्माशुभ सचिनुते तप सवार्थसाधन तत एव ऋद्धय सजायते । तपस्विभिरध्युषितान्येव क्षेत्राणि लोके तीर्थमुपगतानि तद्यस्य न विद्यते स तृणाल्लघुर्लक्ष्यते मुचति त सर्वे गुणा , नासौ मुचति ससार, उपधित्याग पुरुषहित यतो यत परिग्रहादपेत ततस्ततोस्य खेदो व्यपगतो भवति निरवद्ये मन प्रणिधान पुण्यनिधान परिग्रहाशा बलवती सर्वदोषप्रसवयोनि न तस्या उपधिभि. तृप्तिरस्ति सलिलैरिव सलिलनिधेरिह वडवाया अपि च क पूरयति दु पूरमाशागर्तं दिनेदिने यत्रास्तमस्तमाधेयमाधारत्वाय कल्पते । शरीरादिषु निर्ममत्व परमनिर्वृत्तिमवाप्नोति । शरीरादिषु कृताभिष्वगस्य सर्वकालमभिष्वग एव ससारे, ब्रह्मचर्यमनुपालयत हिंसादयो दोषा न स्पृशति । नित्याभिरतगुरुकुलावासमधिविसति गुणसपद । वरागनाविलासविभ्रमविधेयीकृत पापैरपि विधेयीक्रियते । अजितेंद्रियता हि लोके प्राणिनामवधात्रीत्येवमुत्तमक्षमादिषु तत्प्रतिपक्षेषु च गुणदोषविचारपूर्विकाया क्रोधादिनिवृत्तौ सत्या तन्निबंधनकर्मास्रवाभावात् महान् सवरो भवति ।

**व्यक्तिवचनभेदात् निर्देशवैलक्षण्यमिति चेन्न सर्वेषा धर्मभावाव्यतिरेकस्यैकत्वादाविष्टलिंगत्वाच्च ॥ २९ ॥** स्यान्मत यथा शुक्ल पट शुक्ला शाटी शुक्ल वस्त्र शुक्लौ कबलौ शुक्ला कवला इति सामानाधिकरण्ये व्यक्तिवचनयोरभेदो दृश्यते नच तथेहाभेद ततो निर्देशो विलक्षण इति ? तन्न किं कारण ? सर्वेषा धर्मभावाव्यतिरेकस्यैकत्वात् सर्वेषूत्तमक्षमादिषु सवरणलक्षणो धर्मभाव अस्ति सच एक तस्य विवक्षितत्वात् एकवचननिर्देश । आविष्टलिंगश्च धर्मशब्द नान्यसबधे स्वलिंग जहाति । आह क्रोधाद्यनुत्पत्ति क्षमादिविशेषप्रत्यनीकालबनादित्युक्त तत्र कस्मात् क्षमादीनयमवलबते नान्यथा वर्तते इत्युच्यते यस्मात्तप्तायस्पिडवत् क्षमादिपरिणतेनात्महितैषिणा कर्तव्या ।

## अनित्याशरणसंसारैकत्वान्यत्वाशुच्यास्रवसंवरनिर्जरा लोकबोधिदुर्लभधर्मस्वाख्यातत्वानुचिंतनमनुप्रेक्षाः ॥ ७ ॥

**उपात्तानुपात्तद्रव्यसयोगव्यभिचारस्वभावोऽनित्यत्व ॥ १ ॥** आत्मना रागादिपरिणामात्मना कर्मनोकर्मभावेन गृहीतानि उपात्तानि पुद्गलद्रव्याणि अनुपात्तानि परमाण्वादीनि तेषा द्रव्यात्मना नित्यत्व पर्यायात्मना सतत अनुपरतभेदससर्गवृत्तित्वादनित्यत्व । इमानि शरीरेंद्रियविषयोपभोगद्रव्याणि

नानि । पर्याप्तक च केवलिसमुद्घाते अयोगकेवलिनि च कर्मोदयार्पणात् । सिद्धा सर्वत्रातीतजविस्थाना' ।

गुणस्थानानामपि तेष्वेव सत्ता निचार्यते—नरकगतौ नारकेषु पर्याप्तकेषु चत्वारि गुणस्थानानि आद्यानि । सप्तसु पृथिवीषु प्रथमाया पृथिव्या अपर्याप्तकेषु द्वे गुणस्थाने मिथ्यादृष्ट्यसयतसम्यग्दृष्टी । इतरासु पृथिवीषु अपर्याप्तके एकमेव मिथ्यात्व । तिर्यग्गतौ तिर्यक्षु पर्याप्तकेषु पच गुणस्थानानि आद्यानि । तेषामपर्याप्तकेषु त्रीणि गुणस्थानानि मिथ्यादृष्टिसासादनसम्यग्दृष्ट्यसयतसम्यग्दृष्टिसज्ञानि । तिरश्चीषु पर्याप्तिकासु पच गुणस्थानानि आद्यानि । अपर्याप्तिकासु द्वे आद्ये स्त्रीत्वेन प्रवेशाभावात् असयतसम्यग्दृष्ट्यभाव' । मनुष्यगतौ मनुष्येषु पर्याप्तकेषु चतुर्दशापि गुणस्थानानि भवति । अपर्याप्तकेषु त्रीणि गुणस्थानानि मिथ्यादृष्टिसासादनसम्यग्दृष्ट्यसयतसम्यग्दृष्ट्याख्यानि । मानुषीपर्याप्तिकासु चतुर्दशापि गुणस्थानानि सति भावलिंगापेक्षया, द्रव्यलिंगापेक्षेण तु पचाद्यानि । अपर्याप्तिकासु द्वे आद्ये सम्यक्त्वेन सह स्त्रीजननाभावात् । तिर्यङ्मनुष्येषु भवापर्याप्तकेषु एकमेव गुणस्थान आद्य । देवगतौ भवनवासिव्यतरज्योतिष्कदेवेषु पर्याप्तकेषु चत्वारि गुणस्थानानि आद्यानि । अपर्याप्तकेषु द्वे आद्ये तद्देवीषु सौधर्मैशानकल्पवासिदेवीषु च एष क्रम । सौधर्मैशानादिषु उपरिमग्रैवेयकातेषु चत्वारि गुणस्थानानि आद्यानि । अपर्याप्तकेषु त्रीणि मिथ्यादृष्टिसासादनसम्यग्दृष्ट्यसयतसम्यग्दृष्टिनामानि । अनुदिशानुत्तरविमानवासिषु पर्याप्तापर्याप्तकेषु च एकमेव गुणस्थान, असयतसम्यग्दृष्टिसज्ञ । एकद्वित्रिचतुरिंद्रियाऽसज्ञिपचेंद्रियेषु एकमेवगुणस्थानमाद्य । पचेंद्रियेषु सज्ञिषु चतुर्दशापि सति । पृथिवीकायादिषु वनस्पत्यतेषु एकमेव प्रथम । त्रसकायिकेषु चतुर्दशापि सति । सत्यमनोयोगेऽसत्यमृषामनोयोगे च सज्ञिमिथ्यादृष्ट्यादय क्षीणकषायवीतरागछद्मस्थाता । असत्यमृषावाग्योगे द्वींद्रियादय सयोगकेवल्यता । सत्यवाग्योगे सज्ञिमिथ्यादृष्ट्यादय सयोगिकेवल्यता । मृषावाग्योगेसत्यमृषावाग्योगे च सज्ञिमिथ्यादृष्टिप्रभृतय क्षीणकषायवीतरागछद्मस्थाता । औदारिककाययोगे त्रयोदश गुणस्थानानि सयोगिकेवल्यतानि । औदारिकमिश्रकाययोगे चत्वारि गुणस्थानानि मिथ्यादृष्टिसासादनसम्यग्दृष्ट्यसयतसम्यग्दृष्टिसयोगिकेवलिसज्ञानि । वैक्रियिककाययोगे चत्वारि गुणस्थानानि आद्यानि । वैक्रियिकमिश्रकाययोगे त्रीणि तान्येव सम्यङ्मिथ्यात्ववर्जितानि । आहारककाययोगाहारकमिश्रकाययोगयोरेकमेव गुणस्थान प्रमत्तसयताख्य । कार्मणकाययोगे चत्वारि गुणस्थानानि मिथ्यादृष्टिसासादनसम्यग्दृष्ट्यसयतसम्यग्दृष्टिसयोगिकेवल्याख्यानि । अयोगे गुणस्थानमेक । स्त्रीवेदपुंवेदयोरसज्ञिपचेंद्रियादय अनिवृत्तिबादरसापरायिकाता । नपुसकवेदे एकेंद्रियप्रभृतय अनिवृत्तिबादरसापरायिकाता । नारकाश्चतुर्षु स्थानेषु नपुसकवेदे । तिर्यंच एकेंद्रियादय चतुरिंद्रियाता शुद्धे । नपुसकवेदे असज्ञिपचेंद्रियादय सयतासयताता । तिर्यंचस्त्रिषु वेदेषु, मनुष्या त्रिषु वेदेषु, मिथ्यात्वादय अनिवृत्तिबादरसापरायिकावसाना । तत परे मनुष्या अवेदा । देवाश्चतुर्षु स्थानेषु स्त्रीपुवेदयो ज्ञेया । क्रोधमानमायासु एकेंद्रियादय अनिवृत्तिबादरसापरायिकावसाना । लोभकषाये त एव सूक्ष्मसापरायिकाता तत परे अकषाया । मत्यज्ञानश्रुताज्ञानयोरेकेंद्रियादय सासादनसम्यग्दृष्ट्यता , विभगज्ञाने सज्ञिमिथ्यादृष्टयो वा सासादनसम्यग्दृष्टयो वा पर्याप्तका भवति नाऽपर्याप्तका । सम्यङ्मिथ्यादृष्टय त्रिषु ज्ञानेषु अज्ञानमिश्रेषु वर्तते कारणसदृशत्वात् कार्यस्य । मतिश्रुतावधिज्ञानेषु असयतसम्यग्दृष्टिप्रभृतय क्षीणकषायवीतरागछद्मस्थाता । मन पर्ययज्ञाने प्रमत्तसयतादय क्षीणकषायवीतरागछद्मस्थाता । केवलज्ञाने द्वे गुणस्थाने सयोगायोगिसज्ञे । सामायिकछेदोपस्थापनशुद्धिसयमयो प्रमत्तसयतादय अनिवृत्तिबादरसापरायिकान्ता । परिहारविशुद्धिसयमे द्वे गुणस्थाने प्रमत्ताप्रमत्तलक्षणे । सूक्ष्मसापरायसयमे एकमेव गुणस्थान सूक्ष्मसापरायशुद्धिसयमाख्य । यथाख्यातविहारशुद्धिसयमे चत्वारि गुणस्थानानि उपशातकषायक्षीणकषायसयोग्ययोगसज्ञानि । सयमासयमे एकमेव गुणस्थान सयतासयताख्य । असयमे चत्वारि गुणस्थानान्याद्यानि । चक्षुर्दर्शने चतुरिंद्रियादय क्षीणकषायवीतरागछद्मस्थाता । अचक्षुर्दर्शने एकेंद्रियादय क्षीणकषायवीतरागछद्मस्थाता । अवधिदर्शने असयतसम्यग्दृष्ट्यादय क्षीणकषायाता । केवलदर्शने द्वे गुणस्थाने अते । आद्यासु तिसृषु लेश्यासु एकेंद्रियादय असंयत-

सम्यग्दृष्टयता । तेजःपद्मलेश्ययोः संज्ञिमिथ्यादृष्टिप्रभृतयः अप्रमत्तावसानाः । शुक्ललेश्यायां संज्ञिमिथ्यादृष्टिप्रभृतयः सयोगिकेवल्यताः । अलेश्या अयोगकेवलिनः । भव्यत्वे चतुर्दशापि गुणस्थानानि संति । अभव्यत्वे प्रथममेव । क्षायिकसम्यक्त्वे असयतसम्यग्दृष्टयादयः अयोगकेवल्यताः । वेदकसम्यक्त्वे असयतसम्यग्दृष्टयादयः अप्रमत्तांताः । औपशमिकसम्यक्त्वे असयतसम्यग्दृष्टयादयः उपशांतकषायांताः । सासादनसम्यङ्मिथ्यात्वेषु एकमेव प्रत्येकं । नारकेषु प्रथमायां पृथिव्यां क्षायिकवेदकौपशमिकसम्यक्त्वाः असयतसम्यग्दृष्टयः । इतरासु, भूमिकेषु वेदकोपशमिकसम्यक्त्वाः तिर्यक्षु असयतसम्यग्दृष्टिस्थाने क्षायिकवेदकौपशमिकसम्यक्त्वानि संति । सयतासयतस्थाने क्षायिकसम्यक्त्वं नास्ति इतरद्वयमस्ति भोगभूमावेवोत्पादात् । तिरश्चीषु उभयोरपि स्थानयोः क्षायिकसम्यक्त्वं नास्ति । मनुष्यस्य क्षपणामारब्धवतः पुरुषलिंगेनैव वृत्तेः इतरद्वितयमस्ति । मनुष्येषु असयतसम्यग्दृष्टिसयतासयतसयतस्थानेषु क्षायिकवेदकौपशमिकसम्यक्त्वानि संति । भवनवासिव्यंतरज्योतिष्कदेवेषु तद्देवीषु सौधर्मैशानकल्पवासिनीषु देवीषु चाऽसयतसम्यग्दृष्टिस्थाने क्षायिकसम्यक्त्वं नास्ति इतरद्वितयमस्ति । सौधर्मादिषु उपरिमग्रैवेयकांतेषु क्षायिकवेदकौपशमिकसम्यक्त्वानि संति । अनुदिशानुत्तरविमानवासिदेवेषु क्षायिकवेदकसम्यक्त्वे स्तः । औपशमिकं चास्ति उपशमश्रेण्यां मृतानां तत्संभवात् । संज्ञित्वे संज्ञिमिथ्यादृष्टयादयः क्षीणकषायांताः । असंज्ञित्वे एकेंद्रियादयः असंज्ञिपंचेंद्रियांताः तदुभयाभावे द्वे गुणस्थाने अंत्ये । आहारे एकेंद्रियादयः सयोगिकेवलिपर्यंताः अनाहारे पंचगुणस्थानानि । विग्रहगतौ मिथ्यादृष्टिसासादनसम्यग्दृष्ट्यसयतसम्यग्दृष्टयः । प्रतरलोकपूरणयोः सयोगकेवलिनोऽयोगकेवलिनश्च । सिद्धा व्यतीतगुणस्थानाः इत्येवमादिलक्षणो धर्मो निःश्रेयसप्राप्तिहेतुरहो भगवद्भिरर्हद्भिः स्वाख्यातः इति चिंतनं धर्मस्वाख्यातत्वानुप्रेक्षा । एवं ह्यस्य चिंतयतः धर्मानुरागात् सदा प्रतियत्नो भवति । एवं नित्यत्वाद्यनुप्रेक्षासंनिधाने उत्तमक्षमादिधारणान्महान्संवरो भवति ।

**स्वाख्यात इति युक्प्रसंग इति चेन्न प्रादिवृत्तेः ॥ १३ ॥** स्यान्मतं सुनां योगे अकृत्स्नार्थे युचा भवितव्यमिति तन्न किं कारणं-प्रादिवृत्ते । शोभनं आख्यातं स्वाख्यातं इति प्रादिलक्षणा वृत्तिर्भवति ।

**अनुप्रेक्षा इति भावसाधनत्वे बहुवचनविरोधः ॥ १४ ॥** अयमनुप्रेक्षाशब्दो यदि भावसाधनः, बहुवचनं नोपपद्यते तस्यैकत्वात् ।

**कर्मसाधनत्वे सामानाधिकरण्याभावः ॥ १५ ॥** स्यात् कर्मसाधनत्वं एवमपि युज्यते बहुवचनं सामानाधिकरण्यं तु नोपपद्यते अन्या ह्यनुप्रेक्षा अन्यदनुचिंतनमिति । अथानुचिंतनमेवानुप्रेक्षा एवमपि लिंगवचनभेदविरोधः ।

**न वा कृदभिहितस्य द्रव्यवद्भावात् ॥ १६ ॥** नैष दोषः । किं कारणं? कृदभिहितस्य द्रव्यवद्भावात् । कृदभिहितो भावो हि द्रव्यवद्भवति यथा पाकः पाकौ पाकाः इति तथाऽनुप्रेक्षितव्यार्थभेदात् भावस्य भेदे विवक्षिते बहुवचनं न्यायप्राप्तं ।

**सामानाधिकरण्यसिद्धिश्चोभयोः कर्मसाधनत्वात् ॥ १७ ॥** सामानाधिकरण्यं च सिध्यति कुतः उभयोः कर्मसाधनत्वात् । अनुप्रेक्ष्यते इत्यनुप्रेक्षा । अनुचित्यते इत्यनुचिंतनं । अनित्यादिस्वतत्त्वं ह्यनुचित्यमानमनुप्रेक्षाव्यपदेशभाग्भवति । कथं कर्मण्यन "युङ्व्या बहुलमिति" यथा निरदनमवसेचनमिति । एवमपि लिंगसंख्याभेदो नोपपद्यते? उपात्तलिंगसंख्यानां परस्पराभिसंबंधो युज्यते यथा गावो धनमिति । अथ धर्मोपदेशात् प्रागनुप्रेक्षा किमर्थं नोक्ता?

**मध्येनुप्रेक्षावचनं उभयनिमित्तत्वात् ॥ १८ ॥** अनुप्रेक्षावचनं मध्ये क्रियते कुतः? उभयनिमित्तत्वात् अनुप्रेक्षा हि भावयन् उत्तमक्षमादींश्च परिपालयति परीषहांश्च जेतुमुत्सहते ।

व्याख्याता अनुप्रेक्षाः संवरहेतुः परीषहजय इत्युक्तमतस्तान्व्याचक्ष्महे । आह व्याख्यास्यति भवा-

---

१ प्रतिपन्न, पाठांतरमिदं ख पुस्तके । २ शुभायोगे पाठ ख पुस्तके । ३ अकृत्स्नार्थे पाठांतरमपि ख पुस्तके ।

निर्देश तावदुक्तरूप किमर्थमेते सह्यन्ते ? किमेषां पारिभाषिकी संज्ञा उतान्वर्था ? इत्यत्रोच्यते—

## मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहाः ॥ ८ ॥

**परीषहाऽसहत्वादन्वर्थसंज्ञा ॥१॥** संज्ञा च नाम यतो न लघीयसी । कुत एतत् ? लघ्वर्थं संज्ञाकरणमिति तत्र महत्या संज्ञाया करणे एतत्प्रयोजनमन्वर्थसंज्ञा परीषहा इति यावत् । यथा विज्ञायते तद्विभाव्यते ।

**प्रकरणात् संवरणमार्गप्रतिपत्ति ॥ २ ॥** संवरो हि प्रकृत अतस्तदभिसंबन्धा मोक्षपदप्रापक-संवरमार्गप्रतिपत्तिरिह वेदितव्या ।

**तदच्यवनार्थो निर्जरार्थश्च परीषहजयः ॥ ३ ॥** कर्मागमद्वाराणि संवृण्वतो जैनेन्द्रान्मार्गान्मा-च्योष्महीति पूर्वमेव परीषहान् विजयते जितपरीषहा सन्त तैरनभिभूयमाना प्रधानसंवरमाश्रित्याऽप्रति-बन्धनक्षपकश्रेण्यारोहणसामर्थ्यं प्रतिपद्याभिन्नोत्साहा सकलसांपरायिकप्रध्वंसनशक्तयो ज्ञानध्यानपरशुभि छिन्नमूलानि कर्माणि विधूय प्रस्फोटितपक्षरेणवइव पतत्त्रिण ऊर्ध्वं व्रजति इत्येवमर्थं परिषोढव्या परी-षहा । "सोढ" इति षत्वाप्रतिषेध । यद्येवमुच्यतां के परीषहा ? कियतो वेत्यतइदमाह—

## क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याक्रोशवध-याचनालाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाज्ञानादर्शनानि ॥९॥

**क्षुधादयो द्वाविंशतिः परीषहाः ॥ १ ॥** त एते बाह्याभ्यन्तरद्रव्यपरिणामा शारीरमानसप्रकृष्ट-पीडाहेतव' क्षुधादयो द्वाविंशति परीषहा प्रत्येतव्या. । तद्विजये विदुषा सयतेन मोक्षार्थिना प्रतियत्न कार्य । तद्यथा—

**प्रकृष्टक्षुदग्निप्रज्वलने धृत्यम्भसोपशमः क्षुज्जयः॥२॥** निवृत्तसर्वसंस्कारविशेषस्य शरीरमात्रोपकरणस-तुष्टस्य तप संयमविलोप परिहरत कृतकारितानुमतसंकल्पितोद्दिष्टक्रीतक्रयागतप्रत्याख्यातपूर्वकर्मपश्चात्कर्मदश-विधदोषप्रमुक्तैषणस्य देशकालजनपदव्यवस्थापेक्षस्यानशनाद्यवरोगतप स्वाध्यायश्रमवेलातिक्रमावमौदर्या-सद्वेद्योदयादिभ्य नानाहारेंधनोपरमे जठराग्निदाहिनी मारुता लोलिताग्निशिखेव समन्ताच्छरीरेंद्रियहृदयसंक्षोभ करी क्षुधोत्पद्यते तस्या प्रतीकार अकाले संयमविरोधिभिर्वा द्रव्यै स्वयमकुर्वतोऽन्येन क्रियमाणमसेव-मानस्य मनसा वानभिसंदधत , दुस्तरेय वेदना महांश्च कालो दीर्घो हे तिविषाद अनापद्यमानस्य त्वग-स्थिसिरावतानमात्रकलेवरस्यापि सत आवश्यकक्रियादिषु नित्योद्यतस्य क्षुद्वशप्रातानर्थकारकबन्धनस्थम-नुष्यपंजरगततिर्यक्प्राणिन क्षुदभ्यर्दितान् परतन्त्रानपेक्षमाणस्य ज्ञानिनो धृत्यम्भसा संयमकुम्भधारितेन क्षुदग्निं शमयत तत्कृतपीडा प्रत्यवगणयन् क्षुज्जय इत्युच्यते ।

**उदन्योदीरणहेतूपनिपाते तद्वशाप्राप्तिः पिपासासहनं ॥ ३ ॥** स्नानावगाहनपरिषेकत्यागि-न पतत्त्रिवदनियतासनावसथस्यातिलवणस्निग्धरूक्षविरुद्धाहारग्रैष्मातपपित्तज्वरानशनादिभिरुदीर्णां शरीरें-द्रियोन्माथिनीं पिपासा प्रत्यनाद्रियमाणप्रतीकारमनस निदाघे पटुतपनकिरणसंतापिते अटव्यामासन्ने-ष्वपि ह्रदेषु अप्कायिकजीवपरिहारेच्छया जलमनादधानस्य सलिलसेकविवेकम्लाना लतेव ग्लानिमुपगता गात्रयष्टिमवगणय्य तप परिपालनपरस्य भिक्षाकालेपि इंगिताकारादिभि योग्यमपि पानमचोदयत धैर्य-कुम्भावधारितशैलसुगंधिप्रज्ञातोयेन विध्यापयत तृष्णाग्निशिखा संयमपरत्व पिपासासहनमित्यवसीयते ।

**पृथग्वचनमेकार्थ्यादिति चेन्न सामर्थ्यभेदात् ॥ ४ ॥** स्यादेतत् क्षुत्पिपासयो पृथग्वचन-मनर्थक कुत ऐकार्थ्यादिति ? तन्न किं कारण ? सामर्थ्यभेदात् । अन्यद्धि क्षुध सामर्थ्यमन्यत्पिपासाया ।

**अभ्यवहारसामान्यादिति चेन्नाधिकरणभेदात् ॥ ५ ॥** स्यान्मत अभ्यवहारसामान्यात् एका

सम्यग्दृष्ट्यता । तेजःपद्मलेश्ययोः संज्ञिमिथ्यादृष्टिप्रभृतयः अप्रमत्तावसानाः । शुक्ललेश्यायां संज्ञिमिथ्यादृष्टिप्रभृतयः सयोगिकेवल्यंताः । अलेश्या अयोगकेवलिनः । भव्यत्वे चतुर्दशापि गुणस्थानानि संति । अभव्यत्वे प्रथममेव । क्षायिकसम्यक्त्वे असंयतसम्यग्दृष्ट्यादयः अयोगकेवल्यंताः । वेदकसम्यक्त्वे असंयतसम्यग्दृष्ट्यादयः अप्रमत्तांताः । औपशमिकसम्यक्त्वे असंयतसम्यग्दृष्ट्यादयः उपशांतकषायांताः । सासादनसम्यङ्मिथ्यात्वेषु एकमेव प्रत्येकं । नारकेषु प्रथमायां पृथिव्यां क्षायिकवेदकौपशमिकसम्यक्त्वाः असंयतसम्यग्दृष्टयः । इतरासु, भूमिकेषु वेदकौपशमिकसम्यक्त्वाः तिर्यक्षु असंयतसम्यग्दृष्टिस्थाने क्षायिकवेदकौपशमिकसम्यक्त्वानि संति । संयतासंयतस्थाने क्षायिकसम्यक्त्वं नास्ति इतरद्वयमस्ति भोगभूमावेवोत्पादात् । तिरश्चीषु उभयोरपि स्थानयोः क्षायिकसम्यक्त्वं नास्ति । मनुष्यस्य क्षपणामारब्धवतः पुरुषलिंगेनैव वृत्तेः इतरद्वितयमस्ति । मनुष्येषु असंयतसम्यग्दृष्टिसंयतासंयतसंयतस्थानेषु क्षायिकवेदकौपशमिकसम्यक्त्वानि संति । भवनवासिव्यंतरज्योतिष्कदेवेषु तद्देवीषु सौधर्मैशानकल्पवासिनीषु देवीषु चाऽसंयतसम्यग्दृष्टिस्थाने क्षायिकसम्यक्त्वं नास्ति इतरद्वितयमस्ति । सौधर्मादिषु उपरिमग्रैवेयकांतेषु क्षायिकवेदकौपशमिकसम्यक्त्वानि संति । अनुदिशानुत्तरविमानवासिदेवेषु क्षायिकवेदकसम्यक्त्वे स्तः । औपशमिकं चास्ति उपशमश्रेण्यां मृतानां तत्संभवात् । संज्ञित्वे संज्ञिमिथ्यादृष्ट्यादयः क्षीणकषायांताः । असंज्ञित्वे एकेंद्रियादयः असंज्ञिपंचेंद्रियांताः तदुभयाभावे द्वे गुणस्थाने अंत्ये । आहारे एकेंद्रियादयः सयोगिकेवलिपर्यंताः अनाहारे पंचगुणस्थानानि । विग्रहगतौ मिथ्यादृष्टिसासादनसम्यग्दृष्ट्यसंयतसम्यग्दृष्टयः । प्रतरलोकपूरणयोः सयोगकेवलिनोऽयोगकेवलिनश्च । सिद्धा व्यतीतगुणस्थानाः इत्येवमादिलक्षणो धर्मो निःश्रेयसप्राप्तिहेतुरहो भगवद्भिरर्हद्भिः स्वाख्यात इति चिंतनं धर्मस्वाख्यातत्वानुप्रेक्षा । एवं ह्यस्य चिंतयतः धर्मानुरागात् सदा प्रतियत्नो भवति । एवं नित्यत्वाद्यनुप्रेक्षासंनिधाने उत्तमक्षमादिधारणान्महान्संवरो भवति ।

**स्वाख्यात इति ह्रस्वप्रसंग इति चेन्न प्रादिवृत्तेः ॥ १३ ॥** स्यान्मतं सुना योगे अकृच्छ्रार्थे ह्रस्वा भवितव्यमिति तन्न किं कारणं-प्रादिवृत्तेः । शोभनं आख्यातं स्वाख्यातं इति प्रादिलक्षणा वृत्तिर्भवति ।

**अनुप्रेक्षा इति भावसाधनत्वे बहुवचनविरोधः ॥ १४ ॥** अयमनुप्रेक्षाशब्दो यदि भावसाधनः, बहुवचनं नोपपद्यते तस्यैकत्वात् ।

**कर्मसाधनत्वे सामानाधिकरण्याभावः ॥ १५ ॥** स्यात् कर्मसाधनत्वं एवमपि युज्यते बहुवचनं सामानाधिकरण्यं तु नोपपद्यते अन्या ह्यनुप्रेक्षा अन्यदनुचिंतनमिति । अथानुचिंतनमेवानुप्रेक्षा एवमपि लिंगवचनभेदविरोधः ।

**न वा कृदभिहितस्य द्रव्यवद्भावात् ॥ १६ ॥** नैष दोषः । किं कारणं ? कृदभिहितस्य द्रव्यवद्भावात् । कृदभिहितो भावो हि द्रव्यवद्भवति यथा पाकः पाकौ पाका इति तथाऽनुप्रेक्षितव्यार्थभेदात् भावस्य भेदे विवक्षिते बहुवचनं न्यायप्राप्तं ।

**सामानाधिकरण्यसिद्धिश्चोभयोः कर्मसाधनत्वात् ॥ १७ ॥** सामानाधिकरण्यं च सिध्यति कुतः उभयोः कर्मसाधनत्वात् । अनुप्रेक्ष्यते इत्यनुप्रेक्षा । अनुचिंत्यते इत्यनुचिंतनं । अनित्यादिस्वतत्त्वं ह्यनुचिंत्यमानमनुप्रेक्षाव्यपदेशभाग्भवति । कथं कर्मण्यनः "युट्यो बहुलमिति" यथा निरदनमवसेचनमिति । एवमपि लिंगसंख्याभेदो नोपपद्यते ? उपात्तलिंगसंख्यानां परस्पराभिसंबंधो युज्यते यथा गावो धनमिति । अथ धर्मोपदेशात् प्रागनुप्रेक्षा किमर्थं नोक्ता ?

**मध्येनुप्रेक्षावचनं उभयनिमित्तत्वात् ॥ १८ ॥** अनुप्रेक्षावचनं मध्ये क्रियते कुतः ? उभयनिमित्तत्वात् अनुप्रेक्षा हि भावयन् उत्तमक्षमादींश्च परिपालयति परीषहांश्च जेतुमुत्सहते ।

व्याख्याता अनुप्रेक्षा संवरहेतुः परीषहजय इत्युक्तमतस्तान्व्याचक्ष्महे । आह व्याख्यास्यति भवा-

१ प्रतिपक्ष. पाठांतरमिदं ख. पुस्तके । २ शुभायोगे पाठ ख पुस्तके । ३ अकृत्रार्थे पाठांतरमपि ख पुस्तके ।

निदमेव सायद्वक्तव्यं किमर्थमेते सह्यन्ते ? किमेषां पारिभाषिकी संज्ञा उतान्वर्था ? इत्यत्रोच्यते—

## मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहाः ॥ ८ ॥

**परीषहाऽसहत्वादन्वर्थसंज्ञा ॥१॥** संज्ञा च नाम यतो न लघीयसी । कुत एतत् ? लघ्वर्थं संज्ञाकरणमिति तत्र महत्या संज्ञाया करणे एतत्प्रयोजनमन्वर्थसंज्ञा परीषहा इति यावत् । यथा विज्ञायते तद्विभाव्यते ।

**प्रकरणात् संवरणमार्गप्रतिपत्तिः ॥ २ ॥** संवरो हि प्रकृत अतस्तदभिसंबधान्मोक्षपदप्रापक-संवरमार्गप्रतिपत्तिरिह वेदितव्या ।

**तदच्यवनार्थो निर्जरार्थश्च परीषहजयः ॥ ३ ॥** कर्मागमद्वाराणि संवृण्वतो जैनेद्रान्मार्गान्मा-च्योष्महीति पूर्वमेव परीषहान् विजयन्ते जितपरीषहा सन्त तैरनभिभूयमाना प्रधानसंवरमाश्रित्याऽप्रति-बधनक्षपकश्रेण्यारोहणसामर्थ्यं प्रतिपद्याभिन्नोत्साहा सकलसांपरायिकप्रध्वसनशक्तयो ज्ञानध्यानपरशुभि छिन्नमूलानि कर्माणि विधूय प्रस्फोटितपक्षरेणवइव पतत्रिण ऊर्ध्वं व्रजति इत्येनमर्थं परिषोढव्या परी-षहा । "सोढ" इति पत्वाप्रतिषेध । यद्येनमुच्यता के परीषहा ? कियतो वेत्यतइदमाह—

## क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याक्रोशवध-याचनालाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाज्ञानादर्शनानि ॥ ९ ॥

**क्षुधादयो द्वाविंशतिः परीषहाः ॥ १ ॥** त एते बाह्याभ्यन्तरद्रव्यपरिणामा शारीरमानसप्रकृष्ट-पीडाहेतव क्षुधादयो द्वाविंशति परीषहा प्रत्येतव्या । तद्विजये विदुषा संयतेन मोक्षार्थिना प्रतियत्न कार्यं । तद्यथा—

**प्रकृष्टक्षुदग्निज्वलने धृत्यंभसोपशमः क्षुज्जयः ॥२॥** निवृत्तसर्वसंस्कारविशेषस्य शरीरमात्रोपकरणस-तुष्टस्य तप संयमविलोप परिहरत कृतकारितानुमतसकल्पितोद्दिष्टक्लिष्टक्रयागतप्रत्याख्यानपूर्वकर्मपश्चात्कर्मदश-विधदोषप्रमुक्तैषणस्य देशकालजनपदव्यवस्थापेक्षस्यानशनाध्वरोगतप स्वाध्यायश्रमवेलातिक्रमावमोदर्या-सद्वेद्योदयादिभ्य नानाहारेंधनोपरमे जठराग्निदाहिनी मारुता लोलिताग्निशिखेव समताच्छरीरहृदयसक्षोभ-करी क्षुधोत्पद्यते तस्यां प्रतीकार अकाले संयमविरोधिभिर्वा द्रव्यै स्वयमकुर्वतोऽन्येन क्रियमाणमसेव-मानस्य मनसा यानभिसदधत , दुस्तरेय वेदना महांश्च कालो दीर्घो हे तिविषाद अनापद्यमानस्य त्वग-स्थिसिरायतानमात्रकलेवरस्यापि सत आवश्यकक्रियादिषु नित्योद्यतस्य क्षुद्वशप्राप्तानर्थकारकवधनस्थम-नुष्यपंजरगततिर्यक्प्राणिन क्षुदभ्यर्दितान् परतत्रानपेक्षमाणस्य ज्ञानिनो धृत्यंभसा संयमकुंभधारितेन क्षुदग्निं शमयत तत्कृतपीडां प्रत्यवगणयन् क्षुज्जय इत्युच्यते ।

**उदन्योदीरणहेतूपनिपाते तद्वशाप्राप्तिः पिपासासहनं ॥ ३ ॥** स्नानावगाहनपरिषेकत्यागि-न पतत्रिवदध्रुवासनावस्थस्यातिलवणस्निग्धरूक्षविरुद्धाहारग्रैष्मातपपित्तज्वरानशनादिभिरुदीर्णां शरीरें-द्रियोन्माथिनीं पिपासा प्रत्यनाद्रियमाणप्रतीकारमनस निदाघे पटुतपनकिरणसतापिते अटव्यामासन्ने-ष्वपि ह्रदेषु अप्कायिकजीवपरिहारेच्छया जलमनादधानस्य सलिलसेकविवेकम्लाना लतेव ग्लानिमुपगता गात्रयष्टिमवगणय्य तप परिपालनपरस्य भिक्षाकालेपि इंगिताकारादिभि योग्यमपि पानमचोदयत धैर्य-कुंभावधारितशीलसुगंधिप्रज्ञातोयेन विध्यापयत तृष्णाग्निशिखा संयमपरस्य पिपासासहनमित्यवसीयते ।

**पृथग्वचनमेकार्थ्यादिति चेन्न सामर्थ्यभेदात् ॥ ४ ॥** स्यादेतत् क्षुत्पिपासयो पृथग्वचन-मनर्थक कुत ऐकार्थ्यादिति ? तन्न किं कारण ? सामर्थ्यभेदात् । अन्याद्धि क्षुध सामर्थ्यमन्यत्पिपासाया ।

**अभ्यवहारसामान्यादिति चेन्नाधिकरणभेदात् ॥ ५ ॥** स्यान्मन अभ्यवहारसामान्यात् एका

र्धमिति ? तदयुक्तं कुतः अधिकरणभेदात्। अन्यद्धि क्षुधः प्रतीकाराधिकरणं अन्यत्पिपासायाः।

**शैत्यहेतुसन्निधाने तत्प्रतीकारानभिलाषात् संयमपरिपालनं शीतक्षमा ॥६॥** परित्यक्तवाससः पक्षिवदनवधारितालयस्य शरीरमात्राधिकरणस्य शिशिरवसंतजलदागमादिवनवृक्षमूलपथिगुहादिषु पतितप्रालेयलेशतुषारलवव्यतिकरशिशिरपवनाभ्यासहतमूर्तेः तत्प्रतिक्रियासमर्थद्रव्यांतराण्यायनाभिसंधानात् नारकदुःसहशीतवेदनानुस्मरणात् तत्प्रतीकारचिकीर्षायां परमार्थविलोपभयात् विद्यामंत्रौषधपर्णवल्कलत्वक्तृणाजिनादिसंबंधान्यावृत्तमनसः परकीयमेव देहं मन्यमानस्य धृतिनिशिषप्रावरणस्य गर्भागारेषु धूपप्रवेकप्रकरप्रकल्पितप्रदीपप्रभवेषु वरांगनानवयौवनौष्णघनस्तननितंबभुजांतरतर्जितशीतेषु निवासं सुरतसुखरसाकरमनुभूतमसारत्वावबोधादस्मरतः विषादविरहितस्य संयमपरिपालनं शीतक्षमेति भाष्यते।

**दाहप्रतीकारकांक्षाभावाच्चारित्ररक्षणमुष्णसहनं ॥ ७ ॥** ग्रैष्मेण पटीयसा भास्करकिरणसमूहेन संतापितशरीरस्य तृष्णानशनपित्तरोगधर्मश्रमप्रादुर्भूतोष्णस्य स्वेदशोषदाहाभ्यर्दितस्य जलभवनजलावगाहनालेपनपरिषेकार्द्रावनीतलनीलोत्पलकदलीपत्रोत्क्षेपमारुतजलतूलिकाचंदनचंद्रपादकमलकल्हारादिपूर्वानुभूतशीतलद्रव्यप्रार्थनापेतचेतसः उष्णवेदना अतितीव्रा बहुकृत्वः परवशादवाप्ता इदं पुनस्तपो मम कर्मक्षयकारणमिति तद्विरोधिनीं क्रियां प्रत्यनादराच्चारित्ररक्षणमुष्णसहनमिति समाम्नायते।

**दंशमशकादिबाधासहनमप्रतीकारं ॥ ८ ॥** प्रत्याख्यातशरीराच्छादनस्य क्वचिदपि अप्रतिबद्धावसतेः परकृतायतनगुहागह्वरादिषु रात्रौ दिवा वा दंशमशकमक्षिकापिकशुकपुत्तिकायूकामत्कुणकीटपिपीलिकावृश्चिकादिभिः तीक्ष्णपातैर्भक्ष्यमाणस्यातितीव्रवेदनोत्पादकैः अव्यथितमनसः स्वकर्मविपाकमनुचिंतयतो विद्यामंत्रौषधादिभिः तन्निवृत्तिं प्रति निरुत्सुकस्य आशरीरपतनादपि निश्चितात्मनः परबलप्रमर्दनं प्रति प्रवर्तमानस्य मदांधगंधसिंधुरस्य रिपुजनप्रेरितविविधशस्त्रप्रतिघातादपराङ्मुखस्य निःप्रत्यूहनिजयोपलंभनमिव कर्मागतपृतनापराभवं प्रत्यप्रयतनं दंशमशकादिबाधासहनमप्रतीकारमित्याख्यायते।

**दंशमशकमात्रप्रसंग इतिचेन्नोपलक्षणार्थत्वात् ॥ ९ ॥** स्यान्मतं दंशमशकस्यैव बाधाकारणस्य ग्रहणं प्राप्नोतीति ? तन्न किं कारणं उपलक्षणार्थत्वात्। दंशनपरितापकारस्य सर्वस्यैवेदं उपलक्षणं। यथा काकेभ्यो रक्ष्यतां सर्पिरित्युपघातकोपलक्षणं।

**यद्येवमन्यतरग्रहणं ॥ १० ॥** यद्येवमन्यतरग्रहणमेव कर्तव्यं ?

**अन्यतरोपादाने स्वरूपग्रहणप्रसंगात् ॥ ११ ॥** द्वितीयवचनमुपलक्षणं संपद्यते।

**जातरूपधारणं नाग्न्यं ॥ १२ ॥** गुप्तिसमितिनिरोधिपरिग्रहनिवृत्तिपरिपूर्णब्रह्मचर्यमप्रार्थितमोक्षसाधनचारित्रानुष्ठानं यथाजातरूपं असंस्कृतमविकारं मिथ्यादर्शनाविष्टविद्विष्टं परममागल्य नाग्न्यमभ्युपगतस्य स्त्रीरूपाणि नित्याशुचिबीभत्सकुणपभावेन पश्यतो वैराग्यभावनावरुणमनोविक्रियस्याऽसंभावितमनुष्यत्वस्य नाग्न्यदोषासंस्पर्शनात्परीषहजयसिद्धिरिति जातरूपधारणं उत्तमं श्रेयः प्राप्तिकारणमित्युच्यते। इतरे पुनर्मनोविक्रिया निरोद्धुमसमर्थास्तत्पूर्विकां संगनिवृत्तिं निगूहितकामाः कौपीनफलकचीवराद्यावरणमातिष्ठंत अलेऽगसंवरणार्थमेव तन्न कर्मसंवरणकारणं।

**संयमे रतिभावादरतिपरीषहजयः ॥ १३ ॥** संयतस्य क्षुधाद्याबाधासंयमपरिरक्षणेंद्रियदुर्जयत्वव्रतपरिपालनभारगौरवसर्वदाप्रमत्तत्वदेशभाषांतरानभिज्ञत्वविषमचपलसत्वप्रचुरभीमदुर्गानियतैकविहारत्वादिभिररतिं प्रादुष्यतीं धृतिविशेषान्निवारयतः संयमरतिभावनाद्विषयसुखरतिर्विषाहारसेवेव विपाककटुकेति चिंतयतः रतिपरिबाधाभावादरतिपरीषहजय इति निश्चीयते।

**सर्वेषामरतिकारणत्वात् पृथगरतिग्रहणानर्थक्यमिति चेन्न क्षुधाद्यभावेपि मोहोदयात्त-**

---

१ पतिपात इत्यपि पाठांतर।

त्प्रवृत्तेः ॥ १४ ॥ स्यादेतत् क्षुधादीनां सर्वेषां अरतिहेतुत्वात् पृथगरतिग्रहणं अनर्थकमिति ? तन्न किं कारणं । क्षुधाद्यभावेपि मोहोदयात्तत्प्रवृत्तेः । मोहोदयाकुलितचेतसो हि क्षुधादिवेदनाभावेपि संयमेऽरतिरुपजायते ।

वरांगनारूपदर्शनस्पर्शनादिविनिवृत्तिः स्त्रीपरीषहजयः ॥ १५ ॥ एकांते आरामभवनादिप्रदेशे रागद्वेषयौवनदर्परूपमदविभ्रमोन्मादमद्यपानावेशादिभिः प्रमदासु बाधमानासु तदक्षिवक्त्रभ्रूनिकारशृंगारकारविहारविलासलीलाविजृंभकटाक्षविक्षेपसुकुमारस्निग्धमृदुपीनोन्नतस्तनकलशनितांततताम्रोदरपृथुजघनरूपगुणाभरणगंधवस्त्रमाल्यादिप्रतिनिगृहीतमनोप्लुतेर्दर्शनस्पर्शनाभिलाषविनिरुत्सुकस्य स्निग्धमृदुविशदकुमाराभिधानतंत्रीवंशमिश्रातिमधुरगीतश्रवणनिमित्तादरश्रोत्रस्य संसारार्णवव्यसनपातालावगाढदुःखरौद्रार्तकुटिलध्यायिनः स्त्रैणानर्थविनिवृत्तिः स्त्रीपरीषहजय इति कथ्यते । अन्यवादिपरिकल्पिता देवताविशेषाः ब्रह्मादयः तिलोत्तमादेवगणिकारूपसंदर्शनलोललोचनविकाराः स्त्रीपरीषहपंकात्रोद्धर्तुमात्मानं समर्थाः ।

प्रव्रज्यादोषनिग्रहश्चर्याविजयः ॥ १६ ॥ दीर्घकालाभ्यस्तगुरुकुलब्रह्मचर्यस्याधिगतबंधमोक्षपदार्थतत्त्वस्य कषायनिग्रहपरस्य भावनार्पितमतेः संयमायतनभक्तिहेतोर्देशांतरातिथेः गुरुणाभ्यनुज्ञातस्य नानाजनपदव्याहाराव्यहाराभिज्ञस्य ग्रामे एकरात्रं नगरे पंचरात्रं प्रकर्षेणावस्थातव्यमित्येवं संयतस्य वायोरिव निःसंगतामुपगतस्य देशकालप्रमाणोपेतमध्वगमनमनुभवतः क्लेशक्षमस्य भीमाटवीप्रदेशेषु निर्भयत्वात् सिंहस्येव सहायकृत्यमनपेक्षमाणस्य पुरुषकर्कशकटकादिव्यधनजातपादखेदस्यापि सतः पूर्वोचितयानवाहनादिगमनमस्मरतः सम्यक्प्रव्रज्यादोषं परिहरतः चर्यापरीषहजयो वेदितव्यः ।

संकल्पितासनादविचलनं निषद्यातितिक्षा ॥ १७ ॥ श्मशानोद्यानशून्यायतनगिरिगुहागह्वरादिषु अनभ्यस्तपूर्वेषु विदितसंयमक्रियस्य धैर्यसहायस्योत्साहवतो निषद्यामधिरूढस्य प्रादुर्भूतोपसर्गरोगविकारस्यापि सतः तत्प्रदेशादविचलतः मंत्रविद्यालक्षणप्रतीकारानपेक्षमाणस्य क्षुद्रजंतुप्रायविषयदेशाश्रयात्काष्ठोपलवन्निश्चलस्यानुभूतमृदुकुप्यास्तरणादिस्पर्शसुखमविगणयतः प्राणिपीडापरिहारोद्यतस्य ज्ञानध्यानसाधनाधीनधियः संकल्पितवीरासनोत्कुटिकासनादिरतेरासनदोषजयान्निषद्यातितिक्षेत्याख्यायते ।

आगमोदितशयनात् अप्रच्यवः शय्यासहनं ॥ १८ ॥ स्वाध्यायध्यानाध्वश्रमपरिखेदितस्य मौहूर्तिकीं खरविषमप्रचुरशर्कराकपालशकटातिशीतोष्णेषु भूमिप्रदेशेषु निद्रामनुभवतः यथाकृतैकपार्श्वदंडायतादिशायिनः संजातबाधाविशेषस्य संयमार्थमस्पंदमानस्यानुतिष्ठतः व्यंतरादिभिर्वा वित्रस्यमानस्य पलायनं प्रति निरुत्सुकस्य मरणभयनिर्विशंकस्य निपतितदारुवद्व्यपगतासुवद्वापरिवर्तमानस्य द्वीपशार्दूलमहोरगादिदुष्टसत्त्वप्रचरितोऽयं प्रदेशोऽचिरादतो निर्गमनं श्रेयः, कदा नु रात्रिर्विरमतीति विषादमनादधानस्य सुखप्राप्तावप्यपरितुष्यतः पूर्वानुभूतनवनीतमृदुशयनरतिमनुस्मरतः सम्यगागमोदितशयनादप्रच्यवः शय्यासहनमिति प्रस्तव्यम् ।

अनिष्टवचनसहनमाक्रोशपरीषहजयः ॥ १९ ॥ तीव्रमोहाविष्टमिथ्यादृष्ट्यार्यम्लेच्छखलपापाचारमत्तोद्दृप्तशंकितप्रयुक्तमाशब्दधिक्कारपरुषावज्ञानाक्रोशादीन्, कर्णविवरे चरणात्, हृदयशूलोद्भावकान्, क्रोधज्वलनशिखाप्रवर्धनकरानप्रियान्, शृण्वतोऽपि दृढमनसः, भस्मसात्कर्तुमपि समर्थस्य परमार्थावगाहितचेतसः, शब्दमात्रश्राविणस्तदर्थविक्षणाविनिवृत्तव्यापारस्य, स्वकृताशुभकर्मोदयो ममैष यतोऽमीषां मां प्रति द्वेष इत्येवमादिभिरुपायैरनिष्टवचनसहनमाक्रोशपरीषहजय इति निर्णीयते ।

मारकेष्वमर्षापोहभावनं वधमर्षणं ॥ २० ॥ ग्रामोद्यानाटवीनगरेषु नक्तं दिवा चैकाकिनो निरावरणमूर्तेः समंतात्पर्यटद्भिश्चोरराक्षसम्लेच्छशबरपरुषवधिरपूर्वापकारिद्विषत्परलिंगिभिराहितक्रोधैस्ताडनाकर्षणबंधनशस्त्राभिघातादिभिर्मार्यमाणस्याप्यनुपजातवैरस्यावश्यप्रपातुकमेवेदं शरीरं कुशलद्वारेणानेपनीयते न मम व्रतशीलभावनाप्रसनमिति भावशुद्धस्य दह्यमानस्यापि सुगंधमुत्सृजतश्चंदनस्येव

णामस्य स्वकर्मनिर्जरामभिसदधानस्य दृढमते क्षमौपधिनलस्य मारकेषु सुहृत्स्विवामर्षापोहभावेन वधमर्षणमित्याम्नायते ।

**प्राणात्ययेप्याहारादिषु दीनाभिधाननिवृत्तिर्याचनाविजयः ॥ २१ ॥** क्षुधाध्वपरिश्रमतपोरोगादिभि प्रच्यावितवीर्यस्य, शुष्कपादपस्येव निरार्द्रमूर्तेरुन्नतास्थिस्नायुजालस्य निम्नाक्षिपुटपरिशुष्काधरोष्ठक्षामपाण्डुकपोलस्य, चर्मवत्सकुचितांगोपांगत्वच , शिथिलजानुगुल्फकटिबाहुयन्त्रस्य, देशकालक्रमोपपन्नकल्पादायिन , वाचयमस्य मौनिसमस्य वा शरीरसंदर्शनमात्रव्यापारस्य, उज्झितमदस्य प्रज्ञाख्यापनमनस प्राणात्ययेप्याहारवसतिभेषजानि दीनाभिधानमुखवैवर्ण्यांगसज्ञादिभिरयाचमानस्य रत्नवणिजो मणिसंदर्शनमिव स्वशरीरप्रकाशनमकृपण मन्यमानस्य वदमान प्रति स्वकरविकाशनमिव पाणिपुटधारणमदीनमिति, गणयत याचनसहनमवसीयते । अद्यत्वे पुन. कालदोषाद्दीनानाथपाखण्डिबहुले जगत्यमार्गज्ञैरनात्मविद्भिर्याचनमनुष्ठीयते ।

**अलाभेऽपि लाभवत्सतुष्टस्यालाभविजयः ॥ २२ ॥** वायुवदनेकदेशचारिण अप्रकाशितवीर्यस्याभ्युपगतैककालभोजनस्य सकृन्मूर्तिसंदर्शनव्रतकालस्य देहीति असभ्यवाक्प्रयोगादुपरतस्यानुपात्तविग्रहप्रतिक्रियस्याद्येद श्वश्चेदमिति व्यपेतसकल्पस्य एकस्मिन् ग्रामे अलब्ध्वा ग्रामातरान्वेषणनिरुत्सुकस्य पाणिपुटमात्रपात्रस्य, बहुषु दिवसेषु बहुषु च गृहेषु भिक्षामनवाप्याप्यसक्लिष्टचेतस नाय दाता तत्रान्योस्तीति व्यपगतपरीक्षस्य लाभादप्यलाभो मे परम तप इति सतुष्टस्यालाभविजयोवसेय ।

**नानाव्याधिप्रतीकारानपेक्षत्वं रोगसहनं ॥ २३ ॥** दु खादिकरणमशुचिभाजन जीर्णवस्त्रवत्परिहेय । पित्तमारुतकफसन्निपातनिमित्तानेकामयवेदनाभ्यर्दितमन्यदीयमिव विग्रह मन्यमानस्य उपेक्षिकत्वात्प्रच्युतेश्चिकित्साव्यावृत्तचेष्टस्य शरीरयात्राप्रसिद्धये व्रणालेपनवद्यथोक्तमाहारमाचरत । जल्लौषधिप्राप्त्याद्यनेकतपोविशेषर्द्धियोगे सत्यपि शरीरनि.स्पृहत्वात्प्रतीकारानपेक्षिण पूर्वकृतपापकर्मणः फलमिदमनेनोपायेनानृणीभवामीति चिन्तयतो रोगसहन सपद्यते ।

**तृणादिनिमित्तवेदनायां मनसोऽप्रणिधानं तृणस्पर्शजयः ॥ २४ ॥** यथाभिनिर्वृत्ताधिकरणशायिन शुष्कतृणपत्रभूमिकटकफलकशिलातलादिषु प्रासुकेष्वसस्कृतेषु व्याधिमार्गगमनशीतोष्णजनितश्रमविनोदार्थं शय्यां निषद्यां वा भजमानस्य तृणादिबाधितमूर्तेरुत्पन्नकण्डुविकारस्य दु'खमनभिचिन्तयत तृणादिस्पर्शबाधावशीकृतत्वात्तृणस्पर्शसहनमवगतव्यम् ॥

**स्वपरमलापचयोपचयसंकल्पाभावोधारणम् ॥ २५ ॥** जन्तुपीडापरिहारायाऽस्नानप्रतिज्ञस्य, स्वेदपकदिग्धसर्वांगस्य, सिध्मकच्छूदद्रूदीर्णकायस्य, (¹) नखरोमश्मश्रुकेशविकृतसहजनाह्यमलसपर्ककारणानेकत्वे निराकारस्य स्वगतमलापचये परमलापचये वा प्रणिहितमनस कर्ममलपकापनोदायैवोद्यतस्य पूर्वानुभूतस्नानानुलेपनादिस्मरणपराङ्मुखचित्तवृत्तेर्मलधारणमाख्यायते ।

**(केशलुचने तत्संस्काराकरणे वा महत्खेदसहनोपसंख्यानमिति चेन्न मलपरीषहावरोधात्) ॥ २६ ॥** स्यादेतत्केशलुचने तत्संस्काराकरणे वा महान् खेद सजायते । तत्सहनमपरमुपसख्यातव्यमिति तन्न किं कारण ? मलपरीषहावरोधात् । मलसामान्यसग्रहे हि तदतर्भवति ।

**मानापमानयोस्तुल्यमनसः सत्कारपुरस्कारानभिलाषः ॥ २७ ॥** चिरोषितब्रह्मचर्यस्य, महातपस्विन', स्वपरसमयनिश्चयज्ञस्य, हितोपदेशपरस्य, तथामार्गकुशलस्य, बहुकृत्व परवादिविजयिन , प्रणामभक्तिसभ्रमासनप्रदानादीनि मे न कश्चित्करोतीत्येवमविचिन्तयत , मानापमानयोस्तुल्यमनस. सत्कारपुरस्कारनिराकाक्षस्य श्रेयोध्यायिन , सत्कारपुरस्कारपरीषहजयो वेदितव्य । सत्कार पूजाप्रशसात्मक । पुरस्कारो नाम क्रियारम्भादिष्वग्रत. करणमामत्रण वा ।

**प्रज्ञोपकार्यावक्षेपनिरासः प्रज्ञाविजयः ॥ २८ ॥** अगपूर्वप्रकीर्णकविशारदस्य, कृत्स्नग्रन्थार्थावधारिण, अनुत्तरादिनत्रिकालविषयार्थविद, शब्दन्यायाद्यागमनिपुणस्य मम पुरस्तादितरे भास्करप्रभाभिभूतोद्योतखद्योतवत् नितरामवभासते इति विज्ञानमदनिरास प्रज्ञापरीषहजय. प्रत्येतव्य ।

**अज्ञानावमानज्ञानाभिलाषसहनमज्ञानपरीषहजयः ॥ २९ ॥** अज्ञोऽय न किंचिदपि वेत्ति पशुसम इत्येवमाद्यधिक्षेपवचन सहमानस्याध्ययनार्थग्रहणपराभिभवादिष्वसकृत्प्रवृत्तबुद्धेश्चिरप्रव्रजितस्य विविधतपोविशेषभराक्रांतमूर्ते सकलसामर्थ्याप्रमत्तस्य, विनिवृत्तानिष्टमनोवाक्कायचेष्टस्याद्यापि मे ज्ञानातिशयो नोत्पद्यत इत्यनभिसदधत. अज्ञानपरीषहजयोऽवगतव्य ।

**प्रव्रज्याद्यनर्थकत्वासमाधानमदर्शनसहनं ॥३०॥** सयमप्रधानस्य दुष्करतपोनुष्ठायिन परमवैराग्यभावनाशुद्धहृदयस्य विदितसकलपदार्थतत्त्वस्याऽर्हदायतनसाधुधर्मपूजकस्य चिरतनस्य अद्यापि मे ज्ञानातिशयो नोत्पद्यते महोपवासाद्यनुष्ठायिनां प्रातिहार्यविशेषा प्रादुरभूवनिति प्रलापमात्रमिदमनर्थकेयं प्रव्रज्या, विफल व्रतपालनमित्येवमसमादधानस्य, दर्शनशुद्धियोगाददर्शनपरीषहसहनमवसातव्यम्। एव परीषहान्, असकल्पोपस्थितान्सहमानस्यासक्लिष्टचेतस रागादिपरिणामास्रवाभावान्महान्सवरो भवति ।

**श्रद्धानालोचनग्रहणमविशेषादिति चेन्नाव्यभिचारदर्शनार्थत्वात् ॥ ३१ ॥** स्यादेतच्छ्रद्धानमालोचनमिति द्विविध दर्शन तस्याविशेषेण ग्रहणमिह प्राप्नोति, कुत ? अविशेषात्। न हि किंचिद्विशेषलिंगमिहाश्रितमस्तीति तन्न। किं कारण ? अव्यभिचारदर्शनार्थत्वात्। मत्यादिज्ञानपचकाव्यभिचारिश्रद्धान दर्शन। आलोचनस्य श्रुतमन पर्यययोरप्रवृत्तेरतोऽस्याव्यभिचारिण श्रद्धानस्य ग्रहणमिहोपपद्यते ।

**मनोरथकल्पनामात्रमिति चेन्न वक्ष्यमाणकारणसामर्थ्यात् ॥ ३२ ॥** स्यादेतच्छ्रद्धानदर्शनग्रहणमिदमिति, स्वमनोरथपरिकल्पनामात्रमिति तन्न किं कारण ? वक्ष्यमाणकारणसामर्थ्यात् । वक्ष्यते हि कारण "दर्शनमोहांतराययोरदर्शनालाभाविति"।

**अवध्यादिदर्शनपरीषहोपसंख्यानमिति चेन्नावधिज्ञानाद्यभावे सहचारितदर्शनाभावादज्ञानपरीषहावरोधात् ॥ ३३ ॥** स्यान्मतमवध्यादिदर्शनोपेता सुष्ठु पश्यति नास्य किंचिदतिशयवदस्ति दर्शन, गुणप्रत्यय च तदित्युक्त आगमे नूनमस्मित्तद्योग्या गुणा न सतीत्येवमादिवचनसहनमवध्यादिदर्शनपरीषहजय तस्योपसख्यान कर्तव्यमिति ? तन्न किं कारण ? अज्ञानपरीषहावरोधात्। तत्कथमिति चेदुच्यते अवध्यादिज्ञानाभावे तत्सहचरितदर्शनाभाव । आदित्यस्य प्रकाशाभावे प्रतापाभाववत्तस्मादज्ञानपरीषहेऽवरोधात् । यद्यव श्रद्धानमपि दर्शनमपि ज्ञानाविनाभावीति प्रज्ञापरीषहे तस्यातर्भाव प्राप्नोतीति ? नैष दोष प्रज्ञायां सत्यामपि क्वचित्तत्त्वार्थश्रद्धानाभावाद् व्यभिचारोपलब्धे ।

आह उपपादित परीषहजयात्सवरो भवतीति । इदमुच्यतां किमेते सर्वे ससारमहार्णवादुत्तितीर्षतमनुप्रव्रज्यामभ्युपगतमभिद्रवति उत कश्चित्प्रतिविशेष इत्यत्रोच्यते। अमी व्याख्यातलक्षणा क्षुधादयश्चारित्रांतराणि प्रतिभाज्या नियमेन पुनरनयो प्रत्येतव्या —

## सूक्ष्मसांपरायछद्मस्थवीतरागयोश्चतुर्दश ॥१०॥

**चतुर्दशवचनादन्याभावः ॥ १ ॥** चतुर्दशति वचनादन्येषां परीषहाणामभावो वेदितव्य । कुत सख्याविशेषपरिग्रहस्य नियमार्थत्वात्। चतुर्दशैव नान्ये इति।

**सूक्ष्मसांपरायेति नियमानुपपत्तिर्मोहोदयादिति चेन्न सन्मात्रत्वात् ॥ २ ॥** स्यान्मत युज्यते वीतरागछद्मस्थे निरवशेषमोहनीयस्योपशमात्क्षयाच्च तत्कृतवक्ष्यमाणपरीषहाष्टकाभावाच्चतुर्दशसख्यानियम सूक्ष्मसांपराये तु मोहोदयसद्भावाच्चतुर्दशेति नियमो नोपपद्यते इति । तन्न ? किं कारण ? सन्मात्रत्वात् । तत्र हि केवलो लोभसज्वलनकषायोदय स चातिसूक्ष्मस्ततो वीतरागछद्मस्थकल्पत्वाच्चतुर्दशेति नियमस्तत्रापि युज्यते ।

**तत एव परीषहाभाव इति चेन्न बाधाविशेषोपरमेऽपि तद्भावस्याविरध्यासितत्वात्सर्वार्थसिद्धस्य सप्तमीगमनसामर्थ्यवत् ॥ ३ ॥** अथ मत तत एव तयो परीषहाभाव । कुत एव ? मोहोदयान्मदोदयाभावात् । मदोदयाच्च यस्य हि क्षुधादिवेदनाप्रकर्षोदयस्तस्य तत्सहनात्परीषहजयो भवति न च मोहोदयबलाधानाभावे वेदनाप्रभवोस्ति तदभावात्सहनवचन भक्तिमात्रकृतमिति । तन्न । किं कारण ? तद्भावस्याविरध्यासितत्वात् । यथा सर्वार्थसिद्धिदेवस्यानुपरतसद्वेद्योदयप्रकर्षस्यापि सप्तमपृथिवीगमनसामर्थ्यं न हीयते तथा वीतरागछद्मस्थस्य कर्मोदयसद्भावकृतपरीषहव्यपदेशो युक्तिमवतरति ।

आह यदि शरीरवत्यात्मनि परीषहसन्निधान प्रतिज्ञायते । अथ भगवत्युत्पन्नकेवलज्ञाने कर्मचतुष्टयफलानुभवनवशवर्तिनि कियत उपनिपतन्तीत्यत्रोच्यते, तस्मिन्पुनः—

## (एकादश जिने ॥ ११ ॥

कैश्चित्कल्प्यत इति वाक्यशेष)।

**वेदनीयोदयभावात् क्षुधादिप्रसंग इति चेन्न घातिकर्मोदयसहायाभावात्तत्सामर्थ्यविरहात् ॥ १ ॥** स्यान्मत घातिकर्मप्रक्षयान्निमित्तोपरमे सति नाग्न्यारतिस्त्रीनिषद्याक्रोशयाचनालाभसत्कारपुरस्कारप्रज्ञाज्ञानदर्शनानि माभूवन् । अमी पुनर्वेदनीयाश्रया खलु परीषहा प्राप्नुवन्ति भगवति जिने इति ? तन्न । किं कारण ? घातिकर्मोदयसहायाभावात् तत्सामर्थ्यविरहात् । यथा विषद्रव्य मन्त्रौषधिबलादुपक्षीणमारणशक्तिकमुपयुज्यमान न मारणाय कल्प्यते तथा ध्यानानलनिर्दग्धघातिकर्मेन्धनस्यानन्ताप्रतिहतज्ञानादिचतुष्टयस्यान्तरायाभावान्निरन्तरमुपचीयमानशुभपुद्गलसन्ततेर्वेदनीयाख्य कर्म कदापि प्रक्षीणसहायबल स्वयोग्यप्रयोजनोत्पादन प्रत्यसमर्थमिति क्षुधाद्यभाव । तत्सद्भावोपचाराद्ध्यानकल्पनवत् । (अथवा नाय वाक्यशेष एकादश जिने कैश्चित्कल्प्यते इति, किं तर्हि ? एकादश सतीति। कथ उपचाराद्यथा—निरवशेषनिरस्तज्ञानावरणे परिपूर्णज्ञाने एकाग्रचिन्तानिरोधाभावेऽपि कर्मरजोविधूननफलसम्भवात् ध्यानोपचार )। तथा क्षुधादिवेदनाभावपरीषहाभावेपि वेदनीयकर्मोदयद्रव्यपरीषहसद्भावात् एकादश जिने सतीति उपचारो युक्त ।

आह यदि सूक्ष्मसांपरायादिषु व्यस्ता परीषहा अथ समस्ता क्वेति ?—

## बादरसांपराये सर्वे ॥ १२ ॥

**बादरसांपरायग्रहणात्प्रमत्तादिनिर्देशः ॥ १ ॥** बादरसांपराय इति नाय गुणस्थानविशेषपरिग्रह किं तर्हि ? अर्थनिर्देशस्तत प्रमत्तादीना सयताना सामान्यग्रहण । बादर सांपरायो यस्य सोऽय बादरसांपराय इति ।

**तत्र हि निमित्तविशेषस्यानुपक्षीणत्वात्सर्वे ॥ २ ॥** ज्ञानावरणादिनिमित्तविशेषो वक्ष्यते । तस्यानुपक्षीणत्वात्सर्वे सम्भवन्ति । कस्मिन्पुनश्चारित्रे सर्वेषा सम्भव ?—

**सामायिकच्छेदोपस्थापनापरिहारविशुद्धिसंयमेषु सर्वसंभवः ॥ ३ ॥** एतेषा त्रयाणा चारित्राणामन्यतमे सर्वे क्षुत्परीषहादयो द्रष्टव्या ।

आह गृहीतमेतत्परीषहाणा स्थानविशेषावधारण, इद तु न विद्म , कस्या प्रकृते क कार्य ? इत्यत्रोच्यते—

## ज्ञानावरणे प्रज्ञाज्ञाने ॥ १३ ॥

**(ज्ञानावरणे अज्ञानं न प्रज्ञेति चेन्नान्यज्ञानावरणसद्भावे तद्भावात् ॥ १ ॥** स्यादेतत् ज्ञानावरणे सति अज्ञानमवबोधो भवति न प्रज्ञा ज्ञानस्वभावत्वादात्मन इति ? तन्न । किं कारण ? अन्यज्ञानावरणसद्भावे तद्भावात् । प्रज्ञा हि क्षायोपशमिकी अन्यस्मिन् ज्ञानावरणे सति मद जनयति न सकलावरणक्षय इति

प्रज्ञाज्ञाने ज्ञानावरणे सति प्रादुर्भूत इत्यभिसंबध्यते ।

**मोहोदयादिति चेन्न तद्भेदानां परिगणितत्वात् ॥ २ ॥** स्यान्मतं मोहोदयादिह महाप्राज्ञो नान्य इति मन्यते न ज्ञानावरणादिति । तन्न । किं कारणं । तद्भेदानां परिगणितत्वात् । मोहभेदा हि परिगणिता दर्शनचारित्रव्याघातहेतुभावेन तत्र नायमन्तर्भवति । चारित्रवतोऽपि प्रज्ञापरीषहसद्भावात्ततो ज्ञानावरण एवेति निश्चयः कर्तव्यः ।

आह यद्यनयोरेककर्महेतुत्वमात्मलाभेऽवसीयते । अदर्शनालाभयोः को हेतुरिति चेत्—

## दर्शनमोहांतराययोरदर्शनालाभौ ॥ १४ ॥

**विशिष्टकारणनिर्देशादवध्यादिदर्शनसंदेहाभावः ॥ १ ॥** दर्शनमोह इति विशिष्टमिह कारणं निर्दिश्यते ततोऽवध्यादिदर्शनविषयः संदेहो न भवति ।

**अंतराय इति सामान्यनिर्देशेऽपि सामर्थ्याद्विशेषसंप्रत्ययः ॥ २ ॥** यद्यप्ययमंतराय इति सामान्यनिर्देशः तथापि सामर्थ्याल्लाभांतरायविशेषसंप्रत्ययो भवति ।

आह यद्याद्ये मोहनीयभेदे सत्यदर्शनपरीषहो भवति । अथ द्वितीयस्मिन् केषां जन्मेत्यत्रोच्यते—

## चारित्रमोहे नाग्न्यारतिस्त्रीनिषद्याक्रोशयाचनासत्कारपुरस्काराः ॥१५॥

मोहोदयहेतुत्वं नाग्न्यादीनां प्रतिपद्यामहे पुंवेदोदयादिनिमित्तत्वात् ॥

**निषद्यापरीषहस्य मोहोदयहेतुत्वं प्राणिपीडार्थत्वात् ॥ १ ॥** मोहोदये सति प्राणिपीडापरिणामः संजायते तत्परिपालनार्थत्वात् निषद्यापरीषहोदयहेतुरित्यवसीयते ।

आहाभ्युपेमः कर्मप्रकृतिविशेषपत्रय अमी परीषहा उक्ता इति । अथानेकस्मिन् सति निमित्ते भवन्तीत्यत्राभिधीयते—

## वेदनीये शेषाः ॥ १६ ॥

**उक्तादन्यनिर्देशः शेषा इति ॥ १ ॥** उक्ताः प्रज्ञापरीषहादयः तेभ्योऽन्ये शेषा इति निर्दिश्यते । के पुनस्ते ? क्षुत्पिपासाशीतोष्णदंशमशकचर्याशय्यावधरोगतृणस्पर्शमलपरीषहाः ।

**निमित्तात्कर्मसंयोग इति चेन्न तद्योगाभावात् ॥ २ ॥** स्यान्मतं यथा चर्मणि द्वीपिनं हंति निमित्तात्कर्मयोग इति विभक्तिविशेषविधानं यथा वेदनीये इत्येवमादिनिर्देशो भवतीति । तन्न । किं कारणं ? तद्योगाभावात् । कर्मसंयोगे हि तद्विभक्तिविधानं । न चात्र कर्मसंयोगोस्तीति तदभावः । कथं तर्हि निर्देशः ?

**सन्निर्देशस्तदुपलक्षणत्वात् ॥ ३ ॥** यथा गोषु दुह्यमानासु गतः । तद्दुग्धास्वागत इति निर्देशः । तथा वेदनीये सतीत्येवमादिः सन्निर्देशोऽवसेयः, कुतस्तदुपलक्षणत्वात् ।

आह व्याख्यातनिमित्तलक्षणविकल्पाः, प्रत्यात्मं प्रादुर्भवंतः, कति युगपदवतिष्ठंत इत्यत्रोच्यते—

## एकादयो भाज्या युगपदेकस्मिन्नैकोनविंशतेः ॥ १७ ॥

**आङभिविध्यर्थः ॥ १ ॥** आङयमभिविध्यर्थो द्रष्टव्यः । तेन एकान्नविंशतिरपि क्वचिद्युगपद्भवतीत्यवगम्यते । तत्कथमिति चेदुच्यते ।

**शीतोष्णशय्यानिषद्याचर्याणामसहभावादेकान्नविंशतिसंभवः ॥ २ ॥** शीतोष्णपरीषहयोरेकः, शय्यानिषद्याचर्याणां चान्यतम एव भवति एकस्मिन्नात्मनि, कुतः ? सहानवस्थानात् । ततस्त्रयाणामपगमे युगपदेकात्मनीतरेषां संभवादेकान्नविंशतिविकल्पो बोद्धव्यः ।

**प्रज्ञाज्ञानयोर्विरोधादन्यतराभावेऽष्टादशप्रसंग इति चेन्नापेक्षातो विरोधाभावात् ॥ ३ ॥**

स्यान्मत प्रज्ञाज्ञाने अपि विरुद्धे तयोरन्यतराभावेऽष्टादशसप्तप्रसग इति । तन्न किं कारणं ? अपेक्षातोविरोधाभावात् । श्रुतज्ञानापेक्षया प्रज्ञाप्रकर्षे सति अवध्याद्यभावापेक्षया अज्ञानोपपत्ते ।

**दंशमशकस्य युगपत्प्रवृत्तेरेकान्नविंशतिविकल्प इति चेन्न प्रकारार्थत्वान्मशकशब्दस्य॥४॥** स्यादेतत्प्रज्ञाज्ञानयोर्विरोधाद्युगपदसंभवे दशमशकस्य युगपत्प्रवृत्तेरेकान्नविंशतिविकल्प इति ? तन्न । किं कारण ? प्रकारार्थत्वान्मशकशब्दस्य एक एव ह्यय परीषह ।

**दशग्रहणात्तुल्यजातीयसंप्रत्यय इति चेन्न श्रुतिविरोधात् ॥ ५ ॥** अथ मतमेतद्दशग्रहणात्तुल्यजातीयसप्रत्ययस्ततो मशकशब्दस्य न प्रकारार्थत्वमिति ? तन्न । किं कारण ? श्रुतिविरोधात् । यच्छन्द आह तत्र प्रमाण न च दशशब्दः प्रकारमभिधत्ते ततोऽस्य विरोध स्यात् ।

**तुल्यमिति चेन्नान्यतरेण परीषहस्य निरूपितत्वात्॥६॥** यदि श्रुतिविरोधादन्यार्थकल्पनमयुक्तमित्युच्यते । ननु मशकशब्देपि तत्तुल्यमिति प्रकारार्थत्वमस्य नोपपद्यते इति तन्न । किं कारण ? अन्यतरेण परीषहस्य निरूपितत्वात् । दशग्रहणेनैव परीषहे निरूपिते मशकग्रहणसामर्थ्यात्प्रकारार्थो निश्चीयते ।

**चर्याद्यविशेषादेकान्नविंशतिवचनमिति चेन्नारतौ परीषहजयाभावात् ॥ ७ ॥** स्यान्मत चर्यादीना परीषहाणामविशेषादेकत्र नियमाभावादेकत्वमित्येकान्नविंशतिवचन क्रियते इति ? तन्न । किं कारण ? अरतौ परीषहजयाभावात् । यद्यत्र रतिर्नास्ति परीषहजय एवास्य व्युच्छिद्यते । तस्माद्यथोक्तप्रतिद्वंद्विसान्निध्यात्परीषहस्वभावाश्रयपरिणामात्मलाभनिमित्तविचक्षणस्य तत्परित्यागायापरप्रवृत्त्यर्थमौपोद्घातिक प्रकरणमुक्त ।

निर्दिष्टा परीषहा यैरनानिष्टा विपश्चितोऽभिनवानि कर्माणि नोपचिन्वंति पूर्वप्रचितानि च निर्जरयंति । तदनतर खलु कर्मनिर्हरणार्थमाहितसामर्थ्यं पुरुषसाध्य यदवोचाम चारित्र तच्चारित्रमोहोपशमक्षयक्षयोपशमलक्षणात्मविशुद्धिलब्धिसामान्यापेक्षयैक । प्राणिपीडापरिहारेंद्रियदर्पनिग्रहशक्तिभेदाद्द्विविधं । उत्कृष्टमध्यमजघन्यविशुद्धिप्रकर्षापकर्षयोगात्तृतीयमवस्थानमनुभवति । विकलज्ञानविषयसरागवीतरागसकलावबोधगोचरसयोगायोगविकल्पाच्चातुर्विध्यमप्यश्नुते । पचतयीं च वृत्तिमास्कंदति । तद्यथा—

## सामायिकच्छेदोपस्थापनापरिहारविशुद्धिसूक्ष्मसांपरायथाख्यातमिति चारित्रं ॥ १८ ॥

**सामायिकशब्दोतीतार्थः ॥ १ ॥** अथ सामायिकशब्दोतीतार्थो द्रष्टव्य । क्व ? दिग्देशानर्थदंडविरतिसामायिक इत्यत्र । सामायिकमिति वा समासविषयत्वात् । अथवा अयतीत्याया अनर्था , सत्वव्यपरोपणहेतव , सगता आया समाया , सम्यग्वा आया समायास्तेषु भव, ते वा प्रयोजनमस्येति सामायिकमवस्थान ।

**सर्वसावद्ययोगप्रत्याख्यानपरं ॥ २ ॥** सर्वस्य सावद्ययोगस्याऽभेदेन प्रत्याख्यानमवलम्ब्य प्रवृत्तमवधृतकालं वा सामायिक प्रत्याख्यायते ।

**गुप्तिप्रसंग इति चेन्नेह मानसप्रवृत्तिभावात् ॥ ३ ॥** स्यादेतन्निवृत्तिपरत्वात्सामायिकस्य गुप्तिप्रसग इति ? तन्न । किं कारण ? मानसप्रवृत्तिभावात् । अत्र मानसीप्रवृत्तिरस्ति निवृत्तिलक्षणाद् गुप्तेरित्यस्ति भेद ।

**समितिप्रसङ्ग इति चेन्न तत्र तस्य प्रवृत्त्युपदेशात् ॥ ४ ॥** स्यान्मत 'यदिप्रवृत्तिरूप सामायिक समितिलक्षण प्राप्तमिति तन्न । किं कारण ? तत्र यतस्य प्रवृत्त्युपदेशात् । सामायिके हि चारित्रे यतस्य समितिषु प्रवृत्तिरुपदिश्यते । अत कार्यकारणभेदादस्ति विशेष. ।

**धर्मप्रसंग इति चेन्नांते वचनस्य कृत्स्नकर्मक्षयहेतुत्वज्ञापनार्थत्वात् ॥ ५ ॥** स्यादेतद्दशविधो धर्मो व्याख्यात तत्र संयमेंतर्भावोऽस्य प्राप्नोतीति तन्न । किं कारण ? अंते वचनस्य कृत्स्नकर्मक्षयहेतुत्वज्ञापनार्थत्वात् । धर्मेंतर्भूतमपि चारित्रमंते गृह्यते मोक्षप्राप्तेः साक्षात्कारणमिति ज्ञापनाय ।

**प्रमादकृतानर्थप्रबन्धविलोपे सम्यक् प्रतिक्रिया छेदोपस्थापना ॥ ६ ॥** त्रसस्थावरजंतुदेशकालप्रादुर्भावे विरोधात्प्रत्यक्षत्वात्प्रमादवशादभ्युगतनिरवद्यक्रियाप्रबंधविलोपे सति तदुपात्तस्य कर्मण सम्यक् प्रतिक्रिया छेदोपस्थापना विज्ञेया ।

**विकल्पनिवृत्तिर्वा ॥ ७ ॥** अथवा सावद्य कर्म हिंसादिभेदेन विकल्पनिवृत्ति छेदोपस्थापना ।

**परिहारेण विशिष्टा शुद्धिर्यस्मिंस्तत्परिहारविशुद्धिचारित्रं ॥ ८ ॥** (परिहरणं परिहार प्राणिवधान्निवृत्तिस्तेन विशिष्टा शुद्धिर्यस्मिंस्तत्परिहारविशुद्धिचारित्रं प्रत्येतव्यं) । तत्पुनस्त्रिंशद्वर्षजातस्य संवत्सरपृथक्त्वं तीर्थंकरपादमूलसेविन , प्रत्याख्याननामधेयपूर्वापरगतस्य, जंतुनिरोधप्रादुर्भावकालपरिणामजन्मयोनिदेशद्रव्यस्वभावविधानज्ञानस्य, प्रमादरहितस्य, महावीर्यस्य, परनिर्जरस्य, अतिदुष्करचर्यानिष्ठायिन , त्रिसंध्या वर्जयित्वा द्विगव्यूतगामिन संपद्यते । नान्यस्य ।

**अतिसूक्ष्मकषायत्वात्सूक्ष्मसांपरायत्वं ॥ ९ ॥** सूक्ष्मस्थूलसत्त्ववधपरिहाराप्रमत्तत्वात् अनुपहतोत्साहस्य अखंडितक्रियाविशेषस्य, सम्यग्दर्शनज्ञानमहामारुतसंधुक्षितप्रशस्ताध्यवसायाग्निशिखोपरुद्धकर्मेंधनस्य ध्यानविशेषविवशीकृतकषायविषांकुरस्य, अपचयाभिमुखानितस्तोकमोहबीजस्य, ततएव परिप्राप्तार्थसूक्ष्मसांपरायशुद्धिसंयतस्य, सूक्ष्मसांपरायचारित्रमाख्यायते ।

**गुप्तिसमित्योरन्यतरत्रांतर्भाव इति चेन्न तद्भावेऽपि गुणविशेषनिमित्ताश्रयणात् ॥ १० ॥** स्यान्मतं गुप्तिसमित्योरन्यतरत्रांतर्भवतीदं चारित्रं प्रवृत्तिनिरोधात्, सम्यगयनाच्चेति ? तन्न । किं कारण ? तद्भावेऽपि गुणविशेषनिमित्ताश्रयणात् । लोभसंज्वलनाख्य सांपराय सूक्ष्मो भवतीत्यय विशेष आश्रित ।

**निरवशेषशान्तक्षीणमोहत्वादथाख्यातचारित्रं ॥ ११ ॥** चारित्रमोहस्य निरवशेषस्योपशमात्, क्षयाच्चात्मस्वभावावस्थापेक्षालक्षणमथाख्यातचारित्रमित्याख्यायते । पूर्वचारित्रानुष्ठायिभिराख्यातं न तु परिप्राप्त प्राङ्मोहक्षयोपशमाभ्यामित्यथाख्यात । अथशब्दस्यानंतर्यार्थवृत्तित्वान्निरवशेषमोहस्याथोपशमानंतरमाविर्भवतीत्यर्थ ।

**यथाख्यातमिति वा ॥ १२ ॥** अथवा यथात्मस्वभावोऽवस्थित । तथैवाख्यातत्वाद्यथाख्यातमित्याख्यायते ।

**इतेरुपादानं ततः कर्मसमाप्तिज्ञापनार्थत्वात् ॥ १३ ॥** हेतित्वेन प्रकारव्यवस्थाविपर्यासादिषु दृष्टप्रयोगे इतिरिह विवक्षातः समाप्तिद्योतनो दृष्टव्य । ततो यथाख्यातचारित्रात् सकलकर्मक्षयसमाप्तिर्भवतीति ज्ञाप्यते ।

**उत्तरोत्तरगुणप्रकर्षख्यापनार्थमानुपूर्व्यवचनं ॥ १४ ॥** सामायिकादीनामानुपूर्व्यवचनमुत्तरोत्तरगुणप्रकर्षख्यापनार्थं क्रियते । तद्यथा—सामायिकछेदोपस्थापनासंयमजघन्यविशुद्धिलब्धिरल्पा । ततः परिहारविशुद्धिचारित्रस्य जघन्या लब्धिरनंतगुणा, तस्यैवोत्कृष्टा विशुद्धिरनंतगुणा । तत सामायिकछेदोपस्थापनासंयमोत्कृष्टा विशुद्धिरनंतगुणा । तत सूक्ष्मसांपरायचारित्रस्य जघन्यविशुद्धिरनंतगुणा । तस्यैवोत्कृष्टा विशुद्धिरनंतगुणा । ततो यथाख्यातचारित्रस्य विशुद्धि संपूर्णा प्रकर्षाप्रकर्षविरहिता अनंतगुणा एव । पंच एते चारित्रोपयोगा शब्दविषयत्वेन संख्येयभेदा । बुद्ध्यध्यवसानभेदादसंख्येया । अर्थतोऽनंतभेदाश्च भवति । तदेतच्चारित्रं पूर्वास्रवनिरोधकारणत्वात्परमसंवरहेतुरवसेयं ।

आहोक्तं चारित्रं तदनंतरमुद्दिष्टं यत्तपसा निर्जरा चेति तस्येदानीं तपसो विधानं कर्तव्यमित्यत्रोच्यते । तद्द्विविधं बाह्यमभ्यंतरं च तत्प्रत्येकं षड्विधं तत्र बाह्यस्य भेदप्रतिपत्त्यर्थमाह—

## अनशनावमोदर्यवृत्तिपरिसंख्यानरसपरित्यागविविक्तशय्यासनकायक्लेशा बाह्यं तपः ॥ १९ ॥

**दृष्टफलानपेक्षं संयमप्रसिद्धिरागोच्छेदकर्मविनाशध्यानागमावाप्त्यर्थमनशनवचनं ॥ १ ॥** यत्किंचिद्दृष्टफलं मंत्रसाधनाद्यनुद्दिश्य क्रियमाणमुपवसनमनशनमित्युच्यते । तत्किमर्थं ? संयमप्रसिद्धिरागोच्छेदकर्मविनाशध्यानागमावाप्त्यर्थमवसेयम् ।

**तद्द्विविधमवधृतानवधृतकालभेदात् ॥ २ ॥** तदनशनं द्वेधा व्यवतिष्ठते, कुतोऽवधृतानवधृतकालभेदात् । तत्रावधृतकालं सकृद्भोजनं चतुर्थभक्तादि, अनवधृतकालमादेहोपरमात् ।

**संयमप्रजागरदोषप्रशमसंतोषस्वाध्यायसुखसिद्ध्याद्यर्थमावमोदर्यं ॥ ३ ॥** आशितं भवो य औदनं तस्य चतुर्भागेनार्द्धग्रासेन वा अवममूनं उदरमस्यासाववमोदरः, अवमोदरस्य भावः, कर्म वा आवमौदर्यं, तत्किमर्थं ? संयमप्रजागरदोषप्रशमसंतोषस्वाध्यायसुखसिद्ध्यर्थं ।

**एकागारसप्तवेश्मैकरथ्यार्द्धग्रामादिविषयः संकल्पो वृत्तिपरिसंख्यानं ॥ ४ ॥** भिक्षार्थिनो मुनेरेकागारादिविषयः संकल्पः चित्तावरोधः वृत्तिपरिसंख्यानमाशानिवृत्त्यर्थमवगंतव्यं ।

**दांतेंद्रियत्वतेजोहानिसंयमोपरोधव्यावृत्त्याद्यर्थं घृतादिरसत्यजनं रसपरित्यागः ॥ ५ ॥** दांतेंद्रियत्वं तेजोहानिः संयमोपरोधनिवृत्तिरित्येवमाद्यर्थं, घृतदधिगुडतैलादिरसत्यजनं रसत्यागः ।

**रसपरित्याग इति चेन्न मतोर्लुप्तनिर्दिष्टत्वात् ॥ ६ ॥** स्यान्मतं रसशब्दोऽयं गुणवाची तद्वतश्चात्र परित्याग इष्ट इति तस्माद्रसवत्परित्याग इति निर्देशः कर्त्तव्य इति ? तन्न । किं कारणं ? मतो लुप्तनिर्दिष्टत्वात् । निर्दिष्टोऽत्र मतुः यथा शुक्लः पट इति ।

**व्यतिरेकाद्वा तत्संप्रत्ययः ॥ ७ ॥** अथवा न गुणं व्यतिरिच्य गुणी वर्तते ततः सामार्थ्याच्च द्रव्यनिर्देशः प्रतिपत्तव्यः । द्रव्यत्यागमुखेन रसपरित्यागो नान्यथेति ।

**सर्वत्यागप्रसंग इति चेन्न प्रकर्षगतेः ॥ ८ ॥** स्यादेतत्सर्वमुपभोगार्हं पुद्गलद्रव्यं रसवत् । अतः सर्वत्यागः प्राप्नोतीति तन्न । किं कारणं प्रकर्षगतेः । यथाभिरूपाय कन्या देयेति । अभिरूपतमे संप्रत्ययो भवति तथा सर्वस्य पुद्गलद्रव्यस्य रसवत्त्वात् प्रकृष्टरसत्यागसंप्रत्ययो भवति । कश्चिदाह—

**अनशनावमोदर्यरसपरित्यागानां वृत्तिपरिसंख्यानावरोधात् पृथङ्निर्देशः ॥ ९ ॥** वृत्तिपरिसंख्यानमिदं सामान्यं भिक्षाचरणे नियमकारित्वात् । अतो अनशनावमोदर्यरसपरित्यागानां तेनैवावरुद्धत्वात् पृथङ्निर्देशोऽनर्थकः ।

**तद्विकल्पनिर्देश इति चेन्नानवस्थानात् ॥ १० ॥** अथ मतं तस्य वृत्तिपरिसंख्यानस्य विकल्पाः निर्देष्टव्याः, इति पृथगुपदेशः कर्तव्य इति चेन्न किं कारणं ? अनवस्थानात् ।

**न वा कायचेष्टाविषयगणनार्थत्वाद्वृत्तिपरिसंख्यानस्य ॥ ११ ॥** न वा एष दोषः किं कारणं ? भिक्षाचरणे प्रवर्तमानः साधुः एतावत्क्षेत्रविषया कायचेष्टा कुर्वीत, कदाचिद्यथाशक्तिरिति विषयगणनार्थं वृत्तिपरिसंख्यानं क्रियते अनशनमभ्यवहर्त्तव्यनिवृत्तिः । आवमोदर्यरसपरित्यागावभ्यवहर्तव्यैकदेशनिवृत्तिपराविति महान्भेदः ।

**आबाधात्ययब्रह्मचर्यस्वाध्यायध्यानादिप्रसिद्ध्यर्थं विविक्तशय्यासनं ॥ १२ ॥** शून्यागारादिषु विविक्तेषु जतुपीडाविरहितेषु संयतस्य शय्यासनं वेदितव्यं । तत्किमर्थं ? आबाधात्ययब्रह्मचर्यस्वाध्यायध्यानादिप्रसिद्ध्यर्थं ।

**कायक्लेश स्थानमौनातपनादिरनेकधा ॥ १३ ॥** प्रतिमास्थान वाचयमत्वं, आतपन, वृक्षमूल इत्येवमादिना शरीरखेद कायक्लेश इत्युच्यते । स किमर्थ—

**देहदु खतितिक्षासुखानभिष्वगप्रवचनप्रभावनाद्यर्थ ॥ १४ ॥** दु खापनिपाते सति तितिक्षार्थं विषयसुखे वानभिष्वगार्थं प्रवचनप्रभावनाद्यर्थं च कायक्लेशानुष्ठान क्रियते । इतरथा हि ध्यानप्रवेशकाले सुचोदितस्य द्वद्वोपनिपाते सति समाधान न स्यात् ।

**परीषहजातीयत्वात्पौनरुक्त्यमिति चेन्न स्वकृतक्लेशापेक्षत्वात् ॥ १५ ॥** स्यान्मतमय कायक्लेश स्थानमौनादि परीषहजातीयस्तत पुनरुपदेश पौनरुक्त्य जनयतीति ? तन्न । किं कारण ? स्वकृतकायक्लेशापेक्षत्वात् । बुद्धिपूर्वो हि कायक्लेश इत्युच्यते । यतोयदृच्छयोपनिपाते परीषह । दृष्टफलानपेक्षमित्येतत्सर्वत्रानुवर्त्तते । तत्तर्हि कर्तव्य—

**सम्यगित्यनुवृत्तेर्दृष्टफलनिवृत्तिः ॥ १६ ॥** सम्यग्योगनिग्रहोगुप्तिरित्यत सम्यग्ग्रहणमनुवर्त्तते तेन दृष्टफलनिवृत्ति कृता भवति सर्वत्र बाह्यत्वमस्य कुत ।

**बाह्यद्रव्यापेक्षत्वाद्बाह्यत्वम् ॥ १७ ॥** बाह्यमनशनादिद्रव्यमपेक्ष्य क्रियत इति बाह्यत्वमस्य प्राह्य ।

**परप्रत्यक्षत्वात् ॥ १८ ॥** परेषा खल्वप्यनशनादिप्रत्यक्ष भवति ततश्चास्य बाह्यत्वम् ।

**तीर्थ्यगृहस्थकार्यत्वाच्च ॥ १९ ॥** अनशनादि हि तीर्थ्यैर्गृहस्थैश्च क्रियते ततोऽप्यस्य बाह्यत्व । कथ तर्ह्येतदनशनादितप इत्युच्यते—

**कर्मनिर्दहनात्तपः ॥२०॥** यथाग्नि सञ्चित तृणादि दहति तथा कर्म मिथ्यादर्शनाद्यर्जित निर्दहतीति तप इति निरुच्यते ।

**देहेन्द्रियतापाद्वा ॥ २१ ॥** अथवा देहस्येन्द्रियाणा च ताप करोतीत्यनशनादि तप इत्युच्यते । तत्तापादिन्द्रियनिग्रह सुकरो भवति ।

उक्त बाह्य तप , अथाभ्यन्तरस्य के भेदा इत्यत्रोच्यते ।

## प्रायश्चित्तविनयवैयावृत्त्यस्वाध्यायव्युत्सर्गध्यानान्युत्तरम् ॥२०॥

कुत पुनरुत्तरत्वं ?

**यतोन्यतीर्थानभ्यस्तत्वादुत्तरत्वं ॥ १ ॥** यतोऽन्यैस्तीर्थ्यैरनभ्यस्तमनालीढ ततोऽस्योत्तरत्वम् अभ्यन्तरमिति यावत् । अत करणव्यापारालबन ततोऽस्याभ्यन्तरत्वम् ।

**बाह्यद्रव्यानपेक्षत्वाच्च ॥ २ ॥** न हि बाह्यद्रव्यमपेक्ष्य वर्तमान प्रायश्चित्तादि, ततश्चास्याभ्यतरत्वमवसेय ।

तद्भेदप्रतिपत्त्यर्थमाह ।

## नवचतुर्दशपंचाद्विभेदं यथाक्रमं प्राग्ध्यानात् ॥ २१ ॥

**नवादीना भेदशब्दोपसहितानामन्यपदार्थे वृत्तिः ॥ १ ॥** नवादीना भेदशब्दोपसहितानामन्यपदार्थे वृत्तिर्भवति नव च चत्वारश्च दश च पच च द्वौ च भेदा अस्य नवचतुर्दशपचाद्विभेदमिति ।

**द्विशब्दस्य पूर्वनिपातप्रसग इति चेन्न पूर्वसूत्रापेक्षत्वात् ॥ २ ॥** स्यादेतत् द्विशब्दस्य पूर्वनिपात प्राप्नोति । द्वन्द्वे—अल्पाच्तरमिति सूत्रप्रामाण्यात्सख्याया अल्पीयस्या इत्युपसख्यानाच्चेति तन्न । किं कारण ? पूर्वसूत्रापेक्षत्वात् । पूर्वसूत्रे विहिताना च नवादिभिर्यथाक्रममभिसबन्ध कथ स्यादिति नैतद्युक्त न लक्षणेन हि पदकारा अनुवर्त्या , पदकारैर्नामलक्षणमनुवर्त्यं नच प्रयोजनेन लक्षणमु[illegible] नीय नैष दोष । राजदन्तादिषु पाठ करिष्यते । लक्ष्यानुविधानाल्लक्षणस्य ।

**प्राग्ध्यानादिति वचनं यथासंख्यप्रतिपत्त्यर्थम्** ॥ ३ ॥ प्राग्ध्यानादित्युच्यते यथासंख्यप्रतिपत्ति कथं स्यादिति । इतरथा हि वैषम्याद्यथासंख्यं न स्यात् ।

तत्राभ्यन्तरतपोभेदस्याद्यस्य निर्दिष्टविकल्पसंख्या भेदाख्या, विशेषप्रकृत्यर्थमिदमुच्यते ।

## आलोचनप्रतिक्रमणतदुभयविवेकव्युत्सर्गतपश्छेदपरिहारोपस्थापनाः ॥ २२ ॥

किमर्थमिदमुच्यते ।

**प्रमाददोषव्युदासभावप्रसादनैःशल्यानवस्थाव्यावृत्तिमर्यादात्यागसंयमदार्ढ्याराधनादिसिद्ध्यर्थं प्रायश्चित्तम्** ॥ १ ॥ प्रमाददोषव्युदासः । भावप्रसादो नैःशल्यानवस्थावृत्तिः । मर्यादात्यागः । संयमदार्ढ्यमाराधनमित्येवमादीनां सिद्ध्यर्थं प्रायश्चित्तं नवविधं विधीयते । प्रायः साधुलोकः । प्रायस्य यस्मिन्कर्मणि चित्तं तत्प्रायश्चित्तम् । प्रायाच्चितिचित्तयोरिति सुट् अपराधो वा प्रायः, चित्तं शुद्धिः । प्रायस्य चित्तं प्रायश्चित्त—अपराधविशुद्धिरित्यर्थः ।

**तत्र गुरवे प्रमादविनिवेदनं दशदोषवर्जितमालोचनं** ॥ २ ॥ तेषु नवसु प्रायश्चित्तविकल्पेषु गुरवे एकान्ते निषण्णाय प्रसन्नमनसे विदितदेशकालस्य शिष्यस्य सविनयेनात्मप्रमादविनिवेदनं, दशभिर्दोषैर्विवर्जितमालोचनमित्याख्यायते । के पुनस्ते दशदोषा इति चेदुच्यते—

उपकरणेषु दत्तेषु प्रायश्चित्तं मे लघु कुर्वन्तीति चिन्त्य दानं प्रथममालोचनदोषः ॥ १ ॥ प्रकृत्या दुर्बलो ग्लानोऽहं उपवासादि न कर्तुमलं यदि लघु दीयेत ततो दोषनिवेदनं करिष्ये इति वचनं द्वितीयो दोषः ॥२॥ अन्याद्दृष्टदोषगूहनं कृत्वा प्रकाशदोषनिवेदनं मायाचारस्तृतीयो दोषः ॥ ३ ॥ आलस्यात्प्रमादाद्वाल्पापराधावबोधनिरुत्सुकस्य स्थूलदोषप्रतिपादनं चतुर्थः ॥ ४ ॥ महादुश्चरप्रायश्चित्तभयान्महादोषसंवरणं कृत्वा तदनु प्रमादाचारनिवेदनं पंचमः ॥ ५ ॥ ईदृशे व्रतातिचारे सति किं नः स्यात्प्रायश्चित्तमित्युपायेन गुरूपासना षष्ठः ॥ ६ ॥ पाक्षिकचातुर्मासिकसांवत्सरिकेषु कर्मसु महति यतिसमवाये आलोचनशब्दाकुले पूर्वदोषकथनं सप्तमः ॥ ७ ॥ गुरूपपादितं प्रायश्चित्तं किमिदं युक्तं आगमे स्यान्नवेति शंकमानस्यान्यसाधुपरिप्रश्नोऽष्टमः ॥ ८ ॥ यत्किञ्चित्प्रयोजनमुद्दिश्यात्मना समानायैव प्रमादाचरितमावेद्य महदपि प्रहीतं प्रायश्चित्तं न फलकरमिति नवमः ॥ ९ ॥ अस्यापराधेन ममातिचारः समानः तमयमेव वेत्ति अस्मै यद्दत्तं तदेव मे युक्तं लघुकर्त्तव्यमिति स्वदुश्चरितसंवरणं दशमो दोषः ॥ १० ॥ आत्मन्यपराधं चिरमनवस्थाप्य कृतिभावमन्तरेण बालवदृजुबुद्ध्या दोषं निवेदयतः न ते दोषा भवन्त्यऽन्ये च । सयतालोचनं द्विविधमिष्टमेकान्ते संयतिकालोचनं, आश्रयं प्रकाशते लज्जापरपरिभवादिगणनया निवेद्यातिचारं यदि न शोधयेदपरिक्षितायव्ययाधमर्णमवसीदति । महदपि तपस्कर्म अनालोचनपूर्वकं नाभिप्रेतफलप्रदं, अतिक्तकायगतौषधवत्कृतालोचनस्यापि गुरुदत्तप्रायश्चित्तमकुर्वतोऽपरिकर्म सस्यवन्महाफलं न स्यात् । कृतालोचनचित्तगतं प्रायश्चित्तं परिस्पष्टदर्पणतलरूपवत्परिभ्राजते ।

**मिथ्यादुष्कृताभिधानाद्यभिव्यक्तप्रतिक्रिया प्रतिक्रमणं** ॥ ३ ॥ कर्मवशप्रमादोदयजनितं मिथ्या मे दुःकृतमित्येवमाद्यभिव्यक्तः प्रतीकारः प्रतिक्रमणमित्युच्यते ।

**तदुभयसंसर्गे सति शोधनात्तदुभयं** ॥ ४ ॥ किञ्चित्कर्मालोचनमात्रादेव शुध्यति । अपरं प्रतिक्रमेण, इतरत्पुनस्तदुभयसंसर्गे सति शुद्धिमुपयातीति तदुभयमित्युपदिश्यते ।

इदमयुक्तं वर्तते किमत्रायुक्तमनालोचयतः न किञ्चिदपि प्रायश्चित्तमित्युक्तं पुनरुपदिष्टं प्रतिक्रमणमात्रादेव शुद्धिकरमिति एतदयुक्तं अथ तत्राप्यालोचनपूर्वकत्वमभ्युपगम्यते तदुभयोपदेशो व्यर्थः? नैष दोषः सर्वं प्रतिक्रमणमालोचनपूर्वकमेव । किन्तु पूर्वं गुरुणाभ्यनुज्ञातं शिष्येणैव कर्त्तव्यम् । इदं पुनर्गुरुणैवानुष्ठेयं ।

**संसक्तान्नपानोपकरणादिविभजन विवेकः ॥ ५ ॥** संसक्तानामन्नपानोपकरणादीनां विभजन विवेक इत्युच्यते ।

**व्युत्सर्गः कायोत्सर्गादिकरण ॥ ६ ॥** कालनियमेन कायोत्सर्गादिकरण व्युत्सर्ग इत्युच्यते ।

**तपोऽनशनादि ॥ ७ ॥** अनशनावमौदर्यवृत्तिपरिसंख्यानादि तपोऽवगतव्य ।

**दिवसपक्षमासादिना प्रव्रज्याहापन छेदः ॥ ८ ॥** चिरप्रव्रजितस्य दिवसमासादिविभागेन प्रव्रज्याहापन छेद इति प्रत्येतव्य ।

**पक्षमासादिविभागेन संसर्गमंतरेण दूरतः परिवर्जन परिहार इत्यवध्रियते ॥ ९ ॥**

**पुनर्दीक्षाप्रापणमुपस्थापना ॥ १० ॥** महाव्रतानां मूलच्छेद कृत्वा पुनर्दीक्षाप्रापणमुपस्थापनेत्याख्यायते । विद्यायोगोपकरणग्रहणादिषु प्रश्नविनयमंतरेण प्रवृत्तिरेव दोष इति तस्य प्रायश्चित्तमालोचनमात्र । देशकालनियमेनावश्य कर्त्तव्यमित्यास्थितानां धर्मकथादिव्याक्षेपहेतुसन्निधानेन विस्मरणे सति पुनरनुष्ठाने प्रतिक्रमण तस्य प्रायश्चित्त । भयत्वरणविस्मरणेऽनवबोधाशक्तिव्यसनादिभिर्महाव्रतातिचारे सति प्राक्छेदात्षड्विध प्रायश्चित्त विधेय । शक्त्यनिगूहनेन प्रयत्नेन परिहरत कुतश्चित्कारणादप्रासुकग्रहणग्राहणयो प्रासुकस्यापि प्रत्याख्यानस्य विस्मरणात् प्रतिगृहे च स्मृत्वा पुनस्तदुज्झन प्रायश्चित्त । दु स्वप्नदुश्चिंतनमलोत्सर्जनमूत्रातिचारमहानदीमहाटवीतरणादिषु व्युत्सर्ग, प्रायश्चित्त । बहुकृत्व प्रमादनहुदृष्टापराधप्रत्यनीकवृत्तिविरुद्धदृष्टीनां यथाक्रम छेद मूलभूम्यनुपस्थापन पारचिकविधान क्रियते । अपरकृष्टयाचार्यमूले प्रायश्चित्तग्रहणमनुपस्थापन । आचार्यादाचार्यांतर प्रापणमात्तृतीय पारचिक[1] तदेतन्नवविध प्रायश्चित्त, देशकालशक्तिसंयमाद्यविरोधेनापराधानुरूप दोषप्रशमन चिकित्सितवद्विधेय । जीवस्यासंख्येयलोकपरिमाणा —परिणामविकल्पा, अपराधाश्च तावत एव, न तेषां तावद्विकल्प प्रायश्चित्तमस्ति । व्यवहारनयापेक्षया पिंडीकृत्य प्रायश्चित्तविधानमुक्त ।

आह व्याख्यात प्रायश्चित्तमिदानीं तदनंतरमुद्दिष्टस्य विनयस्य विकल्पा वक्तव्या ? अत्रोच्यते,–

## ज्ञानदर्शनचारित्रोपचाराः ॥ २३ ॥

**विनय इत्यनुवृत्तेः प्रत्येकमभिसंबंध. ॥ १ ॥** विनय इत्यनुवर्त्तते तेन प्रत्येकमभिसंबंधो भवति ज्ञानविनयो दर्शनविनयश्चारित्रविनय उपचारविनयश्चेति ।

**तत्र सबहुमानज्ञानग्रहणाभ्यासस्मरणादिर्ज्ञानविनयः ॥ २ ॥** अनलसेन शुद्धमनसा देशकालादिविशुद्धिविधानविचक्षणेन सबहुमानोयथाशक्तिनिषेव्यमाणो मोक्षार्थं ज्ञानग्रहणाभ्यासस्मरणादिर्ज्ञानविनयो वेदितव्य ।

**पदार्थश्रद्धाने निशंकितत्वादिलक्षणोपेतता दर्शनविनयः ॥३॥** सामायिकादौ लोकबिंदुसारपर्यंते श्रुतसमुद्रे यथा भगवद्भिरुपदिष्टा पदार्था यथालक्षणा वर्त्तंते 'नान्यथा वादिनो जिना' इति निःशंकतायोपेतता दर्शनविनय इत्याख्यायते ।

**तद्वतश्चारित्रे समाहितचित्तता चारित्रविनयः ॥ ४ ॥** तद्वतो ज्ञानदर्शनवत पंचविधदुश्चरचरणश्रवणानंतरसमुद्भिन्नरोमांचाभिव्यज्यमानांतर्भक्ते परप्रसादो मस्तकाञ्जलिकरणादिभिर्भावतश्चानुष्ठातृत्व चारित्रविनय प्रत्येतव्य ।

**प्रत्यक्षेष्वाचार्यादिषु पूजनीयेष्वभ्युत्थानाभिगमनांजलिकरणादिरुपचारविनयः ॥ ५ ॥** प्रत्यक्षेष्वाचार्यादिषु पूजनीयेषु अभ्युत्थानाभिगमनांजलिकरणवंदनानुगमनादिरात्मानुरूप उपचारविनयोऽवगंतव्य ।

१ पारचिक इत्यपि पाठांतर ।

**परोक्षेष्वपि कायवाङ्मनोभिरंजलिक्रियागुणसकीर्तनानुस्मरणादिः॥६॥** परोक्षेष्वाचार्यादिष्वजलिक्रियागुणसकीर्तनानुस्मरणज्ञानानुष्ठायित्वादि. कायवाङ्मनोभिरनुगतव्य. ।

किमर्थमिद विनयभावन ।

**ज्ञानलाभाचारविशुद्धिसम्यगाराधनाद्यर्थं विनयभावनं ॥७॥** ज्ञानलाभ', आचारविशुद्धि, सम्यगाराधनमित्येवमादीनां सिद्धिर्भवति विनयभावनेन । ततश्च निर्वृत्तिसुखमिति विनयभावन क्रियते ।

आह विनयोवर्णित', तदनतरोद्देशभाजो वैयावृत्त्यस्येदानीं विवरण कर्तव्यमित्यत इदानीमुच्यते—

## आचार्योपाध्यायतपस्विशैक्ष्यग्लानगणकुलसंघसाधुमनोज्ञानां ॥ २४ ॥

**वैयावृत्त्यमित्यनुवृत्तेः प्रत्येकमभिसबंधः ॥ १ ॥** वैयावृत्यमित्यनुवर्त्तते तेन प्रत्येकमभिसबधो भवति । आचार्यवैयावृत्यमुपाध्यायवैयावृत्यमित्यादि ।

**व्यावृत्तस्य भावः कर्म च वैयावृत्त्य ॥ २ ॥** कामचेष्टया द्रव्यांतरेण वा व्यावृत्तस्य भाव कर्म वा वैयावृत्त्यमित्युच्यते ।

**आचरति यस्माद्व्रतानीत्याचार्यः ॥ ३ ॥** यस्मात्सम्यग्ज्ञानादिगुणाधारादाहृत्य व्रतानि स्वर्गापवर्गसुखामृतबीजानि भव्या हितार्थमाचरति स आचार्य ।

**उपेत्य यस्मादधीयते इत्युपाध्यायः ॥ ४ ॥** विनेयेनोपेत्य यस्माद्व्रतशीलभावनाधिष्ठानादागम श्रुताख्यमधीयते स उपाध्याय. ।

**महोपवासाद्यनुष्ठायी तपस्वी ॥ ५ ॥** महोपवासादिलक्षण तपोनुतिष्ठति य स तपस्वीत्युच्यते । कुत एतत् ? अतिशयार्थे मत्वर्थीयप्रयोगात् ।

**शिक्षाशीलः शैक्ष्यः ॥६॥** श्रुतज्ञानशिक्षणपर' अनुपरतव्रतभावनानिपुण शैक्षक इति लक्ष्यते ।

**रुजादिक्लिष्टशरीरो ग्लानः ॥ ७ ॥** रुजादिभि. क्लिष्टशरीरो ग्लान इत्युच्यते ।

**गणः स्थविरसंततिः ॥ ८ ॥** स्थविराणां सततिर्गण इत्युच्यते ।

**दीक्षकाचार्यशिष्यसस्त्यायः कुलं ॥९॥** दीक्षकस्याचार्यस्य शिष्यसस्त्याय कुलव्यपदेशमर्हति ।

**चतुर्वर्णश्रमणनिवहः संघः ॥ १० ॥** चतुर्वर्णाना श्रमणाना निवह सघ इति समाख्यायते ।

**चिरप्रव्रजितः साधुः ॥ ११ ॥** चिरकालभावितप्रव्रज्यागुण साधुरित्याम्नायते ।

**मनोज्ञोऽभिरूपः ॥ १२ ॥** अभिरूपो मनोज्ञ इत्यभिधीयते ।

**समतो वा लोकस्य विद्वत्तावक्तृत्वमहाकुलत्वादिभिः ॥ १३ ॥** अथ वा विद्वान्, वाग्मी, महाकुलीन इति यो लोकस्य समत स मनोज्ञ, तस्य ग्रहण प्रवचनस्य लोके गौरवोत्पादनहेतुत्वात् ।

**असयतसम्यग्दृष्टिर्वा ॥ १४ ॥** अथवा असयतसम्यग्दृष्टिर्मनोज्ञ इति गृह्यते ससारोपेतरूपत्वात् । तेषां व्याधिपरीषहमिथ्यात्वाद्युपनिपाते प्रासुकौषधिभक्तपानप्रतिश्रयपीठफलकसस्तरणादिभिर्धर्मोपकरणैस्तत्प्रतीकार सम्यक्त्वप्रत्यवस्थापनमित्येवमादि वैयावृत्य ।

**बाह्यद्रव्यासंभवे स्वकायेन तदानुकूल्यानुष्ठानं च ॥ १५ ॥** बाह्यस्यौषधभक्तपानादेरसभवेऽपि स्वकायेन श्लेष्मसिंघाणकाद्यतर्मलापकर्षणादितदानुकूल्यानुष्ठान च वैयावृत्यमिति कथ्यते ।

तत्पुन किमर्थमिति चेदुच्यते,

**समाध्याधानविचिकित्साभावप्रवचनवात्सल्याद्यभिव्यक्त्यर्थं ॥ १६ ॥** समाध्याधानं

विचिकित्साभाव प्रवचनवात्सल्य, सनाथना चेत्येवमाद्यभिव्यक्त्यर्थं वैयावृत्त्यमिष्यते । किमर्थं बहूना-मुपक्षेप क्रियते । ननु सर्ववैयावृत्त्य गणवैयावृत्त्यमिति वा वक्तव्य ।

बहूपदेशात्कचिन्नियमेन प्रवृत्तिज्ञापनार्थ भूयसामुपन्यासः ॥ १७ ॥ बहुषु वैयावृत्त्या-र्हेषूपदिष्टेषु कचित्कस्यचित् प्रवृत्तिर्यथास्यादित्येवमाद्यर्थं भूयसामुपन्यास क्रियते ।

आह व्याख्यात वैयावृत्त्य तत्समनन्तरोद्दिष्टभाज स्वाध्यायस्येदानीं निर्देश करणीय इत्यत्राभिधीयते,—

## वाचनापृच्छनानुप्रेक्षाम्नायधर्मोपदेशः ॥ २५ ॥

निरवद्यग्रंथार्थोभयप्रदान वाचना ॥ १ ॥ निरवद्यग्रन्थस्यार्थस्य तदुभयस्य वा पात्रे प्रतिपादन वाचनेत्युच्यते ।

संशयच्छेदाय निश्चितबलाधानाय वा परानुयोगः पृच्छन ॥ २ ॥ आत्मोन्नतिपराति-सन्धानोपहाससंघर्षप्रहसनादिविवर्जित संशयच्छेदाय निश्चितबलाधानाय वा ग्रन्थस्यार्थस्य वा पर प्रत्यनु-योग पृच्छनमिति भाष्यते ।

अधिगतार्थस्य मनसाभ्यासोऽनुप्रेक्षा ॥ ३ ॥ अधिगतपदार्थप्रक्रियस्य तप्तायस्पिण्डवदर्पित-चेतसो मनसाभ्यासोऽनुप्रेक्षा वेदितव्या ।

घोषविशुद्धपरिवर्तनमाम्नायः ॥ ४ ॥ व्रतिनो वेदितसमाचारस्यैहलौकिकफलनिरपेक्षस्य द्रुत-विलंबितादिघोषदोषविशुद्ध परिवर्तनमाम्नाय इत्युपदिश्यते ।

धर्मकथाद्यनुष्ठान धर्मोपदेशः ॥ ५ ॥ दृष्टप्रयोजनपरित्यागादुन्मार्गनिवर्तनार्थं संदेहव्यावर्तना-पूर्वपदार्थप्रकाशनार्थं धर्मकथाद्यनुष्ठान धर्मोपदेश इत्याख्यायते । किमर्थोऽय स्वाध्याय ?

प्रज्ञातिशयप्रशस्ताध्यवसायाद्यर्थः स्वाध्यायः ॥ ६ ॥ प्रज्ञातिशय , प्रशस्ताध्यवसाय प्रव-चनस्थिति संशयोच्छेद परवादिशङ्काभाव । परमसंवेग तपोवृद्धिरतिचारविशुद्धिरित्येवमाद्यर्थं स्वा-ध्यायोऽनुष्ठेय ।

आह वर्णित पचविध स्वाध्याय तदनतरमुद्दिष्टो यो व्युत्सर्गस्तस्य भेद इदानीं वक्तव्य इत्यत्राभिधीयते,—

## बाह्याभ्यंतरोपध्योः ॥ २६ ॥

व्युत्सर्ग इत्यनुवृत्तेर्व्यतिरेकनिर्देशः ॥ १ ॥ व्युत्सर्जनं व्युत्सर्ग इति भावसाधन शब्दोऽनुव-र्तते । तदपेक्षोऽय व्यतिरेकनिर्देश ।

उपधीयते बलाधानार्थमित्युपधि ॥२॥ योऽर्थोऽन्यस्य बलाधानार्थमुपधीयते स उपधिरित्युच्यते ।

अनुपात्तवस्तुत्यागो बाह्योपधिव्युत्सर्गः ॥ ३ ॥ आत्मनानुपात्तस्य वस्तुनस्त्यागः ... बाह्योपधिव्युत्सर्गो वेदितव्य ।

क्रोधादि भावनिवृत्तिरभ्यन्तरोपधिव्युत्सर्गः ॥ ४ ॥ क्रोधमानमायालोभमिथ्यात्वहास्यरत्य-रतिशोकभयादिदोषनिवृत्तिरभ्यन्तरोपधिव्युत्सर्ग इति निश्चीयते ।

कायत्यागश्च नियतकालो यावज्जीवं वा ॥५॥ कायत्यागश्चाभ्यन्तरोपधिव्युत्सर्ग इत्युच्यते । स पुनर्द्विविध । नियतकालो यावज्जीव चेति ।

परिग्रहनिवृत्तेरवचनमिति चेन्न तस्य धनहिरण्यवसनादिविषयत्वात् ॥ ६ ॥ स्यादेतन्महाव्रतोपदेशकाले परिग्रहनिवृत्ति...

**धर्माभ्यंतरे भावादिति चेन्न प्रासुकनिरवद्याहारादिनिवृत्तितंत्रत्वात् ॥ ७ ॥** स्यादेतद्दश विधधर्मेऽतरीभूतस्त्याग इति पुनरिदं वचनमनर्थकमिति तन्न किं कारणं ? तस्य प्रासुकनिरवद्याहारादिनिवृत्तितंत्रत्वात् ।

**तस्य प्रायश्चित्ताभ्यंतरत्वादिति चेन्न प्रतिद्वंद्विभावात् ॥ ८ ॥** अथमतमेतत्प्रायश्चित्ताभ्यंतरो व्युत्सर्गस्ततः पुनस्तस्य वचनमनर्थकमिति तन्न किं कारणं ? तस्य प्रतिद्वंद्विभावात्तस्य हि व्युत्सर्गस्यातिचारः प्रतिद्वंद्वी विद्यते । अयं पुनरनपेक्षः क्रियते इत्यस्ति विशेषः ।

**अनेकत्रावचनमनेनैव गतत्वादिति चेन्न शक्त्यपेक्षत्वात् ॥ ९ ॥** अनेकत्र वचनमनर्थकमेवास्तु पर्याप्तमिति तन्न किं कारणं ? शक्त्यपेक्षत्वात् । क्वचित्सावद्यं प्रत्याख्यायते क्वचिन्निरवद्यमपि नियतकालं क्वचिदनियतकालं पुरुषशक्त्यपेक्षत्वान्निवृत्तिधर्मस्योत्तरोत्तरगुणप्रकर्षोद्भवोत्साहोत्पादनार्थत्वाच्च न पौनरुक्त्यं । किमर्थं पुनर्व्युत्सर्गः,—

**निःसंगनिर्भयत्वजीविताशाव्युदासाद्यर्थो व्युत्सर्गः ॥ १० ॥** निःसंगत्वं निर्भयत्वं जीविताशाव्युदासः दोषोच्छेदो मोक्षमार्गभावनापरत्वमित्येवमाद्यर्थो व्युत्सर्गोऽभिधीयते । स द्विविधः ।

आह अभ्यंतरतपः षोढा प्रतिज्ञाय प्राग्ध्यानादिति यत्सन्यस्तं तपोध्यानाभिधानं तदनाविष्कृतार्थं प्राप्तविचारकालमित्यत्रोच्यते,—

## उत्तमसंहननस्यैकाग्रचिंतानिरोधो ध्यानमांतर्मुहूर्त्तात् ॥२७॥

**आद्यं संहननत्रयमुत्तमं ॥ १ ॥** वज्रर्षभनाराचसंहननं, वज्रनाराचसंहननं, नाराचसंहननमित्येतत्त्रितयं संहननमुत्तमं । कुतो ध्यानादिवृत्तिविशेषहेतुत्वात् । तत्र मोक्षस्य कारणमाद्यमेकमेव । ध्यानस्य त्रितयमपि उत्तमसंहननं ।

**तस्य उत्तमसंहननस्यैकशब्दः संख्यापदं ॥ २ ॥** अन्या सहायाद्यनेकार्थसंभवे एकशब्दोऽत्र संख्यावाची गृह्यते ।

**अंग्यते तदंगमिति तस्मिन्निति वाग्रमुखं ॥ ३ ॥** अंगेर्गत्यर्थस्य कर्मण्यधिकरणे वा उणादौ रग्निपातितः । 'वज्रेंद्रभद्राग्र इत्यत्र, अग्रं मुखमित्यर्थः ।

**चिंता अंतःकरणवृत्तिः ॥ ४ ॥** अंतःकरणवृत्तिरर्थेषु चिंतेत्युच्यते ।

**अनियतक्रियार्थस्य नियतक्रियाकर्तृत्वेनावस्थानं निरोधः ॥ ५ ॥** गमनभोजनशयनाध्ययनादिषु क्रियाविशेषेषु अनियमेन वर्तमानस्य एकस्य, एकस्याः क्रियायाः कर्तृत्वेनावस्थानं निरोध इत्यवगम्यते । एकमग्रं मुखं यस्य सोयमेकाग्रः । चिंतायाः निरोधः चिंतानिरोधः । एकाग्रः चिंतानिरोधः । एकाग्रचिंतानिरोधः । कुतः पुनरसौ एकाग्रत्वेन चिंतानिरोधः ?

**वीर्यविशेषात्प्रदीपशिखावत् ॥ ६ ॥** यथा प्रदीपशिखानिराबाधे प्रज्वलिता न परिस्पंदते तथा निराकुले देशे वीर्यविशेषादवरुध्यमाना चिंता विना व्याक्षेपेण एकाग्रेणावतिष्ठते ।

**अर्थपर्यायवाची वाग्रशब्दः ॥ ७ ॥** अथवा अग्यते इत्यग्रमर्थः इत्यर्थः । एकमग्रं एकाग्रं । एकाग्रे चिंतायाः निरोधः एकाग्रचिंतानिरोधः । योगविभागान्मयूरव्यंसकादित्वाद्वा वृत्तिः एकस्मिन्द्रव्यपरमाणौ भावपरमाणौ वाऽर्थे चिंतानियम इत्यर्थः ॥

**ध्यानशब्दो भावकर्तृकरणसाधनो विवक्षावशात् ॥ ८ ॥** अयं ध्यानशब्दः, भावकर्तृकरणसाधनो विवक्षावशाद्वेदितव्यः । तत्र ध्येयं प्रति अव्यावृत्तस्य भावमात्रेणाभिधाने ध्यातिर्ध्यानमिति भावसाधनो ध्यानशब्दः । ध्यायतीति ध्यानमिति बहुलापेक्षया कर्तृसाधनश्च युज्यते । करणप्रशंसापरायाम-

भिधानप्रवृत्तौ समीक्षितायां यथा साध्यसिरिच्छिनत्तीति प्रयोक्तृनिर्वर्त्ययो सतोरप्युद्यमननिपातनयोरविशेष-तत्रत्वाच्छेदनस्य कर्तृधर्माध्यारोप क्रियते तथा दिध्यासोरप्यात्मन ज्ञानावरणवीर्यांतरायक्षयोपशमविशेष-तत्रत्वात् ध्यानपरिणामस्य युज्यते कर्तृत्व । करणत्वमपि चास्य पर्यायपर्यायिणोर्भेदपरिकल्पनासद्भावात् । युज्यते । अग्नेर्दाहपाकस्वेदादिक्रियाप्रवृत्तस्यात्मभूतौष्ण्यकरणपरिकल्पनवत् ।

**एकांतपरिकल्पनायां दोषविधानमुक्त ॥ ९ ॥** अर्थांतरभावोऽनर्थांतरभाव एवेत्येकांत-कल्पनाया दोषविधानमुक्त आदिसूत्रे ।

**प्रणीतपरिमाणो मुहूर्त्त ॥ १० ॥** मुहूर्त्त इति काल विशेषवाचिशब्द । तस्य परिमाण प्रागभिहित ।

**उत्तमसहननाभिधानमन्यस्येयत्कालाध्यवसायधारणासामर्थ्यात् ॥ ११ ॥** अन्यत्सहन-नमेतावत काल चिंतानिरोधधारणे साधनभाव प्रत्यसमर्थमिति उत्तमसहननग्रहण क्रियते ।

**एकाग्रवचन वैयग्र्यनिवृत्त्यर्थ ॥ १२ ॥** एकाग्रवचन क्रियते वैयग्र्यनिवृत्त्यर्थ । व्यग्र हि ज्ञानमेव न ध्यानमिति ।

**चिंतानिरोधग्रहण तत्स्वाभाव्यप्रदर्शनार्थ ॥ १३ ॥** यथा पृथिव्या कस्मिंश्चित्परिणाम-विशेषे घटशब्दो वर्तते । एव चिंताया ज्ञानात्मिकाया वृत्तिविशेषे ध्यानशब्दो वर्तते इति प्रदर्शनार्थं चिंतानिरोध इति विशेष्यते ।

**ध्यानमित्यधिकृतस्वरूपनिर्देशार्थ ॥ १४ ॥** यत्तदधिकृतमुत्तम तप, तत्स्वरूपनिर्देशार्थं ध्यान वचन क्रियते ।

**मुहूर्त्तवचनादाहारादिविनिवृत्ति ॥ १५ ॥** आहारादिकालांतरव्यावृत्त्यर्थं मुहूर्त्तवचन क्रियते । अत पर दुर्द्धरत्वात् ।

**अभावो निरोध इति चेन्न केनचित्पर्यायेणेष्टत्वात् ॥१६॥** स्यान्मतमभावो निरोध इत्यनर्थां-तर स चेत्, ध्यानशब्दार्थ खरविषाणवत् ध्यानमसत्प्रसजतीति ? तन्न । किं कारण ? केनचित्पर्यायेणेष्टत्वात् । अन्यचिंताभावविवक्षायामसदेव ध्यान । विवक्षितार्थविषयावगमस्वभावसामर्थ्यापेक्षया सदेवेति चोच्यते ।

**अभावस्य च वस्तुत्वाद्धेत्वगत्वादिति ॥ १७ ॥** अभावोऽप्यय वस्तुधर्म कुत हेत्वगत्वादिति ततश्चाभावाभाव ।

**एकार्थवचन विस्पष्टत्वादिति चेन्नानिष्टप्रसगात् ॥ १८ ॥** स्यान्मतमेकार्थचिंतानिरोध इत्यस्तु विस्पष्टत्वादिति तन्न किं कारणमनिष्टप्रसगात् । किमनिष्ट 'वीचारोऽर्थव्यजनयोगसक्रांतिरिति' वक्ष्यते तेनार्थसक्रम इष्यते द्रव्यात्पर्याये पर्यायाच्च द्रव्ये । यद्येकार्थे निरोध इह गृह्यते तद्विरोध स्यात् ।

**एकाग्रवचने तुल्यमिति चेन्नाभिमुख्ये सति पौन पुन्येनापि प्रवृत्तिज्ञापनार्थत्वात् ॥१९॥** अथ मतमेतदेकाग्रवचनेऽपि तस्यानिष्टस्य प्रसग तुल्य इति चेन्न किं कारणमाभिमुख्ये सति पौन पुन्येना ऽपि वृत्तिविज्ञानार्थत्वात् । अग्र मुखमिति ह्युच्यमानेऽनेकमुखत्व निवर्तित एकमुख तु सक्रमोऽभ्युपगत एवेति नानिष्टप्राप्ति ।

**प्राधान्यवाचिनो वैकशब्दस्य ग्रहण ॥ २० ॥** अथवा प्राधान्यवचनमेकशब्द इह गृह्यते प्रधानस्य पुस आभिमुख्येन चिंतानिरोध इत्यर्थ । अस्मिन्पक्षेऽर्थो गृहीत ।

**अगतीत्यग्रमात्मेति वा ॥ २१ ॥** अथ वा अगतीत्यग्रमात्मेत्यर्थ । द्रव्यार्थनयैकस्मिन्नात्मन्यग्रे चिंतानिरोधो ध्यान तत स्ववृत्तित्वात् बाह्यध्येयप्राधान्यापेक्षा निवर्त्तिता भवति ।

**दिवसमासाद्यवस्थानमुपयुक्तस्येति चेन्नेंद्रियोपघातप्रसंगात् ॥२२॥** स्यादेतद्ध्यानोपयोगेन दिवसमासाद्यवस्थानं नांतर्मुहूर्तादिति तन्न किं कारणमिंद्रियोपघातप्रसंगात् ।

**प्राणापानविनिग्रहो ध्यानमिति चेन्न शरीरपातप्रसंगात् ॥ २३ ॥** स्यादेतत्प्राणापानकर्मणो निग्रहो ध्यानमिति तन्न किं कारणं ? शरीरपातप्रसंगात् । प्राणापाननिग्रहे सति तदुद्भूतवेदनाप्रकर्षात् । आश्वेव शरीरस्य पातः प्रसज्येत । तस्मान्मंदमंदप्राणापानप्रचारस्य ध्यानं युज्यते ।

**मात्राकालपरिगणनमिति चेन्न ध्यानातिक्रमात् ॥ २४ ॥** स्यान्मतं मात्राकालपरिगणनं ध्यानमिति तन्न किं कारणं ? ध्यानस्यातिक्रमात् । मात्राभिर्यदि कालगणनं क्रियते ध्यानमेव न स्याद्वैयग्रयात् ।

**विध्युपायनिर्देशः कर्तव्य इति चेन्न गुप्त्यादिप्रकरणस्य तादर्थ्यात् ॥ २५ ॥** स्यान्मतमेकाग्रचिंतानिरोधो ध्यानमित्येतद्युक्तं किंतु तदुत्पत्तये विध्युपायनिर्देशः कर्तव्यः अनेन विधिना अनेनोपायेन ध्यानं भवतीति तन्न किं कारणं ? गुप्त्यादिप्रकरणस्य तादर्थ्यात् । ध्यानविधानभावनार्थमेव हि गुप्त्यादिप्रकरणं प्रकृतं ।

**संवरार्थं तदिति चेन्न प्रागुपदेशस्योभयार्थत्वात् ॥ २६ ॥** स्यान्मतं संवरप्रतिपत्त्यर्थं तद्गुप्त्यादि प्रकरणमुक्तं न ध्यानोपायप्रतिपत्त्यर्थं नवाऽन्यार्थं प्रकृतमन्यार्थं भवतीति तन्न । किं कारणं ? प्रागुपदेशस्योभयार्थत्वात् । अन्यार्थमपि प्रकृतमन्यार्थं भवति च । तद्यथा—शाल्यर्थं कुल्याः प्रणीयते । ताभ्यश्च पानीयं पीयते । उपस्पृश्यते च शालयश्च भाव्यते ।

**सकलध्यानधर्मासंग्रह इति चेन्न ध्यानप्राभृते प्रणीतत्वात् ॥ २७ ॥** स्यान्मतं सकलो ध्यानधर्मो नास्मिन्सूत्रे संग्रहीतः इत्यपरिपूर्णं लक्षणमिति तन्न किं कारणं ? ध्यानप्राभृते प्रणीतत्वात् । तत्र हि ध्यानलक्षणं सकलं प्राधान्येनोक्तं इह त्वानुषंगिकमिति । तस्य ध्यानस्य सामान्येनोक्तस्य विकल्पप्रतिपत्त्यर्थमिदमुच्यते,

## आर्त्तरौद्रधर्म्यशुक्लानि ॥ २८ ॥

**ऋतमर्दनमार्त्तिर्वा तत्र भवमार्त्त ॥ १ ॥** ऋतं दुःखं, अथवार्दनमार्त्तिर्वा तत्र भवमार्त्तं ।

**रुद्रः क्रूरस्तत्कर्म रौद्रं ॥ २ ॥** रोदयतीति रुद्रः क्रूर इत्यर्थः । तस्येदं कर्म, तत्र भवं वा रौद्रमित्युच्यते ।

**धर्मादनपेतं धर्म्यं ॥ ३ ॥** धर्मो वर्णितः, ततोऽनपेतं ध्यानं धर्म्यमित्याख्यायते ।

**शुचिगुणयोगाच्छुक्लं ॥ ४ ॥** यथा मलद्रव्यापायात् शुचिगुणयोगाच्छुक्लं वस्त्रं तथा तद्गुणसाधर्म्यादात्मपरिणामस्वरूपमपि शुक्लमिति निरुच्यते । तदेतच्चतुर्विधं ध्यानं द्वैविध्यमश्नुते । कुतः प्रशस्ताप्रशस्तभेदात् । अप्रशस्तमपुण्यास्रवकारणत्वात्, कर्मनिर्दहनसामर्थ्यात्प्रशस्तं । किं पुनस्तदिति चेदुच्यते,—

## परे मोक्षहेतू ॥ २९ ॥

**एकस्यैव परत्वमिति चेन्न व्यवहितेऽपि परशब्दप्रयोगात् ॥ १ ॥** स्यान्मतमेकस्यैव परत्वमुपपद्यते न द्वयोरिति तन्न । किं कारणं ? व्यवहितेऽपि परशब्दप्रयोगात् । तद्यथा परा मथुरा पाटलीपुत्रादिति ।

**द्विवचननिर्देशाद्वा गौणस्यापि संप्रत्ययः ॥ २ ॥** अथवा परमत्यंतं तत्समीपवर्त्यपि परमित्युपचर्यते द्विवचननिर्देशात्तस्यापि ग्रहणं भवति ।

**परयोर्मोक्षहेतुत्वात्, पूर्वयोः संसारहेतुत्वप्रसिद्धिः ॥ ३ ॥** परे मोक्षहेतू इति वचनात्परिशेषात्पूर्वे संसारहेतू इति विज्ञायते । तृतीयस्य साध्यस्याभावात् ।

आह किमेषां लक्षणमिति । तत्रानेकस्य वक्तव्यसंभवे वाच क्रमवृत्तेराद्यस्य लक्षणप्रतिपादनार्थमिदमुच्यते ।

# आर्तममनोज्ञस्य संप्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहारः ॥३०॥

**अप्रियममनोज्ञं बाधाकारणत्वात् ॥ १ ॥** यदप्रियं वस्तु विषकण्टकशत्रुशस्त्रादि तद्बाधाकारणत्वादमनोज्ञमित्युच्यते ।

**भृशमर्थांतरचिंतनादाहरणं समन्वाहारः ॥ २ ॥** अर्थांतरचिंतनादाधिक्येनाहरणमेकत्रावरोध समन्वाहार । स्मृते समन्वाहार स्मृतिसमन्वाहार । अमनोज्ञस्योपनिपाते स कथं नाम मे न स्यादिति संकल्पश्चिंताप्रबंध आर्तमित्याख्यायते ।

आह किमिदमनभिमते चेतनद्रव्यपर्यायसंप्रयोगहेतुकमेवार्तं निर्ध्रियते न किं तद्योन्यथाप्येतत्प्रत्येतव्यमित्युच्यते,

# विपरीतं मनोज्ञस्य ॥ ३१ ॥

**प्रागुक्तनिमित्तविपर्ययाद्विपरीतं ॥ १ ॥** प्रागुक्तं यन्निमित्तं ततो पर्ययाद्विपरीतमित्यभिधीयते । तद्यथा मनोज्ञस्य विषयस्य विप्रयोगे संप्रयुयुक्षां प्रति या परिध्यास्मृतिसमन्वाहार शब्दचोदिता असावप्यार्तं ध्यानमिति निश्चीयते । यथा च प्रियसमवाये तदभावादाहितकालुष्यस्यार्तं प्रतिज्ञायते । तथा ज्वरादिसंतापाभ्याहतमूर्ते ।

# वेदनायाश्च ॥ ३२ ॥

**प्रकरणाद् दुःखवेदनासंप्रत्ययः ॥ १ ॥** यद्यपि वेदनाशब्द सुखदुःखानुभवनविषयसामान्यस्तथापि आर्तस्य प्रकृतत्वाद्दुःखवेदनासंप्रत्ययो भवति । तत्प्रतिचिकीर्षा प्रत्याघूर्णस्यानवस्थितमनसो धैर्योपरमात्स्मृतिसमन्वाहार आर्तध्यानमवगतव्य ।

**अंगविक्षेपशोकाक्रंदनाश्रुपाताभिव्यक्तं तृतीयं ॥ २ ॥** यथानिष्टसंप्रयोगेष्टविप्रयोगाशुभवेदनासमवायनिबंधनमार्तं । तथा चेदमपि प्रीतिविशेषाभिष्वंगमंथरकामातुरमते पौनर्भविकविषयसुखरसगृद्धस्य तत्संस्कारपरायणस्य कायादिखेदहेतुकं ।

# निदानं च ॥ ३३ ॥

**"विपरीतं मनोज्ञस्य" इत्येव सिद्धमिति चेन्नाप्राप्तपूर्वविषयत्वान्निदानस्य ॥१॥** स्यादेतद्विपरीतं मनोज्ञस्येत्यनेनैव निदानं सुगृहीतमिति तन्न किं कारणमप्राप्तपूर्वविषयत्वान्निदानस्य सुखमात्रया प्रलंबितस्याप्राप्तपूर्वप्रार्थनाभिमुखादनागतार्थप्राप्तिनिबंधनं निदानमित्यस्ति विशेषः ।

तदेतच्चतुर्विधमार्तं कृष्णनीलकापोतलेश्याबलाधानं, अज्ञानप्रभवं पौरुषेयपरिणाममनुत्थं पापप्रयोगाधिष्ठानं, परिभोगप्रसंगं, नानासंकल्पासंगं धर्माश्रयपरित्यागिकषायाश्रयोपस्थानं अनुपशमप्रवर्द्धनं प्रमादमूलमकुशलकर्मादानं कटुकविपाकासद्वेद्यं तिर्यग्भवगमनपर्यवसानं तदेतत्किं स्वामिकमिति चेदुच्यते,

# तदविरतदेशविरतप्रमत्तसंयतानां ॥ ३४ ॥

अविरता असंयतसम्यग्दृष्ट्यता । देशविरता संयतासंयता संयता, प्रमत्तसंयता पंचदशप्रमादोपेता । क्रियानुष्ठायिनः ।

**कदाचित्प्राच्यमार्तध्यानत्रयं प्रमत्तानां ॥ १ ॥** निदानं वर्जयित्वा अन्यदार्तत्रयं प्रमादोदयोद्रेकात्कदाचित्प्रमत्तसंयतानां भवति ।

आह व्याख्यातमाद्यमप्रशस्तं संज्ञादिभिः, अथ द्वितीयं किं स्वभावमज्ञाप्रभवस्वामिकमित्यत उच्यते,

१ विपाकाकामदुघमिति पाठांतरं ग पुस्तके ।

## हिंसानृतस्तेयविषयसंरक्षणेभ्यो रौद्रमविरतदेशविरतयोः ॥ ३५ ॥

**ध्यानोत्पत्तेर्हिंसादीनां निमित्तभावाद्धेतुनिर्देशः ॥१॥** हिंसादीन्युक्तलक्षणानि तानि रौद्रध्यानोत्पत्तेर्निमित्तीभवतीनि हेतुनिर्देशो विज्ञायते ।

**तेन स्मृतिसमन्वाहाराभिसबंध ॥ २ ॥** तेन—हेतुनिर्देशेनानुवर्तमान. स्मृतिसमन्वाहारोऽभिसबध्यते । हिंसाया स्मृतिसमन्वाहार इत्याद्यविरतस्य भवतु रौद्रध्यान देशविरतस्य कथ—

**देशविरतस्यापि हिंसाद्यावेशाद्वित्तादिसरक्षणतत्रत्वाच्च ॥ ३ ॥** देशविरतस्यापि रौद्रध्यान, कुत हिंसाद्यावेशाद्वित्वादिसरक्षणतत्रत्वाच कदाचिद्भवितुमर्हति । तत्पुनर्नारकादीनामकारण सम्यग्दर्शनसामर्थ्यात् । अथ कथमिद रौद्रध्यान सयतस्य न भवति ?

**तदयुक्त संयते तदावेशे सयमप्रच्युतेः ॥ ४ ॥** सयतेरौद्रध्यान न युज्यते कुतस्तदावेशे सयमप्रच्युते । यदा रौद्रध्यानाविशिष्टो भवत्यात्मा न तदा सयमोऽवतिष्ठते । तदेतच्चतुर्विध रौद्रध्यान अतिकृष्णनीलकापोतलेश्याबलाधान प्रमादाधिष्ठान नरकगतिफलावसान, एवमुक्ताप्रशस्तध्यानपरिगत आत्मा तप्तायसिंपड इवोदक कर्मादत्ते ।

आह परे मोक्षहेतू इति ये उपदिष्टेऽनिर्दिष्टसज्ञाभेदस्वभावे तयोस्तावदाद्य किमभिधानप्रकारस्वभावविषयमित्यत्रोच्यते । तत्खलु सम्यग्ज्ञानबीजमुपशमार्थमप्रमादसचित मोहप्रथन धर्मानुबधि सुखफल त्रिविष्टपावसान ।

## आज्ञापायविपाकसंस्थानविचयाय धर्म्यं ॥ ३६ ॥

**प्रमत्ताप्रमत्तसयतस्य विचितिर्विवेको विचारणं विचयः ॥ १ ॥** विचितिर्विचयो-विवेको विचारणेत्यनर्थांतर ।

**तदपेक्षया आज्ञादीनां कर्मनिर्देश ॥ २ ॥** त विचयभावमपेक्ष्याज्ञादीनां कर्मनिर्देश क्रियते । आज्ञा चापायश्च विपाकश्च सस्थान च आज्ञापायविपाकसस्थानानि तेषा विचय आज्ञापायविपाकसस्थानविचय तदर्थमाज्ञापायविपाकसस्थानविचयाय ।

**अधिकारात्स्मृतिसमन्वाहारसबधः ॥ ३ ॥** स्मृतिसमन्वाहार इत्यनुवर्तते, तेन प्रत्येकमभिसबधो भवति । आज्ञाविचयाय स्मृतिसमन्वाहार इत्यादि ।

**तत्रागमप्रामाण्यादर्थावधारणमाज्ञाविचय ॥ ४ ॥** उपदेष्टुरभावान्मंदबुद्धित्वात्कर्मोदयात्सूक्ष्मत्वाच पदार्थाना हेतुदृष्टांतोपरमे सर्वज्ञप्रणीतमार्गं प्रमाणीकृत्य इत्थमेवेद नान्यथा वादिनो जिना इति गहनपदार्थश्रद्धानादर्थावधारणमाज्ञाविचय ।

**आज्ञाप्रकाशनार्थो वा ॥ ५ ॥** अथवा सम्यग्दर्शनविशुद्धपरिणामस्य विदितस्वपरसमयपदार्थनिर्णयस्य सर्वज्ञप्रणीतानाहितसौक्ष्म्यानस्तिकायादीनर्थानवधार्य एवमेते इत्यन्य प्रति विपादयिषत कथामार्गे श्रुतज्ञानसामर्थ्यात्स्वसिद्धांताविरोधेन हेतुनयप्रमाणविमर्दकर्मणा ग्रहणसहिष्णू कृत्वा प्रभाषत , तत्समर्थनार्थस्तर्कनयप्रमाणयोजनपर स्मृतिसमन्वाहार सर्वज्ञाज्ञाप्रकाशनार्थत्वादाज्ञाविचय इत्युच्यते ।

**सन्मार्गापायचिंतनमपायविचयः ॥ ६ ॥** मिथ्यादर्शनपिहितचक्षुषा आचारविनयाप्रमादविषया ससारविवृद्धये भवत्यविद्याबाहुल्यात् ।

**अधवत् ॥ ७ ॥** यथा जात्यधा बलवंतोऽपि सत्पथात्प्रच्युता कुशलमार्गोपदेशकेनाननुष्ठिता नीचोन्नतैशलविषमोपलकठिनस्थाणुनिहितकटकाकुलाटवीदुर्गपतिता परिस्पन्दवतोऽपि न च मार्गमनुसर्तुमर्हति देशकाभावात्तथा सर्वज्ञप्रणीतमार्गाद्विमुखा. मोक्षार्थिन सम्यङ्मार्गापरिज्ञानात्सुदूरमेवापयतीति सन्मार्गापायचिंतनमपायविचय ।

**असन्मार्गापायचिंतनमपायविचय अमन्मार्गापायसमाधान वा ॥ ८ ॥** अथवा मिथ्यादर्शनाकुलितचेतोभिर्वादिभि प्रणीतादुन्मार्गात्कथ नाम इमे प्राणिनोऽपेयु । अनायतनसेवापायो वा कथ स्यात् पापकरणवचनभावनाविनिवृत्तिर्वा कथमुपजायते इत्यपायाविंतचिंतनमपायविचय ।

**कर्मफलानुभवनविवेक प्रति प्रणिधान विपाकविचयः ॥ ९ ॥** कर्मणां ज्ञानावरणादीनां द्रव्यक्षेत्रकालभवभावप्रत्ययफलानुभवन प्रति प्रणिधान विपाकविचय । तद्यथा मिथ्यादर्शैकद्वित्रिचतुरिंद्रियजात्यातपस्थावरसूक्ष्मापर्याप्तकसाधारणाख्याना कर्मप्रकृतीना प्रथमगुणस्थाने उदयो नोर्द्ध । अनतानुबधिक्रोधमानमायालोभानां प्रथमद्वितीयगुणस्थानयोरुदयो नोर्द्ध । सम्यग्मिथ्यात्वस्य सम्यग्मिथ्यादृष्टौ उदयो नोर्द्ध नाध । अप्रत्याख्यानक्रोधमानमायालोभनरकदेवायुर्नरकदेवगतिवैक्रियिकशरीरागोपागानुपूर्व्यचतुष्कदुर्भगानादेयायशस्कीर्तिसज्ञाना सप्तदशाना कर्मप्रकृतीनामुदयोऽसयतसम्यग्दृष्ट्यतेषु नोपरि । चतुर्णामानुपूर्व्याणा सम्यग्मिथ्यादृष्टावुदयो नास्ति शेषाणामस्ति । प्रत्याख्यानक्रोधमानमायालोभतिर्यगायुस्तिर्यगत्युद्योतनीचैर्गोत्रसज्ञानामष्टाना कर्मप्रकृतीना विपाक सयतासयतातेषु नापरि । निद्रानिद्राप्रचलाप्रचलास्त्यानगृद्धिनामिकानां तिसृणां कर्मप्रकृतीना फलानुभवनमनुत्तरशरीरप्रमत्तसयतेषु नोपरि । आहारशरीराहारशरीरागोपागनाम्नोऽप्रमत्तसयते उदय नोर्ध्वं नाध । वेदकसम्यक्त्वप्रकृतेरुदयोऽसयतसम्यग्दृष्ट्यादिष्वप्रमत्तसयतातेषु नोर्ध्वं नाप्यध । अर्धनाराचसहननकीलिकासहननासप्राप्तासृपाटिकासहननाख्याना तिसृणां प्रकृतीनामुदयोऽप्रमत्तसयतातेषु नोपरि । हास्यरत्यरतिशोकभयजुगुप्साख्याना षण्णा कर्मप्रकृतीनामपूर्वकरणचरमसमयातेषु फलानुभवन नोर्ध्वं । त्रयाणा वेदानां त्रयाणा सज्वलनाना चोदय अनिवृत्तिबादरसांपरायकालस्य शेषे सख्येयान्भागान्गत्वोदयच्छेद । लोभसज्वलनस्य विपाक सूक्ष्मसापरायचरमसमयातेषु नोपरि । वज्रनाराचसहननाराचसहननयोरुदय उपशातकषायातेषु नोर्ध्वं । निद्राप्रचलयोरुदय क्षीणकषायोपान्तसमयातेषु नोपरि । पचानां ज्ञानावरणानां चतुर्णां दर्शनावरणाना पचानामतरायाणां चोदय क्षीणकषायचरमसमयातेषु नोपरि । अन्यतरवेदनीयौदारिकतैजसकार्मणशरीरसस्थानषट्कौदारिकशरीरागोपागवज्रर्षभनाराचसहननवर्णगधरसस्पर्शागुरुलघूपघातपरघातोच्छ्वासप्रशस्ताप्रशस्तविहायोगतिप्रत्येकशरीरस्थिरास्थिरशुभाशुभसुस्वरदु स्वरनिर्माणनामिकाना त्रिंशत्प्रकृतीनामुदय सयोगकेवलिनश्चरमसमये नोर्ध्वं । अन्यतरवेदनीयमनुष्यायुर्मनुष्यगतिपचेंद्रियजातित्रसबादरपर्याप्तकसुभगादेययशस्कीर्त्युच्चैर्गोत्रसज्ञकानामेकादशाना प्रकृतीनामुदय अयोगकेवलिनश्चरमसमये नोर्ध्वं । तीर्थकरनामकर्मोदय द्वयो केवलिनोर्नोपरि नाप्यध ।

**अयथाकालविपाकः उदीरणोदय ॥ १० ॥** तत्र मिथ्यादर्शनस्य उदीरणोदय मिथ्यादृष्टौ उपशमसम्यक्त्वाभिमुखस्य, चरमावलीमुत्सृज्येतरत्र भवति । एक-द्वित्रिचतुरिंद्रियजात्यातपस्थावरसूक्ष्मापर्याप्तकसाधारणसज्ञिकाना नवाना प्रकृतीनामुदीरणोदय मिथ्यादृष्टौ भवति नोर्ध्वं । अनतानुबधिक्रोधमानमायालोभानामुदीरणोदयो मिथ्यादृष्टिसासादनसम्यग्दृष्ट्योर्नोपरि । सम्यग्मिथ्यात्वस्योदीरणोदय सम्यग्मिथ्यादृष्टौ नोपरि नाप्यध । अप्रत्याख्यानावरणक्रोधमानमायालोभनरकगतिदेवगतिवैक्रियिकशरीरागोपागदुर्भगानादेयायशस्कीर्तिसज्ञका एकादशप्रकृतय असयतसम्यग्दृष्ट्यतेषूदीर्यंते नोर्ध्वं । नरकायुषोदेवायुषश्च मरणकाले चरमावलिं मुक्त्वा असयतसम्यग्दृष्टावुदीरणोदयो भवत्यधश्च नोर्ध्वं । चतुर्णामानुपूर्व्याणा विग्रहगतौ मिथ्यादृष्टिसासादनसम्यग्दृष्ट्यसयतसम्यग्दृष्टिषूदीर्णोदयो नेतरत्र । प्रत्याख्यानक्रोधमानमायालोभतिर्यगत्युद्योतनीचैर्गोत्राणा सप्ताना प्रकृतीनामुदीरणोदय सयतासयतातेषु नोपरि । तिर्यगायुषो मरणकाले चरमावलिं मुक्त्वा सयतासयतातेषूदीरणोदयो नोर्ध्वं । निद्रानिद्राप्रचलाप्रचलास्त्यानगृद्धिसद्सद्वेद्याना पचाना प्रकृतीना प्रमत्तसयतातेषूदीरणोदयो नोपरिष्टात् । उत्तरशरीरवर्तिपूर्वचरमावल्या सह उदीरणोदयो नास्ति । आहारकशरीरागोपागनाम्नो प्रमत्तसयते उदीरणोदयो नोर्ध्वं नाप्यध । मनुष्यायुष उदीरणोदय –मरणकाले चरमावलिं मुक्त्वा प्रमत्तसयतातेषु सम्यग्मिथ्यादृष्टिवर्जितेषूदीरणो-

## हिंसानृतस्तेयविषयसंरक्षणेभ्यो रौद्रमविरतदेशविरतयोः ॥ ३५ ॥

**ध्यानोत्पत्तेर्हिंसादीनां निमित्तभावाद्धेतुनिर्देशः ॥१॥** हिंसादीन्युक्तलक्षणानि तानि रौद्रध्यानोत्पत्तेर्निमित्तीभवतीति हेतुनिर्देशो विज्ञायते ।

**तेन स्मृतिसमन्वाहाराभिसंबंधः ॥ २ ॥** तेन—हेतुनिर्देशेनानुवर्तमान स्मृतिसमन्वाहारोऽभिसबध्यते । हिंसाया स्मृतिसमन्वाहार इत्याद्यविरतस्य भवतु रौद्रध्यान देशविरतस्य कथ—

**देशविरतस्यापि हिंसाद्यावेशाद्वित्तादिसरक्षणतन्त्रत्वाच्च ॥ ३ ॥** देशविरतस्यापि रौद्रध्यान, कुत हिंसाद्यावेशाद्वित्तादिसरक्षणतन्त्रत्वाच्च कदाचिद्भवितुमर्हति । तत्पुनर्नारकादीनामकारण सम्यग्दर्शनसामर्थ्यात् । अथ कथमिद रौद्रध्यान सयतस्य न भवति ?

**तदयुक्तं संयते तदावेशे सयमप्रच्युतेः ॥ ४ ॥** सयतेरौद्रध्यान न युज्यते कुतस्तदावेशे सयमप्रच्युते । यदा रौद्रध्यानाविशिष्टो भवत्यात्मा न तदा सयमोऽत्रावतिष्ठते । तदेतच्चतुर्विध रौद्रध्यान अतिकृष्णनीलकापोतलेश्याबलाधान प्रमादाधिष्ठान नरकगतिफलावसान, एवमुक्तमप्रशस्तध्यानपरिगत आत्मा तप्तायस्पिड इवोदक कर्मादत्ते ।

आह परे मोक्षहेतू इति ये उपदिष्टेऽनिर्दिष्टसज्ञाभेदस्वभावे तयोस्तावदाद्य किमभिधानप्रकारस्वभावविषयमित्यत्रोच्यते । तत्खलु सम्यग्ज्ञानबीजमुपशमार्थमप्रमादसचित मोहप्रशमन धर्मानुबधि सुखफल त्रिविष्टपावसान ।

## आज्ञापायविपाकसंस्थानविचयाय धर्म्यं ॥ ३६ ॥

**प्रमत्ताप्रमत्तसयतस्य विचितिर्विवेको विचारणं विचयः ॥ १ ॥** विचितिर्विचयो-विवेको विचारणेत्यनर्थांतर ।

**तदपेक्षया आज्ञादीनां कर्मनिर्देश ॥ २ ॥** त विचयभावमपेक्ष्याज्ञादीनां कर्मनिर्देश क्रियते । आज्ञा चापायश्च विपाकश्च सस्थान च आज्ञापायविपाकसस्थानानि तेषा विचय आज्ञापायविपाकसस्थानविचय तदर्थमाज्ञापायविपाकसस्थानविचयाय ।

**अधिकारात्स्मृतिसमन्वाहारसबधः ॥ ३ ॥** स्मृतिसमन्वाहार इत्यनुवर्तते, तेन प्रत्येकमभिसबधो भवति । आज्ञाविचयाय स्मृतिसमन्वाहार इत्यादि ।

**तत्रागमप्रामाण्यादर्थावधारणमाज्ञाविचय ॥ ४ ॥** उपदेष्टुरभावान्मदबुद्धित्वात्कर्मोदयात्सूक्ष्मत्वाच्च पदार्थाना हेतुदृष्टातोपरमे सर्वज्ञप्रणीतमार्गं प्रमाणीकृत्य इत्थमेवेद नान्यथा वादिनो जिना इति गहनपदार्थश्रद्धानादर्थावधारणमाज्ञाविचय ।

**आज्ञाप्रकाशनार्थो वा ॥ ५ ॥** अथवा सम्यग्दर्शनविशुद्धपरिणामस्य विदितस्वपरसमयपदार्थनिर्णयस्य सर्वज्ञप्रणीतानाहितसौक्ष्म्यानस्तिकायादीनर्थानवधार्य एवमेते इत्यन्य प्रति पिपादयिषत कथामार्गे श्रुतज्ञानसामर्थ्यात्स्वसिद्धाताविरोधेन हेतुनयप्रमाणविमर्दकर्मणा ग्रहणसहिष्णून्कृत्वा प्रभावत , तत्समर्थनार्थस्तर्कनयप्रमाणयोजनपर स्मृतिसमन्वाहार सर्वज्ञाज्ञाप्रकाशनार्थत्वादाज्ञाविचय इत्युच्यते ।

**सन्मार्गापायचिंतनमपायविचयः ॥ ६ ॥** मिथ्यादर्शनपिहितचक्षुषा आचारविनयाप्रमादविषया समाराविशुद्धये भवत्यविद्याबाहुल्यात् ।

**अंधवत् ॥ ७ ॥** तद्यथा जात्यधा वर्त्मतोऽपि सत्पथात्प्रच्युता कुशलमार्गादेशकेनाननुष्ठिता भोचान्तैशलीनपमोपलकठिनस्थाणुनिहितकटकाकुलाटवीदुर्गपतिता परिस्पन्दवतोऽपि न च मार्गमनुसर्तुमर्हति देशकाभावात्तथा सर्वज्ञप्रणीतमार्गाद्विमुखा मोक्षार्थिन सम्यङ्मार्गापरिज्ञानात्सुदूरमेवापयतीति सन्मार्गापायचिंतनमपायविचय. ।

**असन्मार्गापायचिंतनमपायविचय असन्मार्गापायसमाधानं वा ॥ ८ ॥** अथवा मिथ्यादर्शनाकुलितचेतोभिर्वादिभि प्रणीतादुन्मार्गात्कथ नाम इमे प्राणिनोऽपेयु । अनायतनसेवापायो वा कथ स्यात् पापकरणवचनभावनाविनिवृत्तिर्वा कथमुपजायते इत्यपायविचिंतनमपायविचय ।

**कर्मफलानुभवनविवेक प्रति प्रणिधान विपाकविचयः ॥ ९ ॥** कर्मणां ज्ञानावरणादीनां द्रव्यक्षेत्रकालभवभावप्रत्ययफलानुभवन प्रति प्रणिधान विपाकविचय । तद्यथा मिथ्यादर्शनैकद्वित्रिचतुरिंद्रियजात्यातपस्थावरसूक्ष्मापर्याप्तकसाधारणाख्याना कर्मप्रकृतीना प्रथमगुणस्थाने उदयो नोर्द्ध । अनतानुबधिक्रोधमानमायालोभाना प्रथमद्वितीयगुणस्थानयोरुदयो नोर्द्ध । सम्यग्मिथ्यात्वस्य सम्यग्मिथ्यादृष्टौ उदयो नोर्द्ध नाध । अप्रत्याख्यानक्रोधमानमायालोभनरकदेवायुर्नरकदेवगतिवैक्रियिकशरीरागोपागानुपूर्व्यचतुष्कदुर्भगानादेयायशस्कीर्तिसज्ञाना सप्तदशाना कर्मप्रकृतीनामुदयोऽसयतसम्यग्दृष्ट्यतेषु नोपरि । चतुर्णामानुपूर्व्याणा सम्यग्मिथ्यादृष्टावुदयो नास्ति शेषाणामस्ति । प्रत्याख्यानक्रोधमानमायालोभतिर्यगायुस्तिर्यग्गत्युद्योतनीचैर्गोत्रमज्ञानामष्टाना कर्मप्रकृतीना विपाक सयतासयतातेषु नोपरि । निद्रानिद्राप्रचलाप्रचलास्त्यानगृद्धिनामिकाना तिसृणा कर्मप्रकृतीना फलानुभवनमनुत्तरशरीरप्रमत्तसयतेषु नोपरि । आहारशरीराहारशरीरागोपागनाम्नोऽप्रमत्तसयते उदय नोर्ध्वं नाध । वेदकसम्यक्त्वप्रकृतेरुदयोऽसयतसम्यग्दृष्ट्यादिष्वप्रमत्तसयतातेषु नोर्ध्वं नाप्यध । अर्धनाराचसहननकीलिकासहननासप्राप्तासृपाटिकासहननाख्याना तिसृणां प्रकृतीनामुदयोऽप्रमत्तसयतातेषु नोपरि । हास्यरत्यरतिशोकभयजुगुप्साख्याना षण्णा कर्मप्रकृतीनामपूर्वकरणचरमसमयातेषु फलानुभवन नोर्ध्वं । त्रयाणा वेदाना त्रयाणा सज्वलनाना चोदय अनिवृत्तिबादरसापरायकालस्य शेषे सख्येयान्भागान्गत्वोदयच्छेद । लोभसज्वलनस्य विपाक सूक्ष्मसापरायचरमसमयातेषु नोपरि । वज्रनाराचसहनननाराचसहननयोरुदय उपशातकषायातेषु नोर्ध्वं । निद्राप्रचलयोरुदय क्षीणकषायोपातसमयातेषु नोपरि । पचानां ज्ञानावरणानां चतुर्णां दर्शनावरणाना पचानामतरायाणां चोदय क्षीणकषायचरमसमयातेषु नोपरि । अन्यतरवदनीयौदारिकतैजसकार्मणशरीरसस्थानषट्कौदारिकशरीरागोपागवज्रवृषभनाराचसहननवर्णगधरसस्पर्शागुरुलघूपघातपरघातोच्छ्वासप्रशस्ताप्रशस्तविहायोगतिप्रत्येकशरीरस्थिरास्थिरशुभाशुभसुस्वरदु स्वरनिर्माणनामिकाना त्रिंशत्प्रकृतीनामुदय सयोगकेवलिनश्चरमसमये नोर्ध्वं । अन्यतरवेदनीयमनुष्यायुर्मनुष्यगतिपचेंद्रियजातित्रसबादरपर्याप्तकसुभगादेययशस्कीर्त्युच्चैर्गोत्रसज्ञकानामेकादशाना प्रकृतीनामुदय अयोगकेवलिनश्चरमसमये नोर्ध्वं । तीर्थकरनामकर्मोदय द्वयो केवलिनोर्नोपरि नाप्यध ।

**( अयथाकालविपाकः उदीरणोदय ) ॥ १० ॥** तत्र मिथ्यादर्शनस्य उदीरणोदय मिथ्यादृष्टौ उपशमसम्यक्त्वाभिमुखस्य, चरमावलीमुत्सृज्येतरत्र भवति । एक-द्वित्रिचतुरिंद्रियजात्यातपस्थावरसूक्ष्मापर्याप्तकसाधारणसज्ञिकाना नवाना प्रकृतीनामुदीरणोदय मिथ्यादृष्टौ भवति नोर्ध्वं । अनतानुबधिक्रोधमानमायालोभानामुदीरणोदयो मिथ्यादृष्टिसासादनसम्यग्दृष्ट्योर्नोपरि । सम्यग्मिथ्यात्वस्योदीरणोदय सम्यग्मिथ्यादृष्टौ नोपरि नाप्यध । अप्रत्याख्यानावरणक्रोधमानमायालोभनरकगतिदेवगतिवैक्रियिकशरीरागोपागदुर्भगानादेयायशस्कीर्तिसज्ञका एकादशप्रकृतय असयतसम्यग्दृष्ट्यतेषूदीर्यंते नोर्ध्वं । नरकायर्देवायुषश्च मरणकाले चरमावलिं मुक्त्वा असयतसम्यग्दृष्टावुदीरणोदयो भवत्यधश्च नोर्ध्वं । चतुर्णामानुपूर्व्याणा विग्रहगतौ मिथ्यादृष्टिसासादनसम्यग्दृष्ट्यसयतसम्यग्दृष्टिषूदीर्णोदयो नतरत्र । प्रत्याख्यानक्रोधमानमायालोभतिर्यग्गत्युद्योतनीचैर्गोत्राणा सप्ताना प्रकृतीनामुदीरणादय सयतासयतातेषु नोपरि । तिर्यगायुषो मरणकाले चरमावलिं मुक्त्वा सयतासयतातेषूदीरणोदयो नोर्ध्वं । निद्रानिद्राप्रचलाप्रचलास्त्यानगृद्धिसदसद्वेद्याना पचाना प्रकृतीना प्रमत्तसयतातेषूदीरणोदयो नोपरिष्टात् । उत्तरशरीरवर्तिषु चरमावल्या सह उदीरणोदयो नास्ति । आहारकशरीरागोपागनाम्नो प्रमत्तसयते उदीरणादयो नोर्ध्वं नाप्यध । मनुष्यायुष उदीरणोदय —मरणकाले चरमावलिं मुक्त्वा प्रमत्तसयतातेषु सम्यग्मिथ्यादृष्टिवर्जितेषूदीरणा-

दयो भवति नोपरि । वेदकसम्यक्त्वस्योदीरणोदय असंयतसम्यग्दृष्ट्यादिष्वप्रमत्तसंयतांतेषु भवति नोर्ध्वं नाप्यधः । अर्धनाराचकीलिकासंप्राप्तासृपाटिकासंहननानामुदीरणोदयः अप्रमत्तसंयतांतेषु भवति नोर्ध्वं । हास्यरत्यरतिशोकभयजुगुप्सानां षण्णां प्रकृतीनामपूर्वकरणचरमसमयांतेषूदीरणोदयो भवति नोर्ध्वं । त्रयाणां वेदानां त्रयाणां संज्वलनानां चोदीरणोदयो निवृत्तिबादरसांपरायेषूदांतेषु भवति नार्ध्वं । तस्मिन्नानिवृत्तिकाले शेषे ऊर्ध्वं संख्येयभागान् गत्वा उदीरणोदयोच्छेदः । लोभसंज्वलनस्योदीरणोदयः सूक्ष्मसांपरायचरमावलीवर्जितेषु पूर्वेषु नोपरि । वज्रनाराचनाराचसंहननयोरुपशांतकषायांतेषूदीरणोदयो नोपरिष्टात् । समयोत्तरचरमावलीवर्जितक्षीणकषायांतेषु निद्राप्रचलयोरुदीरणोदयो नोपरि । पंचानां ज्ञानावरणानां चतुर्णां दर्शनावरणानां पंचानामंतरायाणां च चरमावलीवर्जितक्षीणकषायांतेषूदीरणोदयो नोर्ध्वं । मनुष्यगतिपंचेंद्रियजात्यौदारिकतैजसकार्माणशरीरषट्संस्थानौदारिकशरीरांगोपांगवज्रवृषभनाराचसंहननवर्णगंधरसस्पर्शागुरुलघूपघातोच्छ्वासप्रशस्ताप्रशस्तविहायोगतित्रसबादरपर्याप्तिप्रत्येकशरीरास्थिरस्थिरशुभाशुभसुभगसुस्वरदुःस्वरादेययशस्कीर्तिनिर्माणोच्चैर्गोत्रसंज्ञिकानामष्टात्रिंशतः प्रकृतीनां सयोगकेवलिचरमसमयांतेषूदीरणोदयो नोपरि । तीर्थकरनाम्न उदीरणोदयः सयोगिकेवलिन्येव नोपरि नाप्यधः ।

**लोकसंस्थानस्वभावावधानं संस्थानविचयः ॥ ११ ॥** लोकसंस्थानं प्राग्वर्णितं तदवयवानां च द्वीपादीनां तत्स्वभावावधानं संस्थानविचयः ।

**धर्मादनपेतं धर्म्यम् ॥ १२ ॥** धर्म उत्तमक्षमादिदशविकल्पः, ततोऽनपेतं धर्म्यं ध्यानं । उत्तमक्षमादिभावनावतः प्रवृत्तेः ।

**अनुप्रेक्षाणां धर्म्यध्यानजातीयत्वात्पृथगनुपदेश इति चेन्न ज्ञानप्रवृत्तिविकल्पत्वात्॥१३॥** स्यादेतदनुप्रेक्षा अपि धर्म्यध्यानेऽन्तर्भवंतीति पृथगासामुपदेशोऽनर्थक इति तन्न किं कारणं ? ज्ञानप्रवृत्तिविकल्पत्वात् । अनित्यादिविषयचिंतनं यदा ज्ञानं तदानुप्रेक्षाव्यपदेशो भवति । यदा तत्रैकाग्रचिंतानिरोधस्तदा धर्म्यध्यानं ।

**धर्म्यमप्रमत्तस्येति चेन्न पूर्वेषां विनिवृत्तिप्रसंगात् ॥ १४ ॥** कश्चिदाह धर्म्यमप्रमत्तसंयतस्यैवेति तन्न किं कारणं ? पूर्वेषां निवृत्तिप्रसंगात् । असंयतसम्यग्दृष्टिसंयतासंयतप्रमत्तसंयतानामपि धर्म्यध्यानमिष्यते सम्यक्त्वप्रभवत्वात् । यदि धर्म्यमप्रमत्तस्यैवेत्युच्येत तर्हि तेषां निवृत्तिः प्रसज्येत ।

**उपशांतक्षीणकषाययोश्चेति तन्न शुक्लाभावप्रसंगात् ॥ १५ ॥** कश्चिदाह उपशांतक्षीणकषाययोश्च धर्म्यं ध्यानं भवति न पूर्वेषामेवेति तन्न किं कारणं ? शुक्लाभावप्रसंगात् उपशांतक्षीणकषाययोर्हि शुक्लध्यानमिष्यते तस्याभावः प्रसज्यते ।

**तदुभयं तत्रेति चेन्न पूर्वस्यानिष्टत्वात् ॥ १६ ॥** स्यादेतदुभयं धर्म्यं शुक्लं चोपशांतक्षीणकषाययोरस्तीति ? तन्न । किं कारणं ? पूर्वस्यानिष्टत्वात्पूर्वं हि धर्म्यं ध्यानं श्रेण्योर्नेष्यते, आर्षे पूर्वेषु चेष्यते ।

आह यदि धर्म्यध्यानमविरतदेशविरतप्रमत्ताप्रमत्तसंयतांतानां भवति, अथ शुक्लध्यानं कस्य ? इत्यत्रोच्यते तद्वक्ष्यमाणं चतुर्विकल्पं तत्र प्रथमयोर्विकल्पयोः स्वामिनां निर्देशः क्रियते,

## शुक्ले चाद्ये पूर्वविदः ॥ ३७ ॥

**पूर्वविद्विशेषणं श्रुतकेवलिनस्तदुभयप्रणिधानसामर्थ्यात् ॥ १ ॥** सकलश्रुतधरस्याद्यशुक्लध्यानद्वयप्रणिधानसामर्थ्यं नेतरस्येति प्रतिपत्त्यर्थं पूर्वविद्विशेषणमुपादीयते ।

**चशब्दः पूर्वध्यानसमुच्चयार्थः ॥ २ ॥** चशब्दः क्रियते पूर्वस्य धर्म्यध्यानस्य समुच्चयार्थः । शुक्ले आद्ये पूर्वविदो भवतः धर्म्यं चेति ।

**विषयाविवेकापरिज्ञानमिति चेन्न व्याख्यानतोविशेषप्रतिपत्तेः ॥ २ ॥** स्यादेतच्च-शब्देन पूर्वस्य ध्यानस्य समुच्चये क्रियमाणे विषयविवेको न ज्ञायते इति ? तन्न । किं कारण ? व्याख्यानतो विशेषप्रतिपत्ते । श्रेण्यारोहणात् प्राग्धर्म्यध्यान, श्रेण्यो शुक्लध्यानमिति व्याख्यास्याम,

आह—यद्याद्ये शुक्ले उपशान्तनिर्दग्धमोहयोर्नियमेन प्रतिज्ञायेते अविशिष्टे कस्य भवत इत्यत्रोच्यते,

## परे केवलिनः ॥ ३८ ॥

**केवलिशब्दसामान्यनिर्देशात्तद्वतोरुभयोर्ग्रहण ॥ १ ॥** केवलीत्यय शब्द सामान्यविषयस्ततोऽचिन्त्यविभूतिविशेषकेवलज्ञानसाम्राज्यमनुभवतोरुभयो सयोग्ययोगिकेवलिनोर्ग्रहण । परे शुक्ल ध्याने तयोर्भवतो न छद्मस्थस्य ।

आह अधकारसुध्यभिघातसादृश्यादतस्तां शुक्लध्यानाधिष्ठातृप्रक्रियां प्रति न व्याप्रियामहे—कुत ? तल्लक्षणविशेषनिर्देशानुपलभात् । उच्यते स्यादेतदेव यद्यमूनि तस्य विशिष्टानि पर्यायांतराणि न स्यु ,—

## पृथक्त्वैकत्ववितर्कसूक्ष्मक्रियाप्रतिपातिव्युपरतक्रियानिवर्तीनि ॥ ३९ ॥

**वक्ष्यमाणलक्षणापेक्षया सर्वेषामन्वर्थत्व ॥ १ ॥** वक्ष्यमाणलक्षणमपेक्ष्य सर्वेषामन्वर्थत्वमवसेय । यदिदमुपात्तचातुर्विध्य शुक्लध्यान तत्किमालबनमिति चेदुच्यते,—

## त्र्येकयोगकाययोगायोगानां ॥ ४० ॥

**योगशब्दो व्याख्यातार्थः ॥ १ ॥** अय योगशब्दो व्याख्यातार्थ कायवाड्मनस्कर्म योग इत्यत्र ।

**यथासख्य चतुर्णामभिसबधः ॥ २ ॥** चतुर्णां त्रियोगादीनामुक्तैश्चतुर्भि शुक्लध्यानविकल्पै सह यथासख्यमभिसबधो भवति । त्रियोगस्य पृथक्त्ववितर्क, त्रिषु योगेष्वेकयोगस्यैकत्ववितर्क, काययोगस्य सूक्ष्मक्रियाप्रतिपत्ति , अयोगस्य व्युपरतक्रियानिवर्तीति ।

तत्राद्यस्य विशेषप्रतिपत्त्यर्थमिदमुच्यते ।

## एकाश्रये सवितर्कवीचारे पूर्वे ॥ ४१ ॥

**पूर्वविदारभ्यत्वादेकाश्रयसिद्धि ॥ १ ॥** उभेऽपि परिप्राप्तश्रुतज्ञाननिष्ठेनारभ्यते इत्येकाश्रये इत्युच्यते,—

**सवितर्कवीचार इति द्वन्द्वपूर्वोन्यपदार्थनिर्देशः ॥ २ ॥** वितर्कश्च वीचारश्च वितर्कवीचारौ सह वितर्कवीचाराभ्या वर्तते सवितर्कवीचार ।

**पूर्वत्वमेकस्यैवेति चेन्नोक्तत्वात् ॥ ३ ॥** किमुक्त तत्समीपवर्तिनस्तद्व्यपदेश इति द्विवचनसामर्थ्यादुभयोर्ग्रहण ।

तत्र यथासख्यप्रसगनिवृत्त्यर्थमिदमुच्यते ।

## अवीचारं द्वितीयं ॥ ४२ ॥

पूर्वयोर्द्वितीय तदवीचार प्रत्येतव्य । अर्थात्—आद्य सवितर्क सवीचार च भवति । द्वितीय सवितर्कमवीचारमिति ।

अथ वितर्कवीचारयो क प्रतिविशेष इत्युच्यते,—

## वितर्कः श्रुतं ॥ ४३ ॥

विशेषेण तर्कणमूहन वितर्क श्रुतज्ञानमित्यर्थ यदि श्रुतज्ञाने वितर्कशब्दो वर्तते तर्हि पुनरपि

पृथक्त्व अथ वीचार' किं लक्षण ? इत्यत्रोच्यते ।

# वीचारोऽर्थव्यंजनयोगसंक्रांतिः ॥ ४४ ॥

( अर्थो ध्येय द्रव्य पर्यायो वा, व्यजन वचन, योग कायवाङ्मनस्कर्मलक्षण , सक्राति परिवर्त्तन । द्रव्य विहाय पर्यायमुपैति पर्याय त्यक्त्वा द्रव्यमित्यर्थसक्राति । एक श्रुतवचनमुपादाय वचनातर मालबते तदपि विहायान्यदिति व्यजनसक्राति. । काययोग त्यक्त्वा योगातर गृह्णाति योगातर च त्यक्त्वाऽन्ययोगमिति योगसक्राति ।)

एव परिवर्तन वीचार इत्युच्यते । तदेतत्सामान्यविशेषनिर्दिष्टचतुर्विध शुक्ल धर्म्य च पूर्वोदितगुप्त्यादि बहुप्रकारोपाय ससारविनिवृत्तये मुनिर्ध्यातुमर्हति तदारभे च परिकर्म भवति । यदोत्तमशरीरसहनन तया परीषहबाधासहनशक्तिमतमात्मानमवगच्छति तदा ध्यानयोगपरिचयायोपक्रमते । कथमिति चेदुच्यते—पर्वतगुहाकदरदरीद्रुमकोटरनदीपुलिनपितृवनजीर्णोद्यानशून्यागारादीनामन्यतमेऽस्मिन्नवकाशे व्यालमृगपशुपक्षिमनुष्याणामगोचरे तत्रत्यैरागतुभिश्च जतुभि परिवर्जिते नात्युष्णे नातिशीते नातिवातेवार्षातपवर्जिते बाह्यात करणविक्षेपकारणवर्जिते ( विरहिते ) भूमितले शुचावनुकूलस्पर्शे यथासुखमुपविष्टो बद्धपर्यकासन समृजु प्रणिधाय शरीरयष्टिमस्तब्धा स्वाके वामपाणितलस्योपरि दक्षिणपाणितलमुत्तल समुपादाय नात्युन्मीलन्नातिनिमीलन्दतैर्दंताग्राणि सदधान ईषन्नतिमुख प्रगुणमध्योस्तब्धमूर्ति. प्रणिधानगभीरशिरोधर प्रसन्नवक्त्रवर्ण , अनिमिषस्थिरसौम्यदृष्टि । विनिहितनिद्रालस्यकामरागरत्यरतिशोकहास्यभयद्वेषविचिकित्स । मद मद प्राणापानप्रचार इत्येवमादिकृतपरिकर्मा साधु , नाभेरूर्ध्वं हृदये मस्तकेऽन्यत्र वा मनोवृत्तिं यथापरिचय प्रणिधाय मुमुक्षु प्रशस्तध्यान ध्यायेत् । तत्रैकाग्रमना उपशातरागद्वेषमोहो नैपुण्यान्निगृहीतशरीरक्रियो मदोच्छ्वासनि श्वास सुनिश्चिताभिनिवेश क्षमावान् बाह्याभ्यतरान्द्रव्यपर्यायान्ध्यायन्नाहितवितर्कसामर्थ्य अर्थव्यजने कायवचसी च पृथक्त्वेन सक्रामता मनसाऽपर्याप्तबलोत्साहवदव्यवस्थितेनानिशितेनापि शस्त्रेण चिरात्तरु छिदन्निव मोहप्रकृतीरुपशमयन्क्षपयश्च पृथक्त्ववितर्कवीचारध्यानभाग्भवति । पुनर्वीर्यविशेषहानेर्योगाद्योगातर व्यजनाद्व्यजनातरमर्थादर्थातरमाश्रयन्ध्यानविधूनितमोहरजा ध्यानयोगान्निवर्तते । इत्युक्त पृथक्त्ववितर्कवीचार । अनेनैव विधिना सतूलमूल मोहनीय निर्दिधिक्षन्ननतगुणविशुद्ध योगविशेषमाश्रित्य बहुतराणा ज्ञानावरणसहायिभूताना प्रकृतीना बध निरुधन् स्थितेर्ह्रासक्षयौ च कुर्वन् श्रुतज्ञानोपयोगवान्निवृत्तार्थव्यजनयोगसक्राति । अविचलितमना क्षीणकषायो वैडूर्यमणिरिवनिरुपलेपो ध्यात्वा पुनर्न निवर्तत इत्युक्तमेकत्ववितर्क । एवमेकत्ववितर्कशुक्लध्यानवैश्वानरनिर्दग्धघातिकर्मेंधन प्रज्वलितकेवलज्ञानगभस्तिमडल मेघपजरनिरोधनिर्गत इव घर्मरश्मिर्भासमानो भगवास्तीर्थकर इतरो वा केवली लोकेश्वराणामभिगमनीयोऽर्चनीय श्चोत्कर्षेणायु पूर्वकोटिं देशोना विहरति स यदातर्मुहूर्तशेषायुष्क , तत्तुल्यस्थितिवेद्यनामगोत्रश्च भवति तदा सर्ववाङ्मनसयोग बादरकाययोग च परिहाप्य सूक्ष्मकाययोगालबन सूक्ष्मक्रियाप्रतिपातिध्यानमास्कदतुमर्हति । यदा पुनरतर्मुहूर्तशेषायुष्कस्ततोऽधिकस्थितिविशेषकर्मत्रयो भवति योगी, तदात्मोपयोगातिशयस्य सामायिकसहायस्य विशिष्टकरणस्य महासवरस्य लघुकर्मपरिपाचनस्य शेषकर्मरेणुपरिशातनशक्तिस्वाभाव्याद्दडकपाटप्रतरलोकपूरणानि स्वात्मप्रदेशविसर्पणतश्चतुर्भि समयै कृत्वा पुनरपि तावद्भिरेव समयै समुपहृतप्रदेशविसरण समीकृतस्थितिविशेषकर्मचतुष्टय पूर्वशरीरपरिमाणो भूत्वा सूक्ष्मकाययोगेन सूक्ष्मक्रियाप्रतिपाति ध्यान ध्यायति । ततस्तदनतर समुच्छिन्नक्रियानिवर्तिध्यानमारभते । समुच्छिन्नप्राणापानप्रचारसर्वकायवाङ्मनोयोगसर्वप्रदेशपरिस्पदक्रियाव्यापारत्वात् समुच्छिन्न क्रियानिवर्तीत्युच्यते । तस्मिन्समुच्छिन्नक्रियानिवर्त्तिनि ध्याने सर्वबधास्रवनिरोधसर्वशेषकर्मशातनसामर्थ्योपपत्तेरयोगिन केवलिन सपूर्णयथाख्यातचारित्रज्ञानदर्शन सर्वससारदु खजालपरिष्वगोच्छेदजनन साक्षान्मो-

क्षकारणमुपजायते । स पुनरयोगिकेवली भगवांस्तदा ध्यानानलनिर्दग्धसर्वमलकलकबधो निरस्तकिट्टधातुपाषाणजात्यकनकवल्लब्धात्मा परिनिर्वाति । तदेतद्द्विविध तप अभिनवकर्मानिरोधहेतुत्वात्सवरणकारण । प्राक्तनकर्मरजोमलविधूननहेतुत्वान्निर्जराहेतुरपि ।

अत्राह उक्त परीषहजयात्तपसश्च कर्मनिर्जरा भवतीति तत्रेद न ज्ञायते सर्वे सम्यग्दृष्टय समनिर्जरा आहोस्विदस्ति कश्चित्प्रतिविशेष इत्यस्तीत्याह,

## सम्यग्दृष्टिश्रावकविरतानंतवियोजकदर्शनमोहक्षपकोपशमकोपशांत मोहक्षपकक्षीणमोहजिनाः क्रमशोऽसंख्येयगुणनिर्जराः ॥४५॥

प्रथमसम्यक्त्वादिप्रतिलभे अध्यवसायविशुद्धिप्रकर्षादसख्येयगुणनिर्जरात्व दशाना मद्यपानाविष्टस्य मदैकदेशविगमादव्यक्तावगमशक्तिवत् । प्रकृष्टनिद्रस्य वा तदेकदेशक्षयादल्पस्मृतिजन्मवत् विषमोहितमूर्तेर्वा एकदेशविषप्रच्युतेश्चेतनाप्रतिलम्भवत् । पित्तादिविकारोपजातमूर्च्छस्य वा मोहैकदेशनिवृत्तेरव्यक्तचैतन्यवत्, एकेंद्रियेष्वनतकायादिषु अनतकालमुत्पद्योत्पद्यपरिभ्रमत विशेषलब्ध्या द्वीद्रियादि जन्म यावत्पचेंद्रिय इति कदाचित्पुन प्रतिनिवर्तते । तदेव बहुकृत्वा विवर्तनारोहणबहुशतसहस्रेषु कदाचित्पचेंद्रियत्व नरकादिषु दीर्घकालमनुभूय घुणात्कीर्णाक्षरसमानजातीयमानवेषु जन्मावाप्नुयात् । श्रात्वा पुनरपि ततो दुर्लभानि देशकुलादीन्यवाप्य सहेशस्य प्रदिश्ना विशुद्धव्यवसाय प्रतिभाशक्तियुक्त भव्य परिणामशुद्ध्या प्रक्षालितातरात्माप्युपदेशाभावात्सन्मार्गमलभमान कुतीर्थप्रतिपादितमिथ्यादर्शनो भूत्वा पुनरपि ससारमहाजनपदातिथिर्भवति । अभिहितक्रमेणैव भूयोज्ञानावरणकर्मैकदेशप्रशमोपजातविशुद्धिप्रदेशलब्धिसपन्न । अथवा मौनींद्र दर्शन कदाचिच्छृणुयात् प्रतिबधिनश्च कर्मण न्यग्भावात् श्रद्दध्यात् कतकसपर्कोपजनितकलुषतोयप्रसादवत् असद्भूतार्थोपदशमलीमस मिथ्यात्वोपशमात्प्रीणितप्रसाद श्रद्धानाभिमुखोऽभिलाषाभिमुख्यादसख्येयगुणनिर्जर अभूतपूर्वकरणात्प्रथमसम्यक्त्वाभिमुखो रुचितजिनवचन उपशमसम्यग्दृष्टितामनुभवति । तत सम्यक्त्वभावनामृतरसविवर्द्धितविशुद्धि मिथ्यात्वविघातिवीर्यविभवैर्वै क्षुद्यमानव्रीहितुषकणतन्दुलविवेकवत्, मिथ्यादर्शनकर्ममिथ्यात्वसम्यक्त्वसम्यग्मिथ्यात्वविभागेन त्रिधा विभज्य सम्यक्त्व वेदयमान सद्भूतपदार्थश्रद्धानफल, वेदकसम्यग्दृष्टिर्भवति । तत प्रशमसवेगादिमान् जिनेंद्रभक्तिप्रवर्द्धितविपुलभावनाविशेषसचारो यत्र केवलिन सति भगवतस्तत्र मोह क्षपयितुमारभते निष्ठापक पुनश्चातिसृषु गतिषु भवति स निराकृतमिथ्यात्व क्षायिकसम्यग्दृष्टिरित्याख्यायते । अथवा पूर्वोदित एव शकादिदोषविनिर्मुक्त कुसमयैरक्षोभितमति उपलब्धमद्भावो मोहतिमिरपटलविप्रमुक्तदृष्टि, जैनेंद्रपूजाप्रवचनवात्सल्यसयमादिप्रशसादिपरतया क्षपितोपशमितदेशघातिकर्मा सयमप्राप्त्या श्रावकोऽपि स्यात् पूर्वनिर्दिष्टस्ततो विशुद्धिप्रकर्षात्पुनरपि सर्वगृहस्थसगविप्रमुक्तो निर्ग्रंथतामनुभवन् विरत इत्यभिलप्यते । एवमुत्तरोत्तरक्रमो वेदितव्योऽन्यत्र । त एते दशाप्युपर्युपरि असख्येयगुणनिर्जरा वेदितव्या ।

**क्षपक इत्यसाधुरन्वाख्यानाभावादिति चेन्न चशब्देन मित्सञ्ज्ञोपलब्धेः ॥ १ ॥**
स्यान्मत क्षपक इत्ययमसाधु कुतोऽन्वाख्यानाभावादिति तन्न किं कारण ? चशब्देन मित्सञ्ज्ञोपलब्धे क्षै जै षै क्षय इत्यस्य कृतात्वस्य 'णिविप्सुकिजनिजृष्टुसुरजोमताश्चेति' चशब्देन मित्सञ्ज्ञाया सत्या ह्रस्वत्वात्साधुर्भवति । प्रयुक्तानामन्वाख्यानात् प्रयोगदर्शनाच्च ।

आह सम्यग्दर्शनसन्निधानेऽपि यद्यसख्येयगुणनिर्जरात्वात्परस्परतो न साम्यमेषा हत तर्हि श्रावकवदमी पूर्वसूत्रचोदिता न सर्वे विरतादयो गुणभेदात् निर्ग्रंथतामर्हतीत्युच्यते । नैतदेव कुतो यस्माद्गुणभेदादन्योन्यविशेषेऽपि नैगमादिनयव्यापारात्सर्वेऽपि भवति ।

## पुलाकवकुशकुशीलनिर्ग्रंथस्नातका निर्ग्रंथाः ॥४६॥

**अपरिपूर्णव्रता उत्तरगुणहीनाः पुलाकाः ॥ १ ॥** उत्तरगुणेष्वनापेतमनसो व्रतेष्वपि कदाचित्कचित्परिपूर्णतामपरिप्राप्नुवंत अविशुद्धपुलाकसादृश्यात्पुलाकव्यपदेशमर्हंति ।

**अखंडितव्रताः शरीरसंस्कारर्द्धिसुखयशोविभूतिप्रणवा बकुशाः ॥ २ ॥** नैर्ग्रन्थ्यं प्रस्थिता, अखंडितव्रता शरीरोपकरणविभूषानुवर्तिन । ऋद्धियशस्कामा, सातगौरवाश्रिता, अविविक्तपरिवारा छेदशबलयुक्ता, बकुशा । शवलपर्यायवाची बकुशशब्द ।

**कुशीला द्विविधाः प्रतिसेवनाकषायोदयभेदात् ॥ ३ ॥** कुशीला द्विविधा भवंति कुत ? प्रतिसेवनाकषायोदयभेदात् । अविविक्तपरिग्रहा परिपूर्णोभया कथंचिदुत्तरगुणविराधिन' प्रतिसेवनाकुशीला । ग्रीष्मे जंघाप्रक्षालनादिसेवनाद्वशीकृतान्यकषायोदया' संज्वलनमात्रतंत्रत्वात् कषायकुशीला ।

**उदके दंडराजिवत्संनिरस्तकर्माणोंतर्मुहूर्तकेवलज्ञानदर्शनप्रापिणो निर्ग्रंथाः ॥ ४ ॥** उदके दण्डराजिर्यथा आश्वेव विलयमुपयाति तथाऽनभिव्यक्तोदयकर्माण ऊर्ध्वं मुहूर्त्ताद्विद्यमानदर्शनकेवलज्ञानभाजो निर्ग्रन्था

**प्रक्षीणघातिकर्माणः केवलिनः स्नातकाः ॥ ५ ॥** ज्ञानावरणादिघातिकर्मक्षयादाविर्भूतकेवलज्ञानाद्यतिशयविभूतय सयोगिशैलेशिनो ऽन्यासपदा केवलिन. स्नातका । " स्नातवेदसमाप्ताविति " स्वार्थिके के निष्पन्न शब्द त एते पचनिर्ग्रंथा । कश्चिदाह—

**प्रकृष्टाप्रकृष्टमध्यानां निर्ग्रंथाभावश्चारित्रभेदाद्गृहस्थवत् ॥ ६ ॥** यथा गृहस्थश्चारित्रभेदान्निर्ग्रंथव्यपदेशभाग् न भवति तथा पुलाकादीनामपि प्रकृष्टमध्यमचारित्रभेदान्निर्ग्रंथत्व नोपपद्यते ।

**न वा दृष्टत्वाद्ब्राह्मणशब्दवत् ॥७॥** न वैष दोष कुतो दृष्टत्वात् ब्राह्मणशब्दवत् । यथा जात्या चारित्राध्ययनादिभेदेन भिन्नेषु ब्राह्मणशब्दो वर्त्तते तथा निर्ग्रंथशब्दोऽपि । किं च—

**संग्रहव्यवहारापेक्षत्वात् ॥ ८ ॥** यद्यपि निश्चयनयापेक्षया गुणहीनेषु न प्रवर्त्तते । तथापि संग्रहव्यवहारनयविवक्षावशात्सकलविशेषसंग्रहो भवति । किं च—

**दृष्टिरूपसामान्यात् ॥ ९ ॥** सम्यग्दर्शन निर्ग्रंथरूप च भूषावेशायुधविरहित तत्सामान्ययोगात् सर्वेषु हि पुलाकादिषु निर्ग्रंथशब्दो युक्त ।

**भग्नव्रते वृत्तावतिप्रसंग इति चेन्न रूपाभावात् ॥ १० ॥** यदि भग्नव्रतेऽपि निर्ग्रंथशब्दो वर्त्तते श्रावकेऽपि स्यादिति—अतिप्रसंगो नैष दोष कुतो रूपाभावात् निर्ग्रंथरूपमत्र न प्रमाण न च श्रावके तदस्तीति नातिप्रसग ।

**अन्यस्मिन्स्वरूपेऽतिप्रसंग इति चेन्न दृष्ट्यभावात् ॥ ११ ॥** स्यादेतद्यदि रूप प्रमाणमन्यस्मिन्नपि सरूपे निर्ग्रंथव्यपदेश. प्राप्नोतीति तन्न । किं कारण ? दृष्ट्यभावात् दृष्ट्या सह यत्र रूप तत्र निर्ग्रंथव्यपदेश । न रूपमात्र इति । अथ किमर्थ पुलाकादिव्यपदेश चारित्रगुणस्योत्तरप्रकर्षे वृत्तिविशेषख्यापनार्थं पुलाकाद्युपदेश क्रियते ।

तेषा पुलाकादीना भूयो विशेषप्रतिपत्त्यर्थमिदमुच्यते,—

## संयमश्रुतप्रतिसेवनातीर्थलिंगलेश्योपपादस्थानविकल्पतःसाध्या ॥४७॥

**तसो लक्षणत्वादनिर्देश इति चेन्नान्यतोऽपीति वचनात्सिद्धेः ॥ १ ॥** स्यादेतत्तसो नोत्पत्ते र्लक्षणमस्ति ततो निर्देशो न युक्त इति । तन्न किं कारण 'अन्यतोऽपीति' वचनात्सिद्धे ।

**भवदादियोग इति चेन्नान्यत्रापि दर्शनात् ॥ २ ॥** स्यान्मत भवदादियोगे अयतोऽपि लक्षण व्याक्रियते, नान्यत्रति तसोनोत्पत्तिरिति तन्न। किं कारणमन्यत्रापि दर्शनात् । अन्यत्र तस प्रयोगो दृश्यते नार्थतो न शब्दतोनाभिधानत स मध्यम इति ।

**प्रतिसेवनेति पत्वाभावः क्रियांतराभिसंबधात् ॥ ३ ॥** यथा निगता सेवका, अस्माद्ग्रामा-द्विसेवको ग्राम इति पत्व न भवति तथा प्रतिगता सेवना प्रतिसेवनेति क्रियांतराभिसंबधात् पत्व न भवति।

**पुलाकादयः संयमादिभिः साध्या. ॥ ४ ॥** एते पुलाकादय पच निर्ग्रन्थविशेषा संयमादि भिरष्टाभिरनुयोगै साध्या व्याख्येया इत्यर्थ. । तद्यथा क कस्मिन्संयमे भवति ? पुलाकबकुशप्रतिसेवना कुशीला द्वयो संयमयो सामायिकच्छेदोपस्थापनयोर्भवति। कषायकुशीला द्वयो परिहारविशुद्धिसूक्ष्मसाप-राययो पूर्वयोश्च । निर्ग्रन्थ स्नातका एकस्मिन्नेव यथाख्यातसंयमे । श्रुत–पुलाकबकुशप्रतिसेवनाकुशीला उत्कर्षेणाभिन्नाक्षरदशपूर्वधरा । कषायकुशीला निर्ग्रन्थाश्चतुर्दशपूर्वधरा । जघन्येन पुलाकस्य श्रुतमा-चारवस्तु । बकुशकुशीलनिर्ग्रन्थानां श्रुतमष्टौ प्रवचनमातर । स्नातका अपगतश्रुता केवलिन । प्रतिसेवना—पचानां मूलगुणानां रात्रिभोजनवर्जनस्य च पराभियोगात् बलादन्यतम प्रतिसेवमान पुलाको भवति। बकुशो द्विविध उपकरणबकुश शरीरबकुशश्चेति । तत्र उपकरणाभिष्वक्तचित्तो विविध विचित्रपरिग्रहयुक्त, बहुविशेषयुक्तोपकरणकांक्षी तत्संस्कारप्रतीकारसेवी भिक्षुरुपकरणबकुशो भवति । शरीरसंस्कारसेवी शरीरबकुश । प्रतिसेवनाकुशीलो मूलगुणानविराधयन् उत्तरगुणेषु काचिद्विराधना प्रतिसेवते । कषायकुशीलनिर्ग्रन्थस्नातकानां प्रतिसेवना नास्ति तीर्थमिति सर्वेषा तीर्थकराणात्तीर्थेषु भवति । लिंग–द्विविध द्रव्यलिंग भावलिंग च भावलिंग प्रतीत्य सर्वे पच निर्ग्रन्था लिंगिनो भवतीति । द्रव्यलिंग प्रतीत्य भाज्या । लेश्या –पुलाकस्योत्तरास्तिस्रो लेश्या भवति। बकुशप्रतिसेवनाकुशीलयो षडपि। कषायकुशीलस्य परिहारविशुद्धेश्चतस्र उत्तरा। सूक्ष्मसापरायस्य निर्ग्रन्थस्नातकयोश्च शुक्लैव केवला भवति। अयोगशैल प्रतिपन्ना अलेश्या । उपपाद –पुलाकस्य उत्कृष्ट उत्पाद, उत्कृष्टस्थितिषु देवेषु सहस्रारे, बकुशप्रतिसेवनाकुशीलयो द्वाविंशतिसागरोपमस्थितिष्वारणच्युतकल्पयो, कषायकुशीलनिर्ग्रन्थयो स्त्रयस्त्रिंशत्सागरोपमस्थितिषु। सर्वार्थसिद्धौ सर्वेषामपि जघन्य । सौधर्मकल्पे द्वि सागरोपमस्थितिषु स्नातक-स्य निर्वाणमिति। स्थान–असख्येयानि संयमस्थानानि कषायनिमित्तानि भवति। तत्र सर्वजघन्यानि लब्धिस्थानानि पुलाककषायकुशीलयो, तौ युगपदसख्येयानि स्थानानि गच्छत, तत पुलाको व्युच्छि-द्यते । कषायकुशीलप्रतिसेवनाकुशीलबकुशा युगपदसख्येयानि स्थानानि गच्छन्ति, ततो बकुशो व्युच्छिद्यते । ततोऽप्यसख्येयानि स्थानानि गत्वा प्रतिसेवनाकुशीलो व्युच्छिद्यते । ततोऽप्यसख्येयानि गत्वा कषायकुशीलो व्युच्छिद्यते । अत ऊर्ध्व अकषायस्थानानि निर्ग्रन्थ प्रतिपद्यते । सोऽप्यसख्ये-यानि स्थानानि गत्वा व्युच्छिद्यते । अतो ऊर्ध्वमेक स्थान गत्वा स्नातको निर्वाण प्राप्नोतीत्येतेषा संयमल-ब्धिरनन्तगुणा भवतीति ।

इति तत्त्वार्थवार्तिके व्याख्यानालंकारे नवमोऽध्यायः ॥ ९ ॥

---

# अथ दशमोऽध्यायः ।

आह—आस्रवदोषानवलिसिवन पारिस्पदनतोऽपि कुशलस्य कर्मागमद्वारसंवरणादिषूपपादित सव-रपदार्थ, तदनंतरनिर्देशभाविनी निर्जराभिवीयतामित्यत्र ब्रूम –नासाविह पुनर्वक्तव्या कुतस्तत्पोनुभव-सनधेन यस्मात्पुरैव व्याख्याता । यथानामोपभुक्तविचित्रफलकर्मनिवृत्तिर्निर्जरा । तत्रानुभव. समाप्त इति

चेन्नार्थवशाच्छास्त्रगरीयस्त्वपरिहारार्थत्वाच्च । सवरानतरनिर्देशार्हेति चेत्तथैवाभिहिता "तपसा निर्जरा चेति" । अत एव गुणतयाध्यवसान । इतरथा हि उभयहेतुत्वविपर्ययेण यत्र क्वचनाभिधान स्यात् ।

आह प्रक्लृप्ता निर्जरा मोक्षोऽभिधातव्य । स चानुपसप्राप्तकेवलज्ञानावस्थस्य नोपपद्यते । इत्यत केवलज्ञानमेव तावद्यथा भवति तथोपदेष्टव्यमित्युच्यते । नैतदपि भूयो निर्देशार्ह वेदितव्य कुतो यस्माद्ध्यानप्रकरणे व्याख्यात, —

## मोहक्षयाज्ज्ञानदर्शनावरणांतरायक्षयाच्च केवलं ॥ १ ॥

अथवा सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग इत्युपक्षिप्य लक्षणोत्पत्तिविषयनिबधनादिभिर्विशेषैर्दर्शनचारित्रे समर्थिते ज्ञान च प्रमाणस्वभाव पचविधमभ्युपेत्य तत्र चतुष्टयस्य लक्षणोत्पत्तिहेतुविषयनिबधा प्रकाता अत परमिद वक्तव्यमेवमुत्पद्यते केवलमिति अत्र ब्रूम —न वक्तव्य पुनर्यस्मात्पुरस्तादेव व्याख्यात सवरनिरुपादानीकृतसततिचारित्रध्यानाग्निप्रज्वलितेंधनमोहक्षयात् ज्ञानदर्शनावरणातरायक्षयाच्च केवल किमुत्पद्यत इत्युपदिष्टमिति वाक्यशेष ।

**वृत्तिप्रसंगो लघ्वर्थमिति चेन्न क्रमेण क्षयज्ञापनार्थत्वात् ॥ १ ॥** स्यान्मतमिह वृत्त्यानिर्देश कर्तव्य । मोहज्ञानदर्शनावरणातरायक्षयात्केवलमिति किमर्थो लघ्वर्थमिति तन्न किं कारण ? क्रमेण क्षयज्ञापनार्थत्वात् । प्रागेव मोहक्षयमुपनीयातर्मुहूर्त क्षीणकषायव्यदेशमवाप्य ततो युगपद् ज्ञानदर्शनावरणातरायाणा क्षय कृत्वा केवलमवाप्नोति ।

**तत्क्षयहेतुः केवलोत्पत्तिरिति हेतुलक्षणविभक्तिनिर्देशः ॥ २ ॥** तत्क्षय केवलज्ञानोत्पत्तेर्हेतुरिति कृत्वा तदभिसबधावद्योतिकया हेतुलक्षणया विभक्त्या निर्देश क्रियते ।

**तत्क्षयः प्रणिधानविशेषात् ॥ ३ ॥** तेषा मोहादीना क्षयो भवति कुत ? प्रणिधानविशेषात् । परिणामविशेषादिति यावत् । तद्यथा—पूर्वोहितेन विधिना परमतपोविशेषै प्रशस्ताध्यवसायप्रकर्षात् विशुद्ध्यत शुभाभिमता प्रकृतय स्फीतीभवति । अप्रशस्ताश्च तत्र भूयो विलीयते । तत्र कश्चिद्वेदकसम्यग्दृष्टिरप्रमत्तगुणस्थाने सप्तप्रकृत्युपशमात् श्रेण्यारोहणाभिमुखश्चारित्रमोहमुपशमयितु मारभते । अपर - असयतसयतासयतप्रमत्तसयताप्रमत्तसयतगुणस्थानेषु कस्मिंश्चित्सप्तप्रकृती क्षयमुपनीय क्षायिकसम्यग्दृष्टिर्भूत्वा चारित्रमोहमुपशमयितुमुपक्रमते । ततोऽधाप्रवृत्तकरणमपूर्वकरणमनिवृत्तिकरण च कृत्वा उपशमश्रेणिमारुह्यापूर्वकरणोपशमकगुणस्थानव्यपदेशमनुभूय तत्राभिनवशुभाभिसधितनूकृतपापकर्मप्रकृतिस्थित्यनुभाग विवर्द्धितशुभकर्मानुभव, अनिवृत्तिबादरसापरायोपशमकगुणस्थानमधिरुह्य नपुसकवेदस्त्रीवेदनोकषायषट्कपुवेदाप्रत्याख्यानप्रत्याख्यानक्रोधद्वयमायाद्वयलोभद्वयक्रोधमानसज्वलनसज्ञिका प्रकृती क्रमेणोपशमय्य तत सूक्ष्मसापरायप्रथमसमये मायासज्वलने चोपशम गते सर्वमोहप्रकृत्युपशमात् उपशान्तकषायव्यपदेशभाग्भवति । आयुष क्षयात् म्रियते । अथवा पुनरपि कषायानुदीरयन् प्रतिनिवर्त्तते । स एव चान्यो वा विशुद्धाध्यवसायानुपरतोत्साह पूर्ववत् क्षायिकसम्यग्दृष्टिर्भूत्वा कर्मविशुध्द्या महत्या विशुध्यन् क्षपकश्रेणीमनुप्रपद्य तैरेव करणैस्त्रिभि पूर्ववदपूर्वकरणक्षपकनामाश्लिष्य तत ऊर्ध्वं कषायाष्टक क्षय कृत्वा नपुसकवेद नाशमापाद्य स्त्रीवेदमुन्मील्य नोकषायषट्क पुवेदे प्रक्षिप्य क्षपयित्वा पुवेद क्रोधसज्वलने, क्रोधसंज्वलन मानसज्वलने मानसज्वलन मायासज्वलने, मायासज्वलन च लोभसज्वलने, सक्रमक्रमेण बादरकृष्टिविभागेन विलयमुपनीय, अनिवृत्तिबादरसापरायक्षपकभावमवाप्य, लोभसज्वलन तनूकृत्य सूक्ष्मसापरायक्षपकभावमनुभूय, निरवशेष मोहनीय निर्मूलकाष कषयित्वा क्षीणकषायतामधिरुह्य, अवतारितमोहनीयभार उपान्तिमे समये निद्राप्रचले प्रलयमुपनीय, पचाना ज्ञानावरणाना चतुर्णां दर्शनावरणाना पंचानामतरायाणा चान्तसमये समुपगम्य तदनतरं ज्ञानदर्शनस्वभाव केवलपर्यायमतर्क्यविभूतिविशेष नि सपत्नमवाप्य निरुपलेप कमलमिवामल. साक्षात्त्रि-

कालसर्वद्रव्यपर्यायस्वभावज्ञ सर्वत्राप्रतिहतदर्शन अवाप्तनिरवशेषपुरुषार्थ, जलधरनिरोधकालातीत स्वकिरणकलापसौम्यदर्शनस्तारकाधिपतिरिव ज्वलितमूर्ति केवली भवति ।

आह व्याख्यात प्रतिबंधविनिर्मुक्तसम्यक्त्वदर्शनानंतवीर्यसमन्वित केवल, तदात्मलाभश्च सकल-कर्मोच्छेदहेतुरभ्युपगत । अथ किंलक्षण कस्माच्च हेतोर्मोक्षो भवतीत्युभयमभिधीयतामित्यत्रोच्यते । तस्य खलु भगवत केवलपर्यायलब्धात्मलाभस्य विग्रहवत स्वप्रभावार्जितानंतवीर्यभाज पूर्वंदग्धकर्मचतुष्टयस्याऽप्रच्युतवेद्यगोत्रायुषश्च ।

## बंधहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्षः ॥१॥

**मिथ्यादर्शनादिहेत्वभावादभिनवकर्मादानाभावः ॥ १ ॥** मिथ्यादर्शनादीनां पूर्वोक्तानामेव कर्मास्रवहेतूना विरोधिकारणाभावात् कार्याभाव इत्यभिनवकर्मादानाभाव ।

**पूर्वोदितनिर्जराहेतुसान्निधाने चार्जितकर्मनिरासः ॥ २ ॥** पूर्वोदिताना निर्जराहेतूनां सन्निधानेऽर्जितस्य च कर्मणो निरासो भवति । ताभ्या बधहेत्वभावनिर्जराभ्यामिति हेतुलक्षणविभक्तिनिर्देश-स्ततो भवस्थितिहेतुसमीकृतशेषकर्मावस्थस्य युगपदात्यंतिक प्रत्येतव्य कृत्स्नकर्मविप्रमोक्षो मोक्ष ।

**आद्यभावादताभाव इति चेन्न दृष्टत्वादग्त्यबीजवत् ॥ ३ ॥** स्यान्मत कर्मबंधसंतानस्या-द्यभावादतेनाप्यस्य न भवितव्य, दृष्टविपरीतकल्पनाया प्रमाणाभावादिति तन्न किं कारण ? दृष्टत्वादन्त्य बीजवत् । यथा बीजांकुरसंतानेऽनादौ प्रवर्त्तमानेऽन्त्यबीजमग्निनोपहतांकुरशक्तिकमित्यतोऽस्य दृष्टस्तथा मिथ्यादर्शनादिप्रत्ययसापरायिकसंततावनादौ ध्यानानलनिर्दग्धे कर्मबीजे भवांकुरोत्पादाभावान्मोक्ष इति दृष्टमिदमपह्नोतुमशक्य । उक्त च,—

> दग्धे बीजे यथात्यत प्रादुर्भवति नांकुर ।
> कर्मबीजे तथा दग्धे न रोहति भवांकुर ॥ इति ॥

कृत्स्नस्य कर्मत्वेन क्षय कर्मक्षय, सतो द्रव्यस्य द्रव्यत्वेन विनाशो नास्ति कथ तर्हि ? पर्यायेण, तस्योत्पत्तिमरणादिनाशेन भवितव्य, तन्मुखेन द्रव्यमपि व्यय यातीति व्यपदिश्यते । तत पुद्गलद्रव्यस्य कारणवशात्कर्मत्वपर्यायमापन्नस्य तत्प्रत्यनीकहेतुसन्निधाने तत्पर्यायनिवृत्तौ तस्य क्षय इत्युपदेशो भवतीति युक्तमेतत् कृत्स्नकर्मक्षय इति ।

**भावसाधनो मोक्षशब्दो द्विविषयो विप्रयोगक्रियामात्रगतेः ॥ ४ ॥** मोक्ष असने इत्यस्य मोक्षण मोक्ष इति भावसाधन शब्दो द्विविषय मोक्तव्यमोचकापेक्षत्वात् । कुत ? विप्रयोगक्रियामात्रगते । कृत्स्नशब्देन कर्माष्टविध सद्बधोदयोदीरणचतुर्विधव्यवस्थ परिगृहीत तत्र बधोदयोदीरणाना क्षयविभागा गुणस्थानभेदेन निर्दिष्ट, सत्कर्मोच्छेदस्तु न प्रतिपादित स विव्रियते,—

**कर्माभावो द्विविधः यत्नसाध्योऽयत्नसाध्यश्चेति ॥ ५ ॥** तत्र चरमदेहस्य नरकतिर्यग्देवायुषामभावोऽयत्नसाध्य - असत्त्वात् । यत्नसाध्य इत उर्ध्वमुच्यते असयतसम्यग्दृष्ट्यादिषु चतुर्षु गुणस्थानेषु कस्मिंश्चिदनतानुबंधिक्रोधमानमायालोभमिथ्यात्वसम्यग्मिथ्यात्वसम्यक्त्वाख्यप्रकृतिसप्तकं[1] क्षपयन् शुभाध्यवसायनिशितपरशुपातेन निर्मूल विच्छिद्यते । निद्रानिद्राप्रचलाप्रचलास्त्यानगृद्धिनरकगतितिर्यग्गत्येकद्वित्रिचतुरिंद्रियजातिनरकगतितिर्यग्गतिप्रायोग्यानुपूर्व्यातपोद्योतस्थावरसूक्ष्मसाधारणसज्ञकाना षोडशाना प्रकृतीना पृतनां[2] युगपदनिवृत्तिबादरसापरायस्तेन समाधिचक्रेण विजयमवाप्नोति । तत पर कषायाष्टक नष्ट करोति स एव युगपन्नपुसकवेद स्त्रीवेदश्च क्रमेण तत्रैव क्षयमुपयाति, नोकषायषट्क चैकेनैव प्रहारेण निपातयति । तत पुवेदसज्वलनक्रोधमानमाया क्रमेण तत्रात्यतिक ध्वसनमास्कदति । लोभसज्वलन सूक्ष्मसापरायाते यात्यत । निद्राप्रचले क्षीणकषायवीतरागछद्मस्थस्योपान्तमे समये

---

१ कृतप्रक्षेपोय श्लोकस्तत्त्वार्थसारीय । २ सेनाया ।

चेन्नार्थवशान्छात्रगरीयस्त्वपरिहारार्थत्वाच्च । सवरानतरनिर्देशार्हेति चेच्चथैवाभिहिता "तपसा निर्जरा चेति" । अत एव गुप्तवाध्यवसान । इतरथा हि उभयहेतुत्वविपर्ययेण यत्र क्वचनाभिधान स्यात् ।

आह प्रक्लृप्ता निर्जरा मोक्षोऽभिधातव्य । स चानुपसप्राप्तकेवलज्ञानावस्थस्य नोपपद्यते । इत्यत केवलज्ञानमेव तावद्यथा भवति तथोपदेष्टव्यमित्युच्यते। नैतदपि भूयो निर्देशार्हं वेदितव्य कुतो यस्माद्ध्यानप्रकरणे व्याख्यात, —

## मोहक्षयाज्ज्ञानदर्शनावरणांतरायक्षयाच्च केवलं ॥ १ ॥

अथवा सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग इत्युपक्षिप्य लक्षणोत्पत्तिविषयनिबधनादिभिर्विशेषैर्दर्शनचारित्रे समर्थिते ज्ञान च प्रमाणस्वभाव पचविधमभ्युपेत्य तत्र चतुष्टयस्य लक्षणोत्पत्तिहेतुविषयनिबधा प्रकाशिता अत परमिद वक्तव्यमेवमुत्पद्यते केवलमिति अत्र ब्रूम —न वक्तव्य पुनर्यस्मात्पुरस्तादेव व्याख्यात सवरानिरुपादानीकृतसततिचारित्रध्यानाग्निप्रज्वलितेंधनमोहक्षयात् ज्ञानदर्शनावरणातरायक्षयाच्च केवल किमुत्पद्यत इत्युपदिष्टमिति वाक्यशेष ।

**वृत्तिप्रसंगो लघ्वर्थमिति चेन्न क्रमेण क्षयज्ञापनार्थत्वात् ॥ १ ॥** स्यान्मतमिह वृत्त्यानिर्देश कर्तव्य । मोहज्ञानदर्शनावरणातरायक्षयात्केवलमिति किमर्थो लघ्वर्थमिति तन्न किं कारण ? क्रमेण क्षयज्ञापनार्थत्वात् । प्रागेव मोहक्षयमुपनीयांतर्मुहूर्तं क्षीणकषायव्यपदेशमवाप्य ततो युगपद् ज्ञानदर्शनावरणातरायाणा क्षय कृत्वा केवलमवाप्नोति ।

**तत्क्षयहेतुः केवलोत्पत्तिरिति हेतुलक्षणविभक्तिनिर्देशः ॥ २ ॥** तत्क्षय केवलज्ञानोत्पत्ते र्हेतुरिति कृत्वा तदभिसबधावद्योतिकया हेतुलक्षणया विभक्त्या निर्देश क्रियते ।

**तत्क्षयः प्रणिधानविशेषात् ॥ ३ ॥** तेषा मोहादीना क्षयो भवति कुत ? प्रणिधानविशेषात् । परिणामविशेषादिति यावत् । तद्यथा—पूर्वोहितेन विधिना परमतपोविशेषै प्रशस्ताध्यवसायप्रकर्षात् विशुद्ध्यत शुभाभिमता प्रकृतय स्फीतीभवति । अप्रशस्ताश्च तत्र भूयो निलीयते । तत्र कश्चिद्वेदकसम्यग्दृष्टिरप्रमत्तगुणस्थाने सप्तप्रकृत्युपशमात् श्रेण्यारोहणाभिमुखश्चारित्रमोहमुपशमयितुमारभते । अपर - असयतसयतासयतप्रमत्तसयताप्रमत्तसयतगुणस्थानेषु कस्मिंश्चित्सप्तप्रकृती क्षयमुपनीय क्षायिकसम्यग्दृष्टिर्भूत्वा चारित्रमोहमुपशमयितुमुपक्रमते । ततोऽधाप्रवृत्तकरणमपूर्वकरणमनिवृत्तिकरण च कृत्वा उपशमश्रेणिमारुह्यापूर्वकरणोपशमकगुणस्थानव्यपदेशमनुभूय तत्राभिनवशुभाभिसधितनूकृतपापकर्मप्रकृतिस्थित्यनुभाग निवर्द्धितशुभकर्मानुभव, अनिवृत्तिवादरसापरायोपशमकगुणस्थानमधिरुह्य नपुसकवेदस्त्रीवेदनोकषायषट्कपुवेदाप्रत्याख्यानप्रत्याख्यानक्रोधद्वयमायाद्वयलोभद्वयकोधमानसज्वलनसज्ञिका प्रकृती क्रमेणोपशमय्य तत सूक्ष्मसापरायप्रथमसमये मायासज्वलने चोपशम गते सर्वमोहप्रकृत्युपशमात् उपशान्तकषायव्यपदेशभाग्भवति । आयुष क्षयात् म्रियते । अथवा पुनरपि कषायानुदीरयन् प्रतिनिवर्त्तते । स एव चान्यो वा विशुद्धाध्यवसायानुपरतोत्साह पूर्ववत् क्षायिकसम्यग्दृष्टिर्भूत्वा कर्मविशुध्या महत्या विशुध्यन् क्षपकश्रेणीमनुप्रपद्य तैरेव करणैस्त्रिभि पूर्ववदपूर्वकरणक्षपकतामधिश्लिष्य तत ऊर्ध्वं कषायाष्टक क्षय कृत्वा नपुसकवेद नाशमापाद्य स्त्रीवेदमुन्मूल्य नोकषायषट्क पुवेदे प्रक्षिप्य क्षपयित्वा पुवेद क्रोधसज्वलने, क्रोधसज्वलन मानसज्वलने मानसज्वलन मायासज्वलने, मायासज्वलन च लोभसज्वलने, सक्रमक्रमेण बादरकृष्टिविभागेन विलयमुपनीय, अनिवृत्तिवादरसापरायक्षपकभावमवाप्य, लोभसज्वलन तनूकृत्य सूक्ष्मसापरायक्षपकभावमनुभूय, निरवशेष मोहनीय निर्मूलकाष कषयित्वा क्षीणकषायतामधिरुह्य, अवतारितमोहनीयभार उपान्तमे समये निद्राप्रचले प्रलयमुपनीय, पचाना ज्ञानावरणाना चतुर्णां दर्शनावरणाना पचानामतरायाणा चान्तसमये समुपगम्य तदनंतर ज्ञानदर्शनस्वभाव केवलपर्यायमतर्क्यविभूतिविशेष नि सपत्नमवाप्य निरुपलेप कमलमिवामल साक्षात्त्रि-

कालसर्वद्रव्यपर्यायस्वभावज्ञ सर्वत्राप्रतिहतदर्शन अवाप्तनिरवशेषपुरुषार्थ, जलधरनिरोधकालातीतस्वकिरणकलापसौम्यदर्शनस्तारकाधिपतिरिव ज्वलितमूर्ति केवली भवति ।

आह व्याख्यात प्रतिबंधविनिर्मुक्तसम्यक्त्वदर्शनानन्तवीर्यसमन्वित केवल, तदात्मलाभश्च सकलकर्मोच्छेदहेतुरभ्युपगत । अथ किंलक्षण कस्माच्च हेतोर्मोक्षो भवतीत्युभयमभिधीयतामित्यत्रोच्यते । तस्य खलु भगवत केवलपर्यायलब्धात्मलाभस्य निग्रहवत स्वप्रभावार्जितानन्तवीर्यभाज पूर्वदग्धकर्मचतुष्टयस्याऽप्रच्युतवेद्यगोत्रायुष्कस्य ।

## बंधहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्षः ॥२॥

**मिथ्यादर्शनादिहेत्वभावादभिनवकर्मादानाभावः ॥ १ ॥** मिथ्यादर्शनादीनां पूर्वोक्तानामेव कर्मास्रवहेतूना विरोधिकारणाभावात् कार्याभाव इत्यभिनवकर्मादानाभाव ।

**पूर्वोदितनिर्जराहेतुसन्निधाने चार्जितकर्मनिरासः ॥ २ ॥** पूर्वोदिताना निर्जराहेतूनां सन्निधानेऽर्जितस्य च कर्मणो निरासो भवति । ताभ्या बंधहेत्वभावनिर्जराभ्यामिति हेतुलक्षणविभक्तिनिर्देशस्ततो भवस्थितिहेतुसमीकृतशेषकर्मावस्थस्य युगपदात्यंतिक प्रत्येतव्य कृत्स्नकर्मविप्रमोक्षो मोक्ष ।

**आद्यभावादंताभाव इति चेन्न दृष्टत्वादंत्यबीजवत् ॥ ३ ॥** स्यान्मत कर्मबंधसंतानस्याद्यभावादंतेनाप्यस्य न भवितव्य, दृष्टविपरीतकल्पनाया प्रमाणाभावादिति तन्न किं कारण ? दृष्टत्वादंत्यबीजवत् । यथा बीजांकुरसंतानेऽनादौ प्रवर्त्तमानेऽन्त्यबीजमग्निनोपहतांकुरशक्तिकमित्यतोऽस्य दृष्टतया मिथ्यादर्शनादिप्रत्ययसांपरायिकसंततावनादौ ध्यानानलनिर्दग्धे कर्मबीजे भवांकुरोत्पादाभावान्मोक्ष इति दृष्टमिदमपह्नोतुमशक्य । उक्त च,—

दग्धे बीजे यथात्यंत प्रादुर्भवति नांकुर ।
कर्मबीजे तथा दग्धे न रोहति भवांकुर ॥ इति ॥

कृत्स्नस्य कर्मत्वेन क्षय कर्मक्षय, सतो द्रव्यस्य द्रव्यत्वेन विनाशो नास्ति कथं तर्हि ? पर्यायेण, तस्योत्पत्तिमत्त्वाद्विनाशेन भवितव्य, तन्मुखेन द्रव्यमपि व्यय यातीति व्यपदिश्यते । तत पुद्गलद्रव्यस्य कारणवशात्कर्मत्वपर्यायमापन्नस्य तत्प्रत्यनीकहेतुसन्निधाने तत्पर्यायनिवृत्तौ तस्य क्षय इत्युपदेशो भवतीति युक्तमेतत् कृत्स्नकर्मक्षय इति ।

**भावसाधनो मोक्षशब्दो द्विविषयो विप्रयोगक्रियामात्रगतेः ॥ ४ ॥** मोक्ष असने इत्यस्य मोक्षण मोक्ष इति भावसाधन शब्दो द्विविषय मोक्तव्यमोचकापेक्षत्वात् । कुत ? विप्रयोगक्रियामात्रगते । कृत्स्नशब्देन कर्माष्टविध सद्बंधोदयोदीरणचतुर्विधव्यवस्थ परिगृहीत तत्र बंधोदयोदीरणाना क्षयविभागा गुणस्थानभेदेन निर्दिष्ट, सत्कर्मोच्छेदस्तु न प्रतिपादित स निश्चियते,—

**कर्माभावो द्विविधः यत्नसाध्योऽयत्नसाध्यश्चेति ॥ ५ ॥** तत्र चरमदेहस्य नरकतिर्यग्देवायुषामभावोऽयत्नसाध्य असत्त्वात् । यत्नसाध्य इत उर्ध्वमुच्यते असंयतसम्यग्दृष्ट्यादिषु चतुर्षु गुणस्थानेषु कस्मिंश्चिदनन्तानुबंधिक्रोधमानमायालोभमिथ्यात्वसम्यग्मिथ्यात्वसम्यक्त्वाख्यप्रकृतिसप्तकं क्षपितस्तन शुभाध्यवसायनिशितपरशुपातेन निर्मूल निच्छिद्यते । निद्रानिद्राप्रचलाप्रचलास्त्यानगृद्धिनरकगतितिर्यग्गत्येकद्वित्रिचतुरिंद्रियजातिनरकगतितिर्यग्गतिप्रायोग्यानुपूर्व्यातपोद्योतस्थावरसूक्ष्मसाधारणसंज्ञकाना षोडशाना प्रकृतीना पृतनाया युगपदनिवृत्तिबादरसांपरायस्तेन समाधिचक्रेण विजयमवाप्नोति । तत पर कषायाष्टक नष्ट करोति स एव युगपन्नपुंसकवेद स्त्रीवेदश्च क्रमेण तत्रैव क्षयमुपयाति, नोकषायषट्क चैकेनैव प्रहारेण निपातयति । तत पुंवेदसंज्वलनक्रोधमानमाया क्रमेण तत्रैवात्यंतिक ध्वंसनमास्कंदति । लोभसंज्वलन सूक्ष्मसांपरायांते यात्यंत । निद्राप्रचले क्षीणकषायवीतरागछद्मस्थस्योपान्तमे समये

१ कृतप्रक्षेपोय श्लोकस्तत्त्वार्थसारीय । २ सेनाया ।

प्रलयमुपव्रजत' । पंचानां ज्ञानावरणानां चतुर्णां दर्शनावरणानां पंचानामंतरायाणां च तस्यैवांत समये प्रक्षयो भवति । अन्यतरवेदनीयदेवगत्यौदारिकवैक्रियिकाहारकतैजसकार्माणशरीरबंधनपंचमघात संस्थानषट्कौदारिकवैक्रियिकाहारकशरीरांगोपांगषट्संहननपंचप्रशस्तवर्णपंचाप्रशस्तवर्णगंधद्वयपंचप्रशस्तरस-पंचाप्रशस्तरसस्पर्शाष्टकदेवगतिप्रायोग्यानुपूर्व्यागुरुलघूपघातपरघातोच्छ्वासप्रशस्तविहायोगत्यपर्याप्तकप्रत्येक-शरीरस्थिरास्थिरशुभाशुभदुर्भगसुस्वरदु स्वरानादेयायशस्कीर्तिनिर्माणनामनीचैर्गोत्राख्या द्वासप्ततिप्रकृतय. अयोगकेवलिन उपांत्यसमये विनाशमुपयांति । अन्यतरवेदनीयमनुष्यायुर्मनुष्यगतिपंचेंद्रियजाति-मनुष्यगतिप्रायोग्यानुपूर्व्यत्रसबादरपर्याप्तकशुभगादेययशस्कीर्तितीर्थकरनामोच्चैर्गोत्रसंज्ञिकानां त्रयोदशानां प्रकृतीनामयोगकेवलिनश्चरमसमये व्युच्छेदो भवति ।

आह किमासां पौद्गलिकीनामेव द्रव्यकर्मप्रकृतीनां निरासान्मोक्षोऽवसीयत उत भावकर्मणोऽपीत्यत्रोच्यते-

## औपशमिकादिभव्यत्वानां च ॥ ३ ॥

किं ? मोक्ष इत्यनुवर्तते ।

**भव्यत्वग्रहणमन्यपारिणामिकानिवृत्त्यर्थं ॥ १ ॥** अन्येषां जीवत्वादीनां पारिणामिकानां मोक्षावस्थायामनिवृत्तिज्ञापनार्थं भव्यत्वग्रहणं क्रियते । तेन पारिणामिकेषु भव्यत्वस्य औपशमिकादीनां च भावानामभावान्मोक्षो भवतीत्यवगम्यते । ननु च द्रव्यनिरासेऽभिहिते तन्निमित्तानां निवृत्तिरर्थादव गम्यत इति नार्थोनेन योगेन ? नैष दोष । नायमेकांत -निमित्तापाये नैमित्तिकानां निवृत्ति * अपि चार्थान्-गमेऽपि सिद्धे साक्षात्प्रतिपत्त्यर्थमिदमुच्यते-निस्पष्टार्थं वक्ष्यमाणलक्षणनिर्देशार्थं,

आह यद्यपवर्गो भावोपरते प्रतिज्ञायते ननु चौपशमिकादिभावनिवृत्तिवत् सर्वक्षायिकनिवृत्तौ अव्यपदेशो मुक्तस्य प्राप्नोतीति ? स्यादेतदेवं यदि विशेषो नोच्येत अस्ति तु विशेष इति अपवाद-विधानार्थमिदमुच्यते,—

## अन्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः ॥ ४ ॥

अन्यत्रशब्दोय वर्जनार्थो द्रष्टव्य , तन्निमित्त सिद्धत्वेभ्य इति विभक्तिनिर्देश । यथा-"अन्यत्र द्रोण भीष्माभ्यां सर्वे योद्धा पराङ्मुखा" इति ।

**अन्यशब्दप्रयोगे तद्विज्ञानमिति चेन्न स्वार्थिकत्वात् ॥ १ ॥** स्यान्मतमन्यशब्दप्रयोगे का विभक्तिर्विज्ञायते यथाऽन्यो देवदत्तादिति अन्यत्र शब्दोऽय तस्मान्निर्देशो नोपपद्यते इति तन्न । किं कारण ? स्वार्थिकत्वात् । स्वार्थिकोऽय त्र , केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्योऽन्यस्मिन्नयं विधिरिति ।

**अनंतवीर्यादिनिवृत्तिप्रसंग इति चेन्नात्रैवांतर्भावात् ॥ २ ॥** स्यादेतत्सम्यक्त्वादीनां चतुर्णां क्षायिकाणां सग्रहादितरेषां निवृत्तिरनंतवीर्यादीनां प्राप्नोतीति ? तन्न । किं कारणं ? अत्रैवांतर्भावात् ज्ञानदर्शनाविनाभाविनो ह्यनंतवीर्यादय अत्रैवांतर्भवंति । अनंतसामर्थ्यहीनस्यानंतावबोधवृत्त्यभावात् । ज्ञानमयत्वाच्च सुखस्येति ।

**बंधस्याव्यवस्थाश्वादिवदिति चेन्न मिथ्यादर्शनाद्युच्छेदे कार्यकारणनिवृत्तेः ॥ ३ ॥** स्यादेतद्यथाऽश्वादीनामेकस्मिन् बंध उच्छिन्नेऽपि पुनर्बंधांतरसद्भावादव्यवस्था तथा जीवस्यापि कस्मिं-श्चिद्बंधेऽपगतेऽपि बंधांतरप्रसंग इति तन्न । किं कारण ? मिथ्यादर्शनाद्युच्छेदे कार्यकारणनिवृत्ते' । पुन-र्बंधहेत्वभावाद्बंधाभाव ।

**पुनर्बंधप्रसंगो जानतः पश्यतश्च कारुण्यादिति चेन्न सर्वास्रवपरिक्षयात् ॥ ४ ॥** स्यादेतद्व्यसनार्णवे निमग्नं जगदशेषं जानत पश्यतश्च कारुण्यमुत्पद्यते ततश्च बंध इति तन्न । किं कारण

---

[illegible] । २ पुनर्वा ।

सर्वास्त्रवपरिक्षयात्। भक्तिस्नेहकृपास्पृहादीनां रागविकल्पत्वाद्वीतरागे न ते सन्तीति।

**अकस्मादिति चेदनिर्मोक्षप्रसङ्गः ॥ ५ ॥** यदि कारणमन्तरेणैव मुक्तस्य बन्धः कल्प्यते ननु अनिर्मोक्ष स्यात्। मुक्तिप्राप्त्यनन्तरमेव बन्धोपपत्ते ।

**स्थानवत्त्वात्पात इति चेन्नानास्रवत्वात् ॥ ६ ॥** स्यादेतत्स्थानवत्त्वान्मुक्तस्य पात प्राप्नोतीति ? तन्न। किं कारण ? अनास्रवत्वात्। आस्रववता हि यानपात्रस्याध पतन दृश्यते नचास्रवो मुक्तस्यास्ति।

**गौरवाभावाच्च ॥ ७ ॥** गौरववतो हि तालफलस्य तत्प्रतिबद्धवृन्तसंयोगाभावे पतन दृष्ट नागौरवस्याकाशस्य न च गौरवमस्ति मुक्तस्येति पाताभाव । यस्य हि स्थानवत्त्व पातकारण तस्य सर्वेषां पदार्थानां पात स्यात् स्थानवत्त्वाविशेषात्।

**परस्परोपरोध इति चेन्नावगाहनशक्तियोगात् ॥ ८ ॥** स्यान्मत अल्प सिद्धावगाह्य आकाशप्रदेशे आधार, आधेया सिद्धा अनन्ता तत परस्परोपरोध इति ? तन्न। किं कारण—अवगाहनशक्तियोगात्। मूर्तिमत्स्वपि नामानेकमणिप्रदीपप्रकाशेषु अल्पेऽप्यवकाशे न विरोध किमग ! पुनरमूर्तिषु अवगाहनशक्तियुक्तेषु ?

**तत एव जन्ममरणद्वंद्वोपनिपातव्याबाधाविरहात् परमसुखिनः ॥ ९ ॥** तत एवा मूर्तत्वादेवेत्यर्थ यस्य हि मूर्तिरस्ति तस्य तत्पूर्वक प्रीतिपरितापसबन्ध स्यात्, नचामूर्तानां मुक्तानां जन्ममरणद्वंद्वोपनिपातव्याबाधाऽस्ति, अतो निर्व्याबाधत्वात्परमसुखिनस्ते।

**न तस्यास्त्युपमानमाकाशपरिमाणवत् ॥ १० ॥** यथा परमाण्ववगाहक्षेत्रमारभ्य एकैकप्रदेशवृद्ध्या कल्प्यमान सातिशय क्षेत्रमाकाशपरिमाण पुनरिदमेनेत्युपमार्थकल्पनाभावात् अनुपमान तथा सुखशब्दार्थोऽपि प्रकर्षाप्रकर्षयोगात् ससारगत सात । मुक्तना पुन परमानन्तपरिमाणयोगान्निरतिशय इत्यनुपमान ।

**अनाकारत्वादभाव इति चेन्नातीतानन्तरशरीरानुविधायित्वात् ॥ ११ ॥** स्यादेतन्मुक्तानां परित्यक्तमूर्तीनामाकाराभावादभाव प्राप्नोतीति तन्न। किं कारण—अतीतानन्तरशरीरानुविधायित्वात्।

**शरीरानुविधायित्वे तदभावाद्विसर्पणप्रसंग इति चेन्न कारणाभावात् ॥ १२ ॥** स्यान्मत यदि शरीरानुविधायी जीवस्तदभावात्स्वाभाविकलोकाकाशप्रदेशपरिमाणत्वात्तावद्विसर्पण प्राप्नोतीति ? तन्न। कुत कारणाभावात्। पुनर्विसर्पणकारणाभावान्न विसर्पति।

**नामकर्मसबधात् सहरणविसर्पणधर्मत्व प्रदीपप्रकाशवत् ॥ १३ ॥** यथा प्रदीपप्रकाशोऽनवधृतपरिमाण शरावमानिकापवरकादिद्रव्योपष्टम्भान्महानल्पश्च भवति तथा नामकर्मसबन्धात्परिच्छिन्नपरिमाणोऽपि जीव सहरति विसर्पति च। तदभावान्न सहारो विसर्पण वा मुक्तस्य जीवस्य।

**मूर्तिमद्धर्म्यादिति चेन्नोभयलक्षणप्राप्तत्वात् ॥ १४ ॥** स्यान्मत मूर्त प्रदीपप्रकाश अमूर्तस्यात्मन सहरणविसर्पणधर्मत्वे साध्ये दृष्टान्तो नोपपद्यते इति ? तन्न। किं कारण ? उभयलक्षणप्राप्तत्वादुपयोगस्वलक्षणापेक्षयाऽमूर्त । बन्धपरिणामापेक्षया मूर्त । उक्त च—

> बध पडिएयत्त लक्खणदो हवदि तस्स णाणत्त
> तह्मा अमुत्तिभावो णेगतो होदि जीवस्स। इति।

तस्मात्कथचिन्मूर्तत्वोपपत्ते साम्यमेव दृष्टान्तेन।

**अनित्यत्वप्रसग इति चेन्न तावन्मात्रस्य निर्दिदिक्षितत्वाच्चन्द्रमुखीवत् ॥ १५ ॥** स्यादेतत्सहरणविसर्पणधर्मत्वादेव प्रदीपप्रकाशवदनित्यत्व प्राप्नोत्यात्मन इति ? तन्न। किं कारण ? तावन्मात्रस्य निर्दिदिक्षितत्वात्यथा चन्द्रमुखी कन्येति चन्द्रशब्दे गुणा या चासौ प्रियदर्शनता सा गम्यते तथा

प्रदीपप्रकाशेऽनित्यत्वादिषु बहुषु धर्मेषु सत्स्वपि संकोचविकाससाधर्म्यमात्रं विवक्षितं । सर्वसाधर्म्याच्च दृष्टांताभावप्रसंग ।

**सर्वथाभावो मोक्षः प्रदीपवदिति चेन्न साध्यत्वात् ॥ १६ ॥** स्यादेतद्यथा वर्तिस्नेहानलसन्निपाते प्रदीपोऽनुपरतवृत्त्या प्रवर्त्तमानस्तत्क्षयेण कांचिद्दिशं विदिशं वा गच्छति तत्रैवात्यंतं विनाशमुपयाति तथा कारणवशात्स्कंधप्रतिसंतानरूपेण प्रवर्तमानः स्कंधसमूहो जीवव्यपदेशभाक् क्लेशक्षयान्न कांचिद्दिशं विदिशं वा गच्छति तत्रैवात्यन्तं प्रलयमेतीति ? प्रदीपा एव हि पुद्गला पुद्गलजातिमजहत. परिणामवशान्मषीभावमापन्ना इति नात्यंतविनाश ।

**दृष्टत्वाच्च निगलादिवियोगे देवदत्ताद्यवस्थानवत् ॥ १७ ॥** यथा निगलादिद्रव्यवियोगे देवदत्तादीनामवस्थानं दृष्टं तथा बंधविप्रमोक्ष आत्मनावस्थेयमिति दृष्टमिदमपह्नोतुमशक्यमिति नाभावः ।

**यत्रैव कर्मविप्रमोक्षस्तत्रैवावस्थानमिति चेन्न साध्यत्वात् ॥ १८ ॥** स्यादेतद्यस्मिन्नेव देशे कर्मविप्रमोक्षस्तस्मिन्नेवावस्थानं प्राप्नोति पुनर्गतिकारणाभावादिति ? तन्न । किं कारणं ? साध्यत्वात् साध्यमेतत्तत्रैवावस्थातव्यमिति । बंधनाभावादनाश्रितत्वाच्च स्याद्गमनमिति ।

आह न तावदस्य बंधाभावेऽधोगतिर्गौरवाभावात् । नापि तिर्यग्गतिर्योगाभावात् तस्मात्प्राप्तमेतत्तत्रैवावस्थानं ततो लोकस्योपरि तदवस्थानकल्पनाव्यावृत्तिरित्युच्यते भवेदेव यद्यनभिमतदेशगतिनिमित्ताभाववत्तस्योर्ध्वगतिनिमित्तं न स्यात् । अस्ति च तत्तस्मादेकसमयेन हि निरस्तकर्मभारः पुरुषः —

## तदनंतरमूर्ध्वं गच्छत्यालोकांतात् ॥ ५ ॥

तदित्यनेन प्रकृतोऽर्थो निर्दिश्यते । कश्च प्रकृतः कृत्स्नकर्मविप्रमोक्षः । तस्यानंतरमूर्ध्वं गच्छति ।

**आङभिविध्यर्थः ॥ १ ॥** ईषदर्थादिषु दृष्टप्रयोगः आङिह विवक्षावशादभिविधौ वेदितव्यः । लोकस्यांतो लोकांतः आलोकांतादिति ।

आह—अनुपदिष्टहेतुकमिदमूर्ध्वगमनं कथमध्यवसातुं शक्यमित्यत्रोच्यते,—

## पूर्वप्रयोगादसंगत्वाद्बंधच्छेदात्तथागतिपरिणामाच्च ॥ ६ ॥

आह हेत्वर्थः पुष्कलोऽपि दृष्टांतसमर्थनमंतरेणाभिप्रेतार्थसाधनाय नालमित्यत्रोच्यते,—

## आविद्धकुलालचक्रवद्व्यपगतलेपालाबूवदेरंडबीजवदग्निशिखावच्च ॥७॥

**हेतुदृष्टांतानां यथासंख्यमभिसंबंधः ॥ १ ॥** पूर्वसूत्रे विहितानां हेतूनामत्रोक्तानां दृष्टांतानां च यथासंख्यमभिसंबंधो भवति । तद्यथा,—

**अपवर्गप्राप्तये बहुशः प्रणिधानादाविद्धकुलालचक्रवत् ॥ २ ॥** यथा कुलालप्रयोगापादितहस्तदंडचक्रसंयोगपूर्वकं भ्रमणमुपरतेऽपि तस्मिन्पूर्वप्रयोगादासंस्कारक्षयाद्भवति । एवं भवस्थेनात्मनापवर्गप्राप्तये बहुशः प्रणिधानात्तदभावेऽपि तदावेशपूर्वकं मुक्तस्य गमनमवसीयते । किं च,—

**असंगत्वान्मुक्तलेपालाबूद्रव्यवत् ॥३॥** यथा मृत्तिकालेपजनितगौरवमलाबूद्रव्यं जलेऽधः पतति तदेव क्लेदविश्लिष्टमृत्तिकाबंधनं लघु सदूर्ध्वमेव गच्छति तथा कर्मभाराक्रांतवशीकृत आत्मा तदावेशवशात्संसारे नियमेन गच्छति तत्संगविमुक्तो तूपर्येव याति ।

**अनियमप्रसंगो द्रव्यवदिति चेन्नोर्ध्वगौरवात् ॥ ४ ॥** स्यादेतद्यथा द्रव्यांतरसंसक्तो द्रव्योपरिधितस्तदभावेऽनियमेन पतति तथा कर्मसंगाभावेऽनियमेनात्मनोऽपि गमनं प्राप्नोतीति तन्न । किं कारणं ? ऊर्ध्वगौरवात् । ऊर्ध्वगौरवपरिणामो हि जीव उत्पतत्येव । किं च,—

**बंधच्छेदादेरंडबीजवत् ॥ ५ ॥** यथा बीजबंधकोशादिच्छेदादेरंडबीजस्य गतिर्दृष्टा तथा मनुष्यादिभवप्रापकगतिजातिनामादिसकलकर्मबंधच्छेदान्मुक्तस्य गतिरवसीयते । किं च,—

**तथागतिपरिणामाच्चाग्निशिखावत् ॥ ६ ॥** यथा तिर्यक्प्लवनस्वभावसमीरणसंबंधनिरुत्सुका प्रदीपशिखा स्वभावादुत्पतति तथा मुक्तात्माऽपि नानागतिविकारणकर्मनिवारणे सति ऊर्ध्वगतिस्वभावत्वादूर्ध्वमेवारोहति ।

**असंगत्वबंधच्छेदयोरर्थादविशेषादनुवादप्रसंग इति चेन्नाऽर्थान्यत्वात् ॥ ७ ॥** स्यादेतदसंगत्वबंधच्छेदयोर्नास्त्यर्थविशेष इति पौनरुक्त्यं प्राप्नोति—बध्नातिरपि व्यतिषंगे वर्तत इति ? तन्न । किं कारणं ? अर्थान्यत्वात् । अन्योन्यानुप्रवेशे सत्यविभागेनावस्थानं बंधः । परस्परप्राप्तिमात्रं संग इत्यस्त्यर्थविशेषः । तस्मात्क्रियाकारणधर्माधर्माभावेऽपि हेत्वन्तरान्मुक्तस्य गतिरभ्यनुज्ञायते ।

**नोदाहरणमलाबूर्मारुतावेशादिति चेन्न तिर्यग्गमनप्रसंगात् ॥ ८ ॥** स्यादेतदलाबूद्रव्यं मुक्तगमनसिद्धावुदाहरणं न भवति कुतः मारुतावेशादिति तन्न । किं कारणं ? तिर्यग्गमनप्रसंगात् । यदि मारुतावेशात्तस्य गमनं स्यात्तिर्यक्प्लवनधर्मत्वान्मरुतस्तिर्यग्गमनमेव स्यान्नोर्ध्वं ।

**ऊर्ध्वगत्यभावे तदभावप्रसंगोऽग्नेरौष्ण्याभावेऽभाववदिति चेन्न गत्यंतरनिवृत्त्यर्थत्वात् ॥ ९ ॥** स्यान्मतं यथोष्णस्वभावस्याग्नेरौष्ण्याभावेऽभावस्तथा मुक्तस्योर्ध्वगमनस्वभावस्तदभावेऽभावं प्राप्नोतीति चेन्न । किं कारणं ? गत्यन्तरनिवृत्त्यर्थत्वात् । तथा च मुक्तस्योर्ध्वमेव गमनं न दिगन्तरगमनमित्ययं स्वभावो नोर्ध्वं गमनमेवेति ।

**ऊर्ध्वज्वलनवद्वा ॥ १० ॥** यथोर्ध्वज्वलनस्वभावत्वेऽप्यग्नेर्वेगवद्द्रव्याभिघातात्तिर्यग्ज्वलनेऽपि नाऽग्नेर्विनाशो दृष्टस्तथा मुक्तस्योर्ध्वगतिस्वभावत्वेऽपि तदभावेऽभाव इति ।

अत्राह—ऊर्ध्वज्वलनस्वभावस्याग्नेर्वेगवदभिघातात्तिर्यग्ज्वलने सति विरोधादूर्ध्वज्वलनाभावो युक्तः । मुक्तस्य तु पुनः स्वभावगतिलोपहेत्वभावादूर्ध्वगत्युपरमोऽनुपपन्न इत्युच्यते लोकान्तान्नोर्ध्वगतिर्मुक्तस्य कुतः ?

## धर्मास्तिकायाभावात् ॥ ८ ॥

गत्युपग्रहकारणभूतो धर्मास्तिकायो नोपर्यस्तीत्यलोके गमनाभावः । तदभावे च लोकालोकविभागाभावः प्रसज्यते ।

किं पुनरेते परिनिर्वृत्ताः कार्मणशरीरोपशमकादिभावनिरूपणया पर्यायान्तरेण शक्या व्यपदेष्टुं, उतातीतव्यवहारा एव निर्धारयितव्या इत्युच्यते—शक्याः । कथं ? यस्मात्खलु ।

## क्षेत्रकालगतिलिंगतीर्थचारित्रप्रत्येकबुद्धबोधितज्ञानावगाहनांतरसंख्याल्पबहुत्वतः साध्याः ॥ १० ॥

**प्रत्युत्पन्नभूतानुग्रहतंत्रनयद्वयापेक्षया क्षेत्रादिभिः साध्याः सिद्धाः ॥ १ ॥** एते क्षेत्रादिभिरल्पबहुत्वान्तैर्द्वादशभिरनुयोगद्वारैः प्रत्युत्पन्नभूतानुग्रहतंत्रनयद्वयापेक्षया साध्याः चिंत्याः विकल्प्याः । के पुनस्ते ? सिद्धाः । तथा क्षेत्रेण तावत्—कस्मिन् क्षेत्रे सिध्यति ?

**सिद्धिक्षेत्रे कर्मभूमिषु वा ॥ २ ॥** सिद्धिक्षेत्रे कर्मभूमिषु वा प्रत्युत्पन्नविषयग्राहिनयार्पणेन सिद्धिक्षेत्रे स्वप्रदेशे, आकाशप्रदेशे वा सिद्धिर्भवति । भूतानुग्रहतंत्रनयविवक्षायां जन्म प्रति पंचदशसु कर्मभूमिषु संहरणं प्रति मानुषक्षेत्रे सिद्धिः । ऋजुसूत्रनयः शब्दभेदाश्च त्रयः प्रत्युत्पन्नविषयग्राहिणः शेषा नया उभयभावविषयाः ।

कालेन—कस्मिन्काले सिद्धिः—एकसमये उत्सर्पिण्यवसर्पिण्योर्वा विशेषेण प्रत्युत्पन्ननयापेक्षया एकसमये सिध्यन् सिद्धो भवति । भूतप्रज्ञापननयार्पणया द्वेधा जन्मतः संहरणतश्च । तत्र जन्मतः अविशेषेण उत्सर्पिण्यवसर्पिण्योर्जातः सिद्ध्यति । विशेषेणावसर्पिण्यां सुखमदुःखमायाः अंते भागे दुःखमसुखमायां च जातः सिद्ध्यति । दुःखमसुखमायां जातः दुःखमायां सिद्ध्यति न तु दुःखमायां

सिद्ध्यति। संहरणतः सर्वस्मिन्काले अवसर्पिण्यामुत्सर्पिण्यां च सिद्ध्यति।

गत्या—कस्यां गतौ सिद्धिः? सिद्धिगतौ मनुष्यगतौ वा विशेषः। प्रत्युत्पन्ननयाश्रयेण न सिद्धिगतौ सिद्ध्यति। भूतविषयनयापेक्षया द्विधा कल्पना अनंतरगतौ एकांतरगतौ च। तत्रानंतरगतौ मनुष्यगतौ सिद्ध्यति। एकांतरगतौ चतसृषु गतिषु जातः सिद्ध्यति।

लिंगेन—केन चित्सिद्धः। लिंगं त्रिविधो वेदः। अवेदत्वेन त्रिभ्यो वा वेदेभ्यः सिद्धिः। वर्तमानविषयविवक्षायामवेदत्वेन सिद्धिर्भवति। अतीतगोचरनयापेक्षया अविशेषेण त्रिभ्यो वेदेभ्यः सिद्धिर्भवति। भावं प्रति, न तु द्रव्यं प्रति। द्रव्यापेक्षया तु पुल्लिंगेनैव सिद्धिः। अपरः प्रकारः-लिंगं द्विविधं निर्ग्रंथलिंगं सग्रंथलिंगं चेति। तत्र प्रत्युत्पन्ननयाश्रयेण निर्ग्रंथलिंगेन सिद्ध्यति। भूतविषयनयादेशेन तु भजनीयं। तीर्थेन-

**तीर्थसिद्धिर्द्वेधा तीर्थकरेतरविकल्पात्॥३॥** तीर्थसिद्धिर्द्वेधा भवति-तीर्थकरत्वेनेतरत्वेन च। सति केचित्तीर्थकरे सिद्धाः अपरेऽन्यथा सिद्धा असति चेति। चारित्रेण केन सिद्ध्यति। अव्यपदेशेनैकचतुःपंचविकल्पचारित्रेण वा सिद्धिः। प्रत्युत्पन्नाश्च ते हि नयनशात्र चारित्रेण व्यपदेशविरहितेन भावेन सिद्धिः। भूतपूर्वगतिर्द्विधा अनंतरव्यवहितभेदात्। आनंतर्येण यथाख्यातचारित्रेण सिद्ध्यति व्यवधानेन चतुर्भिः पंचभिर्वा। चतुर्भिस्तावत्—सामायिकच्छेदोपस्थापनासूक्ष्मसांपराययथाख्यातचारित्रैः। पंचभिस्तैरेव परिहारविशुद्धिचारित्राधिकैः।

स्वशक्तिपरोपदेशनिमित्तज्ञानभेदात् प्रत्येकबुद्धबोधितविकल्पः। केचित्प्रत्येकबुद्धसिद्धाः। परोपदेशमनपेक्ष्य स्वशक्त्यैवाविर्भूतज्ञानातिशयाः। अपरे बोधितबुद्धसिद्धाः, परोपदेशपूर्वकज्ञानप्रकर्षास्कंदिनः। ज्ञानेन-एकेन द्वित्रिचतुर्भिश्च ज्ञानविशेषैः सिद्धिः। प्रत्युत्पन्नग्राहिनयनिरूपणया केवलज्ञानेनैकेन सिद्धिर्भवति। भूतपूर्वगत्या तु द्वाभ्यां त्रिभिश्चतुर्भिश्च ज्ञानविशेषैर्भवति। द्वाभ्यां—मतिश्रुतज्ञानाभ्याम्—त्रिभिर्मतिश्रुतावधिभिः मतिश्रुतमनःपर्ययैर्वा। चतुर्भिर्मतिश्रुतावधिमनःपर्ययैः।

**अवगाहनं द्विविध-उत्कृष्टजघन्यभेदात् ॥ ४ ॥** आत्मप्रदेशव्यापित्वमवगाहनं द्विविधं। उत्कृष्टं जघन्यं चेति। तत्रोत्कृष्टं पंचधनुःशतानि पंचविंशत्युत्तराणि। जघन्यमर्द्धचतुर्थारत्नयः देशोनाः। मध्ये विकल्पाः एतस्मिन्नवगाहे सिद्ध्यति पूर्वभावप्रज्ञापननयापेक्षया। प्रत्युत्पन्नभावप्रज्ञापनेन तु एतस्मिन्नेव देशोने। किमंतरं सिद्ध्यतां। अनंतरं च सिद्ध्यति सांतरं च।

**अनंतरं जघन्येन द्वौ समयौ उत्कर्षेणाष्टौ ॥ ५ ॥** आनंतर्येण जघन्येन द्वौ समयौ सिद्ध्यति उत्कर्षेणाष्टौ।

**सांतरं जघन्येनैकः समयः उत्कर्षेण षण्मासाः ॥ ६ ॥** सिद्ध्यतां सिद्धिविरहकालोऽतरं जघन्येनैकः समयः। उत्कर्षेण षण्मासाः प्रत्येतव्याः।

**जघन्येन एकःउत्कर्षेण अष्टशतमिति संख्या ॥ ७ ॥** एकसमये कति सिद्ध्यन्ति। जघन्येनैकः उत्कर्षेणाष्टशतमिति संख्यावगंतव्या एवं गम.

**क्षेत्रादिभिरभिन्नानां परस्परतः ॥३॥** यथा मृत्तिकालेपबहुत्वं ॥ ८ ॥ क्षेत्रादिभिरेकादशभि-
द्रेष छेदविश्लिष्टमृत्तिकालेपेन लघु सदूर्ध्वमेव गच्छति तथा त्युत्पन्ननयापेक्षया सिद्धिक्षेत्रे सिद्ध्यतीति-
नियमेन गच्छति तत्संगविमुक्तौ तूर्ध्वेन याति। । जन्मतः संहरणतश्च तत्राल्पे संहरणसि-
**धियमप्रसंगोदंडवदिति चेन्नोऽगौरवात् ॥ ९ ॥** लोकसिद्धाः संख्येयगुणाः। तिर्यग्लो

अनुत्सर्पिण्यवसर्पिणीसिद्धा सङ्ख्येयगुणा । प्रत्युत्पन्ननयापेक्षया एकसमये सिद्ध्यतीति नास्त्यल्पबहुत्व ।

गतिं प्रति–प्रत्युत्पन्नभावप्रज्ञापननयस्य सिद्धिगतौ सिद्ध्यतीति नास्त्यल्पबहुत्व । भूतविषयनयापेक्षया वानन्तरगतौ मनुष्यगतौ सिद्ध्यतीति नास्त्यल्पबहुत्व । एकान्तरगतौ तु अल्पबहुत्वमस्ति । सर्वत स्तोकास्तिर्यग्योन्यनन्तरगतिसिद्धा । मनुष्ययोन्यनन्तरगतिसिद्धा सङ्ख्येयगुणा । नरकयोन्यनन्तरगतिसिद्धा सङ्ख्येयगुणा । देवयोन्यनन्तरगतिसिद्धा सङ्ख्येयगुणा इति ।

वेदानुयोगे—प्रत्युत्पन्ननयाश्रयणे अवेदा सिद्ध्यतीति नास्त्यल्पबहुत्व । भूतविषयनयाश्रयणे तु सर्वत स्तोका नपुसकवेदसिद्धा । स्त्रीवेदसिद्धा सङ्ख्येयगुणा । पुवेदासिद्धा सङ्ख्येयगुणा ।

तीर्थानुयोगे—तीर्थकरसिद्धा सङ्ख्येयगुणा ।

चारित्रानुयोगे प्रत्युत्पन्ननयापेक्षया अव्यपदेशेन सिद्ध्यतीति नास्त्यल्पबहुत्व । भूतविषयनयाश्रयणे *चानन्तरचारित्रपरिग्रहे यथाख्यातचारित्रा सर्वे सिद्ध्यतीति नास्त्यल्पबहुत्व । व्यवधाने पञ्चचारित्रसिद्धा ।* अल्पे चतुश्चारित्रसिद्धा सङ्ख्येयगुणा ।

प्रत्येकबुद्धबोधितबुद्धानुयोगे—अल्पे प्रत्येकबुद्धा बोधितबुद्धा सङ्ख्येयगुणा ।

ज्ञानानुयोगे—प्रत्युत्पन्नभावप्रज्ञापनस्य केवलेन सिद्ध्यतीति नास्त्यल्पबहुत्व । पूर्वभावप्रज्ञापनस्य सर्वस्तोका द्विज्ञानसिद्धा चतुर्ज्ञानसिद्धा सङ्ख्येयगुणा । त्रिज्ञानासिद्धा सङ्ख्येयगुणा । एव तावदविशेषेण विशेषेण च सर्वस्तोका । मतिश्रुतमन पर्ययज्ञानसिद्धा मतिश्रुतज्ञानसिद्धा सङ्ख्येयगुणा । मतिश्रुतावधिमन पर्ययज्ञानसिद्धा सङ्ख्येयगुणा । मतिश्रुतावधिज्ञानसिद्धा सङ्ख्येयगुणा इति ।

अवगाहनानुयोगे—सर्वस्तोका जघन्यावगाहनसिद्धा । उत्कृष्टावगाहनासिद्धा सङ्ख्येयगुणा । एव मध्यसिद्धा सङ्ख्येयगुणा ।

अथाधस्तादयवमध्यांतरसिद्धा सङ्ख्येयगुणा । उपरि यवमध्यांतरसिद्धा विशेषाधिका ।

सङ्ख्यानुयोगे–सर्वस्तोका अष्टोत्तरशतसिद्धा । अष्टोत्तरशतसिद्धादय आपञ्चाशत्सिद्धेभ्य अनन्तगुणा एकान्नपञ्चाशत्सिद्धादय आपञ्चविंशतिसिद्धेभ्य असङ्ख्येयगुणा । चतुर्विंशतिसिद्धादय आ एकसिद्धेभ्य सङ्ख्येयगुणा । एव निसर्गाधिगमयोरन्यतरजतत्त्वार्थश्रद्धानात्मक शङ्काद्यतीचारविमुक्त, प्रशमसवेगानुकम्पास्तिक्याभिव्यक्तिलक्षण विशुद्ध सम्यग्दर्शन । सम्यग्दर्शनोपलम्भविशुद्ध च ज्ञानमधिगम्य, निक्षेपप्रमाणनिर्देशसत्सङ्ख्यादिभिरभ्युपायैर्जीवानां पारिणामिकौदयिकौपशमिकक्षायोपशमिकक्षायिकाणा भावाना स्वतत्त्व विदित्वा चेतनाना भोगसाधनानामुत्पत्तिप्रलयस्वभावावगमात् विरक्तो वितृष्णस्त्रिगुप्त पञ्चसमितो दशलक्षणधर्मानुष्ठानात्तत्फलदर्शनाच्च । *निर्वाणप्राप्तियतनायाभिवर्द्धितश्रद्धासवेगभावनाविभावितात्मा अनुप्रेक्षाभि स्थिरीकृतानभिष्वग सवृतात्मा निरास्रवत्वाद्व्यपगताभिनवकर्मोपचय परीषहजयाद्बाह्याभ्यन्तरतपोनुष्ठानादनुभवनाच्च* । सम्यग्दृष्टिविरताविरताना च जिनवर्यैतानां परिणामाध्यवसानविशुद्धिस्थानान्तराणामसङ्ख्येयगुणोत्कर्षप्राप्त्या पूर्वोपचित कर्म निर्जरयन् सामायिकादीनां च सूक्ष्मसांपरायान्ताना सयमविशुद्धिस्थानानामुत्तरोत्तरोपलम्भात्पुलाकादीनां च निर्ग्रन्थाना सयमानुपालनविशुद्धिस्थानविशेषाणामुत्तरोत्तरप्रतिपत्त्या घटमानास्यत्प्रहीणार्त्तरौद्रध्यानो, धर्म्यध्यानविजयादवाप्तसमाधिबल , शुक्लध्यानविकल्पयोश्च पृथक्त्वैकत्ववितर्कयोश्चान्यतरस्मिन् वर्तमानो नानाविधपूर्वोदितर्द्धिविशेषयुक्त , तत्रानभिष्वक्तचित्त , पूर्वोदितन क्रमेण मोहादीन् क्षय नीत्वा सर्वज्ञज्ञानलक्ष्मीमनुभूय, तत शेषकर्मक्षयाद्बन्धनिर्मुक्त निर्दग्धपूर्वोपादानेंधनो निरुपादान इवाग्नि , पूर्वोपात्तभववियोगात् हेत्वभावाच्चोत्तरस्याप्रादुर्भावाच्छांतससारदु खमतीत्य आत्यन्तिकमैकान्तिक निरुपम निरतिशय निर्वाणसुखमवाप्नोतीति तत्त्वार्थभावनाफलमेतत् । उक्त च—

१ पद्यप्रमितिरिय श्रीमदमृतचन्द्रसूरिविरचिततत्त्वार्थसारीयमोक्षतत्त्वप्रकरणस्था प्रकृतानुषा न तु ग्रन्थकर्तृभिरुद्धृता सांप्रतिकोपलब्धाविर्णीतितिवृत्तेन तत्त्वार्थराजवार्तिककर्तृत्वस्य निर्धारकत्वत विभाव्यते ।

सम्यक्त्वज्ञानचारित्रसयुक्तस्यात्मनो भृश । निरास्रवत्वाच्छिन्नायां नवायां कर्मसततौ ॥ १ ॥
पूर्वार्जित क्षपयतो यथोक्तै. क्षयहेतुभि' । ससारबीज कात्स्न्येन मोहनीय प्रहीयते ॥ २ ॥ युग्म ।
ततोंतरायज्ञानघ्नदर्शनघ्नान्यनतर । प्रहीयतेऽस्य युगपत्त्रीणि कर्माण्यशेषत ॥ ३ ॥
गर्भसूच्या विनष्टाया यथा तालो विनश्यति । तथा कर्मक्षय याति मोहनीये क्षय गते ॥ ४ ॥
तत क्षीणचतु कर्मा प्राप्तोऽथाख्यातसयम । बीजबधननिर्मुक्त स्नातक परमेश्वर ॥ ५ ॥
शेषकर्मफलापेक्ष शुद्धो बुद्धो निरामय । सर्वज्ञ सर्वदर्शी च जिनो भवति केवली ॥ ६ ॥
कृत्स्नकर्मक्षयादूर्ध्व निर्वाणमधिगच्छति । यथा दग्धेंधनो वह्निर्निरुपादानसतति ॥ ७ ॥
दग्धे बीजे यथात्यत प्रादुर्भवति नाकुर । कर्मबीजे तथा दग्धे न रोहति भवाकुर ॥ ८ ॥
तदनतरमेवोर्ध्वमालोकातात्स गच्छति । पूर्वप्रयोगासगत्वाद्बधच्छेदोर्ध्वगौरवै ॥ ९ ॥
कुलालचक्रडोलायामिषौ चापि यथेष्यते । पूर्व प्रयोगात्कर्मेह तथा सिद्धगति स्मृता ॥ १० ॥
मृल्लेपसगनिर्मोक्षाद्यथा दृष्टाप्स्वलाबुन । कर्मसंगविनिर्मोक्षात्तथा सिद्धगति स्मृता ॥ ११ ॥
एरडस्फुटदेलासु बधच्छेदाद्यथा गति । कर्मबधनविच्छेदाज्जीवस्यापि तथेष्यते ॥ १२ ॥
ऊर्ध्वगौरवधर्माणो जीवा इति जिनोत्तमै. । अधोगौरवधर्माण पुद्गला इति चोदित ॥ १३ ॥
यथाधस्तिर्यगूर्ध्व च लोष्टवाय्वग्निवीचय । स्वभावतः प्रवर्तंते तथोर्ध्वगतिरात्मना ॥ १४ ॥
अतस्तु गतिवैकृत्य तेषा यदुपलभ्यते । कर्मण प्रतिघाताच्च प्रयोगाच्च तदिष्यते ॥ १५ ॥
अधस्तिर्यक्तथोर्ध्व च जीवाना कर्मजा गति । ऊर्ध्वमेव स्वभावेन भवति क्षीणकर्मणा ॥ १६ ॥
द्रव्यस्य कर्मणो यद्वदुत्पत्त्यारभवीचय । सम तथैव सिद्धस्य गतिर्मोक्षे भवक्षयात् ॥ १७ ॥
उत्पत्तिश्च विनाशश्च प्रकाशतमसोरिह । युगपद्भवतो यद्वत्तद्वन्निर्वाणकर्मणो ॥ १८ ॥
तन्वी मनोज्ञा सुरभि पुण्या परमभासुरा । प्राग्भारानामवसुधा लोकमूर्ध्नि व्यवस्थिता ॥ १९ ॥
त्रिलोकतुल्यविष्कभा सितच्छत्रनिभा शुभा । ऊर्ध्व तस्या क्षिते सिद्धा लोकाते समवस्थिता ॥२०॥
तादात्म्यादुपयुक्तास्ते केवलज्ञानदर्शने । सम्यक्त्वसिद्धतावस्था हेत्वभावाच्च निष्क्रिया ॥ २१ ॥
ततोऽप्यूर्ध्वगतिस्तेषा कस्मान्नास्तीति चेन्मति । धर्मास्तिकायस्याभावात्स हि हेतुर्गते पर ॥ २२ ॥
ससारविषयातीत सिद्धानामव्यय सुख । अव्याबाधमिति प्रोक्त परम परमर्षिभि ॥ २३ ॥
स्यादेतदशरीरस्य जतोर्नष्टाष्टकर्मण । कथ भवति मुक्तस्य सुखमित्युत्तर शृणु ॥ २४ ॥
लोके चतुर्ष्विहार्थेषु सुखशब्द प्रयुज्यते । विषये वेदनाभावे विपाके मोक्ष एव च ॥ २५ ॥
सुखो वह्नि सुखो वायुर्विषयेष्विह कथ्यते । दु खाभावे च पुरुष सुखितोऽस्मीति भाषते ॥ २६ ॥
पुण्यकर्मविपाकाच्च सुखमिष्टेंद्रियार्थज । कर्मक्लेशविमोक्षाच्च मोक्षे सुखमनुत्तम ॥ २७ ॥
सुषुप्तावस्थया तुल्या केचिदिच्छति निर्वृर्ति । तदयुक्त क्रियावत्त्वात्सुखातिशयतस्तथा ॥ २८ ॥
श्रमक्लमभदव्याधिमदनेभ्यश्च सभवात् । मोहोत्पत्तिविपाकाच्च दर्शनघ्नस्य कर्मण ॥ २९ ॥
लोके तत्सदृशोह्यर्थ कृत्स्नेऽप्यन्यो न विद्यते । उपमीयेत तद्येन तस्मान्निरुपम स्मृत ॥ ३० ॥
लिंगप्रसिद्धे प्रामाण्यमनुमानोपमानयो । अत्यत वा प्रसिद्ध च तत्तेनानुपम स्मृत ॥ ३१ ॥
प्रत्यक्ष तद्भगवतामर्हता तै प्रभाषित । गृह्यतेऽस्तीत्यत प्राज्ञैर्न छद्मस्थपरीक्षया ॥ ३२ ॥

इति तत्त्वार्थराजवार्तिकव्याख्यानालकारे दशमोऽध्याय समाप्त ॥ १० ॥

इति श्रीतत्त्वार्थराजवार्तिक समाप्त ।

---

१ एवं तत्त्वपरिज्ञानाद्विरक्तस्यात्मनो भृशमिति त्रिसपाठातर ।

# राजवार्तिकस्य शुद्ध्यशुद्धिपत्रं ।

| अशुद्ध्य | शुद्ध्य | पृ सं | प सं |
|---|---|---|---|
| उष्णत्व कुत | उष्णत्वमिति चेत् उष्णत्वस्योष्णत्व कुत | ४ | २४ |
| माभूदिति | अथानवस्था माभूदिति | ,, | २५ |
| सवधेनोष्णत्व | सनधे नोष्णत्व | ,, | ३२ |
| तत्त्वभवेन | तत्त्व भावेन | ५ | ८ |
| तथा समवाय | तथा समवायः | ,, | १६ |
| इद्रियादिव्यपदेशवत् | इद्रादिव्यपदेशवत् | ६ | ३० |
| लक्षणमाव | लक्षणाभाव | ७ | ३ |
| छात्रस्य | दात्रस्य | ,, | ८ |
| पुष्पः | पुष्यः | ,, | १४ |
| दृश्यते | दृश्यते | ,, | ,, |
| मोक्षापाय | मोक्षोपाय | ८ | ६ |
| अनुपपपत्तिः | अनुपपत्तिः | ,, | २२ |
| भवति | भवत्यधर्मेण | ,, | २८ |
| यतः | यतेः | ९ | ५ |
| अनुत्पत्तित् | अनुत्पत्ति | ,, | १३ |
| विद्या | अविद्या | ,, | २२ |
| चत्वार | चत्वार स्कधा | ,, | २६ |
| अभिनदयाति | अभिनदयति | ,, | ३३ |
| दुःखदर्शन | दुःखेष्वनित्यानात्मकाशुचिषु खदर्शन | ,, | ३८ |
| शरीरेंद्रियनिवृत्तेः | शरीरेंद्रियवृत्त्यादिनिवृत्ते | १० | २८ |
| उभयादोपोपपत्तेः | उभयथा दोपोपपत्तेः | ,, | ३३ |
| प्रागननुभूतविशेषात् | प्रागननुभूताविशेषात् | ११ | १६ |
| तक्षणभेदात् | लक्षणभेदात् | १२ | १० |
| त्रयः । | त्रय । किंच- | ,, | २४ |
| प्रतिवादिनो | न प्रतिवादिनो | ,, | २५ |
| अतत्त्वात् | असत्त्वात् | १५ | १८ |
| सम्यग्दर्शनादिव | सम्यग्दर्शनादेरिव | १७ | ९ |
| इति | इति अतोविवक्षितापरिज्ञानान्न सम्यगुक्त अधिगमाभाव इति | ,, | १४ |
| वचनविकल्पापेक्षया | वचनविकल्पापेक्षया सख्येयासख्येया ज्ञानज्ञेयविकल्पापेक्षया | ,, | ३३ |
| पर्यायार्थिकप्रधान्यात् | पर्यायार्थिकप्राधान्यात् | १८ | १९ |
| अजीवात् | अजीवत् | ,, | २५ |
| निर्जीयते | निर्जीर्यते | ,, | ३५ |
| अभावा | अभावो० | १९ | ५ |
| प्रत्ययोऽपनीताना | प्रत्ययोपनीताना | ,, | १७ |
| पूर्वोक्तनाऽ | पूर्वोक्ताना | ,, | २१ |
| विरोधाऽसत्त्वात् | विरोधोऽसत्त्वात् | २२ | २६ |
| शब्दादिना | शब्दाद्विना | २३ | २९ |
| निस्सोपातीति | विशेपातीति | ,, | ३३ |
| योजयित्व्या | योजयितव्या | २५ | २८ |
| युक्तागमाभ्या | युक्त्यागमाभ्या | २६ | २ |
| पितृपुत्रादिसवधवत्, | पितापुत्रादिसबधवत्, | ,, | २५ |
| देवदत्तस्यैकत्वे न, | देवदत्तस्यैकत्वेन | ,, | २९ |
| धर्मविकल्पप्रतिपति० | स्वामित्वादिका धर्मविकल्पप्रतिपत्ति | २७ | २१ |
| तैरेव भावाधिकै | तैरेव भवाधिकै- | २९ | ४ |

| अशुद्धयः | शुद्धय | पृ सं | पं सं. |
|---|---|---|---|
| निर्जरात्मैव वा | निर्जरात्मैव वा स्थितिर्जघन्येनैकसमय ,उत्कर्षेण मुहूर्त ,सादि सपर्यवसाना वा | ,, | १२ |
| सख्येयानंतविकल्प | सख्येयासंख्येयानतविकल्प | ,, | २० |
| पृथग्गृहण | पृथगगृहण | ३१ | ८ |
| घटक्षेत्रे | घटक्षेत्र | ,, | १३ |
| श्रुते | श्रुतं | ३२ | ३ |
| विशेषात् | विशेषान् | ,, | १७ |
| कार्याश्रयान् | कायाश्रयान् | ,, | १८ |
| मतेमेतत् | मतमेतत् | ३३ | २ |
| फारण | करण | ,, | १० |
| निमित्तत्वा० | निमित्तत्वादतःकरण निमित्तत्वा० | ३५ | ३ |
| तर्हि ? | किं तर्हि ? | ,, | १० |
| श्रुत्वावधावणात् | श्रुत्वावधारणात् | ,, | १४ |
| अधिगमोपर्यर्यथात्वेन | अधिगमोपाययथात्वेन | ,, | १७ |
| प्रमाणव्यस्थाकल्पना | प्रमाणव्यवस्थाकल्पना | ,, | २८ |
| ज्ञात्वमा० | ज्ञादन्य | ३६ | १० |
| अन्यत्स्यात् । | अन्यत्स्यात्, अनवस्था स्यात् | ,, | १७ |
| अनवस्थास्यात्मकाशवदिति | प्रकाशवदिति | ,, | १८ |
| सभवति | संभवति चक्षुर्मनसोः प्राप्यकारित्वाभावात् | ३७ | ६ |
| वितर्कः | अर्पणा वितर्क | ,, | ३१ |
| सिक्तसेनमिति | सिद्धसेनमिति | ४१ | ७ |
| अभ्युष्णव | अभ्युष्णवत् | ,, | ३६ |
| निमित्तत्वादिति | निमित्तत्वात् | ४० | ६ |

| अशुद्धयः | शुद्धय | पृ सं | प. स |
|---|---|---|---|
| करणस्य वाभिधेयार्थत्वादथवा | इतिकरणस्य वाभिधेयार्थत्वात् | ,, | , |
| इति | अथवा–इति | ,, | ,, |
| द्रव्यता | द्रवता | ४३ | १४ |
| नत्ववग्रहः । | नत्ववग्रहः, निर्णयदर्शनात् | ,, | २४ |
| निर्णयदर्शनादीहायां | ईहायां | ,, | २५ |
| कस्मात् विशेषात् | कस्मादविशेषात् | ४४ | २२ |
| नत्वनेकेति | नन्वनेकेति | ,, | ३१ |
| यस्मैकेति | यस्यैकेति | ,, | ३४ |
| संशयोने | स्संशयो न | ,, | ३८ |
| प्रतिज्ञानिः | प्रतिज्ञाहानिः | ४५ | १० |
| सतेरग्रहणात् | सेतरग्रहणात् | ,, | १७ |
| शब्दमगृह्णाति | शब्दमवगृह्णाति | ,, | २८ |
| शाखाचद्रमसाम भिन्नेति | शाखाचद्रमसाव भिन्नोति | ४६ | १८ |
| व्यजनावगृह | व्यजनावगृहे | ४९ | २४ |
| शातिभद्रेति | शालिभद्रेति | ५१ | २७ |
| प्रपिपात्ति | प्रतिपत्ति | ५४ | १२ |
| शब्दमपि | शाब्दमपि | ,, | १३ |
| प्रकृतिपुरुष | प्रकृतपुरुष | ,, | १४ |
| अमयेषु | समयेषु | ५५ | २८ |
| तावद्सख्यातभेदेषु | तावदसख्यातभेदेषु | ,, | ,, |
| देशावधिक | प्रदेशावधिक | ५७ | २९ |
| विपुलमतेर्द्रव्येति | विपुलमतेर्द्रव्य | ५९ | २१ |
| द्रव्यपर्यायेति | द्रव्येति | ६० | १५ |
| कवलज्ञान | केवलज्ञान क्षायिक | ६३ | ५ |
| क्षीयिकत्वात् | क्षायिकत्वात् | ,, | २० |
| विभगज्ञामिति | विभगज्ञानमिति | ६४ | १ |
| यथा | तथा | ,, | २ |

| अशुद्धय | शुद्धय | पृ सं | प सं |
|---|---|---|---|
| अविशेषापात् | अविशेषात् | | |
| ननु | न तु | ६५ | १३ |
| नयमकाशितोऽर्थेति | नयमकाशितार्थेति | ,, | २१ |
| । कार्यं | कार्यं । | ,, | २८ |
| कचित् | काश्चित् | ,, | ३६ |
| द्रव्यत्वाविरोधात् | तदव्यतिरेकाचे नैकत्वेन संग्रहः जीवमिति वोक्ते जीवाजीवतद्भेदप्रभेदाना द्रव्यत्वाविरोधात् | ६६ | १५ |
| तत्वादिकार्यं | तत्वादिषु पटादि कार्यं | ६८ | ३१ |
| निवधा । दीनि | निबधादीनि | ६९ | २ |
| स्ते | ते | ,, | ७ |
| स्तथा | तथा | ,, | १३ |
| स्मात् | तस्मात् | ७० | ९ |
| दिनकरोतेजो० | दिनकरतेजो० | ७५ | ३१ |
| क्षयात् | क्षयात्,उपशमात्, | ७६ | ३४ |
| पर्यायवावमपि | पर्यायवत्त्वमपि | ७८ | १६ |
| पारिणामिकश्च | पारिणामिकत्वमिति औदयिक एकविंशतिभेदः पारिणामिकश्च | ,, | ३५ |
| सान्निपातिको | सान्निपातिको भाव उक्त , कस्य वा मिश्र शब्देनाक्षेप 'सान्निपातिकोभावो | ७९ | २२ |
| लक्ष्यलक्षणयोर्व्यतिरेकादित | लक्ष्यलक्षणयोर्व्यतिरेकादिति | ८३ | ७ |
| भवति | भवति अत्राह | ८७ | २७ |
| अत्राह तदभिसबंधे | तदभिसबधे | ,, | २८ |

| अशुद्धय | शुद्धय | पृ सं | प सं |
|---|---|---|---|
| अत्र सत्वमसंगात | अत्रसत्वमसगात् | ८८ | १३ |
| वाद्यमयेति | वाह्योभयेति | ,, | १५ |
| निर्वृत्येते । | निर्वृत्यते | ९० | २६ |
| उपदिश्यते सा० | उपदिश्यते | ,, | ,, |
| द्वेधा | सा द्वेधा | ,, | २७ |
| प्रथमत्व | पृथक्त्व | ९३ | २१ |
| सज्ञाना | सज्ञानाम | ९५ | ८ |
| निवृत्ति | निर्वृत्ति | ,, | २२ |
| तादार्थ्ये | तादर्थ्ये | ,, | २३ |
| पुद्गलाघानेति | पुद्गलादानेति | ,, | २४ |
| श्रेणिरानुपूर्व्यणानु | श्रेणेरानुपूर्व्ये | ९६ | ४ |
| श्रेणिरिति | णानुश्रेणि, इति | | |
| क्रियातरे | क्रियातर | ,, | ८ |
| विग्रहोऽस्याऽवि ग्रहेति | विग्रहोऽस्या अ विग्रहेति | ,, | १६ |
| मिश्रा | मिश्रा | ९९ | १ |
| प्रकृतापेक्षार्थं | प्रकृतापेक्षार्थं | ९९ | २१ |
| प सहास्राणि | षट् सहस्राणि | १०० | ३७ |
| गर्भ एवेति | गर्भ इति, अथ नियमार्थे आरभे सति जरायुजाण्डजपोताना गर्भ एवेति | १०१ | २३ |
| शरीरनामकर्मेति | शरीरनामकर्मेति | १०२ | ११ |
| आह्रियते | आह्रियते | ,, | २३ |
| मूर्त्यतरेण | मूर्त्यंतरेण | १०५ | ६ |
| भाज्यानि | स्यान्मत भाज्यानि | १०६ | ९ |
| सप्तविध | सप्तविधकाययोगस्वामिप्ररूपणायामौदारिककाययोगः औदारिकमिश्र० | १०८ | २० |
| अष्टपदेति | अष्टापदेति | ,, | २७ |
| तपोवलाना | प्रकृष्टतपोवलाना | ,, | ,, |
| प्रकर्ष | प्रकर्षापकर्ष | ,, | ३० |

| अशुद्धयः | शुद्धयः | पृ. सं | पं. सं |
|---|---|---|---|
| निर्जरात्मैव वा | निर्जरात्मैव वा स्थितिर्जघन्येनैकसमय..उत्कर्षेण मुहूर्त ,सादि सपर्यवसाना वा | ,, | १२ |
| संख्येयानंतविकल्प, | सख्येयासख्येयानतविकल्प | ,, | २० |
| पृथग्गृहण | पृथगगृहण | ३१ | ८ |
| घटक्षेत्रे | घटक्षेत्र | ,, | १३ |
| श्रुते | श्रुतं | ३२ | ३ |
| विशेपात् | विशेपान् | ,, | १७ |
| कार्याश्रयान् | कायाश्रयान् | ,, | १८ |
| मतेमेतत् | मतमेतत् | ३३ | २ |
| फारण | फरण | ,, | १० |
| निमित्तत्वा० | निमित्तत्वादतःफरण निमित्तत्वा० | ३५ | ३ |
| तर्हि ' | किं तर्हि ' | ,, | १० |
| श्रुत्वावधावणात् | श्रुत्वावधारणात् | ,, | १४ |
| अधिगमोपर्यये-थात्वेन | अधिगमोपाययथात्वेन | ,, | १७ |
| प्रमाणव्यस्था कल्पना | प्रमाणव्यवस्थाकल्पना | ,, | २८ |
| ज्ञास्वभा० | ज्ञादन्य' | ३६ | १० |
| अन्यत्स्यात् । | अन्यत्स्यात्, अनवस्था स्यात् | ,, | १७ |
| अनवस्थास्यात्प्र-काशवदिति | प्रकाशवदिति | ,, | १८ |
| संभवति | सभवति चक्षुर्मनसोः प्राप्यकारित्वाभावात् | ३७ | ६ |
| वितर्कः | अर्पणा वितर्क | ,, | ३१ |
| सिक्तसेनमिति | सिद्धसेनमिति | ४१ | ७ |
| अग्न्युष्णव | अग्न्युष्णवत् | ,, | ३६ |
| निमित्तत्वादिति | निमित्तत्वात् | ४० | ६ |

| अशुद्धयः | शुद्धयः | पृ. सं | प. स |
|---|---|---|---|
| करणस्य वाभिधेयार्थत्वादथवा | इतिकरणस्य वाभिधेयार्थत्वात् | ,, | , |
| इति | अथवा–इति | ,, | ,, |
| द्रव्यता | द्रवता | ४३ | १४ |
| नत्ववग्रहः । | नत्ववग्रहः, निर्णयदर्शनात् | ,, | २४ |
| निर्णयदर्शनादीहाया | ईहाया | ,, | २५ |
| कस्मात् विशेपात् | कस्मादविशेपात् | ४४ | २२ |
| नत्वनेकेति | नन्वनेकेति | ,, | ३१ |
| यस्मैकेति | यस्यैकेति | ,, | ३४ |
| संशयोने | रसंशयो न | ,, | ३८ |
| प्रतिज्ञानिः | प्रतिज्ञाहानिः | ४५ | १० |
| सतेरग्रहणात् | सेतरग्रहणात् | ,, | १७ |
| शब्दमगृह्णाति | शब्दमवगृह्णाति | ,, | २८ |
| शाखाचद्रमसाम | शाखाचद्रमसाव | | |
| भिन्नेति | भिन्नोति | ४८ | १८ |
| व्यजनावगृह | व्यजनावग्रहे | ४९ | २४ |
| शातिभद्रेति | शालिभद्रेति | ५१ | २७ |
| प्रपिपत्ति | प्रतिपत्ति | ५४ | १२ |
| शब्दमपि | शाब्दमपि | ,, | १३ |
| प्रकृतिपुरुप | प्रकृतपुरुप | ,, | १४ |
| अमयेपु | समयेपु | ५५ | २८ |
| तावदसख्यात-भेदेपु | तावदसख्यातभेदेपु | ,, | ,, |
| देशावधिक | प्रदेशावधिक | ५७ | २९ |
| विपुलमतेर्द्रव्येति | विपुलमतेर्द्रव्य | ५९ | २१ |
| द्रव्यपर्यायेति | द्रव्येति | ६० | १५ |
| कवलज्ञान | केवलज्ञान क्षायिक | ६२ | ५ |
| क्षीयिकत्वात् | क्षायिकत्वात् | ,, | २० |
| विभगज्ञामिति | विभगज्ञानमिति | ६४ | १ |
| यथा | तथा | ,, | २ |

| अशुद्धय | शुद्धय | पृ स | प स |
|---|---|---|---|
| पाणिपुटविक्षिप्त | पाणिपुटनिक्षिप्त | १४५ | ४ |
| ।विदिक्षु | विदिक्षु। | ,, | २० |
| प्रतरेषु | अतरेषु। | ,, | ,, |
| शिखिरिण-उभयारतयो | शिखरिण-उभयोरतयोः | ,, | २१ |
| प्रतिशलाकाकूशले परिपूर्ण पूर्णइति | शलाकाकुशले परिपूर्णे पूर्ण इति प्रतिशलाकाकुशले | १४७ | ६ |
| शलाकाकूशले | महाशलाकाकुशले | ,, | ,, |
| मध्यमजघन्यो | मध्यममजघन्यो | ,, | ८ |
| मध्यमजघन्यो | मध्यममजघन्यो | ,, | १८ |
| मध्यमजघन्यो | मध्यममजघन्यो | ,, | २४ |
| मध्यमजघन्यो | मध्यममजघन्यो | ,, | २६ |
| मध्यमजघन्यो | मध्यममजघन्यो | ,, | २९ |
| पूर्णमुद्धारपल्य | पूर्णमद्धापल्यं | १४८ | २३ |
| ग्रहणयोगादिंद्राः | ग्रहणयोगादिंदतिंद्राः | १५१ | ५ |
| स्पर्शी | स्पर्श | १५२ | ३० |
| एव | अत एव | १५३ | १४ |
| सात्पुरुषातिशय- | सत्पुरुषातिकाय- | १५५ | १३ |
| स्वरूप | प्रतिरूप | ,, | ,, |
| पूर्वदक्षिणोत्तरान् | पूर्वदक्षिणोत्तरापरान् | १५६ | १६ |
| देवी | देवीरूप | ,, | १८ |
| चतुर्देवीरूप | चतुर्देवीरूपसहस्र | ,, | २२ |
| साहचर्यादिंद्राभिधान | साहचर्यादिंद्राभिधान | १६० | ७ |
| मारुतञ्च-द्वीश | मारुत-ऋद्धीश | १६१ | ११ |
| मध्यप्रकार | मध्यप्राकार | ,, | १७ |
| अष्टसागरोपमायूंषि | अष्टसागरोपमाण्यपि चन्द्रा मध्यपरिषत् षट्देवसहस्राणि देशोनाष्टसागरोपमायूंषि जतुर्व्याद्या अष्टौ देवसहस्राणि अष्ट सागरोपमायूंषि | १६४ | ८ |

| अशुद्धय | शुद्धय | पृ स | प स |
|---|---|---|---|
| असख्येययगुणाः | तेजोलेश्या असख्येयगुणाः | १७२ | ३१ |
| इति | इति तन्न | १७३ | ६ |
| चत्वार दशविधा | द्वादशविधाः | ,, | १४ |
| नवोत्तराणि | नवोत्तराणि सप्ताधिकानि अरुणाश्च तावत एव गर्दतोया नवसहस्राणि | १७४ | १० |
| मारक | नारक | ,, | २६ |
| सागरोपमेऽधिके | सागरोपमे अधिके | १७६ | १५ |
| निमानेषु | विमानेषु | १७७ | १४ |
| नाशसभवात | नाशासभवात् | १८० | २४ |
| सर्वप्रकारेण नित्यत्वेन | सर्वप्रकारेणानित्यत्वेन | १८२ | २ |
| इत्येव चेत् द्रव्य | इत्येव चेतरद्रव्य | ,, | १३ |
| अस्मत्प्रत्यक्षत्व | अस्मत्प्रत्यक्षत्वं, तथा अतीताना गतकालान्यदेशसबधित्वेनाप्यस्मत्प्रत्यक्षत्व | ,, | २१ |
| सामानाधिकरण | समानाधिकरण | १८६ | २८ |
| सिद्ध। | सिद्ध नार्थः कायग्रहणेन | १८८ | ३६ |
| नार्थ कायग्रणेन प्रदेशसख्या | प्रदेशसख्या | १८९ | १ |
| मास | भास | १९० | ७ |
| तत्परिच्छेद्त्वात् | तत्परिच्छेद्यत्वात् | ,, | ३४ |
| स्वपरमत्योत्पाद | स्वपरमत्ययोत्पाद | १९१ | ३१ |
| द्रव्यत्वस-वायात् | द्रव्यत्वसमवायात् | १९२ | १७ |
| द्रव्यत्वस्यासम वायिकारण | द्रव्यत्वस्य सम वायिकारणं | ,, | ३१ |

| अशुद्धय. | शुद्धयः | पृ सं. | प स |
|---|---|---|---|
| वद्ध | वद्धाः | १०९ | २१ |
| स्वशरीर | स्वशरीर | ,, | ३८ |
| इद्रियसवंधप्रति | इद्रिसवंध प्रति | ११० | ४ |
| उत्पन्नवेदनयोः | उत्पन्नानुत्पन्न-वेदनयोः | १११ | २९ |
| कृते | अधिकृते | ११२ | ३ |
| ज्योती-रसाजन-मूलकाक | ज्योतीरस-अंजन-मूलिका-अक | ,, | १७ |
| यक्षराक्षस | यक्ष | ११३ | ६ |
| यदेकं | तदेकं | ११४ | २ |
| उभ्रात | विभ्रांत | ,, | ११ |
| संस्तन | ततकसस्तनक | ,, | १२ |
| ऐकात | एकान्त | ,, | १९ |
| त्र्यशीतिर्नरकशत-सहस्राणि | त्र्यशीतिर्नरकशतसहस्राणि नवतिसहस्राधिकानि त्रीणि च शतानि चत्वारिंशानि एतावुभावपि राशी संपिंडितौ चतुरशीति नरकशतसहस्राणि | ,, | ३५ |
| तेप हि जघान्य | तेऽपि हि जघन्य | ११७ | ५ |
| नरके सहचरिता | नरकसहचरिता | ,, | २९ |
| अजघन्योत्कृष्टा | जघन्योत्कृष्टा | ११८ | १८ |
| सम्यग्दृष्टयः | सम्यग्दृष्टयः | ,, | ३३ |
| सपरिवारस्या-धारण | सपरिवारस्यासाधा-रण | ११९ | १५ |
| वीप्साम्या वृत्ति | वीप्साभ्यावृत्ति | ,, | ३२ |
| द्विदश | द्विर्दश | ,, | ३४ |
| परिक्षेत्री | परिक्षेप्त्री | १२० | १३ |
| द्विपचाशत् | षट्पचाशत् | ,, | १८ |
| आख्याते | आख्यायते | ,, | २७ |
| फांसो | फांसी | ,, | ३१ |

| अशुद्धयः | शुद्धय. | पृ स | प स. |
|---|---|---|---|
| षट्कोश | सक्रोश | १२१ | ९ |
| विषध | निषध | १२२ | ८ |
| अत्र | तत्र | ,, | १४ |
| सिता | सीता | ,, | ३२ |
| उदक्प्राग् | उदगवाग् | ,, | ३३ |
| पंच | पचविंशति | १२४ | ११ |
| मध्यभागे | मध्यभागे विजयार्धनामा रजतगिरिर्भरत | ,, | २६ |
| महापुरी | महापुरी विजयापुरी | १२५ | १६ |
| नवति | नव | ,, | २६ |
| त्रिखड त्रिश्रेणिः | त्रिकाड | ,, | २९ |
| भूमिजलात् | भूमितलात् | १२६ | २२ |
| उदगवाग् विस्तीर्णा | उदगवागायता प्राक्प्रत्यग्विस्तीर्णा | १२७ | १९ |
| अरिरिक्तकवला | अतिरक्तकवला | ,, | ,, |
| हिमन् | हिमवन् | १२८ | २२ |
| रक्तावली | रक्तावती | १३० | १० |
| पचाशच् | पचदश | १३१ | ११ |
| मागधातीर्थेन | मागधतीर्थेन | १३३ | ६ |
| सिधूग्रहणं | गगासिंधूग्रहण | १३५ | ५ |
| नीलात भरता- | नीलाता भरता- | ,, | २८ |
| दिभिः | दिभिः | | |
| व्यवस्थितौ आधिके | व्यवस्थितावाधिके | ,, | ३१ |
| तात्स्थ्यात्तच्छब्द्य | तात्स्थ्यात्ताच्छब्द्य | ,, | ३२ |
| हैमवतभव | हैमवते भवाः | १३६ | २३ |
| षड्विंशत् | षट्त्रिंशत् | १३८ | १५ |
| चत्वारिंशानि | द्वाचत्वारिंशानि | १३९ | २ |
| चत्वारिं शतानि | चत्वारि शतानि ,द्वाचत्वारिंशानि,, | | ३५ |
| प्रतीच्या नदा | प्रतीच्यामानदा | १४१ | ९ |

| अशुद्ध | शुद्ध | पृ सं | प सं |
|---|---|---|---|
| कालांतरस्थायि– | कालातरस्थायी । | | |
| प्रतिस० | प्रतिस० | २३२ | ७ |
| लिङ्गः | लिप | ,, | २९ |
| चतुः | चतुश्चतु | ,, | ३० |
| योगाभावलक्षणेन | योगभावलक्षणेन | २३३ | ६ |
| एवकारण | एवकारकरण | २३५ | ३५ |
| का एव यस्थस्य | काण्वयस्थस्य | २३६ | ६ |
| अनतनत | अनतानत | ,, | १० |
| स्पर्शादिगुणस्य | आहारस्य स्पर्शादिगुणस्य | २३७ | ९ |
| किं कारण ? | तत्र किं कारण ? | ,, | १९ |
| ज्ञात्यर्थ | जात्यर्थः | ,, | २१ |
| च | न | ,, | ३० |
| सद्द्व्यलक्षण | सद्द्रव्यलक्षणं | २३८ | ४ |
| पक्षस्यापि | परपक्षस्यापि | २३९ | १३ |
| ननु | नतु | ,, | २६ |
| अव्यभिचारिणि | अव्यभिचारिणी | २४० | २ |
| तद्दिपरीत | तद्विपरीत | ,, | ७ |
| जघन्यमिव | जघनमिव | २४१ | २ |
| उवेदि | हवेदि | २४२ | ८ |
| जहण्णवज्जो | जहण्णवज्जो | ,, | ,, |
| बघेऽधिको | बघेऽधिकौ | ,, | १५ |
| तुल्याः संख्येया | तुल्याऽसंख्येया | २४४ | |
| ण्यः | घः | ,, | ९ |
| विशेपेण | विशेपण | ,, | १२ |
| तद्व्यतिरेकात् | तदन्यतिरेकात् | ,, | २६ |
| मन कर्म | मनस्कर्म | २४५ | ८ |
| वाङ्मनसः प्रसगः | वाङ्मनस-प्रसगः | ,, | ११ |
| तत्र | तत्र | ,, | ,, |
| युजे | युजेः | २४६ | २२ |
| आहितत्रैविध्याः | आहित्रैविध्या | ,, | २९ |

| अशुद्ध | शुद्ध | पृ सं | प सं |
|---|---|---|---|
| सलिलवाद्बद्वार | सलिलवाहिद्वार | २४ | ७१२ |
| योग्यप्रणा | योगप्रणालिकया | २५७ | १५ |
| निक्रया | | ,, | १३ |
| समाताात् | समतात् | ,, | १४ |
| पुरुप | परुप | ,, | २१ |
| कारणाद्वा | कारणाद्वानत | ,, | २६ |
| कनकमयस्यास्य | कनकमयस्याय सस्य चा | ,, | ३६ |
| मोदु | ओदु | २४८ | १० |
| विपरीदे दु | विपरीदेण | ,, | ११ |
| विसोधिए | विसोही | ,, | १७ |
| पगर्दीण | पयडीण | ,, | १८ |
| समातानु | समतानु | २५० | ४ |
| विपये | विशेप | ,, | २९ |
| तत्स्पृशत्यादय | सत्य स्पृशत्यादय | ,, | ७ |
| प्रभावाः | प्रभवा | ,, | ३० |
| प्रायिकी | आत्ययिकी | ,, | ३३ |
| सेवमानो वा | सेवमानोऽसेव-मानोवा | २५१ | ५ |
| कुर्वन्नकुर्वन्न वा | कुर्वन्नकुर्वन्वा | ,, | ७ |
| स्थान | स्थाने | ,, | १३ |
| पृथग्ग्रहण | पृथगग्रहण | २५२ | १२ |
| हिंसाधर्म इति न सिध्यति ? | हिंसाऽधर्म इति न सिध्यति न ? | २५५ | १४ |
| असति मेघे च वृष्टिरित्युक्ते सतिमेघेवृष्टिरित्युक्ते सति मेघे वृष्टिः | असति मेघे न वृष्टि-रित्युक्ते सति मेघे वृष्टिः | ,, | ११ |
| नानुष्ठान | नाननुष्ठान | २५६ | १२ |
| वस्तु | वस्तु | ,, | २६ |
| तदसादन | तत्साधन | ,, | २७ |
| भोगनिरोधः | भोगोपभोगनिरोधः | ,, | २९ |

